

The Department of Public Instruction, Bombay.

# S'RÎ-BHÂSHYA

BY

## RÂMÂNUJÂCHÂRYA

EDITED

with Notes in Sanskrit

BY

VASUDEV SHASTRI ABHYANKAR

PANDIT, FERGUSSON COLLEGE, POONA.





Part I—Text.

300 COPIES.



1914.



*Price Rs. Eleven.*

SOLD AT

GOVERNMENT CENTRAL PRESS, BOMBAY.

Bombay Sanskrit and Prakrit Series, No. LXVIII.





श्रीमद्रामानुजाचार्यप्रणीतं

# श्रीभाष्यम् ।

अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितया

विवृत्या समेतम् ।



तच्च

मुम्बापुरीस्थराजकीयग्रन्थशालाधिकारिणा

मुम्बय्या

निर्णयसागरमुद्रालये मुद्रयित्वा

प्राकाश्यं नीतम् ।

शाके १८३६ वत्सरे, १९१४ खिस्ताब्दे ।

प्रथमो भागः सपाठान्तरमूलात्मकः ।

मूल्यं ११ रूप्यकाः

# आदर्शपुस्तकविचारः

एतच्छ्रीभाष्यमुद्रणसमये यान्यादर्शपुस्तकानि लब्धानि तेषु त्रीणि प्राचीनलिखितपुस्तकानि A, B, C इति चिह्नितानि। एतानि च 'एम्. ए.' इत्युपपदधारिभिः श्रीमद्भिर्भांडारकरोपाह्वैः श्रीधरेति सुगृहीतनामभिर्महाशयैः प्रयत्नेन संपाद्य मत्सकाशं प्रेषितानि। तथा तैलङ्गदेशे तैलङ्गलिप्यां मुद्रितं श्रुतप्रकाशिकासमेतं महाशयेभ्यो डा. सर् भांडारकर इत्येतेभ्यो लब्धम्।

तत्र प्रथमं 'जयपूर' राजधानीस्थ-गालवाश्रमग्रन्थसंग्रहालयस्थं A इति संज्ञितम्। एतच्चापूर्णं प्रथमाध्यायरहितम्। पृष्ठानि चास्य महान्ति वर्तन्ते। अक्षराणि च स्थूलानि। द्वितीयोऽध्यायस्त्र्यशीतिपृष्ठात्मकः। तृतीयोऽध्यायो द्विसप्ततिपृष्ठात्मकः। चतुर्थोऽध्यायस्त्रयस्त्रिंशत्पृष्ठात्मकः। एतत्पुस्तकं केनापि विदुषा दृष्टं स्वबुद्ध्यनुसारेण शुद्धं च कृतमस्ति। गालवाश्रमोऽयं रामानुजमतानुसारी। पुस्तकं चैतत्पण्डितदुर्गाप्रसादसूनुपण्डितकेदारनाथसाहाय्येन लब्धम्।

द्वितीयं च 'अलवार' राजधानीगतपण्डितरमेशचन्द्रजीस्वामिकग्रन्थसंग्रहालयस्थं B इति संज्ञितम्। एतच्च संपूर्णमस्ति। पृष्ठानि चास्य तनूनि वर्तन्ते। अक्षराणि तु स्थूलान्येव। अस्य प्रथमोऽध्यायो विंशत्यधिकद्विशतपृष्ठात्मकः। द्वितीयो द्विनवतिपृष्ठात्मकः। तृतीयः षट्सप्ततिपृष्ठात्मकः। चतुर्थोऽष्टत्रिंशत्पृष्ठात्मकः। अस्य पुस्तकस्य तु लेखकेनैव तज्ज्ञेन भवितव्यम्। यतः प्राय एतत्पुस्तकं शुद्धमेव लिखितमास्ते।

तृतीयं तु 'बिकानेर' राजधानीगतमहाराजग्रन्थसंग्रहालयस्थं C इति संज्ञितं संपूर्णम्। तस्यामेव राजधान्यां 'पोलिटिकल एजंट' इत्यधिकारारूढानां महाशयानां साहाय्येन लब्धमेतत्पुस्तकम्। पृष्ठानि चास्य महान्ति भूर्जपत्रसदृशानि वर्तन्ते। अक्षराणि त्वणुतराणि। अस्य संपूर्णपुस्तकस्य पृष्ठसंख्या षडधिकत्रिशतपरिमिता। त्रिषष्ट्यधिकशतसंख्याकपृष्ठपर्यन्तः प्रथमोऽध्यायः। तदुत्तरं सप्तदशाधिकद्विशतसंख्याकपृष्ठपर्यन्तो द्वितीयः। तदुत्तरं द्व्यशीत्यधिकद्विशतसंख्याकपृष्ठपर्यन्तस्तृतीयः। ततोऽवशिष्टपृष्ठात्मकश्चतुर्थः। एतत्पुस्तकं न केनापि शुद्धं कृतम्। नाप्यस्य लेखकेन तज्ज्ञेन भवितव्यम्। यतोऽत्राशुद्धानि कतिपयानि दृश्यन्ते। कतिपयपाठभेदाश्चेतरेषु सर्वेषु पुस्तकेष्वनुपलब्धा अमुत्रैकस्मिन्नेव पुस्तक उपलभ्यन्ते। एतत्पुस्तकत्रयं टीकारहितं मूलमात्रम्।

चतुर्थं D इति संज्ञितं 'कलकत्ता' नगरे मूलमात्रं मुद्रितं 'कर्मकर्तृव्यपदेशाच्च' ( अ. १ पा. २ सू. ४ ) इतिसूत्रपर्यन्तमपूर्णमेव लब्धम् ।

पञ्चमं E इति संज्ञितं काश्यां श्रुतप्रकाशिकासमेतं मुद्रितं संपूर्णम् ।

षष्ठं च F इति संज्ञितं तैलङ्गलिप्यां मुद्रितमुपरि निर्दिष्टम् । तैलङ्गलिपेस्तादृशज्ञानाभावेनैतत्पुस्तकस्य न सर्वत्रोपयोगः कृतः । किं तु संदिग्धेषु कतिपयपाठभेदेष्वेव ।

इमानि च येषां पुस्तकानि येषां च साहाय्येन लब्धानि यैश्च मत्सकाशं प्रेषितानि तेषां निरपेक्षपरोपकारबुद्धीनां महाशयानामतीवोपकारभारं मन्ये ।

आश्विन व० ५ शके १८३५<br>आक्टोबर २०, १९१३ } **वासुदेवशास्त्री अभ्यंकर.**

॥ श्रीः ॥

# अनुक्रमणिका ।

॥ अनुक्रमणिका समाप्ता ॥

# श्रीभाष्यम् ।



## श्रीमते रामानुजाय नमः ।

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥
पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां 5
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥२॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सं-
चिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते । 10

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायमथशब्द आनन्तर्ये भवति । अतःशब्दो वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवल-कर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण 15

4. B. reads मम भवतु for भवतु मम.



इति कर्मणि षष्ठी । कर्तृकर्मणोः कृति (पा. सू. २।३।६५) इति विशेषविधानात् । यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिस्तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते । न च प्रतिपदविधाना षष्ठी न समस्यत इति कर्मणि षष्ठ्याः समासनिषेधः
5 शङ्कनीयः । कृद्योगा षष्ठी समस्यत इति प्रतिप्रसवसद्भावात् । ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते । सर्वत्र बृहत्त्वगुणयोगेन ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिका-
10 तिशयं सोऽस्य मुख्योऽर्थः । स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः । तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः । अनेकार्थकल्पनायोगाद्भगवच्छब्दवत् । तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतः सर्वेश्वरो जिज्ञासाकर्मभूतं ब्रह्म । ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादि-
15 ष्यमाणं ज्ञानमिह विधीयते ।

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरमत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तथाह वृत्तिकारः वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति । वक्ष्यति च कर्म-
20 ब्रह्ममीमांसयोरैकशास्त्र्यं संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः ।

मीमांसाशास्त्रम्—अथातो धर्मजिज्ञासा (जै. सू. १।१।१) इत्यारभ्यानावृत्तिः शब्दादनावृत्तिः शब्दात् (ब्र. सू. ४।४।२२)

13. B. has एव after अतः.

18. B. C. read ततः for अतः

इत्येवमन्तं संगतिविशेषेण विशिष्टक्रमम । तथाहि । प्रथमं तावत् स्वाध्यायोध्येतव्य इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते । तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायामष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यनेन

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । 5
युक्तश्छन्दांस्यधीयीत मासान् विप्रोर्धपञ्चमान् ॥

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते । एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते । अध्ययनं च स्वाध्यायसंस्कारः । स्वाध्यायोध्येतव्य इति स्वाध्यायस्य कर्मत्वावगमात् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वं च स्वाध्यायस्य युक्तम् । धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात् । जपादिना स्वरूपेणापि तत्साधनत्वाच्च । एवमध्ययनविधिर्मन्त्रवर्णनियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति । अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात् स्वाध्यायादवगम्यमानान् प्रयोजनवतोर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते । 10 15

तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतस्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति । तथाच वेदान्तवाक्यानि केवलकर्मफलस्य 20

7. C. om the word विशेष.
8. C. reads सकल after प्रसूत.
21. B. C. read रूप for स्वरूप.

क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति। तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते (छा. ८।१।६)। अन्तवदेवास्य तद्भवति (बृ. ३।८।१०)। न ह्यध्रुवैः प्राप्यते ध्रुवं कर्मभिः (का. २।१०)। प्लवा ह्येते अदृढा यज्ञरूपाः (मु. २।७)। परीक्ष्य लोकान कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् (मु. १।२।१२-१३)। ब्रह्मविदाप्नोति परम (तै. २।१।१)। न पुनर्मृत्यवे तदेकं पश्यति न पश्यो मृत्युं पश्यति (छां. ७।१६।२)। स स्वराड् भवति (छा. ७।२५।२)। तमेवं विद्वानमृत इह भवति (नृ. पू. १। ६)। तमेवं विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते (श्वे. ३।८)। पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति (श्वे. १।६) इत्यादीनि।

ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्यामृतफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्ततां किमर्था धर्मविचारापेक्षा। एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्। साङ्गवेदाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्। आपाततः प्रतीतिर्विद्यत एव। तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोप्यर्थः संशयविपर्ययौ नातिवर्तते। अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत् तथैव धर्मविचारोपि कर्तव्य इति पश्यतु भवान्।

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते तदेव पूर्ववृत्तं व-

1. B. reads अक्षयफलत्वं च for चाक्षयफलत्वं.

3. B. has तत् for ध्रुवं.

क्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासाया: । अधीतवेदान्तस्यानधिगतकर्मणोपि वेदान्तवाक्यार्थविचारोपपत्ते: । कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते । तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत् । अनभिज्ञो हि भवान् शारीरकशास्त्रविज्ञानस्य । अस्मिन् शास्त्रेनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदु:खसागरनिमग्नस्य निखिलदु:खमूलभूतमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते । प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानस्वरूपत्वाविशेषादिहैव क्रियते । स तु न साक्षात्संगत: । अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ।

बाढम् । तदपेक्षितं च कर्मविज्ञानमेव । कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुते: । वक्ष्यति च सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ( ब्र. सू. ३।४।२६ ) इति । अपेक्षिते च कर्मण्यज्ञाते केन समुच्चय: केन नेति विभागो न शक्यते ज्ञातुम् । अतस्तदेव पूर्ववृत्तम् ।

नैतद्युक्तम् । सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्ते: । अविद्यानिवृत्तिरेव हि मोक्ष: । वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्ते: कथमिव साधनं भवेत् । श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति । अन्तवदेवास्य तद्भवति (बृ. ३।८।१०) । तद्यथेह कर्मचितो लोक: क्षीयत एवमेवामुत्र पुण्यचितो लोक: क्षीयते (छा. ८।६।१) ।

4. B. om. the word हि.

5. C. has हि after शास्त्रे.

7. B. C. om. the word भूत.

19. B. om. the word निवृत्तिरूपाज्ञान.

ब्रह्मविदाप्नोति परम् (तै. २।१।१)। ब्रह्म वेद ब्रह्मैव भवति (मु. ३।२।९)। तमेव विदित्वातिमृत्युमेति (श्वे. ३।८) इत्याद्याः।

यद्यपि चेदमुक्तं यज्ञादिकर्मापेक्षा विद्येति। तद्वस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्ता-
5 वुपयुज्यते न फलोत्पत्तौ। विविदिषन्तीति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह। शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत् (बृ. ४।४।२३) इति। तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ
10 सत्यां सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम् (छा. ६।२।१)। सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१)। निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् (श्वे. ६।१९)। अयमात्मा ब्रह्म (बृ. २।५।१९)। तत्त्वमसि (छां ६।८।७) इत्यादिवाक्यजन्यज्ञानादेवाविद्या निवर्तते।

15 वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यार्थस्यानवरतभावना निदिध्या-
20 सनम्। एवं श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः शमदमादिसाधनसंपत् इहामुत्रफलोपभोगविरागः मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेरर्थस्वभावादेवेदमेव पूर्व-
25 वृत्तमिति ज्ञायते। एतदुक्तं भवति। ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमा-

र्थिकः । स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते । निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम । तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपे तदुत्पत्तौ कार्ये वा कर्मणो नोपयोगः । विविदिषायामेव तु कर्मणामुपयोगः । स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्ववृद्ध्या भवतीति । इममुपयोगमभिप्रेत्य ब्राह्मणा विविदिषन्ति ( बृ. ४।४।२२ ) इत्युक्तमिति । अतः कर्मणो ज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ।

अत्रोच्यते । यदुक्तम अविद्यानिवृत्तिरेव मोक्षः सा च ब्रह्मविज्ञानादेव भवतीति । तदभ्युपगम्यते । अविद्यानिवृत्तये हि वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् । किं वाक्याद्वाक्यार्थज्ञानमात्रमुत तन्मूलमुपासनात्मकं ज्ञानमिति । न तावद्वाक्यजन्यं ज्ञानम् । तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः । तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च । न च वाच्यं भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति । ज्ञाने जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय । चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवदनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति । सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् । सत्यपि वाक्यार्थज्ञानेनादिवासनया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम । भेद-

3. B. C. read स्वरूपोत्पत्तौ for स्वरूपे तदुत्पत्तौ.

3. B. reads च for वा.

7. B. C. read कर्मज्ञानस्य for कर्मणो ज्ञानस्य.

8. C has इति after वक्तव्यम.

11. B. om. the word हि.

16. B. om. the word ज्ञाने.

ज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिः । वासनाकार्यं भेदज्ञानं छिन्नमूलम् अथ चानुवर्तत इति बालि-
5 शभाषितम । द्विचन्द्रज्ञानादौ तु बाधकसंनिधावपि मिथ्याज्ञा-नहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानुवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादि-कार्यं तु निवर्तते । अपि च भेदवासनानिरसनद्वारेण ज्ञानो-त्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति । भेद-
10 वासनाया अनादिकालोपचितत्वेनापरिमितत्वात्तद्विरोधिभाव-नायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः । अतो वाक्यार्थज्ञाना-दन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधि-त्सितम् । तथा च श्रुतयः विज्ञाय प्रज्ञां कुर्वीत ( बृ. ४।४।२१ )। अनुविद्य विजानाति ( छा. ८।७।१ )। ओमित्येवात्मानं ध्यायत
15 (मु. २।२।६)। निचाय्य तन्मृत्युमुखात्प्रमुच्यते (का. ३।१५) । आत्मानमेव लोकमुपासीत ( बृ. १।४।१५ ) । आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. २।४।५ ) । सोन्वेष्टव्यः । स विजिज्ञासितव्यः ( छा. ८।७।१ ) इत्येव द्या: । अत्र निदिध्यासितव्य इत्यादिनैकार्थ्यात् उ
20 विजानाति विज्ञाय प्रज्ञां कुर्वीतेत्येवमादिभिर्वाक्या ध्यानोपकारकत्वात् अनुविद्य विज्ञायेत्यनूद्य प्रज्ञां कुर्वीत नातीति ध्यानं विधीयते । श्रोतव्य इति चानुवादः । स्वा स्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदः

द्वरा- ःया- ाथ- पूर्व- ाध- ातु-

13. B. has यथा for तथा.
18. B. om. the word एवम्.
20. C. has वाक्यार्थज्ञानस्य for वाक्यार्थज्ञानं.
23. B. reads दर्शनवत् for दर्शनात्.

न्निर्णयाय स्वयमेव श्रवणे प्रवर्तेत इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः । तस्माद्ध्यानमेव विधीयते । वक्ष्यति चावृत्तिरसकृदुपदेशात् ( ब्र. सू. ४।१।१ ) इति ।

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते । 5
विद्युपास्त्योरव्यतिरेकेणोपक्रमोपसंहारदर्शनात् । मनो ब्रह्मेत्युपासीत (छा. ३।१८।१) इत्यत्र भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद (छा. ३।१८।३) । न स वेद। अकृत्स्नो ह्येषः । ...आत्मेत्येवोपासीत (बृ. १।४।७।) । यस्तद्वेद यत्स वेद स मयैतदुक्तः ( छा. ४।१।४ ) इत्यत्र अनु म एतां भगवो 10
देवतां शाधि यां देवतामुपास्से ( छा. ४।२।२ ) इति । ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपम् । ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । 15
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे (मुं. २।२।८) ॥

इत्यनेनैकार्थ्यात् । एवं च सत्यात्मा वारे द्रष्टव्यः (बृ. २।४।५) इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । वाक्यकारेणैतत्सर्वं प्रपञ्चितम् । वेदनमुपासनं स्यात्तद्विषये श्रवणादिति । सर्वासूपनिषत्सु मोक्षसाध- 20
नतया विहितं वेदनमुपासनमित्युक्तम् । सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवदिति पूर्वपक्षं कृत्वा सिद्धं तूपासनशब्दादिति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । उपासनं

1. B. om. the word श्रवणे.

स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्चेति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ।

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः । एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि ।
5 नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ( का. २।२३ ) इति । अनेन केवलश्रवणमननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते तेन लभ्य इत्युक्तम् । प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियः स
10 एवास्य प्रियतमो भवति । यथायं प्रियतम आत्मानं प्राप्नोति तथा स्वयमेव भगवान्प्रयतत इति भगवतैवोक्तम् ।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

( गी. १०।१० ) इति ।

15 प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
( गी. ७।१७ ) इति च ।

अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमत्यर्थप्रिया यस्य स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्ति-
20 शब्देनाभिधीयते । उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधीयते । तमेव विदित्वाति मृत्युमेति ( श्वे. ३।८ ) । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ( नृ. पू. १।६ ) ।

1. C. reads सा ध्रुवा स्मृतिः for स्याद्ध्रुवानुस्मृतिः.

2. C. reads उपनिर्णीतम् for उपवर्णितम्.

3. B. om. the word आत्मा.

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥ (गी. ११।५३)
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ (गी. ११।५४)

इति। एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति यज्ञादिश्रुतेरश्ववत् (ब्र. सू. ३।४।२६) इत्यभिधास्यते । यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते । तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रायणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च आ-प्रायणात्तत्रापि हि दृष्टम् (ब्र. सू. ४।१।१२) । अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् (ब्र. सू. ४।१।१६) । सहकारित्वेन च (ब्र. सू. ३।४।३३) इत्यादिषु ।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह । तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति । विवेकादीनां स्वरूपं चाह । जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेक इति । अत्र निर्वचनम् आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः (छा. ७।२६।२) इति। विमोकः कामानभिष्वङ्ग इति । शान्त उपासीत (छा. ३।१४।१) इति निर्वचनम् । आरम्भणसंशीलनं पुनः पुनरभ्यास इति । निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण सदा तद्भावभावितः (गी. ८।६) इति । पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियेति । निर्वचनं क्रियावानेष ब्रह्मविदां वरिष्ठः (मु. ३।१।४) । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन (बृ. ४।४।२२) इति च । सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानीति । निर्वचनं सत्येन लभ्यस्तेषामेवैष विरजो ब्रह्मलोकः (प्र.

१।१६ ) इत्यादि । देशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जन्यं दैन्यमभास्वरत्वं मनसोवसाद इति । तद्विपर्ययोनवसादः । निर्वचनं नायमात्मा बलहीनेन लभ्यः (मु. ३।२।४) इति । तद्विपर्ययजा तुष्टिरुद्धर्षः । तद्विपर्ययोनुद्धर्ष इति । अतिसंतोषश्च विरोधीत्यर्थः । निर्वचनमपि शान्तो दान्तः ( बृ. ४।४।२३ ) इति ।

एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति । तथा च श्रुत्यन्तरं विद्यां चाविद्यां च यस्तद्वेदोभयं स ह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ( ई. ११ ) इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया कर्मणा मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वापोह्य *विद्यया ज्ञानेनामृतं ब्रह्माश्नुते प्राप्नोतीत्यर्थः* । मृत्युतरणोपायतया प्रतीताविद्या विद्येतरद्विहितं कर्मैव । यथोक्तम् ।

इयाज सोपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय ततुँ मृत्युमविद्यया (वि. पु. ६।६।१२) इति।

ज्ञानविरोधि च कर्म पुण्यपापरूपम । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम् एष एवासाधु कर्म कारयति तं यमधो निनीषति ( कौ. ३।८ ) इति श्रुत्यावगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम् । सत्त्वात्संजायते ज्ञानम ( गी. १४।१७ ) इत्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण तथाच श्रुतिः धर्मेण पापमपनुदति (म. ना. २२।१) इति ।

तदेवं ब्रह्मप्राप्तिसाधनभूतं ज्ञानं सर्वाश्रमधर्मापेक्षम् । अतोपेक्षितं कर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्या ।

अपिच नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते । फलसाधनेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात् । एषां साधनत्वं च विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्त्तीयः । उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणीति ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादनानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव संगतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ।

यदप्याहुरशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः । तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् ( छा. ६।२।१ ) । अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ( मु. १।१।५–६ ) । सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) ।

---

1. B. C. read कर्म for धर्म.
2. B. C. read अपेक्षित for अपेक्षितम्.
3. C. reads ब्रह्मजिज्ञासायाः for ब्रह्ममीमांसायाः.
6. B. C. read करण for साधन.
7. B. om. the word तत् after फल.
10. B. C. om. the word इति after रूपाणि.
11. C. reads उत्पादकानि for उत्पादनानि.
12. C. reads आपादकानि for आपादनानि.

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। (श्वे. ६।१९)

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्॥ (के. ११)

न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः (बृ. ३।४।२)।
5 आनन्दो ब्रह्म (तै. ३।६।१)। इदं सर्वं यदयमात्मा (बृ. २।४।५)। नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति (बृ. ४।४।१६)। यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयात् (बृ. २।४।१४)। वाचारम्भणं
10 विकारो नामधेयं मृत्तिकेत्येव सत्यम् (छा. ६।१।४)। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति (तै. २।७।१)। न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि (ब्र. सू. ३।२।११)। मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् (ब्र. सू. ३।२।३)।

15 प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥ (वि. पु. ६।७।५३)

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ (वि. पु. १।२।६)

परमार्थस्त्वमेवैको नान्योस्ति जगतः पते। (वि. पु. १।४।३८)

20 यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥

8. B. om. the words तत्केन कं पश्येत्.

ये तु ज्ञानविदः शुद्धचेतसस्तेखिलं जगत्।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥
( वि. पु. १।४।३९-४०-४१ )
तस्मात्मपरदेहेषु सतोप्येकमयं हि यत्।
विज्ञानं परमार्थो हि द्वैतमिथ्यात्वदर्शिनः॥ (वि.पु.२।१४।३१) 5
यद्यन्योस्ति परः कोपि मत्तः पार्थिवसत्तम।
तदैषोहमयं चान्यो वक्तुमेवमपीष्यते॥ ( वि. पु. २।१३।८५)
वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः॥ (वि.पु.२।१४।३२)
सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। 10
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः॥
( वि. पु. २।१६।२४ )
विभेदजनकेज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥ (वि. पु. ६।७।९४)
अहमात्मा गुडाकेश सर्वभूताशयस्थितः। ( गी. १०।२० ) 15
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत। ( गी. १३।२ )
न तदस्ति विना यत्स्यान्मया भूतं चराचरम्। (गी. १०।३९ )

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्येत्यभिधानात्। मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्। यथा 20
रज्ज्वाद्यधिष्ठानकसर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनु-

5. B. C. read द्वैतिनोतथ्यदर्शिनः for द्वैतमिथ्यात्वदर्शिनः.
7. B. reads तदैकोहम् for तदैषोहम्.
15. B. reads सर्वभूताशये for सर्वभूताशय.
21. B. reads अधिष्ठानसर्पादिः for अधिष्ठानकसर्पादेः.
22. C. om. the word परे after वपुषि.



प्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपप्रबोधबाध्यं मिथ्यारूपम् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयानाद्यविद्या । अनृतेन हि प्रत्यूढाः (छा. ८।३।२)। तेषां सत्यानां सतामनृतमपिधानम् (छा. ८।३।१ )। नासदा-
5 सीन्नो सदासीत्तदानीम् (तै. ब्रा. २।८।९) । तम आसीत्तमसा गूढमग्रे प्रकेतम् (तै. ब्रा. २।८।९)। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ( श्वे. ४।१० ) । इन्द्रो मायाभिः पुरुरूप ईयते ( बृ. २।५।१९ ) । मम माया दुरत्यया ( गी. ७।१४ )। अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ( गौ. पा. का.
10 १।१६ ) इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते । यथोक्तम् ।

ज्ञानस्वरूपो भगवान्यतोसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥

15 यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥
( वि. पु. २।१२।३९-४० )

तस्मान्न विज्ञानमृतेस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम ॥

20 ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोन्यदस्ति ॥

11. C. reads स्वस्वरूपं for स्वरूपं.

11. B. reads स्वगतं for स्वगत.

15. B. reads निजरूप for निजरूपि.

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥
( वि. पु. २।१२।४३-४४-४५ ) इति ।

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं
वदन्ति । न पुनर्मृत्यवे तदेकं पश्यति । न पश्यो मृत्युं पश्यति 5
( छा. ७।२६।२ ) । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते-
ऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति
( तै. २।७।१ ) ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ( मु. २।२।८ ) 10

ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) । तमेव विदित्वा-
ति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ( श्वे. ३।८ ) इ-
त्याद्याः श्रुतयः । अत्र मृत्युशब्देनाविद्याभिधीयते । यथा सन-
त्सुजातवचनम् । मोहो वै मृत्युः संमतो यः कवीनामिति ।
प्रमादं वै मृत्युमहं ब्रवीमि । सदाप्रमादममृतत्वं ब्रवीमि ( स. 15
१।४ ) इति । सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) । विज्ञा-
नमानन्दं ब्रह्म ( बृ. ३।९।२८ ) इत्यादिशोधकवाक्यावसेय-
निर्विशेषचिन्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानं च अथ योऽन्यां देव-
तामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद ( बृ. १।४।१० ) ।
आत्मेत्येवोपासीत (बृ. १।४।७) । तत्त्वमसि (छा. ६।८।७) । त्वं 20
चाहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते (जा.) । तद्योऽहं
सोऽसौ योऽसौ सोऽहम् (ऐ.) इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव

12. B. om. विद्यतेऽयनाय.
14. B. om. मोहो वै मृत्युः संमतो यः कवीनामिति.
18. C. om. चिन्मात्र.
21. B. C. read त्वं वा अहं for त्वं चाहं.

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ( ब्र. सू. ४।१।३ ) इति । तथा चाह वाक्यकारः । आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेरिति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिरुक्ता ।

5 ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रार्थजन्यविज्ञानेन क्रियते । कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते । तत्र द्वयोः प्रत्यक्षयोर्विरोध इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्तुल्ययोर्विरोधे कथं बाध्यबाधकभावः । पूर्वोत्तरयोर्दुष्टकार-
10 णजन्यत्वतदभावाभ्यामिति चेच्छास्त्रप्रत्यक्षयोरपि समानमेतत् । एतदुक्तं भवति । बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम् । ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवं सति द्वयोः प्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि तद्बाध्यम् । अनन्य-
15 थासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति । तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव । संभाव्यते च वि-
20 विधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ।

4. B. C. read युक्ता for उक्ता.

5. B. C. read शास्त्रजन्म for शास्त्रार्थजन्य.

6. C. reads इह for एषा.

13. B. C. read च after एवं; B. om. प्रमाणयोः.

नन्वनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम् । पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः । निर्गुणत्वात्परस्य ब्रह्मणः । 5

ननु च यः सर्वज्ञः सर्ववित् (मु. १।१।९)। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च (श्वे. ६।८)। सत्यकामः सत्यसंकल्पः (छा. ८।१।५)। इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वम् । निर्गुणवाक्यसामर्थ्यादिति ब्रूमः । एतदुक्तं भवति । अस्थूलमनण्वह्रस्वम् (बृ. ३।८।८)। सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१)। निर्गुणम् (चू. ७।२)। निरञ्जनम् (श्वे. ६।१९)। इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति । इतराणि च सगुणम् । उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदवहीनम् । 10 15

ननु च सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते । नेत्युच्यते । सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत् । अनभिधानज्ञो हि देवानांप्रियः । एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । ततश्चैकत्वं न सिध्यति । एवं तर्हि स- 20

16. C. reads अहीनं for अवहीन.

20. B. C. om. हि; B. reads देवतानां for देवानां.

21. C. om. सर्व.

वपदानां पर्यायता स्यात् । अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु । एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च । एतदुक्तं भवति । लक्षणतः
5 प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरम् । ज्ञानपदं चान्याधीनप्रकाशाज्जडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम् । नच व्यावृत्तिर्भावरूपोभावरूपो
10 वा धर्मः । अपि तु सकलेतरविरोधि ब्रह्मैव । यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्तत्पदार्थस्वरूपमेव न धर्मान्तरम् । एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयमिति । तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति । एवं वाक्यार्थप्रतिपादने सत्येव
15 सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ( छा. ६।२।१ ) इत्यादिभिरैकार्थ्यम् । यतो वा इमानि भूतानि जायन्ते ( तै. ३।१।१ )। सदेव सोम्येदमग्र आसीत् (छा. ६।२।१ ) । आत्मा वा इदमेक एवाग्र आसीत् ( ऐ. १।१ ) इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते सत्यं ज्ञानमनन्तं ब्रह्म ( तै.
20 २।१।१ ) इति । तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम् । जगत्कारण-

---

7. B. C. read ब्रह्म after व्यावृत्त; C. reads प्रकाश for प्रकाशात्.

8. B. C. read ब्रह्म after व्यावृत्त.

9. C. reads ब्रह्म after व्यावृत्त.

11. B. om. एवम्.

13. B. C. om. इति.

तयोपलक्षितस्य ब्रह्मणोद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तद्विरोधेन वक्तव्यम । अद्वितीयत्वश्रुतिर्गुणतोपि सद्वितीयतां न सहते । अन्यथा निरञ्जनं निर्गुणमित्यादिभिश्च विरोधः । अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति ।

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वेन लक्षणा स्यात् । नैष दोषः । अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसंमतम । ननु च सर्वपदानां लक्षणा न दृष्टचरी । ततः किम् । वाक्यतात्पर्यविरोधे सत्येकस्यापि न दृष्टा । समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय । तथाच शास्त्रज्ञैरभ्युपगम्यते कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वाल्लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते । कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्योर्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव । अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणापि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ।

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम । विरोध एव न दृश्यते । निर्विशे-

2. B. reads अद्वितीय for अद्वितीयत्व.
4. C. has ब्रह्म after एव.
6. B. C. read परत्वे for परत्वेन.
12. B. has अपूर्व before कार्य.
20. C. om. च after सति.

पसन्मात्रग्राहित्वात्प्रत्यक्षस्य । ननु च घटोस्ति पटोस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते । विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात् । सत्यम् । तथैवात्र
5 विविच्यते । कथम् । घटोस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते । न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति । तयोर्भिन्नकालज्ञानफलत्वात् । प्रत्यक्षज्ञानस्यैकक्षणवर्तित्वात् । तत्र स्वरूपं भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम् । भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमव-
10 श्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः । किं च भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते । भेदस्तावन्न वस्तुनः स्वरूपम् । वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः । न च वाच्यं स्वरूपे गृहीतेपि भिन्न इति व्यवहारस्य प्रतियो-
15 गिसव्यपेक्षत्वात्तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति । स्वरूपमात्रभेदवादिनो हि प्रतियोगिसव्यपेक्षा च नोत्प्रेक्षितुं क्षमा । स्वरूपभेदयोः स्वरूपत्वाविशेषात् । यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः । भेदव्यवहारोपि तथैव स्यात् । हस्तः कर इतिवद्घटो भिन्न इति पर्यायत्वं च स्यात् । नापि

1. B. has चिन्मात्रावगाहित्वात् for सन्मात्रग्राहित्वात्.
2. B. reads अवगाही for ग्राही.
7. B. has परत्वात् for फलत्वात्; B. C. have च after ज्ञानस्य;
 B. C. read वा after स्वरूपं.
10. B. has मः after न.
15. C. reads स्मरण after प्रतियोगि.
16. C. reads प्रतियोग्यपेक्षा for प्रतियोगिसव्यपेक्षा.

धर्मः । धर्मत्वे सति तस्य स्वरूपाद्भेदोवश्याश्रयणीयः । अन्यथा स्वरूपमेव स्यात् । भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था । किं च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम् । अतो भेदस्यापि दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् । 5

किं च घटोस्ति पटोस्ति घटोनुभूयते पटोनुभूयत इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते । अत्र सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्तमानं दृश्यत इति तदेव परमार्थः । विशेषास्तु व्यावर्तमानतयापरमार्थाः । रज्जुसर्पादिवत् । यथा रज्जुरधिष्ठानतयानुवर्तमाना सती परमार्था । व्यावर्तमानाः 10 सर्पभूदलनाम्बुधारादयोपरमार्थाः । ननु च रज्जुसर्पादौ रज्जुरियं न सर्प इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यं न व्यावर्तमानत्वात् । रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया किं त्वबाधितत्वात् । अत्र त्वबाधितानां घटादीनां कथमपारमार्थ्यम् । उच्यते । घटादौ दृष्टा व्यावृत्तिः 15 सा किंरूपेति विवेचनीयम् । किं घटोस्तीत्यत्र पटाभावः । सिद्धं तर्हि घटोस्तीत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः । सा व्यावर्तमानानामपारमार्थ्यं साधयति । रज्जुवत्सन्मात्रमबाधितमनुवर्तते । तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थम् । प्रयोगश्च भवति । सन् परमा- 20 र्थम् । अनुवर्तमानत्वात् । रज्जुसर्पादौ रज्ज्वादिवत् । घटादयोपरमार्थाः । व्यावर्तमानत्वात् । रज्ज्वाद्यधिष्ठानसर्पादिवदिति ।

2. B. reads अपि after भेदे.

5. B. C. om. अपि.

12. C. reads याथात्म्य for याथार्थ्य.

20 B. C. read परमार्थः for परमार्थम् after सत्.

एवं सत्यनुवर्तमानानुभूतिरेव परमार्था । सैव सती । ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् । नैवम् । भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव ( पृ० २२ पं० १० ) निरस्तः । अत एव सतोनुभूतिविषयभावोपि न प्रमाणपदवीमनुसरति । तस्मात्सदनुभूतिरेव । सा च स्वतःसिद्धा । अनुभूतित्वात् । अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः । किं चानुभवान्तरापेक्षा चानुभूतेर्न शक्या कल्पयितुम् । स्वसत्तयैव प्रकाशमानत्वात् । न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते । येन परायत्तप्रकाशाभ्युपगम्येत । अथैवं मनुषे उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते घटोनुभूयत इति । नहि कश्चिद्घटोयमिति जानंस्तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति । तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसंनिकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते । एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्येतेति चेत् । किमिदमजडत्वं नाम । न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः । सुखादिष्वप्येतत्संभवात् । न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते । अतोनुभूतिः स्वयमेव नानुभूयते । अर्थान्तरं स्पृशतोप्यङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति । तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् । अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः । उभया-

1. B. C. read परमार्थः for परमार्था.

7. B. C. om. अन्तर; B. om. न after अपेक्षा; B. C. om. स्व.

17. B. C. read तत् for एतत्.

19. C. om. अपि.

भ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यार्थधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते। नापि ज्ञानान्तरसिद्धा। अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति। प्रयोगश्च। अनुभूतिरनन्याधीनस्वधर्मव्यवहारा। स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्। यः स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः। यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसंबन्धाच्चाक्षुषत्वादि जनयन्स्वस्मिन्न रूपादिसंबन्धाधीनश्चाक्षुपत्वादौ। अतोनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः। सेयं स्वयंप्रकाशानुभूतिर्नित्या च। प्रागभावाद्यभावात्। तदभावश्च स्वतःसिद्धत्वादेव। न ह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोन्यतो वावगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति। तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं स्वाभावमवगमयति। एवमसत्यपि नावगमयति। अनुभूतिः स्वयमसती कथं स्वाभावे प्रमाणं भवेत्। नाप्यन्यतोवगन्तुं शक्यते। अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत्प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत्। स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वात्तत्प्रागभावो नान्यतः शक्यावगमः। अतोस्याः प्रागभावाद्यभावादुत्पत्तिर्न शक्यते वक्तुमिति। उत्पत्तिप्रतिबद्धाश्चान्येपि भावविकारास्तस्या न सन्ति। अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते। व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं

1. B. C. om. अर्थ.

5. C. reads यद्धर्म for तद्धर्म.

14. C. has सा after कथं.

19. C. om. आदि.

दृष्टम् । भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति । अतोनुभूतेरनुभवस्वरूपत्वादेवान्योपि कश्चिदनुभाव्यो नास्या धर्मः । यतो निर्धूतनिखिलभेदा संविदत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्र-
5 काशरूपा सैवात्मा । अजडत्वाच्च । अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति ।

ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा । मैवम् । सा भ्रान्तिसिद्धा । रजततेव शुक्तिशकलस्य । अनुभूतेः स्वात्मनि कर्तृत्वायोगात् । अतो मनुष्योहमित्यत्यन्तबहिर्भूतमनुष्यत्वादि-
10 विशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम् । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् । तच्च विक्रियात्मकं जडं विकारिद्रव्याहंकारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति । दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् । सुषुप्तिमूर्छादावहंप्रत्ययाभावेप्यात्मानुभवदर्शनेन नात्म-
15 नोहंप्रत्ययगोचरत्वम् । कर्तृत्वेहंप्रत्ययगोचरत्वे चात्मनोभ्युपगम्यमाने देहस्येव जडत्वपरात्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात्क्रियाफलस्य स्वर्गादेर्भोक्तुरात्मनोन्यत्वं प्रामाणिकानां प्रसिद्धमेव । तथाहमर्थाज्ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् ।
20 एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोप्यहंकारः स्वा-

1. C. om. च.
2. C. reads सिध्यति for संभवति.
3. B. reads अतः for यतः.
4. C. has अपि after आश्रयः.
6. C. om. हि.
12. B. reads सन्मात्र for चिन्मात्र.
14. C. reads अपाये for अभावे.
17. B, C. read तत् before क्रियाफलस्य.

श्रयतया तमभिव्यनक्ति। आत्मस्थतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाभिव्यनक्ति। तत्कृतोयं जानाम्यहमिति भ्रमः। स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहंकारेणाभिव्यङ्ग्यत्वमिति मा वोचः। रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वोपदर्शनात्। जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः। यतोहं जानामीति ज्ञातायमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मोत एव सुषुप्तिमुक्त्योर्नान्वेति। तत्र ह्यहमुल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्मावभासते। अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशति। तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति।

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततत्तदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति

2. B. om बिम्ब.

6. C. om. उप.

8. B. om. हि; B reads अतः for यतः

10. B. reads चित् for अनुभव.

19. B. C. om. तत् after वृत्त.

न्यायानुगृहीतवाक्यप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरना-
दरणीयम् । तथाहि । निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं
प्रमाणमिति न शक्यते वक्तुम् । सविशेषवस्तुविषयत्वात्सर्व-
प्रमाणानाम् । यस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः
5 सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः । इदमहमदर्श-
मिति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् ।
सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेष
इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशे-
षैर्निष्कृष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः
10 स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्वि-
शिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न कचिन्नि-
र्विशेषवस्तुसिद्धिः । धियो हि धीत्वं स्वयंप्रकाशता च ।
ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्छासु च स-
विशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः ।
15 स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषाः सन्त्येव । ते च न
वस्तुमात्रमिति शक्योपपादनाः । वस्तुमात्राभ्युपगमे सत्यपि
विधाभेदविवाददर्शनात् । स्वाभिमततद्विधाभेदैश्च स्वमतोपपा-
दनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ।

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम् ।
20 पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृ-
तिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् ।
पदभेदश्चार्थभेदनिबन्धनः । पदसंघातरूपस्य वाक्यस्यानेकपदार्थ-
संसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यान्न
निर्विशेषवस्तुनि शब्दः प्रमाणम् ।

1. C. om. वाक्य.

5. B. reads विशेष for सविशेष.

12. B. C. read स्व for स्वयं.

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषव-
स्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टवि-
षयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषय-
मेव । सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतु-
त्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं 5
न सर्वविशेषरहितस्य । तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्।
अनुपपत्तेश्च । केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीति-
रुपजायते । त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि
पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु
प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्यु- 10
च्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रती-
यते । द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्य-
नुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीया-
दिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् ।
सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृ- 15
ह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम् । न पुनः सं-
स्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरप्यैन्द्रियक-
त्वाविशेषात् । संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्र-
थमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते । अतो
द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्था- 20

1. C. reads निर्विशेषे for निर्विशेष.

12. B. reads अनुवृत्तिः प्रतीयते for अनुवृत्तिप्रतीतिः.

14. C. om. आदि before पिण्ड; B. reads द्वितीयादिपिण्डग्रहणे for द्वितीयादिग्रहणस्य.

16. C. om. पिण्ड.

19. B. om. पिण्ड.

निवत्संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव ।
अत: प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति
प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते । अत्रेत्थं-
5 भाव: सास्नादिसंस्थानविशेषस्तद्विशेष्यं द्रव्यमिदमंश इत्यनयो-
रैक्यं प्रतीतिपराहतमेव । तथाहि । प्रथममेव वस्तु प्रतीयमानं
सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थान-
विशेषविशिष्टतयेदमित्थमिति प्रतीति: । सर्वत्र विशेषणविशे-
ष्यभावप्रतिपत्तौ तयोरत्यन्तभेद: प्रतीत्यैव सुव्यक्त: । तत्र द-
10 ण्डकुण्डलादय: पृथक्संस्थानसंस्थिता: स्वनिष्ठाश्च कदाचि-
त्कचिद्द्रव्यान्तरविशेषणतयावतिष्ठन्ते । गोत्वादयस्तु द्रव्यसं-
स्थानतयैव पदार्थभूता: सन्तो द्रव्यविशेषणतयावस्थिता: । उ-
भयत्र विशेषणविशेष्यभाव: समान: । अत एव तयोर्भेदप्रति-
पत्तिश्च । इयांस्तु विशेष: । पृथक्स्थितिप्रतिपत्तियोग्या दण्डा-
15 दय: । गोत्वादयस्तु नियमेन तदनर्हा इति । अतो वस्तुविरोध:
प्रतीतिपराहत इति प्रतीतिप्रकारानिह्नवादेवोच्यते । प्रतीति-
प्रकारो हीदमित्थमित्येव सर्वसंमत: । तदेतत्सूत्रकारेण
नैकस्मिन्नसंभवात् (ब्र. सू. २।२।३१) इति सुव्यक्तमु-
पपादितम् । अत: प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्ट-
20 संबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमा-

1. C. reads सर्वथैव for सर्वदैव.

4. B. C. read तत्र for अत्र.

7. B. reads व्यावर्तमानम् for व्यावृत्तम्.

8. B. reads विशेषस्तद्द्रव्य for विशेष; C. om. इदम्. B. reads सर्व for सर्वत्र.

13. B. C. read तत: for अत:; B. reads प्रतीति: for प्रतिपत्ति:.

णसंख्याविवादेपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञावत्स्ववाग्विरोधित्वमपि न जानाति ।

यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं भेदश्च विकल्पासहत्वाद्दुर्निरूप इत्युक्तम् (पृ. २२ पं. १) तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव । 10
अत एव नानवस्थान्योन्याश्रयणं च । एकक्षणवर्तित्वेपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानगोत्वादेर्गृहीतत्वात्क्षणान्तरग्राह्यं न किंचिदिह तिष्ठति ।

अपि च सन्मात्रग्राहित्वे घटोस्ति पटोस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते । यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः किमित्यश्वार्थी महिषदर्शनेन निवर्तते । सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते । किंचाश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् । प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थवि-

3. B. C. read प्रतिज्ञायामिव स्ववाग्विरोधम् for प्रतिज्ञावत्स्ववाग्विरोधित्वम्.

10. C. has अपि after युष्माभिः.

12. C. has रूप after संस्थान.

16. B. reads लक्षण for लक्षणः.

18. C. has तत् before तत्प्रतिपत्ति.

षयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत ।

न च चक्षुषा सन्मात्रं गृह्यते । तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा । स्पर्शवद्वस्तुविषयत्वात् ।
5 श्रोत्रादीन्यपि न सन्मात्रविषयाणि । किंतु शब्दरसगन्धलक्षणविशेषविषयाण्येव । अतः सन्मात्रस्य ग्राहकं न किंचिदिह दृश्यते । निर्विशेषसन्मात्रस्य च प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात् । सन्मात्रब्रह्मणः प्रमेयभावश्च । ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः । अतो व-
10 स्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् । संस्थानातिरेकिणोनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसंधेयम् । जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात्प-
15 दार्थान्तरादर्शनादर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः । ननु च जात्यादिरेव भेदश्चेत्तस्मिन्गृहीते तद्व्यवहारवद्भेदव्यवहारोपि स्यात् । सत्यम् । भेदश्च व्यवह्रियत एव गोत्वादिव्यवहारात् । गोत्वादिरेव हि सकलेतरस्य व्यावृत्तिः । गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः । भेद-

---

3. C. om. रूप after तस्य.

4. B. om. वस्तु.

6. A. reads च before ग्राहकम्.

7. B. C. om. च before प्रत्यक्षेण.

11. C. reads अतिरेकेण for अतिरेकिणः.

13. B. C. read असाधारणम् for असाधारण.

15. C. om. अपि.

18. C. om. हि.

ग्रहणेनैव ह्यभेदनिवृत्तिः । अयमस्माद्भिन्न इति तु व्यवहारे प्र-
तियोगिनिर्देशस्य तदपेक्षत्वात्प्रतियोग्यपेक्षया भिन्न इति व्यव-
हार इत्युक्तम् ।

यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम्
(पृ० २३ पं० ९) तदनालोचितबाध्यबाधकभावव्यावृत्त्यनु- 5
वृत्तिविशेषस्य भ्रान्तिप्रकल्पितम् । द्वयोर्ज्ञानयोर्हि विरोधे बा-
ध्यबाधकभावो बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देश-
कालभेदेन विरोध एव नास्ति । यस्मिन्देशे यस्मिन्काले यस्य
सद्भावः प्रतिपन्नस्तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चे-
त्र विरोधाद्बलवतो बाधकत्वम् । बाधितस्य च निवृत्तिः । दे- 10
शान्तरकालान्तरसंबन्धितयानुभूतस्यान्यदेशकालयोरभावप्रतीतौ
विरोध इति कथमत्र बाध्यबाधकभावः । अन्यत्र निवृत्तस्या-
त्र निवृत्तिर्वा कथमुच्यते । रज्जुसर्पादिषु तु तद्देशकालसंब-
धतयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकाला-
न्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्ट- 15
मिति न व्यावर्तमानत्वमात्रमपारमार्थ्ये हेतुः । यत्त्वनुवर्तमान-
त्वात्सत्परमार्थ इति (पृ० २३ पं० ८) तत्सिद्धमेवेति न
साधनमर्हति । अतो न सन्मात्रमेव वस्तु । अनुभूतिसद्विशेष-
योश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्चा-
नुभूतिरेव सतीत्येतदपि निरस्तम् । 20

यत्त्वनुभूतेः स्वयंप्रकाशत (पृ० २५ पं० ३) त-

2. C. reads अपेक्षिततत्वात् for अपेक्षत्वात्.

6. B. C. read परिकल्पितम् for प्रकल्पितम्; C. reads विरोधे हि for हि विरोधे.

16. C. reads अपारमार्थ्यं for अपारमार्थ्ये.

18. B. reads विषय for विशेष.

द्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न तु सर्वेषां सर्वदा तथैवेति नियमोस्ति । परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात् । स्वानुभवस्याप्यतीतस्याज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च । अतोनुभूतिश्चेत्स्वतःसिद्धेति वक्तुं न शक्यते ।
5 अनुभूतेरनुभाव्यत्वेननुभूतित्वम् (पृ० २४ पं० ६) इत्यपि दुरुक्तम् । स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात् । परानुभवानुमानानभ्युपगमे च शब्दार्थसंबन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः । आचार्यस्य ज्ञानवत्त्वमनुभूय तदुपसत्तिश्च क्रियते सा च नोपपद्यते ।
10 नचान्यविषयत्वेननुभूतित्वम् । अनुभूतित्वं नाम वर्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम् । स्वसत्तयैव स्वविषयसाधनत्वं वा । ते चानुभवान्तरानुभाव्यत्वेपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति । घटादेस्त्वननुभूतित्वमेव । तत्स्वभावविरहात् । नानुभाव्यत्वात् । तथानुभूते-
15 रननुभाव्यत्वेप्यननुभूतित्वप्रसङ्गो दुर्वारः । गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात् । गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तं नाननुभाव्यत्वप्रयुक्तमिति चेदेवं तर्हि घटादेरप्यननुभूतित्वनिबन्धनमज्ञानाविरोधित्वमेव नानुभाव्यत्वमित्यास्थीयताम् । अनुभूतेरनुभाव्यत्वेज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत
20 इति चेदननुभाव्यत्वेपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव । अतोनुभाव्यत्वेननुभूतित्वमित्युपहास्यम् ।

---

1. A. B. read तदेव for तथैव.
2. C. om. तथैवेति.
9. B. C. read अनुमाय for अनुभूय.
14. B. reads एतत् for एव । तत्.
16. C. has अपि after अननुभाव्यस्य.
17. B. C. read अज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम् for अननुभूतित्वनिबन्धनमज्ञानाविरोधित्वम्.

यत्तु संविदः स्वतःसिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते (पृ० २५ पं० १०) तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्। अनुभूत्यैव ग्रहणात्। कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्। न ह्यनुभूतिः स्वसमानकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः। अतीतानागतयोरविषयत्वप्रसङ्गात्। अथ मन्यसेऽनुभूतिप्रागभावादेः सिध्यतस्तत्समकालभावनियमोऽस्तीति। किं त्वया क्वचिदेवं दृष्टं येन नियमं ब्रवीषि। हन्त तर्हि तत एव दर्शनात्प्रागभावादिः सिद्ध इति न तदभावनिह्नवः। तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति। इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमो यत्स्वसमानकालवर्तिनः पदार्थस्य ग्राहकत्वं न सर्वेषां ज्ञानानां प्रमाणानां च। स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात्। अत एव च प्रमाणस्य प्रमेयाविनाभावः। न हि प्रमाणस्य स्वकालवर्तिनाविनाभावोऽर्थसंबन्धः। अपि तु यद्देशकालादिसंबन्धितया योऽर्थोऽवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तं स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति। अथोच्येत न तावत्संवित्प्रागभावः प्रत्यक्षावसेयः। अवर्तमानत्वात्। न च प्रमाणान्तरावसेयः। लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते। नानुपलब्धिरपि कस्यचिद्दृश्यते। न चागमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यतीति। यद्येवं स्वतःसिद्धत्वविभवं परित्यज्य प्रमाणाभावेवरूढश्चेद्योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान्।

---

11. B. C. om. च after एव; C. has सम after स्व.

20. C. reads अनुपपत्तिः for अनुपलब्धिः.

किंच प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्तस्य न सर्वदा सत्तामवगमयद्दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्तत्संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयत इति नित्यः स्यात् । नित्यं चेत्संवेदनं स्वतःसिद्धं नित्यमित्येव प्रतीयेत । न च तथा प्रतीयते । एवमनुमानादिसंविदोपि कालानवच्छिन्नाः प्रतीताश्चेत्स्वविषयानपि कालानवच्छिन्नान्प्रकाशयन्तीति ते सर्वे कालानवच्छिन्ना नित्याः स्युः । संविदनुरूपस्वरूपत्वाद्विषयाणाम् । न च निर्विषया संवित्काचिदस्ति । अनुपलब्धेः । विषयप्रकाशनस्वभावतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता । संविदो विषयप्रकाशनसत्तास्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेरनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात् । न च स्वापमदमूर्छादिषु सर्वविषयशून्या केवलैव संवित्परिस्फुरतीति वाच्यम् । योग्यानुपलब्धिपराकृतत्वात् । तास्वपि दशास्वनुभूतिरनुभूता चेत्तस्याः प्रबोधसमयेनुसंधानं स्यात् । न च तदस्ति । नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः । अतः स्मरणाभावः कथमनुभवाभावं साधयेत् । उच्यते । निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेप्यस्मरणनियमोनु-

9. B. C. read च after ते.

10. C. om. स्वरूप.

11. C. om. स्वभाव.

13. B. C. read प्रकाशता for प्रकाशनसत्ता; B. C. om. अनुभूतेः.

16. C. reads पराहत for पराकृत.

17. B. reads इदम् for तत्.

19. B. has एव after अनुभवाभावम्.

भवाभावमेव साधयति । न केवलमस्मरणनियमादनुभवाभावः । सुप्तोत्थितस्येयन्तं कालं न किंचिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः । न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहंकारविगमाद्वेति शक्यते वक्तुम् । अर्थान्तरानुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात् । तास्वपि दशास्वहमर्थोनुवर्तत इति च वक्ष्यते । ननु स्वापादिदशास्वपि सविशेषोनुभवोस्तीति पूर्वमुक्तम् । सत्यमुक्तम् । स त्वात्मानुभवः स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संविदात्मानुभव इति चेन्न । सा च साश्रयेति ह्युपपादयिष्यते । अतोनुभूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम् । अनुभूतेरनुभाव्यत्वसंभवोपपादनेनान्यतोप्यसिद्धिर्निरस्ता । तस्मान्न प्रागभावाद्यसिद्ध्या संविदोनुत्पत्तिरुपपत्तिमती ।

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम् (पृ० २५ पं० २०) तदप्यनुपपन्नम् । प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताविष्कृता भवति । तथा च भवदभिमताविद्यानुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् । तद्विकाराः सर्वे मिथ्याभूता इति चेत् । किं भवतः परमार्थभूतोप्यस्ति विकारः । येनैतद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते ।

4. B. C. read अननुभवस्य for अनुभवस्य.

6. C. om. अनु.

9. C. om. च.

18. B. C. read विकारास्पदा for विकारास्पदम्.

21. C. om. हि.

यदप्यनुभूतिरजत्वात्स्वस्मिन्विभागं न सहत इति (पृ० २५ पं० २१) तदपि नोपपद्यते । अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात् । अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् । स विभागो मिथ्यारूप इति
5 चेत् । जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया । अविद्याया आत्मनः परमार्थतो विभागाभावे हि वस्तुतो ह्यविद्यैव स्यादात्मा । अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोपि समर्थित एव । छेद्यभेदाच्छेदनभेदवत् ।

यदपि नास्या दृशेर्दृशिस्वरूपाया दृश्यः कश्चिदपि धर्मोस्ति । दृ-
10 श्यत्वादेव तेषां न दृशिधर्मत्वमिति च (पृ० २६ पं० १३) तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम् । न च ते संवेदनमात्रम् । स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता । प्रकाशश्च चि-
15 दचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् । सर्वकालवर्तमानत्वं हि नित्यत्वम् । एकत्वमेकसंख्यावच्छेद इति । तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि तैश्चैतन्यधर्मभूतैरप्यनैकान्त्यमपरिहार्यम् । संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्तन्निषेधोक्त्या
20 किमपि नोक्तं भवेत् ।

---

1. C. reads अपि after स्वस्मिन्.

5. C. reads प्रतिबन्धः for प्रतिबद्धः.

6. B. om. हि.

17. C. reads चैतन्यधर्मभूतैस्तैः for तैश्चैतन्यधर्मभूतैरपि; B. reads चेतन for चैतन्य.

18. B. reads तत् for तु.

19. C. reads तत्तत् for तत्.

अपि च संवित्सिध्यति वा न वा । सिध्यति चेत्सधर्मता स्यात् । नो चेत्तुच्छता । गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्कस्य कं प्रतीति वक्तव्यम् । यदि न कस्य-चित्कंचित्प्रति सा तर्हि न सिद्धिः । सिद्धिर्हि पुत्रत्वमिव कस्यचित्कंचित्प्रति भवति । आत्मन इति चेत्कोयमात्मा । 5
ननु संविदेवेत्युक्तम् । सत्यमुक्तम् । दुरुक्तं तु तत् । तथा हि । कस्यचित्पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया तत्संब-न्धिनी सा संवित्स्वयं कथमिवात्मभावमनुभवेत् । एतदुक्तं भवति । अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्व-स्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपर- 10
नामा सकर्मकोनुभवितुरात्मनो धर्मविशेषो घटमहं जानामी-ममर्थमवगच्छामि घटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्र-सिद्धः । एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताप्यु-पपादिता । अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्वव-त्कर्तृत्वमपि दुर्घटमिति । तथा ह्यस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य 15
संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्ष-मीक्ष्यन्ते । कर्तृस्थैर्यं तावत्स एवायमर्थः पूर्वं मयानुभूत इति प्रत्यभिज्ञासिद्धम् । अहं जानाम्यहमज्ञासिषं ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्त-देक्यम् । एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृ- 20
ष्टमिदमपरेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते । अन्ये-नानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः । किंचानुभूतेरा-

1. C. reads सधर्मकता for सधर्मता.

14. B. reads कर्मभाववत् for कर्मत्ववत्.

18. B. C. read प्रत्यक्ष after प्रत्यभिज्ञा.

21. B. C. om. इदम् after दृष्टम्.



त्मत्वाभ्युपगमे तस्या नित्यत्वेपि प्रतिसंधानासंभवस्तदवस्थः । प्रतिसंधानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति नानुभूतिमात्रम् । अहमेवेदं पूर्वमप्यन्वभूवमिति भवतोनुभूतेर्न ह्यनुभवितृत्वमिष्टम् । अनुभूतिरनुभूतिमात्रमेव । संविन्नाम कां-
5 चिन्निराश्रया निर्विषया वात्यन्तानुपलब्धेर्न संभवतीत्युक्तम् । उभयाभ्युपगता संविदेवात्मेत्युपलब्धिपराहतम् । अनुभूतिमात्रमेव परमार्थ इति निष्कर्षहेत्वाभासाश्च निराकृताः ।

ननु चाहं जानामीत्यस्मत्प्रत्यये योनिदमंशः प्रकाशैकरसश्चित्पदार्थः स आत्मा । तस्मिंस्तद्बलनिर्भासिततया युष्मदर्थ-
10 लक्षणोहं जानामीति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव । नैतदेवम् । अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव । किं च

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते ॥
15 निरस्ताखिलदुःखोहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेपि मत्तोन्या काचिज्ज्ञप्तिरवस्थिता ।
20 इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसंबन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च ।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ॥

1. C. om. अपि.
2. B. C. read अवस्थायिनम् for स्थायिनम्.
3. C. om. अपि.
6. B. om. एव.
7. C. reads निष्कर्षक for निष्कर्ष.

छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्।
अतोहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम्॥
विज्ञातारमरे केन जानात्येवेति च श्रुतिः।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः॥
नात्मा श्रुतेरित्यारभ्य सूत्रकारोपि वक्ष्यति। 5
ज्ञोत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः। युष्मत्प्रत्ययविषयो युष्मदर्थः। तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थं च। न चासौ ज्ञाताहमर्थोन्याधीनप्रकाशः। स्वयंप्रकाशत्वात्। चैतन्यस्वभावता हि स्वयंप्रकाशता। 10 यः प्रकाशस्वभावः सोनन्याधीनप्रकाशो दीपवत्। न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेन प्रकाशित्वमन्याधीनप्रकाशत्वं च। किं तर्हि दीपः प्रकाशस्वभावः स्वयमेव प्रकाशतेन्यानपि प्रकाशयति प्रभया। एतदुक्तं भवति। यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते। यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता 15 तथापि तेजोद्रव्यमेव। न शौक्ल्यादिवद्गुणः। स्वाश्रयादन्यत्रापि वर्तमानत्वात्। रूपवत्त्वाच्च शौक्ल्यादिधर्मवैधर्म्यात्। प्रकाशवत्त्वाच्च तेजोद्रव्यमेव। नार्थान्तरम्। प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात्। अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः। न चाश्रयावयवा एव वि- 20 शीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते। मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात्। दीपेप्यवयवविप्रतिपत्तिः कदाचिदपि न स्यात्। न हि

9. C. om. च after व्याहतार्थम्.

12. B. C. read अप्रकाशत्वम् for प्रकाशित्वमन्याधीनप्रकाशत्वम्.

17. B. C. om. धर्म.

विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रनियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति वक्तुं शक्यते । अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात्त-
5 द्विनाशे विनाशाच्चावगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्याद्युपलब्धिव्यवस्थाप्यम् । अग्न्यादीनामौष्ण्यादिवत् । एवमात्मा चिद्रूप एव चैतन्यगुण इति । चिद्रूपता हि स्वयंप्रकाशता ।

तथा हि श्रुतयः स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो
10 रसघन एव । एवं वा अरेयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघनः ( बृ. ४।५।१३ ) । विज्ञानघन एव ( बृ. २।४।१२ ) । अत्रायं पुरुषः स्वयंज्योतिर्भवति ( बृ. ४।३।९ ) । न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ( बृ. ४।३।३० ) । अथ यो वेदेदं जिघ्राणीति स आत्मा ( छा. ८।१२।४ ) । कतम आत्मा
15 योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ( बृ. ४।३।७ )। एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः (प्र. ४।९)। विज्ञातारमरे केन विजानीयात् (बृ. २।४।१४)। जानात्येवायं पुरुषः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् (छा. ७।२६।२) । स उत्तमः पुरुषः.... नोपजनं
20 स्मरन्निदं शरीरम् ( छा. ८।१२।३ ) । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति (प्र. ६।५) । तस्माद्वा एतस्मान्मनोमयात् । अन्योन्तर आत्मा विज्ञानमयः

1. C. reads विशरणस्वभावा दीपावयवाः for विशरणस्वभावावयवा दीपाः
3. C. reads शक्यते वक्तुम् for वक्तु शक्यते.
7. C. reads चैतन्यगुणकः for चैतन्यगुणः.
16. C. reads घ्राता रसयिता for रसयिता घ्राता.

(तै.२।४।१) इत्याद्याः । वक्ष्यति च ज्ञोत एव (ब्र. सू. २।३।१९) इति । अतः स्वयंप्रकाशोयमात्मा ज्ञातैव न प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः प्रदीपादिप्रकाशवत् । तस्मान्नात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः । न हि लोकवेदयोर्जाना- 5
त्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः ।

यच्चोक्तम् ( पृ. २६ पं. ५ ) अजडत्वात्संविदेवात्मेति । तत्रेदं प्रष्टव्यम् । अजडत्वमिति किमभिप्रेतम् । स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत् । तथा सति दीपादिष्वनैकान्त्यम् । संविद्- व्यतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिरिति विरोधश्च । अव्य- 10
भिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् । यद्युच्येत सुखादिरव्यभिचरितप्रकाशोप्यन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेन नात्मेति । ज्ञानं किं स्वस्मै प्रकाशते । तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते । अहं सुखीतिवज्ज्ञानाम्य- हमिति । अतः स्वस्मै प्रकाशमानत्वमेवंरूपमजडत्वं संविद्यसि- 15
द्धम् । तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोहमर्थ एवात्मा । ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता । तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वमितरं प्रत्यप्र-

3. C. reads दीपादिवत् for प्रदीपादिप्रकाशवत्.

7. C. om. एव.

8. B. reads द्रष्टव्यम् for प्रष्टव्यम्; B. om. प्रयुक्त.

11. C. reads दुःख after सुख.

13. C. reads वा after ज्ञानम्.

15. B. C. om. एवम्.

16. B. reads स्वमात्मानम् for स्वात्मानम्.

17. C. om. हि.

कटत्वं च। अतो न ज्ञप्तिमात्रमात्मा। अपि तु ज्ञातैवाहमर्थः।

अथ यदुक्तम् (पृ. २६ पं. ८) अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयावभासते रजततयेव शुक्तिः। निरधिष्ठानभ्रमानुपपत्तेरिति। तदयुक्तम्। तथा सत्यनुभवसामानाधिकरण्येनानुभविताहमर्थः प्रतीयेतानुभूतिरहमिति। पुरोवस्थितभास्वरद्रव्याद्याकारतया रजतादिरिव। अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तम्। तथा ह्यनुभवाम्यहमिति प्रतीतिः। तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इतिप्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत।

यदप्युक्तम् (पृ. २६ पं. ९) स्थूलोहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनाज्ज्ञातृत्वमपि मिथ्येति। तदयुक्तम्। आत्मतयाभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्। तद्वत एव प्रतीतेः। सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्। हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या।

यदप्युक्तम् (पृ. २६ पं. १०) अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहंकारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः। अपि त्वन्तःकरणरूपस्याहंकारस्य। कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः। कर्तृत्वे चाहंप्रत्ययगोचरत्वे चात्म-

1. B. reads ज्ञानं नाम पुरुषस्यार्थविशेषं प्रत्युपादानादिधर्मविशेषः। after अर्थः

7. B. reads वत् for इव.

10. C. reads अवलम्बिनः for अवलम्बनः.

22. B. reads रूपादिरिव for रूपादिवत्; B. om. च after कर्तृत्वे.

नोभ्युपगम्यमाने देहस्यैवानात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति । नैतदुपपद्यते । देहस्यैवाचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहंकारस्य चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य । एतदुक्तं भवति । यथा देहादिर्दृश्यत्वपराक्त्वादिभिर्हेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यत ए- 5
वमन्तःकरणरूपाहंकारोपि तद्दृश्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति । अतो विरोधादेव न ज्ञातृत्वमहंकारस्य । दृशित्ववत् । यथा दृशित्वं तत्कर्मणोहंकारस्य नाभ्युपगम्यते तथा ज्ञातृत्वमपि न तत्कर्मणोभ्युपगन्तव्यम् । न च ज्ञातृत्वं विक्रि-
यात्मकम् । ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानं चास्य नि- 10
त्यस्य स्वाभाविकधर्मत्वेन नित्यम् । नित्यत्वं चात्मनो नात्मा श्रुतेः ( ब्र. सू. २।३।१८ ) इत्यादिषु वक्ष्यति । ज्ञोत एव ( ब्र. सू. २।३।१९ ) इत्यत्र ज्ञ इति व्यपदेशेन ज्ञानगुणाश्रयत्वं च स्वाभाविकमिति वक्ष्यति । अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां
प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् । स्वयमपरि- 15
च्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः । अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । इममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृ-
त्वमस्त्येव । तच्च न स्वाभाविकम् । अपितु कर्मकृतमित्यविक्रि- 20
यस्वरूप एवात्मा । एवंरूपाविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूप-

2. B. reads परिणामत्व for परिणामित्व.
4. C. reads यदा for यथा.
5. C. reads तत्तत् for तत्.
6. B. C. read द्रव्यत्वात् for दृश्यत्वात्.
13. B. C. om गुण.
14. C. reads च after अस्य; B. reads द्युमणि for मणि.
18. B. reads तम् before इमम्; B. reads द्वार for द्वारा.

स्यात्मन एवेति न कदाचिदपि जडस्याहंकारस्य ज्ञातृत्वसंभवः । जडस्वभावस्याहंकारस्य चित्संनिधानेन तच्छायापत्त्या तत्संभव इति चेत् । केयं चिच्छायापत्तिः । किमहंकारच्छायापत्तिः संविद उत संविच्छायापत्तिरहंकारस्य । न तावत्संविदः । संविदि ज्ञातृत्वानभ्युपगमात् । नाप्यहंकारस्य । तस्य जडस्योक्तरीत्या ज्ञातृत्वायोगात् । द्वयोरप्यचाक्षुपत्वाच्च । न ह्यचाक्षुपाणां छाया दृष्टा । अथाग्निसंपर्कादयःपिण्डौष्ण्यवच्चित्संपर्काज्ज्ञातृत्वोपलब्धिरिति । नैतत् । संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहंकारे ज्ञातृत्वं तदुपलब्धिर्वा । अहंकारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा ।

यदप्युक्तमुभयत्र वस्तुतो न ज्ञातृत्वमस्ति । अहंकारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्त्यादर्शादिवदिति । तदयुक्तम् । आत्मनः स्वयंज्योतिषो जडरूपाहंकाराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्

शान्ताङ्गार इवादित्यमहंकारो जडात्मकः ।

स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥ ( आ. सि. पृ. २७ ) इति ।

स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचिदहंकारोऽनुदितानस्तमितस्वरूपप्रकाशमशेपार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति । किं चा-

2. B. reads अपि after स्वभावस्य; C. reads चिति for चित्.

3. C. reads चिति for चित्.

5. B. C. read उक्तरीत्या तस्य जडस्य for तस्य जडस्योक्तरीत्या.

7. B. C. read छायापत्तिः for छाया; C. reads चिति for चित्.

हंकारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्ग्यव्यङ्ग्यभावः । तथोक्तम्

व्यङ्ग्यव्यङ्ग्यत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः ।
व्यङ्ग्यत्वेननुभूतित्वमात्मनि स्याद्यथा घटे ॥ ( आ. सि. पृ० २७) इति । 5

नच रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत्संविदभिव्यङ्ग्याहंकाराभिव्यङ्ग्यत्वं संविदः साधीयः । तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात् । करतलप्रतिहतगतयो हि रश्मयो वहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् । किं चास्य 10 संविद्रूपस्यात्मनोहंकारनिर्वर्त्याभिव्यक्तिः किंरूपा । न तावदुत्पत्तिः । स्वतःसिद्धतयानन्योत्पाद्यताभ्युपगमात् । नापि तत्प्रकाशनम् । तस्या अनुभवान्तराननुभाव्यत्वात् । तत एव च न तदनुभवसाधनानुग्रहः । स हि द्विधा । ज्ञेयस्येन्द्रियसंवन्धहेतुत्वेन वा । यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां 15 नयनादीन्द्रियसंवन्धहेतुत्वेन । वोद्धृगतकल्मषापनयनेन वा । यथा परतत्त्वाववोधसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम्

करणानामभूमित्वान्न तत्संवन्धहेतुता । (आ. सि. पृ. २८) इति ।

किं चानुभूतेरनुभाव्यत्वाभ्युपगमेप्यहमर्थेन न तदनुभव- 20 साधनानुग्रहः सुवचः । स ह्यनुभाव्यानुभवोत्पत्तिप्रतिवन्धक-

12. C. reads ननु before उत्पत्तिः; B. reads उत्पाद्यत्व for उत्पाद्यता.
13. B. reads तस्य for तस्याः.
17. B. reads अवबोधन for अवबोध; B. reads शमदमादीनाम् for शमदमादिना.
20. C. reads असमर्थेन for अहमर्थेन.
21. C. reads प्रतिबन्ध for प्रतिबन्धक.

निरसनेन भवत्। यथा रूपादिग्रहणोत्पत्तिविरोधिसंतमसनि-
रसनेन चक्षुषो दीपादिना। न चेह तथाविधं निरसनीयं
संभाव्यते। न तावत्संविदात्मगतं तज्ज्ञानोत्पत्तिविरोधि किं
चिदप्यहंकारापनेयमस्ति। अस्ति ह्यज्ञानमिति चेन्न। अ-
5 ज्ञानस्याहंकारापनोद्यत्वानभ्युपगमात्। ज्ञानमेव ह्यज्ञानस्य नि-
वर्तकम्। न च संविदाश्रयत्वमज्ञानस्य संभवति। ज्ञानसमा-
नाश्रयत्वात्तत्समानविषयत्वाच्च। ज्ञातृभावविषयभावविरहिते
ज्ञानमात्रे साक्षिणि नाज्ञानं संभवितुमर्हति। यथा ज्ञानाश्रय-
त्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं तथा ज्ञानमात्रेपि ज्ञा-
10 नाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात्। संविदोज्ञानाश्रयत्वा-
भ्युपगमेप्यात्मतयाभ्युपेतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन
न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्त-
यति। यथा रज्ज्वादौ। अतो न केनापि कदाचित्संविदाश्रयम-
ज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूप-
15 मेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञानप्रागभावरूपस्य चाज्ञानस्य
ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानु-
ग्रहः। अतो न केनापि प्रकारेणाहंकारेणानुभूतेरभिव्यक्तिः।

न च स्वाश्रयतयाभिव्यञ्ज्याभिव्यञ्जनमभिव्यञ्जकानां स्व-
भावः। प्रदीपादिष्वदर्शनात्। यथावस्थितपदार्थप्रतीत्यनुगुण-
20 स्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च। तच्च स्वतः-
प्रामाण्यं न्यायसिद्धम्। न च दर्पणादिर्मुखादेरभिव्यञ्जकः।

2. B. reads तथाविध for तथाविधम्.
5. C. reads अपोद्यत्व for अपनोद्यत्व.
8. B. C. read भवितुम् for संभवितुम्.
11. B. reads न ज्ञानेन for ज्ञानेन न.
17. C. om. अहंकारेण.
21. B. C. read प्रामाण्य for प्रामाण्यम्.

अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः । तद्दोषकृतश्च तत्रा-
न्यथावभासः । अभिव्यञ्जकस्त्वालोकादिरेव । न चेह तथाहं-
कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति । व्य-
क्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः । न तु व्यक्ति-
व्यङ्ग्यत्वात् । अतोन्तःकरणभूताहंकारस्थतया संविदुपलब्धेर्व- 5
स्तुतो दोषतो वा न किंचिदिह कारणमिति नाहंकारस्य ज्ञा-
तृत्वं तथोपलब्धिर्वा । तस्मात्स्वत एव ज्ञातृतया सिध्यन्नहमर्थ
एव प्रत्यगात्मा न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि न
प्रत्यक्त्वसिद्धिरित्युक्तम् । तमोगुणाभिभवात्परागर्थानुभवाभा-
वाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेप्याप्रबोधादहमित्येका- 10
कारेणात्मनः स्फुरणात्सुषुप्तावपि नाहंभावविगमः । भवदभि-
मताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम् । न हि सुप्तोत्थितः
कश्चिदहंभावावियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षि-
तयावतिष्ठ इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं
हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति । अनेन प्रत्य- 15
वमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते।
न च वाच्यं यथेदानीं सुखं भवति तथा तदानीमस्वाप्समित्येषा
प्रतिपत्तिरिति । अतद्रूपत्वात्प्रतिपत्तेः । न चाहमर्थस्यात्मनोस्थि-
रत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः । यतः सु-
षुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितो मयेदं कृतं मयेदमनु- 20
भूतमहमेवेदमवोचमिति परामृशति । एतावन्तं कालं न किं-
चिदहमज्ञासिषमिति च परामृशतीति चेत् । ततः किम् । न

5. C. reads रूप for भूत.
7. B. reads स्वभावतः before स्वतः.
10. B. reads प्रकाश for प्रतिभास.
20. B. reads च after प्रागनुभूतम्.
21. B. reads एवम् for एवेदम्.

किंचिदिति कृत्स्नप्रतिषेध इति चेन्न । अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेः । वेद्यविषयो हि स प्रतिषेधः । न किंचिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिसमयेऽप्यनुसंधीयमानमहमर्थमात्मानं ज्ञा-
5 तारमहमिति परामृश्य न किंचिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने तस्मिन्काले प्रतिषिध्यमानाया वित्तेः सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किंचिदहमवेदिषमिति परामर्शेन साधयंस्तामिममर्थं देवानामेव प्रियः साधयतु। मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानीमननुसंधानं प्रती-
10 यत इति चेत्स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः । अहं मां न ज्ञातवानिति ह्यनुभववचने मामिति किं निषिध्यत इति चेत्साधु पृष्टं भवता । तदुच्यते । अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते । अपि तु प्रबोधसमयेऽनुसंधीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता । अहं मां न ज्ञातवानि-
15 त्युक्तेर्विषयो विवेचनीयः । जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः । स्वापावस्थाप्रसिद्धोऽविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः । अत्र सुप्तोऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः।

किं च सुषुप्तावात्माज्ञानसाक्षित्वेनास्त इति हि भवदीया
20 प्रक्रिया । साक्षित्वं च साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वम् । ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते न ज्ञान-

4. C. reads तु for अपि.
6. B. C. read निषिध्यमानायाः for प्रतिषिध्यमानायाः.
7. B. C. om. अहम् after किंचित्.
8. B. C. om. प्रियः.
16. C. reads स्वाप्यय for स्वाप; B. reads प्रसिद्ध for प्रसिद्धः.
18. C. om. न.
21. B. C. read हि after ज्ञातैव.

मात्रम्। स्मरति च भगवान्पाणिनिः साक्षाद्द्रष्टरि संज्ञायाम् (पा० सू० ५।२।९१) इति साक्षाज्ज्ञातर्येव साक्षिशब्दम्। सचायं साक्षी जानामीति प्रतीयमानोस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत। आत्मने स्वयमवभासमानोहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोहमित्येवावभासत इति सिद्धम्। 5

यत्तु मोक्षदशायामहमर्थो नानुवर्तत इति। तदपेशलम्। तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न चाहमर्थो धर्ममात्रं येन तद्विगमेप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत। प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानं तु तस्य 10 धर्मः। अहं जानामि ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव। अपि च यः परमार्थतो भ्रान्त्या वाध्यात्मिकादिदुःखैर्दुःखितयात्मानमनुसंधत्तेहं दुःखीति सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयमित्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते। स साधनानुष्ठानेन यद्य- 15 हमेव न भविष्यामीत्यवगच्छेदपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्। अहमुपलक्षितं प्रकाशमात्रमपवर्गेवतिष्ठत इति चेत्। किमनेन। मयि विनष्टेपि किमपि प्रकाशमात्रमवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वमधिकारी प्रयतते। अतोहमर्थस्यैव ज्ञातृतया 20 सिध्यतः प्रत्यगात्मत्वम्।

2. B. reads साक्षिशब्दः for साक्षिशब्दम्.

11. C. reads एवम् for मे.

13. C. reads तम् before आत्मानम्; B. reads एव तत् for एतत्.

16. B. C. om. कथा.

19. C. reads नष्टे for विनष्टेपि.

20. C. reads बुद्धिपूर्वकारी for बुद्धिपूर्वमधिकारी.

स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते । स्वस्मै प्रकाशमानत्वात् । यो यः स्वस्मै प्रकाशते स सर्वोऽहमित्येव प्रकाशते यथा तथावभासमानत्वेनोभयवादिसंमतः संसार्यात्मा । यः पुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते यथा घटादिः ।
5 स्वस्मै प्रकाशते चायं मुक्तात्मा । स तस्मादहमित्येव प्रकाशते । न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः । मोक्षविरोधादज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमापादयति कुतः संसारि-
10 त्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव । ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति ( बृ० १।४।१० ) । अहमेव च संवर्तामि भविष्यामीत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्र-
15 भाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव । हन्ताहमिमास्तिस्रो देवताः ( छा० ६।३।२ ) । बहु स्यां प्रजायेय ( छा० ६।२।३ ) । स ऐक्षत लोकान्नु सृजै ( ऐ० १।१ ) इति । तथा

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ( गी० १५।१८ )

20 अहमात्मा गुडाकेश ( गी० १०।२० ) । न त्वेवाहं जातु नासम् ( गी० २।१२ ) ।

1. B. D. read स्वयम् after स्वस्मै.
6. B. om. आदि after संसारित्व.
7. B. reads मोक्षाविरोधात् for मोक्षविरोधात्.
13. reads वर्तामि for संवर्तामि.
17. C. reads ईक्षत for ऐक्षत.
19. B. om. अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः.

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । ( गी० ७।६ )
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । ( गी० १०।८ )
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । ( गी० १२।७ )
अहं बीजप्रदः पिता ( गी० १४।४ ) । वेदाहं समतीतानि
( गी० ७।२६ ) इत्यादिषु । यद्यहमित्येवात्मनः स्वरूपं कथं 5
तर्ह्यहंकारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते ।

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । (गी० १३।५) इति ।
उच्यते । स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्तथैवात्मस्वरू-
पप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणाम-
भेदस्याहंकारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते स त्वनात्मनि 10
देहेऽहंभावकरणहेतुत्वेनाहंकार इत्युच्यते । अस्य त्वहंकारशब्द-
स्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्व-
हंकार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया
प्रतिपाद्यते । तस्माद्बाधकापेताहंबुद्धिः साक्षादात्मगोचरैव ।
शरीरगोचरा त्वहंबुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण 15

श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्येति ।

यदि ज्ञप्तिमात्रमेवात्मा तदानात्मन्यात्माभिमाने शरीरे ज्ञ-
प्तिमात्रप्रतिभासः स्यान्न ज्ञातृत्वप्रतिभासः । तस्माज्ज्ञाताहमर्थ
एवात्मा । तथोक्तम् 20

अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताहमिति भासते ॥ (आ. सि.पृ. ३२)

इति । तथा च

---

6. C. om. एव after भगवता.

19. C. reads अवभासः for प्रतिभासः after मात्र; B. om. त्व

20. C. reads तदुक्तम् for तथोक्तम्.

देहेन्द्रियमनःप्राणधीभ्योन्योनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥ ( आ. सि. पृ. ६ ) इति । अनन्यसाधनः स्वप्रकाशः । व्याप्यतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ।

5 यदुक्तम् ( पृ. १८ ) दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति । कोयं दोष इति वक्तव्यं यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत् । भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् । अनेनैव शास्त्र-
10 विरोधेन ज्ञास्यत इति चेन्न । अन्योन्याश्रयणात् । शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयो भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति । किं च यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं शास्त्रमपि तन्मूलत्वेन तथैव
15 स्यात् ।

अथोच्येत दोषमूलत्वेपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्तत्प्रत्यक्षस्य बाधकमिति । तन्न । दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम् । 'रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोयमिति परिज्ञातेन केनचिन्नायं
20 सर्पो मा भैषीरित्युक्तेपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम् । श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः । अपिचेदं शास्त्र-

---

3. B. reads स्वयंप्रकाशः for स्वप्रकाशः.

9. C. reads अत्र for अन्यत्र.

10. B. om. न after चेत्.

17. B. om. तत् before प्रत्यक्षस्य.

मसंभाव्यमानदोषं प्रत्यक्षं तु संभाव्यमानदोषमिति केनाव-
गतं त्वया । न तावत्स्वतःसिद्धा निर्धूतनिखिलविशेषानुभूति-
रिममर्थमवगमयति । तस्याः सर्वविषयविरक्तत्वात् । शास्त्रपक्ष-
पातविरहाच्च । नाप्यैन्द्रियकं प्रत्यक्षम् । दोषमूलत्वेन विपरीता-
र्थत्वात् । तन्मूलत्वादेव नान्यान्यपि प्रमाणानि । अतः स्वपक्ष- 5
साधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ।

ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव । कोऽयं
व्यावहारिको नाम । आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न
तथावस्थित इति चेत् । किं तेन प्रयोजनम् । प्रमाणतया प्रतिप-
न्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् । अथोच्येत शास्त्र- 10
प्रत्यक्षयोर्द्वयोरप्यविद्यामूलत्वेपि प्रत्यक्षविषयस्य शास्त्रेण बाधो
दृश्यते । शास्त्रविषयस्य सदद्वितीयस्य ब्रह्मणः पश्चात्तनबाधा-
दर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति । तदयुक्तम् ।
अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् । एतदुक्तं भ-
वति । यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरि- 15
गुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरस्य सर्वस्य तिमिर-
दोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते । तत्र न बाधकप्र-
त्ययोस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्व-
मपि मिथ्यैव । दोषो ह्ययथार्थज्ञानहेतुः । तथा ब्रह्मज्ञानमविद्या-
मूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यै- 20
वेति । भवन्ति चात्र प्रयोगाः । विवादाध्यासितं ब्रह्म मिथ्या ।
अविद्यावदुत्पन्नज्ञानविषयत्वात् । प्रपञ्चवत् । ब्रह्म मिथ्या ।

12. C. reads अद्वितीय for सदद्वितीयस्य.
15. C. E. om. अन्तर.
16. E. reads अपि after सर्वस्य.
18. C. om. न after मिथ्या.
22. C. reads अविद्यावत उत्पन्नाज्ञान for अविद्यावदुत्पन्नज्ञान.

मिथ्याज्ञानविषयत्वात् । प्रपञ्चवत् । ब्रह्म मिथ्या । असत्यहेतुजन्यज्ञानविषयत्वात् । प्रपञ्चवदेव ।

न च वाच्यं स्वाप्नस्य हस्त्यादिज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति । स्वाप्नज्ञानस्यासत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वम् । तेषामेव हि बाधो दृश्यते न ज्ञानस्य । न हि मया स्वप्नवेलायामनुभूतं ज्ञानमिह न विद्यत इति कस्यचिदपि प्रत्ययो जायते । दर्शनं तु विद्यतेऽर्था न सन्तीति बाधकप्रत्ययः । मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः । तत्रापि ज्ञानस्याबाधितत्वात् । विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः । सत्यैवादष्टेपि स्वात्मनि सर्पसंनिधानादष्टबुद्धिः । सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता । वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः । एतेषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवगम्यते । हस्त्यादीनामभावे कथं तद्बुद्धयः सत्या भवन्तीति चेन्न । एतद्बुद्धीनां सालम्बनत्वमात्रनियमात् । अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेपे-

1. B. om. मिथ्या after मिथ्या; B. om. ब्रह्म मिथ्या.
3. B. C. read विज्ञानस्य for ज्ञानस्य.
8. C. reads अपि for इह.
9. B. om. तु; B. reads हि after इति.
10. B. reads प्रभव for प्रभवम्; C. reads प्रतीतेर्भ्रमस्य for प्रीतेर्भयस्य.
12. C. reads ज्ञानम् for विज्ञानम्.
15. C. reads एषाम् for एतेषाम्.
16. C. reads तत् before अर्थ.
18. C. reads सालम्बनत्वे विवक्षितम् for ह्यालम्बनत्वेपेक्षितम्.

क्षितम्। प्रतिभासमानता चास्यैव दोषवशात्। स तु बाधितोऽसत्य इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्युक्तम्।

रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः। रेखायाः सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः। वर्णात्मता त्वसत्या। नैवम्। वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च। अथ तस्यां वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात्। बुद्धेः सत्यत्वादेव। उपायोपेययोरैक्यप्रसङ्गश्च। उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसंकेतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसंकेतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति। हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः। रेखायाः संकेतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना। सादृश्यं च सत्यमेव। न चैकरूपस्य शब्दस्य नादविशेषेणार्थविशेषभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः। नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न सा-

5. C. reads तु after वर्णात्मतायाः; B. reads असत्यतया for असत्यायाः.

8. B. reads एवमुपायोपेययोः for एव। उपायोपेययोः.

9. C. reads अपि after उपायत्वे.

12. C. reads संकेतवत् for संकेतवशात्.

13. C. reads विशेष after बुद्धि.

16. C. om. भेद.

धीयः । गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् । अतो-
ऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ।

ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम् । प्रागद्वैतज्ञाना-
त्सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न
5 तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपा-
यस्तदास्त्येव शास्त्रमस्तीति बुद्धिः । नैवम् । असति शास्त्रे-
ऽस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् । ततः किम् । इदम् । ततो
मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो
मिथ्यात्वम् । यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मि-
10 थ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् । पश्चात्तनबाधादर्शनं
चासिद्धम् । शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् ।
तत्तु भ्रान्तिमूलमिति चेत् । एतदपि भ्रान्तिमूलमिति त्वयैवो-
क्तम् । पाश्चात्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिह-
सनेन ।

15 यदुक्तम् (पृ. १३ पं. १६) वेदान्तवाक्यानि निर्विशेषज्ञानैकर-
सवस्तुमात्रप्रतिपादनपराणि सदेव सोम्येदमग्र आसीत् (छा.
६।२।१) इत्येवमादीनीति । तदयुक्तम् । एकविज्ञानेन सर्ववि-
ज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जग-
दुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसंक-
20 ल्पत्वं सर्वान्तरत्वं सर्वाधारता सर्वनियमनमित्याद्यनेककल्याण-
गुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्यैवंभू-
तब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकर-
णस्य । प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे । अत्राप्यारम्भणाधिक-
रणे (२।१।१५) निपुणतरमुपपादयिष्यामः । अथ परा यया

13. C. reads पश्चात्तन for पाश्चात्य; C. om. एव after तस्य.

21. B. C. read उपपादयिष्यते for उपपादयिष्यामः.

तदक्षरमधिगम्यते ( मु. १।१।५ ) इत्यत्रापि प्राकृतान्हेयगुणान्प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसर्वज्ञत्वादिकल्याणगुणगणयोगः परस्य ब्रह्मणः प्रतिपादितः ।

सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१ ) इत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं सामानाधिकरण्यम् । तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वैकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोवश्याश्रयणीयः । इयांस्तु विशेषः । एकस्मिन्पक्षे पदानां मुख्यार्थतापरस्मिंश्च तेषां लक्षणा । न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव । एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात् । तथा सति सामानाधिकरण्यासिद्धिश्च । एकस्मिन्वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात् । न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि । एकस्यैव वस्तुनोनेकविशेषणविशिष्टताप्रतिपादनपरत्वात्सामानाधिकरण्यस्य । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दिकाः ।

यदुक्तम् (पृ. २१ प. २ ) एकमेवाद्वितीयमित्यत्राद्वितीयपदं गुणतोपि सद्वितीयतां न सहते । अतः सर्वशाखाप्रत्यय-

5\. B. reads विशिष्टैकार्थविधान for विशिष्टैकार्थाभिधान.

6\. B. C. read हि after वृत्तित्वम्.

9\. C. reads पक्षे after अपरस्मिंश्च.

10\. C. reads अज्ञानादि for अज्ञानादीनाम्.

13\. B. reads प्रवृत्ति before निमित्त.

17\. C. reads हि शाब्दाः for शाब्दिकाः.

18\. B. reads अपि after अत्र.

न्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगम-
नीयम्। कारणतयोपलक्षितस्य तस्याद्वितीयस्य ब्रह्मणो लक्षणमि-
दमुच्यते सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इति। अतो हि लिल-
क्षयिषितं ब्रह्म निर्गुणमेव। अन्यथा निर्गुणं निरञ्जनमित्यादिभिर्वि-
5 रोधश्चेति। तदनुपपन्नम्। जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधि-
ष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयप-
दस्य। तथैव विचित्रशक्तियोगमेवावगमयति तदैक्षत बहु स्यां
प्रजायेयेति तत्तेजोऽसृजत (छा. ६।२।३) इत्यादि। अविशेषे-
णाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति
10 चेत्। सिसृक्षोर्ब्रह्मण उपादानकारणत्वं सदेव सोम्येदमग्र आ-
सीदेकमेव (छा. ६।२।१) इति प्रतिपादितम्। कार्योत्पत्ति-
स्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन नि-
षिध्यत इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयि-
षिता नित्यत्वादयश्च निषिद्धाः स्युः। सर्वशाखाप्रत्ययन्यायश्चा-
15 त्रभवतो विपरीतफलः। सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वा-
दीनां गुणानामेवोपसंहारहेतुत्वात्। अतः कारणवाक्यस्वभावा-
दपि सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इत्यनेन सविशेष-
मेव प्रतिपाद्यत इति विज्ञायते। न च निर्गुणवाक्यविरोधः।
प्राकृतहेयगुणविषयत्वात्तेषां निर्गुणम् (चू. ७।२)। निरञ्जनम्
20 (श्वे. ६।१९)। निष्कलं निष्क्रियं शान्तम् (श्वे. ६।१९)
इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञान-

2. C. reads अपि before उपलक्षितस्य; B. om. तस्य.

3. B. C. om. हि.

6. B. om. प्रतिपादन.

12. B. reads तथा for तत्.

15. B. reads कारणवाक्यगतानाम् for कारणान्वयिनाम्.

स्वरूपतामभिदधति । न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम् । ज्ञातुरेव ज्ञानस्वरूपत्वात् । ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिप्रदीपादिवदित्युक्तमेव । ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति । यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) । तदैक्षत ( छा. ६।२।३ ) । सेयं देवतैक्षत ( छा. ६।३।२ ) । स ऐक्षत लोकान्नु सृजै ( ऐ. १।१ ) इति ।

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ( श्वे. ६।१३ ) । ज्ञाज्ञौ द्वावजावीशानीशौ ( श्वे. १।९ ) ।

तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।

पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥

( श्वे. ६।७–८ ) एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः ( छा. ८।१।५ ) इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान्कल्याणगुणाञ्ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान्वदन्ति समस्तहेयगुणरहिततां च । निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्याद्यपिपास इत्यन्तेन हेयगुणान्प्रतिषिध्य सत्यकामः सत्यसंकल्प इति ब्रह्मणः कल्याणगुणान्विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम् । भीषास्माद्वातः पवते (तै. २।८।१) इत्यादिना ब्रह्मगुणानारभ्य ते ये शतम ( तै. २।८।१ ) इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् ( तै. २।९।१ ) इति ब्रह्मणः कल्याणगुणानन्त्यमत्यादरेण वदतीयं श्रुतिः । सोश्नुते

3. B. C. read युक्तम् for इत्युक्तम्; B. reads इत्युक्तम् after एव.

सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता ( तै. २।१।१ ) इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान्कामानश्नुते । काम्यन्त इति कामाः कल्याणगुणाः । ब्रह्मणा सह तद्गुणान्त्सर्वा-
5 नश्नुत इत्यर्थः । दहरविद्यायां तस्मिन्यदन्तस्तदन्वेष्टव्यम् ( छा. ८।१।१ ) इतिवद्गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारैक्यं यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ( छा. ३।१४।१ ) इति श्रुत्यैव सिद्धम् । यस्यामतं तस्य मतम् ....अविज्ञातं विजानताम् ( के. ११ )
10 इति ब्रह्मणो ज्ञानाविषयत्वमुक्तमिति चेन्न । ब्रह्मविदाप्नोति परम् ( तै. २।१।१ ) । ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) इति ज्ञानान्मोक्षोपदेशो न स्यात् ।

असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥ ( तै. २।६।१ )

15 इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति । अतो ब्रह्मविषयवेदनमेवापवर्गाय सर्वाः श्रुतयो विदधति । ज्ञानं चोपासनात्मकम् । उपास्यं च ब्रह्म सगुणमित्युक्तम् । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ( तै. २।४।१) इति ब्रह्मणोनन्तस्यापरिमितगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदा-
20 योग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम् । अपरिच्छिन्नत्वाद्ब्रह्मणः । अन्यथा यस्यामतं तस्य मतम्....विज्ञातमविजानताम्(के. ११) इति ब्रह्मणो मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते ।

यत्तु न दृष्टेर्द्रष्टारम्....न मतेर्मन्तारम् ( बृ. ३।४।२ ) इति
25 श्रुतिर्दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति । तदाग-

22. B. om. ब्रह्मणः.

न्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथात्मानं पश्येर्न मन्वीथा अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येरित्यभिदधातीति परिहृतम् । अथ वा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः । अन्यथा विज्ञातारमरे केन विजानीयात् ( बृ. २।४।१४ ) इति ज्ञातृत्वश्रुतिविरोधश्च । 5

आनन्दो ब्रह्मेत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तं तज्ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति परिहृतम् ( पृ. ४२ पं. ७ ) । ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते । विज्ञानमानन्दं ब्रह्मेत्यानन्दस्वरूपमेव विज्ञानं ब्रह्मेत्यर्थः । अत एव भवतामेकरसता । अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव स एको ब्रह्मण आनन्दः ( तै. २।८।१ ) । आनन्दं ब्रह्मणो विद्वान् ( तै. २।४।१ ) इत्यादिव्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म । अपि त्वानन्दि । ज्ञातृत्वमेव ह्यानन्दित्वम् । 10 15

यदिदमुक्तं यत्र हि द्वैतमिव भवति ( बृ. २।४।१४ ) । नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ( बृ. ४।४।१९ ) । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ( बृ. ४।५।१५ ) इति भेदनिषेधो बहुधा दृश्यत इति । तत्कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते । 20

4. C. om. भूत.

9. C. reads वदतीति after स्वरूपमिति.

11. B. reads रूपमेव for स्वरूपमेव.

20. C. reads इत्यादिभेद for इति भेद.

न पुनर्बहु स्यां प्रजायेय (छा. ६।२।३) इति बहुभवनसंकल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम् । नानात्वनिषेधादियमपरमार्थविषयेति चेन्न । प्रत्यक्षादिसकलप्रमाणानवगतनानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव
5 बाध्यत इत्युपहास्यमिदम् ।

यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति (तै. २।७।१) इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तं तदसत् । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत (छा. ३।१४।१) इति तन्नानात्वानुसंधा-
10 नस्य शान्तिहेतुत्वोपदेशात् । तथा हि । सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसंधानेनात्र शान्तिर्विधीयते । अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगद्ब्रह्मात्मकमित्यनुसंधानस्य शान्तिहेतुतयाभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः । एवं तर्ह्यथ तस्य भयं भवति (तै. २।७।१) इति
15 किमुच्यते । यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयं प्रतिष्ठां विन्दते । अथ सोभयं गतो भवति (तै. २।७।१) इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाभिहिता तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः

यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
20 सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥

इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशो विच्छेद एव ।

4. B. C. read अनवगतम् for अनवगत.

11. B reads लयस्थिति for स्थितिलय.

15. C. reads इदमुच्यते । after उच्यते.

18. B. reads यदुक्तम् for यथोक्तम्.

21. B. reads प्रतिष्ठायाम् for प्रतिष्ठायाः.

यदुक्तम् (पृ. १४ पं. १२) न स्थानतोपीति सर्वविशेषरहितं ब्रह्मेति वक्ष्यतीति । तन्न । सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति । मायामात्रं त्विति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति पारमार्थिकत्वमेव वक्ष्यति । स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थो- 5
न्यदपारमार्थिकमिति प्रतीयत इति यदभिहितं तदसत् ।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । (गी. १०।३)
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ (गी. ९।४-५) 10
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ (गी. ७।६-७)
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।
(गी. १०।४२) 15
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ।
अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
(गी. १५।१७-१८) 20
स सर्वभूतप्रकृतिं विकारान्गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोसौ स्वशक्तिलेशोद्धृतभूतसर्गः ।

6. B. reads प्रतिज्ञायते for प्रतीयते.
21. C. reads भूतः for भूत.
23. B. reads लेशाद्धृत for लेशोद्धृत.

इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोसौ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यष्टिसमष्टिरूपोव्यक्तस्वरूपोप्रकटस्वरूपः ।
5 सर्वेश्वरः सर्वदृक्सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यथ गम्यते वा तज्ज्ञानमज्ञानमतोन्यदुक्तम् ॥
( वि. पु. ६।५।८३-८७ )
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
10 मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥
संभर्तेति तथा भर्ता भकारोर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
15 वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोव्ययः ॥
( वि. पु. ६।५।७२-७५ )
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
20 ( वि. पु. ६।५।७९ )
एवमेष महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥

4. B. C. E. F. read प्रकट for अप्रकट.

9. B. reads शद्विते for शब्द्यते; Vishnupuranum reads वर्तते for शब्द्यते.

21. Vishnupuranum reads भगवानिति सत्तम for मैत्रेय भगवानिति.

तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोयं नोपचारेण अन्यत्र ह्युपचारतः ॥
( वि. पु. ६।५।७६-७७ )
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ 5
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥
( वि. पु. ६।७।६९-७१ ) 10
एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥
( वि. पु. १।२२।५१ )
परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ 15
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्म परमं नित्यमजमक्षय्यमव्ययम् । 20
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥
( वि. पु. १।२।१०-१४ )
प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी । 25

---

20. B. C. E. F. read अक्षरम् for अक्षयम्.

पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥
( वि. पु. ६।४।३८-३९ )
5 द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ।
अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ॥
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥
10 ( वि. पु. १।२२।५३-५५ )
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसंततान् ॥
15 तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥
( वि. पु. ६।७।६१-६३ )
प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥
20 तयोः सैव पृथग्भावकारणं संश्रयस्य च ।
( वि. पु. २।७।२९-३० )
यथा सक्तो जले वातो बिभर्ति कणिकाशतम् ।

3. B. reads देवेषु for वेदेषु.

6. B. C. read च for अव.

19. C. reads बुद्धौ कृता संश्रयधर्मिणा for बुद्धे वृतौ संश्रयधर्मिणौ; B. reads साश्रय for संश्रय.

22. C. reads सक्तम् for सक्तः.

शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः ॥

( वि. पु. २।७।३२ )

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।

आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥

( वि. पु. १।२२।५९ ) इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं शरीररूपशक्तिविभूत्यादिशब्दैस्तत्तच्छब्दसामानाधिकरण्येन चाभिधाय तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेणावस्थितिं चोक्त्वा क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसंधानमचिद्रूपार्थाकारतयानुसंधानं च प्रतिपादितमिति परं ब्रह्म सविशेषं तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ।

प्रत्यस्तमितभेदमित्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचरमित्युच्यत इति । अनेन न प्रपञ्चापलापः । कथमिदमवगम्यत इति चेत्तदुच्यते । अस्मिन्प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान्प्रत्याहारपर्यन्तांश्चोक्त्वा धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दा-

9. C. D. E. F. read तन्वंश before शक्ति.

11. B. reads स्वरूपेण for रूपेण; C. om. अव after क्षेत्रज्ञरूपेण.

13. C. reads रूपत्वेन for रूपत्व.

18. B. C. read अगोचरम् for न गोचरम्.

19. C. om. न after अनेन.

मिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य तृतीयशक्तिरूपक-
र्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावना-
त्रयान्वयादशुभमित्युक्त्वा द्वितीयस्य कर्माख्याविद्याविरहिणोचि-
द्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येय-
5 तया योगयुञ्जनसोनालम्बनतया स्वतःशुद्धिविरहाच्च शुभाश्रयत्वं
प्रतिषिध्य परशक्तिरूपमिदममूर्तम् ( १ ) अपरशक्तिरूपं क्षेत्र-
ज्ञाख्यं मूर्तं च ( २ ) परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतु-
भूततृतीयशक्त्याख्यकर्मरूपाविद्या च ( ३ ) इत्येतच्छक्तित्रया-
श्रयं भगवदसाधारणमादित्यवर्णमित्यादिवेदान्तसिद्धं 'मूर्तं रूपं
10 शुभाश्रय इत्युक्तम् । अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां
वक्तुं प्रत्यस्तमितभेदं यदित्याद्युच्यते । तथाहि ।

न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ॥

( वि. पु. ६।७।५५ )

15 समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

( वि. पु. ६।७।६९ ) इति । तथा चतुर्मुखसनकादीनां
जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयानर्हतामुक्त्वा बद्धाना-
मेव पश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपमापन्नानां च स्वतःशुद्धि-
20 विरहाद्भगवता शौनकेन शुभाश्रयता निषिद्धा ।

---

3. B. reads एव after अन्वयात्.

9. C. reads आश्रयः for आश्रयम्: C reads अमूर्तरूपम् for मूर्तं रूपम्; B. reads स्वरूपं शुभाश्रयम् for रूपं शुभाश्रयः.

17. B. C. read च वदति after इति; C. reads सनन्दन for सनक.

18. B. C. read आश्रयत्व for आश्रय.

19. C. reads स्वस्वरूप for स्वस्वरूपम्.

आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । 5
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥
तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् ।

इत्यादिना परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम् । अतोत्र न भेदापलापः प्रतीयते ।

ज्ञानस्वरूपमित्यत्रापि ज्ञानव्यतिरिक्तार्थजातस्य कृत्स्नस्य न 10 मिथ्यात्वं प्रतिपाद्यते । ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात् । न हि शुक्तिकाया रजततयावभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति । जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेर्ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य 15 मिथ्यात्वमुक्तं स्यादिति चेन । तदसत् । अस्मिञ्छास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासंभवात् । सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहमविरुद्धं चेत्येतदनन्तरमेवोपपादयिष्यते । अतोयमपि श्लोको नार्थस्वरू- 20 पस्य बाधकः । तथाहि । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व ।

2. C. reads जनिताः for जनित

12. B. reads शुक्तिकायाम् for शुक्तिकायाः.

13. D. reads मिथ्या before रजततया.

20. B. C. om. एतत्.

तद्ब्रह्म। (तै. ३।१।१) इति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

इति, शास्त्रेणास्यार्थस्येतिहासपुराणाभ्यामुपबृंहणं कार्यमिति ज्ञा-
5 यते । उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसा-
क्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् ।
सकलशाखानुगतस्य वाक्यार्थस्याल्पभागश्रवणाद्दुरवगमत्वेन तेन
विना निश्चयायोगादुपबृंहणं हि कार्यमेव । तत्र पुलस्त्यवसिष्ठ-
वरप्रदानलब्धपरदेवतापारमार्थिकज्ञानवतो भगवतः पराशरा-
10 त्स्वावगतवेदार्थोपबृंहणमिच्छन्मैत्रेयः परिपप्रच्छ

सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥
यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च ॥

15 ( वि. पु. १।१।८–९ ) इत्यादिना । तत्र ब्रह्मस्वरूपविशे-
षतद्विभूतिभेदप्रकारतदाराधनस्वरूपफलविशेषाश्च पृष्टाः । ब्रह्म-
स्वरूपविशेषप्रश्नेषु यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्ट-
त्वाद्यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत्किमात्मकमिति
पृष्टम् । तस्य चोत्तरं जगच्च स इति । इदं च तादात्म्यमन्तर्या-
20 मिरूपेणात्मतया व्याप्तिकृतं न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृ-
तम् । यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधि-
करण्यस्य । यन्मयमिति मयण्न विकारार्थः । पृथक्प्रश्नवैयर्थ्यात् ।

---

5. C. reads तत्त्व for तत् after सकलवेद.

9. B. C. read पारमार्थ्य for पारमार्थिक.

15. B. C. read अत्र for तत्र.

16. C. om. तत् before विभूति.

22. B. C. read अत्र after मयट्.

नापि प्राणमयादिवत्स्वार्थिकः । जगच्च स इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत् । अतः प्राचुर्यार्थ एव तत्प्रकृतवचने मयट् ( पा. सू. ५।४।२१ ) इति मयट् । कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव । तस्मात्तन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्म- 5 भावनिबन्धनमिति निश्चीयते । अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न संगच्छन्ते । तद्विवरणरूपं कृत्स्नं च शास्त्रं न संगच्छते । तथा हि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेवोत्तरं स्यात् । जगद्ब्रह्मणो- 10 रेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसंकल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत । सर्वाशुभास्पदं च ब्रह्म भवेत् । आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते । अतः

विष्णोः सकाशादुद्भूतं जगत्तत्रैव संस्थितम् 15
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ॥

( वि. पु. १।१।३५ ) इति संग्रहेणोक्तमर्थं परः पराणामित्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितमविकारायेति श्लोकेन प्रथमं प्रणम्य तमेव हिरण्यगर्भस्थावतारशङ्कररूपत्रिमूर्तिप्रधानकालक्षेत्रज्ञसमष्टिव्यष्टिरूपेणाव- 20 स्थितं च नमस्करोति । तत्र ज्ञानस्वरूपमित्ययं श्लोकः क्षेत्रज्ञ-

10. C. reads एकम् before एव; B. reads जगच्च स इति before जगद्ब्रह्मणोः.

15. C. reads च स्थितम् for संस्थितम्.

20. C. om. व्यष्टि.

व्यष्ट्यात्मनावस्थितस्य परमात्मनः स्वभावमाह । तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः ।

यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं तर्हि

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
5 कथं सर्गादिकर्तृत्वं ब्रह्मणोभ्युपगम्यते ॥

( वि. पु. १।३।१ ) इति चोद्यम्

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।

10 ( वि. पु. १।३।२–३ ) इति परिहारश्च न घटते । तथा सति निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वं ब्रह्मणो न पारमार्थिकः सर्गोपि तु भ्रान्तिकल्पित इति चोद्यपरिहारौ स्याताम् । उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादेः
15 कर्तृत्वमभ्युपगम्यत इति चोद्यम् । दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्सर्वशक्तियोगो न विरुध्यत इति परिहारः ।

2. B. C. read प्रतिपत्तिः for प्रतीतिः.
3. C. om. भ्रम.
8. C. reads स्वर्गाद्याः for सर्गाद्याः.
9. B. reads तपसाम् for तपताम्.
10. C. reads हि after तथा.
11. B. reads ब्रह्मणो निर्गुणस्य for निर्गुणस्य ब्रह्मणः; C. reads स्वर्गादि for सर्गादि; B. reads न ब्रह्मणः for ब्रह्मणो न; C. om. न after ब्रह्मणः.
12. C. reads स्वर्गः for सर्गः.
14. C. reads स्वर्गादेः for सर्गादेः.

परमार्थस्त्वमेवैकः (पृ. १४ पं. १९)इत्याद्यपि न कृत्स्न-
स्यापारमार्थ्यं वदति । अपि तु कृत्स्नस्य तदात्मकतया तद्व्यति-
रेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति

तवैष महिमा येन व्याप्तमेतच्चराचरम् ।

(वि. पु. १।४।३८) इति । येन त्वयेदं चराचरं व्याप्तम- 5
तस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोपि नास्ति । अतः सर्वा-
त्मतया त्वमेवैकः परमार्थः । अत इदमुच्यते तवैष महिमा यः
सर्वव्याप्तिरिति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम् । जगतः
पते त्वमित्यादीनां पदानां च लक्षणा स्यात् । लीलया महीमुद्धरतो
भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च । यतः कृत्स्नं जगज्ज्ञा- 10
नात्मना त्वयात्मतया व्याप्तत्वेन तव मूर्तं तस्मात्त्वदात्मकत्वानुभ-
वसाधनयोगविरहिण एतत्केवलं देवमनुष्यादिरूपमिति भ्रा-
न्तिज्ञानेन पश्यन्तीत्याह यदेतद्दृश्यत इति । न केवलं वस्तुतं-
स्त्वदात्मकं जगद्देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः । ज्ञा-
नाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्या- 15
ह ज्ञानस्वरूपमखिलमिति । ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्म-
विदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमन-
सश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमखिलं ज-
गच्छरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह ये
तु ज्ञानविद इति । अन्यथा श्लोकानां पौनरुक्त्यं पदानां लक्षणा- 20
र्थविरोधः प्रकरणविरोधः शास्त्रतात्पर्यविरोधश्च ।

तस्यात्मपरदेहेषु सतोप्येकमयमित्यत्र सर्वेष्वात्मसु ज्ञानैका-

9. B. C. read लक्षणा च for च लक्षणा.

12. B. C. D. E. F. read केवल for केवलम्.

14. B. reads तत् for त्वत्.

19. B. reads रूपात्मक for रूपात्मकम्; B. om. च.

कारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूप-
पिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्य-
ते । पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते । देवमनुष्या-
दिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः ।
5 यथोक्तं भगवता

शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।

( गी. ५।१८ ) निर्दोषं हि समं ब्रह्म ( गी. ५।१९ )
इत्यादिषु । तस्यात्मपरदेहेषु सतोपीति देहातिरिक्ते वस्तुनि
स्वपरविभागस्योक्तत्वात् ।

10 यद्यन्योस्ति परः कोपीत्यत्रापि नात्मैक्यं प्रतीयते । यदि
मत्तः परः कोप्यन्य इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयो-
गायोगात् । तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः । अन्यश-
ब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः । एत-
दुक्तं भवति । यदि मद्व्यतिरिक्तः कोप्यात्मा मदाकारभूतज्ञा-
15 नैकाकारादन्याकारोस्ति तदाहमेवमाकारोयं चान्यादृशाकार
इति शक्यते व्यपदेष्टुम् । न चैवमस्ति । सर्वेषां ज्ञानैकाका-
रत्वेन समानत्वादेवेति ।

वेणुरन्ध्रविभेदेनेत्यत्राप्याकारवैषम्यमात्मनां" न स्वरूपकृत-
मपि तु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते नात्मैक्यम् ।
20 दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम् । अपि
त्वाकारसाम्यमेव तेषाम् । वायुत्वेनैकाकाराणां रन्ध्रभेदनि-
ष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः । एवमात्मनां देवादिसंज्ञा-
भेदः । तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्य-

4. C. om. सर्वम्.

11. B. reads अस्मिन् for एकस्मिन्.

23. B. reads द्रव्यतया for द्रव्यत्वेन.

त्वेनैक्यमेव न स्वरूपैक्यम् । तथा वायवीयानामंशानामपि स्वरूपभेदोवर्जनीयः ।

सोहं स च त्वमिति सर्वात्मनां पूर्वोक्तं ज्ञानाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहं त्वमित्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन्देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह । अन्यथा देहाद्यतिरिक्तोपदेश्यस्वरूपेहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते । अहंत्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संगच्छते । सोपि यथोपदेशमकरोदित्याह तत्याज भेदं परमार्थदृष्टिरिति । कुतश्चैष निर्णय इति चेत् । देहात्मविवेकविषयत्वादुपदेशस्य । तच्च

> पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ।
> ( वि. पु. २।१३।८४ ) इति प्रक्रमात् ।

विभेदजनकेज्ञान इति च नात्मस्वरूपैक्यपरम् । नापि जीवपरयोः । आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति । तथा च श्रुतिः ।

> द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
> तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योभिचाकशीति ॥

( मु. ३।१।१ )

> ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
> छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥

---

1. B. reads तथा before स्वरूपभेदः

6. B. C. om. आदि after देह.

15. B. reads अतः before आत्मस्व

(का. ३।१) अन्तः प्रविष्टः शास्ता जनानाम् (तै. आ. ३।११) सर्वात्मा (कै. १६) इत्याद्या । अस्मिन्नपि शास्त्रे

स सर्वभूतप्रकृतिं विकारं गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
5 समस्तकल्याणगुणात्मकोसौ ( वि. पु. ६।५।८३-८४) ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।

( वि. पु. ६।५।८५ )

अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥

10 ( वि. पु. ६।७।६१ ) इति भेदव्यपदेशात् । उभयेपि हि भेदेनैनमधीयते ( ब्र. सू. १।२।२१ ) । भेदव्यपदेशाच्चान्यः ( ब्र. सू. १।१।२२ ) । अधिकं तु भेदनिर्देशात् (ब्र. सू. २।१।२२) इत्यादिसूत्रेषु च । य आत्मनि तिष्ठन्नात्मनोन्तरः । यमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति ( बृ. ३।७।२२ ) ।
15 प्राज्ञेनात्मना संपरिष्वक्तः ( बृ. ४।३।२१ ) । प्राज्ञेनात्मनान्वारूढः ( बृ. ४।३।३५ ) इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् । नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः । अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात् । यथोक्तम्

20 परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद्रव्यं हि नैति तद्द्रव्यतां यतः ॥

---

2. C. reads शास्त्रे च for अपि शास्त्रे.

3. B. C. read विकारान् for विकारम्.

13. C. reads इत्यादिषु for इत्यादि.

18. B. reads संभवात् for असंभवात्.

( वि. पु. २।१४।२७ ) इति । मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

( गी. १४।२ ) इति । इहापि 5

आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥

( वि. पु. ६।७।३० ) इति । आत्मभावमात्मनः स्वभावम् । नह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ( ब्र. सू. ४।४।१७ )। भोगमात्रसाम्यलिंगाच्च ( ब्र. सू. ४।४।२१ ) । मुक्तोपसृप्यव्यपदेशाच्च ( ब्र. सू. १।३।२ ) इति । वृत्तिरपि जगद्व्यापारवर्जं समानो ज्योतिषेति । द्रमिडभाष्यकारश्च देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिः स्यादित्याह । श्रुतयश्च य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ( छा. ८।१।६ )। ब्रह्मविदाप्नोति परम् ( तै. २।१।१ )। सोश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता (तै. २।१।१)। एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् ( तै. ३।१०।५ ) । स तत्र पर्येति (छा. ८।१२।३)। रसो वै सः । रसꣳ ह्येवायं लब्ध्वानन्दी भवति । (तै.२।७।१ ) 20

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥

( मु. ३।२।८ )

---

1. C. reads धर्मापत्तिः for धर्मतापत्तिः.

13. B. reads द्रविड for द्रमिड.

15. C. reads सर्वान् for सत्यान्.

तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।
( मु. ३।१।३ ) इत्याद्याः ।

परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यं फलं चैकरूपमेवातो विद्याविकल्प इति सूत्रकारेणैव आनंदादयः प्रधानस्य
5 (ब्र.सू.३।३।११)। विकल्पोविशिष्टफलत्वात् (ब्र. सू. ३।३।५७) इत्यादिपूक्तम् । वाक्यकारेण च सगुणस्योपास्यत्वं विद्याविकल्पश्लोक्तो युक्तं तद्गुणकोपासनादिति। भाष्यकृता व्याख्यातं च यद्यपि सच्चित्त इत्यादिना। ब्रह्म वेद ब्रह्मैव भवति (मु.३।२।९) इत्यत्रापि नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् (मु.३।२।८)।
10 निरञ्जनः परमं साम्यमुपैति (मु.३।१।३)। परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।३।४ ) इत्यादिभिरैकार्थ्यात्प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव । यथा सोयं गौरिति । अत्रापि

15 विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेपभावनः ॥

( वि. पु. ६।७।९१ ) इति परब्रह्मध्यानादात्मा परब्रह्मवत्प्रक्षीणाशेषभावनः कर्मभावना ब्रह्मभावनोभयभावनेति भावनात्रयरहितः प्रापणीय इत्यभिधाय

20 क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥

( वि. पु. ६।७।९२ ) इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा

8. B. reads मच्चित्त for सच्चित्त.
17. C. om. पर before ब्रह्मवत्.
18. C. reads च after उभयभावना.

तद्भावभावमापन्नस्तदासौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥

(वि. पु. ६।७।९३) इति मुक्तस्य स्वरूपमाह। तद्भावो ब्रह्मणो भावः स्वभावः। न स्वरूपैक्यम्। तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्। पूर्वोक्तार्थविरोधाच्च। यद्ब्रह्मणः 5 प्रक्षीणाशेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः। यदैवमापन्नस्तदायं परमात्मनाभेदी भवति भेदरहितो भवति। ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः। तदन्वयोस्य कर्मरूपाज्ञानमूलो न स्वरूपकृतः। स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निव- 10 र्तत इत्यभेदी भवति। यथोक्तम्

एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः।
देवादिभेदे विध्वस्ते नास्त्यनावरणो हि सः॥

इति। एतदेव विवृणोति

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। 15
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥

(वि. पु. ६।७।९४) इति। विविधो भेदो विभेदो देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि

चतुर्विधो विभेदोयं मिथ्याज्ञाननिबन्धनः।

इति। आत्मनि ज्ञानस्वरूपे देवादिरूपविविधभेदहेतुभूतकर्मा- 20 ख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकं नाशं गते सति हेत्वभावाद-

4. B. C. read तु after न.
6. C. reads यथैवमापन्नस्तथासौ for यदैवमापन्नस्तदायम्.
8. B. reads प्रकरणस्य for प्रकारस्य.
12. B. reads न for तु.
13. B. D. E. F. read एवावरणः for अनावरणः.
20. C. om. स्व; B. reads विभेद for विविधभेद.

सन्तं परस्माद्ब्रह्मण आत्मनो देवादिरूपं भेदं कः करिष्यतीत्यर्थः। अविद्याकर्मसंज्ञान्या (वि. पु. ६।७।६१) इत्यत्रैवोक्तम्। क्षेत्रज्ञं चापि मां विद्धि (गी. १३।२) इत्यादिनान्तर्यामिरूपेण सर्वस्यात्मतयैक्यविधानम्। अन्यथा

5 क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते।

उत्तमः पुरुषस्त्वन्यः (गी. १५।१६) इत्यादिभिर्विरोधः। अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताभिहितम्।

ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति।

(गी. १८।६१) सर्वस्य चाहं हृदि सन्निविष्टः (गी. १५।

10 १५) इति च।

अहमात्मा गुडाकेश सर्वभूताशयस्थितः।

(गी. १०।२०) इति च तदेवोच्यते। भूतशब्दो ह्यात्मपर्यन्तदेहवचनः। यतः सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते न तदस्ति विना य-

15 त्स्यात् (गी. १०।३९) इति। भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम्। तत इदमुच्यते

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्॥

(गी. १०।४१)

20 विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।

(गी. १०।४२) इति। अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति। नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्। नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः।

---

2. C. reads हि after इति; B. reads हि after अत्रैव.

4. C. reads अभिधानम् for विधानम्.

7. B. reads भगवता तत्रैवोक्तम् for तत्रैव भगवताभिहितम्.

यदप्युच्यते निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पित-मीश्वरेशितव्याद्यनन्तविकल्पं सर्वं जगत्। दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयानाद्यविद्या। सा चावश्याभ्युपगमनीया। अनृतेन हि प्रत्यूढाः (छा. ८।३।२) इत्यादिभिः श्रुतिभिर्ब्रह्मणस्तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च। सा तु न सती। भ्रान्तिबाधयोरयोगात्। नाप्यसती। ख्यातिबाधयोश्चायोगात्। अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति। तदयुक्तम्। सा हि किमाश्रित्य भ्रमं जनयतीति वक्तव्यम्। न तावज्जीवमाश्रित्य। अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य। तस्य स्वयंप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानबाध्याभिमता।

ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत्तत्प्रकाशत्वात्तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता।
ब्रह्मणोननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं न स्वरूपभूतं ज्ञानमिति चेन्न। उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्य विरोधित्वमन्यतरस्य नेति विशेषानवगमात्। एतदुक्तं भवति। ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभा-

1. C. reads अवश्यम् for अवश्य.
11. C. om. ज्ञान after प्रकाश.
16. C. reads चेज्ज्ञानम् for विज्ञानम्.
19. B. reads प्रकाशत्वाविशेषात् for प्रकाशत्वे सति.
20. C. reads अविरोधित्वम् for विरोधित्वम्.
21. C. om. स्व before रूपम्.

वोवगम्यते स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इत्य-
विद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति ।

किं चानुभवस्वरूपस्य ब्रह्मणोनुभवान्तराननुभाव्यत्वेन भ-
वतो न तद्विषयं ज्ञानमस्ति । अतो ज्ञानमज्ञानविरोधि चेत्स्व-
5 यमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः । शुक्त्याद-
यस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्नि-
वर्तने ज्ञानान्तरमपेक्षन्ते । ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्य-
मिति स्वाज्ञानविरोध्येव । तत एव निवर्तकान्तरं च नापेक्षते ।

अथोच्येत ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरो-
10 धीति । न । इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथा-
त्म्याज्ञानविरोध्युत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेच-
नीयम् । न तावद्ब्रह्मयाथात्म्याज्ञानविरोधि । अतद्विषयत्वात् ।
ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः । प्रपञ्चमिथ्यात्वज्ञानं च
तत्सत्यत्वरूपाज्ञानेन विरुध्यते । तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव
15 बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरूपाज्ञानं नाम
तस्य सद्वितीयत्वज्ञानमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन
निवृत्तम् । स्वरूपं तु स्वानुभवसिद्धमिति चेन्न । ब्रह्मणोद्वि-
तीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपा-

---

3. B. C. om. स्व.

4. B. reads अज्ञानमेव न सिध्यति for स्वयमेव विरोधि भवति.

6. C. reads असमर्थान् for असमर्थाः.

7. B. C. read च after निवर्तने.

8. B. om. स्व before अज्ञान.

13. B. C. om. च.

14. B. reads सत्यस्वरूप for सत्यत्वरूप after तत्.

16. B. C. read सद्वितीयत्वम् for सद्वितीयत्वज्ञानम्; C. reads व्यतिरिक्त for व्यतिरिक्तस्य.

ज्ञानं तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति चेन्न । अनुभवस्वरूपस्य ब्रह्मणोनुभाव्यधर्मविरहस्य भवतैवोपपादितत्वात् । अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ।

किं चाविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव । 5

अपि च निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूत उतापरमार्थभूत इति विवेचनीयम् । 10 न तावत्परमार्थः । अनभ्युपगमात् । नाप्यपरमार्थः । तथा हि सति द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाभ्युपगमनीयः । न तावद्दृशिः । दृशिस्वरूपभेदानभ्युपगमात् । भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च । द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूल- 15 दोषान्तरापेक्षयानवस्था स्यात् । अथैतद्दोषपरिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मस्वरूपा दोष इति चेत् । ब्रह्मैव चेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात् । किं प्रपञ्चतुल्याविद्यान्तरकल्पनेन ।

2. B. C. om. स्व after अनुभव; B. C. read प्रति for उप.

3. C. om. अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्.

8. B. reads च after निराश्रया.

10. B. C. read स्वाश्रयः for स्वाश्रय.

11. B. C. om. हि.

13. B. reads ज्ञानस्वरूप for दृशिस्वरूप.

16. B. C. om. दोष after एतत्.

17. C. reads सत्यानुभूतिः for सत्यनुभूतिः; B. reads स्वरूपम् for स्वरूपा.

18. B. reads परि before कल्पनेन.

ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात् । अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावद्भ्रान्तिरुपपादिता भवति ।

अनिर्वचनीयत्वं च किमभिप्रेतम् । सदसद्विलक्षणत्वमिति 5 चेन्न । तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् । एतदुक्तं भवति । सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायाः प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यादिति ।

10 अथ स्याद्वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहंका- 15 रज्ञानज्ञेयविभागरूपोध्यासः । तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तुतज्ज्ञानरूपोध्यासोपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपादानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते । कारणाज्ञानविषयं प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यप- 20 रोक्षावभासः । अयं तु न ज्ञानप्रागभावविषयः । स हि षष्ठप्रमाणगोचरः । अयं त्वहं सुखीतिवदपरोक्षः । अभावस्य प्रत्यक्षत्वाभ्युपगमेप्ययमनुभवो नात्मनि ज्ञानाभावविषयः । अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात् । अविद्यमानत्वे ज्ञानाभा-

6. D. reads न before स्यात्.

8. B. reads विलक्षणत्वम् for विलक्षणम्.

C. om. सं.

वप्रतीत्यनुपपत्तेश्च । एतदुक्तं भवति । अहमज्ञ इत्यस्मिन्ननुभवेऽहमित्यात्मनोभावधर्मितया ज्ञानस्य च प्रतियोगितयावगतिरस्ति वा न वा । अस्ति चेद्विरोधादेव न ज्ञानाभावानुभवसंभवः । नो चेद्धर्मिप्रतियोगिज्ञानापेक्षो ज्ञानाभावानुभवः सुतरां न संभवति । ज्ञानाभावस्यानुमेयत्वेऽभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना । अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्य इति ।     5

ननु च भावरूपमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते । मैवम् । साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम् ।     10
अपि त्वज्ञानविषयम् । अन्यथा मिथ्यार्थावभासानुपपत्तेः । न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्यत इति न विरोधः । ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयी भवति । स विषयः प्रमाणाधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते । नैष दोषः । सर्वमेव वस्तु-     15
जातं ज्ञाततयाज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम् । तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा । अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षेति सदेवाज्ञानव्यावर्तकत्वेनावभासो युज्यते । तस्मान्न्यायोपबृंहितेन

2. B. reads धर्मतया for धर्मितया.
4. B. C. read सव्यपेक्षः for अपेक्षः.
6. B. reads भावस्वरूपत्वे for भावरूपत्वे.
7. B. reads असद्भावे for सद्भावे.
9. C. reads अपि after भावरूपम्.
12. C. reads अज्ञानेन for ज्ञानेन; B. reads न after अज्ञानम्.
13. C. reads विशेषान् for विशेष.
17. B. reads ज्ञेयतया after ज्ञाततया.

प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते । तदिदं भावरूपमज्ञानमनु-
मानेनापि सिध्यति । विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभाव-
व्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् । अ-
प्रकाशितार्थप्रकाशकत्वात् । अन्धकारे प्रथमोत्पन्नप्रदीपप्रभाव-
5 दिति । आलोकाभावमात्रं रूपदर्शनाभावमात्रं वा तमो न द्र-
व्यम् । तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत
इति चेत् । उच्यते । बहुलत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया
चोपलब्धेर्द्रव्यान्तरमेव तम इति निरवद्यमिति ।

अत्रोच्यते । अहमज्ञो मामन्यं च न जानामीत्यत्रोपपत्तिस-
10 हितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते । यस्तु
ज्ञानप्रागभावविषयत्वे विरोध उक्तः स हि भावरूपाज्ञानेपि
तुल्यः । विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः
प्रतिपन्नोप्रतिपन्नो वा । प्रतिपन्नश्चेत्तत्स्वरूपज्ञाननिवर्त्यं तद-
ज्ञानं तस्मिन्प्रतिपन्ने कथमिव तिष्ठति । अप्रतिपन्नश्चेद्व्यावर्त-
15 काश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत । अथ विशदस्व-
रूपावभासोज्ञानविरोध्यविशदस्वरूपं तु प्रतीयत इत्याश्रय-
विषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति । हन्त तर्हि ज्ञा-
नप्रागभावोपि विशदस्वरूपविषय आश्रयप्रतियोगिज्ञानं त्ववि-
शदस्वरूपविषयमिति न कश्चिद्विशेषोन्यत्राभिनिवेशात् । भाव-
20 रूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव
सापेक्षत्वमस्त्येव । तथाहि । अज्ञानमिति ज्ञानाभावस्तदन्य-
स्तद्विरोधि वा । त्रयाणामपि तत्स्वरूपज्ञानापेक्षावश्याश्रयणीया ।
यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते तथापि प्र-

5. B. C. read वा after आलोकाभावमात्रम्.

13. C. reads न for अप्रतिपन्नः; C. om. तत् after चेत्.

18. C. om. अपि after ज्ञानप्रागभावः.

काशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षास्त्येव । भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिध्यति । अपि त्वज्ञानमित्येव । तथा सति ज्ञानाभाववत्तदपेक्षत्वं समानम् । ज्ञानप्रागभावस्तु भवताप्यभ्युपगम्यते प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एवाहमज्ञो मामन्यं च न जानामीत्यनुभूयत 5 इत्यभ्युपगन्तव्यम् ।

नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति । स्वानुभवस्वरूपत्वात् । स्वानुभवस्वरूपमपि तिरोहितस्वस्वरूपमज्ञानमनुभवतीति चेत् । किमिदं तिरोहितस्वस्वरूपत्वम् । अप्रकाशितस्वरूपत्वमिति चेत् । स्वानुभवस्वरूपस्य 10 कथमप्रकाशितस्वरूपत्वम् । स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमापद्यत इति चेत् । एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम् ( पृ. ८५ पं. ४ ) । किं च ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद्ब्रह्म तिरस्करोति ब्रह्म ति- 15 रस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम् । अनुभूतमेव तिरस्करोतीति चेत् । यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवतीति तिरोधानकल्पना निष्प्रयोजना स्यात् । अज्ञानस्वरूपकल्पना च । ब्रह्मणोऽज्ञानदर्शनवदज्ञानकार्यतयाभिमतप्रपञ्चदर्शनस्यैव संभवात् । किं च ब्रह्मणोऽज्ञानानुभवः किं 20 स्वतोऽन्यतो वा । स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानि-

2. B. reads अभिमतम् for अभिमत.

9. C. om. स्व before स्वरूपम् and स्वरूपत्वम्.

13. C. om. एव after स्वरूपनाशः.

18. C. reads ज्ञानम् for अज्ञानम्. B. C. om. इति after अनुभवति; C. reads निष्फला for निष्प्रयोजना.

मोक्षः स्यात् । अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा । अन्यतश्चेत्किं च तदन्यत् । अज्ञानान्तरमिति चेदनवस्था स्यात् । ब्रह्म तिर-
5 स्कृत्यैव स्वयमनुभवविषयो भवतीति चेत् । तथा सतीदमज्ञानं काचादिवत्स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् ।

अथेदमज्ञानं स्वयमनादि ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति । अतो नानवस्थादयो दोषा इति ।
10 नैतत् । स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमिति चेत् । तर्ह्यस्यानादित्वमपास्तम् । अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् । अपि चाविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किंचिदपि प्र-
15 काशत उत किंचित्प्रकाशते । पूर्वस्मिन्कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता । उत्तरस्मिन्कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशस्तिरस्क्रियते को वा प्रकाशते । निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासंभवेन तिरस्कारः प्रकाशश्च युगपन्न संगच्छेते ।

20 अथ सच्चिदानन्दैकरसं ब्रह्माविद्यया तिरोहितस्वरूपमविशदमिवालक्ष्यत इति । प्रकाशमात्रस्वरूपस्य विशदताविश-

8. B. C. om. च.

12. B. reads तस्य for अस्य; C. om. अस्य.

18. B. reads असंभवे सति for असंभवेन.

19. B. C. read संगच्छेते for संगच्छेते.

21. B. reads अविशदता विशदता for विशदताविशदता.

दृता वा किंरूपा। एतदुक्तं भवति। यः सांशः सविशेषः प्रकाशविषयस्तस्य सकलावभासो विशदावभासः कतिपयविशेषरहितश्चाविशदावभासः। तत्र य आकारोऽप्रतिपन्नस्तस्मिन्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते। यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतः सर्वत्र प्रकाशांशे- 5
वैशद्यं न संभवति। विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्। तस्माद्विषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपावैशद्यं नामाज्ञानकार्यं न संभवतीति। अपि चेदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तते न वा। अनिवृत्तावपवर्गाभावः। 10
निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्तद्विशदस्वरूपं प्रागस्ति वा न वा। अस्ति चेदविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेन्मोक्षस्य कार्यतयानित्यता स्यात्। अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः (पृ. ८३ पं. ९)। अपि चापरमार्थदोषमूलभ्रम- 15
वादिना निरधिष्ठानभ्रमासंभवो दुरुपपादः। भ्रमहेतुभूतदोषदोषाश्रयवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्वमेव स्यात्।

यदुक्तम् (पृ. ८८ पं. २) अनुमानेनापि भावरूपमज्ञानं

1. C. reads यस्यांशस्य विशेषः for यः सांशः सविशेषः.
3. B. E. F. read रहितावभासः for रहितः; C. reads रहिताभासः for रहितः.
4. B. reads अवैशद्यम् for वैशद्यम्.
9. B. reads अपि after इदम्.
14. B. C. om. स्यात्.
16. B. reads त्वया after वादिना; C. reads अपि after असंभवः.
17. C. reads दोषाश्रयत्ववत् for दोषाश्रयवत्.

सिध्यतीति । तदयुक्तम् । अनुमानासंभवात् । ननूक्तमनुमा-
नम् । सत्यमुक्तम् । दुरुक्तं तु तत् । अज्ञानेप्यनभिमताज्ञानान्त-
रसाधनेन विरुद्धत्वाद्धेतोः । तत्राज्ञानान्तरासाधने हेतोरनैका-
न्त्यम् । साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयति । ततश्चा-
5 ज्ञानकल्पना निष्फला स्यात् । दृष्टान्तश्च साधनविकलः । प्रदी-
पप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् । सर्वत्र हि ज्ञान-
स्यैव प्रकाशकत्वम् । सत्यपि दीपे विज्ञानेन विना विषयप्रका-
शाभावात् । इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव । न प्रकाश-
कत्वम् । प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो वि-
10 रोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव । प्रकाशकज्ञानोत्पत्तौ
व्याप्रियमाणचक्षुरिन्द्रियोपकारकत्वमपेक्ष्य दीपस्य प्रकाशकत्व-
व्यवहारः । नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन प्रदीपप्रभा
न्निर्दर्शिता । अपितु ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वप्रकाश-
कत्वमङ्गीकृत्येति चेन्न । नहि विरोधिनिरसनमात्रं प्रकाशक-
15 त्वम् । अपि त्वर्थपरिच्छेदः । व्यवहारयोग्यतापादनमिति या-
वत् । तत्तु ज्ञानस्यैव । यद्युपकारकाणामप्यप्रकाशितार्थप्रकाश-
कत्वमङ्गीकृतं तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाश-
कत्वमङ्गीकरणीयम् । तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्व-
कत्वाभावाद्धेतोरनैकान्त्यमित्यलमनेन ।

---

3. B. reads अपि after तत्र.
5. B. C. om. प्र before दीप.
6. B. reads अयोगात् for अभावात्.
7. C. om. वि before ज्ञानेन.
10. C. reads एव प्रकाशकत्वम्। ज्ञानोत्पत्तौ for एव । प्रकाशकज्ञानोत्पत्तौ.
11. C. reads उपकारहेतुत्वम् for उपकारकत्वम्.
13. C. reads इव for एव; B. C. read पूर्वक for पूर्व.
14. C. om. न after चेत्.
17. B. reads उपकारकत्ववत्त्वेन for उपकारकतमत्वेन.

प्रतिप्रयोगाश्च १ विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मा-श्रयम् । अज्ञानत्वात् । शुक्तिकाद्यज्ञानवत् । ज्ञात्राश्रयं हि तत् । २ विवादाध्यासितमज्ञानं न ज्ञानावरणम् । अज्ञानत्वात् । शुक्तिकाद्य-ज्ञानवत् । विषयावरणं हि तत् । ३ विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम् । ज्ञानविषयानावरणत्वात् । यज्ज्ञाननिवर्त्यमज्ञानं त- 5 ज्ज्ञानविषयावरणं यथा शुक्तिकाद्यज्ञानम् । ४ ब्रह्म नाज्ञानास्पदम् । ज्ञातृत्वविरहात् । घटादिवत् । ५ ब्रह्म नाज्ञानावरणम् । ज्ञानाविषय-त्वात् । यदज्ञानावरणं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । ६ ब्रह्म न ज्ञाननिवर्त्याज्ञानम् । ज्ञानाविषयत्वात् । यज्ज्ञाननिवर्त्याज्ञानं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । ७ विवादाध्यासितं प्र- 10 माणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति । प्रमाणज्ञान-त्वात् । भवदभिमताज्ञानसाधनप्रमाणज्ञानवत् । ८ ज्ञानं न वस्तुनो विनाशकम् । शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात् । यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टं यथेश्वर-योगिप्रभृतिज्ञानम् । यथा च मुद्गरादि । ९ भावरूपमज्ञानं न 15 ज्ञानविनाश्यम् । भावरूपत्वात् । घटादिवदिति ।

अथोच्येत । बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां वि-नाशो दृश्यत इति । नैवम् । न हि ज्ञानेन तेषां विनाशः । क्षणिकत्वेन तेषां स्वयमेव विनाशात् । कारणनिवृत्त्या च प-श्चादनुत्पत्तेः । क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसंनिधान 20 एवोपलब्धेरन्यथानुपलब्धेश्चावगम्यते । अक्षणिकत्वे च तेषां

3. C. reads अज्ञानावरणम् for न ज्ञानावरणम्.

11. C. om. स्व.

17. B. reads पूर्वं after पूर्व.

19. C. reads नाशात् for विनाशात्; B. reads कारणानुवृत्त्या च पश्चादनुवृत्तिः for कारणनिवृत्त्या च पश्चादनुत्पत्तेः.

21. C. om. च after अक्षणिकत्वे.

भयादीनां भयादिहेतुभूतज्ञानसंततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च । स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता । अतो नानुमानेनापि भावरूपाज्ञानसिद्धिः । श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव ( पृ. १०१ पं. ८ ) वक्ष्यते । मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि ( पृ. ८६ पं. १७ ) न विलक्षणत्वात् ( ब्र. सू. २।१।४ ) इत्येतदधिकरणन्यायेन परिह्रियते । अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयम् । प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः । आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम् ।

शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथावभासायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेन्न । तत्कल्पनायामप्यन्यस्यान्यथावभासस्यावर्जनीयत्वात् । अन्यथावभासाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेः । अत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् । कल्प्यमानं हीदमनिर्वचनीयम् । न च तदानीमनिर्वचनीयमिति प्रतीयते । अपि तु परमार्थरजतमित्येव । अनिर्वचनीयमित्येव प्रतीतं चेद्भ्रान्ति-

9. C. reads प्रतिपत्तिः for प्रतीतिः; E. F. read अन्यथा for तथा.

14. B. C. read भान for अवभास.

16. B. C. read भानस्य for अवभासस्य.

17. B. reads अन्यथापरिदृष्टकारणवस्तु for अत्यन्तापरिदृष्टाकारणकवस्तु.

19. B. om. च; C. reads तावत् for च तदानीम्.

बाधयोः प्रवृत्तेरप्यसंभवः । अतोन्यस्यान्यथावभासविरहे प्र-
तीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेस्तस्यापरिहार्यत्वाच्च शुक्त्या-
दिरेव रजताद्याकारेणावभासत इति भवताभ्युपगन्तव्यम् ।

ख्यात्यन्तरवादिनां च सुदूरमपि गत्वान्यथावभासोवश्याश्रय-
णीयः । असत्ख्यातिपक्षे सदात्मनात्मख्यातिपक्षे चार्थात्मना- 5
ख्यातिपक्षेप्यन्यविशेषणमन्यविशेषणत्वेन ज्ञानद्वयमेकत्वेन च ।
विपयासद्भावपक्षेपि विद्यमानत्वेन । किं चानिर्वचनीयमपूर्व-
रजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम् । न
तावत्प्रतीतिः । तस्यास्तद्विपयत्वेन तदुत्पत्तेः प्रागात्मलाभायो-
गात् । निर्विपया जाता तदुत्पाद्य तदेव विषयीकरोतीति म- 10
हतामिदमुपपादनम् । अथेन्द्रियादिगतो दोषः । तन्न । तस्य
पुरुपाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात् । नापीन्द्रियाणि ।
तेपां ज्ञानकारणत्वात् । नापि दुष्टानीन्द्रियाणि । तेपामपि स्व-
कार्यभूते ज्ञान एव हि विशेपकरत्वम् । अनादिमिथ्याज्ञानो-
पादानत्वं तु पूर्वमेव निरस्तम् । 15

किं चापूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिश-
ब्दाभ्यां कथमिव विपयीक्रियते न घटादिबुद्धिशब्दाभ्याम् ।
रजतादिसादृश्यादिति चेत् । तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ
स्याताम् । रजतत्वादिजातियोगादिति चेत् । सा किं परमार्थभू-
तोतापरमार्थभूता वा । न तावत्परमार्थभूता । तस्या अपरमा- 20
र्थान्वयायोगात् । नाप्यपरमार्थभूता । परमार्थान्वयायोगात् ।

1. B. om. अपि after प्रवृत्तेः.

11. B. C. om. हि.

15. C. om. तु.

19. B. reads रजत for रजतत्व.

20. B. om. उत.

अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणत-
कुतर्कनिरसनेन ।

अथवा

यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ।
5 श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ॥
बहु स्यामिति संकल्पपूर्वसृष्ट्याद्युपक्रमे ।
तासां त्रिवृतमेकैकामिति श्रुत्यैव चोदितम् ॥
त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते ॥
यदग्ने रोहितं रूपं तेजसस्तदपामपि ।
10 शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता ॥
श्रुत्यैव दर्शिता तस्मात्सर्वं सर्वत्र संगताः ।
पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे ॥
नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
15 समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमित्यादिना ततः ॥
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथावदन् ।
त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिधाभिदा ॥
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ।
20 सोमावयवसद्भावादिति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ।
तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ॥
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव चोदितः ।

1. C. reads शब्दयोग for शब्दयोः.

19. B. C. read दर्शितम् for चोदितम्.

23. B. C. read बोधितः for चोदितः.

रूप्यंशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ।
रजतांशो गृहीतोतो रजतार्थी प्रवर्तते ॥ 5
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ।
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥
बाध्यबाधकभावोपि भूयस्त्वेनोपपद्यते ।
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥
नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः । 10
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥

स्वप्ने च प्राणिनां पुण्यपापानुगुणा भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते । तथा हि श्रुतिः स्वप्नविषया । न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्रथयोगान्पथः सृजते । न तत्रानन्दा 15 मुदः प्रमुदो भवन्ति । अथानन्दान्मुदः प्रमुदः सृजते । न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति । अथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता (बृ. ४।३।१०) इति । यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्त्यथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति । स हि 20 कर्ता । तस्य सत्यसंकल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः ।

2. B. reads रूप्यादेः for रूप्यादि.
7. C. reads यथार्थ for यथार्थम्.
12. B. C. read अनुगुणम् for अनुगुणा.
21. C. om. सत्य.

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥

(का.५।८) इति । सूत्रकारोपि संध्ये सृष्टिराह हि (ब्र.सू.३। २।१)। निर्मातारं चैके पुत्रादयश्च (ब्र.सू.३।२।२) इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् (ब्र. सू. ३।२।३) इत्यादिना न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते । जीवस्य स्वाभाविकसत्यसंकल्पादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात् । ईश्वरस्यैव तत्तत्पुरुषानुभाव्यतयाश्चर्यभूता सृष्टिरियम ।

तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।

( का. ५।८ ) इति परमात्मैव स्रष्टेत्यवगम्यत इति परिहृर्तते । अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयः पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते ।

पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते । तत्र पित्तद्रव्यगतपीतिमाभिभूतः शङ्खगतशुक्तिमा न गृह्यते । अतः सुवर्णानुलिप्तशङ्खवत्पीतः शङ्ख इति प्रतीयते । पित्तद्रव्यं तद्गतपीतिमा चातिसूक्ष्मतया पार्श्व-

---

1. C. reads सुषुप्तिषु for सुप्तेषु.
4. B. C. read च after इति.
8. C. reads सत्य before संकल्प; B. reads संकल्पत्वादेः for संकल्पादेः
10. B. C. read मात्र after पुरुष.
12. B. C. read तत्र after परमात्मैव.
14. B. C. read च after छेदादयः.
17. B. C. om द्रव्य before गत; B. C. read अभिभूत for अभिभूतः.
19. B. reads सौक्ष्म्यात् for सूक्ष्मतया; C. reads सूक्ष्मत्वात् for सूक्ष्मतया.

र्थ्यैर्न गृह्यते । पित्तोपहतेन तु स्वनयननिष्क्रान्ततयातिसामीप्यात्सूक्ष्ममपि गृह्यते । तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते । जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते । जपाकुसुमप्रभा विततापि स्वच्छद्रव्यसंयुक्ता स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम् ।

मरीचिकाजलज्ञानेपि तेज:पृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेज:पृथिव्योरग्रहणाच्चादृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम् । अलातचक्रेप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते । चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव । क्वचिदन्तरालाभावादन्तरालाग्रहणं क्वचिच्छैघ्र्यादग्रहणमिति विशेष: । अतस्तदपि यथार्थम् । दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था । दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति । तत्राप्यतिशैघ्र्याद्न्तरालाग्रहणात्तथा प्रतीति: । दिङ्मोहेपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते । अतो दिगन्तरप्रतीतिर्यथार्थैव ।

द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वय-

1. C. reads दृश्यते for गृह्यते.

2. B. reads नयन for नायन.

8. B. om. च after अग्रहणात्.

11. B. C. read पूर्वक for पूर्वकम्; B. reads द्रुततरत्वाभावादन्तरालाग्रहणम् for अन्तरालाभावादन्तरालाग्रहणम्.

17. C. reads एव तत् for एतत्.

हेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणेपि ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः । देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति । तत्र सामग्रीद्वित्वं पारमार्थिकम् । तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम् । ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम् । तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञावत्केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषं ज्ञानं तथैवावतिष्ठते । द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम् । अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वादेकश्चन्द्र इति भवति प्रत्ययः । दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम् । अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम् ।

ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते । अथवा किमनेन बहुनोपपादनप्रकारेण । प्रत्यक्षानुमानागमाख्यं प्रमाणजातम् । आगमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं

4. C. om. ग्रहणेपि; C. reads चन्द्रमसौ for चन्द्रौ.

9. B. reads विशेष for विशेषण.

10. B. reads ग्रहण for ग्रहणे; C. reads प्रत्यभिज्ञान for प्रत्यभिज्ञा.

12. B. reads अन्तर्भाव for अन्तर्भावे; B. reads चाक्षुष for चाक्षुषम्.

16. C. reads सर्व for सर्वम्.

सत्यसंकल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति किं नोपपद्यते । भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथातथानुभाव्याः सृज्यन्ते । तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम् ।     5

यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति (पृ. १६ पं. ३)। तदसत् । अनृतेन हि प्रत्यूढाः (छा. ८।३।२) इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि । ऋतं पिबन्तौ (का. ३।१) इति वचनात् । ऋतं कर्म फलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि । एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः (छा. ८।३।२) इति वचनात् । नासदासीन्नो सदासीत्तदानीम् (तै. ब्रा. २।८।९।३) इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ । उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते । सदसतोः कालविशेषसद्भावमात्रवचनात् । अत्र तमःशब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते । अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देव एकीभवतीति । सत्यं तमःशब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते । तस्यास्तु मायां तु प्रकृतिं     10 15 20

5. C. om. तथा after तथा.
20. B. reads विशेष for विशेषे.

विद्यान् ( श्वे. ४।१० ) इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत्। नैतदेवम्। मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति। मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयत्वमिति चेत्। तदपि नास्ति। नहि सर्वत्र मायाशब्दो मिथ्याविषयः। 5 असुरराक्षसशस्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्। यथोक्तम्

तेन मायासहस्रं तच्छम्बरस्याशुगामिना।
बालस्य रक्षता देहमेकैकांशेन सूदितम्॥

( वि. पु. १।१९।२० ) इति। अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी। प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव। 10

अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः।

( श्वे. ४।९ ) इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति। परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते नाज्ञत्वेन। जीवस्यैव हि मायया निरोधः श्रूयते तस्मिंश्चान्यो मायया संनिरुद्धः ( श्वे. ४।९ ) इति। 15

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।

( गौ. १।१६ ) इति च। इन्द्रो मायाभिः पुरुरूप ईयते ( बृ. २।५।१९ ) इत्यत्रापि विचित्राः शक्तयोभिधीयन्ते। अत एव हि भूरि त्वष्टेह राजतीत्युच्यते। न हि मिथ्याभूतः कश्चिद्विराजते। मम माया दुरत्यया ( गी. ७।१४ ) इत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम्। 20

5. B. C. read आसुर for असुर; B. reads अस्त्र for शस्त्र.

18. B. reads निखिलजीवस्रष्टुः after शक्तयः.

19. C. om. हि after न.

नाप्यैक्योपदेशानुपपत्त्या । नहि तत्त्वमसि (छा ६।८।७) इति जीवपरयोरैक्योपदेशे सति सर्वज्ञसत्यसंकल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः । 5 अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२) इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ।

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ननु ज्योतींषि विष्णुः (वि. पु. २।१२।३८) इति ब्रह्मैकमेव 10 तत्त्वमिति प्रतिज्ञाय ज्ञानस्वरूपो भगवान्यतोसौ (वि. पु. २।१२।३९) इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमेवाभिधाय यदा तु शुद्धं निजरूपि (वि. पु. २।१२।४०) इति ज्ञानभूतस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरी- 15 कृत्य वस्त्वस्ति किम् (वि. पु. २।१२।४१) मही घटत्वम् (वि. पु. २।१२।४२) इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य तस्मान्न विज्ञानमृते (वि. पु. २।१२।४३) इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य विज्ञानमेकम् (वि. पु. २।१२।४३) इति ज्ञानस्वरूपे ब्रह्मणि 20 भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य ज्ञानं विशुद्धम् (वि. पु. २।१२।४४) इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं वि-

7. C. om. रूप.

13. B. C. om. एव after विजृम्भितत्वम्.

15. C. reads प्र before दर्शनेन.

20. B. reads स्वरूपस्य for स्वरूपे.

22. C. reads स्वरूप for स्वरूपस्य.

शोध्य सद्भाव एवं भवतो मयोक्तः ( वि. पु. २।१२।४५ ) इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं नान्यस्यान्यस्य चासत्यत्वमेव तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमेवेत्युपदेशो हि दृश्यते ।

नैतदेवम । अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते । चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतयास्पष्टप्राकृतभेदोविनाशित्वेनास्तिशब्दवाच्यः । अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः । उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपणात्राभिहितम । तथा हि

> यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा ।
> पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥

( वि. पु. २।१२।३७ ) इत्यम्बुनो विष्णुशरीरत्वेनाम्बुपरिणाममूतं ब्रह्माण्डमपि विष्णोः कायस्तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य ज्योतींपि विष्णुः (वि. पु. २।१२।३८) इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह । अस्मिञ्छास्त्रे पूर्वमप्येतदसकृदुक्तम

> तानि सर्वाणि तद्वपुः ( वि. पु. १।२२।८४ ) ।
> तत्सर्वं वै हरेस्तनुः । ( वि. पु. १।२२।३७) ।
> स एव सर्वभूतात्मा प्रधानपुरुषात्मनः ।
> विश्वरूपो यतोऽव्ययः ( वि. पु. १।२।६८ ) इति ।

14. C. reads विष्णोः for विष्णु.
15. C. om. च
16. C. om. उपदेश.

तदिदं शरीरात्मभावापन्नं तादात्म्यं सामानाधिकरण्येन व्यपदिशति ज्योतींषि विष्णुः (वि. पु. २। १२।३८) इति । अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम् ।

इदमस्त्यात्मकमिदं नास्त्यात्मकमस्य च नास्त्यात्मकत्वे हेतुरयमित्याह ज्ञानस्वरूपो भगवान्यतोसौ (वि. पु. २।१२।३९) इति । अशेषक्षेत्रज्ञात्मनावस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम । न देवमनुष्यादिवस्तुरूपम् । यत एवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः । तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसंधानमूला देवाद्याकारानुसंधानमूलकर्ममूला इत्यर्थः । यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणं परिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयमितरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति ।

तदेव विवृणोति यदा तु शुद्धं निजरूपि (वि.पु.२।१२।४०) इति । यदैतज्ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसंधानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति तदा देवाद्याकारेणैकीकृत्यात्मकल्पनमूलकर्मफलभूतास्तद्भोगार्थवस्तुषु वस्तुभेदा न भवन्ति । ये देवादिवस्तुष्वात्मतयाभिमतेषु

1. B. C. read आयत्तम् for आपन्नम्.

7. C. reads स्वाभाविक for स्वाभाविकम्.

9. B. reads मनुष्याः for मनुष्य.

10. D. reads स्वात्मनि for स्वात्म.

11. B. reads अकर्ममूलाः for कर्ममूलाः.

16. B. reads इति after निजरूपि.

17. C. reads कल्पना for कल्पन; C. reads भोगार्थ वस्तु for भोगार्थवस्तुषु.

18. C. reads देवादिषु for देवादि.

भोग्यभूता देवमनुष्यशैलादिधरादिवस्तुभेदास्ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थायोगितया नास्तिशब्दाभिधेयत्वमितरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वे नास्तिशब्दाभिधेयत्वमित्यर्थः ।

5 प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह वस्त्वस्ति किम (वि. पु. २।१२।४१) इति । अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनः सततैकरूपः पदार्थः । तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किंचित्कचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत्राह 10 यच्चान्यथात्वम (वि. पु. २।१२।४१) इति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव ।

तथा ह्युपलभ्यत इत्याह मही घटत्वम् (वि. पु. २।१२।४२) 15 इति । स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यतेनुभूयत इत्यर्थः । एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैकरूपमालक्षितमस्ति किं न ह्यस्तीत्यभिप्रायः ।

यस्मादेवं तस्माज्ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदा- 20 चित्कचित्केवलास्तिशब्दवाच्यं न भवतीत्याह तस्मान्न विज्ञानमृते (वि. पु. २।१२।४३) इति । आत्मा तु सर्वत्र ज्ञानैकाकारतया

2. B. C. read विशेष after अवस्था

5. B. om. अचिद्वस्तुनः.

15. B. reads अस्तमित for स्तिमित.

17. B. reads अभिधेयम् for अर्हम्.

देवादिभेदप्रत्यनीकस्वरूपोपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधानुसंहित इति तद्भेदानुसंधानं नात्मस्वरूपप्रयुक्तमित्याह विज्ञानमेकम् ( वि. पु. २।१२।४३ ) इति ।

आत्मस्वरूपं तु कर्मरहितम् । तत एव मलरूपप्रकृतिस्पर्शरहितम् । ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि । उपचयापचयानर्हतयैकम । तत एव सदैकरूपम । तच्च वासुदेवशरीरमिति तदात्मकम । अतदात्मकस्य कस्यचिदप्यभावादित्याह ज्ञानं विशुद्धम् ( वि. पु. २।१२।४४ ) इति । 5

चिदंश: सदैकरूपतया सर्वदास्तिशब्दवाच्य: । अचिदंशस्तु प्रतिक्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेय: । एवंरूपं चिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह सद्भाव एवम् ( वि. पु. २।१२।४५ ) इति । अत्र सत्यमसत्यमिति यदस्ति यन्नास्तीति प्रक्रान्तस्योपसंहार: । एवं ज्ञानैकाकारतया समस्तशब्दगोचरस्वरूपभेदमवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते तत्र हेतु: कर्मैवेत्युक्तमित्याह एतत्तु यत ( वि. पु. २।१२।४५ ) इति । 10 15

तदेव विवृणोति यज्ञ: पशु: ( वि. पु. २।१२।४६ ) इति ।

जगद्याथार्थ्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह यच्चैतत् ( वि. पु. २।१२।४७ ) इति । 20

2. C. reads केन for तेन तेन.

7. B. reads वासुदेवस्य for वासुदेव.

11. B. om. प्रति

15. C. reads प्रकारान्तरस्य for प्रक्रान्तस्य; C. reads एतावत् for एवम्.

20. C. reads अज्ञान for ज्ञान.

अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वानुगुणं किंचिदपि पदं न दृश्यते । अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्परमस्य परेशस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम् । ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवेचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् । अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च । नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ । अतश्चैताभ्यामसत्यत्वं हि प्रतीयते नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ । अपि तु विनाशित्वपरौ । वस्त्वस्ति किम् ( वि. पु. २।१२।४१ ) मही घटत्वम् ( वि. पु. २।१२।४२ ) इत्यत्र विनाशित्वमेव ह्युपपादितं न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा । एकेनाकारेणैकस्मिन्कालेनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम् । बाधोपि यद्देशकालादिसंबन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसंबन्धितया नास्तीत्युपलब्धिः । न तु कालान्तरेनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः । कालभेदेन विरोधाभावात् । अतो न मिथ्यात्वम् । एतदुक्तं भवति । ज्ञानस्वरूपमात्मवस्त्वादिमध्यपर्यन्तरहितं सततैकरूपमिति स्वत एव सदास्तिशब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्क-

2. B. reads च for वा.

1. B. C. read परम after ब्रह्मणि.

9. B. reads नाभ्यां सत्यत्वम् for ॰ताभ्यामसत्यत्वम्; C. reads नाभ्यामसत्त्वम् for ॰ताभ्यामसत्यत्वम्.

20. B. C. read हीनम् for रहितम्.

र्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यस-
त्यशब्दाभिधेयमिति। यथोक्तम्

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम्॥
(वि. पु. २।१३।९५) 5

अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम्॥
(वि. पु. २।१४।२४)

इति देशकालकर्मविशेषापेक्षयास्तित्वनास्तित्वयोगिनि व-
स्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इति ह्यपरमार्थ इत्युक्तम्। 10
आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम्।
श्रोतुश्च मैत्रेयस्य

विष्ण्वाधारं यथा चैतत्त्रैलोक्यं समवस्थितम्।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः॥
(वि. पु. २।१३।२) 15

इत्यनुभाषणाच्च। ज्योतींषि विष्णुः (वि. पु. २।१२।३८)
इत्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनं चिद-
चिद्वस्तुनोश्चास्तिनास्तिशब्दयोगनिबन्धनं ज्ञानस्याकर्मनिमित्त-
स्वाभाविकस्वरूपत्वेन स्वरूपप्राधान्यमचिद्वस्तुनश्च तत्तत्कर्मनि-
मित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते। 20

1. C. reads परिणामविनाशि for परिणामि विनाशि.

7. E. reads नास्ति for नाशि after तत्तु.

9. B. om. नास्तित्व.

14. E. reads तु for च.

18. B. C. read प्रयोग for योग.

19. C. om. स्व before रूपत्वेन; B. C. om. स्वरूप before प्राधान्यम्.

यदुक्तं (पृ. १७ पं. ४) निर्विशेषब्रह्मज्ञानादेवाविद्यानि-
वृत्तिं वदन्ति श्रुतय इति । तदसत् । वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् (श्वे. ३।८) । तमेवं विद्वानमृत
इह भवति । नान्यः पन्था विद्यतेऽयनाय (तै. आ. ३।१३।१) ।
5 सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । न तस्येशे कश्चन ।
तस्य नाम महद्यशः । य एनं विदुरमृतास्ते भवन्ति (म. ना.
१।८-१०-११) इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेष-
त्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति ।
शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम् । त-
10 त्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यप-
रम् । तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात् । तत्पदं हि स-
र्वज्ञं सत्यसंकल्पं जगत्कारणं ब्रह्म परामृशति । तदैक्षत बहु
स्याम् (छा. ६।२।३) इत्यादिषु तस्यैव प्रकृतत्वात् । तत्समा-
नाधिकरणं त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति ।
15 प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य । प्रकारद्वय-
परित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परि-
त्यक्तं स्यात् । द्वयोः पदयोर्लक्षणा च । सोयं देवदत्त इत्यत्रापि
न लक्षणा । भूतवर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात् । दे-
शभेदविरोधश्च कालभेदेन परिहृतः । तदैक्षत बहु स्याम (छा. ६।
20 २।३) इत्युपक्रमविरोधश्च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च न
घटते । ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्या-
णगुणात्मकस्याज्ञानतत्कार्यानन्तापुरुषार्थाश्रयत्वं च न संभवति ।

1. C. reads विज्ञानात् for ज्ञानात्.

9. C. reads शोधकानि for शोधकवाक्यानि.

11. C. reads विशिष्टम् for विशिष्ट.

19. C. reads परिह्रियते for परिहृतः.

22. C. om. न सं.

बाधार्थत्वे च सामानाधिकरण्यस्य तत्त्वंपदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः । इयांस्तु विशेषः । नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् । तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च । अधिष्ठानं तु प्राक्तिरोहितमतिरोहितस्वरूपं तत्पदेनो- 5
पस्थाप्यत इति चेन्न । अधिष्ठानाप्रकाशे तदाश्रयभ्रमबाधयोरसंभवात् । भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेन् । तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ । अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे 10
प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः । राजत्वोपदेशेन च तन्निवृत्तिर्भवति नाधिष्ठानमात्रोपदेशेन । तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् । भ्रमानुपमर्दित्वाच्च ।

जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रका- 15
रद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् । निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति । उपक्रमानुकूलता च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च । सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् । तमीश्वराणां 20
परमं महेश्वरम् ( श्वे. ६।७ ) । परास्य शक्तिर्विविधैव श्रूयते ( श्वे. ६।८ )। अपहतपाप्मा ( छा. ८।१।५-८।७।१ )। सत्यकामः सत्यसंकल्पः (छा. ८।१।५,८।७।१) इत्यादिश्रुत्यन्तराविरोधश्च।

3. C. reads इतिपदप्रतिपन्नस्य for इतिवदप्रतिपन्नस्य.

15. C. reads शरीर for शरीरक; C. reads पर before पद.

तत्त्वमसि (छा. ६।८।७) इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् । नात्र किंचिदुद्दिश्य किमपि विधीयते । ऐतदात्म्यमिदं सर्वम् (छा. ६।८।७) इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । इदं सर्वमिति सजीवं जगन्निर्दिश्यैतदात्म्यमिति तस्यैष आत्मेति तत्र प्रतिपादितम् । हेतुरप्युक्तः । सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।४) इति । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः (छा. ३।१४।१) इतिवत् । तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा (तै.आ. ३।११।२) । यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरः । यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्मान्तर्याम्यमृतः (बृ. ३।७।३) । य आत्मनि तिष्ठन्नात्मनोन्तरः । यमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्मान्तर्याम्यमृतः (बृ.३।७।२२) । यः पृथिवीमन्तरे संचरन्नित्यारभ्य यस्य मृत्युः शरीरम् । यं मृत्युर्न वेद । एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः (ना. २) । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् (तै.२।६।१) इत्यादीनि । अत्राप्यनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छां.६।३।२) इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम् । तदनुप्रविश्य । सच्च त्यच्चाभवत् (तै. २।६।१) इत्यनेनैकार्थ्यात् । जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेति निश्चीयते । तस्माद्ब्रह्मव्यतिरि-

3. B. reads अप्राप्ते for अप्राप्ते हि.

5. B. om. तत्र; B. C. read तत्र च before हेतुः; C. om. अपि.

24. C. reads अवगम्यते for निश्चीयते.

कस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यावगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमित्यैतदात्म्यमिदं सर्वम् (छा. ६।८।७) इति प्रतिज्ञातार्थस्य तत्त्वमसि (छा. ६।८।७) इति सामानाधिकरण्येन विशेषेणोपसंहारः । 5

अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवलभेदवादिनश्च वैयधिकरण्येन सामानाधिकरण्येन च सर्वे ब्रह्मात्मभावोपदेशाः परित्यक्ताः स्युः ।

एकस्मिन्वस्तुनि कस्य तादात्म्यमुपदिश्यते । तस्यैवेति चेत् । तत्स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किंचिन । कल्पितभेदनिरसनमिति चेन । तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम् । सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत् । भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्तजीवगतदोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः । स्वाभाविकभेदाभेदवादेपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमाद्गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशा विरुद्धा एव । केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशो न संभवतीति सर्ववेदान्तपरित्यागः स्यात् । 10 15 20

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः

5. B. C. read विशेषे for विशेषेण.
7. C. reads ब्रह्मात्मभावोपदेशाः सर्वे for सर्वे ब्रह्मात्मभावोपदेशाः.
14. B. C. read तत्प्रयुक्ता जीवगता दोषाः for तत्प्रयुक्तजीवगतदोषाः.
18. C. reads उपदेशो विरुद्धः for उपदेशा विरुद्धाः.
20. C. reads उपदेशा न संभवन्ति for उपदेशो न संभवति.
21. B. reads कृत्स्नस्य प्रसिद्धम् for प्रसिद्धं कृत्स्नस्य.

कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति ।
जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो मनुष्यो देवो जातः कर्मभिरिति सामानाधिकरण्यं लोकवेदयो-र्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि द्रव्यप्रकारत्वमेव षण्डो
5 गौः शुक्लः पट इति तथासामानाधिकरण्यनिबन्धनम् । मनुष्य-त्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वान्मनुष्यः पुरुषः षण्डो योषिद्वात्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम् । न परस्परव्यावृत्ता जात्यादयः । स्वनिष्ठानामेव हि द्रव्याणां कदा-
10 चित्कचिद्द्रव्यविशेषणत्वे मत्वर्थीयः प्रत्ययो दण्डी कुण्डलीति न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम् । तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ।

यदि गौरश्वो मनुष्यो देवः पुरुषो योषित्षण्ड आत्मा कर्म-भिर्जात इत्यत्र षण्डो मुण्डो गौः शुक्लः कृष्णः पट इति जाति-
15 गुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते तर्हि जातिव्य-क्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रति-पत्तिः स्यात् । न चैवं दृश्यते । न हि नियमेन गोत्वादिवदा-त्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति । अतो मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव ।

20 नैतदेवम् । मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयो-जनत्वं तत्प्रकारत्वं च जात्यादितुल्यम् । आत्मैकाश्रयत्वमात्म-विश्लेषे शरीरविनाशादवगम्यते । आत्मैकप्रयोजनत्वं च तत्त-

3. B. reads पुरुष before कर्मभिः, C. पुरुषः.
5. C. om. तथा.
6. C. reads आत्म for आत्मनः.
7. B. C. om. वा.
17. B. reads इदम् for एवम्.
22. B. C. om. तत् after तत्.

त्कर्मफलभोगार्थतयैव सद्भावात् । तत्प्रकारत्वमपि देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः । एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः । एतत्स्वभावविरहादेव दण्डादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयः प्रत्ययः । देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावाद्देवो मनुष्य आत्मेति लोकवेदयोः सामानाधिकरण्येन व्यवहारः । जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात् । आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते । पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः । जात्यादिवत्तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात् । सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम् । यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसंबन्धित्वं स्वाभाविकमपि न गृह्यत एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते । आत्मग्रहणे चक्षुषः सामर्थ्याभावात् । नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः । तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम् ।

आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति । ननु च शाब्देपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य । नैवम् । आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपकाणां निष्कर्षक-

3. C. reads कुण्टल after दण्ड.

8. B. reads च for तु.

9. D. E. read प्रकारतया for प्रकारता.

15. C. om. त्व after प्रकार.

18. C. reads प्रकारता for प्रकारतया after आत्म.

21. B. reads त्व after पदार्थ.

शब्दोयम् । यथा गोत्वं शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः । अतो गवादिशब्दवद्देवमनुष्यादिशब्दा आत्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वाज्जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः
5 प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसंग्रहे समर्थितः । इदमेव शरीरात्मभावलक्षणं तादात्म्यमात्मेति तूपगच्छन्ति ग्राहयन्ति च (ब्र. सू. ४।१।३) इति वक्ष्यति । आत्मेत्येव तु गृह्णीयादिति च वाक्यकारः ।

10 अत्रेदं तत्त्वम् । अचिद्वस्तुनश्चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन स्वरूपविवेकमाहुः काश्चन श्रुतयः ।

अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।(श्वे. ४।९-१०)
15 क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
(श्वे. १।१०)

अमृताक्षरं हर इति भोक्ता निर्दिश्यते । प्रधानमात्मनो भोग्यत्वेन हरतीति हरः ।

स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।
20 (श्वे. ६।९)

प्रधानक्षेत्रज्ञपतिर्गुणेशः (श्वे. ६।१६) ।

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । (ना. १३।१)

'ज्ञाज्ञौ द्वावजावीशानीशौ (श्वे. १।९) ।

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति
25 कामान् । (श्वे. ६।१३)

---

10. C. om. च after परस्य.

11. B. C. read च after ईशितृत्वेन.

भोक्ता भोग्यं प्रेरितारं च मत्वा । (श्वे. १।१२)
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति ।
(श्वे.४।६)
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।
(श्वे. १।६) 5
अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः ॥
(तै. आ. ६।१० ना. १२।१)
समाने वृक्षे पुरुषो निमग्नोनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमितरो वीतशोकः ॥ 10
(श्वे. ४।७)
इत्याद्याः । स्मृतावपि
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ 15
(गी. ७।४-५)
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ (गी. ९।७-८) 20
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ (गी. ९।१०)
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । (गी. १३।१९)

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥ (गी. १४।३)

इति। जगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्मम-
चिद्वस्तु यस्मिंश्चेतनाख्यं गर्भं संयोजयामि। ततो मत्कृताचिद्-
5 चित्संसर्गाद्देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो
भवतीत्यर्थः।

एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिद्-
चितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं पर-
मपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः। यः पृथिव्यां तिष्ठ-
10 न्पृथिव्या अन्तरः। यं पृथिवी न वेद। यस्य पृथिवी शरीरम्। यः
पृथिवीमन्तरो यमयति (बृ. ३।७।३) इत्यारभ्य य आत्मनि तिष्ठ-
न्नात्मनोन्तरः। यमात्मा न वेद। यस्यात्मा शरीरम्। य आत्मा-
नमन्तरो यमयति। स त आत्मान्तर्याम्यमृतः (बृ. ३।७।२२)
इति। तथा यः पृथिवीमन्तरे संचरन्यस्य पृथिवी शरीरं यं
15 पृथिवी न वेदेत्यारभ्य यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरी-
रम्। यं मृत्युर्न वेद। एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो
देव एको नारायणः (ना. २)। अत्र मृत्युशब्देन तमःश-
ब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते। अस्यामेवोपनिषद्यव्य-
क्तमक्षरे लीयते। अक्षरं तमसि लीयत इति वचनात्। अन्तः-
20 प्रविष्टः शास्ता जनानां सर्वात्मा (तै. आ. ३।११।२) इति च।

4. B. C. read यत्तस्मिन् for यस्मिन्; C. reads अतः for ततः.

5. C. reads संकल्प after मत्.

7. B. reads भोग्यभोक्तृस्वरूपेण स्थितयोः for भोक्तृभोग्यरूपेणावस्थितयोः.

15. B. C. read योक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेद after आरभ्य.

एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत्स एवेत्याहुः सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम् (छा. ६।२।१)। तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोसृजत (छा. ६।२।३) इत्यारभ्य सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।४)। ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो (छा. ६।८।७)। सोकामयत। बहु स्यां प्रजायेयेति। स तपोतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत (तै. २।६।१) इत्यारभ्य सत्यं चानृतं च सत्यमभवत् (तै. २।६।१) इत्याद्याः। अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः। हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२) इति। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्।....विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत् (तै. २।६।१) इति च। अनेन जीवेनात्मनानुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनुप्रविश्य। सच्च त्यच्चाभवत्। विज्ञानं चाविज्ञानं चेत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते। एवंभूतमेव नामरूपव्याकरणं तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत (बृ. १।४।७) इत्यत्राप्युक्तम्।

अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणवि-

3. B. om. च.

8. B. C. read इति। तथा after श्वेतकेतो.

19. B. om. वि before ज्ञायते.

ज्ञानेन कार्यस्य विज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहित-
मुपपन्नतरम् । हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानु-
प्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) इति तिस्रो
देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन
5 नामरूपव्याकरणवचनात्सर्वे वाचकाः शब्दा अचिज्जीवविशि-
ष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना
शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् ।
अतः स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपा-
दानं जगत् । सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति ब्रह्मोपादा-
10 नत्वेपि संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासंकरो-
प्युपपन्नतरः । यथा शुक्लरक्तकृष्णतन्तुसंघातोपादानत्वेपि चित्रप-
टस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थाया-
मपि न सर्वत्र वर्णसंकरस्तथा चिदचिदीश्वरसंघातोपादानत्वेपि
जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसंकरः । त-
15 न्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां
कारणत्वं कार्यत्वं च । इह तु सर्वावस्थावस्थयोः परमपुरुषशरी-
रत्वेन चिदचितोस्तत्प्रकारतयैव पदार्थत्वात्तत्प्रकारः परमपुरुषः
सर्वदा सर्वशब्दवाच्य इति विशेषः । स्वभावभेदस्तदसंकरश्च
तत्र चात्र च तुल्यः । एवं च सति परस्य ब्रह्मणः कार्यानुप्रवे-
20 शेपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम् । स्थूलाव-

1. C. om. वि before ज्ञाततया.

8. B. reads प्रकारम् for प्रकारकम्.

9. B. C. read शरीरकम् for शरीरम्.

11. C. reads अति for अपि before उपपन्नतरः.

16. B. C. read चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन for सर्वावस्थावस्थयोः परमपुरुषशरीरत्वेन चिदचितोः.

18. B. om. सर्वदा.

स्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयावस्था-
नात्कार्यत्वमप्युपपन्नतरम् । अवस्थान्तरापत्तिरेव हि कार्यता ।

निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासंभवादुपपद्यन्ते ।
अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः ( छा.
८।१।५ ) इति हेयगुणान्प्रतिषिध्य सत्यकामः सत्यसंकल्पः 5
( छा. ८।१।५ ) इति कल्याणगुणान्विदधतीयं श्रुतिरेवान्यत्र
सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ।

ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेरखिलहेयप्रत्यनी-
ककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रका-
शतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । यः सर्वज्ञः सर्व- 10
विन ( मु. १।१।९ ) ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
( श्वे. ६।८ )
विज्ञातारमरे केन विजानीयात् ( बृ. २।४।१४ ) इत्या-
दिका ज्ञातृत्वमावेदयन्ति । सत्यं ज्ञानम् ( तै. २।१।१ ) 15
इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्व-
रूपताम् ।

सोकामयत बहु स्याम् ( तै. २।६।१ ) । तदैक्षत बहु स्याम् (छा.
६।२।३ ) । तन्नामरूपाभ्यां व्याक्रियत ( बृ. १।४।७ ) इति ब्रह्मैव
स्वसंकल्पाद्विचित्रस्थिरचरस्वरूपतया नानाप्रकारमवस्थितमिति 20
तत्प्रत्यनीकाब्रह्मात्मकं वस्तुनानात्वमतत्त्वमिति तत्प्रतिषिध्यते
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । (बृ.४।४।१९)

3. C. reads अभावात् for असंभवात्.

8. C. reads निखिल for अखिल.

9. B. reads विज्ञानैक for ज्ञानैक.

20. B. reads स्थिररूपतया for स्थिरचरस्वरूपतया, C. स्थिरत्रसरूपतया.

नेह नानास्ति किंचन ( बृ. ४।४।१९ ) । यत्र हि द्वैत-
मिवं भवति तदितर इतरं पश्यति....यत्र त्वस्य सर्वमात्मै-
वाभूत....तत्केन कं पश्येत्....तत्केन कं विजानीयात् ( बृ.
२।४।१४ ) इत्यादिना । न पुनर्बहु स्यां प्रजायेय ( तै. २।६।१
5 छा. ६।२।३ ) इत्यादिश्रुतिसिद्धं स्वसंकल्पकृतं ब्रह्मणो नानाना-
मरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते । यत्र त्वस्य सर्व-
मात्मैवाभूत् ( बृ. २।४।१४ ) इति निषेधवाक्यादौ च तत्स्था-
पितं सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ( बृ. २।४।६ ) । तस्य
ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः ( बृ. २।४।
10 १० ) इत्यादिना ।

एवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च वदन्तीनां
कार्यकारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च सर्वासां
श्रुतीनामविरोधश्चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं
शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं
15 कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञा-
यत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यन्याय-
मूलस्य सकलश्रुतिविरुद्धस्य न कथंचिदप्यवकाशो दृश्यते ।
चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरी-
रात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्त-
20 रेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च
ह्यविरुद्धमिति सिद्धम् । यथाग्नेयादीन्षड्यागानुत्पत्तिवाक्यैः
पृथगुत्पन्नान्समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान्द-

11. B. C. read स्वरूपभेदं स्वभावभेदम् for स्वभावभेदं स्वरूपभेदम्.

15. C. om. च.

20. B. om. च हि.

21. C. om. इति सिद्धम्.

र्शपूर्णमासाभ्यामित्यधिकारवाक्यं कामिनः कर्तव्यतया विद-
धाति तथा चिदचिदीश्वरान्विविक्तस्वरूपस्वभावान्

क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः।
(श्वे. १।१०)

प्रधानक्षेत्रज्ञपतिर्गुणेशः (श्वे. ६।१६)। पतिं विश्वस्या- 5
त्मेश्वरम् (ना. १३।१)। आत्मा नारायणः परः (ना.
१३।१) इत्यादिवाक्यैः पृथक्प्रतिपाद्य यस्य पृथिवी
शरीरं यस्यात्मा शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्।
एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः
(ना. २) इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थितयोः प- 10
रमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य शरीरिभूत-
परमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्या-
वस्थश्च परमात्मैक एवेति पृथक्प्रतिपन्नं वस्तुत्रितयं सदेव सो-
म्येदमग्र आसीत् (छा. ६।२।१)। ऐतदात्म्यमिदं सर्वम् (छा.
६।८।७)। सर्वं खल्विदं ब्रह्म (छा. ३।१४।१) इत्यादिवाक्यं 15
प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मश-
ब्देनाभिधाने हि नास्ति विरोधः। यथा मनुष्यपिण्डशरीरक-
स्यात्मविशेषस्यायमात्मा सुखीत्यात्मशब्देनाभिधान इत्यलमति-
विस्तरेण।

यत्पुनरिदमुक्तं ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति। 20
तदयुक्तम्। बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात्।
पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानु-
भवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम्। एवं-

1. B. reads अधिकारवाक्येन for अधिकारवाक्यम्.

7. B. reads पृथक् after पृथक्.

14. B. reads एकमेवाद्वितीयम् after आसीत्.

18. B. reads अभिधानम् for अभिधाने.

रूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति ।

मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः । (वि. पु. २।१४।२७)

5 इति शास्त्रात् । उत्तमः पुरुषस्त्वन्यः ( गी. १५।१७ ) । पृथगात्मानं प्रेरितारं च मत्वा ( श्वे. १।६ ) इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ।

अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वा-
10 त्तस्य निवर्तकान्तरं मृग्यम् । निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य क्षणिकत्वात्स्वयमेव विनश्यतीति चेन्न । तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम् । तद्विनाशो ब्रह्मस्वरूपमेवेति चेन् । तथा सति निवर्तकज्ञानोत्पत्तिरेव न
15 स्यात् । तद्विनाशे तिष्ठति तदुत्पत्त्यसंभवात् ।

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता । अध्यासरूप इति चेन्न । तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात्तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमेवेति चेत् । ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपमुताध्यस्तम् ।
20 अध्यस्तं चेदयमध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तु तस्यापि त्रिरूपत्वाज्ज्ञात्रपेक्षयानवस्था स्यात् । ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात् । निवर्तकज्ञानस्वरूपं स्वस्य

9. B. reads स्वरूपत्वात् for रूपत्वात्.

21. B. C. om. तु.

23. C. reads स्वस्य for स्वस्य.

ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं भूत-
लव्यतिरिक्तं कृत्स्नं देवदत्तेनच्छिन्नमित्येकस्यामेवच्छेदनक्रियाया-
मस्यच्छेत्तुरस्याश्छेदनक्रियायाश्चच्छेद्यानुप्रवेशवचनवदुपहास्यम् ।
अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न
भवति । स्वनाशस्यापुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युप- 5
गमे भेदतद्दर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलम-
नेन दिष्टहतमुद्गराभिघातेन ।

तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद्बन्धस्य तन्निबर्हणमुक्त-
लक्षणज्ञानादेव । तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरमपुरुषाराधन-
वेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या । तत्र 10
केवलकर्मणामल्पास्थिरफलत्वमनभिसंहितफलपरमपुरुषाराधन-
वेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्या-
नुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते । के-
वलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न संभवतीति
कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इत्यथात 15
इत्युक्तम् ।

अत्र पूर्वपक्षवादी मन्यते । वृद्धव्यवहारादन्यत्र शब्दस्य बो-
धकत्वशक्त्यवधारणासंभवाद्व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन
कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः ।
अतो वेदान्ताः परिनिष्पन्ने परस्मिन्ब्रह्मणि न प्रमाणभावम- 20
नुभवितुमर्हन्ति । न च पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु हर्ष-

---

2. C. reads अस्याम् for एकस्याम्.

5. B. reads अपरमार्थत्वात् for अपुरुषार्थत्वात्.

10. B. reads याथार्थ्य for याथात्म्य.

17. C. reads तत्र for अत्र.

20. C. reads परे for परस्मिन्.

हेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात्सुलग्नजन्मसुखप्रसवादि-
हर्षहेत्वर्थान्तरोपनिपातसंभावनया च प्रियार्थप्रतिपत्तिनिमित्त-
मुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः । नापि व्यु-
त्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन वा प्रकृत्यर्थनिश्चयेन
5 कः शब्दस्य सिद्धवस्त्वभिधानशक्तिनिश्चयः । ज्ञातकार्याभिधा-
यिपदसमुदायस्य तदंशविशेषनिश्चयरूपत्वात्तस्य । न च स-
र्पाद्भीतस्य नायं सर्पो रज्जुरेषेति शब्दश्रवणसमनन्तरं भयनिवृ-
त्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः । अत्रापि निश्चेष्टं नि-
र्विषमचेतनमिदं वस्त्वित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु
10 विशेषनिश्चयायोगात् । कार्यबुद्धिप्रवृत्तिव्याप्तिबलेन शब्दस्य प्र-
वर्तकार्थावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैः
पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनात्कार्यान्वितस्वार्थमात्रे
पदशक्तिनिश्चयः । इष्टसाधनताबुद्धिस्तु कार्यबुद्धिद्वारेण प्रवृत्ति-
हेतुर्न स्वरूपेण । अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनु-
15 पलब्धेः । इष्टोपायो हि मत्प्रयत्नादृते न सिध्यति । अतो मत्कृति-
साध्य इति बुद्धिर्यावन्न जायते तावन्न प्रवर्तते । अतः कार्यबु-
द्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाचितया कार्यस्यैव
वेदवेद्यत्वात्परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलापाताप्र-
तिपत्तेरक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिभिः

20 1. B. om. जन्म.

3. D. reads विकाश for विकास.

4. B. om. वा after पदान्तरार्थनिश्चयेन.

12. B. reads नान्यान्वित for कार्यान्वित; B. reads पदानाम् after स्वार्थमात्रे.

16. C. reads प्रवृत्तिरेव for प्रवर्तते.

17. B. reads वाच्यत्वात् for वाचितया.

21. B. C. om. आपात; B. reads कृतिसाध्यताबुद्धिविषयस्यैव प्रवर्तकत्व

23. C. reads शक्तिग्रहः गृहीतशक्तिकस्यैव वेदार्थप्रतिपत्तिः for आपात...त्तेः

कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च कर्मफलाल्पास्थिरत्वब्रह्मज्ञा-
नफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारम्भो न युक्त इति ।

अत्राभिधीयते । निखिललोकविदितशब्दार्थसंबन्धावधार-
णप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं
प्रामाणिका न बहु मन्यन्ते । एवं किल बालाः शब्दार्थसंबन्ध- 5
मवधारयन्ति । मातापितृप्रभृतिभिरम्बाताततमातुलादीञ्छशिप-
शुमृगनरपक्षिसर्पादींश्चैनमवेहीमं चावधारयेत्यभिप्रायेणाङ्गुल्या
निर्दिश्य तैस्तैः शब्दैस्तेषु तेष्वर्थेषु बहुशः शिक्षिताः शनैः
शनैस्तैस्तैः शब्दैरेव तेषु तेष्वर्थेषु स्वात्मना बुद्ध्युत्पत्तिं दृष्ट्वा
शब्दार्थयोः संबन्धान्तरादर्शनात्संकेतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु 10
तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति ।
पुनश्च व्युत्पन्नेतरशब्देष्वस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शि-
क्षिताः सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबो-
धिवाक्यजातं प्रयुञ्जते ।

प्रकारान्तरेणापि शब्दार्थसंबन्धावधारणं सुशकम् । केन- 15
चित्पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्त इति देवदत्ताय
ज्ञापयेति प्रेषितः कश्चित्तज्ज्ञापने प्रवृत्तः पिता ते सुखमास्त
इति शब्दं प्रयुङ्क्ते । पार्श्वस्थोन्यो व्युत्पित्सुर्मूकवच्चेष्टाविशे-
षज्ञस्तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वानुगतस्तज्ज्ञापनाय प्रयुक्तमिमं
शब्दं श्रुत्वायं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थे 20

---

2. C. reads स्थिरफलत्व for स्थिरत्व; B. reads फलानां तत्स्थिरत्व for फलानन्तस्थिरत्व.

6. D. reads मातृपितृ for मातापितृ.

9. B. C. read एव शब्दैः for शब्दैरेव. B. C. read स्वात्मनाम् for स्वात्मना.

12. B. om. शब्दस्य.

15. C. reads सुशक्तम् for सुशकम्.

एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः । अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः ।

कार्यार्थत्वेपि वेदस्य ब्रह्मविचारः कर्तव्य एव । कथम् ।
5 आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. २।४।५ )। सोन्वेष्टव्यः स विजिज्ञासितव्यः ( छा. ८।७।१ ) । विज्ञाय प्रज्ञां कुर्वीत ( बृ. ४।४।२१ )। दहरोस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम् । तद्वाव विजिज्ञासितव्यम् ( छा. ८।१।१ ) । तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्त-
10 स्तदुपासितव्यम् ( ना. १२।३ ) इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन ब्रह्मविदाप्नोति परम् ( तै. २।१।१ ) इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासंभिन्नसुखविशेषरूपस्वर्गादिवद्रात्रिसत्रप्रतिष्ठादिवदपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः ।

15 गामानयेत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः । भवदभिमतकार्यस्य दुर्निरूपत्वात् । कृतिभावभावि कृत्युद्देश्यं हि भवतः कार्यम् । कृत्युद्देश्यत्वं कृतिकर्मत्वम् । कृतिकर्मत्वं च कृत्या प्राप्तुमिष्टतमत्वम् । इष्टतमं च सुखं वर्तमानदुःखनिवृत्तिर्वा । तत्रेष्टसुखार्थिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः
20 प्रतीता ततः प्रयत्नेच्छुः प्रवर्तते पुरुष इति न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किंचिदप्युपलभ्यते । इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव । तत एव प्रवृत्तेः ।

---

13. C. reads देश for सुख.
14. C. reads सिद्धिः for सिद्धेः.
16. C. reads कार्यन्वस्य for कार्यस्य.
17. B. reads च after कृत्युद्देश्यत्वम्.

न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वम् । यतः सुखमेव पुरुषानुकूलम् । न च दुःखनिवृत्तेः पुरुषानुकूलत्वम् । पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमिति सुखदुःखयोः स्वरूपविवेकः । दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति नानुकूलतया । अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः । अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न संभवति । न च सुखार्थतया तस्याप्यनुकूलत्वम् । दुःखात्मकत्वात्तस्य । सुखार्थतयापि तदुपादानेच्छामात्रमेव भवति ।

नच कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वम् । भवत्पक्षे शेषित्वस्यानिरूपणात् । नच परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसंबन्धी शेषीत्यवगम्यते । तथा सति कृतेरशेषत्वेन तां प्रति तत्साध्यत्वस्य शेषित्वाभावात् । नच परोद्देशप्रवृत्त्यर्हतायाः शेषत्वेन परः शेषी । उद्देश्यत्वस्यैव निरूप्यमाणत्वात् । प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च । प्रधानस्तु भृत्यपोषेपि स्वोद्देशेन प्रवर्तत इति चेन्न । भृत्योपि हि प्रधानपोषे स्वोद्देशेनैव प्रवर्तते । कार्यस्वरूपस्यैवानिरूपणात्कार्यप्रतिसंबन्धी शेषस्तत्प्रतिसंबन्धी शेषीत्यप्यसंगतम् ।

नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वम् । पुरुषस्य कृत्यारम्भ-

3. E. reads हि after इति.

5. B. reads विरहेण for विरहे.

7. B. reads सुखात्मतया for सुखार्थतया.

8. C. reads तदुपादाने for तदुपादान.

10. C. reads शेषित्वम् for शेषत्वम्.

12. B. C. read तत्साध्यस्य for तत्साध्यत्वस्य.

13. C. reads शेषित्वेन for शेषत्वेन; B. reads अनिरूप्यमाणत्वात् for निरूप्यमाणत्वात्.

15. C. E. read प्रधानपोषणे for प्रधानपोषे.

प्रयोजनमेव हि कृतिप्रयोजनम् । स चेच्छाविषयः । तस्मादिष्टता-
तिरेकिकृत्युद्देश्यत्वानिरूपणात्कृतिसाध्यताकृतिप्रधानत्वरूपं कार्यं
दुर्निरूपमेव ।

नियोगस्यापि साक्षादिच्छाविषयभूतसुखदुःखनिवृत्तिभ्याम-
5 न्यत्वात्तत्साधनतयैवेष्टत्वं कृतिसाध्यत्वं च । अत एव हि तस्य
क्रियातिरिक्तता । अन्यथा क्रियैव कार्यं स्यात् । स्वर्गकामपद-
समभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति
क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्व-
र्गसाधनतोल्लेखेनैव ह्यपूर्वव्युत्पत्तिः । अतः प्रथममनन्यार्थतया
10 प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात्स्वर्गसा-
धनं भवतीत्युपहास्यम् । स्वर्गकामपदान्वितकार्याभिधायिपदेन
प्रथममप्यनन्यार्थतानभिधानात् । सुखदुःखनिवृत्तितत्साधने-
भ्योन्यस्यानन्यार्थस्य कृतिसाध्यताप्रतिपत्त्यनुपपत्तेश्च ।

अपि च किमिदं नियोगस्य प्रयोजनत्वम् । सुखवन्नियोग-
15 स्याप्यनुकूलत्वमेवेति चेत् । किं नियोगः सुखम् । सुखमेव ह्यनु-
कूलम् । सुखविशेषवन्नियोगापरपर्यायं विलक्षणं सुखान्तरमिति
चेत् । किं तत्र प्रमाणमिति वक्तव्यम् । स्वानुभवश्चेन्न । वि-

1. B. E read इष्टत्व for इष्टता.

2. B. reads स्वरूपम् for रूपम्; E. reads स्वरूप.

3. C. reads नियोगस्यापि साक्षादिपिविषयत्व दुर्निरूपमेव । after दुर्नि-रूपमेव.

4. E. reads इपि for इच्छा.

7. C. reads लिङादेः for लिङादि.

12. B. reads अनन्यार्थताभिधानात् for अप्यनन्यार्थतानभिधानात्.

13. C. reads कार्यस्य after अनन्यार्थस्य; B. C. E. read प्रतीति for प्रतिपत्ति.

14. C. reads प्रयोगस्य after नियोगस्य.

षयविशेषानुभवसुखवन्नियोगानुभवसुखमिदमिति भवतापि नानुभूयते । शास्त्रेण नियोगस्य पुरुषार्थतया प्रतिपादनात्पश्चात्तु भोक्ष्यत इति चेत् । किं तन्नियोगस्य पुरुषार्थत्ववाचि शास्त्रम् । न तावल्लौकिकं वाक्यम् । तस्य दुःखात्मकक्रियाविषयत्वात् । तेन सुखसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात् । नापि वैदिकम् । तेनापि स्वर्गसाधनतयैव कार्यस्य प्रतिपादनात् । नापि नित्यनैमित्तिकशास्त्रम् । तस्यापि तदभिधायित्वं स्वर्गकामवाक्यस्यापूर्वव्युत्पत्तिपूर्वकमित्युक्तनीत्या तेनापि सुखादिसाधनभूतकार्याभिधानमवर्जनीयम् । नियतैहिकफलस्य कर्मणोतष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यरोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च नियोगः सुखमित्यत्र न किंचन प्रमाणमुपलभामहे । अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्तनवन्नियोगरूपसुखप्रकारकीर्तनं भवतापि न दृष्टचरम् ।

अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते । धात्वर्थस्य यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता समाराधितात्परमपुरुषात्फलसिद्धिश्चेति फलमत उपपत्तेः (ब्र. सू. ३।२।३७) इत्यत्र प्रतिपादयिष्यते । अतो वेदान्ताः परिनिष्पन्नं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सि-

1. B. om. इति.
2. C. om. तु.
3. E. reads पुरुषाथवादि for पुरुषार्थत्ववाचि.
5. C. E. read आदि after सुख.
6. E. reads आदि after स्वर्ग.
8. E. reads रीत्या for नीत्या.
9. C. om. भूत.
15. E. om. अधि before अवसीयते.
16. B. C. read च after धात्वर्थस्य; C. reads अप् after अग्नि.
19. B. C. read परम् after परिनिष्पन्नम्; E. reads पर.

द्धम् । चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोप-
देशादक्षयफलश्रवणं वायुश्चान्तरिक्षं चैतदमृतम् ( बृ. २।३।३ )
इत्यादिवदापेक्षिकं मन्तव्यम् । अतः केवलानां कर्मणामल्पास्थि-
रफलत्वाद्ब्रह्मज्ञानस्यानन्तस्थिरफलत्वाच्च तन्निर्णयफलो ब्रह्मवि-
5 चारारम्भो युक्त इति स्थितम् ॥ १ ॥

किं पुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यत इत्यत्राह ।

## जन्माद्यस्य यतः ॥ २ ॥

जन्मादीति सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः ।
अस्याचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मा-
10 दिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतो यतो यस्मात्सर्वेश्वरान्निखिल-
हेयप्रत्यनीकस्वरूपात्सत्यसंकल्पाज्ज्ञानानन्दाद्यनन्तकल्याणगुणा-
त्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः
प्रवर्तन्ते तद्ब्रह्मेति सूत्रार्थः ।

भृगुर्वै वारुणिः। वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म
15 ( तै. ३।१।१ ) इत्यारभ्य यतो वा इमानि भूतानि जायन्ते ।
येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व।
तद्ब्रह्म ( तै. ३।१।१ ) इति श्रूयते । तत्र संशयः । किमस्माद्वा-
क्याद्ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते न वेति । किं प्राप्तं न श-
क्यमिति । न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति ।
20 अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोनेकत्वप्रसक्तेः । विशेषणत्वं हि
व्यावर्तकत्वम् । ननु देवदत्तः श्यामो युवा लोहिताक्षः समप-
रिमाण इत्यत्र विशेषणबहुत्वेप्येक एव देवदत्तः प्रतीयते । एव-

1. B. C. read केवल for केवलस्य.

3. C. reads केवल for केवलानाम्.

4. E. reads चानन्तस्थिरफलत्वात् for अनन्तस्थिरफलत्वाच्च.

20. C. reads विशेषण हि व्यावर्तकम् for विशेषणत्वं हि व्यावर्तकत्वम्.

मत्राप्येकमेव ब्रह्म भवति । नैवम् । तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः । अन्यथा तत्रापि व्याव-र्तकत्वेनानेकत्वमपरिहार्यम् । अत्र त्वनेकेनैव विशेषणेन लिल-क्षयिषितत्वाद्ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्त-कभेदेन ब्रह्मबहुत्वमवर्जनीयम् । ब्रह्मशब्दैक्यादत्राप्यैक्यं प्र- 5
तीयत इति चेन्न । अज्ञातगोव्यक्तिजिज्ञासोः पुरुषस्य षण्डो मुण्डः पूर्णशृङ्गो गौरित्युक्ते गोपदैक्येपि षण्डत्वादिव्यावर्तकभे-देन गोव्यक्तिबहुत्वप्रतीतेर्ब्रह्मव्यक्तयोपि बह्वयः स्युः । अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां संभूय लक्षणत्वमनुपप-न्नम । नाप्युपलक्षणत्वेन लक्षयन्ति । आकारान्तराप्रतिपत्तेः । 10
उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्र-तिपत्तिहेतुत्वं हि दृष्टं यत्रायं सारसः स देवदत्तकेदार इ-त्यादिषु । ननु च सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति। न । इतरे-तरप्रतिपन्नाकारापेक्षत्वेनोभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात् । 15
अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ।

एवं प्राप्तेभिधीयते । जगत्सृष्टिस्थितिप्रलयैरुपलक्षणीभूतैर्ब्रह्म प्रतिपत्तुं शक्यते। न चोपलक्षणोपलक्ष्याकारव्यतिरिक्ता-कारान्तराप्रतिपत्तेर्ब्रह्मणोप्रतिपत्तिः । उपलक्ष्यं ह्यनवधिकातिश-

1. C. reads मैवम् for नैवम्.
2. E. reads व्यावर्तकत्वात् for व्यावर्तकत्वेन.
3. B. C. read अनेन for अनेकेन.
6. B. C. E. read गोव्यक्तेः for गोव्यक्ति.
9. C. reads लक्षकत्वमपि for लक्षणत्वम्; E. reads अपि after लक्षणत्वम्.
12. E. reads यथायम् for यत्रायम्.
17. B. C. E. read उपलक्षणभूतैः for उपलक्षणीभूतैः.
19. B. reads ब्रह्म for ब्रह्मण; C. reads प्रतिपत्तिः for अप्रतिपत्तिः.

यबृहत्। बृंहणं च ब्रह्म। बृहतेर्धातोस्तदर्थत्वात्। तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः। यतो येन यदिति प्रसिद्धवज्जन्मादिकारणनिर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते। प्रसिद्धिश्च सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु
5 स्यां प्रजायेयेति। तत्तेजोसृजत (छा. ६।२।२-३) इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन। तदपि सदेवेदमग्र एकमेवासीदित्युपादानतां प्रतिपाद्याद्वितीयमित्यधिष्ठात्रन्तरं प्रतिषिध्य तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोसृजतेत्येकस्यैव प्रतिपादनात्। तस्माद्यन्मूला जगज्जन्मस्थितिलयास्तद्ब्र-
10 ह्मेति जगज्जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति। जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसंकल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां यथाप्रतिपन्नस्य लक्षकत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः।

जगज्जन्मादीनां विशेषणतया लक्षणत्वेपि न कश्चिद्दोषः।
15 लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति। अज्ञातस्वरूपे वस्तुन्येकस्मिँल्लक्षयिषितेपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति। विशेषणानामेकाश्रयतया

1. C. E. om. ब्रह्म after च.
3. C. reads सिद्ध after कारण.
6. B. reads इदमग्रे सत् for सदेवेदमग्रे.
7. B. reads च after उपादानताम्.
10. E. om. जगत् after इति.
12. B. om. च after इति.
13. E. लक्षणत्वेन for लक्षकत्वेन.
14. C. reads लक्षकत्वे for लक्षणत्वे.
15. E. reads ब्रह्म for वस्तु.
17. B. om. लक्षण; B. C. read एकाश्रयता for एकाश्रयतया.

प्रतीतेरेकस्मिन्नेवोपसंहारात् । षण्डत्वादयस्तु विरोधादेव गोव्य-
क्तिभेदमापादयन्ति । अत्र तु कालभेदेन जन्मादीनां न विरोधः।

यतो वा इमानि भूतानि (तै. ३।१।१) इत्यादिवाक्येन
प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्व-
रूपमभिधीयते सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इति । 5
तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह । तेन विकारास्पद-
मचेतनं तत्संसृष्टचेतनश्च व्यावृत्तः । नामान्तरभजनार्हावस्था-
न्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नि-
त्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित्संकुचितज्ञानत्वेन
मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूप- 10
माह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पू-
र्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या
व्यावृत्ताः । विशेषणानां व्यावर्तकत्वात् । ततः सत्यं ज्ञानम-
नन्तं ब्रह्म (तै. २।१।१) इत्यनेन वाक्येन जगज्जन्मादिनाव-
गतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति 15
नान्योन्याश्रयणम् । अतः सकलजगज्जन्मादिकारणं निरवद्यं
सर्वज्ञं सत्यसंकल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत
इति सिद्धम् ।

ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति तन्मते ब्रह्म-
जिज्ञासा जन्माद्यस्य यत इत्यसंगतं स्यात् । निरतिशयबृहद्बृं- 20
हणं च ब्रह्मेति निर्वचनात् । तच्च ब्रह्म जगज्जन्मादिकारणमिति

---

3. E. reads कारण before वाक्येन.

7. B. E. read संसृष्टः for संसृष्ट; E. om. च.

13. C. reads स्युः after व्यावृत्ताः; B. reads अतः for ततः.

15. C. reads वस्तु after विसजातीयमिति.

21. C. reads वचनात् for निर्वचनात्.

वचनाच्च । एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात्सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमा यतस्तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेपि न निर्विशेषवस्तुसिद्धिः । भ्रममूलमज्ञानमज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयोच्यते । प्रकाशत्वं तु जडाद्व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यात् । तुच्छतैव स्यात् ॥ २ ॥

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तदयुक्तम् । तद्धि न वाक्यप्रतिपाद्यम । अनुमानेन सिद्धेरित्याशङ्क्याह ।

## शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रं यस्य योनिः कारणं प्रमाणं तच्छास्त्रयोनि । तस्य भावः शास्त्रयोनित्वम् । तस्मात् । ब्रह्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वम् । ब्रह्मणोत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणत्वादुक्तस्वरूपं ब्रह्म यतो वा इमानि भूतानि जायन्ते ( तै. ३।१।१ ) इत्यादि वाक्यं बोधयत्येवेत्यर्थः ।

ननु शास्त्रयोनित्वं ब्रह्मणो न संभवति । प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः । अप्राप्ते तु शास्त्रमर्थवत् ।

---

2. C. reads उदाहृत for उदाहृताः.

4. B. E. read भ्रमः for भ्रमाः.

5. C. reads च for अपि.

7. E. reads एव after रसतया; E. reads च after स्वस्य.

16. E. reads प्रमाणकत्वात् for प्रमाणत्वात्.

17. B. reads बोधयेत् for बोधयति.

किं तर्हि तत्र प्रमाणम् । न तावत्प्रत्यक्षम् । तद्धि द्विविधम् । इन्द्रियसंभवं योगसंभवं चेति । इन्द्रियसंभवं च बाह्यसंभवमान्तरसंभवं चेति द्विधा । बाह्येन्द्रियाणि विद्यमानसंनिकर्षयोग्यस्वविषयबोधजनकानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधजनकानि । नाप्यान्तरम् । सुखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः । नापि योगजन्यम् । भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता । तदतिरिक्तविषयत्वे कारणाभावात् । तथा सति तस्य भ्रमरूपता । नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा । अतीन्द्रिये वस्तुनि संबन्धावधारणविरहान्न विशेषतो दृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते । ननु च जगतः कार्यत्वं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् । अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनं च । सावयवत्वेन जगतः कार्यत्वम् ।

उच्यते । किमिदमेकचेतनाधीनत्वम् । न तावत्तदायत्तोत्प-

1 B. om. हि.

3. E. reads द्विविधम् for द्विधा.

4 B. om. स्व; C. reads जननानि for जनकानि.

5. B. C. om. परम; C. reads जननानि for जनकानि.

6. C. reads आन्तर before सुखादि; E. reads आन्तरसुखदुःखादि for सुखादि.

11. B. reads अतीन्द्रिय for अतीन्द्रिये; C. reads अतीन्द्रियवस्तु for अतीन्द्रिये वस्तुनि.

त्तिस्थितित्वम् । दृष्टान्तो हि साध्यविकलः स्यात् । न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति । तच्छरीरस्य भोक्तॄणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः । किं च शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेष-
5 व्यतिरेकेण न चेतनमपेक्षते । प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न संभवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे । तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत् । अनेकचेतनसाध्येषु गुरुतररथशिलामहीधरादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिद्धसाध्यता ।

10 किं चोभयवादिसिद्धानां जीवानामेव लाघवन्यायेन कर्तृत्वाभ्युपगमो युक्तः । न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासंभवः । सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात् । यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते । उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवा-
15 च्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः । तत्साक्षात्कारानपेक्षणात्कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते न साक्षात्कारः । न हि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत्तच्छक्तिमपि साक्षात्कृत्य घटमणिकादि कार्यमारभन्ते । इह तु
20 चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः ।

किं च यच्छक्यक्रियं शक्योपादानादिविज्ञानं च तदेव त-

2. C. om. स्व.

8. B. reads महीरुह for महीधर.

10. C. reads लाघवेन for लाघवन्यायेन.

22. B, E. read तु after तदेव.

दभिज्ञकर्तृकं दृष्टम् । महीधरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीयशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति ।

किं च घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवतानाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुः सिषाधयिषितपुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपरीतसाधनाद्विरुद्धः स्यात् । न चैतावता सर्वानुमानोच्छेदप्रसङ्गः । लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिता विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो हि निवर्तन्ते । इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलजगन्निर्माणचतुरेऽन्वयव्यतिरेकावगताविनाभावनियमा धर्माः सर्व एवाविशेषेण प्रसज्यन्ते । निवर्तकप्रमाणाभावात्तथैवावतिष्ठन्ते । अत आगमादृते कथमीश्वरः सेत्स्यति ।

अत्राहुः । सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते । भवन्ति च प्रयोगाः । विवादाध्यासितं भूभूधरादि कार्यम् । सावयवत्वात् । घटादिवत् । तथा विवादाध्यासितमवनिजलधिमहीधरादि कार्यम् । महत्त्वे सति क्रियावत्त्वात् । घटादिवत् । तनुभुवनादि कार्यम् । महत्त्वे सति मूर्तत्वात् । घटादिवदिति । सावयवेषु द्रव्येष्विदमेव क्रियते नेतरदिति कार्यत्वस्य नियामकं

1. B. C. E. read मही for महीधर.

3. C. reads आदि after विज्ञान.

10. B. C. read विपरीताः for विपरीत; B. C. om. हि.

16 B. reads भूभूधरादिकम् for भूभूधरादि.

18. C. reads घटवत् for घटादिवत्.

19. B. reads विवादाध्यासितम् before तनुभुवनादि; E. om. इति after घटादिवत्.

मावयवत्वातिरेकि रूपान्तरं नोपलभामहे । कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चोपलभ्यत इति चे-न्न । कार्यत्वेनानुमितेपि विषये ज्ञानशक्ती कार्यानुमेये इत्यन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति
5 न कश्चिद्विशेषः । तथा हि । घटमणिकादिषु कृतेषु कार्यत्वदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोदृष्टपूर्वं विचित्रसंनिवेशं नरेन्द्रभवनमालोक्यावयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति । अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः
10 कश्चित्पुरुषविशेषः सिध्यत्येव ।

किं च सर्वचेतनानां धर्माधर्मनिमित्तेपि सुखदुःखोपभोगे चेतनानधिष्ठितयोस्तयोरचेतनयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः । वर्धकिनानधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसंनिधानेपि यूपादिनि-
15 र्माणसाधनत्वादर्शनात् । बीजाङ्कुरादेः पक्षान्तर्भावेण तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम् । तत एव सुखादिभिर्व्यभिचारदर्शनवचनमपि तथैव । न च लाघवेनोभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेवेदृशमधिष्ठातृत्वकल्पनं युक्तम् । तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । दर्शनानुगुणैव हि

2. C. reads ज्ञानत्वम् for विज्ञानत्वम्.

3. B. om. अपि after अनुमिते.

5. B. C. read कार्य for कार्यत्व.

7. B. reads भुवन for भवन.

12. E. reads अचेतनयोस्तयोः for तयोरचेतनयोः.

16. C. reads अनभिज्ञान for अनभिज्ञता।

17. C om. दर्शन.

सर्वत्र शक्तिकल्पना । न च क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोस्ति । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्व-नियतकार्यत्वहेतुना सिध्यन्स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न एव सिध्यति ।

यत्त्वनैश्वर्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतं त- 5 दनुमानवृत्तानभिज्ञत्वनिबन्धनम् । सपक्षे सहदृष्टानां सर्वेषां कार्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः । एतदुक्तं भवति । केनचित्किंचित्क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते । नत्वन्यासामर्थ्यमन्याज्ञानं च । हेतुत्वाभावात् । स्वनिर्माणसामर्थ्यस्वोपादानोपकरण- 10 ज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां संबन्धितया दर्शनमात्रेणाकिंचित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगादिति । किं च क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोग्युत कतिपयविषयम् । न तावत्सर्वविषयम् । न हि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न विजानाति । नापि कतिपय- 15 विषयम् । सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात् । अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तेरिति न विपरीतसाधनत्वम् ।

कुलालादीनां दण्डचक्राद्यधिष्ठानत्वं शरीरद्वारेण दृष्टमिति

1. C. om. शक्ति before कल्पना.
5. E. reads आदि after अनैश्वर्य.
7. B. reads एवम् for एतत्.
10. E. reads सर्वनिर्माण for स्वनिर्माण.
14. B. om. हि.
17. B. reads असाधनानाम् for असाधकानाम्.
18. E. reads अप्राप्तिः for अप्राप्तेः.
19. B. C. E. read अधिष्ठानम् for अधिष्ठानत्वम्; B. E. read एव after शरीरद्वारेण.

जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेन्न। संकल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्येश्वरस्य परप्रवर्तनरूपः संकल्प इति चेत्। न शरीरापेक्षः संकल्पः। शरीरस्य संकल्पहेतुत्वाभावात्। मन एव हि संकल्पहेतुः। तदभ्युपगतमीश्वरेपि। कार्यत्वेनैव ज्ञानशक्तिवन्मनसोपि प्राप्तत्वात्। मानसः संकल्पः सशरीरस्यैव। शरीरस्यैव समनस्कत्वादिति चेत्। मनसो नित्यत्वेन देहापगमेपि मनसः सद्भावेनानैकान्तिकत्वात्। अतो विचित्रावयवसंनिवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योशरीरः संकल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोनुमानेन सिध्यति। अतः प्रमाणान्तरावसेयत्वाद्ब्रह्मणो नैतद्वाक्यं ब्रह्म प्रतिपादयति।

किं चात्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेनाकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोतीति।

एवं प्राप्ते ब्रूमः। यथोक्तलक्षणं ब्रह्म जगज्जन्मादिवाक्यं बोधयत्येव। कुतः। शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः। यदुक्तं सावयव-

2. B. om. गरल.

3. B. reads अशरीर for अशरीरस्य.

7. B. C. E. read न after चेत्.

8. C. E. read मनः for मनसः.

9. C. reads परवश for परवशः.

10. C. reads निपुणः for चतुरः.

13. B. C. E. read एव after अनुमानेन.

18. E. om. [illegible]

त्वादिना कार्यं सर्वं जगत् । कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति । तदयुक्तम् । महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात् । न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वं येनैकदैवैकः कर्ता स्यात् । पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमाभावात् । न च क्षेत्रज्ञाना विचित्रजगन्निर्माणाशक्त्या कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैक एव कर्ता भवितुमर्हति । क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयितादृष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसंभवात् । तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेश्च । न च युगपत्सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधिरोहतः । अदर्शनात् । क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायामपि विरोधाभावाच्च ।

अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यं पक्षस्याप्रसिद्धविशेषणत्वं साध्यविकलता च दृष्टान्तस्य । सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे सिद्धसाध्यता । सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतमुत क्रमेणोत्पद्यमानसर्ववस्तुगतम् । युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्या-

8. B. reads एककर्ता for एक एव कर्ता; C. reads एकः कर्ता.

11. C. om. च after अनुपपत्तेः.

18. B. E. read साध्ये after कर्तृकत्वमात्रे.

19 E. reads साधनता for साध्यता.

सिद्धिः । क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेनैककर्तृकत्वसाधनाद्विरु-
द्धता । अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधश्च । शा-
स्त्रविरोधश्च । कुम्भकारो जायते रथकारो जायत इत्यादिश्र-
वणात् ।

5 अपि च सर्वेषां कार्याणां शरीरादीनां सत्त्वादिगुणकार्यरू-
पसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्यमाश्रयणीयम् । कार्य-
वैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः । तेषां का-
र्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण । पुरु-
षस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्ति-
10 मत्कर्तुः कर्मसंबन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः । ज्ञान-
शक्तिवैचित्र्यस्य कर्ममूलत्वात् । इच्छायाः कार्यारम्भहेतुत्वेपि
विषयविशेषविशेषितायास्तस्याः सत्त्वादिमूलत्वेन कर्मसंबन्धो-
वर्जनीयः । अतः क्षेत्रज्ञा एव कर्तारो न तद्विलक्षणः कश्चिद-
नुमानात्सिध्यति । भवन्ति च प्रयोगाः । तनुभुवनादि क्षेत्रज्ञक-
15 र्तृकम् । कार्यत्वात् । घटादिवत् । ईश्वरः कर्ता न भवति । प्रयोजन-
शून्यत्वात् । मुक्तवत् । ईश्वरः कर्ता न भवति । अशरीरत्वात् । तद्वदेव ।
न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः । तत्राप्यनादेः सू-

1. C. E. read असिद्धता for असिद्धिः; D. reads असिद्धिता.
2. B. C. E. om. च after अनुमानविरोधः.
3. E. reads च for जायते after रथकारः.
6. B. C. E. read अवश्य for अवश्यम्.
7. B. reads कारणगत for कारणगताः.
9. B. reads इव for एव after आरम्भाय.
11. C. E. read च after वैचित्र्यस्य.
14. B. reads भवन for भुवन.
15. C. E. om. आदि after भुव.
16. B. C. read मुक्तात्मवत् for मुक्तवत्.

क्ष्मशरीरस्य सद्भावात् । विमतिविषयः कालो न लोकशून्यः । कालत्वात् । वर्तमानकालवत् ।

अपि च किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति । न तावदशरीरः । तस्य कर्तृत्वानुपलब्धेः । मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति । मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात् । नापि सशरीरः । विकल्पासहत्वात् । तच्च शरीरं किं नित्यमनित्यं वा । न तावन्नित्यम् । सावयवस्य तस्य नित्यत्वेन जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यम् । तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात् । स्वयमेव हेतुरिति चेन्न । अशरीरस्य तदयोगात् । अन्येन शरीरेण सशरीर इति चेन्न । अनवस्थानात् ।

स किं सव्यापारो निर्व्यापारो वा । अशरीरत्वादेव न सव्यापारः । नापि निर्व्यापारः कार्यं करोति । मुक्तात्मवत् । कार्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वं दृष्टान्तस्य च साध्यहीनता । अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरेश्वरः पुरुषोत्तमः । शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसंकल्पत्वादिमिश्रानवधिकातिश-

1. B. C. om. सत् before भावात्.

2. B. C. E. read इति after कालवत्.

4. B. C. E. read अशरीरस्य for तस्य.

7. E. reads उत before अनित्यम्; B. om. तस्य; E. reads नित्यत्वे for नित्यत्वेन.

15. C. om. च; C. reads अनुमानसाधनम् for अनुमानम.

17. C. E. om. ईश्वर.

यापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवस्य द्रव्यस्य कार्यत्वं चानुपलब्धमशक्यप्रतिपादनमित्युक्तं तदप्यविरुद्धमिति प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् (ब्र. सू. १।४।२३)। न वियदश्रुतेः (ब्र. सू. २।३।१) इत्यत्र प्रतिपादयिष्यते । अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वाद्यतो वा इमानि (तै. ३।१।१) इत्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्॥३॥

यद्यपि प्रमाणान्तरागोचरं ब्रह्म तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं बोधयतीत्याशङ्क्याह ।

## तत्तु समन्वयात् ॥ ४ ॥

प्रसक्ताशङ्कानिवृत्त्यर्थस्तुशब्दः । तच्छास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव । कुतः । समन्वयात् । पुरुषार्थतयान्वयः समन्वयः । परमपुरुषार्थभूतस्य ब्रह्मणोभिधेयतयान्वयात् । एवमेव समन्वितो ह्यौपनिषदः पदसमुदायो यतो वा इमानि भूतानि जायन्ते (तै. ३।१।१) । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोसृजत (छा. ६।२।२–३) । ब्रह्म वा इदमेकमेवाग्र आसीत् (बृ.

---

1. B. reads अखिल for निखिल.
2. C. reads सामर्थ्य for साधर्म्य.
3. C. reads च after द्रव्यस्य.
4. C. om. अपि.
8. B. C. om. आदि after इति.
9. B. om. ब्रह्म after अगोचरम्.
10. B. C. E. read प्रतिपादयति for बोधयति.
13. E. reads परम before पुरुषार्थतया.
14. B. E. read एव after पुरुषार्थभूतस्य.

१।४।१०)। आत्मा वा इदमेक एवाग्र आसीत् (ऐ. १।१)। तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१।१)। एको ह वै नारायण आसीत् (म. १)। सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१)। आनन्दो ब्रह्म (तै. ३।६।१) इत्येवमादिः। न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायाना- 5 मखिलजगदुत्पत्तिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदार- गुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृ- त्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्। स्वविषयावबोधपर्य- वसायित्वात्सर्वप्रमाणानाम्। न च प्रयोजनानुगुणा प्रमाणप्र- वृत्तिः। प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्तिनिवृत्त्यन्व- 10 यविरहिणः प्रयोजनशून्यत्वम्। पुरुषार्थान्वयप्रतीतेः। तथा स्व- रूपपरेष्वपि पुत्रस्ते जातो नायं सर्प इत्यादिषु हर्षभयनिवृत्तिरू- पप्रयोजनवत्त्वं दृष्टम्।

अत्राह। न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति। प्रवृत्ति- निवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात्। यद्यपि प्रत्यक्षादीनि 15 वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति तथापि शास्त्रं प्रयोजनपर्य- वसाय्येव। न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वा- क्यस्य प्रयोग उपलब्धचरः। न च किंचित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा संभवति। तच्च प्रयोजनं प्रवृत्तिनिवृ- त्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्। अर्थार्थी राजकुलं 20 गच्छेत्। मन्दाग्निर्नाम्बु पिबेत्। स्वर्गकामो यजेत। न कलञ्जं भक्षयेदित्यादिषु।

यत्पुनः सिद्धवस्तुपरेष्वपि पुत्रस्ते जातो नायं सर्पो रज्जुरे-

6. B. C. E. read स्थिति after उत्पत्ति.

19. C. reads प्रयोग for प्रयोगः.

षेत्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तं तत्र। किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिरुत तज्ज्ञानादिति विवेचनीयम् । सतोप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत् । तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिध्यतीत्यर्थपरत्वाभा-
5 वेन प्रयोजनपर्यवसायिनोपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम् । तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासंभवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ।

अत्र कश्चिदाह । वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि
10 प्रमाणभावमनुभवन्ति । कथम् । निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्मानाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति । कोसौ द्रष्टृदृश्यरूपप्रपञ्चविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः। न दृष्टेर्द्रष्टारं पश्येः...न मतेर्मन्तारं मन्वीथाः ( बृ. ३।४।२ )
15 इत्येवमादिः । द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः । स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण साध्यत्वमविरुद्धमिति ।

तदयुक्तम् । नियोगवाक्यार्थवादिना हि नियोगो नियोज्यविशेषणं विषयः करणमितिकर्तव्यता प्रयोक्ता च वक्तव्याः ।
20 तत्र हि नियोज्यविशेषणमनुपादेयम् । तच्च निमित्तं फलमिति द्विधा । अत्र किं नियोज्यविशेषणं तच्च किं निमित्तं फलं वेति

1. B. C. om. आदि after भय.
10. E. reads प्रमाणत्वम् for प्रमाणभावम्; C. om. अद्वितीयम्.
16. E. reads कार्यत्वम् for साध्यत्वम्.
19. C. reads वक्तव्यः for वक्तव्याः.
20. C. om हि after तत्र.
21. E. om. वा after फलम्.

विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभव इति चेत् । तर्हि न तन्निमित्तम् । जीवनादिवदस्यासिद्धत्वात् । निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवन्नित्यं तद्विषयानुष्ठानप्रसङ्गः । नापि फलम् । नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात् । कश्चात्र नियोगविषयः । ब्रह्मैवेति 5 चेन्न । तस्य नित्यत्वेनाभव्यरूपत्वात् । अभावार्थत्वाच्च । निष्प्रपञ्चं ब्रह्म साध्यमिति चेत् । साध्यत्वेपि फलत्वमेव । अभावार्थत्वान्न विधिविषयत्वम् । साध्यत्वं च कस्य । किं ब्रह्मण उत प्रपञ्चनिवृत्तेः । न तावद्ब्रह्मणः । सिद्धत्वादनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः । न तर्हि ब्रह्मणः साध्यत्वम् । प्रपञ्चनिवृत्तिरेव 10 विधिविषय इति चेन्न । तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः । स च फलम् । अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम् ।

अपि च किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः सत्यो वा । 15 मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किंचित्प्रयोजनम् । नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत् । तत्त्ववाक्यादेव जातमिति न नियोगेन प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात्सपरिकरस्य नियोगस्यासिद्धिश्च । 20

1. B. C. E. read चेन्नियोज्यविशेषणम् for इति चेत्.
2. B. C. E. read तस्य for अस्य.
6. B. reads अभाव्य for अभव्य.
7. B. om. अपि.
8. B. reads नियोग before साध्यत्वम्.
20. C. reads सपरिकर for सपरिकरस्य. B. reads असिद्धेः for असिद्धिः.

प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेवोत तद्व्यतिरिक्तः । यदि ब्रह्मस्वरूपमेव निवर्तकं नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न संभवति । नित्यत्वेन च नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते । अथ ब्रह्मस्वरूपव्यतिरिक्तस्तस्य कृ-
5 त्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च न दृष्ट इत्याश्रयाभावादसिद्धिः । प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वान्न नियोगनिष्पाद्यं मोक्षाख्यं फलम् ।

किं च प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्तव्यताभावादनुपकृ-
10 तस्य च करणत्वायोगान्न करणत्वम् । कथमितिकर्तव्यताभाव इति चेत् । इत्थम् । अस्येतिकर्तव्यता भावरूपाभावरूपा वा । भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना । उभयविधा च न संभवति । न हि मुद्गराभिघातादिवत्कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्था न संभ-
15 वति । नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः संभवति । अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः । ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत् । तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम् । अभावरूपत्वं चाभाव-

1. B. C. E. read प्रपञ्चस्य निवर्त्यत्वे before प्रपञ्चस्य.
2. B. C. read निवर्तक for निवर्तकम्.
5. C. om. निवृत्ति; B. C. D. E. read नष्टः for न दृष्टः
7. C. reads नियोगेन for नियोग.
13. B. reads आघात for अभिघात.
14. B. C. read कृत्स्नस्य प्रपञ्चस्य for कृत्स्नप्रपञ्च.
18. B. reads निवृत्तिरूप for निवृत्तिरूपः.
19. C. reads अभावात् for अभावत्वात्.

त्वादेव न करणशरीरं निष्पादयति । नाप्यनुग्रहम् । अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न संभवति ।

अन्योप्याह । यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यं तथापि ब्रह्मस्वरूपं सिध्यत्येव । कुतः । ध्यानविधिसामर्थ्यात् । एवमेव हि समामनन्ति । आत्मा वा 5 अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ.२।४।५) । य आत्मापहतपाप्मा....सोन्वेष्टव्यः स विजिज्ञासितव्यः ( छा. ८।७।१ )। आत्मेत्येवोपासीत ( बृ. १।४।७ ) ।आत्मानमेव लोकमुपासीत ( बृ. १।४।१५ ) इति । अत्र ध्यानविषयो हि नियोगः स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति । स 10 च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा । स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् ( छा. ६।२।१ ) इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेपि तात्पर्यमस्त्येव। अत 15 एकमेवाद्वितीयम् ( छा. ६।२।१ ) । तत्सत्यं स आत्मा ( छा. ६। ८।७ ) । नेह नानास्ति किंचन ( बृ. ४।४।१९ ) इत्येवमादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते । प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधे सत्यनाद्यविद्यामूलत्वेनापि भेद- 20 प्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते । तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभे-

1. B. C. read अनुग्राहकम् for अनुग्रहम्.
10. E. reads स्वविषयभूत for स्वविषयभूतं.
16. C. reads तत्त्वमसि श्वेतकेतो after आत्मा.
17. B. C. E. om. एवम्.
18. B. reads अतिरिक्तम् for व्यतिरिक्तम्.

दाद्वितीयज्ञानैकरसब्रह्मभावरूपो मोक्षः प्राप्यते । न च वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः । अनुपलब्धेः । विविधभेददर्शनानुवृत्तेश्च । तथा सति श्रवणादिविधानमनर्थकं स्यात् ।

अथोच्येत । रज्जुरेषा न सर्प इत्युपदेशेन सर्पभयनिवृत्ति-
5 दर्शनाद्रज्जुसर्पवद्बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता न नियोगेन । नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्स्वर्गादिवत् । मोक्षस्य नित्यत्वं हि सर्ववादिसंप्रतिपन्नम् । किं च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विध-
10 शरीरसंबन्धरूपसंसारफलत्वमवर्जनीयम् । तस्मान्न धर्मसाध्यो मोक्षः । तथा च श्रुतिः न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ( छा. ८।१२।१ ) इति।अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणान्न धर्मसाध्यमशरीरत्वमिति विज्ञायते । न च नियो-
15 गविशेषसाध्यफलविशेषवद्ध्याननियोगसाध्यमशरीरत्वम् । अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथाहुः श्रुतयः

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
( का. २।२।२२ )

20 अप्राणो ह्यमनाः शुभ्रः ( मु. २।१।२ ) । असङ्गो ह्ययं पुरुषः ( बृ. ४।३।१५ ) इत्याद्याः । अतोशरीरत्वरूपो मोक्षो नित्य इति न धर्माधर्मसाध्यः । तथा च श्रुतिः

---

1. C. reads ब्रह्मात्मभावरूपः for ब्रह्मभावरूप; B. C. E. read वाक्यात् before वाक्यार्थ.
3. E. reads च after तथा.
5. B. om. च; E. reads अपि for च.
14. B. C. read ज्ञायते for विज्ञायते.
21. C. reads अपि after मोक्षः.
22. C. E. om. अधर्म.

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद ॥
( का. १।२।१४ ) इति ।

अपि चोत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न संभवति । न तावदुत्पाद्यः । मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः । आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्यः । दध्यादिवदनित्यत्वप्रसङ्गात् । नापि संस्कार्यः । संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साध्यते । न तावद्दोषापनयनेन । नित्यशुद्धत्वाद्ब्रह्मणः । नाप्यतिशयाधानेन । अनाधेयातिशयस्वरूपत्वात् । नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न निघर्षणेनादर्शादिवदपि संस्कार्यत्वम् । न च देहस्थया स्नानादिक्रिययात्मा संस्क्रियते । किं त्वविद्यागृहीतस्तत्संगतोहंकर्ता । तत्फलानुभवोपि तस्यैव । न चाहंकर्तैवात्मा । तत्साक्षित्वात् । तथा च मन्त्रवर्णः ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति ।
( मु. ३।१।१ )

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । ( का. १।३।४ )
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
( श्वे. ६।११ )

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी ( ई. ८ ) इति चाविद्यागृहीतादहंकर्तुरात्मनः

1. B. reads तत्र after प्रसङ्गात्.
2. D. E. read साध्यते for साध्यते.
23. B. C. E. om. कविर्मनीषी; E. reads आत्म for आत्मनः.

स्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते । तस्मा-
दात्मस्वरूपत्वेन न साध्यो मोक्षः । यद्येवं किं वाक्यार्थज्ञानेन
क्रियत इति चेत् । मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा
च श्रुतयस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तार-
5 यसि ( प्र. ६।८ ) । श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमा-
त्मविदिति । सोऽहं भगवः शोचामि । तं मां भगवाञ्छोकस्य पारं
तारयतु ( छा. ७।१।३ ) । तस्मै मृदितकषायाय तमसः पारं
दर्शयति भगवान्सनत्कुमारः ( छा. ७।२६।२ ) इत्याद्याः ।
तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते ।
10 तन्निवृत्तिस्तु साध्यापि प्रध्वंसाभावरूपा न विनश्यति । ब्रह्म वेद
ब्रह्मैव भवति (मु. ३।२।९) । तमेव विदित्वाति मृत्युमेति (श्वे. ३।८)
इत्यादिवचनं मोक्षस्य वेदनानन्तरभाविताां प्रतिपादयन्नियोगव्य-
वधानतां प्रतिरुणद्धि । न च विदिक्रियाकर्मत्वेन ध्यानक्रियाकर्मत्वेन
वा कार्यानुप्रवेशः । उभयकर्मत्वप्रतिषेधात् ।

15 अन्यदेव तद्विदितादथो अविदितादधि । ( के. १।१।३ )
येनेदं सर्वं विजानाति तत्केन विजानीयात् ( बृ. २।४।१४ ) इति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । ( के. १।१।४ )
इति च । न चैतावता शास्त्रस्य निर्विषयत्वम् । अविद्यापरि-
कल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हीदंतया ब्रह्म विषयी-
20 करोति शास्त्रम् । अपि त्वविषयं प्रत्यगात्मस्वरूपं प्रतिपादयद-
विद्याकल्पितज्ञातृज्ञेयज्ञानविभागं निवर्तयति । तथा च शास्त्रं न
दृष्टेर्द्रष्टारं पश्येः....न मतेः ( बृ. ३।४।२ ) इत्येवमादि ।

10. C. om. [illegible] before निवृत्तिः.
13. B. C. E. read व्यवधानम् for व्यवधानताम्.
18. B. C. om [illegible]
21. B. E. [illegible] ; C. [illegible] after निव[illegible]
22. E reads [illegible]स्तारम् after मतेः.

न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम् । स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम् । बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । 5 न हि मिथ्यारूपसर्पभयनिवृत्ती रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसंबन्धः पारमार्थिकस्तर्हि तद्विनाशापेक्षा । स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः । यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते । ज्ञानकार्यादर्शनात् । तस्माच्छरीरस्थितिर्भवतु वा मा वा वाक्यार्थ- 10 ज्ञानसमनन्तरं मुक्त एवासौ । अतो न नियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः । अपि तु सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१।१ ) । तत्त्वमसि ( छा. ६।८।७ ) । अयमात्मा ब्रह्म ( बृ. २।५।१९ ) इति तत्परेणैव पदसमुदायेन सिध्यतीति । 15

तदयुक्तम् । वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यस्तथापि बन्धस्यापरोक्षत्वान्न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते । रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु 20 भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन । तथा हि । रज्जुसर्पदर्शनभयात्परावृत्तः पुरुषो नायं सर्पो र-

---

7. B. reads तत् हि for तर्हि.

10. E. om. वा after भवतु.

11. B. C. E read ध्यान before नियोग.

19. B. C. read वर्तमानायाम् for विद्यमानायाम्.

जुरेपेत्याप्तोपदेशाद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण
दृष्ट्वा भयान्निवर्तते । न च शब्द एव प्रत्यक्षज्ञानं जनयतीति
वक्तुं युक्तम् । तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येवा-
परोक्षज्ञानसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदि-
तकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरु-
षस्य वाक्यमेवापरोक्षज्ञानं जनयति । निवृत्तप्रतिबन्धे तत्परेपि
पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्र-
मादर्शनेन तदयोगात् ।

न च ध्यानस्य वाक्यार्थज्ञानोपायता । इतरेतराश्रयत्वात् ।
वाक्यार्थज्ञाने जाते तद्विषयध्यानं ध्याने निर्वृत्ते वाक्यार्थज्ञान-
मिति । न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम् । तथा सति
ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यज्ञा-
नौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसंततिरूपस्य ध्यानस्य वा-
क्यार्थज्ञानपूर्वकत्वमवर्जनीयम् । ध्येयब्रह्मविषयज्ञानस्य हेत्वन्त-
रासंभवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं निवर्त-
कज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं
वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयं
भिन्नविषयं वा । एकविषयत्वे तदेवेतरेतराश्रयत्वम् । भिन्नविष-

1. B. C. read [illegible] for उपदेशात्; E. reads तत् before वस्तु.
3. B. reads युक्तं वक्तुम् for वक्तुं युक्तम्; C. reads साधनेषु for सामग्रीषु; C. reads हि after इन्द्रियाण्येव.
4. E. om. ज्ञान before साधनानि.
6. B. reads निवृत्ते for निवृत्त.
7. B. om. आदि.
12. [illegible] C. read अन्यस्य for अन्यध्या [illegible]; E. om. ज्ञान after अन्य.
15. C. reads निवर्तकम् for निवर्तक.
16. B. E. read अन्तर after तत्वमस्यादिवाक्य.

त्वे ध्यानेन तदौन्मुख्यापादनासंभवः । किं च ध्यानस्य ध्येय-भावाद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव ।

यतो वाक्यादपरोक्षज्ञानासंभवाद्वाक्यार्थज्ञानेनाविद्या न 5 निवर्तते अत एव जीवन्मुक्तिरपि दूरोत्सारिता । का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेन्माता मे वन्ध्येतिवदसंगतार्थवचनम् । यतः सशरीरत्वं बन्धोऽशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययस्तस्य सश- 10 रीरत्वनिवृत्तिरिति । न । मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्कथं सशरीरस्य मुक्तिः । अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त इति विशेषः । अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते स जीवन्मुक्त इति चेन्न । ब्रह्मव्यतिरिक्तसकलवस्तुवि- 15 षयकत्वाद्बाधकज्ञानस्य । कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम् । द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वाद्द्विचन्द्रप्र-

---

5. C. om. न.

8. C. reads असंगतार्थं वचः for असंगतार्थवचनम्; E. reads असंगतार्थम् for असंगतार्थ; E. om. एव after अशरीरत्वम्.

11. B. reads चेत् after निवृत्तिरिति.

12. C. reads अतोजीवतः for अजीवतः.

13. B. C. read मुक्तिः for मुक्तः.

15. C. E. om. वस्तु; B. C. read विषय for विषयक.

18. C. E. read ज्ञान after द्विचन्द्र.

19. B. C. E. om. विषयी; B. reads एकत्वम् for एकत्व.

तिभासानुवृत्तिर्युक्ता । किं च तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्ये ( छा. ६।१४।२ ) इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम् ( आ. ध. सू. २।९।२१।१३-१७ ) इति । अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति ।

10 तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वेन मोक्षस्यानित्यत्वप्रसक्तिः । प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किं च न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते । किं तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन । नियोगस्तु तदपरोक्षं ज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्प-

15 त्तिहेतुत्वमिति चेत् । कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् । मनोनैर्मल्यद्वारेणेति चेत् । ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते । तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् । ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः । केनावगम्यत इति

20 चेत् । भवतो वा कर्मभिर्मनो निर्मलं भवति निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं नि-

1. B. reads विद्वान् for वेदान्.

11. E. reads साध्यत्वं for साध्यत्वेन.

14. B. C. read अपरोक्ष for अपरोक्षम्.

17. B. reads उत्पद्यते for उत्पाद्यते; C. om. तु after तव.

18. C. reads ज्ञान for ध्यान.

वर्तकज्ञानमुत्पादयतीति केनावगम्यते । विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ( बृ. ४।४।२२ )। श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. २।४।५ )। ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) इत्यादिभिः शास्त्रैरिति चेत् । ममापि श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. २।४।५ )। ब्रह्मविदाप्नोति परम् 5 ( तै. २।१।१ )। न चक्षुषा गृह्यते नापि वाचा ( मु. ३।१।८ )। मनसा तु विशुद्धेन। हृदा मनीषा मनसाभिक्लृप्तः ( का. ६।९ ) इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति । निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् । नेदं यदिदमुपासते ( के. ४ ) इत्युपास्यत्वं प्रतिषिद्धमिति चेत् । 10 नैवम् । नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते । अपि तु ब्रह्मणि जगद्वैलक्षण्यं प्रतिपाद्यते । यदिदं जगदुपासते प्राणिनो नेदं ब्रह्म तदेव ब्रह्म त्वं विद्धि यद्वाचानभ्युदितं येन वागभ्युद्यत इति वाक्यार्थः । अन्यथा तदेव ब्रह्म त्वं विद्धि ( के. ४ ) इति विरुध्यते । ध्यानविधिवैयर्थ्यं चात्मनः स्यात् । अतो ब्रह्मसाक्षा- 15 त्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ।

यदपि कैश्चिदुक्तं भेदाभेदयोर्विरोधो न विद्यत इति । तदयुक्तम् । न हि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन्वस्तुनि संगच्छेते । 20

अथोच्येत । सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वं च भिन्नाभिन्नं प्रतीयते । कारणात्मना जात्यात्मना चाभिन्नं कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः

11. B. C. E. read नवम् for नैवम्; B. C. read ब्रह्मणः for ब्रह्मणि.
15. E. reads विरुद्ध्येत for विरुध्यते.
18. C. reads न विरोधः for विरोधो न.

सहानवस्थाननियमलक्षणो भिन्नाधारत्वरूपश्च । कार्यकारणयो-
र्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते । प्रत्युतैकमेव वस्तु
द्विरूपं प्रतीयते । यथा मृदयं घटः पण्डो गौरिति । न चैक-
रूपं किंचिदपि वस्तु लौकिकैर्दृष्टचरम् । न च तृणादेर्ज्वलना-
5 दिवद्भेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः । मृत्सुवर्ण-
गवाश्वाद्यात्मनावस्थितस्यैव घटमुकुटपण्डमुण्डगवाद्यात्मना चाव-
स्थानात् । न चाभिन्नस्य भिन्नस्य च वस्तुनोभेदो भेदश्चैक इ-
त्याकार इतीश्वराज्ञा । प्रतीतत्वादैकरूप्यं चेत् । प्रतीतत्वादेव
भिन्नाभिन्नत्वमिति द्वैरूप्यमभ्युपगम्यताम् । न हि विस्फारि-
10 ताक्षः पुरुषो घटशरावपण्डमुण्डादिषु वस्तुषूपलभ्यमानेष्वियं
मृदयं च घट इदं गोत्वमियं च व्यक्तिरिति विवेक्तुं शक्नोति ।
अपि तु मृदयं घटः पण्डो गौरित्येव प्रत्येति । अनुवृत्तिबुद्धि-
बोध्यं कारणमाकृतिश्च व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति
विविनक्तीति चेन्न । नैवम् । विविक्ताकारानुपलब्धेः । न हि सू-
15 क्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदं च व्यावर्तमानमिति
पुरोवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा संप्रतिपन्नेकस्मिं
कार्यविशेषे चैकत्वबुद्धिरुपजायते । तथैव सकारणे ससामान्ये

C. om. नियम.

3. B. C. E. read मुण्डो गौः after गौः.

4. B. om. अपि.

6. E. om. गव after मुण्ड.

9. E. reads अपि after द्वैरूप्यम्; C. om. वि before स्फारिताक्षः.

11. B. om. च after अयम्; E. reads च after इदम्.

12. E. reads च after इत्येव.

14. E. reads सु before सूक्ष्मम्.

17. E. reads कार्य for कार्य; B. reads कारणे सामान्ये for सकारणे ससामान्ये.

चैकत्वबुद्धिरविशिष्टोपजायते । एवमेव देशतः कालतश्चाकारत-
श्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते ।
अतो द्व्यात्मकमेव वस्तु प्रतीयत इति कार्यकारणयोर्जातिव्यक्त्योः-
श्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् ।

अथोच्येत मृदयं घटः पण्डो गौरितिवद्देवोहं मनुष्योह- 5
मिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं
स्यात् । अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवह-
ज्वालायत इति ।

तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथा-
त्म्यावबोधविलसितम् । तथा हि । अबाधित एव प्रत्ययः सर्व- 10
त्रार्थं व्यवस्थापयति । देवाद्यात्माभिमानस्त्वात्मयाथात्म्यगोचरैः
सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं सा-
धयति । पण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केन-
चित्क्वचिद्बाधो दृश्यते । तस्मान्नातिप्रसङ्गः । अत एव जी-
वोपि ब्रह्मणो नात्यन्तभिन्नः । अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । 15
तत्राभेद एव स्वाभाविको भेदस्त्वौपाधिकः । कथमिदमवगम्यत
इति चेत्तत्त्वमसि (छा. ६।८।७) । नान्योतोस्ति द्रष्टा (बृ.
३।७।२३) । अयमात्मा ब्रह्म (बृ. २।५।१९) इत्यादिभिः श्रु-
तिभिः । ब्रह्मेमे द्यावापृथिवी इति प्रकृत्य

ब्रह्म दाशा ब्रह्म दासा ब्रह्मेम कितवा उत । 20
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान् ॥

इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्तेभेदश्रवणाच्च ।

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् । (श्वे. ६।१३)

1. B. reads अविशेषा for अविशिष्टा.
2. B. reads प्रत्यभिज्ञायते for प्रत्यभिज्ञा जायते.
12. C. om. बुद्धि.
16. C. om. इदम्.

ज्ञाज्ञौ द्वावजावीशानीशौ ( श्वे. १।९ ) ।

क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोपि दृष्टः ।

( श्वे. ५।१२ )

प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ।

5 ( श्वे. ६।१६ )

स कारणं करणाधिपाधिपः ( श्वे. ६।९ ) ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योभिचाकशीति ।

( श्वे. ४।६ )

य आत्मनि तिष्ठन ( बृ. ३।७।२२ ) । प्राज्ञेनात्मना संपरिष्वक्तो न
10 बाह्यं किंचन वेद नान्तरम् ( बृ. ४।३।२१ ) । प्राज्ञेनात्मनान्वारूढ उत्सृजन्याति ( बृ. ४।३।३५ ) । तमेव विदित्वाति मृत्युमेति (श्वे. ३।८) इत्यादिभिर्भेदश्रवणाच्च जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ । तत्र ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशाद्यत्र त्वस्य सर्व-
15 मात्मैवाभूत्...तत्केन कं पश्येत ( बृ. २।४।१४ ) इति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते ।

ननु च सोश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता (तै. २।१।१ ) इति सहश्रुत्या तदानीमपि भेदः प्रतीयते । वक्ष्यति च जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च (ब्र. सू. ४।४।१७)।
20 भोगमात्रसाम्यलिङ्गाच्च ( ब्र. सू. ४।४।२१ ) इति ।

नैतदेवम् । नान्योतोस्ति द्रष्टा (बृ. ३।७।२३) इत्येवमादिश्रुतिशतैरात्मभेदप्रतिषेधात् । सोश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता (तै. २।१।१) इति सर्वैः कामैः सह ब्रह्माश्नुते सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति । अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्र-

13. B. om. तत्र, C. reads एवम् after इति.
23. C. reads सः after अश्नुते.
24. B. C. read च after अप्राधान्यम्.

ह्मण: प्रसज्येत। जगद्व्यापारवर्जम् (ब्र. सू. ४।४।१७) इत्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते। अन्यथा संपद्याविर्भाव: स्वेन शब्दात् (ब्र. सू. ४।४।१) इत्यादिभिर्विरोधात्। तस्मादभेद एव स्वाभाविक: । भेदस्तु जीवानां परस्माद्ब्रह्मण: परस्परं च बुद्धीन्द्रियदेहोपाधिकृत:। यद्यपि ब्रह्म निरवयवं सर्वगतं च तथाप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेद: संभवत्येव। न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगो बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम् । उपाधेस्तत्संयोगस्य च कर्मकृतत्वात्तत्प्रवाहस्य चानादित्वात् । एतदुक्तं भवति । पूर्वकर्मसंबद्धाज्जीवात्स्वसंबद्ध एवोपाधिरुत्पद्यते । तद्युक्तात्कर्म । एवं बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वाददोष इति। अतो जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविक:। भेदस्त्वौपाधिक:। उपाधीनां पुन: परस्परं ब्रह्मणा चाभेदवद्भेदोपि स्वाभाविक: । उपाधीनामुपाध्यन्तराभावात्। तदभ्युपगमेनवस्थानाच्च । अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्त इति।

अत्रोच्यते । अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेद: प्रतीयते । भेदावलम्बिभि: कर्मशास्त्रै: प्रत्यक्षादिभिश्च भेद: प्रतीयते। भेदाभेदयो: परस्परविरोधादनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र यदुक्तं भेदाभेदयोरुभयोरपि प्रतीति-

2. B. reads वक्ष्यति for वक्ष्यते.
3. B. reads विरोध: for विरोधात्.
11. D. om. उपाधि.
13. C. om. पुन:.
14. C. reads अभेद: for अभेदवद्भेद:.
15. C. reads अनुगुणम् for अनुरूपम्.

सद्भत्वान्न विरोध इति । तदयुक्तम् । कस्माच्चित्कस्यचिद्विल-
क्षणत्वं हि तस्मात्तस्य भेदः । तद्विपरीतत्वं चाभेदः । तयोस्त-
थाभावातथाभावरूपयोरेकत्र संभवमनुन्मत्तः को ब्रवीति ।
कारणात्मना जात्यात्मना चाभेदः कार्यात्मना व्यक्त्यात्मना च
5 भेद इत्याकारभेदादविरोध इति चेन्न । विकल्पासहत्वात् ।
आकारभेदादविरोध इति वदतः किमेकस्मिन्नाकारे भेद आ-
कारान्तरे चाभेद इत्यभिप्राय उताकारद्वययोगिवस्तुगतावु-
भावपीति । पूर्वस्मिन्कल्पे व्यक्तिगतो भेदो जातिगतश्चाभेद
इति नैकस्य द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति
10 चेत्तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात् । एकस्मिंश्च वि-
लक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीये तु कल्पेन्यो-
न्यविलक्षणमाकारद्वयमप्रतिपन्नं च तदाश्रयभूतं वस्त्विति
त्रितयाभ्युपगमेपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यान्न
पुनरभेदः । आकारद्वयनिरूप्यमाणाविरोधं तदाश्रयभूते व-
15 स्तुनि भिन्नाभिन्नत्वमिति चेत् । स्वस्माद्विलक्षणं स्वाश्रयमाकार-
द्वयं स्वस्मिन्विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत् । अ-
विलक्षणं तु कथंतराम् । आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युप-
गमे निर्वाहकान्तरापेक्षयानवस्थानात् । न च संप्रतिपन्नैक्य-
व्यक्तिप्रतीतिवत्ससामान्येपि वस्तुन्येकरूपा प्रतीतिरुपजायते ।
20 यत इदमित्थमिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः ।
तत्र प्रकारांशो जातिः प्रकार्यंशो व्यक्तिरिति नैकाकारताप्र-

6. B. C. read अविरोधम् for अविरोध इति.
12. B. reads विलक्षण for विलक्षणम्; C. reads प्रतिपन्नम् for अप्रतिपन्नम्.
13. B. D. read तृतीय for त्रितय; C. om. एव.
18. B. C. read *अनवस्था स्यात्* for *अनवस्थानात्*.
19 B. reads सामान्ये for ससामान्ये; B. reads एकरूप for एकरूपा.
21. C. reads एकाकारा for एकाकारता.

तीतिः । अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न संभवति । तस्माद्भेदस्यानन्यथासिद्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः ।

नन्वेवं ब्रह्मण एवाज्ञत्वात्तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः । ततश्च यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) । 5 एष आत्मापहतपाप्मा ( छा. ८।१।५ ) इत्यादीनि शास्त्राणि बाध्येरन् ।

नैवम् । अज्ञत्वादिदोषाणामपरमार्थत्वात् । भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गस्तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः । न 10 हि ब्रह्मणि निरवयवेच्छेद्ये संबध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा संबध्यन्ते । अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति ।

यदि मन्वीतोपाध्युपहितं ब्रह्म जीवः । स चाणुपरिमाणः । अणुत्वं चावच्छेदकस्य मनसोणुत्वात् । स चावच्छेद- 15 कोनादिः । एवमुपाध्युपहिते देशे संबध्यमाना दोषा अनुपहिते परे ब्रह्मणि न संबध्यन्त इति ।

इदायं प्रष्टव्यः । १ किमुपाधिना छिन्नो ब्रह्मखण्डोणुरूपो

2. E. reads अस्य for अभेदस्य.

7. B reads अज्ञत्वम् for अज्ञत्वात्; B. om. च; C. om. च जन्म; E. om. जरा.

8. C. reads अज्ञान for अज्ञत्व.

10. B. reads परमार्थतया for परमार्थतः.

15. C. E. read अवच्छेदः for अवच्छेदकः.

16. B. reads अंशे for देशे.

18. E. om. इद; C. reads भिन्नः for छिन्नः; E. reads अवच्छिन्नः for छिन्नः.

जीवः २ उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः ३. उतोपाधिसंयुक्तं ब्रह्मस्वरूपम् ४ अथोपाधिसंयुक्तं चेतनान्तरम् ५ अथोपाधिरेवेति। अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्प्यते। आदिमत्त्वं च जीवस्य स्यात्। एकस्य सतो द्वैधीक-
5 रणं हि च्छेदनम्। द्वितीये कल्पे ब्रह्मण एव प्रदेशविशेष उपाधिसंबन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः। उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशविशेषभेदात्क्षणे क्षणे बन्धमोक्षौ स्याताम्। आकर्षणे चाच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। निरंशस्य
10 व्यापिन आकर्षणं न संभवतीति चेत्तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसंधानं स्यात्। प्रदेशभेदादप्रतिसंधाने चैकस्यापि स्वोपाधौ गच्छति सति प्रतिसंधानं न स्यात्। तृतीये तु कल्पे ब्रह्मस्वरूपस्यै-
15 वोपाधिसंबन्धेन जीवत्वापातात्तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे ब्रह्मणोन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात। चरमे चार्वाकपक्ष एव परिगृहीतः स्यात्। तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् ६ अतः प्र-

---

1. C. reads अभिन्नः for अच्छिन्नः.
2. E. reads उत for अथ.
4. E. reads कल्पते for कल्प्यते.
5. C. reads भेदनम् for छेदनम्; C. reads तु after द्वितीये.
8. B. C. om. विशेष; B. C. read च after बन्धमोक्षौ.
9. C. reads अभिन्नत्वात् for अच्छिन्नत्वात्.
11. B. reads सर्वेषु पूर्वोपाधि° for सर्वोपाधि°.
12. B. reads अभेद° for एकत्व°.
16. B. E. read तुर्ये for तुरीये.

वृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति।

तदप्ययुक्तम्। ध्यानविधिशेषत्वेपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात्। एतदुक्तं भवति। ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्त उत स्वतन्त्राण्येव। एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न संभवति। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनवबोधकत्वमेव। न च वाच्यं ध्यानं नाम स्मृतिसंततिरूपम्। तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षायामिदं सर्वं यदयमात्मा (बृ. २।४।६)। अयमात्मा ब्रह्म सर्वानुभूः (बृ. २।५।१९)। सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति। ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेपि मनो ब्रह्मेत्युपासीत (छा. ३।१८।१) इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेर्ध्येयसत्यत्वानपेक्षणात्। अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वाद्ध्यानविधिशेषत्वेपि ध्येयविषयस्वरूपसमर्पणमात्रपर्यवसानात्स्वातन्त्र्येणापि बालातुराद्युपच्छन्दन-

1. B. C. om. रूप.
2. B. reads विशेषतया for शेषतया.
3. B. reads विशेषत्व for शेषत्व.
6. E. om. विधि.
8. C. om. रूप.
11. B. reads सर्वानुभूतिः for सर्वानुभूः.
14. C. reads नाम ब्रह्म for मनो ब्रह्मेत्युपासीत.
17. B. reads विशेषत्वे for शेषत्वे; B. reads विशेष for विषयस्वरूप; E. reads विशेष for विषय.
18. C. E. read स्वातन्त्र्ये for स्वातन्त्र्येण.

वाक्यवज्ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावाद्ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति प्राप्तम् ।

तत्र प्रतिपाद्यते तत्तु समन्वयादिति । समन्वयः सम्यगन्वयः पुरुषार्थतयान्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोभिधेयतयान्वयात्तच्छास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः । निरस्तनिखिलदोषगन्धनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन्वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति । अनादिकर्मरूपाविद्यावेष्टननिरोहितपरावरतत्त्वयाथात्म्यस्वरूपाववोधानां देवासुरगन्धर्वसिद्धविद्याधरकिंनरकिंपुरुषयक्षरक्षःपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसंभवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि । प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि । एवंभूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायां ब्रह्मविदाप्नोति परम् (तै. २।१।१)। आत्मानमेव लोकमुपासीत (बृ. १।४।१५) इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते । यथा स्व-

1. C. om. एव; C. reads अपरिनिष्पन्न for परिनिष्पन्न.
7. C. reads अनवधिकातिशय for गन्धनिरतिशय; E. om. गन्ध.
11. C. reads स्वरूप for रूप.
14. B. reads व्यवस्थितधारक for व्यवस्थितधारकपोषक.
16. C. reads जननम् for जनकम्; E. reads पर for परम्.
18. C. reads बोधनात् for बोधम्.

वेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तः सन्पश्चात्तदुपादाने च प्रयतते । यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद्भ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयं चाज्ञातपितृकः केनचिद्द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रार्थः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्पिता ते सर्वलोकाधिपतिर्गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यधैर्यपराक्रमादिगुणगणसंपन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठतीति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्तदानीमेवाहं तावज्जीवतः पुत्रोऽस्मत्पिता च सर्वसंपत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति । राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वावाप्तसमस्तपुरुषार्थो भवति । पश्चात्तावुभौ संगच्छेते चेति ।

यत्पुनः परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानाद्बालातुराद्युपच्छन्दनवाक्यवन्नार्थसद्भावे प्रामाण्यमिति तदसत् । अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति । बालातुरादीनामप्यर्थसद्भावभ्रान्त्यैव हर्षाद्युत्पत्तिः । तेषामेव तस्मिन्नपि ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत ततस्तदानीमेव हर्षोद्भयो निवर्तेरन् । औपनिषदेष्वपि वाक्येषु

4. D. reads ज्ञातः for विज्ञातः.

6. C. E. om. धैर्य.

7. C. om. गण.

12. E. reads पश्चात्तदुपादाने च प्रयतते । after भवति.

14. B. reads सद्भाव for सद्भावे.

16. B. C. om. एव after भ्रान्त्या.

17. B. reads एव for अपि after तस्मिन्.

ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यव-
सानं न स्यात्। अतो यतो वा इमानि (तै. ३।१।१) इत्या-
दिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सर्वज्ञस-
त्यसंकल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मा-
5 स्तीति बोधयतीति सिद्धम् ॥ ४ ॥ (४)

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

यतो वा इमानि (तै. ३।१।१) इत्यादिजगत्कारणवादि-
वाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणै-
कतानं ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीं जगत्कारणवादिवा-
10 क्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते ईक्षतेर्नाश-
ब्दमित्यादिना।

इदमाम्नायते छान्दोग्ये। सदेव सोम्येदमग्र आसीदेकमेवा-
द्वितीयम् (छा. ६।२।१)। तदैक्षत बहु स्यां प्रजायेयेति। तत्ते-
जोऽसृजत (छा. ६।२।३) इत्यादि। तत्र संदिह्यते। किं स-
15 च्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानमुतोक्तल-
क्षणं ब्रह्मेति।

किं प्राप्तम्। प्रधानमिति। कुतः। सदेव सोम्येदमग्र आ-
सीदेकमेवाद्वितीयम् (छा. ६।२।१) इतीदंशब्दवाच्यस्य चेतन-
भोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनामरूपविकाराव-
20 स्थस्य वस्तुनः कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्त-

3. D. reads अखिल for निखिल after वाक्यम्; E. reads सार्वज्ञ्य for सर्वज्ञ.

4. B. reads अनेक for अनन्त.

8. B. D. read सत्यसंकल्पम् after सर्वज्ञम्; B. om. गुण.

16. C. reads एव after उक्तलक्षणम्.

19. B. E. read नाना for नाम.

20. B. reads द्रव्य for द्रव्यस्य.

दापत्तिरेव हि कार्यता। अतो यद्द्रव्यं यत्स्वभावं च कार्यावस्थं तत्स्वभावं तदेव द्रव्यं कारणावस्थं सत्त्वरजस्तमोमयं च कार्यमिति गुणसाम्यावस्थं प्रधानमेव कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति सदेव सोम्येदमग्र आसीदेकमेव (छा. ६।२।१) इत्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा यथा सोम्यैकेन मृत्पिण्डेन (छा. ६।१।१) इत्यादिमृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यं चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेवेति। 10

एवं प्राप्तेऽभिधीयते। ईक्षतेर्नाशब्दमिति। यस्मिञ्छब्द एव प्रमाणं न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः। न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम्। कुतः। ईक्षतेः। सच्छब्दवाच्यसंबन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात्। तदैक्षत बहु स्यां प्रजायेय (छा. ६।२।३) इतीक्षणक्रियायोगश्चाचेतने प्रधाने न संभवति। अत ईदृशेक्षणक्षमश्चेतनविशेष एव सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः। तथा च सर्वेष्वपि सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते। स ऐक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत (ऐ. १।१-२)। स ईक्षांचक्रे। स प्राणमसृजत (प्र. ६।३-४) इत्यादिषु। 20

1. C. om. च.

3. D. reads हि after प्रधानमेव.

6. B. reads तदा for तथा; D. om. एव after तथा सति.

10. D. om. च after वेषमेव, D. om एव after आनुमानिकम्.

12. B om. आनुमानिकम्.

16. B. reads ईदृशेक्षणवान् for ईदृशेक्षणक्षमः.

17. C. om. एव.

18. B. reads ईक्षण for ईक्षा.

ननु च कार्यानुगुणेनैव कारणेन भवितव्यम् । सत्यम् । सर्वकार्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसंकल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः । यथाह

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।
5 (श्वे. ६।८)

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । ( मु. १।१।९ )
यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरमेष सर्वभूतान्तरात्मापहतपाप्मा ( सुबा. श्रु. ) इत्यादि । तदेतन्न विलक्षणत्वात् ( ब्र. सू. २।१।४ ) इत्यादिषु प्रतिपादयिष्यते ।
10 अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरोधस्तु तत्रैव परिहरिष्यते ।

यत्तूक्तं प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यमिति । तदसत् । हेत्वनुपादानात् । येनाश्रुतं श्रुतम् ( छा. ६।१।१ ) इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसं-
15 भवं मन्वानस्य तत्संभवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम् । ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोवगतः ॥ ५ ॥

अथ स्यान्न चेतनगतं मुख्यमीक्षणमिहोच्यते । अपि तु प्रधानगतं गौणमीक्षणम् । तत्तेज ऐक्षत ( छा. ६।२।३ ) । ता आप ऐक्षन्त ( छा. ६।२।४ ) इति गौणेक्षणसाहचर्यात् । भ-
20 वति चाचेतनेष्वपि चेतनधर्मोपचारः । यथा वृष्टिप्रतीक्षाः शा-

7. D. om. यस्याक्षरं शरीरम्.

8. B. reads इति for अपहतपाप्मेत्यादि.

11. D. E. om. तु after वस्तुविरोधः.

12. B. reads अनुमानम् for अनुमानरूपम्.

15. D. reads श्वेतकेतोः after मन्वानस्य.

17. D. reads चेतनगत for चेतनगतम्.

लयः । वर्षेण बीजं प्रतिसंजहर्षेति । अतो गौणमीक्षणमिति । इमामाशङ्कामनुभाष्य परिहरति ।

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

यदुक्तं गौणेक्षणसाहचर्यात्सतोपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति । तन्न । ऐतदात्म्यमिदं सर्वं तत्सत्यं 5
स आत्मा (छा. ६।८।७) इति सच्छब्दप्रतिपादितस्यात्मशब्देन व्यपदेशात् । एतदुक्तं भवति । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा (छा. ६।८।७) इति चेतनाचेतनात्मकप्रपञ्चोद्देशेन स त आत्मेत्यात्मत्वोपदेशोयं नाचेतने प्रधाने संगच्छत
इति । अतस्तेजोबन्नानामपि परमात्मैवात्मेति तेजःप्रभृतयोपि 10
शब्दाः परमात्मन एव वाचकाः । तथा हि । हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२) इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति तत्तेज ऐक्षत (छा. ६।२।३)।
ता आप ऐक्षन्त (छा. ६।२।४) इत्यपि मुख्य एवेक्षणव्यप- 15
देशः । अतः साहचर्यादपि तदैक्षत (छा. ६।२।३) इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥ ६ ॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम् ।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

मुमुक्षोः श्वेतकेतोस्तत्त्वमसि (छा. ६।८।७) इति सदात्म- 20
कत्वानुसंधानमुपदिश्य तन्निष्ठस्य तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्ये (छा. ६।१४।२) इति शरीरपातमा-

1. C. om. वर्षेण.

7. C. E. om. तत्सत्यम्.

9. D. om. ते after सः.

17. C. reads गौणत्वादिशङ्का for गौणत्वाशङ्का.

त्रान्तरायो ब्रह्मसंपत्तिलक्षणो मोक्ष इत्युपदिशति । यदि च प्रधानमचेतनं कारणमुपदिश्येत तदा तदात्मकत्वानुसंधानस्य मोक्षसाधनत्वोपदेशो नोपपद्येत । यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ( छा. ३।१४।१ ) इति तन्निष्ठस्याचेतनसंपत्तिरेव स्यात् । न च मातापितृसहस्रेभ्योपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्संपत्तिमुपदिशति । प्रधानकारणवादिनोपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥७॥

इतश्च न प्रधानम् ।

हेयत्वावचनाच्च ॥ ८ ॥

10 यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात् । न च तत्क्रियते । प्रत्युतोपादेयत्वेनैव तत्त्वमसि (छा. ६।८।७) । तस्य तावदेव चिरम् ( छा. ६।१४।२ ) इत्युपदिश्यते ॥ ८ ॥

इतश्च न प्रधानम् ।

15 प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति । वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् । तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्र-

3. B. D. read उपपद्येत for उपपद्येत.

5. C. reads हि after वत्सलतरम्.

7. E. om. हि after अपि. D. reads तथा after हि.

11. B. D. om. एव after हेयत्वेन.

12. B. om. एव after उपादेयत्वेन.

18. B. om. चेतन.

धानकार्यत्वाभावात्प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥ ९ ॥

इतश्च न प्रधानम् ।

## स्वाप्ययात् ॥ १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह । स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति । स्वमपीतो भवति । तस्मादेनं स्वपितीत्याचक्षते । स्वं ह्यपीतो भवति (छा. ६।८।१) इति सुषुप्तं जीवं सता संपन्नं स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति । प्रलयश्च स्वकारणे लयः । न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवति । स्वमपीतो भवत्यात्मानमेव जीवोपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाप्यभिधीयत इति नामरूपव्याकरणश्रुत्योक्तं तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात्केवलसच्छब्दाभिधेयमिति सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति (छा. ६।८।१) इत्युच्यते ।

तथा समानप्रकरणे नामरूपविभागपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात्प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् (बृ. ४।३।२१) इत्युच्यते । आ मोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः । सुषु-

5. B. reads तथैव for तदेव.

9. B reads स्वमपीतम् for स्वमपीतः.

11. B. om. स्वमपीतो भवति.

12. D. om. अपि after जीवशब्देन.

14. C. om. अपि after सुषुप्तिकाले.

17. C. reads परिष्वङ्गाभावात् for विभागपरिष्वङ्गाभावेन.

त्रिकालेपि हि नामरूपे विहाय सता संपरिष्वक्तः पुनरपि जाग्रद्दशायां नामरूपे परिष्वज्य तत्तन्नामरूपा भवन्तीति श्रुत्यन्तरे स्पष्टमभिधीयते । यदा सुपुप्तः स्वप्नं न कथंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति । तस्माद्वा एतस्मादात्मनः प्राणा यथा-
5 यतनं विप्रतिष्ठन्ते ( कौ. ३।३ ) । तथा त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ( छा. ६।९।३ ) इति । तथा सुपुप्तं जीवं प्राज्ञेनात्मना संपरिष्वक्तः ( बृ. ४।३।२१ ) इति च वदति । तस्मात्सच्छब्दवाच्यं परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव । तदाह वृ-
10 त्तिकारः सता सोम्य तदा संपन्नो भवतीति संपत्त्यसंपत्तिभ्यामेतदध्यवसीयते । प्राज्ञेनात्मना संपरिष्वक्त इति चाहेति ॥ १० ॥

इतश्च न प्रधानम् ।

## गतिसामान्यात् ॥ ११ ॥

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ऐ-
15 क्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत ( ऐ. १।१–२ ) । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ( तै. २।१ ) । तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः (बृ. २।४।१०) इत्यादिसृष्टिवाक्यानां या गतिः प्रवृत्तिस्तत्सामान्यात्तत्समा-

1. C. om. अपि after सुषुप्तिकाले; D. om. हि after अपि.

2. B. reads जागर for जाग्रत्.

4. D. reads हि after प्राण एव.

6. B. reads तथा for तदा.

7. B. reads च after तथा; C. om. जीवम्.

9. B. om. परमेश्वरः.

नार्थत्वादस्य । तेषु सर्वेषु सर्वेश्वरः कारणमवगम्यते । तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥ ११ ॥

इतश्च न प्रधानम् ।

श्रुतत्वाच्च ॥ १२ ॥

श्रुतमेव ह्यस्यामुपनिषद्यस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसंकल्पत्वं चानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२)। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।४)। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा (छा. ६।८।७)। यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्त्समाहितम् (छा. ८।१।३)। तस्मिन्कामाः समाहिताः । एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः (छा. ८।१।५) इति । तथा च श्रुत्यन्तराणि

न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥
(श्वे. ६।९)

सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते ।
(तै. आ. ३।१२)

अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा (तै. आ. ३।११)। विश्वात्मानं परायणम् (ना. १३।१)।

1. B. C. read च after तेषु.
2. D. om. एव.
5. B. reads एवम् for एव हि; B. om. अस्य.
11. B. reads तस्मिन् for तदस्मिन्.

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । ( ना. १३।१ )
यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ( ना. १३।१ )
एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः
5 ( सुबालोप. ) इत्यादीनि । तस्माज्जगत्कारणवादिवाक्यानि न प्रधानप्रतिपादनयोग्यानि । अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरो निरस्तसमस्तदोषगन्धोनवधिकातिशयासंख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति च स्थितम् ।

10 अत एव निर्विशेषचिन्मात्रब्रह्मवादोपि सूत्रकारेणाभिः श्रुतिभिर्निरस्तो वेदितव्यः । पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात् । निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम् । वेदान्तवेद्यं ब्रह्म च जिज्ञास्यतया प्रतिज्ञातम् । तच्च चेतनमितीक्षतेर्नाशब्दम् ( ब्र. सू. १।१।५ ) इत्या-
15 दिभिः सूत्रैः प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव । किं च निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम् । प्रकाशो

1. E. om. शाश्वतं शिवमच्युतम्.
4. D. reads एव निखिलजगदेककारणम् after नारायणः.
5. B. D. read वाक्यं न प्रधानप्रतिपादनयोग्यम् for वाक्यानि न प्रधानप्रतिपादनयोग्यानि.
6. C. reads आदि after प्रधान.
7. B. om. गणौघ; D. om. ओघ.
9. B. D. om. च after इति.
11. C. reads गण after गुण.
13. E. om. च after ब्रह्म.
17. E. reads त्व before प्रकाशत्वम्.

हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन्वस्तुविशेषः। निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावाद्धटादिवदचित्त्वमेव। तदुभयरूपत्वाभावेपि तत्क्षमत्वमस्तीति चेत्तन्न। तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात्। अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्। हन्त तर्हि तत एव सर्वज्ञता सर्वशक्तित्वं सर्वेश्वरेश्वरत्वं सर्वकल्याणगुणाकरत्वं सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः। शक्तिमत्त्वं च कार्यविशेषानुगुणत्वम्। तच्च कार्यविशेषैकनिरूपणीयम्। कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात्। किं च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणकम्। प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम् (पृ. २८ प. ३)। तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम्॥ १२॥ (५)

एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद्व्यावृत्तिरुक्ता। इदानीं कर्मवश्यात्त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धाच्छुद्धाच्च प्रत्यगात्मनोन्यन्निखिलहेयप्रत्यनीकं निरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते।

## आनन्दमयोऽभ्यासात्॥ १३॥

तैत्तिरीया अधीयते। स वा एष पुरुषोऽन्नरसमयः (तै.

---

3. D. om. तत् after चेत्.
7. B. D. om. ईश्वर; C. om. सर्वकल्याणगुणाकरत्वम्.
10. C. reads निरूपणीय for निरूपणीयम्.
12. D. reads जन्य for स्व; D. reads विषयाः for गोचराः.
14. D. E. read जिज्ञास्यं ब्रह्म for जिज्ञास्यः.
15. B. D. read जिज्ञास्यस्य तस्य for जिज्ञासितस्य.

२।१।१ ) इति प्रकृत्य तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः ( तै. २।५ ) इति । तत्र संदेहः । किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मोत स एवेति ।

5 किं युक्तम् । प्रत्यगात्मेति । कुतः । तस्यैष एव शारीर आत्मा ( तै. २।६ ) इत्यानन्दमयस्य शारीरत्वश्रवणात् । शारीरो हि शरीरसंबन्धी जीवात्मा ।

ननु च जगत्कारणतया प्रतिपादितस्य परस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय 10 इत्युपदिशति । जगत्कारणं च तदैक्षत ( छा. ६।२।३ ) इतीक्षणश्रवणात्सर्वज्ञः सर्वेश्वर इत्युक्तम् । सत्यमुक्तम् । तत्तु जीवान्नातिरिच्यते । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) । तत्त्वमसि श्वेतकेतो ( छा. ६।८।७ ) इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात् । सामा15 नाधिकरण्यं ह्येकत्वप्रतिपादनपरम् । यथा सोयं देवदत्त इत्यादौ । ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव । अतो ब्रह्मविदाप्नोति परम् ( तै. २।१।१ ) इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते । अचिद्वियुक्तस्य स्वरूपस्य लक्षणमिदमुच्यते सत्यं ज्ञानमनन्तं ब्रह्म ( तै.२।१।१)

---

5. C. om. तस्य.

7. B. reads संबन्धि for संबन्धी.

8. D. om. परस्य.

10. D. om. ईक्षण.

11. D. reads स तु for तत्तु.

16. B. reads ईक्षण, E. इच्छा, for ईक्षा.

18. D. reads उपक्रान्तमानन्दमय इति after प्राप्यतया; B. reads वस्तुवियुक्त for वियुक्तस्य.

इति। तद्रूपप्राप्तिरेव हि मोक्षः। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः (छा. ८।१२।१) इति। अतो जीवस्याविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथा हि शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुमन्नमयः पुरुष इति प्रथमं शरीरं निर्दिश्य तदन्तर्भूतं तस्य धारकं पञ्चवृत्तिप्राणं तस्याप्यन्तर्भूतं मनस्तदन्तर्भूतां च बुद्धिं प्राणमयो मनोमयो विज्ञानमय इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तर्भूतं जीवात्मानमन्योऽन्तर आत्मानन्दमयः (तै. २।५) इत्युपदिश्यान्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव ब्रह्मविदाप्नोति (तै. २।१।१) इति प्रक्रान्तं ब्रह्म तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते।

ननु च ब्रह्म पुच्छं प्रतिष्ठा (तै. २।५) इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते। नैवम्। ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथान्नमयो देहावयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव तस्येदमेव शिरः (तै. २।१) इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितस्तथानन्दमयं क्वापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्राव-

[5.] reads शरीरं प्रथमम् for प्रथमं शरीरम्.

[6.] B. D. read अन्तरभूतम् for अन्तर्भूतम्.

7. B. D read अन्तरभूतम् for अन्तर्भूतम् and अन्तरभूताम् for अन्तर्भूताम्.

8. B. om. तत्र; B. D. read अन्तरभूतम् for अन्तर्भूतम्.

13. D. om. च.

15. C. reads उपदिश्यते for व्यपदिश्यते.

16. D. reads देह एव for देहावयवी and अनतिरिक्तस्वावयवैरिव for अनतिरिक्तैः स्वावयवैरेव.

17. D. reads पुच्छश्च अवयवतया निदर्शिताः for पुच्छवत्तया निदर्शितः.

यवत्वेन कल्पितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाखण्डरूपमानन्दमयं ब्रह्म पुच्छं प्रतिष्ठा (तै. २।५) इत्युच्यते । यदि चानन्दमयादन्यद्ब्रह्माभविष्यत्तस्माद्वा एतस्मादानन्दमयादन्योन्तर आत्मा ब्रह्मेत्यपि निरदेक्ष्यत । न चैवं निर्दिश्यते । एतदुक्तं भवति । ब्रह्मविदाप्नोति परम् (तै. २।१।१) इति प्रक्रान्तं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव तस्माद्वा एतस्मादात्मनः (तै. २।१।१) इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरात्मत्वेनात्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तत्तदन्तरात्मतयात्मत्वेन निर्दिष्टान्प्राणमयादीनतिक्रम्यान्योन्तर आत्मानन्दमयः (तै. २।५) इत्यात्मशब्देन निर्देशमानन्दमये समापयति । अत आत्मशब्देन प्रक्रान्तं ब्रह्मानन्दमयमिति निश्चीयत इति ।

ननु च ब्रह्म पुच्छं प्रतिष्ठा (तै. २।५) इत्युक्त्वा
असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥ (तै. २।६)

इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति नानन्दमयज्ञानाज्ञानाभ्याम् । न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता । अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः । तस्मादानन्दमयादन्यद्ब्रह्म । नैवम् । इदं पुच्छं प्रतिष्ठा (तै. २।१) । पृथिवी पुच्छं प्रतिष्ठा (तै. २।२) । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा (तै. २।३) ।

1. D. reads अखण्डम् for अखण्डरूपम्.

8. C. reads सर्वान्तरत्वेन, D. सर्वान्तरात्मकत्वेन, for सर्वान्तरात्मत्वेन.

9. D. reads तत्तदन्तरात्मकत्वेन for तत्तदन्तरात्मतयात्मत्वेन; E. om. तत्.

18. D. reads अज्ञान after ज्ञान.

महः पुच्छं प्रतिष्ठा (तै. ३।३) इत्येवमुक्त्वा तत्रतत्रोदाहृता अन्नाद्वै प्रजाः प्रजायन्ते (तै. २।२) इत्यादयः श्लोका यथा न पुच्छमात्रप्रतिपादनपरा अपि त्वन्नमयादिपुरुषमात्रप्रतिपादनपरा एवमत्राप्यानन्दमयस्यायमसन्नेव (तै. २।६) इति श्लोको नानन्दमयव्यतिरिक्तस्य पुच्छस्य । आनन्दमयस्यैव ब्रह्मत्वेपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दमयस्य सद्भावासद्भावज्ञानाज्ञानशङ्का युक्तैव । पुच्छब्रह्मणोप्यपरिच्छिन्नानन्दतयैव ह्यसिद्धता । शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणो नानन्दमयं ब्रह्मेति चेद्ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात्पुच्छमपि ब्रह्म न भवेत् । अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्चाश्रयभूतत्वाद्ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत हन्त तर्ह्यसुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति । एवं च सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१) इति विकारास्पदजडपरिच्छिन्नवस्त्वन्तराद्व्यावृत्तस्यासुखाद्व्यावृत्तिरानन्दमय इत्युपदिश्यते । अतश्चाखण्डैकरसानन्दरूपे ब्रह्मण्यानन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः । तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वा-

1. D. om. महः पुच्छं प्रतिष्ठा.
3. C. om. मात्र after पुरुष.
5. E. reads आनन्दस्य for आनन्दमयस्य.
6. C. om. अपि; C. reads तस्य after रूपितस्य; B. D. read आनन्दस्य for आनन्दमयस्य.
7. E. om. असद्भाव; B. reads आशङ्का for शङ्का.
8. B. D. read अप्रसिद्धता for असिद्धता; D. reads अवयवत्व for अवयवित्व.
9. D. om. ब्रह्मणः.
11. B. reads निरूपणम् for रूपणम्; B. reads उच्यते for उच्येत.
14. C. reads वस्त्वन्तर for वस्त्वन्तरात्.
15. B. reads आनन्दरूप for आनन्दरूपे.

भाविकं स्वरूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इ-
त्यानन्दमयः प्रत्यगात्मेति। एवं प्राप्ते प्रचक्ष्महे।

आनन्दमयोभ्यासात्। आनन्दमयः परमात्मा। कुतः।
अभ्यासात्। सैषानन्दस्य मीमांसा भवति (तै. २।८) इत्या-
5 रभ्य यतो वाचो निवर्तन्ते (तै. २।९) इत्येवमन्तेन वाक्येन
शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोभ्यस्यमान आनन्दो-
नन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसंभवन्निखि-
लहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मान-
मेव स्वाश्रयमावेदयति। यथाह। तस्माद्वा एतस्माद्विज्ञानम-
10 यात्। अन्योन्तर आत्मानन्दमयः (तै. २।५) इति। विज्ञा-
नमयो हि जीवः। न बुद्धिमात्रम्। मयट्प्रत्ययेन व्यतिरेकप्र-
तीतेः। प्राणमये त्वगत्या स्वार्थिक आश्रीयते। इह तु तद्वतो
जीवस्य संभवान्नानर्थकत्वं न्याय्यम। बद्धो मुक्तश्च प्रत्यगात्मा
ज्ञातैवेत्यभ्यधिष्महि (पृ. ४१)। प्राणमयादौ तु मयडर्थासंभवो-
15 नन्तरमेव वक्ष्यते।

कथं तर्हि विज्ञानमयविषये श्लोके विज्ञानं यज्ञं तनुते (तै.
२।५) इति केवलविज्ञानशब्दोपादानमुपपद्यते। ज्ञातुरेवात्मनः
स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः।

1. B. reads रूपम् for स्वरूपम्.
2. B. om. इति after प्रत्यगात्मा.
8. D. reads प्रत्यनीककल्याणैकतान for प्रत्यनीकं कल्याणैकतानम्.
9. B. reads तथा हि, D. यदाह, for यथाह.
12. B. D. read स्वार्थिकता for स्वार्थिकः.
13. B. reads आनर्थक्यम्, C. स्वार्थिकत्वम्, for अनर्थकत्वम्.
14. D. reads ज्ञेतः for ज्ञाता; B. reads च for तु; C. read संभवः for असंभवः.
16. D. E. read विषय for विषये.

ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य । स्वरूपनिरूपणधर्म-
शब्दो हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयति गवादि-
शब्दवत् । कृत्यल्युटो बहुलम् ( पा. सू. ३।३।११३ ) इति वा
कर्तरि ल्युडाश्रीयते । नन्द्यादित्वं वाश्रित्य नन्दिग्रहि ( पा.
सू. ३।१।१३४ ) इत्यादिना कर्तरि ल्युः । अत एव　　5

विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च । ( तै. २।५ )

इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते। बुद्धिमात्रस्य हि न कर्तृत्वं
संभवति। अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीने-
ष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते। अत एव चेतनमचे-
तनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य　　10
निर्दिशद्वाक्यं विज्ञानं चाविज्ञानं च ( तै. २।६ ) इति विज्ञा-
नशब्देन तद्गुणं चेतनं वदति । तथान्तर्यामिब्राह्मणे यो विज्ञाने
तिष्ठन् ( बृ. ३।७।२२ ) इत्यस्य काण्वपाठगतस्य पर्यायस्य
स्थाने य आत्मनि तिष्ठन्निति पर्यायमधीयाना माध्यन्दिनाः
काण्वपाठगतविज्ञानशब्दनिर्दिष्टो जीवात्मेति स्फुटीकुर्वन्ति ।　　15
विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम् । तदेवं विज्ञान-
मयाज्जीवादन्यस्तदन्तरः परमात्मानन्दमयः । यद्यपि विज्ञानं
यज्ञं तनुते ( तै. २।५ ) इति श्लोके ज्ञानमात्रमेवोपादीयते न
ज्ञाता तथाप्यन्योन्तर आत्मा विज्ञानमयः ( तै. २।४ ) इति
तद्वाक्ज्ञातैवोपदिश्यते । यथान्नाद्धे प्रजाः प्रजायन्ते ( तै.२।२ )　　20

1. D. E. read धर्मशब्दाः for धर्मशब्दः.

2. D. E. read प्रतिपादयन्ति for प्रतिपादयति.

7. D. reads न च बुद्धिमात्रस्य for बुद्धिमात्रस्य हि न; C. om. हि.

9. D. reads च after अत एव.

12. B. reads तत् for तथा.

15. B. reads काण्वपाठगतं विज्ञानशब्दनिर्दिष्टम् for काण्वपाठगतविज्ञान-शब्दनिर्दिष्टः.

इत्यत्र श्लोके केवलान्नोपादानेपि स वा एष पुरुषोन्नरसमयः (तै. २।१) इत्यत्र नान्नमात्रं निर्दिष्टम् । अपि तु तन्मयस्तद्विकारः । एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव भेदव्यपदेशात् (ब्र. सू. १।१।१८) इत्यनन्तरमेव वदति ।

5 यदुक्तं जगत्कारणतया निर्दिष्टस्यानेन जीवेनात्मनानुप्रविश्य (छा. ६।३।२) । तत्त्वमसि (छा. ६।८।७) इति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं ब्रह्मविदाप्नोति परम् (तै. २।१) इति प्रक्रान्तमसुखाद्यावृत्तत्वेनानन्दमय इत्युपदिश्यत इति 10 तदयुक्तम् । जीवस्य चेतनत्वे सत्यपि तदैक्षत । बहु स्यां प्रजायेयेति । तत्तेजोसृजत (छा. ६।२।३) इति च स्वसंकल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः । शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासंभवो जगद्व्यापारवर्जम् (ब्र. सू. ४।४।१७) । भोगमात्रसाम्यलिङ्गात् (ब्र. सू. ४।४।२१) इत्यत्रोपपादयिष्यते । 15 कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमेनेन जीवेनात्मना (छा. ६।३।२)। तत्त्वमसि (छा. ६।८।७) इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत् । कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसंकल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणो 20 नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिर्मिपितादिसकलप्रवृत्तिजीवस्वरूपत्वम् । अन्यतरस्य मिथ्यात्वेनोपपद्यत इति

5. C. reads नामरूपे व्याकरवाणि after अनुप्रविश्य.

6. B. om. च.

11. D. om. च.

12. B. reads विविध for अनन्त.

19. D. om. गण.

20. C. reads दुःखकर for दुःखाकर.

चेत् । कस्य भोः । किं हेयसंबन्धस्य किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य । हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसंबन्धप्रतिभासो मिथ्यारूप इति चेत् । विप्रतिषिद्धमिदमभिधीयते । ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वं 5 चेति । अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसंबन्धः । तत्संबन्धित्वं तत्प्रत्यनीकत्वं च विरुद्धमेव । तथापि तस्य मिथ्यात्वान्न विरोध इति मा वोचः । मिथ्याभूतमप्यपुरुषार्थ एव यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे । निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते । 10

किं कुर्मो येनाश्रुतं श्रुतं भवति ( छा. ६।१।१ ) इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इत्यादिना निखिलजगदेककारणतां तदैक्षत बहु स्याम् ( छा. ६।२।३ ) इति सत्यसंकल्पतां च सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणस्य सकलकारणभूतस्य 15 ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणस्तत्त्वमसि ( छा. ६।८।७ ) इति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम् । तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत् । श्रुतोपपत्तयेऽनुपपन्नं विरुद्धं च न कल्पनीयम् । अथ हेयसंबन्ध एव पारमार्थिकः । कल्याणैकतानता तु मिथ्या- 20 भूता । हन्तैवं तापत्रयाभिहतचेतनोज्जिजीविषया प्रवृत्तं शास्त्रं

7. B. reads हेयप्रत्यनीकत्वम् for तत्प्रत्यनीकत्वम्.

14. C. E. om. सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणस्य सकलकारणभूतस्य.

18. B. reads परिकल्पितम् for परिकल्पनीयम्.

20. C. reads अपारमार्थिकः for पारमार्थिकः; B. D. read एकस्वभावता for एकतानता.

तापत्रयाभिहतिरेव तस्य पारमार्थिकी कल्याणैकतानस्वभावस्तु भ्रान्तिकल्पित इति बोधयत्सम्यगुज्जीवयति।

अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसंकल्पत्वकल्याणगुणाकरत्वज-
5 गत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्। अहो भवतां वाक्यार्थपर्यालोचनकुशलता। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न संपत्स्यते। यथैकविज्ञानं परमार्थविषयं तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतं च तदा तज्ज्ञानेन सर्वविज्ञानमिति श-
10 क्यते वक्तुम्। न हि परमार्थशुक्तिज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति।

अथोच्येतैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः। निर्विशेषवस्तुमात्रमेव सत्यमन्यदसत्यमिति। न तर्हि येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ( छा. ६।१।१ ) इति श्रूयेत।
15 येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितस्य निर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातो यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम् ( छा. ६।१।१ ) इति दृष्टान्तोपि न घटते। तत्र मृत्पिण्डविज्ञानेन हि तद्विका-

1. D. reads अस्य for तस्य.
6. D. reads सर्वविज्ञानं प्रतिज्ञानम् for सर्वविज्ञानप्रतिज्ञानम्.
10. B. D. read शुक्तिका for शुक्ति.
11. D. reads रजतज्ञानम् for रजतं ज्ञातम्.
13. D. E. read सन्मात्रम् for वस्तुमात्रम्; D. om. न before तर्हि.
14. D. reads न before श्रूयेत.
15. D. reads तस्य for ह्यस्य.
16. D. E. read उपलक्षित for उपलक्षितस्य.
18. B. D. om. तत्र; E. om. हि.

रस्य ज्ञातता निदर्शिता । तत्रापि तद्विकारस्यासत्यताभिहितेति चेत् । मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसंभावनाप्रदर्शनाय यथा सोम्य ( छा. ६।१।१ ) इति प्रसिद्धवदुपन्यासो न युज्यते । न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामापादयत्तर्कानुगृहीतमननुगृहीतं वा प्रमाणमुपलभामहे इत्ययमर्थस्तदनन्यत्वमारम्भणशब्दादिभ्यः ( ब्र. सू. २।१।१५ ) इत्यत्र वक्ष्यते । 5

तथा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ( छा. ६।२।१)। तदैक्षत। बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत(छा. ६।२।३)। हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ( छा. ६।८।४ ) । ऐतदात्म्यमिदं सर्वम् ( छा. ६।८।७ ) इत्यादिनास्य जगतः सदात्मकता सृष्टेः पूर्वकाले नामरूपविभागप्रहाणं जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वं सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण बहु स्यामित्यनन्यसाधारणः संकल्पविशेषो यथासंकल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनानन्तनामरूपव्याकरणं स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनं स्वप्रतिष्ठितत्वमित्याद्यनन्तविशेषाः 10 15 20

1. B. D. om. तत् before विकारस्य; B. D. read अभिप्रेता for अभिहिता.
2. D. reads अप्रसिद्धम् for असिद्धम्.
14. B. D. read अग्रहणम् for प्रहाणम्.
17. C. reads विशेषा for विशेषविशिष्टा.
18. C. E. read तत् before नामरूप.
19. C. E. read स्वव्यतिरिक्त for स्वव्यतिरिक्तस्य.
20. C. reads प्रतिष्ठाम्, D. प्रतिष्ठित्वम्, for प्रतिष्ठितत्वम्.

शास्त्रैकसमधिगम्याः प्रतिपादिताः । तत्संबन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसंकल्पत्वसर्वानन्दकरणनिरतिशयानन्दादयः सकलेतरप्रमाणाविषयाः सहस्रशः प्रतिपादिताः । एवमनन्य-
5 गोचरानन्तविशेषणविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसंगतत्वेनोन्मत्तप्रलपितायते । त्वंपदं च संसारित्वविशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न
10 संभवतीति पूर्वमेवोक्तम् । एवं च सति समानाधिकरणप्रवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ।

अथोच्येत समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासंभवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्र-
15 तिपादनान्न लक्षणाप्रसङ्गः । यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैक्यप्रतिपादनपरत्वेन नीलत्वोत्पलत्वस्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्यते । तत्तु न संभवति । न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशिष्यते ।
20 जातिगुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोप-

3. C. E. read आनन्दयोगादयः for आनन्दादयः.

6. D. reads प्रलपितं येन, B. प्रलपितं चेत्, for प्रलपितायते.

11. B. D. read पदयोर्द्वयोरपि for द्वयोरपि पदयोः; E. om. च.

16. B. D. read एकत्व for ऐक्य; B. D. read परत्वे for परत्वेन; B. reads नीलोत्पलत्वरूप, D. नीलत्वोत्पलत्वरूप, for नीलत्वोत्पलत्वस्वरूप.

18. D. reads प्रसज्येत for प्रसज्यते.

लक्षितवस्त्वैक्यमात्रं सामानाधिकरण्येन प्रतिपाद्यते । तथा सोयं देवदत्त इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण संनिहितदेशवर्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते । यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते तथापि वाच्येर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा । अपि तु विशेषणांशस्याविवक्षामात्रम् । सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति । 5

तदिदमसारम् । सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् । तत्र समानाधिकरणप्रवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोभिधीयते । यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते यथा च विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयत एवं वेदान्तवाक्येष्वपि सामानाधिकरण्यनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम् । न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेषितव्यम् । अपि तु सर्वैरपि विशेषणैः स्वरूपमेव विशेष्यम् । तथा हि । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया 10 15 20

2. C. reads तत् for अतीत.

8. D. om. एव.

11. C. E. read वृत्तानाम् for प्रवृत्तानाम्.

15. C. reads पदद्वयस्य for पदद्वय.

16. D. reads समानाधिकरण for सामानाधिकरण्य.

18. B. D. om. अपि after सर्वैः.

तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं हि सामानाधिकरण्यकार्यम्। यथा देवदत्तः श्यामो युवा लोहिताक्षोदीनोकृपणोनवद्य इति। यत्र त्वेकस्मिन्वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टं तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते न
5 द्वयम्। यथा गौर्वाहीक इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते।

अथ मनुष एकविशेषणप्रतिसंबन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसंबन्धित्वाद्विलक्षणमिति घटपटयोरिवैकविभक्तिनिर्देशेप्यैक्यप्रतिपादनासंभवात्समानाधिकरणशब्दस्य न
10 विशिष्टप्रतिपादनपरत्वम्। अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति। स्यादेतदेवं यदि विशेषणद्वयप्रतिसंबन्धित्वमात्रमेवैक्यं निरुन्ध्यात्। न चैतदस्ति। एकस्मिन्धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपट-
15 त्वयोः। नीलमुत्पलमित्यादिषु तु दण्डित्वकुण्डलित्ववद्रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते। न केवलमविरोध एव। प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टताम्। अन्यथा स्वरूपमात्रैक्येनैकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात्। विशे-

1. D. om. हि.
5. D. reads बाहकः for बाहीकः.
7. B. C. om. वस्तु after निरूप्यमाणम्.
8. D. reads एव for इव.
14. B. reads पटत्वघटत्वयोः for घटत्वपटत्वयोः.
15. B. reads रूपरसगन्ध for रूपवत्त्वरसवत्त्वगन्धवत्त्व.
17. D. E. read बोधकत्व for निष्ठत्व.
18. E. reads विशिष्टता for विशिष्टताम्.

पणानां स्वसंबन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सत्येके-
नैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव । उपलक्षणान्त-
रोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः ।
सोयं देवदत्त इत्यत्रापि न लक्षणागन्धो विद्यते । विरोधाभा-
वात् । देशान्तरसंबन्धितयातीतस्य संनिहितदेशसंबन्धितया 5
वर्तमानत्वाविरोधात् । अत एव हि सोयमिति प्रत्यभिज्ञया
कालद्वयसंबन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववा-
दिभिः। अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्।
देशद्वयसंबन्धविरोधस्तु कालभेदेन परिह्रियते ।

यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवा- 10
चित्वमत एवारुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति (तै.
सं. ६।१।६)इत्यादावारुण्यादिविशिष्टैकहायन्याः क्रयः साध्यतया
विधीयते । तदुक्तम् । अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः
स्यात् (जै. सू. ३।१।१२) इति ।

तत्रैवं पूर्वपक्षी मन्यते । यद्यप्यरुणयेति पदमाकृतेरिव 15
गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वाद्द्रव्यपर्यन्तमेवारुणिमानम-
भिधत्ते तथाप्येकहायन्यन्वयनियमोरुणिम्नो न संभवति ।

8. C. reads एव after तत.
4. B. D. read लक्षणागन्धो न for न लक्षणागन्धः.
6. C. om. हि. B. reads प्रत्यभिज्ञायाः for प्रत्यभिज्ञया.
7. C reads प्रतिपाद्यते for उपपाद्यते.
11. D. E. om. गवा.
12. D. reads इत्यादि for इत्यादौ; B. reads क्रयसाध्यता for क्रयः साध्यतया; D. reads एकहायन्या क्रयसाध्यत्वमभिधीयते for एकहायन्याः क्रयः साध्यतया विधीयते.
15. B. D. read आकृतिः for आकृतेः.
16. D. reads प्रकारतया for प्रकारता.

एकहायन्या क्रीणाति तत्रारुणयेत्यर्थद्वयविधानासंभवात् । तत्तत्रारुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति । अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः । तस्मादेकहाय-
5 न्यन्वयनियमोरुणिम्नो न स्यादिति ।

अत्राभिधीयते । अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् । अरुणयैकहायन्येत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्येकहायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन संबन्धितया-
10 भिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यान्वयनियमः स्यात् । यद्येकहायन्याः क्रयसंबन्धवदरुणिमसंबन्धोपि वाक्यावसेयः स्यात्तदा वाक्यार्थद्वयविधानं स्यात् । न चैतदस्ति । अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम् । एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्व-
15 मात्रमवगम्यते न गुणसंबन्धः । विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति हि सामानाधिकरण्यलक्षणम् । अत एव हि रक्तः पटो भवतीत्यादिष्वैकार्थ्यादेकवाक्यत्वम् ।

4. B. D. read लिङ्ग for लिङ्गक.

10. D. reads विरोधात् for अविरोधात्.

11. D. E. read एकहायन्य° for एकहायन्या°; B. D. read एकहायन्या for एकहायन्याः.

12. D. reads वाक्यस्य for वाक्य after अपि.

13. C. reads अरुणा for अरुणयेति.

16. D. E. read एक for एकस्मिन्.

17. B. reads प्रवृत्तिः for वृत्तिः; C. om. हि after इति; D. E. read तत् for सामानाधिकरण्य after हि.

18. C. om. हि after एव.

पटस्य भवनक्रियासंबन्धे हि वाक्यव्यापारः । रागसंबन्धस्तु रक्तपदेनैवाभिहितः । रागसंबन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम् । एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासंबन्धाभिधानमविरुद्धम् । देवदत्तः श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति । शुक्लेन वाससा यवनिकां संपादयेत् । नीलमुत्पलमानय । गामानय शुक्लां शोभनाक्षीम् । अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ( तै. सं. २।२।२ ) इति । एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति । एतदुक्तं भवति । यथा काष्ठैः स्थाल्यामोदनं पचेदित्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते तथा समानाधिकरणपदसंघाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेदित्यादिष्विति ।

यत्तूपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति तन्नोपपद्यते । लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि

3. D. E. read सामानाधिकरण्येन for सामानाधिकरण्य.

4. B. D. read विशिष्टत्वम् for विशिष्टम्.

5. B. D. read विशिष्ट for विशिष्टः; B. reads एव after एकः.

8. C. E. read नीलोत्पलमानय after उत्पलमानय.

9. B. om. इति after निर्वपेत्.

15. B. reads समपरिमाणैः for समपरिमाणे.

16. C. reads पचति for पचेत्.

17. C. D. read उक्तम् after यत्तु.

केवलगुणाभिधानादर्शनात् । उपात्तद्रव्यकवाक्यस्थं गुणपदं के-
वलगुणाभिधायीत्यप्यसंगतम । पटः शुक्ल इत्यादिषूपात्तद्रव्य-
केपि गुणविशिष्टस्यैवाभिधानात् । पटस्य शुक्ल इत्यत्र शौक्ल्य-
विशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता न पुनरुपात्त-
5 द्रव्यकत्वकृता । तत्रैव पटस्य शुक्लो भाग इत्यादिषु समानविभ-
क्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते ।

यत्पुनः क्रयस्यैकहायन्यवरुद्धतयारुणिम्नः क्रियान्वयो न सं-
भवतीति तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरण-
गुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसंग-
10 तम । गद्धान्ते चोक्तन्यायेनारुणिम्नः शाब्दद्रव्यान्वये सिद्धे द्र-
व्यगुणयोः क्रयसाधनत्वानुपपत्त्यार्थात्परम्परान्वयः सिध्यतीत्य-
प्यसंगतम । अतो यथोक्त एवार्थः । तस्मात्तत्त्वमस्यादिसामा-
नाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं
वर्णनीयम । तत्त्वनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशु-
15 द्ध्युभयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्या-
णगुणगणैकतानं परमात्मानमनभ्युपगच्छता न संभवति ।

अभ्युपगच्छतोपि समानाधिकरणपदानां यथावस्थितविशेष-

2\. B. D. om. अपि after इति; E. reads शुक्लः पटः for पटः शुक्ल.

4\. B. reads अप्रतीतिः for अप्रतिपत्तिः C. reads प्रतिपत्तिः समान for अप्रतिपत्तिरसमान.

6\. D. E. read आदि after शौक्ल्य.

7\. B. D. read एकहायन्या विरुद्धतया for एकहायन्यवरुद्धतया C. reads क्रय for क्रिया.

9\. E. om. गुण before पदस्य C. reads अभिधाने for अभिधानेन.

10\. B. reads उक्तेन for उक्त; B. D. read शाब्दे for शाब्द.

13\. C. om. एव.

16\. B. om. गुणगण; D. om. गण.

र्गाविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वंपदप्रतिपन्नसकलदोषभा-
गित्वं परस्य प्रसज्येतेति चेत् । नैतदेवम् । त्वंपदेनापि जीवान्त-
र्यामिणः परस्यैवाभिधानात् । एतदुक्तं भवति । सच्छब्दाभिहितं
निरस्तनिखिलदोषगन्धं सत्यसंकल्पत्वमिश्रानवधिकातिशयासं-
ख्येयानन्तकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म बहु 5
स्याम (छा. ६।२।३) इति संकल्प्य तेजोबन्नप्रमुखं कृत्स्नं ज-
गत्सृष्ट्वा तस्मिन्देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं
जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयं च स्वेच्छ-
यैव जीवान्तरात्मतयानुप्रविश्यैवंभूतेषु स्वपर्यन्तेषु देवाद्याका-
रेषु संघातेषु नामरूपे व्याकरोत् । एवंरूपसंघातस्यैव वस्तुत्वं 10
शब्दवाच्यत्वं चाकरोदित्यर्थः । अनेन जीवेनात्मना (छा. ६।३।२)
जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्म-
कत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोनुप्रवेशादित्यवगम्यते । •
इदं सर्वमसृजत । यदिदं किं च । तत्सृष्ट्वा । तदेवानुप्राविशत् ।
तदनुप्रविश्य । सच्च त्यच्चाभवत् (तै. २।६।१) इत्यत्रेदं स- 15
र्वमिति निर्दिष्टं चेतनाचेतनं वस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञाना-

1. B. reads आश्रयणात् for आश्रयणं.

2. B. reads प्रसज्यते for प्रसज्येत.

C. reads अभिहित for अभिहितम्.

D. reads गन्ध for गन्धम्. B. D. read संकल्प for संकल्पत्व:

B om. अनवधिकातिशयासंख्येय; D. om. असंख्येयानन्त.

B. D. read गुणम् for गुणगणम्; D. om. परम्.

B. reads संस्थापन for संस्थान.

C. om. एव: B. reads प्रविश्य for अनुप्रविश्य.

B om. संघातेषु.

12 B om जीवेन मया: D. reads प्रदर्शयति for दर्शयति.

13. C. om. इति.

16. C. reads अचेतन for अचेतनम्.

विज्ञानशब्दाभ्यां च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोनु-
प्रवेशाभिधानात् । अत एवं नामरूपव्याकरणात्सर्वे वाचकाः
शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतमिति ।

किं चैतदात्म्यमिदं सर्वम् (छा. ६।८।७) इति चेतन-
5 मिश्रं प्रपञ्चमिदं सर्वमिति निर्दिश्य तस्यैष आत्मेति प्रतिपादि-
तम । एवं च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं चे-
तनं जगत्तस्य शरीरं च भवति ।

तथा च श्रुत्यन्तराणि । अन्तः प्रविष्टः शास्ता जनानां स-
र्वात्मा (तै. आ. ३।११।२) । यः पृथिव्यां तिष्ठन्पृथिव्या
10 अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीम-
न्तरो यमयति स त आत्मान्तर्याम्यमृतः (बृ. ३।७।३) इति
प्रारभ्य य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा
शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः
(बृ. ३।७।२२) इत्यादि । यः पृथिवीमन्तरे संचरन्यस्य
15 पृथिवी शरीरं योपामन्तरे संचरन्यस्यापः शरीरमित्यारभ्य
योक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेदैष सर्व-
भूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः (सुबा.)
इत्यादीनि सचेतनं जगत्तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन
परमात्मानमुपदिशन्ति । अतश्चेतनवाचिनोपि शब्दाश्चेतनस्या-

1. C. om. निर्दिश्य.
2. B. reads एव for एवम्.
3. B. reads वाचकाः for वाचिनः.
6. B. om. च सर्वम्; D reads सर्वं for सर्वम् after च; B. D. read आत्मत्वे सर्व सचेतन जगदस्य for आत्मत्वेन सर्वं चेतनं जगत्तस्य.
12. B. reads आरभ्य for प्रारभ्य.
18. B. reads अस्य for तस्य after जगत्.
19. B. D. read अचेतन after चेतन; B. om. अपि after चेतनस्य.

त्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति। यथाचेतन-
देवादिसंस्थानपिण्डवाचिनः शब्दास्तत्तच्छरीरकजीवात्मन एव
वाचकाः। चत्वारः पञ्चदशरात्रा देवत्वं गच्छन्तीत्यादिषु देवा
भवन्तीत्यर्थः। शरीरस्य शरीरिणं प्रति प्रकारत्वात्। प्रकारवा-
चिनां च शब्दानां प्रकारिण्येव पर्यवसानाच्छरीराभिधायिनां 5
शब्दानां शरीरिपर्यवसानं न्याय्यम्। प्रकारो हि नामेदमि-
त्थमिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोंशः। तस्य त-
द्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात्तस्मिन्नेव पर्यवसानं युक्तमिति
तस्य प्रतिपादकोपि शब्दस्तस्मिन्नेव पर्यवस्यति। अत एव गौ-
रश्वो मनुष्य इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि 10
पिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात्पि-
ण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्य-
न्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन
सामानाधिकरण्यं मुख्यमेव।

ननु खण्डो गौः खण्डः शुक्ल इति जातिगुणवाचिनामेव प- 15
दानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्। द्रव्याणां तु
द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टो यथा दण्डी कुण्डलीति।
नैवम्। जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधि-
करण्ये प्रयोजकम्। अन्योन्यस्मिन्व्यभिचारात्। यस्य पदार्थस्य

2. B. om तत after तत.

5. D. om. च.

6. B. reads च for शब्दानाम्.

11. B. reads अपृथक्सिद्धविशेषणत्वात् after चेतनशरीरत्वेन.

13. D. E. read वाचक for वाचि.

14. B. D. read मुख्यवृत्तम् for मुख्यम्.

18. D. reads सामानाधिकरण्य for सामानाधिकरण्ये.

19. B. D. om. पदार्थस्य.

कस्यचित्प्रकारतयैव सद्भावस्तस्य तदपृथक्सिद्धिस्थितिप्रतीति-
भिस्तद्वाचकानां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मा-
न्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव।
यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित्कचि-
5 द्द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति निरवद्यम्।

तदेवं परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टस्य जी-
वस्य जीवनिर्देशविशेषरूपा अहंत्वमित्यादिशब्दाः परमात्मा-
नमेवाचक्षत इति तत्त्वमसि (छा. ६।८।७) इति सामानाधि-
करण्येनोपसंहृतम्। एवं च सति परमात्मानं प्रति जीवस्य शरी-
10 रतयान्वयाज्जीवगता धर्माः परमात्मानं न स्पृशन्ति। यथा श-
रीरगता बालत्वयुवत्वादयो धर्मा जीवं न स्पृशन्ति। अतस्तत्त्व-
मसि (छा. ६।८।७) इति सामानाधिकरण्ये तत्पदं जगत्का-
रणभूतं सत्यसंकल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं
परमात्मानमाचष्टे। त्वमिति च तमेव सशरीरजीवशरीरकमा-
15 चष्ट इति सामानाधिकरण्यं मुख्यवृत्तं प्रकरणाविरोधः सर्वश्रुत्य-

1. D. reads प्रतिपत्तिभिः for प्रतीतिभिः.

2. C. reads वाचिनाम् for वाचकानाम्.

3. C. om. तत्.

4. C. reads सिद्धद्रव्यस्य for सिद्धस्य; D. reads कस्यचित् after द्रव्यस्य. B D. om. कचित्.

5. B. D. read अवगम्यते for इष्यते; D. om. प्रत्यय.

7 E. reads अपि, D. अचिद्विशिष्ट, after जीवस्य; C. om. निर्देशविशेष; D. reads विशेषनिर्देश for निर्देशविशेष.

8. D. om. एव.

10. D reads हेयाः for अन्वयात्; D. reads स्व before शरीरगताः.

14. B. D. read सशरीरक for सशरीर.

विरोधो ब्रह्मणि निरवद्ये कल्याणैकतानेविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवोपपादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ।

यदुक्तं तस्यैष एव शारीर आत्मा ( तै. २।६ ) इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न संभवतीति । तदयुक्तम् । 5 अस्मिन्प्रकरणे सर्वत्र तस्यैष एव शारीर आत्मा । यः पूर्वस्य ( तै. २।३-४-५ ) इति परमात्मन एव शारीरात्मत्वाभिधानात् । कथम् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१ ) इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रतिज्ञातजीवव्यतिरेकस्यैकस्य ब्रह्मण आत्मत्वेन व्यपदेशात्तद्व्यतिरिक्ताकाशादीनाम- 10 न्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते । यस्य पृथिवी शरीरं यस्यापः शरीरं यस्य तेजः शरीरं यस्य वायुः शरीरं यस्याकाशः शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरमेष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः (सुबा.)इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते । अतस्तस्माद्वा एत- 15 स्मादात्मनः ( तै. २।१ ) इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः । प्राणमयं प्रस्तुत्याह । तस्यैष एव शारीर आत्मा। यः पूर्वस्य ( तै. २।३ ) इति । पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा स एव तस्य

1. B. reads निरवद्य for निरवद्ये.
2. C. reads विशेषणभूतर्जीवादि for विशेषणभूताज्जीवात्.
6. D. reads तस्मिन् for अस्मिन्.
9. C. reads प्रज्ञात for प्रतिज्ञात; B. reads व्यतिरिक्तस्य for व्यतिरेकस्य.
10. E. reads परस्य for एकस्य; C. reads परस्य after एकस्य.
17. D. reads अवगतम् for अवगतः.
19. B. reads कारणभूते for कारणभूतः; C. reads एषः for एव.

प्राणमयस्यापि शारीर आत्मेत्यर्थः । एवं मनोमयविज्ञानमययो-
र्द्रष्टव्यम् । आनन्दमये त्वेष एव ( तै. २।६ ) इति निर्देशस्त-
स्यानन्यात्मकत्वं दर्शयितुम् । तत्कथम् । विज्ञानमयस्यापि पूर्वो-
क्तया रीत्या परमात्मैव शारीर आत्मेत्यवगतः । एवं सति वि-
5 ज्ञानमयस्य यः शारीर आत्मा स एवानन्दमयस्यापि शारीर आ-
त्मेत्युक्त आनन्दमयस्याभ्यासावगतपरमात्मभावस्य परमात्मनः
स्वयमेवात्मेत्यवगम्यते । एवं च स्वव्यतिरिक्तचेतनाचेतनवस्तुजातं
स्वशरीरमिति स एव निरुपाधिकः शारीर आत्मा । अत ए-
वेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते ।
10 अतो विज्ञानमयाज्जीवादन्य एव परमात्मानन्दमयः ॥ १३ ॥

आह । नायमानन्दमयो जीवादन्यः । विकारशब्दस्य मयट्-
प्रत्ययस्य श्रवणात् । मयड्वैतयोः ( पा. सू. ४।३।१४३ ) इ-
ति प्रकृत्य नित्यं वृद्धशरादिभ्यः ( पा. सू. ४।३।१४४ ) इति
विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्दशब्दः । ननु प्राचुर्येपि
15 मयडस्ति । तत्प्रकृतवचने मयट् ( पा. सू. ५।४।२१ ) इति
स्मृतेः । यथान्नमयो यज्ञ इति । स एवायं भविष्यति । नैवम् ।
अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम । अत औचित्यादस्यापि
विकारार्थत्वमेव युक्तम् । किं च प्राचुर्यार्थत्वेपि जीवादन्यत्वं न

2. B. reads द्रष्टव्यः for द्रष्टव्यम्.

3. C. reads अनन्यात्मत्वम् for अनन्यात्मकत्वम्.

4. B. reads नीत्या for रीत्या; B. reads अवगतम्, D. अवगमः, for अवगतः.

7. B. reads व्यतिरिक्तम् for व्यतिरिक्त; C. reads अचेतनम् for अचेतन.

11. D. reads ननु for आह; C. om. अयम्.

16. D. reads मैवम् for नैवम्.

18. C. om. किं च; D. reads तत् for जीवात्.

मिध्यति । तथा हि । आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् । किंच लोके मृन्मयं दारुमयमित्यादिषु वेदे च पर्णमयी जुहूः ( तै. सं. ३।५।६ )। शमीमय्यः स्रुचः । दर्भमयी रशना ( तै. ब्रा. ३।८।२ ) इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात्स एव प्रथमतरं धियमारोहति । जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरूपस्य सतः संसारित्वावस्था तद्विकार एवेति। अतो विकारवचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति । तदेतदनुभाष्य परिहरति ।

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

नैतद्युक्तम् कुतः । प्राचुर्यात् । परस्मिन्ब्रह्मण्यानन्दप्राचुर्यात् । प्राचुर्यार्थे च मयटः संभवात् । एतदुक्तं भवति। शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासंभवाद्ब्रह्माश्रयोयमानन्द इति निश्चिते सति तस्मिन्ब्रह्मणि विकारासंभवात्प्राचुर्येपि मयड्विधिसद्भावाच्चानन्दमयः परं ब्रह्मेत्यौचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न संभवति। किंचौ-

1. D. reads तदा हि for तथा हि.
4. B. reads हिरण्मयम् after मृन्मयम्; B. D.E. read मृण्मयम् for मृन्मयम्; C. om. दारुमयम्.
7. D. reads प्रथमतराम् for प्रथमतरम्; B. reads अधिरोहति for आरोहति.
13. D. reads प्राचुर्यार्थेपि for प्राचुर्यात् । प्राचुर्यार्थे च; B. reads अपि for च; C. reads मयट्सद्भावात्, D. मयट्संभवात्, for मयटः संभवात्.
15. B. om. तस्मिन् ; C. reads विकारस्य for विकार.
16. B. D. om. विधि; C. reads संभवात् for सद्भावात्.

चित्यं प्राणमय एव परित्यक्तम् । तत्र विकारार्थत्वासंभवात् ।
अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम् ।
प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्रचुरत्वाद्वा । न
च प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति । अन्नमयो यज्ञः
5 शकटमयी यात्रेत्यादिदर्शनात् ।

यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति । तदसत् ।
तत्प्रचुरत्वं हि तत्प्रभूतत्वमेव । तच्चेतरस्य सत्तां नावगमयति ।
अपि तु तस्याल्पत्वं निवर्तयति । इतरसद्भावासद्भावौ तु प्रमा-
णान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते-
10 पहतपाप्मा ( छा. ८।१।५ ) इत्यादिना । तत्रैतावदेव वक्त-
व्यम् । ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्य स्वल्पत्वमपेक्षत इति ।
उच्यते च तत्स एको मानुष आनन्दः ( तै. २।८ ) इत्यादिना
जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति ।

यच्चोक्तं जीवस्यानन्दविकारत्वं संभवतीति । तदपि नोप-
15 पद्यते । जीवस्य ज्ञानानन्दैकस्वरूपस्य केनचिदाकारेण मृद इव
घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः । संसा-

---

2. B. D. read प्राणवत्ता for प्राणवृत्तिमत्ता.

3. D. reads पञ्च for पञ्चसु.

4. C. om. प्रत्ययस्य; D. reads शरमयी सेना after यज्ञः.

5. C. reads इत्यादिषु for इत्यादि.

7. C. om. एव.

11. C. reads ब्रह्मानन्द for ब्रह्मानन्दस्य; B. reads अल्पत्वम् for स्वल्पत्वम्; C. reads स्वल्पत्वापेक्षम् for स्वल्पत्वमपेक्षते.

12. C. om. आनन्दः.

15. D. reads गुण after एक.

16. B. om. आदि after घट.

रदशायां तु कर्मणा ज्ञानानन्दौ संकुचिताविल्युपपादयिष्यते । अतो विज्ञानमयाज्जीवादन्य एव परमात्मा ॥ १४ ॥

इतश्च जीवादन्य आनन्दमयः ।

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति ( तै. २।७ ) इत्येष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते । अतश्चानन्दयितव्याज्जीवादानन्दयितायमन्य आनन्दमयः परमात्मेति विज्ञायते । आनन्दमय एवात्रानन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥ १५ ॥

इतश्च जीवादन्य आनन्दमयः ।

## मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते । तत्तु जीवस्वरूपादन्यत्परं ब्रह्म । तथा हि । ब्रह्मविदाप्नोति परम् ( तै. २।१) इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् । तदेषाभ्युक्ता ( तै. २।१ ) इति तद्ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषाध्येतृभिरुक्ता ।

1. D. reads तत् before कर्मणा; C. D. read जीवानाम् after ज्ञानानन्दौ.
2. D. E. read अतश्चानन्दमयो जीवादन्यः परं ब्रह्म for अतो विज्ञानमयाज्जीवादन्य एव परमात्मा.
3. B. om. इतश्च जीवादन्य आनन्दमयः, C. reads इतश्चानन्दमयो जीवादन्यः परं ब्रह्म for इतश्च जीवादन्य आनन्दमयः.
8. B. om. आनन्दमयः.
14. B. om. तु after तत्.
17. B. D. read च after प्रतिपाद्यतया.

ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रवर्णेन क्रियत इत्यर्थः । जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव । अनन्तरं च तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१ ) इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते । अतो जीवादन्य
5 आनन्दमयः ॥ १६ ॥

अत्राह । यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यं तथापि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म । किं तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धं निर्विशेषचिन्मात्रैकरसं शुद्धस्वरूपं तदेव सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इति मन्त्रेण विशोध्यते ।
10 तदेव च यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह (तै.२।४,२।९) इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते । अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति । अत उत्तरं पठति ।

## नेतरोनुपपत्तेः ॥ १७ ॥

15 परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोपि न भवति मान्त्रवर्णिकः । कुतः । अनुपपत्तेः । तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते । इदमेव हि निरुपाधिकं विपश्चित्त्वं सोकामयत बहु स्यां प्रजायेयेति ( तै. २।६ ) इति सत्यसंकल्पत्वप्रदर्शनेन व्यपदिश्यते । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् ।
20 पृषोदरादित्वात्पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा

1. B. D. read मन्त्रेण for मन्त्रवर्णेन.
4. C. om. ब्राह्मणैः.
8. D. om. समस्त.
11. B. reads अव before गम्यते.
18. D. E. om. first इति.
19. E. reads विवरिष्यते for व्यपदिश्यते.

व्युत्पादितो विपश्चिच्छब्दः । यद्यपि मुक्तस्य विपश्चित्त्वं संभवति तथापि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरु-पाधिकं विपश्चित्त्वं नोपपद्यते । निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात्सुतरां विपश्चित्त्वं न संभवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम् । 5

यतो वाचो निवर्तन्ते (तै.२।४) इति च वाक्यं यदि वाङ्मनस-योर्ब्रह्मणो निवृत्तिमभिदधीत न ततो निर्विशेषतां वस्तुनोवगमयितुं शक्नुयात् । अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत् । तथा च सति तस्य तुच्छत्वमेवापद्यते । ब्रह्मविदाप्नोति (तै. २।१) इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वमानन्दैकतानत्वमि- 10 तरान्प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मत्वं भयाभयहेतुत्वं वाय्वादि-त्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वम-न्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितम् । यतो वाचो निवर्तन्ते 15 (तै. २।४) इति यच्छब्दनिर्दिष्टमर्थमानन्दं ब्रह्मणो विद्वान् (तै. २।४) इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसंबन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन पतिपाद्य तदेव वाङ्मनसागोचरं

1. C. reads अपि after मुक्तस्य.
2. C. reads निरुपाधिक for निरुपाधिकम्.
4. B. D. read असंभवात् for अभावात्.
6. C. E. read च after यदि.
7. C. D. om. न before ततः.
8. C. om. च after तथा.
9. B. D. read परम् after आप्नोति.
10. B. reads च after जगत्कारणत्वम्.
12. B. D. read तदात्मकत्वम् for तदात्मत्वम्.
16. E. om. अर्थम्.

विद्वानिति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं वाच्यानन्तर्गतं च स्यात् । अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयिततां वक्तुमुपक्रम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिर्यतो वाचो निवर्तन्ते ( तै. २।९ )
5 इत्युच्यते । एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान्कुतश्चन न बिभेतीत्युच्यते । किं चास्य मान्त्रवर्णिकस्य विपश्चितः सोकामयत ( तै. २।६ ) इत्यारभ्य वक्ष्यमाणस्वसंकल्पायत्तप्रजगज्जन्मस्थितिजगदन्तरात्मत्वादिर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ॥ १७ ॥

इतश्चोभयावस्थात्प्रत्यगात्मनोन्य आनन्दमयः ।

10 **भेदव्यपदेशाच्च ॥ १८ ॥**

तस्माद्वा एतस्मादात्मन आकाशः ( तै. २।१ ) इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति । तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः ( तै. २।५) इति । अतो जीवाद्भेदव्यपदेशाच्चायं
15 मान्त्रवर्णिक आनन्दमयोन्य एवेति विज्ञायते ॥ १८ ॥

इतश्च जीवादन्यः ।

**कामाच्च नानुमानापेक्षा ॥ १९ ॥**

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीयमानुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा । तथैव हि चतुर्मु-
20 खादीनां कारणत्वम् । इह च सोकामयत । बहु स्यां प्रजायेय

3. C. reads अतिशयेयत्ताम्, D. अतिशयिताम्, for अतिशयिनताम्; B. D. read उद्यम्य for उपक्रम्य; D. reads इयत्ता for इयत्तायाः.

11. B. D. om. आकाशः.

15. C. reads अन्य आनन्दमयः for आनन्दमयोन्यः.

18. E. om. हि.

19. D. reads च after संसर्गापेक्षा.

(तै. २।६) इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिद-चिद्वस्तुनः सृष्टिरिदं सर्वमसृजत। यदिदं किं च (तै. २।६) इत्याम्नायते। अतोस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचि-द्वस्तुसंसर्गापेक्षा प्रतीयते। ततश्च जीवादन्य आनन्दमयः॥१९॥

इतश्च जीवादन्यः। 5

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्नानन्दमयेस्य जीवस्य तद्योगं शास्त्यानन्दयोगं शास्ति शास्त्रं रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति (तै. २।७) इति। रसशब्दाभिधेयानन्दमयलाभादयं जीवश-ब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने यल्लाभाद्य आनन्दी 10 भवति स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः।

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति यदेष आकाश आनन्दो न स्यात् (तै. २।७)। विज्ञानमानन्दं ब्रह्म (बृ. ३।९।२८) इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते। यथा विज्ञान-शब्देन विज्ञानमयः। अत एवानन्दं ब्रह्मणो विद्वान् (तै. २।४, २।९) 15 इति व्यतिरेकनिर्देशः। अत एवैतमानन्दमयमात्मानमुपसंक्रामति (तै. २।८) इति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाको-क्तानामन्नमयादीनामन्नं ब्रह्मेति व्यजानात् (तै. ३।२)। प्राणो

---

1. B. reads कामात् for स्वकाम
2. B. reads वस्तु for वस्तुनः.
4 D. E. read अतः for अतः
5 B. D. om. जीवादन्यः.
7. D. E. read च after अस्य; B. D. om. शास्ति after तद्यो
13. B. D. om. न स्यात्
14. C. reads यदा for यथा.
16. C. reads च for एतम्.
18. C. reads उक्त for उक्ता

ब्रह्मेति व्यजानात् (तै. ३।३) । मनो ब्रह्मेति व्यजानात् (तै. ३।४)। विज्ञानं ब्रह्मेति व्यजानात् (तै. ३।५) इति प्रतिपादनादानन्दो ब्रह्म (तै. ३।६) इत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते। तत एव च तत्राप्यानन्दमयमात्मानमुपसंक्रम्य (तै. ३।१०।५)
5 इत्युपसंहृतम् । अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोर्थान्तरत्वं सिद्धम् । आनन्दमयाधिकरणं समाप्तम् ॥ २० ॥ (६)

यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिरतिशयिता-नन्दयोगो भयाभयहेतुत्वमित्यादि न संभवति तथापि विल-
10 क्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां संभवत्येवेतीमामाशङ्कां निराकरोति ।

## अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

इदमाम्नायते छान्दोग्ये । य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः। तस्य
15 यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क्च साम च गेष्णौ । ....इत्यधिदैवतम् (छा. १।६।६-७-८) । अथाध्यात्ममपि । अथ य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम च तदुक्थं तद्यजुस्तद्ब्रह्म । तस्यै-
20 तस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम

1. C. om. मनो ब्रह्मेति व्यजानात्.
2. D. om. विज्ञानं ब्रह्मेति व्यजानात्.
4. D. E. om. च.
10. D. reads चन्द्र after इन्द्र.
17. D. om. च after ऋक्.
18. D. om. अपि.
19. D. om. च.
19–20. B. om. एतस्य after तस्य; D. reads एतत् for तत्.

तन्नाम (छा. १।७।५) इति । तत्र संदिह्यते । किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्ये आदित्यादिशब्दाभिलप्यो जीव एवाहोस्वित्तदतिरिक्तः परमात्मेति । किं युक्तम् । उपचितपुण्यो जीव एवेति । कुतः। सशरीरत्वश्रवणात् । शरीरसंबन्धो हि जीवानामेव संभवति । कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसंबन्धः । अत एव हि कर्मसंबन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः(छा. ८।१२।१) इति । संभवति च पुण्यातिशयाज्ज्ञानाधिक्यं शक्त्याधिक्यं च । अत एव लोककामेशत्वादि तस्यैवोपपद्यते । तत एव चोपास्यत्वं फलदायित्वं पापक्षपणकरत्वेन मोक्षोपयोगित्वं च । मनुष्येष्वप्युपचितपुण्याः केचिज्ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते । ततश्च सिद्धगन्धर्वादयस्ततश्च देवास्ततश्चेन्द्रादयः । अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन्कल्पे पुण्यविशेषेणैव प्रभूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते । अतो न जीवातिरिक्तः परमात्मा नाम

B. reads अन्तर्वर्ति, D. अन्तरवर्नी, for अन्तर्वर्ती.

E. reads एवः after एव.

4. B. reads पुण्यविशेषः for पुण्यः; C. reads सशरीर for सशरीरत्व.

6. D. reads योगायत्तः for योगाय.

11. D. reads अतः for ततः; B. om. च after एव; D. E. read च after फलदायित्वम्; D. reads क्षय for क्षपण.

14. B. reads उपचित before पुण्य.

15. C. reads एवंभूतम्, D. एवं प्रभूतम्, for एव प्रभूतम्.

17. B. reads जीवान्नातिरिक्तः, C. जीवादनतिरिक्तः, for न जीवातिरिक्तः.

कश्चिदस्ति। एवं च सत्यस्थूलमनण्वह्रस्वम् (बृ. ३।८।८) इ-
त्यादयो जीवात्मनः स्वरूपाभिप्राया भवन्ति। मोक्षशास्त्राण्यपि
तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीति। एवं प्राप्तेऽभिधीयते।

अन्तस्तद्धर्मोपदेशात्। अन्तरादित्येऽन्तरक्षिणि च यः पु-
5 रुषः प्रतीयते स जीवादन्यः परमात्मैव। कुतः। तद्धर्मोपदे-
शात्। जीवेष्वसंभवँस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहत-
पाप्मत्वादिः स एष सर्वेभ्यः पाप्मभ्य उदितः (छा. १।६।७)
इत्यादिनोपदिश्यते। अपहतपाप्मत्वं ह्यपहतकर्मत्वं कर्मव-
श्यतागन्धरहितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन क-
10 र्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन
एव धर्मः। तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वं सत्यसंक-
ल्पत्वादिकं सर्वभूतान्तरात्मत्वं च तस्यैव धर्मः। यथाह। एष
आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः
सत्यकामः सत्यसंकल्पः (छा. ८।१।५) इति। तथैष सर्व-
15 भूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः (सुबा-
लोप.) इति। सोऽकामयत। बहु स्यां प्रजायेय (तै. २।६) इत्यादि-
सत्यसंकल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिक-
भयाभयहेतुत्वं वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिका-
तिशयानन्दयोग इत्यादयोऽकर्मसंपाद्याः स्वाभाविका धर्मा जी-
20 वस्य न संभवन्ति।

2 D. E. read एव after जीवात्मनः; C. om. अपि.

11. C. reads मोहरहितत्वम् for लोककामेशत्वम्.

12. D. reads अस्यैव for तस्यैव.

16. C. reads इत्यादिना for इत्यादि.

18. C. reads श्रुत, B. कृति, for कृत; D. reads रहितता for रहित.

यत्तु शरीरसंबन्धान्न जीवातिरिक्त इत्युक्तं तदयुक्तम्। न हि सशरीरत्वं कर्मवश्यतां साधयति। सत्यसंकल्पस्येच्छयापि शरीरसंबन्धसंभवात्। अथोच्येत शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसंघातः। तत्संबन्धश्चापहतपाप्मनः सत्यसंकल्पस्य पुरुषस्येच्छया न संभवति। अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोपि तत्संबन्धोवर्जनीय इति। स्यादेतदेवं यदि त्रिगुणमयः प्राकृतोस्य देहः स्यात्। स तु स्वाभिमतः स्वानुरूपोप्राकृत एवेति सर्वमुपपन्नम्।

एतदुक्तं भवति। परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तकल्याणगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति। अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यजलनिधिर्निरस्तनिखिलहेयगन्धोपहतपाप्मा प-

1. B. D. read तदसत् for तदयुक्तम्.
2. D. reads शरीरवत्त्वम् for सशरीरत्वम्.
5. B. reads अपि after इच्छया.
6. D. om. स्व.
7. D. reads गुणत्रय for त्रिगुण.
8. D. reads स्वाभिमत for स्वाभिमतः.
12. B. reads गुणाः for गुणगणाः.
13. C. reads स्वाभाविकस्वत्वरूप for स्वाभिमतानुरूप.
14. C. E. om. कल्याण.
C. om. औदार्यैश्वर्य; B. om. ऐश्वर्य; D. reads जलधिः for जलनिधिः.

रमात्मा परं ब्रह्म पुरुषोत्तमो नारायण इति यतो वा इमानि भूतानि जायन्ते (तै. ३।१।१) । सदेव सोम्येदमग्र आसीत् (छा. ६।२।१)। आत्मा वा इदमेक एवाग्र आसीत् (ऐ. १।१)। एको ह वै नारायण आसीत्। न ब्रह्मा नेशानः (म. १) इत्या-
5 दिषु निखिलजगदेककारणतयावगतस्य परस्य ब्रह्मणः सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१) । विज्ञानमानन्दं ब्रह्म (बृ.३।९।२८) इत्यादिष्वेवंभूतं स्वरूपमित्यवगम्यते । निर्गुणम् (चू. ७।२)। निरञ्जनम् (श्वे. ६।१९)। अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः (छा.८।१।५)।

10 न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
(श्वे. ६।८)

तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।
(श्वे. ६।७)

15 स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः।
(श्वे. ६।९)

सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते।
(तै. आ. ३।१२)

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
20 (श्वे. ३।८)

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि (म. ना. १।८) इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान्प्राकृतहेयदेहसंबन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान्कल्याण-

7. C. reads एवंरूपम् for एवंभूतम्.

8. B. om. विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः.

23. C. reads गन्धम् for संबन्धम्.

रूपं च वदति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान् । तदिदमाह श्रुतिरजायमानो बहुधा विजायते (तै. आ. ३।१२) इति । स्मृतिश्च ।

अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् । 5
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ (गी. ४।६)
परित्राणाय साधूनां विनाशाय च दुष्कृताम् । (गी. ४।८)
इति ।

साधवो ह्युपासकास्तत्परित्राणमेवोद्देश्यम् । आनुषङ्गिको दुष्कृतां विनाशः । संकल्पमात्रेणापि तदुपपत्तेः । प्रकृतिं स्वामिति । प्रकृतिः स्वभावः । स्वमेव स्वभावमास्थाय । न संसारिणां स्वभावमित्यर्थः । आत्ममाययेति । स्वसंकल्पमात्ररूपेण ज्ञानेनेत्यर्थः । माया वयुनं ज्ञानमिति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते । आह च भगवान्पराशरः । 10

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । 15
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्यचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
(वि. पु. ६।७।६९-७१) इति । 20

2. B. reads प्रतिपन्न for प्रतिपत्ति.
6. E. reads इति after आत्ममायया.
9. D. reads तु after आनुषङ्गिकः.
11. B. reads स्वयमेव भावम् for स्वमेव स्वभावम्.
12. C. om. स्व before संकल्प; D. E. om. मात्र.
16. D. reads तद्धि स्वरूप for तद्विश्वरूप.
20. D. reads अवताररूपस्याप्राकृतत्वमुच्यते after इति.

महाभारते चार्चावताररूपस्याप्यप्राकृतत्वमुच्यते ।

न भूतसंघसंस्थानो देहोस्य परमात्मनः ।

इति । अतः परस्यैव ब्रह्मण एवंरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाक्ष्यधिकरण आदित्यादिजीवातिरिक्तः
5 परमात्मैव ॥ २१ ॥

## भेदव्यपदेशाच्चान्यः ॥ २२ ॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेस्य परमात्मनः । य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति ( बृ. ३।७।९ ) । य आत्मनि
10 तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति ( बृ. ३।७।२२ ) । यस्याक्षरं शरीरं यमक्षरं न वेद । यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरीरं यं मृत्युर्न वेद । एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः ( सुबालोप. ) इति चास्यापहतपाप्मनः परमात्मनः सर्वा-
15 ञ्जीवाञ्छरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति । अतः सर्वेभ्य एवादित्यादिजीवेभ्योन्य एव परमात्मेति सिद्धम् । अन्तरधिकरणं समाप्तम् ॥ २२ ॥ (७)

यतो वा इमानि भूतानि जायन्ते ( तै. ५।१।१ ) इति जगत्कारणं ब्रह्मेत्यवगम्यते । किं तज्जगत्कारणमित्यपेक्षायां सदेव
20 सोम्येदमग्र आसीत् । ... तत्तेजोसृजत ( छा. ६।२।२-३ )। आत्मा

1. E. reads अप्यवतार for चार्चावतार.

14. D. reads अस्मादपि for अस्य.

15. C. om. जीवान्; E. reads एवम् for एनम्.

16. D. reads हिरण्यगर्भादि for एवादित्यादि; C. reads देवेभ्यः for जीवेभ्यः.

18. B. om. भूतानि जायन्ते.

वा इदमेक एवाग्र आसीत्।···सइमाँल्लोकानसृजत (ऐ. १।१-२)। तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१ ) इति साधारणैः शब्दैर्जगत्कारणे निर्दिष्ट ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम् । इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेस्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यत आकाशस्तल्लिङ्गादित्यादिना पादशेषेण ।

## आकाशस्तल्लिङ्गात् ॥ २३ ॥

इदमाम्नायते छान्दोग्येस्य लोकस्य का गतिरित्याकाश इति होवाच । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणम् ( छा. १।९।१ ) इति । तत्र संदेहः । किं प्रसिद्धाकाशमेवात्राकाशशब्देनाभिधीयत उतोक्तलक्षणमेव ब्रह्मेति । किं प्राप्तम् । प्रसिद्धाकाश इति । कुतः । शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते स एव ग्रहीतव्यः । अतः प्रसिद्धाकाश एव चराचरात्मकभूतजातस्य कृत्स्नस्य कारणम् । अतस्तस्मादनतिरिक्तं ब्रह्म ।

नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम् । सत्यमुक्तम् । दुरुक्तं तु तत् । तथा हि । यतो वा इमानि भूतानि जायन्ते।···तद्ब्रह्म ( तै. ३।१ ) इत्युक्ते कुत इ-

---

12. D. reads भूतेभ्यः after एभ्यः; E. reads एतेभ्यो भूतेभ्यः for एभ्यः.

11. D. reads आकाशः for आकाशम्.

17. B. reads अत्र after प्रसिद्धाकाश एव.

20. C. reads अयुक्तम् for दुरुक्तम्.

मानि भूतानि जायन्त इत्यादिविशेषापेक्षायां सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते (छा. १।९।१) इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चीयते। सदेव सोम्येदमग्र आसीत् (छा. ६।२।१) इत्यादिष्वपि सदा-
5 दिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधति। आत्मा वा इदमेक एवाग्र आसीत् (ऐ. १।१) इत्यादिष्वप्यात्मशब्दस्तत्रैव वर्तते। तस्यापि हि चेतनैकान्तत्वं न संभवति। यथा मृदात्मको घट इति। आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेप्यात्मशब्दो वर्तते। अत एवमाकाश एव कारणं ब्रह्मेति
10 निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः। यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यतेक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत। आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति।

नन्वात्मन आकाशः संभूतः (तै. २।१) इत्याकाशस्यापि
15 कार्यत्वं प्रतीयते। सत्यम्। सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणं स्थूलावस्था तु कार्यम्। आत्मन आकाशः संभूतः (तै. २।१) इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपः संभूत इ-

---

1. D. E. read आकाङ्क्षायाम् for अपेक्षायाम्.

3. D. E. read निश्चिते for निश्चीयते.

4 B. om. सोम्येदमग्र आसीत.

6. B. om. इदमेक एवाग्र आसीत्; B. D. read आत्मशब्दोपि for अप्यात्मशब्दः.

8. D, om. व्युत्पत्त्या.

11. D. reads इव for एव; C. om. सदादिभिः.

12. B. D. read निरदेक्ष्यत for निरचेष्यत.

17. C. om. तु.

18, B. reads तस्मात् for स्वस्मात्.

ऽर्थः। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते (छा. १।९।१) इति सर्वस्य जगत आकाशादेव प्रभवाप्ययादिश्रवणात्तदेव हि जगत्कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्मात एव यदेष आकाश आनन्दो न स्यात् (तै. २।७)। आकाशो ह वै नामरूपयोर्निर्वहिता (छा. ८।१४।१) इत्येवमादिनिर्देशोऽप्युपपन्नतरः। अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेत्येवं प्राप्ते ब्रूमः। 5

आकाशस्तल्लिङ्गात्। आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव। कुतः। तल्लिङ्गात्। निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते। निखिलजगदेककारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते। चेतनवस्तुनस्तत्कार्यत्वासंभवात्। परायणत्वं च चेतनानां परमप्राप्यत्वम्। तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न संभवति। सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते। 10 15

यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति तदयुक्तम्। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते (छा. १।९।१) इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्ति- 20

3. B. D. om. हि; C. om. जगत्.

6. C reads उपपन्नः for उपपन्नतरः.

9. B. om. अचेतनात्.

11. C. E. om. जगदेक.

15. C. reads निरुपाधिकैः for निरुपाधिकम्.

18. C. reads अनुरूपत्वेन for अनुरूपमेव.

मपेक्षते । प्रमाणान्तराणि च सदेव सोम्येदमग्र आसीत् (छा. ६।२।१) इत्येवमादीन्येव वाक्यानि । तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्माकाशशब्देन प्रसिद्धवन्निर्दिश्यते । संभवति च परस्य ब्रह्मणः प्रकाशकत्वा-
5 दाकाशशब्दाभिधेयत्वम् । आकाशत आकाशयति चेति । किं चानेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसंभावितकारणभावमचेतनविशेषमभिदधानेन तदैक्षत । बहु स्यां प्रजायेयेति (छा. ६।२।३) । सोकामयत । बहु स्यां प्रजायेय (तै. २।६) इत्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यसंक-
10 ल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादरूपेणान्यथाकर्तुं न शक्यते ।

यत्त्वात्मशब्दश्चेतनैकान्तो न भवति । मृदात्मको घट इत्या-
15 दिषु दर्शनादित्युक्तं तत्रोच्यते । यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते तथापि शरीरप्रतिसंबन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यादात्मा वा इदमेक एवाग्र आसीत् (ऐ. १।१) । आत्मन आकाशः संभूतः (तै. २।१) इत्यादिषु शरीरप्रतिसंबन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवाचित्वेपि
20 प्रयोगप्राचुर्यात्सास्नादिमानेव स्वतः प्रतीयते । अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा । तथा स्वतः प्राप्तं शरीरप्रति-

---

1. C. reads अवेक्षते for अपेक्षते.

5. C. reads प्रकाशयति for आकाशयति.

6. C. reads विशेषण for विशेष.

12. C. reads स्वरूपेण, E. सरूपेण, for रूपेण.

14 D. E. read संभवति for भवति.

संबन्धिचेतनाभिधानमेव स ऐक्षत लोकान्नु सृजै ( ऐ. १।१ ) इति सोकामयत। बहु स्यां प्रजायेय ( तै. २।६ ) इत्यादितत्तद्वाक्यशेषा एव स्थिरीकुर्वन्ति । एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इतिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत्सर्वाणि ह वा इमानि भूतानि ( छा. १।९।१ ) इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् । समाप्तमाकाशाधिकरणम् ॥ २३ ॥ ( ८ )

## अत एव प्राणः ॥ २४ ॥

इदमाम्नायते छान्दोग्ये । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ( छा. १।१०।९ ) इति प्रस्तुत्य कतमा सा देवता इति । प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् ( छा. १।११।४-५ ) इति । अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते । तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु कृत्स्नभूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति । परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ( छा. १।११।५ ) इति नोपप-

4. C. reads इत्यादि for इदमग्र आसीदिति.

11. D. reads सा कतमा for कतमा सा.

17. D. reads अत्र after तु; B. reads कृत्स्नस्य for कृत्स्न.

20. C. reads एतदभावात् for तदभावात्.

द्यत इति । अतः प्राणयन्ति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसंकल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सि-
5 द्धम् । समाप्तं प्राणाधिकरणम् ॥ २४ ॥ ( ९ )

अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेति प्रतिपाद्यते ज्योतिश्चरणाभिधानादित्यादिना ।

## ज्योतिश्चरणाभिधानात् ॥ २५ ॥

10 इदमाम्नायते छान्दोग्येथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेपूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः ( छा. ३।१३।७ ) इति । तत्र संशयः । किमयं ज्योतिःशब्दनिर्दिष्टो निरतिशयदीप्तियुक्तोर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतब्रह्मोत समस्तचिदचिद्वस्तु-
15 जातविसजातीयः परमकारणभूतोमितभाः सर्वज्ञः सत्यसंकल्पः पुरुषोत्तम इति । किं युक्तम् । प्रसिद्धमेव ज्योतिरिति । कुतः । प्रसिद्धवन्निर्देशेप्याकाशप्राणादिशब्दवत्स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्परमपुरुषप्रत्यभिज्ञानासंभवात्कौक्षेयकज्यो-

---

1. D. om. कृत्वा.
6. B. reads आदि after जगत्कारणत्व; D. reads एकेन for येन केन.
7. C. reads अर्थान्तरे for अर्थान्तर.
8. B. reads पर for परम्; C. reads अभिधीयते for प्रतिपाद्यते.
11. B. reads उत्तमेष्वनुत्तमेषु for अनुत्तमेपूत्तमेषु.
12. D. E. read संदेहः for संशयः.
13. C. reads शब्देन for शब्द.
14. D. reads कारणभूतम् for कारणभूत; C. om. चिदचित्.
17. E. om. शब्द.
18. D. reads कौक्षेय for कौक्षेयक.

तिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिःकारणत्वव्याप्तनिरतिशय-
दीप्तियोगाज्जगत्कारणं ब्रह्मेति प्राप्ते प्रचक्ष्महे ।

ज्योतिश्चरणाभिधानात् । द्युसंबन्धितया निर्दिष्टं निरतिशय-
दीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः ।

पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । (छा. ३।१२।६) 5
इत्यस्यैव द्युसंबन्धिनश्चरणत्वेन सर्वभूतानामभिधानात् । ए-
तदुक्तं भवति । यद्यप्यथ यदतः परो दिवो ज्योतिर्दीप्यते (छा.
३।१३।७) इत्यस्मिन्वाक्ये परमपुरुषासाधारणं लिङ्गं नोपल-
भ्यते तथापि पूर्ववाक्ये द्युसंबन्धितया परमपुरुषस्य निर्देशादि-
दमपि द्युसंबन्धिज्योतिः स एवेति प्रत्यभिज्ञायत इति । कौक्षे- 10
यज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसंधानविधिरिति न
कश्चिद्दोषः । कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम् ।

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । (गी. १५।१४)
इति ॥ २५ ॥

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमा- 15
त्तथा हि दर्शनम् ॥ २६ ॥**

पूर्वस्मिन्वाक्ये गायत्री वा इदं सर्वम् (छा. ३।१२।१)
इति गायत्र्याख्यं छन्दोभिधाय तदेतदृचाभ्युक्तम् (छा. ३।१२।५)

---

2. B. reads च after दीप्तियोगात्; C. om. जगत्; D. E. read एवम् after इति.

5. C. reads विश्वा for सर्वा.

6. C. reads सर्वभूत for सर्वभूतानाम्.

7. C. om. दीप्यते.

8. D. reads असाधारण for असाधारणम्.

9. D. E. read पुरुष for पुरुषस्य.

11. C. om. च.

18. C. reads अभ्यनूक्तम् for अभ्युक्तम्.

इत्युदाहृतायास्तावानस्य महिमा ( छा. ३।१२।६ ) इत्यस्या ऋचोपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत्तन्न । तथा चेतोर्पणनिगमात् । न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते । छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः । अपि तु ब्रह्मण
5 एव गायत्रीचेतोर्पणमिह निगम्यते । ब्रह्मणि गायत्रीसादृश्यानुसंधानं फलायोपदिश्यत इत्यर्थः । संभवति च

पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । (छा. ३।१२।६) इति चतुष्पदो ब्रह्मणश्चतुष्पदाया गायत्र्याः सादृश्यम् । चतुष्पदा च गायत्री क्वचिद्दृश्यते । तद्यथा ।

10 इन्द्रः शचीपतिर्बलेन पीडितः ।

दुश्च्यवनो वृषा समित्सु सासहिरिति ।

तथा ह्यन्यत्रापि सादृश्याच्छन्दोभिधायिशब्दोर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायां ते वा एते पञ्चान्ये पञ्चान्ये दश संपद्यन्ते ( छा. ४।३।८ ) इत्यारभ्य सैषा विराडन्नादी ( छा. ४।३।८ ) इत्युच्यते ॥ २६ ॥
15

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते ।

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदा ( छा.

---

1. B. reads एतावान् for तावान्.
2. D. E om. तत् after चेत्.
7. B. reads विश्वा for सर्वा.
8. D. reads चतुष्पदया गायत्र्या, E. चतुष्पदा गायत्र्या च for चतुष्पदाया गायत्र्याः.
12. D. E. read अभिधायी for अभिधायि.
13. D. reads च after यथा; D. reads च after एते पञ्च.
15. C. reads अन्नादिति, D. अन्नादिः, for अन्नादी.
16. B. om. एव.

३।१२।५ ) इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते ॥ २७ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

पूर्ववाक्ये त्रिपादस्यामृतं दिवि ( छा. ३।१२।६ ) इति दिवोधिकरणत्वेन निर्देशादिह च दिवः परः ( छा. ३।१३।७ ) 5 इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्तन्न । उभयस्मिन्नप्युपदेशेर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात् । यथा वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति । तस्मात्परमपुरुष एव निरतिशयतेजस्को दिवः परो ज्योतिर्दीप्यते ( छा. ३।१३।७ ) इति प्रति- 10 पाद्यते ।

तावानस्य महिमा अतो ज्यायांश्च पूरुषः ।
पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ (छा. ३।१२।६)

इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । 15
( तै.आ. ३।१२ )

इत्यभिहिताप्राकृतरूपस्य तेजोप्यप्राकृतमिति तद्वत्तया स एव ज्योतिःशब्दाभिधेय इति निरवद्यम् । समाप्तं ज्योतिरधिकरणम् ॥ २८ ॥ ( १० )

निरतिशयदीप्तियुक्तं ज्योतिःशब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं 20 परमपुरुष एवेत्युक्तम् । इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपाय-

4. C. reads पूर्वस्मिन् for पूर्व.
7. D. E. om. तत् after चेत्.
8. C. reads प्रत्यभिज्ञान for प्रत्यभिज्ञायाः.
17. D. reads अत्र before अभिहित.

तयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोपि परमपुरुष एवेत्याह ।

## प्राणस्तथानुगमात् ॥ २९ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायां प्रतर्दनो ह वै दैवोदासिरि-
5 न्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च (कौ. ३।१) इत्या-
रभ्य वरं वृणीष्व (कौ. ३।१) इति वक्तारमिन्द्रं प्रति त्वमेव मे वरं
वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ( कौ. ३।१ ) इति प्र-
तर्दनोक्तः स होवाच प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्यु-
पास्स्व ( कौ. ३।२ ) इति श्रूयते । तत्र संशयः । किमयं हित-
10 तमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एवोत तदति-
रिक्तः परमात्मेति । किं युक्तम् । जीव एवेति । कुतः । इन्द्र-
शब्दस्य जीवविशेष एव प्रसिद्धेः । तत्समानाधिकरणस्य प्राण-
शब्दस्यापि तत्रैव वृत्तेः । अयमिन्द्राभिधानो हि जीवः प्रतर्द-
नेन त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ( कौ.
15 ३।१ ) इत्युक्तो मामुपास्स्वेति स्वात्मोपासनं हिततममुपदिदेश।
हिततमश्चामृतत्वप्राप्त्युपाय एव । जगत्कारणोपासनस्यैवामृत-
त्वप्राप्त्युपायता तस्य तावदेव चिरं यावन्न विमोक्ष्येथ सं-
पत्स्ये ( छा. ६।१४।२ ) इत्यवगता । अतः प्रसिद्धजीवभाव
इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते।

1. B. reads इति after श्रुतः; D. om. आदि after प्राण.
6. B. D. om. मे.
8. D. E. read प्रतर्देनेन for प्रतर्दन; C. reads उक्ते for उक्तः.
9. B. reads अत्र for तत्र.
12. B. reads अपि प्राणशब्दस्य for प्राणशब्दस्यापि.
13. C. reads प्रवृत्तेः for वृत्तेः; C. om. हि.
17. B. reads हेतुत्वम्, D. उपायतया for उपायता.
18. E. D. read अवगतम् for अवगता.

प्राणस्तथानुगमादिति । अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम् । अपि तु जीवादर्थान्तरभूतं परं ब्रह्म । स एष प्राण एव प्रज्ञात्मानन्दोजरोमृतः ( कौ. ३।८ ) इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ॥ २९ ॥　5

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ ३० ॥**

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टस्यानन्दोजरोमृत इत्यनेनैकार्थ्यादयं परं ब्रह्मेति तन्नोपपद्यते । मामेव विजानीहि प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व ( कौ. ३।२ ) इति वक्ता　10 हीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रमहनम् ( कौ. ३।१ ) इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति । अत उपक्रमे जीवविशेष इत्यवगते सत्यानन्दोजरोमृतः ( कौ. ३।८ ) इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्परिहरति ।　15

अध्यात्मसंबन्धभूमा ह्यस्मिन् । आत्मनि यः संबन्धःसोध्यात्मसंबन्धः। तस्य भूमा भूयस्त्वं बहुत्वमित्यर्थः । आत्मन्याधेयतया संबध्यमानानां बहुल्येन संबन्धबहुत्वम् । तच्चास्मिन्वक्तरि परमात्मन्येव हि संभवति । तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः　20 प्राणेर्पिताः । स एष प्राण एव प्रज्ञात्मानन्दोजरोमृतः ( कौ.

2. C. om. परम्.
12. B. reads उपास्यत्वम् for उपास्यताम्.
13. D. reads एव गम्यते, E. अवगम्यते, for अवगते.
14. C. om. आदिभिः.
16. D. om. सोध्यात्मसंबन्धः.

३।८ ) इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेवानन्दोजरोमृत इत्युपदिशति । तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेस्मिन्परमात्मन्येवोपपद्यत इत्यर्थः ।

अथवाध्यात्मसंबन्धभूमा ह्यस्मिन् । परमात्मासाधारणधर्मसंबन्धोध्यात्मसंबन्धः । तस्य भूमा बहुत्वं ह्यस्मिन्प्रकरणे विद्यते । तथा हि । प्रथमं त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ( कौ. ३।१ ) इति मामुपास्स्वेति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते । तथैष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति तं यमधो निनीषति ( कौ. ३।८ ) इति सर्वस्य कर्मणः कारयितृत्वं परमात्मधर्मः । तथा तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेर्पिताः ( कौ. ३।८ ) इति सर्वाधारत्वं च तस्यैव धर्मः । तथा स एष प्राण एव प्रज्ञात्मानन्दोजरोमृतः ( कौ. ३।८ ) इत्येतेपि परमात्मन एव धर्माः । एष लोकाधिपतिरेष सर्वेश्वरः ( कौ.

3. C. reads आदि after प्राण.

5. C. reads हि after अर्थान्तरभूते; D. E. read तस्मिन् for अस्मिन्.

7. D. E. om. हि after बहुत्वम्.

9. C. om. च.

11. C. reads हि after तथा; B. reads हि after एषः.

13. C. reads सर्व for सर्वस्य; D. E. read च after कारयितृत्वम्.

17. B. om. सः; C. om. अपि.

18. D. E. read ईशः for ईश्वरः.

३।८) इति च परमात्मन्येव संभवति । तदेवमध्यात्मसंबन्धभूम्नोत्र विद्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः संगच्छते तत्राह ।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥** 5

प्रज्ञातजीवभावेनेन्द्रेण मामेव विजानीहि मामुपास्स्व (कौ. ३।२) इत्युपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः । अपि तु शास्त्रेणैव स्वात्मदृष्टिकृतः । एतदुक्तं भवति । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२)। ऐतदात्म्यमिदं सर्वम् (छा. ६।८।७)। 10 अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा (तै. आ. ३।११।२)। य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः (बृ. ३।७।२२)। य आत्मनि संचरन्यस्यात्मा शरीरं यमात्मा न वेद। एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः 15 (सुबालोप.) इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानां परमात्मन्येव पर्यवसानं ज्ञात्वा मामेव विजानीहि मामुपास्स्व (कौ. ३।२) इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेशेति ।

---

3. C. reads उपास्यत्वेन for उपास्यत्व.
4. C. reads संगंस्यते for संगच्छते; D. E. read इत्यत्र for तत्र.
6. B. reads एव after विजानीहि माम्.
7. D. reads उपास्य for उपास्यस्य.
8. D. E. om. एव.
13. D. E. om. स त आत्मान्तर्याम्यमृतः। य आत्मनि संचरन्यस्यात्मा शरीरं यमात्मा न वेद.
16. E. reads शरीरम् for शरीरकम्.
19. D. reads उपदिशति for उपदिदेशेति.

वामदेववत् । यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानं पश्यन्नहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन्व्यपदिशति तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेहं मनुरभवं सूर्यश्च ( बृ. १।४।१० ) । अहं कक्षीवानृषिर्विप्र इत्यादि । यथा च प्रह्लादः

सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥ (वि.पु.१।१९।८५)

इत्यादि वदति ॥ ३१ ॥

अस्मिन्प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोभिधाने कारणं चोद्यपूर्वकमाह ।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥**

न वाचं विजिज्ञासीत । वक्तारं विद्यात् ( कौ.३।८ )। त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्छालावृकेभ्यः प्रायच्छम् ( कौ. ३।१ ) इत्यादिजीवलिङ्गाद्यावदस्मिन्छरीरे प्राणो वसति तावदायुः ( कौ. ३।२ ) । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति ( कौ. ३।३ ) इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसंबन्धभूमेति चेन्न । उपासात्रैविध्याद्धेतोः । उपास-

2. C. reads च after शब्दानाम्.

6. B. D. read अस्मि after ऋषिः; B. reads वत् । यथा वामदेव इति प्रसिद्धो रुद्रः सोऽब्रवीदहमेव प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिवत् after इत्यादि.

9. D. reads इत्यादिवदति for इत्यादि वदति.

11. D. om. परस्य.

13. D. reads च after इह.

19. E. reads इति after इति.

नात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम् । निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणानुसंधानं भोक्तृवर्गशरीरकत्वानुसंधानं भोग्यभोगोपकरणशरीरकत्वानुसंधानं चेति त्रिविधमनुसंधानमुपदेष्टुमित्यर्थः ।

तदिदं त्रिविधं ब्रह्मानुसंधानं प्रकरणान्तरेष्वप्याश्रितम् । सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) । आनन्दो ब्रह्म ( तै.३।६ ) इत्यादिषु स्वरूपानुसंधानम् । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ( तै. २।६ ) इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसंधानम् । इहापि प्रकरणे त्रिविधमनुसंधानं युज्यत एवेत्यर्थः । एतदुक्तं भवति । यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगस्तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसंधानं प्रतिपिपादयिषितमिति । अतोत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् । समाप्तमिन्द्रप्राणाधिकरणम् ॥ ३२ ॥ ( ११ ) इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयस्य प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

---

1. D. E. read कारणभूत for कारणभूतस्य.
2. D. E. read शरीरकत्वेन for शरीरकत्व.
5. D. E. read प्रकरणान्तरे for प्रकरणान्तरेषु.
11. E. reads तत् before त्रिविधम्.
14. B. reads वाचिभिः for वाचि; D. reads शब्द for शब्दैः.
17. B. reads अर्थान्तरः for अर्थान्तरभूतः.

# अथ श्रीभाष्ये



## प्रथमाध्याये द्वितीयः पाद आरभ्यते ॥

प्रथमे पादेधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्म-
याथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य वेदान्त-
5 वाक्येषु चापातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपज-
नितपरमपुरुषार्थलक्षणमोक्षापेक्षोवधारितपरिनिष्पन्नवस्तुबोधन-
शब्दशक्तिर्वेदान्तवाक्यानां परस्मिन्ब्रह्मणि निश्चितप्रमाणभाव-
स्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रा-
रम्भसिद्धये (अ. १ पा. १ सू. १)। अनन्तविचित्र-
10 स्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलज-
गदुदयविभवलयलीलं महानन्दैककारणं परं ब्रह्म यतो वा इ-
मानि भूतानि (तै. २।१।१) इत्यादि वाक्यं बोधयतीति च प्र-
त्यपादि (अ. १ पा. १ सू. २)। जगदेककारणं परं ब्रह्म स-
कलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधायि (अ.
15 १ पा. १ सू. ३)। शास्त्रैकप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनि-
वृत्त्यन्वयविरहेपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन्ब्रह्मणि

---

5. B. reads समुपजात for समुपजनित.

6. C. reads प्र before बोधन.

9. B. C. read अनन्तरम् before अनन्त.

11. B. D. om. लीलम्.

12. C. D. om. भूतानि.

14. C. reads प्रमाणम् for प्रमाणकम्; C. D. read अभ्यधाम् for अभ्यधायि.

15. C. E. om. एक before प्रमाणकत्वम्.

वेदान्तवाक्यानां समन्वयान्निरुह्यत इत्यब्रूम ( अ. १ पा. १ सू. ४ ) । निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म चेक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम ( अ. १ पा. १ सू. ५ ) । स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसंकल्पत्व- 5
समस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समादधीमहि ( अ. १ पा. १ सू. १३ ) । स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम ( अ. १ पा. १ सू. २१ ) । आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्य- 10
मानः सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि ( अ. १ पा. १ सू. २३ ) । परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिःशब्दाभिधेयो द्युमंबन्धितया प्रत्यभिज्ञानात्स एवेत्यानिष्ठामहि ( अ. १ पा. १ सू. २५ ) । परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्येन्द्रादिशब्दै- 15
रभिधीयत इत्यब्रूमहि ( अ. १ पा. १ सू. २९ ) ।

तदेवमतिपतितसकलेतरप्रमाणसंभावनाभूमिः सार्वज्ञ्यसत्यसंकल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम । अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्त- 20
वेद्यं ब्रह्मैव तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमु-

2. E. om. ब्रह्म.
3. C. reads अर्थान्तरभूत for अर्थान्तरभूतः.
7. D. reads अर्थान्तरः for अर्थान्तरभूतः.
11. C. om. अचेतन.
15. B. reads अप्राप्ति for प्राप्ति.
21. B. reads अन्तरभूत for अन्तर्भूत.

त्वेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते । तत्रास्पष्टजीवलिङ्गकानि वाक्यानि द्वितीयपादे विचार्यन्ते । स्पष्टजीवलिङ्गकानि तृतीये । तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ।

5 ## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

इदमाम्नायते छान्दोग्ये । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः ( छा. ३।१४।१-२ ) इत्यादि । अत्र स क्रतुं कुर्वीतेति प्रतिपादितस्योपासनस्योपास्यो मनोमयः
10 प्राणशरीर इति निर्दिश्यत इति प्रतीयते । तत्र संशयः । किं मनोमयत्वादिगुणकः क्षेत्रज्ञ उत परमात्मेति । किं युक्तम् । क्षेत्रज्ञ इति । कुतः । मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात् । परमात्मनस्त्वप्राणो ह्यमनाः ( मु. २।१।२ ) इति तत्प्रतिषेधाच्च । न च सर्वं खल्विदं ब्रह्म ( छा. ३।१४।१ ) इति पूर्ववाक्यनि-
15 र्दिष्टं ब्रह्मात्रोपास्यतया संबन्द्धुं शक्यते । शान्त उपासीत ( छा. ३।१४।१ ) इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात् । न च स क्रतुं कुर्वीत ( छा. ३।१४।१) इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म संबध्यत इति शक्यं वक्तुम् । स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन नि-

---

2. B. reads आदि after जीव; C. reads द्वितीये, D. E. द्वितीये पादे, for द्वितीयपादे.

3. C. om. जीव.

6. B. C. read अयम् after क्रतुमयः.

10. C. D. read अत्र for तत्र.

14. C. D. om. वाक्य.

18. D. reads आकाङ्क्षत्वात् for साकाङ्क्षत्वात्.

राकाङ्क्षत्वात् । मनोमयः प्राणशरीरः ( छा. ३।१४।२ ) इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्व एतद्ब्रह्म ( छा. ३।१४।४ ) इत्युपसंहारस्थं ब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति । एवं प्राप्ते ब्रूमः । 5

सर्वत्र प्रसिद्धोपदेशात् । मनोमयत्वादिगुणकः परमात्मैव । कुतः । सर्वत्र वेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा मनोमयः प्राणशरीरनेता ( मु. २।२।७ ) । स य एषोन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः ( तै. १।६।१ ) 10

हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।
( का. ६।९, श्वे. ३।१३,४।१७ )

न चक्षुषा गृह्यते नापि वाचा ( मु. ३।१।८ ) । मनसा तु विशुद्धेन । तथा प्राणस्य प्राणः ( के. २ ) । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति ( कौ. ३।३ ) । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ( छा. १।११।५ ) इत्यादिषु । मनोमयत्वं विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वं च । एवं च सत्येष म आत्मान्तर्हृदय एतद्ब्रह्म ( छा. ३।१४।४ ) इति ब्रह्मशब्दोपि 20 (15 at line "विशुद्धेन")

---

3. C. reads एतस्मिन् for एवम्; B. reads तत् for एतत्.

6. C. om. एव.

7. C. reads वेदान्तेषु for वेदान्तवाक्येषु.

8. E. reads इह after मनोमयत्वादेः.

19. B. om. अपि; D. om. च after एवम्.

मुख्य एव भवति । अप्राणो ह्यमनाः ( मु. २।१।२ ) इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति ।

अथ वा सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ( छा. ३।१४।१ ) इत्यत्रैवोपासनं विधीयते । सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति । स क्रतुं कुर्वीत ( छा. ३।१४।१ ) इति तस्यैव गुणोपादानार्थोनुवादः । उपादेयाश्च गुणा मनोमयत्वादयः । अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः । तत्र संदेहः । किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यत उत परमात्मेति । किं युक्तम् । प्रत्यगात्मेति । कुतः । तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनोनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव । परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते । अत एव परमात्मा परं ब्रह्म ( सर्वोप. ४ ) इति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते। सचानन्त्याय कल्पते ( श्वे. ५।९ ) इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोप्युपपद्यते ।तदयमर्थः। अयं जीवात्मा स्वतोपरिच्छिन्नरूपत्वेन ब्रह्मभूतः सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनावतिष्ठत इति । अत्र प्रतिविधीयते ।

सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र सर्वं खल्विदं ब्रह्म ( छा.

---

7. C. reads गुणम् for गुणकम्.
14. B. reads आकार for आकर.
18. C. reads जगत् before जन्म.
20. B. reads स्व before रूपत्वेन; E. reads स्वरूपः for भूतः.
22. D. om. सर्वत्र before सर्वम्; B. om. ब्रह्म after इदम्.

३।१४।१ ) इति निर्दिष्टे सर्वस्मिञ्जगति ब्रह्मशब्देन तदात्मतयाभिधीयमानं परं ब्रह्मैव न प्रत्यगात्मा । कुतः । प्रसिद्धोपदेशात् । तज्जलानिति ( छा. ३।१४।१ ) इति हेतुतः सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशात् । ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जग- 5 दित्युक्ते यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते । तच्च परमेव ब्रह्म । तथा हि । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म (तै.३।१) इत्युपक्रम्यानन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते 10 ( तै. ३।६ ) इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते । तथा

स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।
( श्वे. ६।९ ) 15

इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते । एवं हि सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात्तस्मिल्लीनत्वात्तेन प्राणनात्तदात्मकतया

2. B. reads विधीयमानम् for अभिधीयमानम्.
3. B. E. om. इति before इति.
4. B. reads उपदेशात् for निर्देशात्.
5. B. reads प्र before लीनत्वात्.
9. D. E. read प्रक्रम्य for उपक्रम्य.
10. B. reads आनन्देन जातानि जीवन्ति after जायन्ते.
11. C. D. read पूर्वानुवाकेन for पूर्वानुवाक.
12. C. reads पर before ब्रह्मणः.
18. C. reads प्र before लीनत्वात्.

तादात्म्यमुपपन्नम् । अतः सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्म- 5 भूतम् । एवंभूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते । प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात् । प्रत्युत निरतिशयैश्वर्योपादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ।

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति तदसत् । जीवा- 10 नां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवात् । मुक्तस्यानवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वं न संभवतीति जगद्व्यापारवर्जम् (ब्र. सू. ४।४।१७) इत्यत्र वक्ष्यते । जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः । तत्कर्मनिमित्तत्वेपीश्वरस्यैव जग- 15 त्कारणत्वात् । अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ता बहु मन्यन्ते । यदाह वृत्तिकारः । सर्वं खल्विति सर्वात्मा ब्रह्मेश इति ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते । मनोमयः प्रा-

1. D. E. read सर्वशरीरकम् for सर्वशरीरम्.
2. D. E. read परं for परस्य.
3. E. reads परं for परम्.
4. D. om. सर्वदा.
8. B. reads भवन्ति for भवति.
11. E. reads कारणत्वनिमित्तम्, D. कारणत्वनिमित्तं च for कारणत्वम्.
16. E. reads मन्वते for मन्यन्ते; C. reads यथाह for यदाह.

णशरीरो भारूप: सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकाम: सर्वगन्ध: सर्वरस: सर्वमिदमभ्यात्तोवाक्यनादर: ( छा. ३। १४।२ ) इति ।

मनोमय: परिशुद्धेन मनसैकेन ग्राह्य: । विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा 5 गृह्यते । अनेन हेयप्रत्यनीककल्याणैकताननतया सकलेतरविलक्षणस्वरूपतोच्यते । मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात् । प्राणशरीरो जगति सर्वेषां प्राणानां धारक: । प्राणो यस्य शरीरमाधेयं विधेयं शेषभूतं च स प्राणशरीर: । आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते । भारूपो 10 भास्वररूप: । अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थ: । सत्यसंकल्पोप्रतिहतसंकल्प: । आकाशात्माकाशवत्सूक्ष्मस्वच्छस्वरूप: । सकलेतरकारणभूतस्याप्याकाशस्यात्मभूत इति वाकाशात्मा । स्वयं च प्रकाशतेन्यांश्च प्रकाशयतीति वाकाशात्मा । सर्वकर्मा । 15 क्रियत इति कर्म । सर्वं जगद्यस्य कर्म सर्वा वा क्रिया यस्यासौ सर्वकर्मा । सर्वकाम:। काम्यन्त इति कामा भोग्यभोगोपकरणादय: । ते परिशुद्धा: सर्वविधास्तस्य सन्तीत्यर्थ: । सर्वगन्ध: सर्वरस: । अशब्दमस्पर्शम् ( का. ३।१५ ) इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृता: स्वासाधारणा निरवद्या निरतिशया: 20

---

1. B. reads सत्यकाम: after भारूप:; B. om. सर्वकर्मा.
2. B. reads सर्वकर्मा after सर्वरस:.
5. D. om. मनसा.
8. B. reads इति after प्राणशरीर:.
10. C. reads प्रवृत्तिनिमित्तम् for प्रवृत्तिनिमित्तानि.
14. B. reads अपि after आकाशस्य.
16. E. reads असौ सर्वकर्मा after यस्य कर्म.
20. B. reads निरवद्यनिरतिशय for निरवद्या निरतिशया:.

कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः। उक्तमिदं रसपर्यन्तं सर्वं कल्याणगुणजातं स्वीकृतवान्। अभ्यात्त इति भुक्ता ब्राह्मणा इतिवत्कर्तरि क्तः प्रतिपत्तव्यः। अवाकी। वागुक्तिः। सास्य नास्तीत्यवाकी। कुत इत्याहानादर इति। अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः। अत एवावाक्यजल्पाकः। परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः। अत एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसंबन्धनिबन्धनापरिमितदुःखसंबन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसंबन्धगन्धोपि नोपपद्यत इति नास्मिन्प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

एतमितः प्रेत्याभिसंभवितास्मि ( छा. ३।१४।४ ) इति प्राप्यतया परं ब्रह्म व्यपदिश्यते। प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

एष म आत्मान्तर्हृदये ( छा. ३।१४।३ ) इति शारीरः

2. E. reads सर्व for सर्वम् before कल्याण.
5. D. reads अत्र after कुत इति.
7. E. reads ते for अतः.
8. D. E. read गुणा विवक्षिताः for विवक्षिता गुणाः.
11. E. reads बद्धमुक्तावस्थ for बद्धमुक्तावस्थस्य.
12. D. reads संबन्धः for संबन्धगन्धः.
18. B. om. वि before ज्ञायते.

षष्ठ्या निर्दिष्ट उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः । यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूमम् ( श. ब्रा. १०।६।३।२ ) इति । अत्रान्तरात्मन्निति सप्तम्यन्तेन शारीरो निर्दिश्यते । पुरुषो हिर- 5
ण्मय इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥ ५ ॥

इतश्च शारीरादन्यः ।

## स्मृतेश्च ॥ ६ ॥

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
( गी. १५।१५ ) 10

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । ( गी. १५।१९ )

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ( गी. १८।६१ )

तमेव शरणं गच्छ ( गी. १८।६२ ) इति शारीरकमुपासकं परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥ 15

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अल्पायतनत्वमर्भकौकस्त्वम् । तद्व्यपदेशोऽल्पत्वव्यपदेशः । एष म आत्मान्तर्हृदये ( छा. ३।१४।३ ) इत्यणीयसि हृदयायतने स्थितत्वादणीयान्व्रीहेर्वा यवाद्वा ( छा. ३।१४।३ ) इत्या- 20

3. B. C. read अन्तरात्मनि for अन्तरात्मन्.

6. E. reads आत्मा after एव.

7. B. C. read स्मृतेश्च । इतश्च शारीरादन्यः for इतश्च शारीरादन्यः । स्मृतेश्च ।.

14. E. reads च after गच्छेति; C. reads शारीरम् for शारीरकम्.

दिनाणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा। अपि तु जीव एव । सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः (मु. १। १।६ ) इत्यादिभिः परमात्मनोपरिच्छिन्नत्वावगमाज्जीवस्य चारा-ग्रमात्रत्वव्यपदेशादिति चेन्नैतदेवम् । परमात्मैव ह्यणीयानित्येवं
5 निचाय्यत्वेन व्यपदिश्यते । एवं निचाय्यत्वेनैवं द्रष्टव्यत्वेनैवमु-पास्यत्वेनेति यावत् । न पुनरणीयस्त्वमेवास्य स्वरूपमिति । व्योमवच्चायं व्यपदिश्यते । स्वाभाविकं महत्त्वं चात्रैव व्यपदि-श्यते । ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्याया-नेभ्यो लोकेभ्यः ( छा. ३।१४।३ ) इति । अत उपासनार्थमे-
10 वाल्पत्वव्यपदेशः ।

तथा हि । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ( छा.३।१४।१ ) इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतया-नुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधायाथ खलु क्रतुमयोयं पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो
15 भवति तथेतः प्रेत्य भवति ( छा. ३।१४।१ ) इति यथोपासनं प्राप्यसिद्धिमभिधाय स क्रतुं कुर्वीत (छा. ३।१४।१ ) इति गुण-विधानार्थमुपासनमनूद्य मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोवाक्यनादरः ( छा. ३।१४।२) इति जगदैश्वर्य-
20 विशिष्टस्य स्वरूपगुणांश्चोपादेयान्प्रतिपाद्यैष म आत्मान्तर्हृदयेणी-यान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा (छा.३।१४।३) इत्युपासकस्य हृदयेणीयस्त्वेन तदात्मतयोपास्यस्य

---

7. C. om. स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते.

9. C. reads उपासनार्थः for उपासनार्थम्.

13. B. om. च.

22. B. reads तथात्मतया, C. तदात्मकतया for तदात्मतया.

परमपुरुषस्योपासनार्थमवस्थानमुक्त्वैष म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोवाक्यनादरः (छा. ३।१४।३–४) इत्यन्तर्हृदयेवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्यैष म आत्मान्तर्हृदय एतद्ब्रह्म (छा. ३।१४।४) 5 इत्येवंभूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीविषयास्मद्धृदये संनिहितमितीदमनुसंधानं विधायैतमितः प्रेत्याभिसंभवितास्मि (छा. ३।१४।४) इति यथोपासनं प्राप्तिनिश्चयानुसंधानं च विधायेति यस्य स्यादद्धा न विचिकित्सास्ति (छा. ३।१४।५) इत्येवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयो- 10 स्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥७॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्तद्वदेव शरीरसंबन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेन्न । हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगे हेतु- 15 रपि तु पुण्यपापरूपकर्मपरवशत्वम् । तत्त्वपहतपाप्मनः परमात्मनो न संभवति । तथा च श्रुतिः ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति ।

(मु. ३।१।१)

इति ॥ ८ ॥ (१) सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् । 20

यदि परमात्मा न भोक्तैवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह ।

4. B. reads उपासमान for उपास्यमानस्य.
14. C. reads तत् after चेत्.
15. C. reads उपभोग for उपभोगे.
21. C. om. सर्वत्र.

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीष्वाम्नायते ।

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।

मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ (का. २।२४)

5 इति । अत्रौदनोपसेचनसूचितोत्ता किं जीव एवोत परमात्मेति संदिह्यते । किं युक्तम् । जीव इति । कुतः । भोक्तृत्वस्य कर्मनिमित्तत्वात् । जीवस्यैव तत्संभवात् । अत्रोच्यते ।

अत्ता चराचरग्रहणात् । अत्ता परमात्मैव । कुतः । चराचरग्रहणात् । चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव संभवति । न चेदं 10 कर्मनिमित्तं भोक्तृत्वम् । अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोः संहर्तृत्वम् ।

सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । (का. ३।९) इत्यत्रैव दर्शनात् । तथा च मृत्युर्यस्योपसेचनम् (का. २।२४) इति वचनाद्ब्रह्म च क्षत्रं चेति कृत्स्नं चराचरं जगदिहादनीयौ- 15 दनत्वेन गृह्यते । उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्याद- नहेतुः । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमि-

---

5. C. om. एव after जीवः.

9. C. reads भोक्तृत्वम् for अत्तृत्वम्; B. reads भोक्तृत्वम् after अत्तृत्वम्.

10. C. om. लय.

14. B. reads दर्शनात् for वचनात्.

15 B. reads अपि after अन्यस्य.

16. B. reads ततः for तत्.

त्यवगम्यते । ईदृशं चादनमुपसंहार एव । तस्मादीदृशं जगदु-
पसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

प्रकरणं चेदं परस्यैव ब्रह्मणः ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति । (का.२।२१)　5

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥
(का. २।२२)

इति हि प्रकृतम् । क इत्था वेद यत्र सः(का.२।२४) इत्यपि हि
तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥१०॥　10

अथ स्यान्नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोत्तमोपहतपाप्मा
परमात्मा । अनन्तरम्

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥
(का. ३।१)　15

इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात् । द्वितीयश्च प्राणो
बुद्धिर्वा स्यात् । ऋतपानं हि कर्मफलभोग एव । स च परमा-
त्मनो न संभवति । बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूत-
योरथा कथंचित्पानेन्वयः संभवतीति तयोरन्यतरेण सद्वितीयो

---

1. C om. अव before गम्यते; B. reads च before जगत्.

9. E. om. हि after इति.

10. E. reads प्रस्तुतं पूर्वम् for पूर्वप्रस्तुतम्.

11. E. reads पुरुषः for पुरुषोत्तमः.

12. C. om. परमात्मा

जीव एव प्रतिपाद्यते । तदेकप्रकरणत्वात्पूर्वप्रस्तुतोक्तापि स एव भवितुमर्हतीति । अत्रोच्यते ।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावि-
5 त्युच्येते । अपि तु जीवात्मपरमात्मानौ हि तथा व्यपदिश्येते। कुतः । तद्दर्शनात् । अस्मिन्प्रकरणे जीवपरयोरेव गुहाप्रवेश-व्यपदेशो दृश्यते । परमात्मनस्तावत्

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥
10 ( का. २।१२ )

जीवस्यापि

या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥ ( का. ४।७)

इति । कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन संभवतीति
15 प्राणेन सह वर्तते। देवतामयीन्द्रियाधीनभोगा गुहां प्रविश्य ति-ष्ठन्ती हृदयपुण्डरीकोदरवर्तिनी या भूतेभिर्व्यजायत पृथिव्या-दिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते । एवं च स-त्यृतं पिबन्तौ ( का.३।१ ) इति व्यपदेशश्छत्रिणो गच्छन्तीति वत्प्रतिपत्तव्यः । यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जी-
20 वपरयोरुपपद्यते ॥ ११ ॥

## विशेषणाच्च ॥ १२ ॥

अस्मिन्प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्व-प्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते ।

2. B. reads तत्र for अत्र.

ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति।
( का. १।१७ )

ब्रह्मजज्ञो जीवः । ब्रह्मणो जातत्वाज्ज्ञत्वाच्च । तं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा

यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । 5
अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ॥ ( का. ३।२ )

इत्युपास्यः परमात्मोच्यते । नाचिकेतं नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः ।

आत्मानं रथिनं विद्धि शरीरं रथमेव च । ( का. ३।३ )

इत्यादिनोपासको जीव उच्यते । तथा 10

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ( का.३।९ )

इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ । इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ।

अथ स्यात् 15

येयं प्रेते विचिकित्सा मनुष्येस्तीत्येके नायमस्तीति चैके ।
( का. १।२० )

इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति । नैतदेवम् । न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयायं प्रश्नः । तथा सति पूर्ववरद्वयवरणानुपपत्तेः । तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा- 20

3. B. reads तत् before ज्ञत्वात्.

20. C. reads शङ्कायाम् for शङ्कयायम्.

स्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता कस्मै मां दास्यसीत्यसकृत्पितरं पृष्टवता स्वनिर्बन्धरुष्टपितुर्वचनान्मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोपुषि यमे तददर्शनात्तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्ते वरत्रय
5 आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः । एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते । द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताग्निविद्या वृता। तदपि देहातिरिक्तात्मानभिज्ञस्य न संभवति । अतस्तृतीयेन वरेण यदिदं व्रियते

10 येयं प्रेते विचिकित्सा मनुष्येस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥(का.१।२०)

इति । अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयायं प्रश्नः क्रियते । एवं च येयं प्रेत इति न शरीरवियोगमात्राभि-
15 प्रायम् । अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा न प्रेत्य संज्ञास्ति ( बृ. २।४।१२ ) इति। अयमर्थः । मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्तास्तिनास्त्यात्मिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयानुशिष्टोहं विद्यां जानीयामिति ।

20 तथा हि बहुधा विप्रतिपद्यन्ते । केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव सतोविद्यास्तमयम् । अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषि-

---

2. C. reads पितृ for पितुः.

4. B. reads प्रदत्ते for प्रत्ते.

7. C. om. च after द्वितीयेन.

कगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरेपहतपाप्मानं परमात्मा-
नमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपग-
मेन तद्भावलक्षणमोक्षमातिष्ठन्ते ।

त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनी-
कानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्ये- 5
यकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य
ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य
परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरू-
पस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते ।

तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचि- 10
केतसा पृष्टो मृत्युस्तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोग-
वितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्म-
तत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षं च तं
दुर्दर्शं गूढमनुप्रविष्टम् (का. २।१२) इत्यारभ्य सोध्वनः
पारमाप्नोति तद्विष्णोः परमं पदम् (का. ३।९) इत्यन्तेनो- 15
पदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम् ।
अतः परमात्मैवात्तेति सिद्धम् ॥ १२ ॥ (२) अत्रधिकरणं
समाप्तम् ।

## अन्तर उपपत्तेः ॥ १३ ॥

इदं समामनन्ति च्छन्दोगाः । य एषोक्षिणि पुरुषो दृश्यत एष 20
आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म (छा. ४।१५।१) इति ।

---

3. C. reads लक्षणम् for लक्षणमोक्षम्.

7. C. om. ज्ञान.

9. B. reads अनुभवः for अनुभवम्.

20. E. om. सम् before आमनन्ति.

21. B. E. read एतद् before अभयम्.

तत्र संदेहः । किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मोत चक्षुरिन्द्रियाधिष्ठाता देवताविशेष उत जीवात्माथ परमात्मेति । किं युक्तम् । प्रतिबिम्बात्मेति । कुतः । प्रसिद्धवन्निर्देशात् । दृश्यत इत्यपरोक्षाभिधानाच्च । जीवात्मा वा । त-
5 स्यापि हि चक्षुषि विशेषेण संनिधानात्प्रसिद्धिरुपपद्यते । उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति । रश्मिभिरेषोस्मिन्प्रतिष्ठितः ( बृ. ५।५।२ ) इति श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठो देवताविशेषो वा । एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतम इति प्राप्ते प्रचक्ष्महे ।

10 अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः । एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म ।...एतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति ।...एष उ एव वामनीरेष हि सर्वाणि वामानि नयति ।...एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति ( छा. ४।१५।१-२-३-४ ) इति । एषां
15 गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव यश्चक्षुषि तिष्ठन् ( बृ. ३।७।१८ ) इत्यादिना व्यपदिश्यन्ते । अतश्च य एषोक्षिणि पुरुषः ( छा. ४।१५।१ ) इति स एव प्रतीयते । अतः
20 प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते । तत एव दृश्यत इति साक्षात्कारव्यपदेशोपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः । कं ब्रह्म खं ब्रह्म (छा. ४।१०।

1. B. reads अत्र for तत्र.
2. E. reads अधिष्ठातृ for अधिष्ठाता.
11. B. E. read एतद् before अभयम्.
18. C. reads इत्येवमादौ for इत्यादिना; B. reads एषोन्तः for य एषः.

५) इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च य एषोक्षिणि पुरुषः (छा. ४।१५।१) इत्यभिधानात् । एवकारान्नैरपेक्ष्यं हेतोर्द्योतयति ।

नन्वग्निविद्याव्यवधानात्कं ब्रह्म खं ब्रह्म (छा. ४।१०।५) इति प्रकृतं ब्रह्म नेह संनिधत्ते । तथा हि । अग्नयः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म (छा. ४।१०।५) इति ब्रह्मविद्यामुपदिश्याथ हैनं गार्हपत्योनुशशास (छा. ४।११।१) इत्यारभ्याग्नीनामुपासनमुपदिदिशुः । न चाग्निविद्या ब्रह्मविद्याङ्गमिति वक्तुं शक्यम् । ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसंतत्यविच्छेदादिफलश्रवणात् । उच्यते । प्राणो ब्रह्म (छा. ४।१०।५)। एतदमृतमभयमेतद्ब्रह्म (छा. ४।१५।१) इत्युभयत्र ब्रह्मसंशब्दनात् । आचार्यस्तु ते गतिं वक्ता (छा. ४।१४।१) इत्यभिवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते । अथ हैनं गार्हपत्योनुशशास (छा. ४।११।१) इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च ।

किं च व्याधिभिः प्रतिपूर्णोस्मि (छा. ४।१०।३) इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवामयाभितप्तायोपकोसलायैषा सोम्य तेस्मद्विद्यात्मविद्या च (छा. ४।१४।१) इति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्या-

3. E. reads एवकारः for एवकारात्.
8. B. reads शक्यं वक्तुम् for वक्तुं शक्यम्.
9. B. reads अन्तर्गतम् for अन्तर्गत.
11. B. E. read एतद् before अभयम्.
17. C. om. इति.
19. B. reads भय for आमय; B. reads अग्निविद्या for असद्विद्या.

ङ्गत्वमग्निविद्यायाः प्रतीयते । एवं चाङ्गत्वेवगते सति फलानु-
कीर्तनमर्थवाद इति गम्यते । न चात्र मोक्षविरोधि फलं किंचि-
च्छ्रूयते । अपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जी-
वति नास्यापरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोस्मिँश्च लोकेमु-
5 ष्मिँश्च ( छा. ४।११।२ ) इत्यमीषां फलानां मोक्षाधिकृतस्या-
नुगुणत्वात् । अपहते पापकृत्यां ब्रह्मप्राप्तिविरोधि पापं कर्मोप-
हन्ति । लोकीभवति तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नो-
ति । सर्वमायुरेति ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितं तत्सर्व-
मेति । ज्योग्जीवति व्याधिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति ।
10 नास्यापरपुरुषाः क्षीयन्तेस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोपि
ब्रह्मविद एव भवन्ति । नास्याब्रह्मवित्कुले भवति ( मु. ३।
२।९, मा. १० ) इति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उप
वयं तं भुञ्जामोस्मिँल्लोकेमुष्मिंश्च वयमग्नयस्तमेनमुपभुञ्जामो या-
वद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति । अतोग्निविद्याया ब्रह्मवि-
15 द्याङ्गत्वेन तत्संनिधानाविरोधात्सुखविशिष्टं प्रकृतमेव ब्रह्मेहोपा-
सनस्थानविधानार्थं गुणविधानार्थं चोच्यते ।

नन्वाचार्यस्तु ते गतिं वक्ता ( छा. ४।१४।१ ) इति
गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदिश्यत इति गम्यते ।
तत्कथं स्थानगुणविध्यर्थतोच्यते । तदभिधीयते । आचार्यस्तु

---

2. E. reads अव before गम्यते.
5. B. reads अधिकृतया for अधिकृतस्य.
6. B. reads अभिहते for अपहन्ति.
8. E. reads परि before समाप्तेः.
9. B. reads व्याध्यादिभिः for व्याधिभिः.
10. E. reads च for अपि.
13. C. reads च after अस्मिन्.
15. B. om. इह after ब्रह्म.
16. B. reads चोद्यते for गुणविधानार्थं चोच्यते.

ते गतिं वक्ता ( छा. ४।१४।१ ) इत्यस्यायमभिप्राय: । ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्याचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति ( छा. ४।९।३ ) 5
इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं परं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वाचार्यस्तु ते गतिं वक्तेत्यवोचन् । गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम् । अत एवाचार्योऽप्यहं तु ते तद्वक्ष्यामि (छा. ४।१४।३) इत्यभिधाय यथा पुष्करपलाश आपो न 10
श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते (छा. ४।१४।३) इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश । अत: कं ब्रह्म खं ब्रह्म ( छा. ४।१०।५ ) इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोत्राभिधानादयमक्ष्याधार: परमात्मा ॥ १५ ॥ 15

ननु च कं ब्रह्म खं ब्रह्म ( छा. ४।१०।५ ) इति परं ब्रह्माभिहितमिति कथमवगम्यते यस्येहाक्ष्याधारतयाभिधानं ब्रूषे । यावता कं ब्रह्म खं ब्रह्मेति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति । नाम ब्रह्म ( छा. ७।१।५ ) । मनो ब्रह्म ( छा. ७।३।२ ) इत्यादिवचनसारूप्यात् । तत्राह । 20

---

5 C. om. हैव; E. reads प्रापत् for प्रापयति.

6. B. reads आलोक्य for आलोच्य.

9. B. reads च after एव.

10. C. om. अभिधाय; B. reads तथा for इत्यभिधाय यथा.

13. B. om. च after अर्चिरादिकाम्.

14. B. reads अविधानात् for अभिधानात्.

## अत एव च स ब्रह्म ॥ १६ ॥

यतस्तत्र यदेव कं तदेव खम् ( छा. ४।१०।५ ) इति सुखविशिष्टस्याकाशस्याभिधानमत एव खशब्दाभिधेयः स आकाशः परं ब्रह्म । एतदुक्तं भवति । अग्निभिः प्राणो ब्रह्म कं ब्रह्म खं
5 ब्रह्म ( छा. ४।१०।५ ) इत्युक्त उपकोसल उवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि ( छा. ४।१०।५ ) इति । अस्यायमभिप्रायः । न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम् । जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्रसिद्धैः
10 प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति विजानाम्यहं यत्प्राणो ब्रह्म ( छा. ४।१०।५ ) इत्युक्तवान् । तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वमुतान्योन्यव्यवच्छेदकतया
15 निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा । तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात् । अन्योन्यव्यवच्छेदकत्वेपरिच्छिन्नानन्दस्वरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधारयिषया कं च तु खं च न विजानामि ( छा. ४।१०।५ ) इत्यु-

---

3. B. reads विशिष्ट for विशिष्टस्य.
4. B. reads पर for परम्.
10. C. om. च.
11. B. reads प्राणः before प्राणशरीरतया.
13. B. reads ब्रह्म for ब्रह्मणः.
14. C. reads तन्नियाम्यत्वे for तन्नियाम्यत्वेन.
15. C. om. निरतिशय, E. om. रूप after आनन्द.
16. B. reads नियाम्यकत्वम् for नियामकत्वम्.
18. E. reads एक after आनन्द.

क्तवान् । उपकोसलस्येममाशयं जानन्तोग्नयो यद्वाव कं तदेव खं यदेव खं तदेव कम् ( छा. ४।१०।५ ) इत्यूचिरे । ब्रह्मणः सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेति निगमितं प्राणं च हास्मै तदाकाशं चोचुः ( छा. ४।१०।५ ) इति। अतः कं ब्रह्म खं ब्रह्म ( छा. ४।१०।५ ) इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम् । तदेव चात्राक्ष्याधारतयाभिधीयत इत्यक्ष्याधारः परमात्मा ॥ १६ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्यानुसंधेयतया श्रुत्यन्तरप्रतिपाद्यमानार्चिरादिका गतिर्या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते तेर्चिषमेवाभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षम् ( छा. ४।१५।५ ) इत्यारभ्य चन्द्रमसो विद्युतं तत्पुरुषोमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ( छा. ४।१५।५-६ ) इत्यन्तेनोपदिशतीत्यतोप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसंभवान्न परमात्मन इतरश्छायादिरक्षिपुरुषो भवितुमर्हति । प्रतिबिम्बस्य तावत्पुरुषान्तरसंनिधानाय-

8. B. reads विधीयते for अभिधीयते.

12. B. reads आदिपुरुषम् for अक्षिपुरुषम्; E. om. एव.

14. E. reads एतान् for एनान्.

15. B. reads प्रतिपाद्यमानाः for प्रतिपद्यमानाः.

16. B. om. इति after उपदिशति.

त्त्वान्न नियमेनावस्थानसंभवः । जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् । देवतायाश्च रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः ( बृ. ५।५।२ ) इति रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधि-
5 ष्ठानोपपत्तेर्न चक्षुष्यवस्थानम् । सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न संभवन्त्येव । तस्मादक्षिपुरुषः परमात्मा ॥ १८ ॥
( ३ ) अन्तराधिकरणं समाप्तम् ।

स्थानादिव्यपदेशाच्च ( ब्र. सू. १।२।१४ ) इत्यत्र यश्चक्षुषि तिष्ठन् ( बृ. ३।७।१८ ) इत्यादिना प्रतिपाद्यमानं
10 चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाक्षिपुरुषस्य परमात्मत्वं साधितम् । इदानीं तदेव समर्थयते ।

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

काण्वा माध्यंदिनाश्च वाजसनेयिनः समामनन्ति । यः पृ-
15 थिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।३ ) इति । एवमम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजःसु दैवतेषु च सर्वेषु च भूतेषु प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतःस्वात्मात्मीयेषु तिष्ठन्तं तत्तद-
20 न्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कंचिन्निर्दिश्यैष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२३ ) इत्युपदिश्यते । माध्यंदिनपाठे तु यः सर्वेषु लोकेषु तिष्ठन्सर्वेषु वेदेषु यः सर्वेषु यज्ञे-

9. C. reads प्रतिपद्यमानम् for प्रतिपाद्यमानम्.

18. C. reads देवेषु for दैवतेषु; B. om. च after दैवतेषु; C. om. च after सर्वेषु; B. reads लोकेषु after भूतेषु.

19. C. reads च after स्वात्मात्मीयेषु.

22. C. om. सर्वेषु वेदेषु; B. reads तिष्ठन् after वेदेषु.

ष्ठिति च पर्याया:। यो विज्ञाने तिष्ठन् (बृ. ३।७।२२) इत्यस्य पर्यायस्य स्थाने य आत्मनि तिष्ठन्निति पर्याय:। स त आत्मान्तर्याम्यमृत इति च विशेष:। तत्र संशय्यते। किमयमन्तर्यामी प्रत्यगात्मोत परमात्मेति। किं युक्तम्। प्रत्यगात्मेति। कुत:। वाक्यशेषे द्रष्टा श्रोता (बृ. ३।७।२३) इति करणायत्तज्ञानताश्रुते:। एवं द्रष्टुरेवान्तर्यामित्वोपदेशान्नान्योतोस्ति द्रष्टा (बृ. ३।७।२३) इति द्रष्ट्रन्तरनिषेधाच्चेत्येवं प्राप्तेभिधीयते। 5

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोन्तर्याम्यपहतपाप्मा परमात्मा नारायण:। काण्वपाठसिद्धेभ्योधिदैवादिमद्भ्यो वाक्येभ्योधिकान्यधिलोकादिमन्ति वाक्यानि माध्यंदिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थ:। कुत:। तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययं यदेक एव सन्त्सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति। तथा ह्युद्दालकप्रश्न:। य इमं च लोकं परं च लोकं सर्वाणि भूतानि योन्तरो यमयति (बृ. ३।७।१) इत्युपक्रम्य तमन्तर्यामिणं ब्रूहि (बृ. ३।७।२) इति। तस्य चोत्तरं य: पृथिव्यां तिष्ठन् (बृ. ३।७।३) इत्यारभ्योक्तम्। तदेतत्सर्वाँल्लोकान्त्सर्वाणि भूतानि सर्वाणि च दैवतानि सर्वान्वेदान्त्सर्वांश्च यज्ञानन्त: प्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसंकल्पात्पुरुषोत्तमादन्यस्य न संभवति। 10 15 20

1. B. reads तिष्ठन् before इति च.
2. B. reads अपि after तिष्ठन्निति.
9. C. om. परमात्मा.
10. B. om. वाक्येभ्य:.
12. B. reads आदि after अधिदैव; C. reads अधिलोकात् for अधिलोकादिषु.

तथा ह्यन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ( तै. आ. ३।११।२ ) । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् ( तै. २।६ ) इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि
5 वदन्ति । तथा सुबालोपनिषदि नैवेह किंचनाग्र आसीत्। अमूलमनाधारा इमाः प्रजाः प्रजायन्ते । दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः ( सुबा. ) इत्यारभ्यान्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन्यं पृथिवी
10 न वेद । यस्यापः शरीरमित्यादि यस्य मृत्युः शरीरं यो मृत्युमन्तरे संचरन्यं मृत्युर्न वेदैष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः ( सुबा. ) इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वनियन्तृत्वं च प्रतिपाद्यते ।

स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः । न च परस्या-
15 त्मनः करणायत्तद्रष्टृत्वादिकमपि तु स्वभावत एव । सर्वज्ञत्वात्सत्यसंकल्पत्वाच्च स्वत एव । तथा च श्रुतिः पश्यत्यचक्षुः स शृणोत्यकर्णः ( श्वे. ३।१९ ) । अपाणिपादो जवनो ग्रहीता (श्वे. ३।१९)इति । न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचका अपि तु रूपादिसाक्षात्कारस्य । स च
20 रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा । परस्य तु स्वत एव । नान्योतोस्ति द्रष्टा ( बृ. ३।७।२३ ) इत्येतदपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा

1. E. om. हि after तथा.

13. E. reads शरीरकत्वम् for शरीरत्वम्; B. reads सर्वस्य for सर्व before नियन्तृत्वम्.

14. B. reads परम for परस्य.

नास्तीति वदति । यं पृथिवी न वेद ( बृ. ३।७।३ ) । यमात्मा न वेद ( बृ. माध्यं. ३।७।२२ ) इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तं तदेवाद्दष्टो द्रष्टाश्रुतः श्रोता ( बृ.३।७।२३ ) इति निगमय्य नान्योतोस्तीत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते । एष त 5 आत्मा ( बृ. ३।७।२३ ) । स त आत्मा ( बृ. माध्यं. ३।७।२३) इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥ १९ ॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

स्मार्तं प्रधानम् । शारीरो जीवः । स्मार्तं च शारीरश्च नान्त- 10 र्यामी । अतद्धर्माभिलापात् । तयोरसंभावितधर्माभिलापात् । स्वभावत एव सर्वस्य द्रष्टृत्वं सर्वस्य नियन्तृत्वं सर्वस्यात्मत्वं स्वत एवामृतत्वं च तयोर्न संभावनागन्धमर्हति । एतदुक्तं भवति । यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति तथा जीवोप्यतद्धर्मत्वादिति । अमीषां गुणानां परमात्मन्यन्वयः 15 प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥ २० ॥

निरपेक्षं च हेत्वन्तरमाह ।

## उभयेपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये माध्यंदिनाः काण्वाश्चान्तर्यामिणो नियाम्यत्वेन वाग्गादिभिरचेतनैः सममेनं शारीरमपि विभज्याधीयते । य 20

3. C. reads नियम्यैः for नियाम्यैः; B. om. यत्.

7. C. om. च; B. om. ते after च.

10. E. om. च after स्मार्तम्.

12. C. om. सर्वस्य द्रष्टृत्वम्.

14. E. reads सर्व before नियन्तृत्व.

आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२२) इति माध्यंदिना यो विज्ञाने तिष्ठन् (बृ. ३।७।२२) इत्यादि च काण्वाः परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैन-
5 मधीयत इत्यर्थः । अतोन्तर्यामी प्रत्यगात्मनो विलक्षणोपहत-पाप्मा परमात्मा नारायण इति सिद्धम् ॥ २१ ॥ (४) समाप्तमन्तर्याम्यधिकरणम् ।

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

आथर्वणिका अधीयते । अथ परा यया तदक्षरमधिगम्यते।
10 यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ( मु. १।१।५-६ ) इति । तथोत्तरत्राक्षरात्परतः परः ( मु. २। १।२) इति । तत्र संदिह्यते । किमिहादृश्यत्वादिगुणकमक्षरमक्ष-रात्परतः परश्च प्रकृतिपुरुषावथोभयत्र परमात्मैवेति । किं ताव-
15 त्प्राप्तम् । प्रकृतिपुरुषाविति । कुतः । अस्याक्षरस्यादृष्टो द्रष्टा ( बृ. ३।७।२३ ) इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते । अक्षरात्परतः परः ( मु. २।१।२ ) इति च सर्वस्मा-द्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञः समष्टिपुरुषः प्रतिपा-द्यते । एतदुक्तं भवति । रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूता-
20 श्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्म-रूपाचेतनमेवोपस्थापयति । तच्च प्रधानमेव ।तस्मात्परत्वं च समष्टि-

---

1. B. om. आत्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मान-मन्तरो यमयति स त आत्मान्तर्याम्यमृतः.

4. B. om. आदि च.

14. E. om. तावत्.

16. C. reads धर्मः for धर्मविशेषः.

18. B. reads क्षेत्रज्ञ for क्षेत्रज्ञः.

पुरुषस्यैव प्रसिद्धम् । तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति । तत्र दृष्टान्ता उपन्यस्यन्ते ।

यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः संभवन्ति ।
यथा सतः पुरुषात्केशलोमानि 5
तथाक्षरात्संभवतीह विश्वम् ॥ ( मु. १।१।७ )

इति । अतोस्मिन्प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते इत्येवं प्राप्तेऽभिधीयते ।

अदृश्यत्वादिगुणको धर्मोक्तेः । अदृश्यत्वादिगुणकोक्षरात्परतः परश्च परमपुरुष एव । कुतः । तद्धर्मोक्तेः । यः सर्वज्ञः सर्ववित् 10 (मु. १।१।९) इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते । तथा हि । यया तदक्षरमधिगम्यते ( मु. १।१।५ ) इत्यादिनादृश्यत्वादिगुणकमक्षरमभिधाय तथाक्षरात्संभवतीह विश्वम् ( मु. १।१।७ ) इति तस्माद्विश्वसंभवं चाभिधाय

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। 15
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ॥ ( मु. १।१।९ )

इति भूतयोनेरक्षरस्य सर्वज्ञत्वादि प्रतिपाद्यते । पश्चादक्षरात्परतः परः ( मु. २।१।२) इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते । अतोक्षरात्परतः परः ( मु. २।१।२ ) इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वा- 20 दिगुणकमक्षरं नाभिधत्ते । तस्य सर्वज्ञस्य विश्वयोनेः सर्वस्मा-

2. C. reads दृष्टान्त उपन्यस्यते for दृष्टान्ता उपन्यस्यन्ते.

8. C. reads भ्रमः for अभिधीयते.

13. B. E. om. तथाक्षरात्संभवतीह विश्वमिति तस्माद्विश्वसंभवं चाभिधाय.

त्परत्वेन तस्मादन्यस्य परत्वासंभवात् । अतोत्राक्षरशब्दो भूत-
सूक्ष्ममचेतनं ब्रूते ॥ २२ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

इतश्च न प्रधानपुरुषौ । विशिनष्टि हि प्रकरणं प्रधानाच्च पुरुषा-
5 च्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थ एकविज्ञानेन सर्वविज्ञानोप-
पादनादिभिः । तथा ताभ्यामस्याक्षरस्य भेदश्च व्यपदिश्यते-
क्षरात्परतः परः (मु. २।१।२) इत्यादिना । तथा हि

स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।
(मु. १।१।१)

10 इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता । परविद्यैव
च सर्वविद्याप्रतिष्ठा । तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मु-
खाथर्वादिगुरुपरम्परयाङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै
महाशालोङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो वि-
ज्ञाते सर्वमिदं विज्ञातं भवति (मु. १।१।३) इति । ब्रह्मविद्यायाः
15 सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा
ब्रह्मस्वरूपमनेन पृष्टम् । तस्मै स होवाच द्वे विद्ये वेदितव्ये
इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च (मु. १।१।४)
इति । ब्रह्म प्रेप्सुना द्वे विद्ये वेदितव्ये ब्रह्मविषये परोक्षापरो-
क्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः । अत्र परोक्षं शास्त्रजन्यं
20 ज्ञानम् । अपरोक्षं योगजन्यं ज्ञानम् । तयोर्ब्रह्मप्राप्त्युपायभूतम-
परोक्षज्ञानम् । तच्च भक्तिरूपापन्नम् । यमेवैष वृणुते तेन

3. E. reads इतश्च न प्रधानपुरुषौ । विशेषणभेदव्यपदेशाभ्यां च नेतरौ for विशेषणभेदव्यपदेशाभ्यां च नेतरौ । इतश्च न प्रधानपुरुषौ

4. E. om. हि.

12. B. om. वै.

19. C. reads ज्ञाने for विज्ञाने, and तत्र for अत्र.

लभ्य: ( मु. ३।२।३ ) इत्यत्रैव विशेष्यमाणत्वात् । तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ( बृ. ४।४।२२ ) इति श्रुते: । आह च भगवान् पराशर:

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥

इति । तत्रापरा ऋग्वेदो यजुर्वेद: ( मु. १।१।५ ) इत्यादिना धर्मशास्त्राणीत्यन्तेनागमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम्। साङ्गस्येतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुभूतत्वात् । अथ परा यया तदक्षरमधिगम्यते ( मु. १।१।५ ) इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानमुच्यते । यत्तदद्रेश्यम् ( मु. १।१।६ ) इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मण: स्वरूपमुच्यते । यथोर्णनाभि: सृजते गृह्णते च ( मु. १।१।७ ) इत्यादिना यथोक्तस्वरूपात्परस्माद्ब्रह्मणोक्षरात्कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता । विश्वमिति वचनान्नाचेतनमात्रस्य।

तपसा चीयते ब्रह्म ततोन्नमभिजायते ।
अन्नात्प्राणो मन: सत्यं लोका: कर्मसु चामृतम् ॥ (मु. १।१।८)

इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते । तपसा ज्ञानेन । यस्य ज्ञानमयं तप: ( मु. १।१।९ ) इति वक्ष्यमाणत्वात् । चीयत उपचीयते । बहु स्यामिति संकल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थ:। ततोन्नमभिजायते । अद्यत इत्यन्नम् । विश्वस्य भो-

5. B. reads द्विधा मुने for महामुने.

9. E. reads सेतिहास for इतिहास; B. reads पुराणधर्म for पुराणस्य सधर्म

10. B. om. भूत.

12. B. reads अगाह्यम after अद्रेश्य

त्कृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः । प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते । यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसंक-
5 ल्पत्वादिकमुक्तम् । सर्वज्ञात्सत्यसंकल्पात्परस्माद्ब्रह्मणोक्षरादेतत्कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते । तदेतत्सत्यम् ( मु. १।२।१ ) इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते ।

मन्त्रेषु कर्माणि कवयो यान्यपश्यन्
10 तानि त्रेतायां बहुधा संततानि ।
तान्याचरत नियतं सत्यकामाः ( मु. १।२।१ )

इति सार्वज्ञ्यसत्यसंकल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतः सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुःसामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा
15 संततानि कर्माण्याचरतेति । एष वः पन्थाः (मु. १।२।१) इत्यारभ्यैष वः पुण्यः सुकृतो ब्रह्मलोकः ( मु. १।२।६ ) इत्यन्तेन कर्मानुष्ठानप्रकारं श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येपीतरेषामनुष्ठितानामपि निष्फलत्वमयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय

3. C. reads सर्व for सर्वम्.

6. B. reads स्व before रूपम्.

9. B. reads अदर्शयत for अपश्यन्.

11. B. reads कर्माणि for तानि before आचरत.

13. C. reads नियतम् after सत्यम्.

17. B. reads इतर for एकतर.

18. B. reads एषाम् for इतरेषाम्.

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥
( मु. १।२।७ )

इत्यादिना फलाभिसंधिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा तपःश्रद्धे ये ह्युपवसन्ति (मु. १।२।११) इत्यादिना पुनरपि फलाभिसंधिरहितं ज्ञानिनानुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य परीक्ष्य लोकान् ( मु. १।२।१२ ) इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य चाचार्योपसदनं विधाय तदेतत्सत्यं यथा सुदीप्तात् ( मु. २।१।१ ) इत्यादिना सोविद्याग्रन्थिं विकिरतीह सोम्य (मु. २।१।१०) इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वं तस्माद्विश्वसृष्टिं च विस्पष्टमभिधायाविः संनिहितम् ( मु. २।२।१ ) इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारमुपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवं फलं चोपदिश्योपसंहृतम् । अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते । भेदव्यपदेशोपि हि ताभ्यां परस्य ब्रह्मणोत्र विद्यते ।

1. B. C. read अपरम् for अवरम्.
4. B. C. read अपरम् for अवरम्.
7. E. reads प्रशंस्य for प्रशस्य.
8. C. reads अक्षरस्य भूतयोनेः परस्य ब्रह्मणः after विरक्तस्य.
13. B. reads सर्वशरीरत्वेन for विश्वशरीरत्वेन.
17. B. reads हृदये for हृदय; C. om. पर before भक्ति.
18. C. om. वि before मोक; B. reads ब्रह्मणा for ब्रह्म before समम्.

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ।

अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ (मु. २।१।२)
इत्यादिभिरक्षराद्व्याकृतात्परो यः समष्टिपुरुषस्तस्मादपि पर-
भूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अ-
5 श्नुत इति वा न क्षरतीति वाक्षरम् । तदव्याकृतेपि स्वविकार-
व्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वाक्ष-
रत्वं कथंचिदुपपद्यते ॥ २३ ॥

## रूपोपन्यासाच्च ॥ २४ ॥

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
10 दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य

पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ( मु. २।१।४ )
इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव संभवति ।
अतश्च परमात्मा ॥ २४ ॥ अदृश्यत्वादिगुणकाधिकरणं समाप्तम् । (५)

## 15 वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

इदमामनन्ति च्छन्दोगाः । आत्मानमेवेमं वैश्वानरं संप्रत्य-
ध्येपि तमेव नो ब्रूहि (छा. ५।११।६) इति प्रक्रम्य यस्त्वेतमेवं
प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते (छा. ५।१८।१)
इति । तत्र संदेहः । किमयं वैश्वानर आत्मा परमात्मेति शक्य-
20 निर्णय उत नेति । किं प्राप्तम् । अशक्यनिर्णय इति । कुतः ।
वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् । जाठराग्नौ तावत् ।
अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते । तस्यैष घोषो
भवति यमेतत्कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन्भवति

3. B. reads इत्यादिना for इत्यादिभिः.

6. B. reads अयोग्य for योग्य; C. reads अक्षरण for क्षरण.

नैनं घोषं शृणोति (बृ. ५।९।१) इति । महाभूततृतीये च ।

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।

(ऋ. सं. १०।८८।१२)

इति । देवतायां च ।

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । 5

(ऋ. सं. १।९८।१)

इति । परमात्मनि च । तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यन् (तै. आ. ३।११।८) । स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत इति च । वाक्योपक्रमादिषु चोपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति। एवं प्राप्तेऽभिधीयते। 10

वैश्वानरः साधारणशब्दविशेषात् । वैश्वानरः परमात्मा । कुतः । साधारणशब्दविशेषात् । विशेष्यत इति विशेषः । साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैश्वर्यैर्विशेष्यमाणत्वादित्यर्थः । तथा हि । औपमन्यवादयः पञ्चेमे महर्षयः समेत्य को न आत्मा किं ब्रह्म (छा. ५।११।१) इति विचार्योद्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम (छा. ५।११।२) इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा तान्होवाच । अश्वपतिर्वै भगवन्तोऽयं कैकयः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम (छा. ५।११।४) इति । ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः । स च तान्महर्षीन्यथार्हं पृथगभ्यर्च्य न मे स्तेनः (छा. ५।११।५) इत्यादिना वक्ष्यमाणो

11. C. reads पर एवात्मा for परमात्मा.

17. B. reads अभ्यागच्छामो वयम् for अभ्यागच्छ

18. B. reads अधिगम्य for अवगम्य.

ह् वै भगवन्तोहमस्मि ( छा. ५।११।५ ) इत्यन्तेनात्मनो वृत्तस्थ-
तया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धस्य परिह-
रणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य यावदेकैकस्मा ऋत्विजे
धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्तः (छा.
5 ५।११।५) इत्यवोचन् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञा-
समानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं को न आत्मा
किं ब्रह्म ( छा. ५।११।१ ) इति जीवात्मनामात्मभूतं ब्रह्म जि-
ज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञमकाशमागम्य पृच्छ्य-
मानो वैश्वानरात्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्या-
10 मुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मश-
ब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति वि-
ज्ञायते । किं च स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति
( छा. ५।१८।१ ) । तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य
सर्वे पाप्मानः प्रदूयन्ते ( छा. ५।२४।३ ) इति च वक्ष्यमाणं
15 वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥२५॥

इतश्च वैश्वानरः परमात्मा ।

## स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोप-
दिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह
20 तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे-

4. B. E. read भवन्तः for भगवन्तः.

5. C. reads वैश्वानर for वैश्वानरम्.

9. C. reads वैश्वानरः for वैश्वानर before आत्मा; B. reads अतः before आत्मब्रह्म.

14. C. om. च.

20. B. reads परमपुरुषरूपत्वे, C. परमात्मत्वे, for परमपुरुषत्वे.

नुमानं लिङ्गमित्यर्थः। इतिशब्दः प्रकारवचनः। इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेनुमानं स्यात्।

श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम्। यथाथर्वणे

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः। 5
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥ (मु. २।१।४)

इति। अग्निरिह द्युलोकः। असौ वै लोकोग्निः (छा. ५।४।१) इति श्रुतेः। स्मरन्ति च मुनयः

द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। 10
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोचिन्त्यात्मा सर्वभूतप्रणेता॥

इति।

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥
(भा. शान्ति. रा. ४७।६८) 15

इति च। इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि। तैरौपमन्यवप्रभृतिभिर्महर्षिभिरात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि (छा. ५।११।६) इति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किंचिज्ज्ञातं किंचिच्चाज्ञातमिति विज्ञाय 20 ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ। तत्रौपमन्यव कं त्वमात्मानमुपास्से (छा. ५।१२।१) इति पृष्टे दिवमेव भगवो राजन् (छा. ५।१२।१) इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या

10. C. reads नाभिः for नाभिम्.
20. E. om. च.
21. C. om. च after इति.

वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्य-
पत् । एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकेनै-
कैकमुपास्यमानतया कथितानां विश्वरूपः पृथग्वर्त्मा बहुलो
रयिः प्रतिष्ठेत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसंदे-
5 हबस्तिपादावयवत्वं चोपदिष्टम् । संदेहो मध्यकाय उच्यते ।
अत एवंभूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वा-
नरः परमपुरुष एव ॥ २६ ॥

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति ।

**शब्दादिभ्योन्तःप्रतिष्ठानाच्च नेति चेन्न तथा
10 दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥२७॥**

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति तन्न । शब्दा-
दिभ्योन्तःप्रतिष्ठानाच्च जाठरस्याग्नेरिह प्रतीयमानत्वात् । शब्द-
स्तावद्वाजिनां वैश्वानरविद्याप्रकरणे स एषोग्निर्वैश्वानरः (श.
ब्रा. १०।६।१।११) इति वैश्वानरसमानाधिकरणतयाग्निरिति
15 श्रूयते । अस्मिन्प्रकरणे च हृदयं गार्हपत्यो मनोन्वाहार्यपचन
आस्यमाहवनीयः (छा. ५।१८।२) इति वैश्वानरस्य हृदया-
दिस्थस्याग्नित्रयकल्पनं क्रियते । तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं
स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा (छा.
५।१९।१) इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते ।
20 तथा वैश्वानरस्यास्मिन्पुरुषेन्तःप्रतिष्ठानं वाजसनेयिनः समा-
मनन्ति । स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रति-

7. C. reads आत्मा before परम.
8. C. om. एव after अनिर्णयम्.
9. B. om. च न.
12. E. reads अपि after जाठरस्य.
16. B. reads हृदयादिस्थानगतस्य for हृदयादिस्थस्य.
21. C. reads एनमेव for एतमेव.

ष्ठितं वेद (श. ब्रा. १०।६।१।११) इति । अतोऽग्निशब्दसामानाधिकरण्यादग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततःपरमात्मत्वमिति चेत् । तन्न । तथा दृष्ट्युपदेशात् । पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते । अपि तु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेत् । असंभवात् । जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासंभवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ (गी. १५।१४)

इति । जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते । किं च पुरुषमपि चैनमधीयते वाजसनेयिनः । स एषोऽग्निर्वैश्वानरो यत्पुरुषः (श. ब्रा. १०।६।१।११) इति । न हि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मन एव हि निरुपाधिकं पुरुषत्वम् । यथा सहस्रशीर्षा पुरुषः (श्वे. ३।१४)। पुरुष एवेदं सर्वम् (श्वे. ३।१५) इत्यादौ ॥ २७ ॥

## अत एव न देवता भूतं च ॥ २८ ॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥

2. B. reads तत् before अन्तः.
4. E. reads पूर्वोक्त for पूर्वोक्तस्य.
5. C. reads शरीरकस्य for शरीरस्य: B. om. परस्य.
6. E. reads विशिष्टोपासनस्य for विशिष्टस्योपासन.
7. B. reads अपि प्रतीयत इति नैकान्ततः परमात्मत्वम् after परमात्मा.

## साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया त-
द्विशिष्टस्य परमात्मनो वाचकत्वं तथैव परमात्मन उपास्यत्वं चो-
क्तम् । जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि पर-
5 मात्मन एव साक्षादव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति
मन्यते । एतदुक्तं भवति । यथा वैश्वानरशब्दः साधारणोपि
परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना
गुणेन परमात्मानमेवाभिदधातीति निश्चीयत एवमग्निशब्दो-
प्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्तते तस्यैव
10 गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि संभवादस्मि-
न्प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभि-
धत्त इति ॥ २९ ॥

यस्त्वेतमेवं प्रादेशमात्रमभिविमानम् ( छा. ५।१८।१ ) इ-
त्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तावयवस्य प्रादे-
15 शसंबन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते तत्राह ।

## अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य
आचार्यो मन्यते । द्यौर्मूर्धादित्यश्चक्षुर्वायुः प्राण आकाशो
मध्यकाय आपो बस्तिः पृथिवी पादाविति द्युप्रभृतिप्रदेशसंब-
20 न्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्नवतो विगत-
मानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

9. B. reads आदिन्यायेन for आदिना येन.

14. C. reads पृथिव्यन्तप्रदेश for पृथिव्यन्तावयवस्य प्रादेश.

19. B. reads प्रादेश for प्रदेश.

20. E. reads इदम् after कृत्स्नम्.

मूर्धप्रभृत्यवयवविशेषैः पुरुषधर्मविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्तत्राह।

## अनुस्मृतेर्बादरिः ॥ ३१ ॥

तथोपासनार्थमिति बादरिराचार्यो मन्यते। यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति (छा. ५।१८।१) इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते। एतमेवमिति। उक्तप्रकारेण पुरुषाकारमित्यर्थः। स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति। सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥ ३१ ॥

यदि परमात्मा वैश्वानरः कथं तर्ह्युरःप्रभृतीनां वेद्यादित्वोपदेशः। यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह।

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते। तथा हि परमात्मोपासनोचितमेव फलं प्राणाहुत्यग्निहोत्रसंपत्तिं च दर्शयतीयं श्रुतिः। स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात्।

5. E. om. प्रादेशमात्रम.

8. C. om. सर्वेषु लोकेषु.

13. B. reads वेदित्वादि for वेद्यादित्व.

20. E. reads श्रुतिरियम् for इयं श्रुतिः; B. reads विद्वान् for अविद्वान्.

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ( छा. ५।२४।१-२-३ ) इति ॥ ३२ ॥

## आमनन्ति चैनमस्मिन्। ३३

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वायामनन्ति च । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः ( छा. ५।१८।२ ) इत्यादिना । अयमर्थः । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते ( छा. ५।१८।१ ) इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय सर्वेषु लोकेषु ( छा. ५।१८।१ ) इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्यास्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं तस्य ह वा एतस्य ( छा. ५।१८।२ ) इत्यादिनोपदिशति । यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन्सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु संपादयतीति मूर्धैव सुतेजाः । उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः । आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा । वायुरित्यर्थः । संदेहो बहुलः । उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । बस्तिरेव

1. C. om. एतत् before एवम्.
7. C. reads आधारताम् for आधारत्वाय.
8. B. om. आदिना.
13. B. reads उपदिश्य for उपदिशति.
14. C. reads एव after तस्य; B. reads वायु for अग्नि.
16. E. om. इति after संपादयति.
19. C. reads मध्यकायभूत for मध्यकायभूतः.

रयि: । अस्य बस्तिरेव तदवयवभूता आप इत्यर्थ: । पृथिव्येव पादौ । अस्य पादावेव तत्पादभूता पृथिवीत्यर्थ: । एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसंधाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिर्बर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदित्युर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्य: ( छा. ५।१८।२ ) इत्यादिनोपदिश्यते । अत: परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम ॥ ३३ ॥ समाप्तं वैश्वानराधिकरणम् । (६) 10

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीय: पाद: ॥ २ ॥



3. E reads एव after स्वशरीरे.

# अथ श्रीभाष्ये



## प्रथमाध्याये तृतीयः पाद आरभ्यते ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

आथर्वणिका अधीयते

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥
(मु. २।२।५)

इति । तत्र संशयः । किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीव उत परमात्मेति । किं युक्तम् । जीव इति । कुतः ।

10 अरा इव रथनाभौ संहता यत्र नाडयः
स एषोन्तश्चरते बहुधा जायमानः । (मु. २।२।६)

इति परस्मिञ्श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं यत्रेति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा पुनरपि स एषोन्तश्चरते बहुधा जायमानः (मु. २।२।६)
15 इति तस्य बहुधा जायमानत्वं चोच्यते । नाडीसंबन्धो देवादिरूपेण बहुधा जायमानत्वं च जीवस्यैव धर्मः । अस्मिन्नपि श्लोक ओतं मनः सह प्राणैश्च सर्वैः (मु. २।२।५) इति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव । एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथं-
20 चित्संगमयितव्यमिति । एवं प्राप्ते प्रचक्ष्महे ।

---

12. B. reads वाक्ये for वाक्य; B. om. आदि after पृथिवी.

19. B. om. सति; B. om. आदि after पृथिवी.

द्युभ्वाद्यायतनं स्वशब्दात्। द्युपृथिव्यादीनामायतनं परं ब्रह्म। कुतः। स्वशब्दात्। परब्रह्मासाधारणशब्दात्। अमृतस्यैष सेतुः (मु. २।२।५) इति परस्य ब्रह्मणोसाधारणः शब्दः।

तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते।
(श्वे. ३।८) 5

इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुः श्रूयते। सिनोतेश्च बन्धनार्थत्वात्सेतुरमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः। नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः। संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन्ब्रह्मणि मुख्यवृत्तः। आप्नोतीति ह्यात्मा। स्वेतरसमस्तस्य 10 नियन्तृत्वेन व्याप्तिस्तस्यैव संभवति। अतः सोपि तस्यैव शब्दः। यः सर्वज्ञः सर्ववित् (मु. १।१।९) इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणः शब्दाः। नाड्याधारत्वं तस्यापि संभवति।

संततं शिराभिस्तु लम्बत्याकोशसंनिभम्। (ना. १३।२)
इत्यारभ्य 15

तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। (ना. १३।२) इति श्रवणात्। बहुधा जायमानः (मु. २।२।६) इत्यपि परस्मिन्ब्रह्मणि संगच्छते।

अजायमानो बहुधा विजायते।
तस्य धीराः परिजानन्ति योनिम्। (तै. आ. ३।१३) 20

इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थान-

6. E. reads च after हेतुः; C. om. च after सिनोतेः.

10. B. om. हि.

गुणधर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात् । स्मृतिरपि

अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ( गी. ४।६ )

5 इति । मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥ १ ॥

इतश्च परमपुरुषः ।

## मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि 10 प्राप्यतया व्यपदिश्यते ।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
( मु. ३।१।३ )

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
15 तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥
( मु. ३।२।८ )

इति । संसारबन्धाद्विमुक्ता एव हि 'विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विमुक्ताश्च । पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्नि20 रञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमसाम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥२॥

1. B. reads गुणक for गुण; E. reads कर्म for धर्म.

2. C. om. वि before जायते; B. reads परम for परः.

20. B. reads परम्, E. परमम्, for परम.

एवं परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह ।

## नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

यथास्मिन्प्रकरणे प्रधानप्रतिपादकशब्दाभावात्प्रधानं न प्रतिपाद्यमेवं प्राणभृदपीत्यर्थः । अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते । अनुमानप्रमितत्वादानुमानमिति वा । अतच्छब्दात्तद्वाचिशब्दाभावादित्यर्थः । अर्थाभावे यदव्ययमित्यव्ययीभावः ॥ ३ ॥ 5

इतश्चायं न प्रत्यगात्मा

## भेदव्यपदेशात् ॥ ४ ॥ 10

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥
(मु. ३।१।२)

इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदिश्यते । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीवः । अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणमस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति ॥ ४ ॥ 15

## प्रकरणात् ॥ ५ ॥

प्रकरणं चेदं परस्य ब्रह्मण इत्यदृश्यत्वादिगुणको धर्मोक्तेः

---

1. E. om. प्रधान.
6. B. C. read अनुमानम् for आनुमानम्.
7. C. om. यत्.
10. B. reads च after भेदव्यपदेशात्.
15. C. om. जीवः.

( ब्र. सू. १।२।२२ ) इत्यत्रैव प्रतिपादितम् । नाडीसंबन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्ष्म ॥ ५ ॥

## स्थित्यदनाभ्यां च ॥ ६ ॥

5 द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति ॥
( मु. ३।१।१ )

इत्येकस्य कर्मफलादनमन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तःस्थितिमात्रं प्रतिपाद्यते । तत्र कर्मफल-
10 मनश्नन्दीप्यमान एव सर्वज्ञोमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति न पुनः कर्मफलमदञ्छोचन्प्रत्यगात्मा । अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥ ६ ॥ द्युभ्वाद्यधिकरणं समाप्तम् । (१)

## भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥

इदमामनन्ति च्छन्दोगाः । यत्र नान्यत्पश्यति नान्यच्छृणोति
15 नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् ( छा. ७।२४।१ ) इति । तत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि । पृथ्वादिषु बहुशब्दः पठ्यते । ततः पृथ्वादिभ्य इमनिज्वा (पा. सू. ५।१।१२२)

1. E. reads दर्शितम् for प्रतिपादितम्; B. C. read संबन्धात् for संबन्ध.
2. B. om. अत्र.
8. C. reads च कर्मफलादनमन्यस्य for कर्मफलादनमन्यस्य च.
10. B. reads अमृतस्यैषः for अमृत.
14. C. reads आम्नायते छान्दोग्ये for आमनन्ति च्छन्दोगाः.
16. E. reads अत्र for तत्र.

इतीमनिच्प्रत्यये कृते बहोर्लोपो भू च बहोः (पा. सू. ६।४।१५८) इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति । भूमा बहुत्वमित्यर्थः। अत्र चायं बहुशब्दो वैपुल्यवाची न संख्यावाची । यत्रान्यत्पश्यति तदल्पमित्यल्पप्रतियोगित्वश्रवणात् । अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते न धर्ममात्रपरः । तदेवं भूमेति विपुल इत्यर्थः । वैपुल्यविशेष्यश्चेहात्मेत्यवगतः । तरति शोकमात्मवित् (छा. ७।१।३) इति प्रक्रम्य भूमविज्ञानमुपदिश्यात्मैवेदं सर्वम् (छा. ७।२५।२) इति तस्यैवोपसंहारात् ।

अत्र संशय्यते किमयं भूमगुणविशिष्टः प्रत्यगात्मोत परमात्मेति । किं युक्तम् । प्रत्यगात्मेति । कुतः । श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मवित् (छा. ७।१।३) इत्यात्मजिज्ञासयोपसन्नाय नारदाय नामादिप्राणपर्यन्तेषूपास्यतयोपदिष्टेष्वस्ति भगवो नाम्नो भूयः (छा. ७।१।५)। अस्ति भगवो वाचो भूयः (छा. ७।२।२) इत्यादयः प्रश्ना वाग्वाव नाम्नो भूयसी (छा. ७।२।१)। मनो वाव वाचो भूयः (छा. ७।३।१) इत्यादीनि च प्रतिवचनानि प्राणात्प्राचीनेषु दृश्यन्ते । प्राणे तु न पश्यामः । अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते । इह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव न वायुविशेषमात्रम् । प्राणो ह पिता प्राणो ह माता (छा. ७।१५।१) इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति । पितृहा...मातृहा (छा. ७।१५।२) इत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि

2. C. om. इति after भूमा.

3. B. om. च after अत्र.

5. E. reads अन्यशब्द for अल्पशब्द; B. reads धर्मिपरत्वम् for धर्मिपरश्च.

हिंसकत्वनिमित्तोपक्रोशवचनात् । तेष्वेव विगतप्राणेष्वत्यन्तोप-
मर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्रा-
णशब्दनिर्दिष्टः । अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयो-
र्हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगा-
5 त्मैवेति निश्चीयते । अत एव चारनाभिदृष्टान्ताद्युपन्यासेन प्रा-
णशब्दनिर्दिष्टः पर इति न भ्रमितव्यम् । परस्य हिंसाप्रसङ्गा-
भावात् । जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्या-
चिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोप-
पत्तेश्च । अयमेव च प्राणशब्दनिर्दिष्टो भूमा । अस्ति भगवः
10 प्राणाद्भूय इति प्रश्नस्यादो वाव प्राणाद्भूय इति प्रतिवचनस्य
चाभावाद्भूमसंशब्दनात्प्राक्प्राणप्रकरणस्याविच्छेदात् ।

किं च प्राणवेदिनोतिवादित्वमुक्त्वा तमेवैष तु वा अतिव-
दति ( छा. ७।१६।१ ) इति प्रत्यभिज्ञाप्य यः सत्येनातिव-
दति ( छा. ७।१६।१ ) इति तस्य सत्यवदनं प्राणोपासनाङ्ग-
15 तयोपदिश्योपादेयस्य सत्यवदनस्य शेषतया पूर्वनिर्दिष्टप्राणया-
थात्म्यविज्ञानं यदा वै विजानात्यथ सत्यं वदति (छा.७।१७।१)
इत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नानुपदिश्य त-
दारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुख-
रूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता भूमा त्वेव वि-

---

5. B. om. एव before इति.

7. C. reads उपकरणस्य for उपकरणभूतस्य.

11. B. reads संशब्दात् for संशब्दनात्; C. om. प्राण before प्रकरणस्य.

14. B. reads वचनम् for वदनम्.

15. E. reads उपदिश्यते for उपदिश्य; E. reads शेषितया for शेषतया.

17. C. om. च after तत्सिद्ध्यर्थम्; B. reads मनसः for मनन.

जिज्ञासितव्यः (छा. ७।२३।१) इत्युपदिश्यते । तदेवं प्रत्यगात्मन एवाविद्याविमुक्तं रूपं विपुलसुखमित्युपदिष्टमिति तरति शोकमात्मवित् (छा. ७।१।३) इत्युपक्रमाविरोधश्च । अतो भूमगुणविशिष्टः प्रत्यगात्मा । यत एवं भूमगुणविशिष्टः प्रत्यगात्मात एवाहमर्थे प्रत्यगात्मन्यहमेवाधस्तादहमुपरिष्टात् (छा. ७।२५।१) इत्यारभ्याहमेवेदं सर्वम् (छा. ७।२५।१) इति प्रत्यगात्मनो वैभवमुपदिशति । एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति । एवं प्राप्तेभिधीयते ।　5

भूमा संप्रसादादध्युपदेशात् । भूमगुणविशिष्टो न प्रत्यगात्मा । अपि तु परमात्मा । कुतः । संप्रसादादध्युपदेशात् ।　10
संप्रसादः प्रत्यगात्मा । एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छा. ८।३।४) इत्युपनिषत्प्रसिद्धेः । संप्रसादात्प्रत्यगात्मनोधिकतया भूमगुणविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः । सत्यशब्दाभिधेयं च परं ब्रह्म । एतदुक्तं भवति । यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषामर्थान्तरत्वमेवं　15
प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोधिकतया भूमगुणविशिष्टो निर्दिष्टः सत्यशब्दाभिधेयस्तस्मादर्थान्तरभूत एव । अतः सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति ।

4. E. om. प्रत्यगात्मा before अत एव; B. reads तत एव for अत एव.

13. E. om. गुण.

16. C. om. एवम्.

17. C. E. om. भूमगुणविशिष्टः.

18. C. reads अत्र for अतः.

19. C. reads निर्दिष्टम् for निर्दिष्टः; C. om. एव after ब्रह्म.

तदाह वृत्तिकारः। भूमा त्वेवेति भूमा परं ब्रह्म । नामादिपरंपरयात्मन ऊर्ध्वमस्योपदेशादिति।

प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत्स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नति-
5 वादी भवति (छा. ७।१५।४) इति प्राणविदोतिवादित्वमुक्त्वैष तु वा अतिवदति यः सत्येनातिवदति (छा. ७।१६।१) इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति। अत एवैष तु वा अतिवदति (छा. ७।१६।१) इत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा । अतोस्यातिवादित्वनिमित्तं
10 सत्यं पूर्वातिवादित्वनिमित्तात्प्राणादधिकमिति विज्ञायते।

ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम् । अतः प्राणप्रकरणाविच्छेद इत्युक्तम्। नैतद्युक्तम् । तुशब्देन ह्यतिवाद्येवान्यः प्रतीयते। न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम्। एष तु वाग्निहोत्री यः सत्यं वदतीत्यादिष्वग्निहो-
15 त्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते। अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१।१) इत्यादिषु परस्मिन्ब्रह्मणि प्रयुक्तः । अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं संभवतीति वाक्यस्वरससिद्ध-
20 मन्यत्वं न बाधितव्यम । अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतयातिक्रान्तस्वोपास्यवस्तुवादित्वम् । नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदो-

1. C. E. om. परम् before ब्रह्म.

8. C. om. एव.

11. B. reads प्राणवादिनः for प्राणवेदिनः.

12. C. om. हि.

तिवादित्वम् । तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थ-
तयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमित्येष तु वा
अतिवदति यः सत्येनातिवदति (छा. ७।१६।१) इत्युक्तम् ।
सत्येनेतीत्थंभूतलक्षणे तृतीया । सत्येन परेण ब्रह्मणोपास्येनोप-
लक्षितो योतिवदतीत्यर्थः । अत एवैवं शिष्यः प्रार्थयते सोहं　5
भगवः सत्येनातिवदानि (छा. ७।१६।१) इति । आचार्यश्च
सत्यं त्वेव विजिज्ञासितव्यम् (छा. ७।१६।१) इत्याह । आ-
त्मतः प्राणः (छा. ७।२६।१) इति च प्राणशब्दनिर्दिष्टस्यात्मन
उत्पत्तिरुच्यते । अतस्तरति शोकमात्मवित् (छा. ७।१।३)
इति प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ।　10

यत्तूक्तमस्ति भगवः प्राणाद्भूय इति प्रश्नस्यादो वाव प्राणा-
द्भूय इति प्रतिवचनस्य चादर्शनात्प्रक्रान्त आत्मोपदेशः प्राणो-
पदेशपर्यवसानो गम्यत इति तदयुक्तम् । न हि प्रश्नप्रतिवच-
नाभ्यामेवार्थान्तरत्वं गम्यते । प्रमाणान्तरेणापि तत्संभवात् ।
उक्तं च प्रमाणान्तरम् । अस्ति भगवः प्राणाद्भूय इत्यपृच्छतो-　15
यमभिप्रायः । नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूयस्तया
पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेपूपदिष्टेपु तत्तद्वेदिन आचार्येणा-
तिवादित्वं नोक्तम् । प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु
पुरुषार्थभूयस्त्वातिशयेन मन्वानेन स वा एष एवं पश्यन्नेवं म-
न्वान एवं विजानन्नतिवादी भवति (छा. ७।१५।४) इत्यति-　20
क्रान्तवस्तुवादित्वमुक्तम् । अतोत्रैवात्मोपदेशः समाप्त इति मत्वा
शिष्यो भूयो न पप्रच्छ । आचार्यस्त्विदमपि सातिशयं मत्वा
निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्मैष तु वा अ-

---

5. B. om. इत्यर्थः.

8. C. reads आत्मना for आत्मनः.

17. B. om. अपि; C. reads अपि after उत्तरोत्तरेषु.

तिवदति यः सत्येनातिवदति ( छा. ७।१६।१ ) इति स्वयमेवोपचिक्षेप । शिष्योपि परमपुरुषार्थरूपे परस्मिन्ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया मोहं भगवः सत्येनातिवदानि ( छा. ७।१६।१ ) इति प्रार्थयामास । ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं सत्यं त्वेव विजिज्ञासितव्यम् ( छा. ७।१६।१ ) इत्युपदिश्य तदुपायभूतं ब्रह्ममननं मतिस्त्वेव विजिज्ञासितव्या ( छा. ७।१८।१ ) इत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धा त्वेव विजिज्ञासितव्या ( छा. ७।१९।१ ) इत्युपदिश्य तदुपायभूतां तन्निष्ठां निष्ठा त्वेव विजिज्ञासितव्या (छा.७।२०।१) इत्युपदिश्य तदुपायभूतां तदुद्योगप्रयत्नरूपां कृतिमपि कृतिस्त्वेव विजिज्ञासितव्या ( छा. ७।२१।१ ) इत्युपदिश्य श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति सुखं त्वेव विजिज्ञासितव्यम् (छा. ७।२२।१) इत्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति भूमा त्वेव विजिज्ञासितव्यः (छा. ७।२३।१) इत्युपदिश्य निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ( छा. ७।२४।१ ) इति । अयमर्थः । अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोन्यत्किमपि न पश्यत्यनुभविता । ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य । अत ऐश्वर्यापरपर्यायविभू-

9. E. om. अपि.

11. E. reads च after तदुपायभूताम्.

12. C. reads तदुद्योगभूताम् for तदुद्योग.

22. C. reads अयम् after पश्यति.

तिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवंस्तद्व्यतिरिक्तस्य वस्तुनोभावादेव किमप्यन्यन्न पश्यति । अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति । तदेव हि सुखं यदनुभूयमानं पुरुषानुकूलं भवति ।

ननु चेदमेव जगद्ब्रह्मणोन्यतयानुभूयमानं दुःखरूपं परिमित- 5
सुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतयानुभूयमानं सुखरूपमेव भवेत् । उच्यते । कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोन्यत्वेनानुभूयमानं कृत्स्नं जगत्तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति । अतो ब्रह्मणोन्यतयानुभूयमानमन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमि- 10
त्तत्वात्कर्मरूपाविद्याविमुक्तस्य तदेव जगद्विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति । यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति । तदेव पयः पित्तानुपहतस्य सुखायैव भवति । यथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसंधीयमानं प्रियत्वमनुपगतं तथात्वेनानु- 15
संधीयमानं प्रियतमं भवति तथा निरतिशयानन्दस्वरूपस्य ब्र-

5. B. reads परिमितिसुखम् for परिमितसुखरूपम्.
6. B. reads ब्रह्मणे: for ब्रह्म.
8. C. reads अन्यतया for अन्यत्वेन.
9. E. reads अन्यत्वेन for अन्यतया.
10. E. om. च after दुःखत्वेन.
11. C. reads विनिर्मुक्तस्य for विमुक्तस्य.
14. C. reads यथा च for यथैव.
15. C. reads अनुसंधीयमानत्वे for अनुसंधीयमानम् before प्रियत्वम्; E. reads तथात्वानुसंधानेन for तथात्वेनानुसंधीयमानम्.
16. C. reads निरवधिकातिशय for निरतिशय; B. reads सुखरूपस्य for स्वरूपस्य.

ह्मणोनवधिकातिशयासंख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसंधीयमानं जगन्निरतिशयप्रीतये भवत्येव । अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवंस्ततोन्यत्किमपि न पश्यति दुःखं च न पश्यति । एतदेवोपपादयति
5 वाक्यशेषः स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति (छा. ७।२५।२) इति । स्वराडकर्मवश्यः । अन्यराजानः क-
10 र्मवश्याः । तथा

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥(छा. ७।२६।२)

इति च । निरतिशयसुखरूपत्वं च ब्रह्मण आनन्दमयोभ्यासात् (ब्र. सू. १।१।१३) इत्यत्र प्रपञ्चितम् । अतः प्राणशब्दनि-
15 र्दिष्टात्प्रत्यगात्मनोर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ॥ ७ ॥

## धर्मोपपत्तेश्च ॥ ८ ॥

अस्य भूम्नो ये धर्मा आम्नायन्ते तेपि परस्मिन्नेवोपपद्यन्ते । एतदमृतम् (छा. ७।२४।१) इति स्वाभाविकममृतत्वं स्वे
20 महिम्नि (छा. ७।२४।१) इत्यनन्याधारत्वं स एवाधस्तात् (छा. ७।२५।१) इत्यादि स एवेदं सर्वम् (छा. ७।२५।१)

1. C. reads गण after गुण.

13. C. om. च after इति.

19. B. E. read अमृतत्वम् for अमृतम्.

इति सर्वात्मत्वमात्मत: प्राण: ( छा. ७।२६।१ ) इत्यादि प्राण-
प्रभृते: सर्वस्योत्पादकत्वमित्यादयो हि धर्मा: परमात्मन एव ।

यत्त्वहमेवाधस्तात् ( छा. ७।२५।१ ) इत्यादिना सर्वात्मत्व-
मुपदिष्टं तद्भूमगुणविशिष्टस्य ब्रह्मणोहंग्रहेणोपासनमुपदिश्यते ।
अथातोहंकारादेश: (छा. ७।२५।१ ) इत्यहंग्रहोपदेशोपक्रमात् । 5
अहमर्थस्य प्रत्यगात्मनोपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादि-
पृक्तम् । अत: प्रत्यगर्थस्य परमात्मपर्यवसानादहंशब्दोपि परमात्म-
पर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसंधानार्थोयमहं-
ग्रहोपदेश: । परमात्मन: सर्वशरीरतया सर्वात्मत्वात्प्रत्यगात्मनो-
प्यात्मा परमात्मा । तदेवाथात आत्मादेश: ( छा. ७।२५।२ ) 10
इत्यादिनात्मैवेदं सर्वम् ( छा. ७।२५।२ ) इत्यन्तेनोच्यते । एत-
देवोपपादयितुं प्रत्यगात्मनोप्यात्मभूतात्परमात्मन: सर्वस्योत्पत्ति-
रुच्यते तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं बिजानत
आत्मत: प्राण:...आत्मत आकाश: (छा. ७।२६।१) इत्यादिना ।
उपासकस्यान्तर्यामितयावस्थितात्परमात्मन: सर्वस्योत्पत्तिरित्यर्थ: । 15
अत: परमात्मन: प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहोपासनं
कर्तव्यम् । तस्माद्भूमविशिष्ट: परमात्मेति सिद्धम् ॥ ८ ॥
भूमाधिकरणं समाप्तम् । (२)

1. E. reads सर्वात्मकत्वम् for सर्वात्मत्वम्; E. reads प्राणप्रभृति for प्राणप्रभृते:; C. om. प्राणप्रभृते:.
3. E. reads सर्वात्मकत्वम् for सर्वात्मत्वम्.
4. E. om. गुण; C. reads अहंग्रहण for अहंग्रहेण.
6. B. om. अपि.
8. B. reads शरीरत्वेन for शरीरकत्वेन.
10. B. om. तदेव.
16. C. reads अहंग्रहण for अहंग्रह.

## अक्षरमम्बरान्तधृतेः ॥ ९ ॥

वाजसनेयिनो गार्गिप्रश्ने समामनन्ति । स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम् (बृ. ३।८।८) इत्यादि । तत्र संशयः किमेतदक्षरं प्रधानं जीवो वोत परमात्मेति । किं युक्तम् । प्रधानमिति । कुतः । अक्षरात्परतः परः (मु. २।१।२) इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनात् । अस्थूलत्वादीनां च तत्रैव समन्वयात् । यया तदक्षरमधिगम्यते (मु. १।१।५) इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत इति चेन्न । प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः । प्रतीतपरिग्रहे विरोधाभावात् । किं च यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्याः (बृ. ३।८।७) इत्यारभ्य सर्वस्य कालत्रयवर्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च (बृ. ३।८।७) इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते । अतोक्षरं प्रधानमिति प्राप्त उच्यते ।

अक्षरमम्बरान्तधृतेः । अक्षरं परं ब्रह्म । कुतः । अम्बरान्तधृतेः । अम्बरस्याकाशस्यान्तः पारभूतमव्याकृतमम्बरान्तः । तस्य धृतेः । तदाधारतयास्याक्षरस्योपदेशादिति यावत् । अयमर्थः । कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च (बृ. ३।८।७) इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम् । अपि तु तत्पार-

7. B. om. च; E. om. एव.

12. E. reads त्रितय for त्रय.

19. B. reads परभूतम् for पारभूतम्.

भूतमव्याकृतम् । अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्यमानम-
क्षरं नाव्याकृतं भवितुमर्हतीति ।

नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते । उ-
च्यते । यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृ-
थिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव 5
तदोतं च प्रोतं च ( बृ. ३।८।४ ) इत्युक्ते त्रैलोक्यवर्तिनो वि-
कारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवि-
तुमर्हति । तस्यापि विकारान्तर्गतत्वात् । अतोत्राकाशशब्दनि-
र्दिष्टं भूतसूक्ष्ममिति प्रतीयते । ततस्तस्यापि भूतसूक्ष्मस्याधार-
भूतं किमिति पृच्छ्यते कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च 10
( बृ. ३।८।७ ) इति । अतस्तदाधारतया निर्दिश्यमानमक्षरं न
प्रधानं भवितुमर्हति । यत्तु श्रुतिप्रसिद्धात्प्रमाणान्तरप्रसिद्धं प्र-
थमं प्रतीयत इति तन्न । अक्षरशब्दस्यावयवशक्त्या स्वार्थप्र-
तिपादने प्रमाणान्तरानपेक्षणात् । संबन्धग्रहणदशायामर्थस्वरूपं
येन प्रमाणेनावगम्यते न तत्प्रतिपादनदशायामपेक्षणीयम् ॥९॥ 15

स्यात् तर्ह्यक्षरशब्दनिर्दिष्टो जीवोस्तु । तस्य भूतसूक्ष्मपर्यन्तस्य
कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः । अस्थूलत्वाद्युच्यमानवि-
शेषणोपपत्तेश्च । अव्यक्तमक्षरे लीयते । यस्याव्यक्तं शरीरम् ।
यस्याक्षरं शरीरम् ( सुबा. ) ।

क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते । (गी. १५।१६) 20
इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगदर्शनादिति । अत्रो-
त्तरम् ।

2 B. om. इति.

5. C. reads भव्यं च for भवच्च.

6. E. reads त्रैकाल्यवर्तिनः for त्रैलोक्यवर्तिनः.

17. B. reads आधारता for आधारत्व.

## सा च प्रशासनात् ॥ १० ॥

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यत एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृ- 5 थिव्यौ विधृते तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति ( बृ. ३।८।९ ) इत्यादिना । प्रशासनं प्रकृष्टं शासनम् । न चेदृशं स्वशासनाधीनसर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः संभवति । अतः पुरुषोत्तम एव 10 प्रशासित्रक्षरम् ॥ १० ॥

## अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावोन्यत्वं प्रधानादिभावः । अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते । तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोस्ति द्रष्टृ नान्यदतोस्ति 15 श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ( बृ. ३।८।११ ) इति । अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते । सर्वैरदृष्टस्यैव सतः सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते । अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य पर- 20 मपुरुषतां द्रढयति ।

6. C. om. इति.

8. C. reads इदम् for ईदृशम्; E. reads शासनम् after ईदृशम्; C. reads अधीनम् for अधीन.

13. B. reads वाक्यशेषेण for वाक्यशेषे.

17. B. reads एतस्य for अस्य.

20. C. reads प्रथयति for द्रढयति.

एवं वान्यभावव्यावृत्तिः । अन्यस्य सद्भावव्यावृत्तिरन्यभा-
वव्यावृत्तिः । यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत्स्वव्य-
तिरिक्तस्य समस्तस्याधारभूतमेवमन्येनादृष्टमेतस्य द्रष्टृ च सदे-
तस्याधारभूतमन्यन्नास्तीति वदन्नान्यदतोस्ति द्रष्टृ (बृ.३।८।११)
इत्यादिवाक्यशेषोन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं
[illegible]

किं चैतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः
प्रशंसन्ति यजमानं देवा दर्वीं पितरोन्वायत्ताः (बृ. ३।८।९)
इति श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया
प्रवर्तते तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते । अपि
च यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तप-
स्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतद-
क्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोथ य एतदक्षरं गार्गि
विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः (बृ. ३।८।१०) इति यद-
ज्ञानात्संसारप्राप्तिर्यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति
सिद्धम् ॥ ११ ॥ अक्षराधिकरणं समाप्तम् । (३)

## ईक्षतिकर्मव्यपदेशात्सः ॥ १२ ॥

आथर्वणिकाः सत्यकामप्रश्नेधीयते । यः पुनरेतं त्रिमात्रेणो-
मित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो
यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनि-

2. B. reads यत् for यथा.
3. E. reads अनेन for अन्येन.
10. B. reads परं ब्रह्म for परब्रह्मभू
13. E. om. यः after अथ.
19. C. reads परम for परम्.
20. C. reads हैव for ह वै

मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते (प्र. ५।५) इति । अत्र ध्यायतीक्षतिशब्दावेकविषयौ । ध्यानफलत्वादीक्षणस्य । यथाक्रतुरस्मिँल्लोके पुरुषः (छा. ३।१४।१) इति न्यायेन ध्यानविषयस्यैव प्राप्य-
5 त्वात् । परं पुरुषमित्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च ।

तत्र संशय्यते किमिहायं परं पुरुषमिति निर्दिष्टो जीवसमष्टिरूपोण्डाधिपतिश्चतुर्मुख उत सर्वेश्वरः पुरुषोत्तम इति । किं युक्तम् । समष्टिक्षेत्रज्ञ इति । कुतः । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन
10 लोकं जयति (प्र. ५।१) इति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रमुपासीनस्य प्राप्यतयाभिधीयमानो ब्रह्मलोकोन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते । तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव । एत-
15 स्माज्जीवघनात्परात्परम् (प्र. ५।५) इति च देहेन्द्रियादिभ्यः पराद्देहेन्द्रियादिभिः सह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते । अतोत्र निर्दिश्यमानः परमपुरुषः समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे निश्चितेजरत्वादयो यथाकथंचिन्नेयाः इति प्राप्ते प्रचक्ष्महे ।

5. B. C. read परम for परम्.
6. E. om. अयम्; C. reads अयं परमपुरुषः for इहायं परं पुरुषम्.
7. E. reads समष्टिरूप for समष्टिरूपः.
12. C. om. प्राप्यतया.
16. E. reads जीवस्य for जीव.
18. E. reads परः for परम; B. reads चतुर्मुखः समष्टिपुरुषः for समष्टिपुरुषश्चतुर्मुखः; C. reads चतुर्मुख एवेति for समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे.
19. E. reads नेतव्याः for नेयाः.

ईक्षतिकर्म व्यपदेशात्सः। ईक्षतिकर्म स परमात्मा। कुतः। व्यपदेशात्। व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन। तथा हि। ईक्षतिकर्मविषयतयोदाहृते श्लोके तमोंकारेणैवायनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं च (प्र. ५।७) इति परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम्। एतदमृतमभयमेतद्ब्रह्म (छा. ४।१५।१) इत्येवमादिश्रुतिभ्यः। एतस्माज्जीवघनात्परात्परम् (प्र. ५।५) इति च परमात्मन एव व्यपदेशो न चतुर्मुखस्य। तस्यापि जीवघनशब्दगृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते। चतुर्मुखस्यापि तच्छ्रूयते यो ब्रह्माणं विदधाति पूर्वम् (श्वे. ६।१८ श्वे।५) । 10

यत्पुनरुक्तमन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयतेतस्तत्रस्थश्चतुर्मुख इति तदयुक्तम्। यत्तच्छान्तमजरममृतमभयम् (प्र. ५।७) इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सतीक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न 15 क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति। किं च यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् (प्र. ५।५) इति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्। अत एव चोदाहरणश्लोक एमेव ब्रह्मलोकमधिकृत्य श्रूयते यत्तत्कवयो वेदयन्ते (प्र.५।७) 20 इति। कवयः सूरयः। सूरिभिर्दृश्यं च वैष्णवं पदमेव।

---

5. C. reads अमृतमभयमिति for अभयममृतमिति हि.

6. B. reads अभयमेतदमृतम् for अमृतमभयम्.

8. C. reads चतुर्मुखस्यापि। for चतुर्मुखस्य। तस्यापि.

14. B. om. अमृतम्; C. om. अभयम्.

15. C. reads क्षेम for ईक्षितुः.

19. C. om. च.

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । (नृ. पू. ता. ५।१०) इत्येवमादिभ्यः । न चान्तरिक्षात्परश्चतुर्मुखलोकः । मध्ये स्वर्गलोकादीनां बहूनां सद्भावात् । अत एवैतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरम-
5 न्वेति (प्र. ५।२) इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परमपुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयो-
10 पदिशतीति सर्वं समञ्जसम् । अत ईक्षतिकर्म परमात्मा ॥ १२ ॥

ईक्षतिकर्माधिकरणं समाप्तम् । (४)

## दहर उत्तरेभ्यः ॥ १३ ॥

इदमामनन्ति च्छन्दोगाः । अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वे-
15 ष्टव्यं तद्वाव विजिज्ञासितव्यम् (छा. ८।१।१) इति । तत्र संदेहः किमसौ हृदयपुण्डरीकमध्यवर्तिदहराकाशो महाभूतविशेष उत प्रत्यगात्माथ परमात्मेति । किं तावद्युक्तम् । महाभूतविशेष इति । कुतः । आकाशशब्दस्य महाभूताकाशे ब्रह्मणि

3. B. om. बहूनाम्; E. om. एव after अतः.
4. E. reads अयनेन for आयतनेन.
5. C. reads ब्रह्मानिर्दिष्टम् for ब्रह्म निर्दिष्टम्.
9. E. reads परम् for परम.
10. B. reads ततः for अतः.
13. C. reads आम्नायते छान्दोग्ये for आमनन्ति च्छन्दोगाः.
16. E. reads मध्यवर्ती for मध्यवर्ति.

च प्रसिद्धत्वेपि भूताकाशे प्रसिद्धिप्रकर्षात्। तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्चेति। एवं प्राप्तेभिधीयते।

दहर उत्तरेभ्यः। दहराकाशः परं ब्रह्म। कुतः। उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः। एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः (छा. ८।१।५) इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसंकल्पत्वं चेति दहराकाशे श्रूयमाणा गुणा दहराकाशं परं ब्रह्मेति ज्ञापयन्ति। अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति (छा. ८।१।६) इत्यादिना यं कामं कामयते सोस्य संकल्पादेव समुत्तिष्ठति। तेन संपन्नो महीयते (छा. ८।२।१०) इत्यन्तेन दहराकाशवेदिनः सत्यसंकल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति। यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः (छा. ८।१।३) इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते। हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते। ननु च दहराकाशस्य परमात्मत्वेपि बाह्याकाशोपमेयत्वं न संभवति। ज्यायान्पृथिव्या ज्यायानन्तरिक्षात् (छा. ३।१४।३) इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात्। नैवम्। दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य। यथाधिकजवेपि सवितरीषुवद्गच्छति सवितेति वचनं गतिमान्द्यनिवृत्तिपरम्।

अथ स्यादेष आत्मापहतपाप्मा (छा. ८।१।५) इत्यादिना

2. B. om. इति after प्रतीतेश्च.
10. B. reads आरभ्य for आदिना; B. reads समुत्तिष्ठते for समुत्तिष्ठति.
20. B. reads अल्पत्वस्य for अल्पत्व.
23. B. om. आदिना.

दहराकाशो न निर्दिश्यते । दहरोस्मिन्नन्तराकाशस्तस्मिन्य-दन्तस्तदन्वेष्टव्यम् (छा. ८।१।१) इति दहराकाशान्तर्वर्तिन-स्ततोन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिहैप आत्मापहतपाप्मा (छा. ८।१।५) इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ।

5 स्यादेतदेवं यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्य-भाङ्क्ष्यत् । व्यभाङ्क्षीत्तु सा । तथा हि । यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्त-दन्वेष्टव्यम् (छा. ८।१।१) इति ब्रह्मपुरशब्देनोपास्यतया सं-निहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य तन्मध्यवर्ति च

10 तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतयाभिधाय सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपा-सकानुग्रहाय तस्मिन्वेश्मनि संनिहितं सूक्ष्मतया ध्येयं दहराका-शशब्देन निर्दिश्य तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्वसत्यकामत्वादि स्वाभाविकानवधिकातिशय-

15 कल्याणगुणजातं च ध्येयं तदन्वेष्टव्यमित्युपदिश्यते । अत्र तद-न्वेष्टव्यमिति तच्छब्देन दहराकाशं तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते । यदिदमस्मिन्ब्रह्म-पुरे दहरं पुण्डरीकं वेश्म (छा. ८।१।१) इत्यनूद्य तस्मिन्दह-रपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं

20 तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः ।

6. C. E. read अथ यत् for यदिदम्.

14. C. reads असंख्येय after अतिशय.

15. B. om. च; C. om. च ध्येयं तत्.

16. E. reads तदन्तर्वर्तिनम् for तदन्तर्वर्ति.

17. C. reads अपि for अन्वेष्टव्यमित्युपदिश्यते।.

18. C. reads दहरत्वम् for दहर after तस्मिन्.

दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वं तस्मिन्यदन्तरिति निर्दिष्टस्य च तद्गुणत्वं तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्तदवहितमनाः शृणु। यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः (छा. ८।१।३) इति दहराकाशस्यातिमहत्तामभिधायोभे अस्मिन्द्यावापृथिवी अन्तरेव 5 समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि (छा. ८।१।३) इति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्त्समाहितम् (छा. ८।१।३) इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद्भोग्यजात- 10 मस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयातिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा तत एवैतत्सत्यं ब्रह्मपुरम् (छा. ८।१।५) इति 15 तमेव दहराकाशं सत्यकारणतया सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्यास्मिन्कामाः समाहिताः (छा. ८।१।५) इति दहराकाशमस्मिन्निति निर्दिश्य काम्यभूतांश्च गुणान्कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तस्य दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं 20 चैष आत्मापहतपाप्मा (छा. ८।१।५) इत्यादिना सत्यसंकल्प इत्यन्तेन स्फुटीकृत्य यथा ह्येवेह प्रजा अन्वाविशन्ति (छा. ८।१।५) इत्यारभ्य तेषां सर्वेषु लोकेष्वकामचारो भवति (छा.

2. C. om. अपि.

8. B. om. अस्य after च.

16. B. C. om. सत्यकारणतया.

८।१।६ ) इत्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्द-
निर्दिष्टमात्मानं चाविदुपामेतद्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्व-
तामन्तवत्फलावाप्तिमसत्यसंकल्पत्वं चाभिधायाथ य इहात्मान-
मनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु काम-
5 चारो भवति ( छा. ८।१।६ ) इत्यादिना दहराकाशशब्दनि-
र्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिकान्गु-
णान्विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव
सर्वकामावाप्तिः सत्यसंकल्पता चोच्यते । अतो दहराकाशः परं
ब्रह्म तदन्तर्वर्ति चापहतपाप्मत्वादिकाम्यगुणजातं तदुभयमन्वे-
10 ष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते । तदेतद्वा-
क्यकारोपि स्पष्टयति तस्मिन्यदन्तरिति काम्यव्यपदेश इत्या-
दिना । अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥१३॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म । तद्यथा हिरण्यनिधिं निहित-
15 मक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा
अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः
( छा. ८।३।२ ) इत्येतमिति प्रकृतं दहराकाशं निर्दिश्य तत्रा-

1. C. reads तद्विशिष्ट for तद्विशिष्टम्.
2. E. reads एव तत् for एतत्; B. reads वस्तु before भोग्य.
4. E. reads प्र before व्रजन्ति.
11. E. reads काम for काम्य.
12. E. reads एभ्यः for एतेभ्यः.
13. E. reads इतश्च दहराकाशः परं ब्रह्म । गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च for गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च । इतश्च दहराकाशः परं ब्रह्म.
14. B. reads अपवरके after हिरण्यनिधिम्; E. reads वि before निहितम्.
15. B. om. उपरि.

हरहः सर्वेषां क्षेत्रज्ञानां गमनं गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः। कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत्राह। तथा हि दृष्टमिति। परस्मिन्ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहः सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्। एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे (छा. ६।९।२) इति। सत आगम्य न विदुः सत आगच्छामहे (६।१०।२) इति च। तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मणि दृष्टः। एष ब्रह्मलोकः सम्राडिति होवाच (बृ. ४।३।३२) इति। मा भूदन्यत्र ब्रह्मणि गमनदर्शनम्। एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेवस्थानं श्रूयमाणमस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्। तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्यास्मिन्दहराकाशे प्रयुज्यमानोस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह। लिङ्गं चेति। निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः।

अथवाहरहर्गच्छन्त्यः (छा. ८।३।२) इति न सुषुप्तिविषयं गमनमुच्यते। अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानन्त्यस्तं न विन्दन्ति न लभन्ते। यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वदित्यर्थः। सेयमेवमन्तरात्मत्वेनावस्थितस्य दहरा-

1. B. om. तस्य.
2. C. om. शब्द.
3. E. reads अतः for अत्र.
6. B. C. read संपत्स्यामः for संपद्यामहे.
21. B. reads एवमेवम् for सेयमेवम्; E. om. अव before स्थितस्य.

काशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परस्य ब्रह्मणोन्तरात्मतयावस्थितस्य स्वनियम्याभिः स्वस्मिन्वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् । यथान्तर्यामिब्राह्मणे य
5 आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति ( बृ. मा. ३।७।२२ ) । अदृष्टो द्रष्टाश्रुतः श्रोता ( बृ. ३।७।२३ ) इति च । मा भूदन्यत्र दर्शनं स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाहरहः सर्वदा सर्वासां प्रजानामजानतीनां
10 गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म ।

## धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १५ ॥

अथ य आत्मा ( छा. ८।४।१ ) इति प्रकृतं दहराकाशं निर्दिश्य स सेतुर्विधृतिरेषां लोकानामसंभेदाय ( छा. ८।४।१ )
15 इत्यस्मिञ्जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति । जगद्विधरणं हि परस्य ब्रह्मणो महिमा । एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय ( बृ. ४।४।२२ ) इत्येतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ( बृ. ३।८।९ ) इत्यादिभ्यः ।
20 स चायं परस्य ब्रह्मणो धृत्याख्यो महिमास्मिन्दहराकाश उपलभ्यते । अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

10. C. reads परब्रह्मभावे for परब्रह्मत्वे.

20 B. reads धृत्याख्य for धृत्याख्यः; B. reads एव after दहराकाशे.

## प्रसिद्धेश्च ॥ १६ ॥

आकाशशब्दश्च परस्मिन्ब्रह्मणि प्रसिद्धः । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् ( तै. २।७ ) । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति ( छा. १।९।१ ) इत्यादिषु । अपहतपाप्मत्वादि- 5
गुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ॥१६॥

एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते ।

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥१७॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति तदयुक्तम् । 10
वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् । अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म ( छा. ८।३।३ ) इति । यद्यपि दहरोऽस्मिन्नन्तराकाशः ( छा.
८।१।१ ) इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योप- 15
मानोपमेयभावाद्यसंभवाद्भूताकाशत्वं न संभवति तथापि वाक्यशेषवशात्प्रत्यगात्मत्वं युक्तमाश्रयितुम् । आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेदत्रोत्तरं नासंभवादिति । नायं जीवः । न ह्यपहतपाप्मत्वादयो गुणा जीवे संभवन्ति ॥ १७ ॥

2. B. reads प्रसिद्धः परस्मिन्ब्रह्मणि for परस्मिन्ब्रह्मणि प्रसिद्धः.

4. C. E. om. आकाशं प्रत्यस्तं यन्ति.

14. C. E. read अन्तरः for अन्तः.

18. E. reads तत्र for अत्र.

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरात्प्रजापतिवाक्याज्जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत् । एतदुक्तं भवति । प्रजापतिवाक्यं जीवपरमेव । तथा हि । य आत्मापहतपाप्मा विजरो विमृत्युर्विशो-
5 कोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः सोन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति ( छा. ८।७।१ ) इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे भगवते प्रजापतिर्जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं
10 सशरीरं क्रमेण शुश्रूषुयोग्यतापरिचिक्षिषयोपदिश्य तत्र भोग्यमपश्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीरस्यात्मनोधिष्ठानम् (छा. ८।१२।१) इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा न ह वै सशरीरस्य सतः
15 प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ( छा. ८।१२।१ ) इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधायैवमेवैष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपे-

2. C. reads प्राजापत्यात् for प्रजापति.
3. E. om. इति.
6. B. reads आप्नोति after कामान्.
7. C. reads अननुविद्य for अनुविद्य.
10. B. reads शरीरम् for सशरीरम्; B. reads वि before चिक्षिषया; E. reads तत्र after तत्र.
13. B. reads अधिष्ठानत्वम् for अधिष्ठानताम्.
14. C. om. च before तस्य.
17. B. reads भोगित्व for भागित्व.

णाभिनिष्पद्यते ( छा. ८।१२।३ ) इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश ।

स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम् ( छा. ८। १२।३ ) इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं निवृत्त- 5
तिरोधानस्य परं ज्योतिरुपसंपन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिं प्रियाप्रियादियुक्तकर्मनिमित्तशरीराद्यपुरुषार्थाननुसंधानं चाभिधाय स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ( छा. ८।१२।३ ) इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोगदृ- 10
ष्टान्तेनाभिधायाथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा मनोस्य दैवं चक्षुः ( छा.८।१२। 15
४–५ ) इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योस्य व्यतिरेकमुपपाद्य स वा एष एतेन दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य

·. B. reads जक्षन् for जक्षत्.

7. C. reads अवियुक्त for आदियुक्त.

8. B. reads प्रयोग्याचरणे for प्रयोग्य आचरणे; C. reads प्रयुक्तः for युक्तः.

10. C. reads संसारदशाकर्मतन्त्र for एव संसारदशायां कर्मतन्त्रम्.

11. B. reads व्याप्तम् before चक्षुः.

15. B. reads मननाय before मनः; E. reads दिव्यम् for दैवम्.

एते ब्रह्मलोके ( छा. ८।१२।५-६ ) इति तस्यैव विधूतकर्मनि-
मित्तशरीरेन्द्रियस्य मनःशब्दाभिहितेन दिव्येन स्वाभाविकेन
ज्ञानेन सर्वकामानुभवमुक्त्वा तं वा एतं देवा आत्मानमुपासते।
तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामाः (छा.८।१२।६)
5 इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय स सर्वांश्च
लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति
ह प्रजापतिरुवाच ( छा. ८।१२।६ ) इत्येवंविधमात्मानं विदुषः
सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसं-
हृतम् । अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो
10 जीव एवेत्यवगतम् । अतो जीवस्यापहतपाप्मत्वादयः संभवन्ति।
अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुण-
संभवात्स एव दहराकाश इति निर्श्चीयत इति चेदिति ।

तत्राह । आविर्भूतस्वरूपस्त्विति । पूर्वमनृततिरोहितापहत-
पाप्मत्वादिगुणकः स्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समु-
15 त्थितः परंज्योतिरुपसंपन्न आविर्भूतस्वरूपः सन्नपहतपाप्मत्वादि-
गुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते । दहरवाक्ये त्वतिरो-
हितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते ।
आविर्भूतस्वरूपस्यापि जीवस्यासंभावनीयाः सेतुत्वसर्वलोकवि-
धरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं
20 दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरण-

1. C. reads अविधूत for विधूत.
5. C. reads अन्तम् after जानन्तीति.
10. B. reads अपि after जीवस्य.
11. C. reads ततः for अतः.
12. B. reads चेत् for निर्श्चीयत इति चेदिति.
14. C. reads गुणकस्वरूपः for गुणकः स्वस्वरूपः.
18. C. om. सर्वलोक.

त्वादय आविर्भूतस्वरूपस्यापि न संभवन्तीति जगद्व्यापारवर्जम् (ब्र. सू. ४।४।१७) इत्यत्रोपपादयिष्यामः ॥ १८ ॥

यद्येवं दहरवाक्येथ य एष संप्रसादः (छा. ८।३।४) इत्यादिना जीवप्रस्तावः किमर्थ इति चेत्तत्राह ।

## अन्यार्थश्च परामर्शः ॥ १९ ॥ 5

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य तदुपसंपत्त्यापहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुस्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः । प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम् । ब्रह्म प्रेप्सोर्हि 10 जीवात्मनः स्वरूपं च ज्ञातव्यमेव । स्वयमपि कल्याणगुण एव सन्ननवधिकातिशयासंख्येयकल्याणगुणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्स्वस्वरूपयाथात्म्यविज्ञानस्य । सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् (छा. ८।१२।६) । स तत्र पर्येति जक्षत्क्रीडन (छा. ८।१२।३) इत्यादिकं प्रजापति- 15 वाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

दहरोस्मिन् (छा. ८।१।१) इत्यल्पपरिमाणश्रुतिराराग्रोपमि-

3. B. om. अथ.
6. C. reads आदि after पाप्मत्व.
7. B. om. कल्याण.
11. E. reads स्व before स्वरूपम्.
12. E. reads गुणगणम् for गुणम्.
13. C. reads स्वरूप for स्वस्वरूपयाथात्म्य.
15. B. reads जक्षन् for जक्षत्.

तस्य जीवस्यैवोपपद्यते न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्तत्र यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तं निचाय्यत्वादेवमित्यनेन ( ब्र. सू. १।२।७ ) । अतो दहराकाशोनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव । प्रजापतिवाक्यनिर्दिष्टस्तु घ्नन्ति त्वेवैनं विच्छादयन्ति ( छा. ८।१०।४ ) इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परं ज्योतिरुपसंपद्याविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न दहराकाशः ॥२०॥

इतश्च तदेव ।

## अनुकृतेस्तस्य च ॥ २१ ॥

तस्य दहराकाशस्य परस्य ब्रह्मणोनुकारादयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः । तदनुकारस्तत्साम्यम् । तथा हि प्रत्यगात्मना विमुक्तस्य परब्रह्मानुकारः श्रूयत

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
( मु. ३।१।३ )

इति । अतोनुकर्ता प्रजापतिवाक्ये निर्दिष्टोनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥

5. E. reads वाक्ये for वाक्य.
6. B. C. read ह after एनम्.
7. B. reads संपत्त्या for संपद्य.
8. C. reads स ह after न.
9. E. reads एतदेवम् for तदेव.
11. B. reads ब्रह्म for परस्य ब्रह्मणः.
13. B. reads अपि मुक्तस्य for विमुक्तस्य
18. E. reads वाक्य for वाक्ये.

## अपि स्मर्यते ॥ २२ ॥

संसारिणोपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥	5
( भ. गी. १४।२ ) इति ।

केचिदनुकृतेस्तस्य चापि स्मर्यत इति सूत्रद्वयमधिकरणान्तरं
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।
(मु. २।२।१०)
इत्यस्याः श्रुतेः परब्रह्मत्वनिर्णयाय प्रवृत्तं वदन्ति तत्त्वदृश्यत्वा-	10
दिगुणको धर्मोक्तेः (ब्र. सू. १।२।२२) द्युभ्वाद्यायतनं स्वशब्दात्
( ब्र. सू. १।३।१ ) इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्म-
विषयत्वप्रतिपादनाज्ज्योतिश्चरणाभिधानात् ( ब्र. सू. १।१।२५)
इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तं
सूत्राक्षरवैरूप्याच्च ॥ २२ ॥ दहराधिकरणं समाप्तम् । ( ५ )	15

## शब्दादेव प्रमितः ॥ २३ ॥

कठवल्लीषु श्रूयते ।

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ।

2. B. om. अपि.
10. E. om. पर before ब्रह्म.
12. E. om. ब्रह्म.
14. C. reads भावरूपत्व for भारूपत्व.

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ।
( का. ४।१२-१३ )

अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
5 तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्॥
( का. ६।१७ )

इति । तत्र संदिह्यते । किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मोत पर-
मात्मेति । किं युक्तम् । प्रत्यगात्मेति । कुतः । जीवस्यान्यत्रा-
ङ्गुष्ठमात्रत्वश्रुतेः ।

10 प्राणाधिपः संचरति स्वकर्मभिः ।
अङ्गुष्ठमात्रो रवितुल्यरूपः
संकल्पाहंकारसमन्वितो यः । ( श्वे. ५।७ )

इति । न चान्यत्रोपासनार्थतयापि परमात्मनोङ्गुष्ठमात्रत्वं श्रूयते ।
एवं निश्चिते जीवत्व ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापे-
15 क्षया भविष्यतीति प्राप्ते ब्रूमः ।

शब्दादेव प्रमितः । अङ्गुष्ठमात्रप्रमितः परमात्मा । कुतः ।
ईशानो भूतभव्यस्य ( का. ४।१२ ) इति शब्दादेव । न च
भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥२३॥

कथं तर्हि परमात्मनोङ्गुष्ठमात्रत्वमित्यत्राह ।

---

9. C. reads मात्र for मात्रत्व.

15. E. reads अपि after अपेक्षया.

16. E. om. मात्र.

19. C. reads तस्य for तर्हि.

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठप्रमाणत्वात्तदपेक्षयेदमङ्गुष्ठप्रमितत्वमुपपद्यते। जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात्तदपेक्षमेव। तस्याराग्रमात्रत्वश्रुतेः। मनुष्याणामेवोपासकत्वसंभावनया शास्त्रस्य मनुष्याधिकारत्वान्मनुष्यहृदयस्य च तदङ्गुष्ठप्रमितत्वात्खरतुरगभुजगादीनामनङ्गुष्ठप्रमितत्वेपि न कश्चिद्दोषः। स्थितं तावदुत्तरत्र समापयिष्यते ॥ २४ ॥ 5

## तदुपर्यपि बादरायणः संभवात् ॥ २५ ॥

परस्य ब्रह्मणोङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम्। तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोस्ति नास्तीति विचार्यते। किं तावद्युक्तम्। नास्ति देवादीनामधिकार इति। कुतः। सामर्थ्याभावात्। न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति। न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे। यद्यपि परिनिष्पन्नेपि वस्तुनि व्युत्पत्तिसंभावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किंचिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतयान्यपरत्वान्न देवादिविग्रहसाधने प्रभवन्ति। कर्मविधयश्च स्वापेक्षितोद्देश्यका- 10 15 20

3. B. reads मात्र before प्रमितत्वम्.

4. E. om. अपि.

6. B. reads अधिकारित्वात् for अधिकारत्वात्; E. reads तत् after तत्.

10. B. reads मात्र before प्रमितत्व.

16. C. om. अपि after परिनिष्पन्न.

रकत्वातिरेकि देवतागतं किमपि न साधयन्ति । अत एव तासा-
मर्थित्वमपि न संभवति । अतः सामर्थ्यार्थित्वयोरभावाद्देवादी-
नामनधिकार इत्येवं प्राप्ते प्रचक्ष्महे ।

तदुपर्यपि बादरायणः संभवात् । तदुपर्यपि तद्ब्रह्मोपासन-
5 मुपरि देवादिष्वपि संभवतीति भगवान्बादरायणो मन्यते ।
तेषामर्थित्वसामर्थ्ययोः संभवात् । अर्थित्वं तावदाध्यात्मिकादि-
दुर्विषहदुःखाभितापात्परस्मिन्ब्रह्मणि च निरस्तनिखिलदोषग-
न्धेनवधिकातिशयासंख्येयकल्याणगुणगणे निरतिशयभोग्यत्वा-
दिज्ञानाच्च संभवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया
10 संभवति । देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृ-
ष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते । तथा हि । सदेव सोम्येदमग्र
आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजो-
सृजत ( छा. ६।२।१-२ ) इत्यारभ्य सर्वमचेतनं तेजोबन्नप्रमु-
खावस्थाविशेषवद्व्याकृत्यानेन जीवेनात्मनानुप्रविश्य नामरूपे
15 व्याकरवाणि ( छा. ६।३।२ ) इति संकल्प्य ब्रह्मादि स्थावरान्तं
चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक्चा-
करोदित्युक्तम् । एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्था-
वरात्मना चतुर्विधा सृष्टिराम्नायते । देवादिभेदश्च तत्तत्कर्मा-
नुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादि-

2. B. om. सम् before भवति.
4. B. om. तदुपर्यपि before तत्.
6. C. reads अपि after तेषाम्.
12. C. E. om. एकमेवाद्वितीयम्.
13. B. reads प्रमुखम् for प्रमुख.
16. B. reads चतुर्विध for चतुर्विधम्; E. reads भूत before शरीरम्.
E. reads अयम् after नामभाक्च.

भोगायत्तः । आत्मनां स्वतो देवादित्वाभावात् । तथा तद्धोभयं देवासुरा अनुबुबुधिरे । ते होचुः।'''इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच ( छा· ८।७।२-३ ) इत्यादिना विस्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते । 5

कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि वज्रहस्तः पुरंदरः । तेनेन्द्रो वज्रमुद्यच्छत् ( तै. सं. ( २।४।१२ ) इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते 10 वक्तुम । स्तुत्याद्युपयोगित्वात् । तेन विना स्तुत्याद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमपि हीयते। न ह्यसता गुणेन कथितेन प्ररोचना जायते । अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः । मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र किंचित्करत्वायानुष्ठेयार्थं प्रकाशयन्तो देवतादि- 15 गतविग्रहादिगुणविशेषमभिदधत एव तत्र किंचित्कुर्वन्ति । अन्यथेन्द्रादिस्मृत्यनुपपत्तेः । न च निर्विशेषा देवतापीयं धियमधि-

1. E. reads -ोगायत्तः for भोगायत्तः; B. om. ह after तत्.
2. C. E. read देवा असुराः for देवासुराः; B. reads अधिपः for अभि.
3. B. reads सविदानौ for असंविदानौ.
11. E. reads उपयोगात् for उपयोगित्वात्.
12. C. reads एव for अपि.
13. E. reads चासति गुणे कथिते तेन for ह्यसता गुणेन कथितेन.
15. B. reads अनुष्ठेयम् for अनुष्ठेय.
16. B reads गत after विग्रहादि; B. reads तत्र after तत्र.
17. C. E. om. अपीयम्.

रोहति । तत्र प्रमाणान्तराप्राप्तान्गुणान्स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति गुणविशिष्टं वा प्रकाशयन्ति देवतादिगतविग्रहादिगुणविशेषमभिदधत एव । तत्र प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिः शब्दैरविरुद्धान्गुणाल्लँक्षयित्वा कुर्वन्ति । कर्मविधेश्च देवतायाः प्रमाणान्तरप्राप्तमैश्वर्यमपेक्षितमेव । कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेः साधकमपेक्षते । मन्त्रार्थवादयोश्च वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ( तै. सं. २।१।१ )। यदनेन हविषाशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्ताम् ( तै. ब्रा. ३।५।१०।५ ) इत्यादिषु देवतायाः कर्मणाराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते । देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते । तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया कल्प्यतया वाश्रयितव्यम् । तथा संकीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनां देवासुरप्रभृतीनां देहेन्द्रियादयः स्व-

2. B. reads प्रमाणान्तरप्राप्तं तत्प्ररोचयन्तो गुणविशिष्टं प्रकाशयन्तः for प्ररोचयन्ति । गुणविशिष्टं वा प्रकाशयन्ति.
3. B. om. तैः.
5. B. C. om. प्रमाणान्तरप्राप्तम्.
7. E. om. स्वर्गादेः.
12. C. reads अनुगुण for अनुगुणं च.
14. B. reads यागाख्य for यागाख्यम्.
15. C. reads पर्यालोचनायाम् for पर्यालोचनया.
16. C. reads अविधेयतया for अभिधेयतया.
17. E. reads च for वा.

भावभेदाः स्थानानि भोगाः कृत्यानि चेत्येवमादयः सुव्यक्ताः प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वाद्देवादीनामप्यधिकारोऽस्त्येव ॥२५॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् २६ ॥

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते । 5
बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वेऽग्निमग्न आवह
(तै. ब्रा. ३।५।३) । इन्द्र आगच्छ । हरिव आगच्छ (तै. ब्रा.
२।४।३) इत्यादिनाहूतस्य संनिधानानुपपत्तेः । दर्शयति चाग्न्यादीनां तत्र तत्रागमनं कस्य वा ह देवा यज्ञमागच्छन्ति
कस्य वा न । बहूनां यजमानानां यो वै देवताः पूर्वं परिगृह्णाति 10
स एनाः श्वोभूते यजते (तै. सं. १।६।७) इति । अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेन्न । अनेकप्रतिपत्तेर्दर्शनात् । दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥ २६ ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥ 15

विरोध इति वर्तते । मा भूत्कर्मणि विरोधोऽनेकशरीरप्रतिपत्तेः । शब्दे तु वैदिके विरोधः प्रसज्यते । अनित्यार्थसंयोगात् । विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् । ततो देवदत्तादिशब्दवदिन्द्राद्यर्थजन्मनः प्राग्विनाशादूर्ध्वं 20
चेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वमनित्यत्वं वा वेदस्य

8. E. reads तस्य after आहूतस्य; C. reads अनुपपत्तिः for अनुपपत्तेः.
9. C. om. वा before ह.
12. C. reads तत् after चेत्.
20. C. om. ततः; B. reads अविनाशात् for विनाशात्.

स्यादिति चेत्तन्न । अतः प्रभवात् । अस्मादिन्द्रादिशब्दादेव पुनः पुनरिन्द्राद्यर्थस्य प्रभवात् । एतदुक्तं भवति । न हि देवदत्तादिशब्दवदिन्द्रादिशब्दा वैदिका व्यक्तिविशेषमात्रे संकेतपूर्वकाः प्रवृत्ताः । अपि तु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामत एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति । यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात्तदाकारमेव घटमिति ।

कथमिदमवगम्यते । प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावद्वेदेन नामरूपे व्याकरोत् । सतासती प्रजापतिः (तै. ब्रा. २।६।२) इति । तथा स भूरिति व्याहरत्स भूमिमसृजत । स भुव इति व्याहरत्सोन्तरिक्षमसृजत (तै. ब्रा. २।२।४) इत्यादिवाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरंस्तत्तत्संस्थानविशिष्टं तंतमर्थं सृष्टवानित्यर्थः । स्मृतिरपि

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥ इति ।
सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ (म.स्मृ. १।२१)

इति च । संस्थाः संस्थानानि रूपाणीति यावत् । तथा

नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ (वि.पु. १।५।६२)

1. E. om. तत् after चेत्.
2. B. om. पुनः.
3. B. reads मात्र for मात्रे.
6. B. om. वि before परिवर्तमानात्.
8. B. om. वि before परिवर्तमानात्

इति । अतो देवादीनां विग्रहवत्त्वेपि वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ॥ २७ ॥

## अत एव च नित्यत्वम् ॥ २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वं तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिस्तत 5 एव मन्त्रकृतो वृणीते । नम ऋषिभ्यो मन्त्रकृद्भ्यः (तै. आ. ४, आ श्रौ. सू. ८।१४) । अयं सोग्निरिति विश्वामित्रस्य सूक्तं भवति (तै. सं. ५।२।३) इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डर्षित्वादौ प्रतीयमानेपि वेदस्य नित्यत्वमुपपद्यते । एभिरेव मन्त्रकृतो वृणीत इत्यादिभिर्वेदशब्दैस्तत्तत्काण्डसूक्तमन्त्रकृतामृषीणा- 10 माकृतिशक्त्यादिकं परामृश्य तत्तदाकारांस्तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिस्मरणे नियुङ्क्ते । ते च प्रजापतिनाहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा वीर्यसिद्धान्पूर्वपूर्ववसिष्ठादिसृष्टान्मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान्पश्यन्ति । अतश्च वेदानां नित्यत्वमेषां च मन्त्रकृत्त्वमुपपद्यते ॥ २८ ॥ 15

अथ स्यान्नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम ।

1. E. reads न after अपि.
2. E. om. न after च.
5. C. om. तत् before तदर्थ.
7. B. reads आयन्सो अग्निः for अयं सोग्निः.
9. E. reads कृत्व before ऋषित्वादौ.
11. C. reads तदाकारांस्तत् for तत्तदाकारांस्तत्तत्: E. reads युतान् for युक्तान्.
12. C. om. तत् before तन्मन्त्रादि; B. reads करणे for स्मरणे.
13. C. om. तत् before तदनुगुणम्; C. reads नित्य for वीर्य.
14. C. reads दृष्टान्तानेव for सृष्टान्.
16. C. om. पूर्व.

प्राकृतप्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहंकारपरिणामशब्दस्य च विनष्टत्वात्कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते। कथंतरां विनष्टस्य वेदस्य नित्यत्वम्। अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमे लोकव्यवहारस्य प्रवाहानादिताश्रयणीयेति।
5 अत उत्तरं पठति।

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः। तथा हि। स भगवान्पुरुषोत्तमः प्रल-
10 यावसानसमये पूर्वसंस्थानं जगत्स्मरन्बहु स्यामिति संकल्प्य भोग्यभोक्तृजातं स्वस्मिञ्छक्तिमात्रावशेषं प्रलीनं विभज्य महदादि ब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतयाव-
15 तस्थे। अतो यथोक्तं सर्वमुपपन्नम्। एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्। तदस्मासु सर्वेश्वरेपि समानम्। इयांस्तु विशेषः। संस्कारानपेक्षमेव स्वयमेवानुसंधत्ते पुरुषोत्तमः।

1. B. reads प्रजापतिः for प्रजापतेः.
2. E. om. वि before नष्टत्वात्.
4. B. reads च after अभ्युपगमे.
9. B. om. सः.
10. B. reads सम् before स्मरन्.
12. E. reads ब्रह्माण्ड for ब्रह्माण्डम्.
13. C. om. एव.

कुत इदं यथोक्तमवगम्यत इति चेत्तत्राह । दर्शनात्स्मृतेश्च । दर्शनं तावत्

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
(श्वे. ६।१८)

इति । स्मृतिरपि मानव्यासीदिदं तमोभूतम (म. स्मृ. १।५) 5
इत्यारभ्य

सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजन् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ 10
(म. स्मृ. १।८-९)

इति । तथा पौराणिकाः

तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः ॥
ब्रह्मोत्पन्नः स तेनोक्तः प्रजाः सृज महामते । 15

तथा

परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः ।

इति । तथादिसर्गमहं वक्ष्य इत्यारभ्योच्यते

सृष्ट्वा नारं तोयमन्तःस्थितोहं येन स्यान्मे नाम नारायणेति ।
कल्प कल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजं स्याद्यथाब्जम् ॥ 20
एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः ।
उत्पन्नः स मया प्रोक्तः प्रजाः सृज महामते ॥

इति । अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायामधिकारोस्तीति सिद्धम् ॥ २९ ॥ देवताधिकरणं समाप्तम् । (७)

25. E. reads सग् before अधिकारः.

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३० ॥

ब्रह्मविद्यायां देवादीनामप्यधिकारोस्तीत्युक्तम् । इदमिदानीं चिन्त्यते । येपूपासनेषु देवता एवोपास्यास्तेपु तासामधिकारोस्ति नेति ! किं प्राप्तम् । नास्त्यधिकारस्तेपु मध्वादिष्विति जैमिनि-
5 र्मन्यते । कुतः । असंभवात् । न ह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोन्ये संभवन्ति । न च वस्वादीनां सतां वस्वा-दित्वं प्राप्यं भवति । प्राप्तत्वात् । मधुविद्यायामृग्वेदादिप्रतिपा-द्यकर्मनिष्पाद्यास्यरश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धम-धुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं
10 वस्वादित्वं च प्राप्यं श्रूयते । असौ वा आदित्यो देवमधु (छा. ३।१।१) इत्युपक्रम्य तद्यत्प्रथमममृतं तद्वसव उपजी-वन्ति (छा. ३।६।१) इत्युक्त्वा स य एतदेवममृतं वेद वसू-नामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति (छा. ३।६।३) इत्यादिना ॥ ३० ॥

15 ## ज्योतिषि भावाच्च ॥ ३१ ॥

तं देवा ज्योतिषां ज्योतिरायुर्होपासतेमृतम् । (बृ. ४।४।१६) इति ज्योतिषि परस्मिन्ब्रह्मण्युपासनं देवानां श्रूयते । देव-मनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं दे-वानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामन-
20 धिकारः ॥ ३१ ॥

इति प्राप्तेभिधीयते ।

6. B. reads वेति for अन्ये; E. reads आदित्य before वस्वादीनाम्.
7. E. reads सम् before भवति.
8. C. reads निष्पाद्यस्य for निष्पाद्यास्य.
9. E. reads आदित्य before आदिभिः.
12. E. om. एवम्.
18. B. E. read देवादीनाम् for देवानाम् after कथनम्.

## भावं तु बादरायणोस्ति हि ॥ ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान्बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्यत्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभवः । इदानीं वसूनां सता-मपि कल्पान्तरे वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते । असौ वा आदित्यो देवमधु ( छा. ३।१।१ ) इत्यारभ्याथ तत ऊर्ध्वमुदेता ( छा. ३।११।१ ) इत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपा-स्यमित्युपदिश्यते । अथ तत ऊर्ध्व उदेति ( छा. ३।११।१ ) इत्यादिनादित्यान्तरात्मतयावस्थितं कारणावस्थमेव ब्रह्मोपास्यमि-त्युपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पा-न्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्य भवति य एता-मेवं ब्रह्मोपनिषदं वेद ( छा. ३।११।३ ) इति कृत्स्नाया मधु-विद्याया ब्रह्मोपनिषत्त्वश्रवणाद्ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलश्रव-णाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदव-स्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवंविधमुपासनमादित्यवस्वा-दीनामपि संभवति । एवं च ब्रह्मण एवोपास्यत्वात्तं देवा ज्यो-तिषां ज्योतिः ( बृ. ४।४।१६ ) इत्युपपद्यते । तदाह वृत्ति-

3. B. reads उपासनम् for उपासनेन.

4. C. reads आदित्व for आदित्यत्व; B. reads अपि after वसूनाम्.

5. B reads कल्पान्तरेपि for अपि कल्पान्तरे.

8. C. om. वि before शेषावस्थम्; E. reads उपासनम् for उपास्यम्.

9. B. om. इति; C. E. read अतः for ततः.

10. B. om. इति after उपास्यम्.

15. B. reads वस्वादित्यफलस्य for वस्वादित्वफल.

कारः । अस्ति हि मध्वादिषु संभवो ब्रह्मण एव सर्वत्र निचाय्यत्वादिति ॥ ३२ ॥ मध्वधिकरणं समाप्तम् ॥ (८)

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३३ ॥**

5 ब्रह्मविद्यायां शूद्रस्याप्यधिकारोस्ति न वेति विचार्यते । किं युक्तम् । अस्तीति । कुतः । अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य । शूद्रस्यापि तत्संभवात् । यद्यप्यग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्यानधिकारस्तथापि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य तत्राधिकारोस्त्येव । शास्त्रीयक्रियापेक्षत्वेप्युपासनस्य त-
10 त्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वात् । शूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति । तस्माच्छूद्रो यज्ञेनवक्लृप्तः (तै. सं. ७।१।१) इत्यप्यग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोनूद्यते । नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं संभवति । उ-
15 च्यते । अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं संभवति । अस्ति च शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा

श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ।

(म. भा. शा. ३२७।४९)

20 इत्यादौ । दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः । तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते । शुश्रूषुं हि जानश्रुतिमाचार्यो रैकः शूद्रेत्यामन्त्र्य तस्मै

14. E. om. तत्.
21. C. om. ब्रह्मविद्या.
22. B. om. हि.

ब्रह्मविद्यामुपदिशति । आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः ( छा. ४।२।५ ) इत्यादिना । अतः शूद्रस्याप्यधिकारः संभवतीति प्राप्त उच्यते ।

न शूद्रस्याधिकारः संभवति । कुतः । सामर्थ्याभावात् । न हि ब्रह्मस्वरूपतदुपासनप्रकारमजानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यं संभवति । असमर्थस्य चार्थित्वसद्भावेप्यधिकारो न संभवति । असामर्थ्यं च वेदाध्ययनाभावात् । यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसंपाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपरान्न स्वीकुर्वन्ति तथा ब्रह्मोपासनविधयोपि । अतोध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसामर्थ्यासंभवः । इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती तथोपायभावमनुभवतो न स्वातन्त्र्येण । शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थं नोपासनार्थम् । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोपाज्ज्ञानवन्तः प्रारब्धकर्मवशादीदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् । यत्तु संवर्गविद्यायां शुश्रूषोः शूद्रेति संबोधनं शूद्रस्याधिकारं सूचयतीति तन्नेत्याह ।

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणा-

2. B. om. अपि.

4. C. om. कुतः.

5. B. om. स्व before रूप.

6. C. reads सामर्थ्यसंभवः for सामर्थ्यं संभवति.

14. C. om. आदिफल.

17. B. om. इति after सूचयति.

त्तदैव ब्रह्मविदो रैकस्य सकाशं प्रत्याद्रवणाच्छुगस्य संजातेति हि सूच्यते । अतः स शूद्रेत्यामन्त्र्यते न चतुर्थवर्णत्वेन । शोचतीति हि शूद्रः । शुचेर्दश्च ( उणा. सू. २।२१ ) इति रप्रत्यये धातोश्च दीर्घे चकारस्य दकारे शूद्र इति भवति । अतः शोचि-
5 तृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते न जातियोगः ।

जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव । तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोर्हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच । भो भो भल्लाक्ष भल्लाक्ष जानश्रुतेः पौ-
10 त्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीत्तत्त्वा मा प्रधाक्षीन् ( छा. ४।१।२ ) इति । एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्यापरो हंसः प्रत्युवाच । कं वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ ( छा. ४।१।३ ) इति । कं सन्तमेनं जानश्रुतिं सयुग्वानं रैकं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ । स ब्रह्मज्ञो रैक एव
15 लोके गुणवत्तरः । महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणो यद्गुणजनितं तेजो रैकतेज इव मां दहेदित्यर्थः । एवमुक्तेन परेण कोसौ रैक इति पृष्टो लोके यत्किंचित्साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानं तदुभयं यदीयज्ञानकर्मान्तर्भूतं स रैक इत्याह । तदेतद्धंसवाक्यं ब्रह्मज्ञानविधुरतयात्म-
20 निन्दागर्भं तद्वत्तया च रैकप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैकान्वेषणाय प्रेष्य तस्मिन्विदित्वागते स्वयमपि रैकमुपसद्य गवां षट्शतं निष्कमश्वतरीरथं च रैकायोपहृत्य

1. B. reads तथैव for तदैव.
2. C. om. हि.
5. B. reads शब्देन for शब्दप्रयोगेण.
10. B. C. read त्वाम् for त्वा.

रैक्वं प्रार्थयामासानु म एतां भगवो देवतां शाधि यां देवता-
मुपास्से ( छा- ४।२।२ ) इति । त्वदुपास्यां परां देवतां मामनु-
शाधीत्यर्थः । स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुते-
र्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकावि-
ष्टतां तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदित्वास्य ब्रह्मविद्या- 5
योग्यतामभिज्ञाय चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाण-
स्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा
तमनुगृह्णन्नस्य शोकाविष्टतामुपदेशयोग्यताख्यापिकां शूद्रशब्दे-
नामन्त्रणेन ज्ञापयन्निदमाह । अपाहर त्वं शूद्र तवैव सह गोभि-
रस्तु ( छा· ४।२।३ ) इति । सह गोभिरयं रथस्तवैवास्तु नैता- 10
वता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या
प्रतिष्ठिता भवतीत्यर्थः । स च जानश्रुतिर्भूयोपि स्वशक्त्यनुगुण-
मेव गवादिकं धनं कन्यां च प्रदायोपससाद । स रैक्वः पुनरपि
तस्य योग्यतामेव ख्यापयञ्छूद्रशब्देनामन्त्र्याह । आजहारेमाः
शूद्रानेनैव मुखेनालापयिष्यथाः ( छा· ४।२।५ ) इति । इमानि 15
धनानि शक्त्यनुगुणान्याजहर्थ । अनेनैव द्वारेण चिरसेवया
विनापि मां त्वदभिलपितब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्यु-
क्त्वा तस्मा उपदिदेश। अतः शूद्रशब्देन विद्योपदेशयोग्यताख्या-
पनार्थं शोक एवास्य सूचितो न चतुर्थवर्णत्वम् ॥ ३३ ॥

2. B. reads उपास्ते for उपास्से; C. reads मा for माम्.

4. B. reads शोकाविनष्टताम् for शोकाविष्टताम्.

6. E. reads अर्थ for द्रव्य; B. reads वा after द्रव्यप्रदानेन.

8. B. reads तस्य for अस्य.

13. B. reads ग्रामादिकम् for गवादिकम्.

17. B. reads इदम् for माम्; B. reads आलापयिष्यामि for आलाप-
यिष्यसि.

## क्षत्रियत्वावगतेश्च ॥ ३४ ॥

बहुदायीति दानपतित्वेन बहुपाक्य इत्यादिना सर्वत एव मेत्स्यन्ति ( छा. ४।१।१ ) इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः स ह संजिहान एव क्षत्तारमुवाच ( छा. ४।१।५ ) इति
5 क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥ ३४ ॥

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता । उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह ।

## उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

10 अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वं गम्यते । कथम् । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ( छा. ४।३।५ ) इत्यादिना ब्रह्मचारिन्नेदमुपास्महे ( छा. ४।३।७ ) इत्यन्तेन का-
15 पेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासंबन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रिय इतरौ ब्राह्मणौ । अतोस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते न शूद्रस्य । अतोस्यां विद्यायामन्विताद्रैकाद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तं न चतुर्थवर्णत्वम् ।

1. C. om. अव.
2. B. reads तेन after दानपतित्वेन.
3. C. E. read तदन्नम् before अत्स्यन्ति.
7. C. om. गत; E. reads अधुना before उपसंहार.
13. B. reads परिवेष्यमाणौ for परिविष्यमाणौ.
17. B. reads ब्राह्मण for ब्राह्मणस्य. C. om. एव.



नन्वस्मिन्प्रकरणेभिप्रतारिणश्चैत्ररथत्वं क्षत्त्रियत्वं च न श्रुतम् । तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वं कथं वा क्षत्त्रियत्वम् । तत्राह लिङ्गादिति । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम् ( छा. ४।३।५ ) इत्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गादस्याभिप्रतारिणः कापेयसंबन्धः प्रतीयते । अन्यत्र चैतेन वै चैत्ररथं कापेया अयाजयन् ( ता. ब्रा. २०।१२ ) इति कापेयसंबन्धिनश्चैत्ररथत्वं श्रूयते । तथा चैत्ररथस्य क्षत्त्रियत्वं तस्माच्चैत्ररथो नामैकः क्षत्त्रपतिरजायतेति । अतोभिप्रतारिणश्चैत्ररथत्वं क्षत्त्रियत्वं च गम्यते ॥ ३५ ॥

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम् । इदानीं न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह ।

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यत उप त्वा नेष्ये ( छा. ४।४।५ )। तं होपनिन्ये ( श. ब्रा. ११।५।३।१३ ) इत्यादिषु । शूद्रस्य चोपनयनादिसंस्काराभावोभिलप्यते ।

न शूद्रे पातकं किंचिन्न च संस्कारमर्हति । (मनु.१०।१२६) इति । चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति ( गौत. धर्म. १०।५० ) इत्यादिषु ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर ( छा. ४।४।५ )

7. C. om. चैत्ररथत्वं श्रूयते । तथा.
11. C. reads सिद्ध for सिद्धः ; C. om. स्मृति.
14. B. reads उपदेशेषु for उपदेशप्रदेशेषु.
18. C. om. इति । चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति.

इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेश-
प्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते ।
5 पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्
( वसिष्ठस्मृ. १८।९ ) । तस्माच्छूद्रो बहुपशुरयज्ञीय इति ।
बहुपशुः पशुसदृश इत्यर्थः । अनुपशृण्वतोध्ययनतदर्थज्ञानतद-
र्थानुष्ठानानि न संभवन्ति । अतस्तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥

## स्मृतेश्च ॥ ३९ ॥

10 स्मर्यते च श्रवणादिनिषेधः । अथ हास्य वेदमुपशृण्वतस्त्रपु-
जतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद
इति ।

न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् । (मनु. ४।८०)
इति च । अतः शूद्रस्यानधिकार इति सिद्धम् ।

15 ये तु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः । अन्यत्सर्वं मिथ्या-
भूतम् । बन्धश्चापारमार्थिकः । स च वाक्यजन्यवस्तुयाथात्म्य-
ज्ञानमात्रनिवर्त्यः । तन्निवृत्तिरेव मोक्ष इति वदन्ति । तैर्ब्रह्मज्ञाने
शूद्रादेरनधिकारो वक्तुं न शक्यते । अनुपनीतस्यानधीतवेदस्या-
श्रुतवेदान्तवाक्यस्यापि यस्मात्कस्मादपि निर्विशेषचिन्मात्रं ब्रह्मैव

1. E. reads ब्रह्म before विद्योपदेश.
11. E. reads प्रतिपूरणम् for प्रपूरणम्.
17. B. reads च after इति.
18. B. reads शूद्रस्य for शूद्रादेः.
19. E. reads चित् after कस्मात्.

परमार्थोऽन्यत्सर्वं तस्मिन्परिकल्पितं मिथ्याभूतमिति वाक्या-
द्वस्तुयाथात्म्यज्ञानोत्पत्तेस्तावतैव बन्धनिवृत्तेश्च । न च
तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या न वाक्यान्तरेणेति
नियन्तुं शक्यम् । ज्ञानस्यापुरुषतन्त्रत्वात् । सत्यां सामग्र्यामनि-
च्छतोऽपि ज्ञानोत्पत्तेः । न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने 5
सति बन्धनिवृत्तिर्भवतीति वक्तुं शक्यम् । येन केनापि वस्तु-
याथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः । पौरुषेयादपि निर्विशेषचि-
न्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति वाक्याज्ज्ञानोत्पत्तेः ।
तावतैव भ्रमनिवृत्तेश्च । यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिका-
रजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते तद्वदेव शूद्रस्यापि 10
वेदवित्संप्रदायावगतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्ति-
रपि भविष्यति । न चास्योपदिशेद्धर्मम् (मनु. ४।८०)
इत्यादिना वेदविदः शूद्रादिभ्यो न वदन्तीति च न शक्यं
वक्तुम् । तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि व-
र्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रस्याकिंचित्कर- 15
त्वात् । अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेर्ज्ञानमुत्प-
द्यत एव । न च वाच्यं शुक्तिकादौ रजतादिभ्रमनिवृत्तिव-
त्पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न नि-
वर्तत इति । तत्त्वमसि (छा. ६।८।७) इत्यादिवाक्यश्रवणसम-
नन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः । निदिध्यासनेन द्वैतवास- 20
नायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादय-

1. C. E. read मिथ्याभूतं परिकल्पितम् for परिकल्पितं मिथ्याभूतम्.
6. C. reads शक्यं वक्तुम् for वक्तुं शक्यम्.
7. B. reads बन्ध for भ्रान्ति.
8. B. C. om. परमार्थः.
13. C. om. च न; B. reads शक्यते for शक्यम्.
17. C. E. read शुक्ति for शुक्तिका.

तीति चेत्पौरुषेयवाक्यमपि शूद्रादेस्तथैवेति न कश्चिद्विशेषः। निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रति-पादनयोग्यं तदर्थभावना। सैव विपरीतवासनां निवर्तयतीति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे। वेदानुवचनादीन्यपि विवि-
5 दिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते। तेनैवापारमार्थिको बन्धो निवर्तिष्यते।

अथ वा तर्कानुगृहीतात्प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाश-चिन्मात्रप्रत्यग्वस्तुन्यज्ञानसाक्षित्वं तत्कृतविविधविचित्रज्ञातृज्ञेय-
10 विकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्यैवंभूतपरिशुद्ध-प्रत्यग्वस्तुन्यनवरतभावनया विपरीतवासनां निरस्य तदेव प्र-त्यग्वस्तु साक्षात्कृत्य शूद्रादयोपि विमोक्ष्यन्त इति मिथ्याभूत-विचित्रैश्वर्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदा-न्तवाक्येन न किंचित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव
15 ब्रह्मविद्याधिकारः सुशोभनः। अनेनैव न्यायेन ब्राह्मणादीना-मपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिः स्यात्। न च वाच्यं नैसर्गिकलोकव्यवहारे भ्राम्यतोस्य केनचिदयं लो-कव्यवहारो भ्रमः परमार्थस्त्वेवमेवमिति समर्थिते सत्येव प्रत्य-क्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति।
20 यतो भवभयभीतानां सांख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तु-निरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति। बुभु-

4. B. C. om. अपि after वेदानुवचनादीनि.
13. B. reads विक्षेप for विशेष.
15. B. reads ब्रह्मविद्यायामेव, E. reads ब्रह्मविद्यायाम् for ब्रह्मविद्या.
17. B. reads लौकिक for लोक.
18 C. E. read एवम् for एवमेवम्; B. C. read समर्पिते for समर्थिते.

त्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सदन्यत्सर्वं तस्मिन्नध्यस्तमिति सुविवेचम् । एवंभूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यविशेषान्तरं च नाभ्युपगम्यते । अध्यस्तातद्रूपनिवर्तनी हि श्रुतिरपि त्वन्मते । न च सत आत्मन आनन्दरूपता- 5 ज्ञानायोपनिपदास्थेया । चिद्रूपताया एव सकलेतरव्यावृत्ततया तद्रूपत्वात् । यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपं तच्च परब्रह्मभूतपरमपुरुषप्रीणनं तच्च शास्त्रैकसमधिगम्यम् । उपासनाशास्त्रं चोपनयनादिसंस्कारसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वो- 10 पायतया स्वीकरोति । एवंरूपोपासनाप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन्बन्धान्मोचयतीति पक्षस्तस्य यथोक्तरीत्या शूद्रादेरनधिकार उपपद्यते ॥ ३९ ॥ अपशूद्राधिकरणं समाप्तम् । (९)

तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्र- 15 मितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह ।

## कम्पनात् ॥ ४० ॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । (का. ४।१२)

---

4. B. om. नि before वर्तनी.
5. C. reads स्वतः for सतः.
6. E. reads अतद्रूप after सकलेतर.
7. B. reads आनन्दरूपत्वात् for तद्रूपत्वात्.
9. C. reads उपासन for उपासना; B. om. संस्कार.
10. C. reads सप्तक for साधन.
11. C. reads प्रीत for प्रीतः.
13. B. reads वि before मोचयति; B. reads यथोक्तया नीत्या for यथोक्तरीत्या.
15. B. om. अनुप्रसक्त.

अङ्गुष्ठमात्रः पुरुषोन्तरात्मा (का. ६।१७) इत्यनयोर्वाक्य योर्मध्ये

यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ (का. ६।२)
5 भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ (का. ६।३)

इति कृत्स्नस्य जगतोग्निसूर्यादीनां चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निःसृतानां तस्मात्संजात-महाभयनिमित्तमेजनं कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं
10 भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः। भयादस्याग्निस्तपतीत्यनेनैकार्थ्यात् । महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा । अयं च परस्य ब्रह्मणः स्वभावः । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (बृ. ३।८।९) । भीषास्माद्वातः पवते । भीषोदेति सूर्यः ।
15 भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः (तै. २।८) इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ ४० ॥

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः ।

## ज्योतिर्दर्शनात् ॥ ४१ ॥

तयोर्द्वयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधा-
20 रणं सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते ।

9. B. reads महद्भय for महाभय; B. reads भयम् after किम्.
12. C. reads पर for परस्य.
16. B. reads एवंविधस्य for एवंविध.
19. C. om. द्वयोः; C. om. विषय.

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥ (का. ५।१५)

इति। अयमेव श्लोक आथर्वणे (मु. २।२।१०) परब्रह्माधिकृत्य श्रूयते। परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणः श्रूयते यथा परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छा. ८।३।४, ८।१२।३)। 5

तं देवा ज्योतिषां ज्योतिरायुर्होपासतेमृतम्। (बृ. ४।४।१६) इति। अथ यदतः परो दिवो ज्योतिर्दीप्यते (छा. ३।१३।७) इत्यादिषु। अतोङ्गुष्ठप्रमितः परं ब्रह्म॥ ४१॥ प्रमिताधिकरणं समाप्तम्॥ (६) 10

## आकाशोर्थान्तरत्वादिव्यपदेशात्॥ ४२॥

छान्दोग्ये श्रूयते। आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा (छा. ८।१४।१) इति। तत्र संशयः। किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मोत परमात्मेति। किं युक्तम्। मुक्तात्मेति। कुतः। अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि (छा. ८।१३।१) इति मुक्तस्यानन्तरप्रकृतत्वात्। ते यदन्तरेति च नामरूपविमुक्तस्य तस्याभिधानात्। नामरूपयोर्निर्वहिता (छा. ८।१४।१) इति च स एव पूर्वावस्थयोपलिलक्षयिषितः। स एव हि देवादिरूपाणि नामानि च 15 20

---

5. B. reads परम् for पर.
11. B. reads प्रमितम् for प्रमितः.
20. B. reads विनिर्मुक्तस्य for विमुक्तस्य.

पूर्वमन्वभवत् । तस्यैव नामरूपविनिर्मुक्ता सांप्रतिक्यवस्था तद्ब्रह्म तदमृतम् ( छा. ८।१४।१ ) इत्युच्यते । आकाशशब्दश्च तस्मिन्नप्यसंकुचितप्रकाशयोगादुपपद्यते । ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोयमिति प्रतीयते । तस्य च परमात्मत्वं नि-
5 र्णीतम् । नैवम् । प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च *प्रत्यगात्मनो* मुक्त्यवस्थान्तं रूपमभिहितम् । अनन्तरं च विधूय पापम् ( छा. ८।१३।१ ) इति स एव मुक्तावस्थः प्रस्तुतः । अतोत्राकाशो मुक्तात्मेति प्राप्त उच्यते ।

आकाशोर्थान्तरत्वादिव्यपदेशात् । आकाशः परं ब्रह्म । कुतः ।
10 अर्थान्तरत्वादिव्यपदेशात् । अर्थान्तरत्वव्यपदेशस्तावत् । आकाशो ह वै नामरूपयोर्निर्वहिता ( छा. ८।१४।१ ) इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोर्थान्तरत्वमाकाशस्योपपादयति । बद्धावस्थः स्वयं कर्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात् । मुक्तावस्थस्य जगद्व्यापारासंभ-
15 वान्न नितरां नामरूपनिर्वोढृत्वम् । ईश्वरस्य तु निखिलजगन्निर्माणधुरंधरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) ।

य: सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ( मु. १।१।९ )

3. C. reads च after ननु.
4. C. om. च.
5. B. reads मैवम् for नैवम्.
9. B. reads इति after व्यपदेशात्; E. reads पर for परम्.
10. C. om. अर्थान्तरत्वव्यपदेशस्तावत्; E. reads अर्थान्तर for अर्थान्तरत्व.
13. E. reads कर्मवश्यः for कर्मवशात्.
15. C. reads नतराम् for न नितराम्; C. reads सकल for निखिल.

सर्वाणि रूपाणि विचित्य धीरः ।
नामानि कृत्वाभिवदन्यदास्ते । ( तै. आ. ३।१२।७ )

इत्यादिषु । अतो निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढायमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म । तदेवोपपादयति ते यदन्तरा ( छा. ८।१४।१ ) इति । यस्मादेवायमाकाशो नामरूपे अन्तरा ताभ्यामस्पृष्टोऽर्थान्तरभूतस्तस्मात्तयोर्निर्वोढा । अपहतपाप्मत्वात्सत्यसंकल्पत्वाच्च निर्वहितेत्यर्थः । आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वादीनि गृह्यन्ते । निरुपाधिकबृहत्त्वादयो हि परमात्मन एव संभवन्ति । तेनात्राकाशः परमेव ब्रह्म ।

यत्पुनरुक्तं धूत्वा शरीरम् ( छा. ८।१३।१ ) इति मुक्तोऽनन्तरः प्रकृत इति तन्न । ब्रह्मलोकमभिसंभवानि ( छा. ८।१३।१ ) इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात् । यद्यप्यभिसंभवितुर्मुक्तस्याभिसंभाव्यतया परब्रह्म निर्दिष्टं तथाप्यभिसंभवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसंभवादभिसंभाव्यं परमेव ब्रह्मात्र प्रत्येतव्यम् । किं चाकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयोपसंह्रियत इति युक्तम् । आ-

1. B. reads विचिन्त्य for विचित्य.
2. B. reads नामरूपत्वात् for नामरूपात्.
5. B. om. एव after यस्मात्.
6. E. reads अमृतत्वानि for अमृतत्वादीनि.
11. C. reads अनन्तर for अनन्तरः.
12. C. reads हि for अभि after यद्यपि.
13. B. reads परम् for पर.
14. C. reads अभिसंभाव्यः for अभिसंभाव्यम
15. C. reads अस्य for अत्र after दहराकाश
17. E. reads इह after प्राप्यतया.

काशशब्दश्च प्रत्यगात्मनि न क्वचिद्दृष्टचरः । अतोत्राकाशः परं ब्रह्म ॥ ४२ ॥

अथ स्यात्प्रत्यगात्मनोर्थान्तरभूतमात्मान्तरमेव नास्ति । ऐ-
क्योपदेशाद्द्वैतप्रतिषेधाच्च । शुद्धावस्थ एव हि प्रत्यगात्मा पर-
5 मात्मा परं ब्रह्म परमेश्वर इति व्यपदिश्यते । अतः प्रकृतान्मु-
क्तात्मनोभिसंभवितुर्नार्थान्तरमभिसंभाव्यो ब्रह्मलोकः । अतो
नामरूपयोर्निर्वहिताकाशोपि स एव भवितुमर्हतीति ।

अत उत्तरं पठति ।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

10 व्यपदेशादिति वर्तते । सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोर्थान्तर-
त्वेन परमात्मनो व्यपदेशात्प्रत्यगात्मनोर्थान्तरभूतः परमात्मा-
स्त्येव । तथा हि वाजसनेयके कतम आत्मा योयं विज्ञानमयः
प्राणेषु ( बृ. ४।३।७ ) इति प्रकृत्य तस्य प्रत्यगात्मनः सुषुप्त्यव-
स्थायामकिंचिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते ।
15 प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ( बृ.
४।३।२१ ) इति । तथोत्क्रान्तावपि प्राज्ञेनात्मनान्वारूढ उत्सृ-
जन्याति ( बृ. ४।३।३५ ) इति । न च स्वपत उत्क्रामतो
वाप्यकिंचिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वा-

---

3. E. reads अर्थान्तरम् for अर्थान्तरभूतमात्मान्तरम्.
4. C. om. हि.
5. E. reads च after इति.
10. E. reads अनु before वर्तते.
12. B. om. अस्त्येव.
13. C. E. read प्रकृतस्य for प्रकृत्य तस्य.
14. C. reads किंचित् for अकिंचित्.
16. C. reads संपरिष्वक्तः for अन्वारूढः.
18. C. om. वा; E. reads अस्य किंचिज्ज्ञस्य for अप्यकिंचिज्ज्ञस्य;
B. reads सर्वज्ञेन स्वेनैव for स्वेनैव सर्वज्ञेन.

रोहौ संभवतः । न च क्षेत्रज्ञान्तरेण । तस्यापि सर्वज्ञत्वासंभवात् ॥ ४३ ॥

इतश्च प्रत्यगात्मनोर्थान्तरभूतः परमात्मेत्याह ।

**पत्यादिशब्देभ्यः ॥ ४४ ॥**

अयं परिष्वञ्जकः परमात्मोत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते । 5
सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः स न साधुना कर्मणा
भूयान्नो एवासाधुना कर्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय ।
तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।....... एतमेव
विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्र- 10
व्रजन्ति ( बृ. ४।४।२२ ) । स वा एष महानज आत्मान्नादो
वसुदानः ( बृ. ४।४।२४ ) । अजरोमृतोभय आनन्दो ब्रह्म
( बृ. ४।४।२५ ) इति । एते च जगत्पतित्वजगद्विधरणसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेपि न कथंचित्संभवन्ति ।
अतो मुक्तात्मनोर्थान्तरभूतो नामरूपयोर्निर्वहिताकाशः । ऐ- 15
क्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति सर्वं खल्विदं ब्रह्म तज्जलान् ( छा. ३।१४।१ )
इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम् । द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥ ४४ ॥ अर्थान्तरत्वादिव्यपदेशाधिकरणं
समाप्तम् ॥ (१०) 20

इति श्रीमद्भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

7. B. E. read असाधु for असाधुना.
12. C. reads वसुधानः for वसुदानः; C. om. आनन्दः.
13. B. C. om. जगत्.
18. E. reads उक्तम् for समर्थितम्.

# अथ श्रीभाष्ये



## प्रथमाध्याये चतुर्थः पाद आरभ्यते ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकवि-न्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

5 उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्ज-न्मादिकारणं ब्रह्माचिद्वस्तुनः प्रधानादेश्चेतनाच्च बद्धमुक्तोभया-वस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसं-कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्य-मिति । इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपा-
10 दनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानि-चिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारण-त्वस्थेम्ने तन्निराक्रियते ।

कठवल्लीष्वाम्नायते ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
15 मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥
(का. ३।१०-११)

---

7. B. om. सर्वज्ञम्.

9. B. reads अब्रह्मात्मकम् for अब्रह्मात्मक.

इति । तत्र संदेहः । किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यत उत नेति । किं युक्तम् । प्रधानमिति । कुतः ।

महतः परमव्यक्तमव्यक्तात्पुरुषः परः । ( का. ३।११ )

इति तत्प्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः ।        5

पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । (का. ३।११)

इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च । अतोऽव्यक्तं कारणमिति प्राप्तम् । तदिदमुक्तमानुमानिकमप्येकेषामिति चेदिति । एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेदत्रोत्तरं नेति । नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहा-        10
भिधीयते । कुतः । शरीररूपकविन्यस्तगृहीतेः । शरीराख्यरूपकविन्यस्तस्याव्यक्तशब्देन गृहीतेः । आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तशरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः ।

एतदुक्तं भवति । पूर्वत्र हि        15

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । (का. ३।३-४)

इत्यादिना

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । (का. ३।९)        20

इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथिनं तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा यस्यैते रथा-

---

5. E. reads तन्त्रसिद्धतत्वप्रक्रिया for तत्प्रक्रिया.

10. C. reads तत्र for अत्र.

13. E. reads नि before रूपितेषु; E. reads विन्यस्तस्य for विन्य

22. B. reads [illegible] for [illegible]

दयो वशे तिष्ठन्ति स एवाध्वनः पारभूतं वैष्णवं पदमाप्नोतीत्युक्त्वा तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतया प्रधानानि तान्युच्यन्त इन्द्रियेभ्यः परा ह्यर्थाः (का. ३।१०) इत्यादिना । तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन
5 रूपिता विषया वशीकार्यत्वेन पराः । वश्येन्द्रियस्यापि विषयसंनिधानादिन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योपि परं प्रग्रहरूपितं मनः । मनसि विषयप्रवणे विषयासंनिधानस्याप्यकिंचित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा । अध्यवसायाभावे मनसोप्यकिंचित्करत्वात् । तस्या अपि रथित्वरूपित आत्मा
10 कर्तृत्वेन प्राधान्यात्परः । सर्वस्य चास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते । तस्मादपि रथरूपितं शरीरं परम् । तदायत्तत्वाज्जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोन्तर्याम्यध्वनः पारभूतः परमपुरुषः । यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्संकल्पायत्तप्रवृत्तित्वात् । स
15 खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः । परात्तु तच्छ्रुतेः (ब्र. सू. २।३।४०) इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते

1. B. reads पारम् for पारभूतम्.
2. E. reads वशीकार्यतायाम् for वशीकार्यतया.
3. B. om. ह्यर्थाः.
5. C. reads वशीकार्यत्वे for वशीकार्यत्वेन.
6. C. reads संनिधा for संनिधानात्; E. om. अपि after तेभ्यः; E. reads प्रग्रहत्व for प्रग्रह.
10. B. reads एव for च after सर्वस्य.
11. B. reads विशिष्यते for विशेष्यते.
14. C. reads पर्यन्त for पर्यन्तस्य; C. reads न for सः.
17. E. reads उपासना for उपासन.

पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । (का. ३।११)
इति । तथा चान्तर्यामिब्राह्मणे य आत्मनि तिष्ठन् (बृ. ३।७।२२)
इत्यादिभिः सर्वं साक्षात्कुर्वन्सर्वं नियमयतीत्युक्त्वा नान्योतोस्ति
द्रष्टा (बृ. ३।७।२३) इत्यादिना नियन्त्रन्तरं निषिध्यते ।
भगवद्गीतासु च 5

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥(भ.गी.१८।१४)

इति । दैवमत्र पुरुषोत्तम एव ।

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
(भ. गी. १५।१५) 10

इति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव । यथाह

ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत । (भ. गी. १८।६१-६२)

इति । तदेवमात्मानं रथिनं विद्धि (का. ३।३) इत्यादिना 15
रथ्यादिरूपकविन्यस्ता इन्द्रियादय इन्द्रियेभ्यः परा ह्यर्थाः
(का. ३।१०) इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते न रथरूपितं
शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते ।
अतः कापिलतन्त्रप्रसिद्धस्य प्रधानस्य प्रसङ्ग एवेह नास्ति ।

4. C. om. आदिना.
7. E. reads विविधाः for विविधा.
14. C. E. om. सर्वभावेन भारत.
17. B. reads प्रत्यभिज्ञायते तेन for प्रत्यभिज्ञायन्ते न.
19. C. om. प्र before सिद्धस्य; B. om. इह.

न चात्र तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा । इन्द्रियेभ्यः परा ह्यर्थाः (का. ३।१०) इतीन्द्रियेभ्यो ह्यर्थानां शब्दादीनां परत्वकीर्तनात् । न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने । अर्थेभ्यश्च परं मनः (का. ३।१०) इत्यपि न तत्तन्त्रे संगतम् । 5 अकारणत्वादेव । तथा बुद्धेरात्मा महान्परः (का. ३।१०) इत्यप्यसंगतम् । बुद्धिशब्देन महत्तत्त्वाभ्युपगमात् । न हि महतो महान्पर इति संभवति । महत आत्मशब्देन विशेषणं च न संगच्छते । अतो रूपकविन्यस्तानामेवेह ग्रहणम् ।

दर्शयति च तदेव

10 एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥
यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥
(का. ३।१२-१३)

15 इति । अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियाणां वशीकरणप्रकारोयमुच्यते यच्छेद्वाङ्मनसी इति । वाचं मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः । वाक्शब्दे द्वितीयायाः सुपां सुलुक् (पा. सू. ७।१।३९) इति

1. E. reads तत् before तन्त्रसिद्ध; B. reads तन्त्रसिद्धस्य for तन्त्रसिद्ध.
4. C. reads तत्र for तत्तन्त्रे.
6. C. om. बुद्धिशब्देन महत्तत्त्वाभ्युपगमात्.
8. E. om. इह.
15. C. reads बाह्येन्द्रियान्तःकरणैः for बाह्याभ्यन्तरकरणैः.
16. E. reads इन्द्रियाणाम् for इन्द्रियादीनाम्.

लुक्। मनसी इति सप्तम्याश्छान्दसो दीर्घः। तद्यच्छेज्ज्ञान आत्मनि। तन्मनो बुद्धौ नियच्छेत्। ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते। ज्ञान आत्मनीति व्यधिकरणसप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः। ज्ञानमात्मनि महति नियच्छेत्। बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। तद्यच्छेच्छान्त आत्मनि। तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः॥ १॥ 5

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानं तत्राह।

## सूक्ष्मं तु तदर्हत्वात्॥ २॥ 10

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति। तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते। तदर्हत्वात्। तस्याव्याकृतस्याचिद्वस्तुन एव विकारमापन्नस्य रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वात्॥ २॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः। तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते। तत्राह। 15

## तदधीनत्वादर्थवत्॥ ३॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम्। एतदुक्तं भवति। न हि वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण 20

3. B. reads व्यधिकरणे for व्यधिकरण.

13. B. reads विकारान्तर, E. reads विकार for विकारम्.

16. C. om. हि.

20. B. om. हि.

नाभ्युपगच्छामः । अपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेण । तदात्मकत्वेनैव हि प्रकृत्यादयः स्वप्रयोजनं साधयन्ति । अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः । तथानभ्युपगमादेव हि तन्त्रसिद्धप्रक्रियानिरसनमिति ।

5 श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकाः संकीर्त्यन्ते । यथा पृथिव्यप्सु प्रलीयत इत्यारभ्य तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देव एकीभवति । तथा यस्य पृथिवी शरीरम् ।
10 यस्यापः शरीरम् । यस्य तेजः शरीरम् । यस्य वायुः शरीरम् । यस्याकाशः शरीरम् । यस्याहंकारः शरीरम् । यस्य बुद्धिः शरीरम् । यस्याव्यक्तं शरीरम् । यस्याक्षरं शरीरम् । यस्य मृत्युः शरीरम् । एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः ( सुबा. ) । तथा

15 भूमिरापोनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
20 अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥

( भ. गी. ७।४-७ ) इति ।

---

1. B. om. तदात्मकत्वविरहेण ।
2. B. reads स्वं स्वं प्रयोजनम् for स्वप्रयोजनम्.
12. C. om. यस्याव्यक्तं शरीरम्.
14. B. om. तथा.

व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च ।
(वि. पु. १।२।१८) इति ।

प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः पुरुषोत्तमः ।　　5
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥
(वि. पु. ६।४।३८-३९)

इति च ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्तदास्य ज्ञेयत्वमवक्ष्यत् ।　10
व्यक्ताव्यक्तविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यत इति । अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।　15
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥
(का. ३।१५)

इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्तन्न । प्राज्ञः परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते ।

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।　20
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ (का. ३।९)

5. B. reads परमेश्वरः for पुरुषोत्तमः.

6. C. reads देवेषु for वेदेषु.

10. E. reads अविवक्षिष्यत् for अवक्ष्यत्.

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥(का.३।१२)
इति प्राज्ञस्यैव प्रकृतत्वात् । अत एव पुरुषान्न परं किंचित् (का. ३।११) इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः ।
5 तस्य च परमपुरुषस्याशब्दत्वादयो धर्मा यत्तदद्रेश्यमग्राह्यमित्यादिश्रुतिप्रसिद्धाः । महतः परं ध्रुवम् (का. ३।१५) इत्यपि बुद्धेरात्मा महान्परः (का. ३।१०) इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

10 अस्मिन्प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासो ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते नान्यस्याव्यक्तादेः । तथा हि नचिकेता नाम मुमुक्षुः सन्मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादनीमात्मनि पितुः सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षसाधनभूतां नचिकेता अग्नि-
15 विद्यां वव्रे

स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥
(का. १।१३)

इति । स्वर्गशब्देनात्र परमपुरुषार्थलक्षणमोक्षोऽभिधीयते । अमृतत्वं
20 भजन्त इति तत्रस्थस्य जननमरणाभावश्रवणात् । उत्तरत्र क्ष यिफलकर्मनिन्दादर्शनाच्च ।

10. C. reads एव for त्रयाणामेव च.
12. C. om. नाम; C. reads प्रत्ते for प्रदत्ते.
14. C. reads उपाय for साधन.
20. E. reads जन्म for जनन.

त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू।
(का. १।१७)

इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेण प्राप्येयस्वरूपमुपेतृस्वरूपमुपायभूतानुष्ठितकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्। 5

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥
(का. १।२०)

एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश।
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। 10
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥
(का. २।१२)

इति। तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतः सन्देवं मत्वेत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्याध्यात्मयोगाधिगमेनेति उपेतृतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्वा धीरो 15 हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥ (का. २।१४)

इति सकलेतरातीतानागतवर्तमानसाध्यसाधनसाधकवि- 20

1. C. E. read त्रिनाचिकेतः for त्रिणाचिकेतः.

4. B. C. om. अनुष्ठित.

16. B. C. read न शोचति for हर्षशोकौ जहाति; E. reads प्राप्य before ब्रह्मोपासनस्य; D. om. वि before शोधनाय.

20. B. om. साधन.

लक्षणे त्रये क्रमेण पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकस्वरूपं चोपायं पुनरपि सामान्येन ख्यापयन्प्रणवं तावदुपदिदेश ।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
5 यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्॥
(का. २।१५)

इति। एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह न जायते म्रियते वा विपश्चित् (का. २।१८) इत्यादिना । प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपमणोरणीयान
10 (का. २।२०) इत्यादिना क इत्था वेद यत्र सः(का. २।२४) इत्यन्तेनोपदिशन्मध्ये

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
(का. २।२२)

इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह । ऋतं
15 पिबन्तौ (का. ३।१) इति चोपास्यस्योपासकेन सहावस्थानात्सूपास्यतामुक्त्वात्मानं रथिनं विद्धि (का.३।३) इत्यादिना दुर्गं पथस्तत्कवयो वदन्ति (का. ३।१४) इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधायाशब्दमस्पर्शम

1. B. om. त्रये; C. om. क्रमेण.
2. E. om. स्व after वाचक.
7. B. om. इति before एवम्.
9. C. om. परस्य.
12. C. om. न मेधया न बहुना श्रुतेन.
15. B. om. उपास्यस्य.
17. B. reads उपासनस्य for उपासन.
18. C. om. च.

(का. ३।१५) इत्यादिनोपसंहृतम् । अतस्त्रयाणामेवात्र ज्ञेयत्वे-नोपन्यासः प्रश्नश्च । तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥ ६ ॥

## महद्वच ॥ ७ ॥

यथा बुद्धेरात्मा महान्परः (का. ३।१०) इत्यत्रात्मशब्देन सामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यत एवमव्यक्तम-प्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥ ७ ॥ आनुमानिकाधिकरणं समाप्तम् ॥ (१)

## चमसवदविशेषात् ॥ ८ ॥

अत्रापि कापिलतन्त्रसिद्धप्रक्रिया निरस्यते । नाब्रह्मात्मकानां प्रकृतिमहदहंकारादीनां स्वरूपम् । श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात् । यथाथर्वणिका अधीयते ।

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ॥
ध्यायतेध्यासिता तेन तन्यते प्रेर्यते पुनः ।
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् ॥
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।
सितासिता च रक्ता च सर्वकामदुघा विभोः ॥
पिबन्त्येनामविषमामविज्ञाताः कुमारकाः ।
एकस्तु पिबते देवः स्वच्छन्दोत्र वशानुगाम् ॥
ध्यानक्रियाभ्यां भगवान्भुङ्क्तेसौ प्रसभं विभुः ।
सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः ॥ (चूलि. ३—७)
चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तमुच्यते ॥ (चूलि. १४)

4. B. reads आत्मशब्द for आत्मशब्देन.

5. C. reads अपि after एवम्.

9. C. E. om. कापिल; E. reads अब्रह्मात्मक for अब्रह्मात्मकान

इत्यत्र प्रकृत्यादीनां स्वरूपमभिहितम् । यदात्मकाश्चैते प्रकृत्यादयः स परमपुरुषोपि

तं षड्विंशकमित्याहुः सप्तविंशमथापरे ।
पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥ (चूलि. १३–१४)

5 इति प्रतिपाद्यते । अपरे चाथर्वणिका अष्टौ प्रकृतयः षोडश विकारा इत्यधीयते । श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति ।

संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः॥
10 ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्म चैतत् ॥
क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः॥
(श्वे. १।८-१०)

15 इति । तथा

छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ (श्वे. ४।९-१०)

20 इति । तथोत्तरत्रापि

9. E. reads अन्यः for आत्मा.

10. B. reads अजो ह्येको भोक्तृभोगार्थयुक्तः for अजा ह्येका भोक्तृभोगार्थयुक्ता.

11. C. reads ब्रह्ममेतत् for ब्रह्म चैतत्.

13. B. reads याजनात् for योजनात्.

16. E. reads देवाः for वेदाः.

प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ।
(श्वे. ६।१६)

इति । स्मृतिरपि

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ 5
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोस्य सदसद्योनिजन्मसु ॥
(भ. गी. १३।१९-२१) 10

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ (भ. गी. १४।५)

तथा

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ 15
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ (भ.गी.९।७-८)
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ (भ. गी. ९।१०)

इति । तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो 20
निरस्यन्ते ।

श्वेताश्वतरोपनिषदि श्रूयते ।

1. B. reads बन्धस्थितिमोक्ष for मोक्षस्थितिबन्ध.

2. B. reads अपि for हि.

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः ॥
(श्वे. ४।५)

इति । तत्र संदेहः । किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृति-
5 रभिधीयत उत ब्रह्मात्मिकेति । किं युक्तम् । केवलेति । कुतः ।
अजामेकामित्यस्याः प्रकृतेरकार्यत्वश्रवणात् । बह्वीः प्रजाः सृज-
मानां सरूपा इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृ-
त्वश्रवणाच्च । इत्येवं प्राप्तेभिधीयते

चमसवदविशेषादिति । नात्र तन्त्रसिद्धा प्रकृतिरभिधी-
10 यते । कुतः । न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात् । तन्त्र-
सिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः । चमसवत् । यथा-
र्वाग्बिलश्चमस ऊर्ध्वबुध्नः (बृ. २।२।३) इत्यस्मिन्मन्त्रे चम-
सस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न ताव-
न्मात्रेण चमसविशेषप्रतीतिः । यौगिकशब्दानामर्थप्रकरणादि-
15 भिर्विनार्थविशेषनिश्चयायोगात् । तत्र च यथेदं तच्छिर एष
ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः (बृ. २।२।३) इत्यादिना वाक्य-
शेषेण शिरसश्चमसत्वनिश्चयस्तथात्राप्यर्थप्रकरणादिभिरेवाजा

1. C. reads बह्वीं प्रजां जनयन्तीं सरूपाम् for बह्वीः प्रजाः सृजमानां सरूपाः.
4. B. reads केवल for केवला.
7. C. reads स्वरूपाणाम् for सरूपाणाम्.
8. C. reads प्रचक्ष्महे for अभिधीयते.
9. C. om. इति after अविशेषात्.
10. B. om. कुतः; C. om. अजेति.
11. C. reads अब्रह्मात्मिकाजाग्रहणविशेषप्रतीतेः for अब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः.
13. E. om. चमसशब्देन.
15. B. om. विशेष after अर्थ.

निर्णेतव्या । न चात्र तत्प्रसिद्धाजाग्रहणहेतवोर्थप्रकरणादयो दृश्यन्ते । न चास्या विशेषग्रहे स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते । बह्वीः प्रजाः सृजमाना इति स्रष्टृत्वमात्रप्रतीतेः । अतोनेन मन्त्रेण नाब्रह्मात्मिकाजाभिधीयते ॥ ८ ॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह । 5

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

तुशब्दोवधारणार्थः । ज्योतिरुपक्रमैवैषाजा । ज्योतिर्ब्रह्म । तं देवा ज्योतिषां ज्योतिः ( बृ. ४।४।१६ ) । अथ यदतः परो दिवो ज्योतिर्दीप्यते ( छा. ३।१३।७ ) इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः । तथा ह्यधीयत एके । हि- 10
हेतौ । यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनस्तैत्तिरीया अधीयते ।

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोस्य जन्तोः ।
( ना. १२ )

इति निहितं गुहायामिति हृदयगुहायामुपास्यत्वेन संनि- 15
हितं ब्रह्माभिधाय सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः ( ना. १२ ) इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय सर्वकारणीभूताजा तत उत्पन्नाभिधीयते

1. B. reads ग्रहणे for ग्रहण.
2. B. C. om. विशेषग्रहे.
5. B. reads ब्रह्मात्मक for ब्रह्मात्मक; E. reads विशेषतः for विशेष.
9. B. om. दीप्यते.
15. E. om. इति before निहितम्.
16. C. om. सप्तार्चिषः.
17. C. reads लोकादीनां च for लोकानाम्.
18. C. reads कारणभूत for कारणीभूत.

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्य: ॥
(ना. १२।१)

इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदा-
5 त्मकत्वोपदेशे क्रियमाणेभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदे-
पाप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्मवश्येनात्मना
भुज्यमानान्येन विदुषात्मना त्यज्यमाना ब्रह्मण उत्पन्ना ब्रह्मात्मि-
कावगन्तव्येत्यर्थ: । अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरी-
यादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिताजा ब्रह्मात्मि-
10 केति निश्चीयते । इहापि प्रकरणोपक्रमे किं कारणं ब्रह्म
(श्वे. १।१) इत्यारभ्य

ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
(श्वे. १।३)

इति परब्रह्मशक्तिरूपाया अजाया अवगते: । उपरिष्टाच्च

15 अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्ध: ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
(श्वे. ४।९।१०)

यो योनिं योनिमधितिष्ठत्येक: (श्वे. ४।११) इति च
तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्ति-
20 गन्ध: ॥ ९ ॥

---

5. E. reads प्र before क्रियमाणे.

6 C. om. आत्मना after कर्मवश्येन.

7. E. reads च after त्यज्यमाना.

9. E reads प्रत्यभिज्ञायमानात् for प्रत्यभिज्ञायमानार्थात्.

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वमजाया वा कथं ज्योतिरुपक्रमात्वमित्यत आह ।

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते । कुतः । कल्पनोपदेशात् । कल्पनं कृप्तिः सृष्टिः । जगत्सृष्ट्युपदेशादित्यर्थः । यथा सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् (म. ना. ५।७) इति कल्पनं सृष्टिः । अत्राप्यस्मान्मायी सृजते विश्वमेतत् (श्वे. ४।९) इति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरः सर्वं जगत्सृजतीत्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते । सा हि प्रलयवेलायां ब्रह्मतापन्नाविभक्तनामरूपाव्यक्तादिशब्दवाच्या सूक्ष्मरूपेणावतिष्ठते । सृष्टिवेलायां तूद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते । अतः कारणावस्थाजा कार्यावस्था च ज्योतिरुपक्रमेति न विरोधः । मध्वादिवत् । यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुःसामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं

2. B. reads ज्योतिरुपक्रमत्वम् for ज्योतिरुपक्रमात्वम्; E. reads अत्र for अतः.

13. C. om. अव्यक्तादिशब्दवाच्या; E. reads च for तु.

14. E. reads आदि after अन्न.

16. B. reads कारणावस्थायां कार्यावस्थायाम् for कारणावस्थाजा कार्यावस्था; C. om. च after कार्यावस्था.

19. C. om. देवता.

च न विरुध्यते । तदुक्तं मधुविद्यायामसौ वा आदित्यो देवमधु (छा. ३।१।१) इत्यारभ्याथ तत ऊर्ध्वमुदेत्य नैवोदेता नास्तमे- तैकल एव मध्ये स्थाता (छा. ३।११।१) इत्यन्तेन । एकल एकस्वभावः । अतोनेन मन्त्रेण ब्रह्मात्मिकैवाजाभिधीयते न का-
5 पिलतन्त्रसिद्धेति सिद्धम् ।

अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाजैकाभिधीयत इति ब्रुवते । ते प्रष्टव्याः । किं तेजोबन्नान्येव तेजोबन्नात्मिकाजैकोत तेजोब- न्नरूपं ब्रह्मैव किं वा तेजोबन्नकारणभूता काचिदिति । प्रथमे कल्पे तेजोबन्नानामनेकत्वादजामेकामिति विरुध्यते । न च
10 वाच्यं तेजोबन्नानामनेकत्वेपि त्रिवृत्करणेनैकतापत्तिरिति । त्रिवृत्करणेपि बहुत्वानपगमात् । इमास्तिस्रो देवताः (छा. ६।३।२) । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि (छा. ६।३।३) इति प्रत्येकं त्रिवृत्करणोपदेशात् । द्वितीयः कल्पो विकल्प्यः । किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका किं वा
15 स्वरूपेणावस्थितमविकृतमिति । प्रथमः कल्पो बहुत्वानपायादेव निरस्तः । द्वितीयेपि लोहितशुक्लकृष्णामिति विरुध्यते । स्वरू- पेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते । तृतीये कल्पेप्यजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणा-

2. E. reads एवास्तमेति for अस्तमेता.

6. B. reads एवाजा for अजैका.

11. E. reads च after त्रिवृत्करणेपि; E. reads हन्त before इमाः; C. om. इमास्तिस्रो देवताः। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति प्रत्येकं त्रिवृत्करणोपदेशात्.

13. B. reads अपि after कल्पः.

14. B. reads इह for एव.

15. B. reads प्रथम for प्रथमः; E. reads अनपगमात् for अनपायात्.

17. E. om. ब्रह्म.

वस्थोपस्थापनीयेत्यास्थेयम् । ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानम् ।

यत्पुनरस्याः प्रकृतेरजाशब्देन च्छागत्वपरिकल्पनमुपदिश्यत इति तदप्यसंगतम् । निष्प्रयोजनत्वात् । यथात्मानं रथिनं विद्धि ( का. ३।३ ) इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते यथादित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते तद्वदस्यां प्रकृतौ छागत्वपरिकल्पनं कोपयुज्यते । न केवलमुपयोगाभाव एव विरोधश्च । कृत्स्नजगत्कारणभूतायाः स्वस्मिन्ननादिकालसंबद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनाया अत्यल्पप्रजासर्गकरागन्तुकसंगमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागहेतुभूतस्वसंबन्धपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव । अजामेकाम्....अजो ह्येकः....अजोन्यः ( श्वे. ४।५ ) इत्यत्राजशब्दस्य विरूपार्थपरिकल्पनं च न शोभनम् । सर्वत्र च्छागत्वं परिकल्प्यत इति चेत् । जहात्येनां भुक्तभोगामजोन्यः ( श्वे. ४।५ ) इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोनेन वान्येन वा पुनरपि संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥१०॥

चमसाधिकरणं समाप्तम् ॥ ( २ )

---

1. B. reads अवसीयते for उपस्थापनीया.
5. E. reads च after यथा; C. reads आदित्य for आदित्ये.
8. B. om. परि before कल्पनम्.
12. E. reads संबन्धि for संबन्ध.
13. C. reads छागभाव for छागस्वभाव; B. reads स्वभावता for स्वभाव.
15. C. reads अजाशब्दस्य [illegible]
17. B. reads वाक्येन for वान्येन.

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥**

वाजसनेयिनः समामनन्ति

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।

तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोमृतम् ॥ (बृ. ४।४।१७)

5 इति । किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपर उत नेति संदिह्यते । किं युक्तम् । तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः । पञ्चशब्दविशेषितात्पञ्चजनशब्दात्पञ्चविंशतितत्त्वप्रतीतेः । एतदुक्तं भवति । पञ्चजना इति समासः समाहारविषयः । पञ्चजनाः । पञ्चानां जनानां समूहाः पञ्चजनाः । पञ्च-

10 पूल्य इतिवत् । पञ्चजना इति लिङ्गव्यत्ययश्छान्दसः । ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते । यथा पञ्च पञ्चपूल्य इति । अतः पञ्च पञ्चजना इति पञ्चविंशतिपदार्थावगतौ ते कतम इत्यपेक्षायां मोक्षाधिकारान्मुमुक्षुभिर्ज्ञातव्यतया स्मृतिप्रसिद्धाः

15 प्रकृत्यादय एव ज्ञायन्ते ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।

षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ (सां. का. ३)

इति हि कापिलानां प्रसिद्धिः । अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपर इति प्राप्ते प्रचक्ष्महे ।

20 न संख्योपसंग्रहादपीति । पञ्च पञ्चजना इति पञ्चविंशतिसंख्योपसंग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः । कुतः । नानाभावात् । एषां पञ्चसंख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् ।

9. C. om. पञ्चजनाः । before पञ्चानाम्.

12. C. reads प्रतीयते for प्रतीयन्ते.

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ( बृ. ४।४।१७)
इत्येषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते ।

तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोमृतम् । (बृ. ४।४।१७)
इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते ।
अतस्तेभ्यः पृथग्भूताः पञ्च पञ्चजना इति न तन्त्रसिद्धा एते । 5
अतिरेकाच्च । तन्त्रसिद्धेभ्यस्तत्त्वेभ्योत्र तत्त्वातिरेकोपि भवति ।
यच्छब्दनिर्दिष्ट आत्माकाशश्चात्रातिरिच्येयेते । अतः

तं षड्विंशकमित्याहुः सप्तविंशमथापरे । ( चू. १४ )
इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोत्रा-
भिधीयते । 10

न संख्योपसंग्रहादपीत्यपिशब्दस्य पञ्च पञ्चजना इत्यत्र
पञ्चविंशतितत्त्वप्रतीतिरेव न संभवतीत्यभिप्रायः । कथम् ।
पञ्चभिरारब्धसमूहपञ्चकाभावात् । न हि तन्त्रसिद्धतत्त्वेषु पञ्चसु
पञ्चस्वनुगतं तत्तत्संख्यानिवेशनिमित्तं जात्याद्यस्ति । न च वाच्यं
पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च महाभूतानि पञ्च 15
तन्मात्राण्यवशिष्टानि पञ्चेत्यवान्तरसंख्यानिवेशनिमित्तमस्त्ये-
वेति । आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहा-
सिद्धेः । अतः पञ्चजना इत्ययं समासो न समाहारविषयः ।
अयं तु दिक्संख्ये संज्ञायाम् ( पा. सू. २।१।५० ) इति संज्ञा-
विशेषविषयः । अन्यथा पञ्चजना इति लिङ्गव्यत्ययश्च । पञ्च- 20

---

2. E. reads एतेषाम् for एषाम्; E. reads ब्रह्मात्मकतया for ब्रह्मा-
श्रयतया.

5. C. om. पञ्च before पञ्च.

7. C. reads अतिरिच्यते for अतिरिच्येयेते.

9. C. reads पुरुषोत्तमः for परमपुरुषः.

12. C. reads प्रतिपत्तिः for प्रतीतिः.

20. C. om. विशेष.

जना नाम केचित्सन्ति । ते च पञ्चसंख्यया विशेष्यन्ते पञ्च पञ्चजना इति । सप्त सप्तर्षय इतिवत् ॥ ११ ॥

के पुनस्ते पञ्च पञ्चजना इत्यत्राह ।

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

5 प्राणस्य प्राणमुत चक्षुपश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः ( बृ. ४।४।१८ ) इति वाक्यशेषाद्ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजना इति विज्ञायन्ते ॥ १२ ॥

अथ स्यात्काण्वानां माध्यंदिनानां च यस्मिन्पञ्च पञ्चजना इत्ययं मन्त्रः समानः । प्राणस्य प्राणमित्यादिवाक्यशेषे 10 काण्वानामन्नस्य पाठो न विद्यते । तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यते वक्तुमिति । अत्रोत्तरम् ।

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानां पाठेसत्यन्ने ज्योतिषा पञ्चजना इन्द्रियाणीति विज्ञायन्ते । तेषां वाक्यशेषः प्रदर्शनार्थः । एतदुक्तं 15 भवति । यस्मिन्पञ्च पञ्चजना इत्यस्मात्पूर्वस्मिन्मन्त्रे

तं देवा ज्योतिषां ज्योतिरायुर्होपासतेमृतम् ।

( बृ. ४।४।१६ )

इति ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि । तानि च विषयाणां 20 प्रकाशकानीन्द्रियाणीति यस्मिन्पञ्च पञ्चजना इत्यनिर्धारित-

3. C. om. पञ्च before पञ्च; C. reads अतः for अत्र.

6. B. reads यत् for ये; E. reads मनो ये for ये मनः.

11. C. reads शक्यम् for शक्यते.

16. C. om. आयुर्होपासतेमृतम्.

विशेषनिर्देशेनावगम्यन्त इति । प्राणस्येति प्राणशब्देन स्पर्शेन्द्रियं गृह्यते । वायुसंबन्धित्वात्स्पर्शेन्द्रियस्य । मुख्यप्राणस्य ज्योतिःशब्देन प्रदर्शनायोगात् । चक्षुष इति चक्षुरिन्द्रियम् । श्रोत्रस्येति श्रोत्रेन्द्रियम् । अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम् । अन्नशब्दोदितपृथिवीसंबन्धित्वाद् घ्राणेन्द्रियमनेन गृह्यते । अद्यतेनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते । मनस इति मनः । घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम् । प्रकाशकानि मनःपर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि । तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम् । तदेवम्

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।

(बृ. ४।४।१७)

इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाण्याकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतः सर्वत्र वेदान्ते संख्योपसंग्रहे तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरस्तीति स्थितम् ॥ १३ ॥ संख्योपसंग्रहाधिकरणं समाप्तम् ॥ (३)

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते । न वेदान्तेष्वेकस्मात्सृष्टिराम्नायत इति जगतो ब्रह्मैककारणत्वं न युज्यते वक्तुम् । तथा हि । सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इति सत्पूर्विका सृष्टिराम्नायते । असद्वा इदमग्र आसीत् ( तै. २।७।१ )

2. C. reads स्पर्शनेन्द्रियस्य for स्पर्शेन्द्रियस्य.

5. B. reads अन्नेन for अनेन before गृह्यते.

7. E. reads तन्त्र for तन्त्रेण.

16. C. om. अस्ति.

इत्यसत्पूर्विका च । अन्यत्रासदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत् ( छा. ३।१९।१ ) इति च । अतो वेदान्तेषु स्रष्टृव्यवस्थितेर्जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम् । प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते । तद्धेदं तर्ह्यव्याकृतमासीत्
5 ( बृ. १।४।७ ) इत्यव्याकृते प्रधाने जगतः प्रलयमभिधाय तन्नामरूपाभ्यां व्याक्रियत ( बृ. १।४।७ ) इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते । अव्याकृतं ह्यव्यक्तम् । नामरूपाभ्यां न व्याक्रियते न व्यज्यत इत्यर्थः । अव्यक्तं प्रधानमेव । अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादिवा-
10 क्यगतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते । एवमव्याकृतकारणत्वे निश्चिते सतीक्षणादयः कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः । ब्रह्मात्मशब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव वर्तेते । अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यत इति प्राप्ते प्रचक्ष्महे ।

15 कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । चशब्दस्तुशब्दार्थे । सर्वज्ञात्सर्वेश्वरात्सत्यसंकल्पान्निरस्तनिखिलदोषगन्धात्परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते । कुतः । आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः । सर्वज्ञत्वादिविशिष्टत्वेन जन्माद्यस्य यतः ( ब्र. सू. १।१।२ ) इत्येवमादिषु
20 प्रतिपादितं ब्रह्म यथाव्यपदिष्टमित्युच्यते । तस्यैकस्यैवाकाशा-

9. E. om. वादि.
11. B. reads उन्मुख for औन्मुख्य.
13. B. reads सिद्धम् for प्रसिद्धम्.
16. B. om. सर्वज्ञात्.
17. B. om. परस्मात्.
18. B. reads व्यपदिष्ट for व्यपदिष्टस्य.

दिषु कारणत्वेनोक्तेः। तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१)। तत्तेजोसृजत (छा. ६।२।३) इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते। तथा हि सत्यं ज्ञानमनन्तं ब्रह्म। सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता (तै. २।१) इति प्रकृतं विपश्चिदेव ब्रह्म तस्माद्वा एतस्मादिति परामृश्यते। तथा तदैक्षत बहु स्याम् (छा. ६।२।३) इति निर्दिष्टं सर्वज्ञं ब्रह्मैव तत्तेजोसृजत (छा. ६।२।३) इति परामृश्यते। एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम्। अतो ब्रह्मैककारणं जगदिति निश्चीयते ॥ १४ ॥

नन्वसद्वा इदमग्र आसीत् (तै. २।७।१) इत्यसदेव कारणत्वेन व्यपदिश्यते। तत्कथमिव सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इत्यत्राह।

## समाकर्षात् ॥ १५ ॥

असद्वा इदमग्र आसीत् (तै. २।७।१) इत्यत्रापि विपश्चिदानन्दमयं सत्यसंकल्पं ब्रह्मैव समाकृष्यते। कथम्। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योन्तर आत्मानन्दमयः (तै. २।५)। सोकामयत बहु स्यां प्रजायेयेति (तै. २।६)। इदं सर्वमसृजत। यदिदं किं च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत् (तै. २।६) इत्यादिना ब्राह्मणेनानन्दमयं ब्रह्म सत्यसंकल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय तदप्येष श्लोको भवति (तै. २।६) इत्युक्तस्यार्थस्य सर्वस्य साक्षित्वेन ह्युदाहृतोयं श्लोकोसद्वा इदमग्र आसीत् (तै. २।७) इति। तथोत्तरत्र भीषास्माद्वातः पवते (तै. २।८) इत्यादिना

1. C. reads यथाव्यपदिष्टस्य after कारणत्वेन.

6. B. reads प्रजायेय after बहु स्याम्.

तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्वनिरतिशयानन्दत्वादयो-भिधीयन्ते । अतोयं मन्त्रस्तद्विषय एव । तदानीं नामरूपवि-भागाभावेन तत्संबन्धितयास्तित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते । असदेवेदमग्र आसीत् (छा.३।१९।१) इत्यत्राप्ययमेव निर्वाहः ।

5 यदुक्तं तद्धेदं तर्ह्यव्याकृतमासीत् ( बृ.१।४।७ ) इत्यत्र प्र-धानमेव जगत्कारणत्वेनाभिधीयत इति । नेत्युच्यते । अत्राप्य-व्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते । स एष इह प्रविष्ट आनखाग्रेभ्यः । पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः । आत्मेत्येवोपासीत ( बृ.१।४।७ ) इत्यत्र स एष इति

10 तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तः प्रविश्य प्रशासितृत्वेनानु-कर्षात् । तत्सृष्ट्वा । तदेवानुप्राविशत् ( तै. २।६ ) । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा.६।३।२) इति स्रष्टुः सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशेन नामरूपव्या-करणप्रसिद्धेश्च । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ( तै.

15 आ. ३।११।२ ) इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेत-नस्यैवंरूपोनुप्रवेशो न संभवति । अतोऽव्याकृतमव्याकृतश-रीरं ब्रह्म तन्नामरूपाभ्यां व्याक्रियत ( बृ. १।४।७ ) इति त-देवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसंकल्पं स्वेनैव विभक्तना-मरूपं स्वयमेव व्याक्रियत इत्युच्यते । एवं च सतीक्षणादयो

20 मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनिय-मनार्थव्यापित्वाभावेन प्रधाने न कथंचिदुपपद्येते । अतो ब्र-

---

5. C. om. अत्र after इति.

6. B. reads तत् before नेत्युच्यते; C. reads तत्रापि for अत्रापि.

13. C. reads अनुप्रवेश for अनुप्रवेशेन.

18. B. reads सर्वज्ञं ब्रह्म for ब्रह्म सर्वज्ञम्.

19. C. om. च after एवम्.

ह्मैककारणं जगदिति स्थितम् ॥ १५ ॥ कारणत्वाधिकरणं समाप्तम् ॥ ( ४ )

## जगद्वाचित्वात् ॥ १६ ॥

पुनरपि सांख्यः प्रत्यवतिष्ठते । यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति तथापि तन्त्रसिद्धप्रधानपुरु- 5
षातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथा हि। भोक्तारमेव पुरुषं कारणं वेद्यतयाधीयते कौषीतकिनो बालाक्यजातशत्रुसंवादे । ब्रह्म ते ब्रवाणि ( कौ. ब्रा. ४।१ ) इत्युपक्रम्य यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः (कौ. ब्रा. ४।१८) इत्युपक्रमे वक्तव्यतया बा- 10
लाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा स वै वेदितव्य इति ब्रह्मोपदिश्यते । यस्य चैतत्कर्मेति कर्मसंबन्धात्प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते नार्थान्तरम्। तस्य कर्मसंबन्धानभ्युपगमात् । कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव संभवति । न च वाच्यं क्रियत इति कर्मेति 15
व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगदेतत्कर्मेति निर्दिश्यते । यस्यैतत्कृत्स्नं जगत्कर्म स वै वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयत इति । यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म ( कौ. ४।१८ ) इति पृथङ्निर्देशवैयर्थ्यात् । कर्मशब्दस्य च लोकवेदयोः पुण्यापुण्यरूप एव कर्मणि प्रसिद्धेः । 20
तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेः । एतेषां पुरुषाणां कर्तेति

11. C. reads जानते for अजानते.

13. B. reads तत्त्वान्तरम् for अर्थान्तरम्.

14. E. reads पाप for अपुण्य.

17. B. C. om. वै after सः.

च भोक्तुरेवोपपद्यते । तदयमर्थः । एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूत एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य स वै वेदितव्यः । तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यमिति ।

5 तथोत्तरत्र तौ ह सुप्तं पुरुषमाजग्मतुः । तं यष्टिना चिक्षेप (कौ.ब्रा. ४।१८) इति सुप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृत्वप्रतिपादन एव लिङ्गानीति । तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते । तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं
10 भुञ्जन्ति (कौ. ब्रा. ४।२०) इति । तथा क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात् (कौ.ब्रा.४।१८) इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच हिता नाम नाड्यः···तासु तदा भवति यदा सुप्तः स्वप्नं न कथंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहा-
15 प्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ( कौ. ब्रा. ४।१९ ) इति सुषुप्त्याधारतया स्वप्नसुषुप्तिजागरि-

3. E. reads हेतुभूत for हेतुभूतम्.
4. C. reads विभक्तम् for विविक्तम्.
7. E. om. च; C. om. त्व after भोक्तृ; B. om. इति after लिङ्गानि.
8. B. om. वा after यथा.
9. C. reads एव for एतम्; E. reads एनम् for एतमात्मानम्.
10. E. reads यथा for तथा.
15. C. om. मनः सर्वैर्ध्यानैः सहाप्येति.
17. B. om. वि before प्रतिष्ठन्ते.

तावस्थासु वर्तमानं वागादिकरणाप्ययोद्गमनस्थानमेनमेव जीवा-
त्मानमथास्मिन्प्राण एवैकधा भवतीत्युक्तवान् । अस्मिञ्जीवा-
त्मनि प्राणभृत्त्वनिबन्धनोयं प्राणशब्दः । स यदा प्रतिबुध्यत
इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणान्मुख्यप्राणस्येश्वरस्य च
सुषुप्तिप्रबोधयोरसंभवात् । अथ वास्मिन्प्राण इति व्यधिकरणस- 5
प्तम्यौ । अस्मिन्नात्मनि वर्तमाने प्राण एकधा भवति वागादिक-
रणग्राम इति । प्राणशब्दस्य मुख्यप्राणपरत्वेपि जीव एवास्मिन्प्र-
करणे प्रतिपाद्यते । स्वतः प्राणस्य जीवोपकरणत्वात् । अतो व-
क्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धिः ।
कारणगताश्चेक्षणादयश्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इत्येतदधि- 10
ष्ठितं प्रधानमेव जगत्कारणमिति प्राप्ते प्रचक्ष्महे ।

जगद्वाचित्वात् । अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्व-
स्मिन्प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाभिधीयते ।
अपि तु निरस्तसमस्ताविद्यादिदोषगन्धोनवधिकातिशयासंख्ये-
यकल्याणगुणगणनिधिर्निखिलजगदेककारणभूतः पुरुषोत्तमोभि- 15
धीयते । कुतः । यस्य चैतत्कर्मेत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य
परमपुरुषकार्यभूतजगद्वाचित्वात् । एतच्छब्दो ह्यर्थप्रकरणादि-
भिरसंकुचितवृत्तिरविशेषण प्रत्यक्षादिप्रमाणोपस्थापितनिखिल-
चराचरात्मकजगद्विषयः । न च पुण्यापुण्यलक्षणं कर्मात्र कर्म-
शब्दाभिधेयम् । ब्रह्म ते ब्रवाणि ( कौ. ४।१ ) इत्युपक्रम्य 20

1. E. reads उद्गमस्थायनम् for उद्गमनस्थानम्; C. om. एनम्.

5. C. reads अधिकरणे for व्यधिकरण.

6. E. reads एव before एकधा.

9. B. C. read असिद्धेः for असिद्धिः.

11. B. reads एवम् before प्राप्ते.

19. B. reads कर्ममात्रम for कर्मात्र.

ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन मृषा वै खलु मा संवदिष्ठाः ( कौ. ४।१८ ) इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञापनायाजातशत्रुणेदं वाक्यमवतारितं यो वै बालाके ( कौ. ४।१८ ) इत्यादि ।
5 पुण्यापुण्यलक्षणकर्मसंबन्धिन आदित्याद्यधिकरणास्तत्सजातीयाश्च पुरुषास्तेनैव विदिता इति तदविदितपुरुषविशेषज्ञापनपरोयं कर्मशब्दो न पुण्यापुण्यमात्रवाची क्रियामात्रवाची वा । अपि तु कृत्स्नस्य जगतः कार्यत्ववाची । एवमेव खल्वविदितोर्थ उपदिष्टो भवति । पुरुषस्य कर्मसंबन्धोपलक्षितस्वाभाविकस्वरूप-
10 स्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा । कर्मसंबन्धमात्रस्यैव वेदितव्यस्वरूपलक्षणत्वाद्यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेर्यस्य चैतत्कर्मेत्येतच्छब्दवैयर्थ्यं च । य एतेषां कर्ता यस्य चैतत्कर्मेति पृथङ्निर्देशस्य चायमभिप्रायः । ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषास्तेषां यः कर्ता ते यत्कार्यभूताः किं
15 विशिष्याभिधीयते कृत्स्नं जगद्यस्य कार्यमुत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्था यत्कार्यत्वेन तुल्याः स परमकारणभूतः पुरुषोत्तमो वेदितव्य इति । जगदुत्पत्तेर्जीवकर्म-

3. C. reads ब्रह्मवादिनम् for अब्रह्मवादिनम्.
5. C. om. लक्षण; B. reads संबन्धिनि, C. संबन्धित्वम्, for संबन्धिनः; B. om. आदि after आदित्य.
6. B. om. एव after तेन.
7. B. om मात्र after क्रिया.
8. B. reads अविदित for अविदितः.
10. B. reads वेदितव्यतया for वेदितव्यत्व; B. reads संबन्धित्वमात्रस्य for संबन्धमात्रस्यैव.
12. B. E. read वा for च after यस्य.
15 B. reads चेतनाः for अपकृष्टाश्चेतना अचेतनाः.
16. E. reads कार्मत्वे for कार्यत्वेन.

निबन्धनत्वेपि न जीवः स्वभोग्यभोगोपकरणादेः स्वयमुत्पादकः । अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते । अतो न तस्य पुरुषान्प्रति कर्तृत्वमुपपद्यते । अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥** 5

अथ यदुक्तं जीवलिङ्गान्मुख्यप्राणसंकीर्तनाच्च लिङ्गाद्भोक्तैवास्मिन्प्रकरणे प्रतिपाद्यते न परमात्मेति तद्व्याख्यातम् । तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः ( ब्र. सू. १।१।३१ ) । एतदुक्तं भवति । यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितं तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र 10 प्रतिपादितम् । अत्राप्युपक्रमे ब्रह्म ते ब्रवाणि ( कौ. ४।१ ) इति ब्रह्मोपक्षिप्तम् । मध्ये च यस्य चैतत्कर्म ( कौ. ४।१८ ) इति निर्दिष्टं न पुरुषमात्रमपि तु निखिलजगदेककारणं ब्रह्मैवेत्युक्तम् । उपसंहारे च सर्वान्पाप्मनोपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद ( कौ. ४।२० ) 15 इति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम् । अतोस्य वाक्यस्य ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानीति । प्रातर्दने ह्युपासात्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् । अत्राप्यथास्मिन्प्राण एवैकधा भवति (कौ. ब्रा. ४।१९) इति सामानाधिकरण्यसंभवे 20 वैयधिकरण्यसंश्रयणायोगाद्ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीरब्रह्मोपासनार्थं प्राणसंकीर्तनं लिङ्गं युज्यते ॥ १७ ॥

13. B. om. एव after ब्रह्म.
17. E. reads वि before निश्चयेन.
21. C. reads समाश्रयण for संश्रयण.
22. E. reads शरीरक for शरीर.

जीवलिङ्गानां ब्रह्मपरत्वं पुनः कथमित्यत्राह ।

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥**

तुशब्दो जीवसंकीर्तनेन वाक्यस्य तत्परत्वसंभावनाव्यावृ-
5 त्त्यर्थः । अन्यार्थं जीवसंकीर्तनं जीवातिरिक्तब्रह्मस्वरूपप्रति-
बोधनार्थमिति जैमिनिराचार्यो मन्यते स्म । कुतः । प्रश्नव्याख्या-
नाभ्याम् । प्रश्नस्तावत्तौ ह सुप्तं पुरुषमाजग्मतुः (कौ. ४।१८)
इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राणनामभिरामन्त्रणाश्रवणय-
ष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य पुनर्जी-
10 वव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते । क्वैष एतद्बालाके पु-
रुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात् (कौ. ४।१८) इति।
व्याख्यानमपि यदा सुप्तः स्वप्नं न कथंचन पश्यत्यथास्मिन्प्राण
एवैकधा भवति ।...एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते
प्राणेभ्यो देवा देवेभ्यो लोकाः (कौ. ४।१९) इति जीवा-
15 दर्थान्तरभूतपरमात्मपरमेव । सुप्तस्य हि जीवस्य यत्रोपितस्य
जागरितस्वप्रदशासंबन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण
संप्रसन्नस्य स्वस्थतापत्तिः पुनरप्यस्य यस्माद्भोगाय निष्क्रमणं सोयं
परमात्मा । तथा हि सता सोम्य तदा संपन्नो भवति (छा. ६।८।१)।
प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्

1. C. reads पुनः कथं ब्रह्मपरत्वम् for ब्रह्मपरत्वं पुनः कथम्.
5. B. reads प्रबोधनार्थम् for प्रतिबोधनार्थमिति.
8. E. reads प्रतिबुद्ध for प्रबुद्ध.
10. C. reads प्रबोधन for प्रतिबोधन.
15. B. reads अर्थान्तरभूतः परमात्मा for अर्थान्तरभूतपरमात्म.
17. B. reads सुप्रसन्नस्य for संप्रसन्नस्य; E. reads सुप्तस्य after संप्रसन्नस्य.

( बृ. ४।३।२१ ) इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा । अतः प्रश्नप्रतिवचनाभ्यां जीवसंकीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते ।

यदुक्तं प्रश्नव्याख्याने जीवपरे । सुषुप्तिस्थानं च नाड्य एव । करणग्रामश्च प्राणशब्दनिर्दिष्टे जीव एवैकधा भवतीति । तदयुक्तम् । नाडीनां स्वप्रस्थानत्वादुक्तरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वाच्च । प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च ।

अपि चैवमेके वाजसनेयिनोस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्ताद्विज्ञानमयाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात् ।.... यत्रैष सुप्तोभूत् । य एष विज्ञानमयः पुरुषस्तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते ( बृ. २।१।१६-१७ ) इति । आकाशशब्दश्च परमात्मनि प्रसिद्धो दहरोस्मिन्नन्तर आकाशः ( छा. ८।१।१ ) इति । अतोत्र जीवसंकीर्तनं तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते । तस्मादस्मिन्वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतयाभिधानान्न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् ।१८। ॥ जगद्वाचित्वाधिकरणं समाप्तम् ॥ (५)

## वाक्यान्वयात् ॥ १९ ॥

अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क-

6. B. reads नीत्या for रीत्या

10 B. om. पुरुषस्य.

B. om. अत्रापि: B. reads वेदन for आवेदः

चिद्दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित्संभवतीत्याशङ्क्य निराकरोति। बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति (बृ. ४।५।६) इत्यारभ्य न वा अरे
5 सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् (बृ. ४।५।६) इति।

तत्र संशयः। किमस्मिन्वाक्ये द्रष्टव्यतयोपदिश्यमान-
10 स्तन्त्रसिद्धपुरुष एवाथवा सर्वज्ञः सत्यसंकल्पः सर्वेश्वर इति किं युक्तम्। पुरुष इति। कुतः। आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः। उपक्रमे तावत्पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते। मध्येपि विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति
15 (बृ. ४।५।१३) इत्युत्पत्तिविनाशयोगात्स एवावगम्यते। तथान्ते च विज्ञातारमरे केन विजानीयात् (बृ. ४।५।१५) इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते नेश्वरः। अतस्तन्त्रसिद्धपुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते। नन्वमृतत्वस्य तु नाशास्ति वित्तेन (बृ. ४।५।३) इत्युपक्रमाद-
20 मृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते। तत्कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य। तदुच्यते। अत एव ह्यत्र पुरुषप्रतिपादनतन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूप-

10. C. reads तन्त्रसिद्धः for तन्त्रसिद्ध.
15. E. reads सम् before योगात्.
18. B. reads अमृतस्य for अमृतत्वस्य.
21. B. om. अत एव ह्यत्र० हेतुत्वेनोच्यते.

याथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते । अतो जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वायात्मा वा अरे द्रष्टव्यः (बृ. ४।५।६) इत्यादिनोपदिश्यते । सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्व एवात्मानो विदिता भवन्तीत्यात्मविज्ञानेन सर्वविज्ञानमुपपन्नम् । देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वादिदं सर्वं यदयमात्मा (बृ. ४।५।७) इत्यैकात्म्योपदेशः । देवाद्याकाराणामनात्माकारत्वाच्च सर्वं तं परादात् (बृ. ४।५।७) इत्यादिनान्यत्वनिषेधश्च । यत्र हि द्वैतमिव भवति (बृ. ४।५।१५) इति च नानात्वनिषेधेनैकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते । तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः (बृ. ४।५।११) इत्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते । एवमस्मिन्वाक्ये पुरुषपरे निश्चिते सति तदैकार्थ्यात्सर्वे वेदान्तास्तत्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानं नेश्वर इत्येवं प्राप्ते प्रचक्ष्महे ।

वाक्यान्वयादिति । सर्वेश्वर एवास्मिन्वाक्ये प्रतीयते । कुतः । वाक्यान्वयात् । एवमेव हि वाक्यावयवानामन्योन्यान्वयः समञ्जसो भवति । अमृतत्वस्य तु नाशास्ति वित्तेन

4. B. reads एव after विज्ञानेन.
6. E. reads वि before ज्ञानैक.
7. B. reads आकारत्वात् for प्रकारत्वात्; B. reads आत्मैक्य for ऐकात्म्य.
8. E. om. च before सर्वम्.
10. C. om. च after इति; B. reads अपि for हि.
13. B. reads उत्पत्तिः for उत्पत्तेः.
18. C. E. om. वाक्यान्वयात्.
19. B. reads अमृतस्य for अमृतत्वस्य.

(बृ. २।४।२, ४।५।३) इति याज्ञवल्क्येनाभिहिते येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि (बृ. २।४।३,४।५।४) इत्यमृतत्वानुपायतया वित्ताद्यनादरेणामृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया
5 द्रष्टव्यतयोपदिष्टोयमात्मा परमात्मैव । तमेव विदित्वातिमृत्युमेति (श्वे. ३।८,६।१५)। तमेवं विद्वानमृत इह भवति नान्यः पन्थाः (तै. आ. ३।१२।७) इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्यविज्ञानमपवर्गसाधनभूतपरमपुरुषवेदनोपयोगित-
10 यावगन्तव्यं न स्वत एवोपायत्वेन । अतोत्र परमात्मैवामृतत्वोपायतया द्रष्टव्य इत्यादिनोपदिश्यते । तथा तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः (बृ. ४।५।११) इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न संभ-
15 वति । तथात्मनो वा अरे दर्शनेन (बृ. २।४।५) इत्यादिनैकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावकल्पते ।

यत्त्वेतदेकरूपत्वादात्मनामेकात्मविज्ञानेन सर्वात्मविज्ञानमुच्यत इति तदयुक्तम् । अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञाना-
20 भावात् । प्रतिज्ञोपपादनाय चेदं ब्रह्मेदं क्षत्रम् (बृ. ४।५।७) इत्युपक्रम्येदं सर्वं यदयमात्मा (बृ. ४।५।७) इति प्रत्यक्षादि-

5. C. reads द्रष्टव्यत्वेन for द्रष्टव्यतया; E. reads तमेवम् for तमेव.

8. C. reads प्रतिपाद्यतया for प्रतिपादनात्.

9. E. om. भूत after साधन.

16. B. reads सर्वात्मभूत for सर्वात्मभूते.

सिद्धं चिदचिन्मिश्रं प्रपञ्चमिदमिति निर्दिश्यैतदयमात्मेत्यै-
कात्म्योपदेशश्च परमात्मन एवोपपद्यते । न हीदंशब्दवाच्यं
चिदचिन्मिश्रं जगत्पुरुषेणाचित्संसृष्टेन तद्वियुक्तेन वा स्वरूपे-
णावस्थितेन चैक्यमुपगच्छति । अत एव सर्वं तं परादाद्योन्य-
त्रात्मनः सर्वं वेद ( बृ. ४।५।७ ) इति व्यतिरिक्तत्वेन सर्ववे- 5
दननिन्दा च । तथा प्रथमे च मैत्रेयीब्राह्मणे महद्भूतमनन्त-
मपारम् ( बृ. २।४।१२ ) इति श्रुता महत्त्वादयो गुणाः
परमात्मन एव संभवन्ति । अतः स एवात्र प्रतिपाद्यते ।

यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मन
उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात्तद्विषयमेवेदं वाक्यमिति 10
तदयुक्तम् । आत्मनस्तु कामाय ( बृ. २।४।५,४।५।६ ) इत्यात्म-
शब्देन जीवात्मसंशब्दने तस्यात्मा वा अरे द्रष्टव्यः ( बृ.
२।४।५,४।५।६) इत्यनेनानन्वयप्रसङ्गात् । आत्मा वा अरे
द्रष्टव्य इत्यात्मनो द्रष्टव्यतोपयोगितयात्मनस्तु कामायेत्युपदि-
ष्टमिति प्रतीयते । आत्मनस्तु कामायात्मनः कामसंपत्तये । 15
काम्यन्त इति कामाः । आत्मन इष्टसंपत्तय इति यावत् । न
च जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्तीत्युक्ते सति
तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति । प्रियमेव ह्यन्वेष्टव्यं न
तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम् । यस्मादात्मन
इष्टसंपत्तय पत्यादयः प्रिया भवन्ति तस्मात्पत्यादि प्रियं परि- 20
त्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसंगतं भवति । प्रत्युत

5. C. om. वा after तद्वियुक्तेन.

6. C. om. च after निन्दा.

12. B. reads जीवात्मनः for जीवात्म.

13. B. reads अन्वय for अनन्वय.

14. E. reads द्रष्टव्यत्व for द्रष्टव्यता.

18. E. om. जीवस्य; C. reads स्व before स्वरूपम्.

न पत्यादिशेषतया पत्यादीनां प्रियत्वमपि त्वात्मनः शेषतया पत्यादीनां प्रियत्वमित्युक्ते स्वशेषतया त एवोपादेयाः स्युः। आत्मनस्तु कामाय सर्वं प्रियं भवति (बृ. २।४।५,४।५।६) इत्यस्य परेणानन्वये वाक्यभेदः प्रसज्यते। अभ्युपगम्यमानेपि
5 वाक्यभेदे पूर्वस्य वाक्यस्य न किंचित्प्रयोजनं दृश्यते। अतः पत्यादि सर्वं प्रियं परित्यज्यात्मन एवान्वेष्टव्यत्वं यथा प्रतीयते तथा वाक्यार्थो वर्णनीयः। सोयमुच्यते। अमृतत्वस्य तु नाशास्ति वित्तेन (बृ. २।४।२,४।५।३) इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायत्वमुक्त्वा वित्तपु-
10 त्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तमपि तु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम्। अतो य एवं स्वयं निरतिशयानन्दः सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयति स परमात्मैव द्रष्टव्य इत्युपदिश्यते।

15 तदयमर्थः। न वा अरे पत्युः कामाय पतिः प्रियो भवति। न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसंकल्पात्प्रिया भवन्त्यपि त्वात्मनः कामाय। परमात्मनः स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः। परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेश-

1. C. reads शेषितया for शेषतया after पत्यादि and आत्मनः.
5. C. reads पूर्वं for पूर्वस्य.
10. B. om. पति.
12. B. reads एव for एवम्; C. reads निरतिशयानन्दस्वरूपः for निरतिशयानन्दः.
13. C. reads अल्पत्व for आस्पदत्व.
16. B. om. पति.
18. B. reads परमात्मा न for परमात्मनः.

कालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । एष ह्येवानन्दयाति (तै. २।७।१) इति श्रुतेः । न हि तत्तद्वस्तु स्वरूपेण प्रियमप्रियं वा । यथोक्तम् ।

तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ॥ 5
तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम् ।
(वि. पु. २।६।४६–४७)

इति । आत्मनस्तु कामाय (२।४।५,४।५।६) इत्यस्य जीवात्मपरत्वेप्यात्मा वा अरे द्रष्टव्यः (बृ. २।४।५,४।५।६) इति तु परमात्मविषयमेव । तत्राप्ययमर्थः । यस्मात्पत्यादीनामिष्टसंपत्तये 10 तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्तेपि त्वात्मेष्टसंपत्तये स्वातन्त्र्येण स्वप्रियत्वेनोपादीयन्ते । तस्माद्य एवात्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा स एव हि द्रष्टव्यो न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्स्वभावाः पतिजायापुत्रवित्तादयो विषया इति । अस्मिंस्तु प्रकरणे जीवात्मशब्देनापि 15 परमात्मन एवाभिधानादात्मनस्तु कामाय ।....आत्मा वा अरे द्रष्टव्यः (बृ. २।४।५,४।५।६) इति पूर्वोक्तप्रक्रिययोभयत्रात्मशब्दावेकविषयौ ॥ १९ ॥

मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह ।

---

1. C. reads परिणामम् for परिमाणम्: B. om. तत् after तत्; C. reads वस्तुगत for वस्तुगतम्.
3. C. reads तु for हि.
4. C. reads अप्रीतये for प्रीतये.
10. C. om. अपि after तत्र.
12. B. C. read स्वतन्त्रेण for स्वातन्त्र्येण.
14. C. om. दुःख after सुख; E. reads तत् after तत्.
15. E. reads वाचि after जीवात्म.

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गं यज्जीवात्मवाचिशब्दैः परमात्मनोभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म । यद्ययं जीवः परमात्मकार्यतया परमात्मैव न भवेत्तदा 5 तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति । आत्मा वा इदमेक एवाग्र आसीत् (ऐ. १) इति प्राक्सृष्टेरेकत्वावधारणात् ।

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥
10 (मु. २।१)

इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेवाप्ययश्रवणाच्च जीवानां ब्रह्मकार्यत्वेन ब्रह्मणैक्यमवगम्यते । अतो जीवशब्देन परमात्मन एवाभिधानमिति ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

15 यदुक्तं जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति तदयुक्तम् । न जायते म्रियते वा विपश्चिन् (का. २।१८) इत्यादिनाजत्वश्रुतेः । जीवानां प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च । अन्यथा विषमसृष्ट्यनुपपत्तेश्च । ब्रह्म-

3. B. om. वाचि; B. reads आश्मरथ्य for आश्मरथ्यः.
8. E. reads प्रभवन्ति for प्रभवन्ते.
11. C. reads जीवात्मनाम् for जीवानाम् after ब्रह्मणः; C. reads लय for अप्यय.
12. C. reads जीवादीनाम् for जीवानाम्; C. reads वाचि before शब्देन.
13. C. om. एव.
18. C. reads जीवात्मनाम् for जीवानाम्.

कार्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्ष आकाशादिवदवर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च । घटादिवत्कारणप्राप्तिर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च । जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरत्र (ब्र. सू. २।३।१८) प्रपञ्चयिष्यते । अत एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छा. ८।३।४)। 5

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥
(मु. ३।२।८)

इत्युत्क्रमिष्यतः परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म ॥ २१ ॥ 10

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

यदुक्तमुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणस्तच्छब्देनाभिधानमिति तदप्ययुक्तम् । विकल्पासहत्वात् । अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवंभावः किं स्वाभाविक उतौपाधिकः? तत्रापि पारमार्थिकोऽपारमार्थिको वेति । स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते । भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात् । अथ भेदेन सह स्वरूपमप्यपैतीति । तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः । अपुरुषार्थत्वादिदोषप्रसङ्गश्च । पारमार्थिकौपाधिकत्वेऽपि प्रागपि ब्रह्मैवेत्युत्क्रमिष्यत एवंभावादिति विशेषो न युज्यते वक्तुम् । अस्मिन्पक्षे ह्युपाधिब्रह्मव्य- 15 20

[illegible]. C. reads अपुरुषार्थता for अपुरुषार्थत्वात्.
11. B. om. अपि after तत्.
16. C. E. read परमार्थिकोपरमार्थिकः for पारमार्थिकोपारमार्थिकः.
20. C. om. अपि after औपाधिकत्वे.

तिरेकेण वस्त्वन्तराभावान्निरवयवस्य ब्रह्मण उपाधिना छेदाद्यसंभवाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव। औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यम् । ब्रह्मण एवाविद्योपाधितिरोहितस्वरूपस्येति
5 चेन्न । नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्योपाधितिरोधानासंभवात् । तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः । प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः स्वरूपनाशो वा स्यात् । अतो नित्याविर्भूतस्वस्वरूपत्वात्तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इत्युत्क्रमिष्यत इति विशेषणं
10 व्यर्थमेव । अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य (छा. ८।३।४) इति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह । अपि तु पूर्वसिद्धस्वरूपस्याविर्भावम् । तथा हि वक्ष्यते संपद्याविर्भावः स्वेन शब्दात् (ब्र. सू. ४।४।१) इत्यादिभिः। अतोनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति (छा.
15 ६।३।२)। य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः (बृ. ३।७।२२)। योक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेदैष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः (सुबा.)। अन्तः प्रविष्टः शास्ता जनानां

2. E. reads भेद for छेद.
4. E. reads स्व before स्वरूपस्य.
5. C. om. स्व after ज्ञान; C. om. उपाधि before तिरोधान.
8. C. om. स्व before स्वरूपत्वात्.
10. C. E. om. परं ज्योतिरुपसंपद्य.
11. C. om. न before तदानीम्.
12. B. reads पूर्वसिद्धस्य for पूर्वसिद्ध.
14. C. om. नामरूपे व्याकरवाणीति.

सर्वात्मा (तै. आ. ३।११।२) इति स्वशरीरभूते जीवात्मन्यात्मतयावस्थिते जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म । जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न जीवमात्रस्येति पूर्वमेवोक्तं (पृ. ११३ प. १) नामरूपे व्याकरवाणि (छा. ६।३।२) इत्यत्र । एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोपहतपाप्मत्वसर्वज्ञत्वादिगोचरा जीवस्याविदुषः शोचतो ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ।

अयमत्र वाक्यार्थः । अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्य आत्मा वा अरे द्रष्टव्यः (बृ. ४।५।६) इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वात्मनि खल्वरे दृष्टे (बृ. ४।५।६) इत्यादिनोपास्यलक्षणं दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणग्रामनियमनं च सामान्येनाभिधाय स यथार्द्रैधाग्नेः (बृ. ४।५।११) इत्यादिना स यथा सर्वासामपां समुद्र एकायनम् (बृ. ४।५।१२) इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वं सकलविषयप्रवृत्तिमूलकरणग्रामनियमनं च विस्तीर्णमुपदिश्य स यथा सैन्धवघनः (बृ. ४।५।१३) इत्यादिनामृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरि-

---

1. B. reads स्वशरीरभूत for स्वशरीरभूते.
7. B reads विदुषः for अविदुषः.
16. L. E. om. ग्राम.
18. C. om. प्र before वृत्ति

णामानुवृत्तिं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये-
वानुविनश्यति ( बृ. ४।५।१३ ) इत्यभिधाय न प्रेत्य संज्ञास्ति
( बृ. ४।५।१३ ) इति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञा-
नसंकोचाभावेन भूतसंघातैनैकीकृत्यात्मनि देवादिरूपज्ञानाभा-
5 वमुक्त्वा पुनरपि यत्र हि द्वैतमिव भवति ( बृ. ४।५।१५ )
इत्यादिना ब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति नि-
रस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यति-
रिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य येनेदं सर्वं विजानाति
तं केन विजानीयात् ( बृ. ४।५।१५ ) इति च जीवात्मा
10 स्वात्मतयावस्थितेन येन परमात्मनाहितज्ञानः सन्निदं सर्वं येन
विजानात्ययं तं केन विजानीयान्न केनापीति परमात्मनो
दुरवगमत्वमुपपाद्य स एष नेति नेति ( बृ. ४।५।१५ ) इत्या-
दिनायं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणरूप एव
सर्वशरीरः सन्सर्वस्यात्मतयावस्थित इति स्वशरीरभूतचिदचि-
15 द्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय विज्ञातारमरे केन
विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्
( बृ. ४।५।१५ ) इति समस्तवस्तुविसजातीयं निरस्तनिखिल-
दोषं निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममु-
क्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वो-
20 पायो ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयत इत्युक्तवान् । अतः परं

6. C. reads गत after वस्तु.

9. B. om. च after इति.

10. C. E. om. येन after सर्वम्.

13. C. reads स्वरूपः for रूपः.

14. C. reads सर्वशरीरतया for सर्वशरीरः सन्; B. om. सन्, स्व and अचित्.

17. C. om. निरस्तनिखिलदोषम्; E. om. निखिलदोषम्.

ब्रह्मैवास्मिन्वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणं पुरुषस्तदधिष्ठाता च प्रकृतिरिति स्थितम् ॥ २२ ॥ वाक्यान्वयाधिकरणं समाप्तम् (६) ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

एवं निरीश्वरसांख्ये निरस्ते सति सेश्वरसांख्यः प्रत्यवतिष्ठते । यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते । न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोधिष्ठातुरीश्वरस्याधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति । तथा ह्यपरिणामिनमेनं प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते ।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम । (श्वे. ६।१९
स वा एष महानज आत्माजरोमरः (बृ. ४।४।२५) ।

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायतेध्यासिता तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थाश्च तेनैवाधिष्ठिता जगत् ।
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ॥ (चू. ३–४)

इति । तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत्सृजतीति श्रूयते । अस्मान्मायी सृजते विश्वमेतत् (श्वे. ४।९) ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । (श्वे. ४।१०)
इति । [illegible]

---

1. C. reads न after जगत्कारणम
10. B. reads जगत् for जगतः.
11. E. reads एव before एनम्.
16. C. reads पुरुपार्थम् for पुरुपाथ

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् । (भ. गी. ९।१०) इति । एवमश्रुतेपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानकारणत्वं च सिध्यति । एवमेव हि लोके निमित्तोपादान-
5 योरत्यन्तभेदो दृश्यते । मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वं चेतनस्य कुलालस्वर्णकारादेश्च निमित्तत्वं च नियतमुपलभ्यते । कार्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा । एवं निमित्तोपादानयोर्भेदनियमं कार्यनिष्पत्तेरनेककारणसव्यपेक्षत्वनियमं चातिक्रम्यैकमेव ब्रह्मोपादानं निमित्तं च
10 प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि । अतो ब्रह्म निमित्तकारणमेव नोपादानम् । उपादानं तु तदधिष्ठितं प्रधानमेवेति । एवं प्राप्तेभिधीयते ।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति । प्रकृतिश्चोपादानं च । न निमित्तकारणमात्रं ब्रह्म । उपादानकारणं च ब्रह्मैवेत्यर्थः ।
15 कुतः । प्रतिज्ञादृष्टान्तानुपरोधात् । एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते । प्रतिज्ञा तावत्स्तब्धोस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् (छा. ६।१।१) इत्येकविज्ञानेन सर्वविज्ञानविषया । दृष्टान्तश्च यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्···यथा सोम्यैकेन लोहम-
20 णिना···यथा सोम्यैकेन नखनिकृन्तनेन (छा. ६।१।१-२-३) इति कारणविज्ञानात्कार्यविज्ञानविषयः । यदि निमित्तकारणमेव जगतो ब्रह्म तदा तद्विज्ञानान्न समस्तं जगद्विज्ञातं स्यात् । न हि

3. C. reads उपादानत्वम् for उपादानकारणत्वम्.
6. C. om. च before निमित्तत्वम्.
8. C. reads निमित्त before भेदनियमम्; B. reads कारक for कारण.
10. B. reads इति before प्रतिपादयितुम्.

कुलालादिविज्ञानेन घटादि विज्ञायते । अतः प्रतिज्ञादृष्टान्तयोर्बाध एव । ब्रह्मण एवोपादानत्व उपादानभूतमृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घटमणिककटकमुकुटवासीपरश्वधादितत्कार्यविज्ञानवन्निखिलजगदेककारणभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगद्विज्ञातमेव स्यात् । कारणमेवावस्थान्तरमापन्नं 5 कार्यं न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद्ब्रह्मैव जगदुपादानं चेति निश्चीयते ।

यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति तदसत् । निमित्तोपादानयोरैक्यप्रतीतेः । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति (छा. ६।१।१) इति । आदिश्यते प्रशिष्यतेनेने- 10 त्यादेशः । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (बृ. ३।८।९) इत्यादिश्रुतेः । साधकतमत्वेन कर्ता विवक्षितः । तमादेष्टारमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीति । येनादेष्ट्राधिष्ठात्रा श्रुतेनाश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते । सदेव सोम्येदमग्र आसीदेकमेव (छा. ६।२।१) 15 इति प्राक्सृष्टेरेकत्वावधारणात् । अद्वितीयपदेनाधिष्ठात्रन्तर-

1. C. reads ज्ञानेन घटादिः for विज्ञानेन घटादि; E. reads विज्ञाने for विज्ञानेन.

3. C. om. वि before ज्ञानेन.

4. C. reads उपादान for एककारण.

5. E. om. निखिलम्; B. om. जगद्विज्ञा...द्रव्यान्तरमिति; C. reads अवस्थान्तर for अवस्थान्तरम्.

7. C. om. एव after ब्रह्म.

8. C. om. इति after प्रतीयते.

9. C. om. निमित्तोपादानयोरैक्यप्रतीतेः.

10. B. reads प्रशास्यते for प्रशिष्यते.

11. C. om. सूर्याचन्द्रमसौ विधृतौ तिष्ठतः.

निषेधाच्च । नन्वेवं सति विकारजननीम् (चू. ३) । गौरनाद्यन्तवती (चू. ५) इत्यादिभिः प्रकृतेराद्यन्तवद्विरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते । तदुच्यते । तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते । ब्रह्मव्यतिरिक्तव-
5 स्त्वन्तराभावात् । तथा हि श्रुतयः सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद ( बृ. २।४।६ ) । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्...केन कं विजानीयात् ( बृ. ४।५।१५ ) इत्याद्याः । सर्वं खल्विदं ब्रह्म ( छा. ३।१४।१ ) । ऐतदात्म्यमिदं सर्वम् ( छा. ६।८।७ ) इति कार्यावस्थं कारणावस्थं च सर्वं जगद्ब्र-
10 ह्मात्मकमिति श्रवणाच्च । एतदुक्तं भवति । यः पृथिवीमन्तरे संचरन्यस्य पृथिवी शरीरं यं पृथिवी न वेद (सुबा.) इत्यारभ्य योऽव्यक्तमन्तरे संचरन्यस्याव्यक्तं शरीरं यमव्यक्तं न वेद योक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेद (सुबा.) यः पृथिव्यां तिष्ठन्यः पृथिव्यन्तरो यं पृथिवी न वेद यस्य
15 पृथिवी शरीरं यः पृथिवीमन्तरो यमयति ( बृ. ३।७।३ ) इत्यारभ्य य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२२ ) इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपं कदाचि-
20 च्चाविभक्तनामरूपम् । यदा विभक्तनामरूपं तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते । यदाविभक्तनामरूपं तदैकमद्वितीयं कारणमिति च । एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणो

---

1. C. reads निवारणात् for निषेधात्.
2. C. reads आद्यन्त for आद्यन्तवत्.
20. E. om. तदा.
21. C. reads च after यदा.
22. B. om. परस्य.

विभक्तनामरूपा या कारणावस्था सा गौरनाद्यन्तवती (चू.५)। विकारजननीमज्ञाम् (चू. ३)। अजामेकाम् (श्वे. ४।५) इत्यादिभिरभिधीयत इति।

ननु च महानव्यक्ते लीयते। अव्यक्तमक्षरे लीयते (सुबा.) इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते। तथा च महाभारते। 5

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम। (भा.शा.३३४।३१)
अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते। (भा.शा. ३३९-३१)

इति। नैष दोषः। अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायास्त्रिगुणावस्थायाः कार्यत्वात्। यदा तमस्तन्न दिवा न रात्रिरिति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः 10 स्थित्यभिधानाज्जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चिदचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव गौरनाद्यन्तवती (चू.५) इत्यादिष्वभिधीयते। अत एव चाक्षरं तमसि लीयते तमः परे देव एकीभवति (सुबा.) इति तमस एकीभावमात्रमेव श्रूयते न तु लयः। एकीभाव इति तमोभिधानातिसूक्ष्माचिद्वस्तुप्रकारस्य 15 ब्रह्मणोऽविभक्तनामरूपतयावस्थानमभिधीयते। तम आसीत्तमसा गूढमग्रे प्रकेतम् (तै. ब्रा. २।८।२)। तमसस्तन्महिनाजायतैकम् (तै. ब्रा. २।८।९) इत्याद्यप्येतदेव वदति। तथा च मानवं वचनम्

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। 20
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ (मनु. १।५)

3. E. om. इति after अभिधीयते.
11. E. reads चाचिद्वस्तु after अतिसूक्ष्मम्.
13. E. reads इत्यादिभिः for इत्यादिषु.
15. B. reads चिदचित् for अचिद्वस्तु; C. om. वस्तु.
19. C. reads वचः for वचनम्.

इति । अस्मान्मायी सृजते विश्वमेतत् ( श्वे. ४।९ ) इत्या-
द्यनन्तरमेवोपपादयिष्यते ब्रह्मणोपरिणामित्वश्रुतयश्च ।

यत्त्वेकस्य निमित्तत्वमुपादानत्वं च न संभवति । एककारक-
निष्पाद्यत्वं च कार्यस्य । लोके तथा नियमदर्शनात् । अतोग्निना
5 सिञ्चेदितिवद्वेदान्तवाक्यान्येकस्मादेवोत्पत्तिं प्रतिपादयितुं न
प्रभवन्तीति । अत्रोच्यते । सकलेतरविलक्षणस्य परस्य ब्रह्मणः
सर्वशक्तेः सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते । मृदादेरचेतनस्य ज्ञानाभा-
वेनाधिष्ठातृत्वायोगादधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिवि-
रहादसत्यसंकल्पतया च तथा दर्शननियमः । अतो ब्रह्मैव
10 जगतो निमित्तमुपादानं च ॥ २३ ॥

## अभिध्योपदेशाच्च ॥ २४ ॥

इतश्चोभयं ब्रह्मैव । सोकामयत बहु स्यां प्रजायेय ( तै. २।६ )
इति तदैक्षत बहु स्यां प्रजायेय ( छा. ६।२।३ ) इति स्रष्टुर्ब्र-
ह्मणः स्वस्यैव बहुभवनसंकल्पोपदेशात् । विचित्रचिदचिद्रूपेणाह-
15 मेव बहु स्यां प्रजायेयेति संकल्पपूर्विका हि सृष्टिरुपदिश्यते ॥२४॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्ची-
यते । ब्रह्मण एव निमित्तत्वमुपादानत्वं च साक्षादाम्नायते ।

किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
20 मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥

3. C. om. एक before कारक.
4. E. reads च after दर्शनात्.
8. C. reads शक्तिपरिणाम for परिणामशक्ति; B. reads शक्ते: for शक्ति.
15. C. E. read तथा after स्याम्; C. om. हि before सृष्टिः

ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्॥
(तै. ब्रा. २।८।९)

इति। अत्र हि स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति लोकदृष्ट्या पृष्टे सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुध्यत इति ब्रह्मैवोपादानमुपकरणानि चेति परिहृतम्। अतश्चोभयं ब्रह्म॥ २५॥ 5

## आत्मकृतेः॥ २६॥

सोऽकामयत बहु स्यां प्रजायेय (तै. २।६) इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणस्तदात्मानं स्वयमकुरुत (तै. २।७) इति सृष्टः कर्मत्वं कर्तृत्वं च प्रतीयत इत्यात्मन एव बहुत्वकरणात्तस्यैव निमित्तत्वमुपादानत्वं च प्रतीयते। अविभक्तनामरूप एवात्मा कर्ता स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः। स्वयमेवात्मानं तथाकुरुतेति निमित्तमुपादानं च॥ २६॥ 10 15

सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१)। आनन्दो ब्रह्म (तै. ३।६)। अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः (छा. ८।१।५)।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। (श्वे. ६।१९)

4. B. reads सिसृक्षोः for स्रष्टुः.
6. C. reads विरुद्धः for विरुध्यते; C. om. एव after ब्रह्म.
7. C. om. अतश्चोभयं ब्रह्म.
11. B. reads स्वस्यैव for तस्यैव.
13. C. om. एव before आत्मा; C. reads विभक्तनामरूपम् for विभक्तनामरूपः.
16. E. reads इति after आनन्दो ब्रह्म.

स वा एष महानज आत्माजरोमरः ( बृ. ४।४।२५ ) इति स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणो विचित्रानन्तापुरुषार्थास्पदविचित्रचिदचिन्मिश्रप्रपञ्चरूपेणात्मनो बहुभवनसंकल्पपूर्वकं
5 बहुभवनं कथमुपपद्यत इत्याशङ्क्याह ।

## परिणामात् ॥ २७ ॥

परिणामस्वाभाव्यान्नात्रोपदिश्यमानस्य परिणामस्य परस्मिन्ब्रह्मणि दोषावहत्वस्वभावः प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः । एवमेव हि परिणाम उपदिश्यते । अशेषहेयप्रत्यनी-
10 ककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसंकल्पमवाप्तसमस्तकाममनवधिकातिशयानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं परं ब्रह्म स्वशरीरभूते प्रपञ्चे तन्मात्राहंकारादिकारणपरंपरया तमःशब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति तमसि च स्वशरीरतया पृथ-
15 ग्विनिर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने तथाभूततमःशरीरं ब्रह्म पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति संकल्प्याप्ययक्रमेण जगच्छरीरतयात्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः ।

तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्त-

4. C. om. विचित्र.

5. C. reads बहुत्वकरणम् for बहुभवनम्.

8. C. reads दोषावहत्वम् for दोषावहत्व.

14. B. reads अपि after शरीरतया; C. om. पृथग्वि.

15. E. reads सति after आपन्ने.

16. C. om. नामरूप.

दात्मकत्वं चाम्नायते । यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।३ ) इत्यारभ्य यस्यापः शरीरं यस्याग्निः शरीरं यस्यान्तरिक्षं शरीरं यस्य वायुः शरीरं यस्य द्यौः शरीरं यस्यादित्यः शरीरं यस्य दिशः शरीरं यस्य 5 चन्द्रतारकं शरीरं यस्याकाशः शरीरं यस्य तमः शरीरं यस्य तेजः शरीरं यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक्शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक्शरीरं यस्य विज्ञानं शरीरं यस्य रेतः शरीरम् ( बृ. ३।७।४–२३ ) इत्येवमन्तेन काण्वपाठे । माध्यंदिने तु 10 पाठे विज्ञानस्य स्थाने यस्यात्मा शरीरमिति विशेषः । लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम् । सुबालोपनिषदि च पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयकेनुक्तानामपि तत्त्वानां शरीरत्वं ब्रह्मण आत्मत्वं च श्रूयते । यस्य बुद्धिः शरीरं यस्याहंकारः शरीरं यस्य चित्तं शरीरं यस्याव्यक्तं 15 शरीरं यस्याक्षरं शरीरं यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरीरं यं मृत्युर्न वेदष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः ( सुबा. ) इति ।

अत्र मृत्युशब्देन परमसूक्ष्ममचिद्वस्तु तमःशब्दवाच्यमभिधीयते । अव्यक्तमक्षरे लीयतेक्षरं तमसि लीयते ( सुबा. ) इति 20

1. C. reads आत्मत्वम् for आत्मकत्वम्; E. reads श्रूयते for आम्नायते.

6. B. om. चन्द्र.

10. C. reads आदि after काण्व.

12. C. reads देवानाम् for वेदानाम्.

14. E. reads च after शरीरत्वम्.

तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात् । सर्वेषामात्मनां ज्ञाना-
वरणानर्थमूलत्वेन तदेव हि तमो मृत्युशब्दव्यपदेश्यम् । सुबालो-
पनिषद्येवं ब्रह्मशरीरतया तदात्मकानां तत्त्वानां ब्रह्मण्येव प्रलय
आम्नायते । पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो
5 वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेष्विन्द्रियाणि
तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते
महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः
परे देव एकीभवति (सुबा.) इति । अविभागापत्तिदशायामपि
चिदचिद्वस्त्वतिसूक्ष्मं सकर्मसंस्कारं तिष्ठतीत्युत्तरत्र वक्ष्यते न
10 कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च
( ब्र. सू. २।१।३५ ) इति ।

एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मन्येकीभूतात्य-
न्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयान्निरतिशयानन्दा-
त्सर्वज्ञात्सर्वशक्तेः सत्यसंकल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूल-
15 चिदचिद्वस्तुशरीरतया बहुभवनसंकल्पपूर्वको जगदाकारेण परि-
णामः श्रूयते सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ )। तस्माद्वा एतस्मा-
द्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः ( तै. २।५ )। एष
ह्येवानन्दयाति ( तै. २।७ ) । सोकामयत । बहु स्यां प्रजाये-
येति । स तपोतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं
20 किं च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च
त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च ।
विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ( तै.
२।६ ) इति । अत्र तपःशब्देन प्राचीनजगदाकारपर्यालोचन-

1. B. reads तमः for क्रमः; C. om. ज्ञान.
3. C. reads एव for एवम्.
14. C. E. om. सर्वशक्तेः.

रूपं ज्ञानमभिधीयते । यस्य ज्ञानमयं तपः ( मु. १।१।९ ) इत्यादिश्रुतेः । प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः । तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत्सृजति । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो सुवः ( म. ना. ५।७ ) । 5

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥
( वि. पु. १।५।६४ )

इति श्रुतिस्मृतिभ्यः ।

तदयमर्थः । स्वयमपरिच्छिन्नज्ञानानन्दैकस्वभावोत्यन्तसूक्ष्मतयासत्कल्पः स्वलीलोपकरणचिदचिद्वस्तुशरीरतयाः तन्मय परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरंपरया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सत्त्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोभवत् । तदेवानुप्राविशत् । तदनुप्रविश्य ( तै. २।६ ) इति कारणावस्थायामात्मतयावस्थितः परमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्यात्म्यात्मतयावस्थाय तत्तदभवदित्युच्यते । एवं परमात्मचिदचित्सं- 10 15

‘ C. om. आदि before श्रुतेः.
9. C. reads श्रुतिस्मृतिभ्याम् for श्रुतिस्मृतिभ्यः.
10. C. om. एक after आनन्द.
11. C. reads कल्प for कल्पः.
13. B. om. तत् after तत्.
14. C. om. विचित्र.
17. C. reads विस्तीर्यमाण for विक्रियमाण.
18. B. om. तत् after तत्.

घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदचिदंशगता: सर्व एवापुरुषार्थास्तथाभूताचिदंशगताश्च सर्वविकारा: परमात्मनि कार्यत्वं तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वं च । परमात्मा त्वनयो: स्वशरीरभूतयोर्नियन्तृतयात्मभूतस्तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते । अपरिच्छिन्नज्ञानानन्दमय: सर्वदैकरूप एव जगत्परिवर्तनलीलयावतिष्ठते । तदेतदाह सत्यं चानृतं च सत्यमभवत् ( तै. २।६ ) इति । विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवन्निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकरूपमेवाभवदित्यर्थ: । सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि सृष्ट्यादयश्च लीलेति भगवद्द्वैपायनपराशरादिभिरुक्तम्

अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम् ।
क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम् ॥ ( म. भार. )
क्रीडतो बालकस्येव चेष्टां तस्य निशामय । ( वि. पु. १।२।१८ )
बाल: क्रीडनकैरिव (वायुपु. उत्त. ३६।६९) इत्यादिभि: ।
वक्ष्यति च लोकवत्तु लीलाकैवल्यम् (ब्र. सू. २।१।३३) इति ।

अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्ध: । ( श्वे. ४।९ )

---

1. B. reads जगदाकारेण for जगदाकार; E. om. अचित् before अंश.
2. B. reads पुरुषार्था: for अपुरुषार्था:; B. reads तथाभूता: for तथाभूत; E. reads सर्वे for सर्वं.
3. C. om. तयो:; B. reads चिदचितो: for तयो:; C. om. च aft आत्मत्वम्.
9. E. reads ज्ञानानन्दैक for ज्ञानानन्दमेक; B. reads स्व before रूपम्.
12. B. reads विशेषान्त for विशेषान्तम्.
15. B. om. इव; C. reads एव for इव.

इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेपि तत्प्रकारभूताचिदंशगताः सर्वे विकारास्तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोस्तदानीं तथानिर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः । तदात्मानं स्वयमकुरुत (तै. २।७) इत्येवमादिभिरैकार्थ्यात् । 5
तथा च मानवं वचः

सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ (म. स्मृ. १।८)

इति । अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः । अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥ २७ ॥ 10

## योनिश्च हि गीयते ॥ २८ ॥

इतश्च जगतो निमित्तमुपादानं च ब्रह्म । यस्माद्योनित्वेनाप्यभिधीयते कर्तारमीशं पुरुषं ब्रह्मयोनिम् (मु. ३।१।३) इति । यद्भूतयोनिं परिपश्यन्ति धीराः (मु. १।१।६) इति च । योनिशब्दश्चोपादानवचन इति यथोर्णनाभिः सृजते गृह्णते च (मु. १।१।७) इति वाक्यशेपादवगम्यते ॥ २८ ॥ 15
प्रकृत्यधिकरणं समाप्तम ॥ (७)

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

एतेन पादचतुष्टयोक्तन्यायकलापेन सर्ववेदान्तेपु जगत्कार

---

3. C. reads शरीरयोः for शरीरभूतयोः.

6. E. reads वचनम् for वचः.

9. C. reads निर्विकारत्वनिर्दोषत्व for निर्दोषत्वनिर्विकारत्व.

13. B. reads अधीयते for अभिधीयते.

15. B. om. च after इति

णप्रतिपादनपराः सर्वे वाक्यविशेषाश्चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपरा व्याख्याताः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ २९ ॥ सर्वव्याख्यानाधिकरणं समाप्तम् ॥ ( ८ )

5 इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थपादः प्रथमाध्यायश्च समाप्तः ॥



1. C. reads प्रतिपादकाः for प्रतिपादनपराः.

# अथ श्रीभाष्ये



## द्वितीयाध्यायस्य प्रथमः पाद आरभ्यते ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरादचेतनात्तत्संसृष्टाद्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धमनन्तज्ञानानन्दैकतानमपरिमितोदारगुणसागरं निखिलजगदेककारणं सर्वान्तरात्मभूतं परं ब्रह्म वेदान्तवेद्यमित्युक्तम् । अनन्तरमस्यार्थस्य संभावनीयसमस्तप्रकारदुर्धर्षणत्वप्रतिपादनाय द्वितीयोऽध्याय आरभ्यते । प्रथमं तावत्कपिलस्मृतिविरोधाद्वेदान्तानामतत्परत्वमाशङ्क्य निराक्रियते ।

कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम् । उक्तं हि विरोधे त्वनपेक्षं स्यात् ( जै. सू. १।३।३ ) इति श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वम् । सत्यम् । औदुम्बरीं स्पृष्ट्वोद्गायतीत्यादिषु स्वतन्त्रार्थनिश्चयसंभवात्तद्विरुद्धा स्मृतिरनादरणीयैव । इह तु वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे स-

5\. E. reads तत् before वियुक्तात्.

8\. C. om. परम्.

10\. C. reads द्वितीये for द्वितीयः; E. reads कापिल for कपिल.

11\. E. reads तत् before निराक्रियते.

15\. A. E. read वेदान्तवेद्यस्य for वेदान्तवेद्य; C. reads पुरुष for ऋषि.

त्ययमर्थ इति निश्चयायोगात्स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम् । एतदुक्तं भवति । प्राचीनभागोदितनिखिलाभ्युदयसाधनभूताग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छता श्रुतिस्मृतीतिहासपुराणेष्वृषिं प्रसूतं कपिलम् (श्वे. ५।२) इत्यादिवाक्यैराप्तत्वेन संकीर्तितेन परमर्षिणा कपिलेन परमनिःश्रेयसतत्साधनावबोधित्वेनोपनिबद्धस्मृत्युपबृंहणेन विनाल्पश्रुतैर्मन्दमतिभिर्वेदान्तार्थनिश्चयायोगाद्यथाश्रुतार्थग्रहणे चाप्तप्रणीतायाः सांख्यस्मृतेः सकलाया एवानवकाशत्वप्रसङ्गाच्च स्मृतिप्रसिद्ध एवार्थो वेदान्तवेद्य इति बलादभ्युपगमनीयमिति। न च वाच्यं मन्वादिस्मृतीनां ब्रह्मैककारणत्ववादिनीनामेवं सत्यनवकाशत्वदोषप्रसङ्ग इति । धर्मप्रतिपादनद्वारेण प्राचीनभागोपबृंहण एव सावकाशत्वात् । अस्यास्तु कृत्स्नायास्तत्त्वप्रतिपादनपरत्वात्तथानभ्युपगमे निरवकाशत्वमेव स्यात् । तदिदमाशङ्कते स्मृत्यनवकाशदोषप्रसङ्ग इति चेदिति ।

अत्रोत्तरं नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति । अन्या हि मन्वादिस्मृतयो ब्रह्मैककारणतां वदन्ति । यथाह मनुरासीदिदं तमोभूतम् (मनु. १।५) इत्यारभ्य

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ (मनु. १।६)
सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ (म. स्मृ. १।८)

---

2. B. reads साधनीभूत for साधनभूत.
11. B. C. om. दोष.
13. E. reads अनवकाशत्वम् for निरवकाशत्वम्.
15. B. C. read तत्र for अत्र.
19. E. reads वृत्ताजाः for वृत्तौजाः.
21. A. B. read अथ for अप before असृजत्.

इति । भगवद्गीतासु च

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । (गी. ७।६)

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । (गी. १०।८)

इति च । तथाच महाभारते

कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् । 5

प्रलये च कमभ्येति तन्मे ब्रूहि पितामह ॥ (भा.शा.१८२।१)

इति पृष्ट आह

नारायणो जगन्मूर्तिरनन्तात्मा सनातनः ।

इति । तथा

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । 10

(भा. शा. ३३४।३१)

इति ।

अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।

(भा. शा. ३३९।३१)

इति च । आह च भगवान्पराशरः 15

विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।

स्थितिसंयमकर्तासौ जगतोस्य जगच्च सः॥ (वि.पु.१।१।३५)

इति । आह चापस्तम्बः ।

पूः प्राणिनः सर्वगुहाशयस्य न हन्यमानस्य विकल्मषस्य ।

(आ. ध. सू. १।२२।४) 20

इत्यारभ्य

12. C. om. इति.

15. A. B. om. च after इति.

19. A. B. C. read सर्वे एव गुहाशयस्य for सर्वगुहाशयस्य; C. reads अहन्यमानस्य for न हन्यमानस्य.

तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः।
( आ. ध. सू. १।२३।२ )

इति । यदि कपिलस्मृत्या वेदान्तवाक्यार्थव्यवस्था स्यात्तदै-
तासां सर्वासां स्मृतीनामनवकाशत्वरूपो महान्दोषः प्रसज्येत ।

5 अयमर्थः । यद्यपि वेदान्तवाक्यानामतिक्रान्तप्रत्यक्षादिसकले-
तरप्रमाणसंभावनाभूमिभूतार्थप्रतिपादनपरत्वात्तदर्थवैशद्यायाल्प-
श्रुतानां प्रतिपत्तृणां तदुपबृंहणमपेक्षितं तथापि तदर्थानुसारि-
णीनामाप्ततमप्रणीतानां बह्वीनां स्मृतीनां तदुपबृंहणाय प्रवृत्ता-
नामनवकाशता मा प्रसाङ्क्षीदिति श्रुतिविरुद्धार्था कपिलस्मृति-
10 रुपेक्षणीया । उपबृंहणं च श्रुतिप्रतिपन्नार्थविशदीकरणम् । तच्च
विरुद्धार्थया स्मृत्या न शक्यते कर्तुम् । न चैतासां स्मृतीनां
प्राचीनभागोदितधर्मांशविशदीकरणेन सावकाशत्वम् । परब्रह्म-
भूतपरमपुरुषाराधनत्वेन धर्मान्विदधतीनामेतासामाराध्यभूतप-
रमपुरुषप्रतिपादनाभावे सति तदाराधनभूतधर्मप्रतिपादनासं-
15 भवात् । तथा हि परमपुरुषाराधनरूपता सर्वेषां कर्मणां स्मर्यते

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ (गी. १८।४६)

---

3. C. om. वेदान्तवाक्य.

4. B. om. सर्वासाम्; C. reads अयम् before दोषः; E. reads स्यात् for प्रसज्येत.

9. C. reads श्रुतिर्विरुद्धार्था for श्रुतिविरुद्धार्था; A. B. read कापिल for कपिल.

13. B. om. परम before पुरुष; C. reads पुरुषार्थत्वेन for पुरुषाराधनत्वेन.

15. B. reads तथा, C. तथा, for तथा.

ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।
ब्रह्मलोकमवाप्नोति न चेहावर्तते पुनः ॥ ( द. स्मृ. )
यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान् ।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ (वि.पु. ५।३०।१६)
इति । न चैहिकामुष्मिकसांसारिकफलसाधनकर्मप्रतिपादनेनैतासां सावकाशत्वम् । यतस्तेषामपि कर्मणां परमपुरुषाराधनत्वमेव स्वरूपम् । यथोक्तम्

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥
( गी. ९।२३-२४ )

इति । तथा

यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्॥ (वि. पु. ५।२०।९७)
इति च । यदुक्तमृषिं प्रसूतं कपिलम् ( श्वे. ५।२ ) इति कपिलस्याप्ततया संकीर्तनात्तत्स्मृत्यनुसारेण वेदार्थव्यवस्थापनं न्याय्यमिति तदसत् । बृहस्पतेः श्रुतिस्मृतिषु सर्वेषामतिशयितज्ञानानां निदर्शनत्वेन संकीर्तनात्तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेरिति ॥ १ ॥

अथ स्यात्कपिलस्य स्वयोगमहिम्ना वस्तुयाथात्म्योपलब्धेस्त-

1. B. reads ध्यायन् for ध्यायेत्.
2. C. reads आजायते for आवर्तते.
16. B. om. च after इति.
17. E. reads वेदान्तार्थ for वेदार्थ.

त्स्मृत्यनुसारेण वेदार्थो व्यवस्थापयितव्य इति। अत उत्तरं पठति।

## इतरेषां चानुपलब्धेः ॥ २ ॥

चशब्दस्तुशब्दार्थश्चोदिताशङ्कानिवृत्त्यर्थः। इतरेषां मन्वा-
5 दीनां बहूनां स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यानां नि-
खिलजगद्भेषजभूतस्ववाक्यार्थतया यद्वै किं च मनुरवदत्तद्भेष-
जम् (तै. सं. २।२।१०।२) इत्यादिश्रुतिप्रसिद्धानां कपिल-
दृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्ति-
मूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्यत इति सि-
10 द्धम् ॥ २ ॥ स्मृत्यधिकरणं समाप्तम् ॥ (१)

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

एतेन कापिलस्मृतिनिराकरणेन योगस्मृतिरपि प्रत्युक्ता।
का पुनरत्राधिका शङ्का यन्निराकरणाय न्यायातिदेशः।
योगस्मृतावीश्वराभ्युपगमान्मोक्षसाधनतया वेदान्तविहितयोगस्य
15 चाभिधानाद्वक्तुर्हिरण्यगर्भस्य सर्ववेदान्तप्रवर्तनाधिकृतत्वाच्च
तत्स्मृत्या वेदान्तोपबृंहणं न्याय्यमिति। परिहारस्त्वत्रह्मात्म-
कप्रधानकारणवादान्निमित्तकारणमात्रेश्वराभ्युपगमाद्ध्यानात्मक-

1. E. reads वेदान्तार्थः for वेदार्थः.
6. B. reads भेषजभूतस्य for भेषजभूतस्व; E. reads किंचन for किं च.
9. B. reads वेदार्थः for वेदान्तार्थः; B. reads शक्यः for शक्यते
12. A. B. read कपिल for कापिल.
14. E. reads अपि after योगस्मृतौ; C. reads तत्त्व after ईश्वरः A. B. C. read वेद before वेदान्त.
16. C. reads परीहारः for परिहारः.
17. B. C. om. कारण after निमित्त.

स्य योगस्य ध्येयैकनिरूपणीयस्य ध्येयभूतयोरात्मेश्वरयोर्ब्रह्मात्म-
कत्वजगदुपादानतादिसर्वकल्याणगुणात्मकत्वविरहेणावैदिकत्वा-
द्वक्तुर्हिरण्यगर्भस्यापि क्षेत्रज्ञभूतस्य कदाचिद्रजस्तमोभिभवसं-
भवाच्च योगस्मृतिरपि तत्प्रणीतरजस्तमोमूलपुराणवद्भ्रान्तिमूलेति
न तया वेदान्तोपबृंहणं न्याय्यमिति ॥ ३ ॥ योगप्रत्युक्त्यधिकरणं 5
समाप्तम् ॥ ( २ )

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते ।
यत्सांख्यस्मृतिनिराकरणेन जगतो ब्रह्मकार्यत्वमुक्तं तन्नोपपद्यते ।
अस्य प्रत्यक्षादिभिरचेतनत्वेनाशुद्धत्वेनानीश्वरत्वेन दुःखात्मकत्वेन 10
चोपलभ्यमानस्य चिदचिदात्मकस्य जगतो भवदभ्युपेतात्स-
र्वज्ञात्सर्वेश्वराद्धेयप्रत्यनीकादानन्दैकतानाद्ब्रह्मणो विलक्षणत्वात् ।
न केवलं प्रत्यक्षादिभिरेव जगतो वैलक्षण्यमुपलभ्यते । शब्दाच्च
तथात्वं विलक्षणत्वमुपलभ्यते । विज्ञानं चाविज्ञानं च ( तै.
२।६।१ )। एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः 15
प्राणेर्पिताः ( कौ. ३।८ )।

समाने वृक्षे पुरुषो निमग्नोनीशया शोचति मुह्यमानः ।
( श्वे. ४।७ )

अनीशश्चात्मा बध्यते भोक्तृभावात् ( श्वे. १।८ ) इत्यादिभिः

2. E. reads विरहात् for विरहेण.
3. B. om. कदाचित्.
5. B. C. om. अन्त after वेद.
11. B. C. om. च before उपलभ्यमानस्य; E. reads च before जगतः.
14. B. C. om. तथात्वम्; C. om. उपलभ्यते.
15. B. om. प्रज्ञामात्राः प्राणेर्पिताः.

कार्यस्य हि जगतोचेतनत्वदुःखित्वादयो निर्दिश्यन्ते । यद्धि यत्कार्यं तत्तस्मादविलक्षणं यथा मृत्सुवर्णादिकार्यं घटरुचकादि । अतो ब्रह्मविलक्षणस्यास्य जगतस्तत्कार्यत्वं न संभवतीति सांख्यस्मृत्यनुरोधेन कार्यसलक्षणं प्रधानमेव कारणं
5 भवितुमर्हति ।

अवश्यं च शास्त्रस्यानन्यापेक्षस्यातीन्द्रियार्थगोचरस्यापि तर्कोनुसरणीयः । यतः सर्वेषां प्रमाणानां क्वचित्क्वचिद्विषये तर्कानुगृहीतानामेवार्थनिश्चयहेतुत्वम् । तर्को हि नामार्थस्वभावविषयेण सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रामाण्यं व्य-
10 वस्थापयत्तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम् । तदपेक्षा च सर्वेषां प्रमाणानां समाना । शास्त्रस्य तु विशेषेणाकाङ्क्षासंनिधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा । उक्तं च मनुना

यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः । (म.स्मृ. १२।१०६)
15 इति । तदेव हि तर्कानुगृहीतशास्त्रार्थप्रतिष्ठापनं श्रुत्या च मन्तव्य इत्युच्यते ।

अथोच्येत श्रुत्या जगतो ब्रह्मैककारणत्वे निश्चिते सति तत्कार्यस्यापि जगतश्चैतन्यानुवृत्तिरभ्युपगम्यते । यथा चेतनस्य सुषुप्तिमूर्छादिषु चैतन्यानुपलम्भस्तथा घटादिष्वपि सदेव चै-
20 तन्यमनुद्भूतम् । अत एव चेतनाचेतनविभाग इति ।

नैतदुपपद्यते । यतो नित्यानुपलब्धिरसद्भावमेव साधयति ।

9. E. reads वा, B. समानविषयेण, after स्वभावविषयेण; C. reads सामान्य for सामग्री.

15. E. reads तदेवम् for तदेव.

17. B. C. E. read च after श्रुत्या.

अत एव चैतन्यशक्तियोगोपि तेषु निरस्त: । यस्य हि कचि-
त्कदाचिदपि यत्कार्यानुपलब्धिस्तस्य हि तत्कार्यशक्तिं ब्रुवाणो
वन्ध्यासुतसमितिषु तज्जननीनां प्रजननशक्तिं ब्रूताम् । किं च
वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चये सति घटादीनां
चैतन्यशक्तेश्चैतन्यस्य चानुद्भूतस्य सद्भावनिश्चयस्तन्निश्चये सति 5
वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चय इतीतरेतराश्रय-
त्वम् । विलक्षणयोर्हि कार्यकारणभाव: प्रतिपादयितुमेव न
शक्यते ।

किं पुन: प्रकृतिविकारयो: सालक्षण्यमभिप्रेतं यदभावाज्ज-
गतो ब्रह्मोपादानत्वप्रतिपादनासंभवं ब्रूषे। न तावत्सर्वधर्मसारू- 10
प्यम्। कार्यकारणभावानुपपत्ते: । न च मृत्पिण्डकार्येषु घटश-
रावादिषु पिण्डत्वाद्यनुवृत्तिर्दृश्यते । अथ येन केनचिद्धर्मेण
सारूप्यम्। तज्जगद्ब्रह्मणोरपि सत्तादिलक्षणं संभवति । तदु-
च्यते। येन स्वभावेन कारणभूतं वस्तु वस्त्वन्तराद्व्यावृत्तं तस्य
स्वभावस्य तत्कार्येप्यनुवृत्ति: कार्यस्य कारणसालक्षण्यम् । येन 15
ह्याकारेण मृदादिभ्यो हिरण्यं व्यावर्तते तदाकारानुवृत्तिस्तत्का-
र्येषु कुण्डलादिषु दृश्यते । ब्रह्म च हेयप्रत्यनीकज्ञानानन्दैश्व-
र्यस्वभावम् । जगच्च तत्प्रत्यनीकस्वभावमिति न तदुपादानम् ।
ननु च वैलक्षण्येपि कार्यकारणभावो दृश्यते । यथा चेतना-

1. C. reads न कश्चित्कदाचिदपि यत्कार्योपलब्धि: for कचित्कदाचि-
दपि यत्कार्यानुपलब्धि:.

5. A. reads चैतन्यशक्ति: for चैतन्यशक्ते:.

10. A. reads उपादानता for उपादानत्व; B. reads उपादानतासंभ-
वम् for उपादानत्वप्रतिपादनासंभवम्.

11. E. reads हि for च after न.

16. B. C. read व्यावर्त्यते for व्यावर्तते.

त्पुरुषादचेतनानि केशनखदन्तलोमानि जायन्ते । यथा चाचेतनाद्गोमयाच्चेतनो वृश्चिको जायते । चेतनाच्चोर्णनाभेरचेतनस्तन्तुः । नैतदेवम् । यतस्तत्राप्यचेतनांश एव कार्यकारणभावः ॥४॥

अथ स्यादचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु
5 श्राव्यते । तं पृथिव्यब्रवीत् (तै. सं. ५।६।२)। आपो वा अकामयन्त (तै. ब्रा. ३।१।५)। ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः (बृ. ६।१।७) इति । नदीसमुद्रपर्वतादीनामपि चैतन्यं पौराणिका आतिष्ठन्ते । अतो न वैलक्षण्यमिति । अत उत्तरं पठति ।

10 **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥**

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः । पृथिव्याद्यभिमानिन्यो देवतास्तं पृथिव्यब्रवीत् (तै. सं. ५।६।२) इत्यादिषु पृथिव्यादिशब्दैर्व्यपदिश्यन्ते । कुतः । विशेषानुगतिभ्याम् । विशेषो विशेषणम् । देवताशब्देन विशेष्य पृथिव्यादयोऽभिधीयन्ते ।
15 हन्ताहमिमास्तिस्रो देवताः (छा. ६।३।२) इति तेजोबन्नानि देवताशब्देन विशेष्यन्ते । सर्वा ह वै देवता अहंश्रेयसे विवदमानाः (कौ. २।१४)। ते देवाः प्राणे निःश्रेयसं विदित्वा (कौ. २।१४) इति च । अनुगतिरनुप्रवेशः । अग्निर्वाग्भूत्वा मुखं प्राविशत् । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् । वायुः
20 प्राणो भूत्वा नासिके प्राविशत् (ऐ. आ. २।४।२।४) इत्यादिना वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशः श्रूयते । अतो जगतो-

---

1. A. B. read दन्तनख for नखदन्त; A. B. read वा for च after यथा.

5. E. reads श्रूयते for श्राव्यते.

7. A. B. read ब्रह्माणमाजग्मुः for ब्रह्म जग्मुः.

19. B. reads च after चक्षुर्भूत्वा.

चेतनत्वेन विलक्षणत्वाद्ब्रह्मकार्यत्वानुपपत्तेस्तर्कानुगृहीतस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यत इति ॥ ५ ॥

एवं प्राप्तेभिधीयते ।

## दृश्यते तु ॥ ६ ॥

तुशब्दात्पक्षो विपरिवर्तते । यदुक्तं जगतो ब्रह्मविलक्षणत्वेन  5
ब्रह्मोपादानत्वं न संभवतीति तदयुक्तम् । विलक्षणयोरपि
कार्यकारणभावदर्शनात् । दृश्यते हि माक्षिकादेर्विलक्षणस्य
कृम्यादेस्तस्मादुत्पत्तिः । ननूक्तमचेतनांश एव कार्यकारणभावात्तत्र सालक्षण्यम् । सत्यमुक्तम् । न तावता कार्यकारणयो-
र्भवदभिमतसालक्षण्यसिद्धिः । यथाकथंचित्सालक्षण्ये सर्वस्य  10
सर्वसालक्षण्येन सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयाद्वस्तुनो वस्त्वन्तराद्व्यावृत्तिहेतुभूतस्याकारस्यानुवृत्तिः सालक्षण्यं भवताभ्युपेतम्।
स तु नियमो माक्षिकादिभ्यः कृम्याद्युत्पत्तौ न दृश्यत इति
ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्यत्वं नानुपपन्नम् । न हि मृ-
द्धिरण्यघटमुकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणा-  15
कारानुवृत्तिर्माक्षिकगोमयकृमिवृश्चिकादिषु दृश्यते ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

यदि कार्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणं तर्हि कार्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन्ब्रह्मणि कार्यं जगन्न
विद्यत इत्यसत एव जगत उत्पत्तिः प्रसज्यत इति चेत् । नैत-  20
देवम् । कार्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रमेव हि
पूर्वसूत्रेभिहितम् । न तु कारणात्कार्यस्य द्रव्यान्तरत्वम् । का-

11. C. reads प्रसङ्गात् for प्रसङ्गभयात्.

21. B. reads प्रतिषिद्ध for प्रतिषेध; B. om. हि after एव.

22. C. reads अभिप्रेतम् for अभिहितम्.

रणभूतं ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परिणमत इत्येतत्तु न त्यक्तम् । कृमिमाक्षिकयोरपि हि सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव ॥ ७ ॥

अत्र चोदयति ।

5 **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

अपीताविल्यपीतिपूर्वकसृष्ट्यादिप्रदर्शनार्थम् । सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) । आत्मा वा इदमेक एवाग्र आसीत् ( ऐ. १।१। ) इत्यादिष्वप्ययावस्थोपदेशपूर्वकत्वदर्शनात्सृष्ट्यादेः । यदि कार्यकारणयोर्द्रव्यैक्यमभ्युपेतं तदा कार्यस्य 10 जगतो ब्रह्मण्यप्ययसृष्ट्यादिषु सत्सु ब्रह्मण एव तत्तदवस्थान्वय इति कार्यगताः सर्व एवापुरुपार्था ब्रह्मणि प्रसज्येरन्सुवर्णे इव कुण्डलगता विशेपाः । ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात् । यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) । अपहतपाप्मा विजरो विमृत्युः ( छा. ८।१।५ ) ।

15 न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । ( श्वे. ६।८ )

तयोरन्यः पिप्पलं स्वाद्वत्ति ( श्वे. ४।६, मु. ३।१।१ ) । अनीशश्चात्मा बध्यते भोक्तृभावात् ( श्वे. १।८ ) । अनीशया शो-

2. E. reads परि before त्यक्तम्; A. B. om. च after सति.

4. E. reads तत्र for अत्र.

6. C. reads सृष्टयादेः for सृष्टयादि.

8. B. reads पूर्वत्व for पूर्वकत्व; C. om. त्व after पूर्वक.

11. C. reads कार्यगतापुरुपार्थाः सर्व एव for कार्यगताः सर्व एवापुरुपार्थाः; B. reads पुरुपार्थाः for अपुरुपार्थाः.

चति मुह्यमानः (श्वे. ४।७, मु. ३।१।२) इत्येकस्मिन्नेव व-
स्तुन्येषां परस्परविरुद्धानां प्रसक्तेः।

अथोच्येत चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्य-
कारणभावाच्छरीरभूतचिदचिद्वस्तुगतत्वाच्च दोषाणां न शरी-
रिणि ब्रह्मणि कार्यावस्थे कारणावस्थे च प्रसङ्ग इति तदयु- 5
क्तम्। जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवासंभवात्। संभवे च
ब्रह्मणि शरीरसंबन्धनिबन्धनदोषाणामनिवार्यत्वात्। न हि
चिदचिद्वस्तुनोर्ब्रह्मणः शरीरत्वं संभवति। शरीरं हि नाम कर्म-
फलरूपसुखदुःखोपभोगसाधनभूतेन्द्रियाश्रयः पञ्चवृत्तिप्राणा-
धीनधारणः पृथिव्यादिभूतसंघातविशेषः। तथाविधस्यैव लोक- 10
वेदयोः शरीरत्वप्रसिद्धेः। परमात्मनश्चापहतपाप्मा विजरः (छा.
८।१।५)। अनश्नन्नन्योभिचाकशीति (श्वे. ४।६, मु. ३।१।१)।

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
(श्वे. ३।१९)

अप्राणो ह्यमनाः (मु. २।१।२) इत्यादिभिः कर्मतत्फलभो- 15
गयोरभावादिन्द्रियाधीनभोगत्वाभावात्प्राणवत्त्वाभावाच्च न तं
प्रति चेतनाचेतनयोः शरीरत्वम्। न चाचेतनव्यष्टिरूपतृणका-
ष्ठादीनां समष्टिरूपस्य भूतसूक्ष्मस्य चेन्द्रियाश्रयत्वादि संभवति।
भूतसूक्ष्मस्य पृथिव्यादिसंघातत्वं च न विद्यते। चेतनस्य तु
ज्ञानैकाकारस्य सर्वमेतन्न संभवतीति नतरां शरीरत्वसंभवः। 20

2. E. reads परस्परम् for परस्पर.
3. A. B. om. क after शरीर and om. परस्य.
4. C. reads च after कार्यकारणभावात्.
5. C. om. ब्रह्मणि.
6. A. B. read च for एव.
16. B. reads भोक्तृत्व for भोगत्व.
17. A. B. read वा for च after न.
20. B. om. सम् before भवति; A. B. read नितरां शरीरत्वासं for नतरां शरीरत्वसंभवः.

न च भोगायतनत्वं शरीरत्वमिति शरीरत्वसंभवः । भोगायतनेषु वेश्मादिषु शरीरत्वाप्रसिद्धेः । यत्र वर्तमानस्यैव सुखदुःखोपभोगस्तदेव भोगायतनमिति चेन्न । परकायप्रवेशजन्मसुखदुःखोपभोगायतनस्य परकायस्य प्रविष्टशरीरत्वाप्रसिद्धेः । ईश्वरस्य तु स्वतःसिद्धनित्यनिरतिशयानन्दस्य भोगं प्रति चिदचितोरायतनत्वनियमो न संभवति । एतेन भोगसाधनमात्रस्य शरीरत्वं प्रत्युक्तम् ।

अथ मतं यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत्तत्तस्य शरीरमिति सर्वस्येश्वरेच्छाधीनस्वरूपस्थितिप्रवृत्तित्वेनेश्वरशरीरत्वं संभवतीति तदपि न साधीयः । शरीरतया प्रसिद्धेषु तत्तच्चेतनेच्छायत्तस्वरूपत्वाभावात् । रुग्णशरीरस्य तदिच्छाधीनप्रवृत्तित्वाभावात् । मृतशरीरस्य तदायत्तप्रवृत्तित्वाभावाच्च । सालभञ्जिकादिषु चेतनेच्छाधीनस्वरूपस्थितिप्रवृत्तिषु तच्छरीरत्वाप्रसिद्धेश्च । चेतनस्य नित्यस्येश्वरेच्छायत्तस्वरूपत्वाभावाच्च न तच्छरीरत्वसंभवः । न च यद्यदेकनियाम्यं यदेकधार्यं यदेकशेषभूतं तत्तस्य शरीरमिति वाच्यम् । क्रियादिषु व्यभिचारात् । अशरीरं शरीरेषु ( का. २।२२ ) । अपाणिपादो जवनो ग्रहीता ( श्वे. ३।१९ ) इत्यादिभिश्चेश्वरस्य शरीराभावः प्रतिपाद्यते । अतो जगद्ब्रह्मणोः शरीरशरीरिभावस्यासंभवात्तत्संभवे च ब्र-

3. B. reads हि after तदेव; C. reads जन्य for जन्म.
9. A. om. ईश्वर before इच्छाधीन.
12. A. B. read स्थिति for प्रवृत्ति.
13. B om. इच्छा after चेतन; A. B. om. स्थिति after स्वरूप.
15. B. om. यत् before यदेक; C. reads यस्यैव शेषभूतम् for यदेकशेषभूतम्.
17–18 C. om. अशरीरं......प्रतिपाद्यते ।
18. A. B. read शरीरभावः प्रतिषिध्यते for शरीराभावः प्रतिपाद्यते.
19. B. reads जगतो ब्रह्मणः for जगद्ब्रह्मणोः; B. C. om. तत् before संभवे च.

ह्मणि दोषप्रसङ्गाद्ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्य-
मिति ॥ ८ ॥

अत्रोत्तरम्।

न तु दृष्टान्तभावात् ॥ ९ ॥

नैवमसामञ्जस्यम्। एकस्यैवावस्थाद्वयान्वयेपि गुणदोषव्य- 5
वस्थितेर्दृष्टान्तस्य विद्यमानत्वात्। तुशब्दोत्र हेयसंबन्धगन्धस्या-
संभावनीयतां द्योतयति। एतदुक्तं भवति। चिदचिद्वस्तुशरी-
रतया तदात्मभूतस्य परस्य ब्रह्मणः संकोचविकासात्मककार्यका-
रणभावावस्थाद्वयान्वयेपि न कश्चिद्विरोधः। यतः संकोचवि-
कासौ परब्रह्मशरीरभूतचिदचिद्वस्तुगतौ। शरीरगतास्तु दोषा 10
नात्मनि प्रसज्यन्ते। आत्मगताश्च गुणा न शरीरे। यथा देव-
मनुष्यादीनां सशरीराणां क्षेत्रज्ञानां शरीरगता बालत्वयुवत्व-
स्थविरत्वादयो नात्मनि संबध्यन्ते। आत्मगताश्च ज्ञानसुखादयो
न शरीरे। अथ च देवो जातो मनुष्यो जातस्तथा स एव बालो
युवा स्थविरश्चेति व्यपदेशश्च मुख्यः। भूतसूक्ष्मशरीरस्यैव क्षे- 15
त्रज्ञस्य देवमनुष्यादिभाव इति तदन्तरप्रतिपत्तौ (ब्र. सू.
३।१।१) इति वक्ष्यत इति।

यत्पुनरुक्तं चिदचिदात्मकस्य जगतः स्थूलस्य सूक्ष्मस्य च
परमात्मानं प्रति शरीरभावो नोपपद्यत इति तदनाकलितस-
म्यङ्न्यायानुगृहीतवेदान्तवाक्यगणस्य स्वमतिपरिकल्पितकुत- 20

6. A. om. अत्र after तुशब्दः.
11. C. reads तु for च after आत्मगताः.
12. C. reads शरीरगत for शरीरगताः.
14. B. reads यथा च for अथ च.
17. A. B. read वक्ष्यति for वक्ष्यते.

केविजृम्भितम् । सर्वे एव हि वेदान्ताः स्थूलस्य सूक्ष्मस्य चेतनस्याचेतनस्य समस्तस्य च परमात्मानं प्रति शरीरत्वं श्रावयन्ति । वाजसनेयके तावत्काण्वशाखायां माध्यंदिनशाखायां चान्तर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन्···यस्य पृथिवी शरी-
5 रम् ( बृ. ३।७।३ ) इत्यारभ्य पृथिव्यादि समस्तमचिद्वस्तु यो विज्ञाने तिष्ठन्यस्य विज्ञानं शरीरम् ( बृ. का. ३।७।२२ )। य आत्मनि तिष्ठन्यस्यात्मा शरीरम् ( बृ. मा. ३।७।२२ ) इति चेतनं च पृथक्पृथङ्निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयते । सुबालोपनिषदि च यः पृथिवीमन्तरे संचरन्यस्य पृ-
10 थिवी शरीरम् ( सुबा. ७ ) इत्यारभ्य य आत्मानमन्तरे संचरन्यस्यात्मा शरीरम् इति तद्वदेव चिदचितोः सर्वावस्थयोः परमात्मशरीरत्वमभिधायैष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः ( सुबा. ७ ) इति तस्य सर्वभूतानि प्रत्यात्मत्वमभिधीयते । स्मरन्ति च जगत्सर्वं शरीरं ते
15 ( रा. यु. १२०।२९ ) । यदम्बु वैष्णवः कायः ( वि. पु. २।१२।३७ ) । तत्सर्वं वै हरेस्तनुः ( वि. पु. १।२२।३७ )। तानि सर्वाणि तद्वपुः ( वि. पु. १।२२।८४ ) । सोभिध्याय शरीरात्स्वात् ( मनु. १।८ ) इत्यादि । भूतसूक्ष्मात्स्वाच्छरीरादित्यर्थः । लोके च शरीरशब्दो घटादिशब्दवदेकाकारद्रव्यनि-
20 यतवृत्तिमनासादितः कृमिकीटपतङ्गसर्पनरपशुप्रभृतिष्वत्यन्त-

1. B. reads स्थूल for स्थूलस्य; C. E. read च after सूक्ष्मस्य.
5. A. B. read समस्त for समस्तम्.
9. B. om. च after सुबालोपनिषदि.
10–1. C. om. य आत्मान०...शरीरमिति.
17. A. B. read अभिधाय for अभिध्याय.
18. B. om. स्वात्.
20. E. reads अनासादित for अनासादितः.

विलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते । तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम् ।

त्वदुक्तं च कर्मफलभोगहेतुरित्यादिकं प्रवृत्तिनिमित्तलक्षणं न सर्वप्रयोगानुगुणम् । यथोक्तेष्वीश्वरशरीरतयाभिहितेषु पृथिव्यादिष्वव्याप्तेः । किं चेश्वरस्येच्छाविग्रहेषु मुक्तानां च स एकधा भवति ( छा. ७।२६।२ ) इत्यादिवाक्यावगतेषु विग्रहेषु तल्लक्षणमव्याप्तम् । कर्मफलभोगनिमित्तत्वाभावात्तेषाम् । परमपुरुषेच्छाविग्रहाश्च न पृथिव्यादिभूतसंघातविशेषाः ।

न भूतसंघसंस्थानो देहोऽस्य परमात्मनः । (महाभा.)

इति स्मृतेः । अतो भूतसंघातरूपत्वं च शरीरस्याव्याप्तम् । पञ्चवृत्तिप्राणाधीनधारणत्वं च स्थावरशरीरेष्वव्याप्तम् । स्थावरेषु हि प्राणसद्भावेऽपि तस्य पञ्चधावस्थाय शरीरस्याधारकतयावस्थानं नास्ति । अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेष्विन्द्रियाश्रयत्वं सुखदुःखहेतुत्वं चाव्याप्तम् । अतो यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरमिति शरीरलक्षणमास्थेयम् । रुग्णशरीरादिषु नियमनाद्यदर्शनं विद्यमानाया एव नियमनशक्तेः प्रतिबन्धकृतम् । अग्न्यादेः शक्तिप्रतिबन्धादौष्ण्याद्यदर्शनवत् । मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धम् । क्षणान्तरे च विशीर्यते । पूर्वं शरीरतया परिक्लृप्तसंघा-

---

1. B. reads विलक्षणकार्येषु for विलक्षणाकारेषु.

3. C. reads तदुक्तं च for त्वदुक्तं च; A. B. read उप before भोगहेतुः.

12. B. om. हि; A. B. read धारकत्वेन for आधारकतया.

14. B. E. read च after आश्रयत्वम्.

19. A. B. om. च after मृतशरीरम्.

20. A. B. read पूर्वे for पूर्वम्; A. B. read अवक्लृप्त for परिक्लृप्त.

तैकदेशत्वेन च तत्र शरीरत्वव्यवहारः । अतः सर्वं परमपुरुषेण सर्वात्मना स्वार्थे नियाम्यं धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम् । अशरीरं शरीरेषु (का. २।२२) इत्यादि च कर्मनिमित्तशरीरप्रतिषेधपरम् । यथोक्तसर्वशरीरत्व-
5 श्रवणात् । उपरितनाधिकरणेषु चैतदुपपादयिष्यते । अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् न तु दृष्टान्तभावादिति सूत्रद्वयेनेतरव्यपदेशात् (ब्र. सू. २।१।२१) इत्यधिकरणसिद्धोर्थः स्मारितः ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

10 न केवलं ब्रह्मकारणवादस्य निर्दोषतयैतत्समाश्रयणम् । प्रधानकारणवादस्य दुष्टत्वाच्च तत्परित्यज्यैतदेव समाश्रयणीयम् । प्रधानकारणवादे हि जगत्प्रवृत्तिर्नोपपद्यते । तत्र हि निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसंनिधानेन प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिः । निर्विकारस्य चिन्मात्ररूपस्य
15 प्रकृतिधर्माध्यासहेतुभूतं प्रकृतिसंनिधानं किंरूपमिति विवेचनीयम् । किं प्रकृतेः सद्भाव एवोत तद्गतः कश्चिद्विकारोथ पुरुषगत एव कश्चिद्विकारः । न तावत्पुरुषगतः । अनभ्युपगमात् । नापि प्रकृतेर्विकारः । तस्याध्यासकार्यतयाभ्युपगतस्याध्यासहेतुत्वासंभवात् । सद्भावमात्रस्य संनिधानत्वे मुक्तस्याप्य-

7. B. reads हिताकरणादि after इतरव्यपदेशात्.
12. B. reads उत्पद्यते for उपपद्यते.
14. B. reads निराकारस्य for निर्विकारस्य.
15. B. om. हेतु before भूतम्; B. reads किंस्वरूपम् for किंरूपम्.
16. A. B. read प्रकृति for प्रकृतेः.
18. A. B. read अभ्युपेतस्य for अभ्युपगतस्य.
19. B. om. अपि after मुक्तस्य.

ध्यामप्रसङ्ग इति तत्पक्षे जगत्प्रवृत्तिर्नोपपद्यते । अयमर्थः सांख्यपक्षप्रतिक्षेपसमयेऽभ्युपगमेऽप्यर्थाभावात् ( ब्र.सू.२।२।८ ) इत्यादिना प्रपञ्चयिष्यते ॥ १० ॥

## तर्काप्रतिष्ठानादपि ॥ ११ ॥

तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव स- 5
माश्रयणीयो न प्रधानकारणवादः । शाक्योलूक्याक्षपादक्षपण-
ककपिलपतञ्जलितर्काणामन्योन्यव्याघातात्तर्कस्याप्रतिष्ठितत्वं ग-
म्यते ॥ ११ ॥

## अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥१२॥

इदानीं विद्यमानानां शाक्यादीनां तर्कानुदूष्यान्यथा प्रधा- 10
नकारणवादमतिक्रान्ततदुपदर्शितदूषणत्वेनानुमन्यामह इति चे-
देवमपि पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव देशान्तरकाला-
न्तरेषु त्वदधिकतमतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसंभावनया
तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः । अतोऽतीन्द्रियेऽर्थे शास्त्रमेव
प्रमाणम् । तदुपबृंहणायैव तर्क उपादेयः । तथा चाह 15

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ ( मनु.१२।१०६ )

इति ; वेदाख्यशास्त्राविरोधिनेत्यर्थः । अतो वेदविरोधित्वेन

1. E. reads त्वत्पक्षे for तत्पक्षे.
6. B. reads औलूक्य for उलूक्य.
10. E. reads अत्र after अन्यथा.
12. B. reads तथैतत् for तथैव.
13. C. reads कुतर्क for तर्क before कुशल; A. B. om. पुरुष.
14. B. reads दर्शनात् for दोषात्.

वेदार्थविशदीकरणरूपवेदोपबृंहणतर्कोपादानाय सांख्यस्मृतिर्नादरणीया॥ १२ ॥ विलक्षणत्वाधिकरणं समाप्तम्॥ (३)

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः॥ १३॥

शिष्टाः परिशिष्टाः । न विद्यते वेदपरिग्रहो येषामित्यपरि-
5 ग्रहाः । शिष्टाश्चापरिग्रहाश्च शिष्टापरिग्रहाः । एतेन वेदापरि-
गृहीतसांख्यपक्षक्षपणेन परिशिष्टाश्च वेदापरिगृहीताः कणभक्षा-
क्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः । परमाणुकारण-
वादेमीषां सर्वेषां संवादात्कारणवस्तुविषयस्य तर्कस्याप्रतिष्ठितत्वं
न शक्यते वक्तुमित्यधिकाशङ्का । तावन्मात्रसंवादेपि तर्कमूल-
10 त्वाविशेषात्परमाणुस्वरूपेपि शून्यात्मकत्वाशून्यात्मकत्वज्ञानात्म-
कत्वार्थात्मकत्वक्षणिकत्वनित्यत्वैकान्तत्वानेकान्तत्वसत्यासत्यात्म-
कत्वादिविसंवाददर्शनाच्चाप्रतिष्ठितत्वमेवेति परिहारः ॥ १३ ॥
शिष्टापरिग्रहाधिकरणं समाप्तम्॥ (४)

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्॥ १४॥

15 पुनरपि सांख्यः प्रत्यवतिष्ठते । यदुक्तं स्थूलसूक्ष्मचिदचिद्व-
स्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वाज्जीवब्रह्मणोः स्व-
भावविभाग उपपद्यत इति स तु विभागो न संभवति ।
ब्रह्मणः सशरीरत्वे तस्य भोक्तृत्वापत्तेः । सशरीरत्वे जीवस्येवे-
श्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्जनीयत्वात्।
20 ननु च संभोगप्राप्तिरिति चेन्न वैशेष्यात् (ब्र. सू. १।२।८)
इत्यत्रेश्वरस्य भोगप्रसङ्गपरिहार उक्तः। नैवम्। तत्र ह्युपास्य-
तया हृदयायतने संनिहितस्य शरीरान्तर्वर्तित्वमात्रेण भोगप्र-

---

1. E. reads अनादरणीया for नादरणीया.

10. A. B. om. अशून्यात्मकत्व.

16. B. reads शरीरकस्य for शरीरस्य.

सङ्गो न विद्यत इत्युक्तम् । इह तु जीववद्ब्रह्मणोपि सशरीरत्वे तद्वदेव सुखदुःखयोर्भोक्तृत्वप्रसङ्गो दुर्वार इत्युच्यते । दृश्यते हि सशरीराणां जीवानां शरीरगतबालत्वयुवत्वस्थविरत्वादिविकारासंभवेपि शरीरधातुसाम्यवैषम्यनिमित्तसुखदुःखयोगः । श्रुतिश्च न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ( छा. ८।१२।१ ) इति । अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागाभावात्केवलब्रह्मकारणवादेपि मृत्सुवर्णादिवज्जगद्गतापुरुषार्थादिसर्वविकाराश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत् ।

अत्रोत्तरं स्याल्लोकवदिति । स्यादेव विभागो जीवेश्वरस्वभावयोः । न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम् । अपि तु पुण्यपापरूपकर्मकृतम् । न ह वै सशरीरस्य ( छा. ८।१२।१ ) इत्यपि कर्मारब्धदेहविषयम् । स एकधा भवति त्रिधा भवति ( छा. ७।२६।२ )। स यदि पितृलोककामो भवति ( छा. ८।२।१ )। स तत्र पर्येति जक्षन्क्रीडन्रममाणः ( छा. ८।१२।३ ) इति कर्मसंबन्धविनिर्मुक्तस्याविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात् । अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेपि कर्मसंबन्धगन्धो नास्तीति नतरामपुरुषार्थगन्धप्रसङ्गः । लोकवत् । यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनां च राजा-

1. B. reads अपि after सशरीरत्वे.

3. A. C. E. om. युवत्व.

7. B. om. स्वभाव; A. B. read असंभवात् for अभावात्.

8. A. B. om. अपि after कारणवादे.

10. B. om. सम् before बन्ध.

18. B. reads सशरीरत्वेपि for शरीरत्वेपि.

19. A. B. read न नितराम् for नतराम्.

नुग्रहनिग्रहकृतसुखदुःखयोगेपि न सशरीरत्वमात्रेण शासके राजन्यपि शासनानुवृत्त्यतिवृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः । यथाह द्रमिडभाष्यकारः । यथा लोके राजा प्रचुरदन्दशूके घोरेनर्थसंकटेपि प्रदेशे वर्तमानोपि व्यजनाद्यवधूतदेहो 5 दोषैर्न स्पृश्यतेभिप्रेतांश्च लोकान्पुनरपि पालयिष्यति भोगांश्च गन्धादीन्विश्वजनोपभोग्यान्धारयति तथासौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते रक्षति च लोकान्ब्रह्मलोकादीन्भोगांश्च विश्वजनोपभोग्यान्धारयतीति । मृत्सुवर्णादिवद्ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते । अविकारत्वनिर्दो- 10 षतादिश्रुतेः ।

यत्तु परैर्ब्रह्मकारणवादे भोक्तृभोग्यविभागाभावमाशङ्क्य समुद्रफेनतरङ्गदृष्टान्तेन विभागप्रतिपादनपरं सूत्रं व्याख्यातं तदयुक्तम् । अन्तर्भावितशक्त्यविद्योपाधिकाद्ब्रह्मणः सृष्टिमभ्युपगच्छतामेवमाक्षेपपरिहारयोरसंगतत्वात् । कारणान्तर्गतशक्त्य- 15 विद्योपाध्युपहितस्य भोक्तृत्वादुपाधेश्च भोग्यत्वाद्विलक्षणयोस्तयोः परस्परभावापत्तिर्हि न संभवति । स्वरूपपरिणामस्तु तैरपि नाभ्युपेयते । न कर्माविभागादिति चेन्नानादित्वात् (ब्र. सू. २।१।३५) इति क्षेत्रज्ञानां तद्गतकर्मणां चानादित्वप्रतिपादनात् । स्वरूपपरिणामाभ्युपगमेपि भोक्तृभोग्याविभागशङ्का

1. E. reads सशरीरित्व for सशरीरत्व.
3. B. C. read द्रविड for द्रमिड.
4. B. om. अपि after संकटे; C. reads अपि after प्रदेशे; A. B. om. अपि after वर्तमानः.
5. A. B. C. read परिपिपालयिष्यति for पुनरपि पालयिष्यति.
6. A. B. read धारयते for धारयति.
7. E. reads लोकादीन् for लोकान्.
11. C. om. समुद्र.
19. C. reads अविभागाशङ्का for अविभागशङ्का.

कस्यांचिदपि न जायते । मृत्सुवर्णादिपरिणामरूपघटशराव-
कटकमुकुटादिविभागवद्भोक्तृभोग्यविभागोपपत्तेः । स्वरूपपरि-
णामेपि ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्य-
मेव ॥ १४ ॥ भोक्त्रापत्त्यधिकरणं समाप्तम् ॥ (५)

**तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥** 5

असदिति चेन्न प्रतिषेधमात्रत्वात् (ब्र. सू. २।१।७) इत्या-
दिषु कारणभूताद्ब्रह्मणः कार्यभूतस्य जगतोनन्यत्वमभ्युपगम्य
ब्रह्मणो जगत्कारणत्वमुपपादितम् । इदानीं तदेवानन्यत्वमा-
श्रित्य समाधीयते ।

तत्र काणादाः प्राहुः । न कारणात्कार्यस्यानन्यत्वं संभवति। 10
विलक्षणबुद्धिबोध्यत्वात् । न खलु तन्तुपटमृत्पिण्डघटादिषु
कार्यकारणविषया बुद्धिरेकरूपा । शब्दभेदाच्च । न हि तन्तवः
पट इत्युच्यन्ते पटो वा तन्तव इति । कार्यभेदाच्च । न हि
मृत्पिण्डेनोदकमाह्रियते घटेन वा कुड्यं निर्मीयते । कालभे-
दाच्च । पूर्वकालं च कारणमपरकालं च कार्यम् । आकारभे- 15
दाच्च । पिण्डाकारं कारणं कार्यं च पृथुबुध्नोदराकारम् । तथा
सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते । संख्याभेदश्च दृ-
श्यते । बहवस्तन्तव एकश्च पटः । कारकव्यापारवैयर्थ्यं च ।
कारणमेव चेत्कार्यं किं कारकव्यापारसाध्यं स्यात् । सत्यपि
कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यं चेत्सर्वदा 20

---

2. A. B. read च for अपि before ब्रह्मणः; C. reads भोगत्व for भोग्यत्व.

7. B. reads पर before ब्रह्मणः कार्यभूतस्य.

12. C. om. च after शब्दभेदात्.

17. B. reads अपि for एव after सत्याम्.

20. E. reads इति after भवितव्यम्.

कारकव्यापारेण नोपरन्तव्यम् । सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात् । अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते । अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्यते । तदसत् । अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेनवस्थानात् । अनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात् । तदुत्पत्त्यभ्युपगमे चासत्कार्यवादप्रसङ्गात् । किं च कारकव्यापारस्याभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण करकादेरप्यभिव्यक्तिः प्रसज्यते । संप्रतिपन्नाभिव्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यविशेषनियमादर्शनात् । न हि घटार्थमारोपितः प्रदीपः करकादीन्नाभिव्यनक्ति । अतोसतः कार्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम् । अतश्च सत्कार्यवादासिद्धिः । न च नियतकारणोपादानं सत एव कार्यत्वं साधयति । कारणशक्तिनियमादेव तदुपपत्तेः । नन्वसत्कार्यवादिनोपि कारकव्यापारो नोपपद्यते । प्रागुत्पत्तेः कार्यस्यासत्त्वात्कार्यादन्यत्र कारकव्यापारेण भवितव्यम् । तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत । नैवम् । यत्कार्योपादानशक्तं यत्कारणं तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः ।

अत्राहुः । कारणादनन्यत्कार्यम् । न हि परमार्थतः कारणव्यतिरिक्तं कार्यं नाम वस्त्वस्ति । अविद्यानिबन्धनत्वात्सकलकार्यतद्व्यवहारयोः । अतो यथा कारणभूतान्मृद्द्रव्याद्घटादिषु विकारेषूपलभ्यमानाद्व्यतिरिक्तं घटशरावादिकार्यं व्यवहारमात्रालम्बनं मिथ्या कारणभूतं मृद्द्रव्यमेव सत्यं तथा निर्विशेषसन्मात्रात्कारणभूताद्ब्रह्मणोन्योहंकारादिव्यवहारालम्बनः कृत्स्नः

4. A. B. read उच्येत for उच्यते.
5. B. reads नित्यत्वोपलब्धि for नित्योपलब्धि.
8. B. C. read प्रसज्येत for प्रसज्यते.
17. E. reads कारण for कारक before व्यापारेण.

प्रपञ्चो मिथ्या कारणभूतं सन्मात्रं ब्रह्मैव सत्यम्। तस्मात्कारणव्यतिरिक्तं कार्यं नास्तीति कारणादनन्यत्कार्यम्। न च वाच्यं शुक्तिकारजतादीनामिव घटादिकार्याणामसत्यत्वाप्रसिद्धे-र्दृष्टान्तानुपपत्तिरिति। यतस्तत्रापि युक्त्या मृद्द्रव्यमात्रमेव सत्यतया व्यवस्थाप्यते तदतिरिक्तं तु युक्त्या बाध्यते। का पुनरत्र 5 युक्तिः। मृद्द्रव्यमात्रस्यानुवर्तमानत्वं तदतिरिक्तस्य च व्यावर्तमानत्वम्। रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेः सत्यता व्यावर्तमानस्य च सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा। तथानुवर्तमानमधिष्ठानभूतं मृद्द्रव्यमेव सत्यं व्यावर्तमानास्तु घटशरावादयोऽसत्यभूताः। किं च सत आत्मनो वि- 10 नाशाभावादसतश्च शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगि कार्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते। अनिर्वचनीयं च शुक्तिकारजतादिवन्मृषैव। तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्।

किं च कार्यमुत्पादयन्मृदादि कारणद्रव्यं किमविकृतमेव 15 कार्यमुत्पादयत्युत कंचन विशेषमापन्नम्। न तावदविकृतमुत्पादयति। सर्वदोत्पादकत्वप्रसङ्गात्। नापि विशेषान्तरमापन्नम्। विशेषान्तरापत्तेरपि विशेषान्तरापत्तिपूर्वकत्वेन भवितव्यं तस्या अपि तथेत्यनवस्थानात्। अविकृतमेव देशकालनिमित्तविशेष-

4. B. reads दृष्टान्तत्व for दृष्टान्त.
6. C. om. च after तदतिरिक्तस्य.
8. C reads सत्यतया for सत्यता and सत्यता for असत्यता.
12. B. reads सदसद्व्यावर्तनीयम् for सदसद्भ्याम्; C. reads अनिर्वचनीयत्वम् for अनिर्वचनीयम्.
16. A. B. om. उत्पादयति.
18. E. reads पूर्वत्वेन for पूर्वकत्वेन.
19. C. om. निमित्त.

संबद्धं कार्यमुत्पादयतीति चेन्न । देशादिविशेषसंबन्धोपि ह्यवि-
कृतस्य विशेषान्तरमापन्नस्य च पूर्ववन्न संभवति । न च वाच्यं
मृत्सुवर्णदुग्धादिभ्यो घटरुचकदध्यादीनामुत्पत्तिर्दृश्यते । शु-
क्तिकारजतादिवद्देशकालादिप्रतिपन्नोपाधौ बाधश्च न दृश्यते ।
5 अत: प्रतीतिशरणानां कारणात्कार्योत्पत्तिरवश्याश्रयणीयेति ।
विकल्पासहत्वात् । किं हेमादिमात्रमेव स्वस्तिकादेरारम्भकमु-
त रुचकादिरथ रुचकाद्याश्रयो हेमादि: । न तावद्धेमादिमा-
त्रमारम्भकम् । हेमव्यतिरिक्तस्य कार्यस्याभावात् । स्वासानं
प्रत्यासन आरम्भकत्वासंभवाच्च । हेमव्यतिरिक्तं स्वस्तिकं दृश्यत
10 इति चेत् । न हेमव्यतिरिक्तं तत् । हेमप्रत्यभिज्ञानात् । तदति-
रिक्तवस्त्वन्तरानुपलब्धेश्च । बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं
साधितमिति चेन्न । अनिरूपितवस्त्ववलम्बनानां बुद्धिशब्दा-
न्तरादीनां शुक्तिकारजतबुद्धिशब्दादिवद्भ्रान्तिमूलत्वेन वस्त्वन्त-
रसद्भावासाधकत्वात् । नापि रुचकादि स्वस्तिकादेरार-
15 म्भकम् । स्वस्तिके हि रुचकं पट इव तन्तवो भवतापि नोप-
लभ्यन्ते । नापि रुचकाश्रयभूतं हेम । रुचकाश्रयाकारेण हेम्न:
स्वस्तिकेनुपलब्धे: । अतो मृदादिकारणातिरिक्तस्य कार्यस्यास-
त्यत्वदर्शनाद्ब्रह्मव्यतिरिक्तं कृत्स्नं जगत्तत्कार्यत्वेन मिथ्याभूतम् ।

तदिदं ब्रह्मव्यतिरिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृ-
20 दादिसत्यत्वमाश्रित्य कार्यस्यासत्यत्वं प्रतिपादितम् । परमार्थ-
तस्तु मृत्सुवर्णादिकारणमपि घटरुचकादिकार्यवन्मिथ्याभू-

1. A. B. C. read संबन्धम् for संबद्धम्.

7. C. reads रुचकादि for रुचकादि:.

12. C. om. न after चेत्; A. B. read शब्दबुद्धि for बुद्धिशब्द.

14. A. B. C. read सद्भावस्य for सद्भाव.

16. B. reads लभ्यते for लभ्यन्ते.

18. E. om. तत् before कार्यत्वेन.

तम्। ब्रह्मकार्यत्वाविशेषात्। ऐतदात्म्यमिदं सर्वं तत्सत्यम् (छा. ६।८।७)। नेह नानास्ति किंचन (बृ. ४।४।१९)।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
(का. ४।१०, बृ. ४।४।१९)

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् (बृ. २।४।१४, ४।५।१५)। इन्द्रो मायाभिः पुरुरूप ईयते (बृ. २।५।१९) इत्येवमादिभिः श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगम्यते। न चागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः। यथोक्तप्रकारेण कार्यस्य सर्वस्य मिथ्यात्वावगमात्। प्रत्यक्षस्य सन्मात्रविषयत्वाच्च। विरोधे सत्यप्यसंभावितदोषस्य चरमभाविनः स्वरूपसद्भावादौ प्रत्यक्षाद्यपेक्षत्वेपि प्रमितौ निराकाङ्क्षस्य निरवकाशस्य शास्त्रस्य बलीयस्त्वात्। अतः कारणभूताद्ब्रह्मणोन्यत्सर्वं मिथ्या। न च प्रपञ्चस्य मिथ्यात्वेन जीवमिथ्यात्वमाशङ्कनीयम्। ब्रह्मण एव जीवभावात्। ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति। अनेन जीवेनात्मनानुप्रविश्य (छा. ६।३।२)। एको देवः सर्वभूतेषु गूढः (श्वे. ६।११)। एको देवो बहुधा निविष्टः (तै. आ. ३।१३)।

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। (का. ३।१२)
नान्योतोस्ति द्रष्टा (बृ. ३।७।२३) इत्येवमादिभ्यः।

नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवतीति चेत्।

---

7. C. om. ईयते.

14. A. B. read प्रपञ्च for प्रपञ्चस्य.

17. E. reads सम् before निविष्टः.

21. B. C. om. इति after अनुभवति.

पादे मे वेदना शिरसि सुखमितिवत्सर्वशरीरेषु सुखदुःखप्रतिसंधानं स्यात्। जीवेश्वरबद्धमुक्तशिष्याचार्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात्।

अत्र केचिदद्वितीयत्वं ब्रह्मणोभ्युपयन्त एवैवं समादधते।
5 एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्वदुःखित्वादय एकस्यैव मुखस्य प्रतिबिम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत्तत्तदुपाधिवशाद्व्यवस्थाप्यन्ते। नन्वनेन जीवेनात्मनानुप्रविश्य (छां. ६।३।२) इत्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्त इत्युक्तम्। सत्यं परमा-
10 र्थतः। काल्पनिकं तु भेदमाश्रित्येयं व्यवस्थोच्यते। कस्य पुनः कल्पना। न तावद्ब्रह्मणः। तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात्। नापि जीवानाम्। इतरेतराश्रयत्वप्रसङ्गात्। कल्पनाधीनो हि जीवभावो जीवाश्रया च कल्पनेति। नैतदेवम्। अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनानादित्वात्। किं च प्रासा-
15 दनिगरणादिवदनुपपन्नतैकवेषायामवस्तुभूतायामविद्यायां नेतरेतराश्रयादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति। वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां स्वतो विशुद्धत्वेपि कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवदौपाधिकाशुद्धिसंभवादविद्याश्रयत्वोपपत्तेः काल्पनिकत्वोपपत्तिः। प्रतिबिम्बगतश्यामतादिवज्जीवगताशुद्धिरपि

1. A. B. read मे after शिरसि; C. reads वेदना for सुखम्.
4. B. reads एव before अभ्युपयन्तः; C. E. om. एव after अभ्युपयन्तः.
9. A. B. C. read न before परमार्थतः.
15. B. reads अनुपपन्नतया for अनुपपन्नता.
16. A. B. C. read त्व after आश्रय; B. om. वस्तु before दोषाः; B. reads व्यतिरिक्तानाम् for अव्यतिरिक्तानाम्.
17. A. B. om. अपि after विशुद्धत्वे.

भ्रान्तिरेव । अन्यथानिर्मोक्षत्वप्रसङ्गात् । जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीय इति ।

तदेतदविदिताद्वैतयाथात्म्यानां भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितम् । तथा हि । जीवस्याकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात् । 5
तद्व्यतिरिक्तेन तस्मिन्कल्पितेनाकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात् । न खल्वद्वैतवादिनस्तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति । कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्तन्न । स्वरूपस्याखण्डैकरसस्याविद्यामन्तरेण विशिष्टरूपत्वासिद्धेः । अविद्याश्रयाकार एव हि निरूप्यते । किं च 10
बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं जीवाज्ञानस्य समाश्रयणम् । सा तु व्यवस्था जीवाज्ञानपक्षेपि न सिध्यति । अविद्याविनाश एव हि मोक्षः । तत्रैकस्मिन्मुक्तेविद्याविनाशादितरेपि विमुच्येरन् । अन्यस्यामुक्तत्वादविद्या तिष्ठतीति चेत्तर्ह्येकस्याप्यमुक्तिः स्यात् । अविद्याया अविनष्टत्वात् । प्रतिजीवमविद्याभेदः क- 15
ल्प्यते । तत्र यस्याविद्या विनष्टा स मोक्ष्यते यस्य त्वनष्टा स भन्त्स्यत इति चेत्तन्न । प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे स

C. om. त्व after अनिर्मोक्ष.
C. om. स before बहुमान.
C. reads ईप्सा for लिप्सा.
8. C. om. एव after स्वरूपेण.
9. A. B. om. तत् after चेत्.
11. E reads हि after सिद्ध्यर्थम्; A. reads जीवाज्ञान for जीवाज्ञानस्य.
13. E. om. वि before मुच्येरन्.
16. A. E. om. वि before नष्टा
17. E. om. तत् after चेत्.

जीवभेदः किं स्वाभाविक उताविद्याकल्पितः । न तावत्स्वाभाविकः । अनभ्युपगमात् । भेदसिद्ध्यर्थस्यास्य चाविद्याकल्पनस्य व्यर्थत्वात् । अथाविद्याकल्पितस्तत्रेयं जीवभेदकल्पिकाविद्या किं ब्रह्मण उत जीवानाम् । ब्रह्मण इति चेदागतोसि मदीयं
5 मार्गम् । अथ जीवानाम् । किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि । अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं या अविद्याः कल्प्यन्ते ताभिरेव जीवभेदोपीति मनुषे जीवभेदसिद्धौ ताः सिध्यन्ति तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रयत्वम् । न चात्र बीजाङ्कुरन्यायः सिध्यति । बीजाङ्कुरेषु ह्यन्यद-
10 न्यद्बीजमन्यस्यान्यस्याङ्कुरस्योत्पादकम । इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां सिद्धिरित्यशङ्कनीयता। अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे तथा सति जीवानां भङ्गुरत्वमकृताभ्यागमकृतप्रहाणादिप्रसङ्गश्च । अत एव ब्रह्मणः पूर्वपूर्वजीवाश्रया-
15 भिरविद्याभिरुत्तरोत्तरजीवकल्पनमित्यपि निरस्तम् । अविद्याप्रवाहेभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यान्न ध्रुवरूपता । आ मोक्षाच्च जीवभावस्य ध्रुवत्वमिष्टं न सिध्येत ।

यच्चोक्तमविद्याया अवस्तुरूपत्वेनानुपपन्नतैकत्वेपाया ने-

2. C. om. अस्य before च.
8. B. reads सिद्धेः for सिद्धिः.
14. C. reads विप्रणाश for प्रहाण; B. reads भाव after पूर्वपूर्वजीव.
15. E. reads भाव after उत्तरजीव.
16. B. reads त्वत् for तत्तत्; A. C. om. तत् after तत्; C. om भाव after जीव.
17. E. reads आमोक्षम् for आ मोक्षात्.
19. A. C. E. read एकत्वेपायाम् for एकत्वेपायाः.

तरेतराश्रयत्वादयो वस्तुदोषा अनवकॢप्तिमावहन्तीति । तथा सति मुक्तान्परं च ब्रह्माश्रयेदविद्या । शुद्धविद्यास्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चेत् । किमुपपत्त्यनुपपत्त्यनुवर्तिन्यविद्या । एवं तर्ह्युक्ताभिरनुपपत्तिभिर्जीवानपि नाश्रयेत् । किं च जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा न वा । 5 यदि नश्येत्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात् । नो चेदविद्या-नाशेऽप्यनिर्मोक्षः । ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात् ।

यच्चोक्तं मणिकृपाणदर्पणादिपूपलभ्यमानमुखमलिनत्वविमल-त्वादिवत्कृत्स्नशुद्ध्यादिव्यवस्थोपपत्तिरिति तत्रेदं विमर्शनी-यमल्पत्वमलिनत्वादय औपाधिका दोषाः कदा नश्येयु-10 रिति । कृपाणाद्युपाध्यपगम इति चेत्किं तदाल्पत्वाद्याश्रयः प्रतिबिम्बोऽस्तिष्ठति न वा । तिष्ठतीति चेत्तत्स्थानीयस्य जीव-स्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः । नश्यति चेत्तद्वदेव जीव-नाशात्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात् । किं च यस्य ह्यपुरु-षार्थरूपदोषप्रतिभासस्तस्य तदुच्छेदः पुरुषार्थः । तत्र किमौपा-15 धिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मण उत प्रतिबिम्बस्था-नीयस्य जीवस्योतान्यस्य कस्यचित् । आद्ययोः कल्पयोर्दृष्टा-न्तोऽयं न संगच्छते । मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदो-षानिभासाश्रयत्वात् । न हि मुखं तत्प्रतिबिम्बं वा चेतयते ।

2. C. reads ब्रह्म च for परं च ब्रह्म.

3. P. reads प्रसज्जति for प्रसजति; C. E. om. अनुपपत्ति after उपपत्ति.

4. A. B. E. read उपपत्तिभिः for अनुपपत्तिभिः.

10. C. reads औपाधिक for औपाधिकाः.

11. E. reads तत् for तदा.

12. C om. इति after तिष्ठति.

17. C. reads ब्रह्मणः before जीवस्य.

ब्रह्मणो दोषप्रतिभासे ब्रह्मणोविद्याश्रयत्वप्रसङ्गश्च । तृतीयोपि कल्पो न कल्पते । जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात् ।

किं चाविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयम् । न तावदविद्या । अचेतनत्वात् । नापि जीवः । आत्माश्रयदोषप्रसङ्गात् । शुक्तिकारजतादिवदविद्याकल्प्यत्वाच्च जीवभावस्य । ब्रह्मैव कल्पकमिति चेद्ब्रह्माज्ञानमेवायातम् । किं च ब्रह्माज्ञानानभ्युपगमे किं ब्रह्म जीवान्पश्यति न वा । न पश्यति चेदीक्षापूर्विका विचित्रसृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात् । अथ पश्यति । अखण्डैकरसं ब्रह्मानाद्यविद्यामन्तरेण जीवान्पश्यतीति ब्रह्माज्ञानप्रसङ्गः । अत एव मायाविद्याविभागवादोपि निरस्तः । अज्ञानमन्तरेण हि मायिनोपि ब्रह्मणो जीवदर्शित्वं न स्यात् । न च मायावी परानदृष्ट्वा मोहयितुमलम् । न च माया मायाविनो दर्शनसाधनम् । दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात्तस्याः । अथ ब्रह्मणो माया तस्य जीवदर्शित्वं कुर्वती जीवमोहनहेतुरिति मन्यसे तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया मायापरपर्यायाविद्यैव स्यात् ।

अथ मतं विपरीतदर्शनहेतुरविद्या । माया तु मिथ्याभूतं ब्रह्म-

1. C. reads ब्रह्मविद्या for ब्रह्मणोविद्याश्रयत्व.
2. C. reads व्यतिरिक्त for व्यतिरिक्तस्य.
6. B. om. चेत्; C. reads ब्रह्मज्ञानम् for ब्रह्माज्ञानम्.
7. C. reads ब्रह्मज्ञान for ब्रह्माज्ञान.
8. B. reads इति after पश्यति.
9. E. reads न for अनादि.
11. E. reads प्र before विभागवाद.
15. C. reads दर्शनत्वम् for दर्शित्वम्; C. reads मोहस्य for मोहन.
16. A. B. om. स्व before प्रकाशस्य.

व्यतिरिक्तं मिथ्यात्वेनैवं दर्शयन्ती न ब्रह्मणो विपरीतदर्शन-
हेतुः। अतस्तस्या नाविद्यात्वमिति। नैवम्। चन्द्रैकत्वे ज्ञाय-
माने द्विचन्द्रज्ञानहेतोरप्यविद्यात्वात्। यदि च ब्रह्म मिथ्यात्वे-
नैव स्वव्यतिरिक्तं जानाति न तर्हि तन्मोहयति। न ह्यनुन्मत्तो
मिथ्यात्वेन ज्ञातान्मोहयितुमीहते। 5

अथापुरुषार्थापरमार्थदर्शनहेतुरविद्या। माया तु ब्रह्मणो ना-
पुरुषार्थदर्शनहेतुः। अतोस्या नाविद्यात्वमिति मतम्। तन्न।
द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेपि तद्धेतुरवि-
द्यैव। तन्निरसने च प्रयस्यन्ति। यदि च नापुरुषार्थदर्शनकरी
माया तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी स्यात्। 10
अस्तु को दोष इति चेत्। द्वैतदर्शनमेव दोषः। यत्र हि द्वैतमिव
भवति (बृ. २।४।१४,४।५।१५)। यत्र त्वस्य सर्वमात्मैवाभू-
त्तत्केन कं पश्येत् (बृ. २।४।१४,४।५।१५) इत्याद्यद्वैतश्रुतयः
प्रकुप्येयुः। परमार्थविषया अद्वैतश्रुतयो मायायास्त्वपरमार्थत्वा-
दविरोध इति चेत्। अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोपर- 15
मार्थभूतमायादर्शनं तद्वत्ता चाविद्यामन्तरेण नोपपद्यते। किं
चापरमार्थभूतयानित्यया मायया किं प्रयोजनं ब्रह्मणः। जीव-
मोहनमिति चेत्। अपुरुषार्थेन मोहनेन किं प्रयोजनम्। क्री-

1. C. om. एव after मिथ्यात्वेन.
5. A. B. read मोहयते for मोहयितुमीहते.
6. C. reads अविद्या for अपरमार्थ.
7. A. B. om. दर्शन after अपुरुषार्थ.
8. A. B. om. अपि before तद्धेतुः.
9. B. reads प्रयतस्यन्ति, C. प्रयास्यन्ति, for प्रयस्यन्ति.
10. B. reads ब्रह्मरूप for ब्रह्मस्वरूप.
13. C. reads एवम् before आद्यद्वैत.
16. E. reads वा for च after तद्वत्ता.

डेति चेत्। अपरिच्छिन्नानन्दस्य किं क्रीडया। परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत्। नैवमिहोपपद्यते। न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नयापरमार्थभूतया क्रीडयापरमार्थभूतेन च तत्प्रति-
5 भासेनानुन्मत्तानां क्रीडारसो निष्पद्यते। मायाश्रयतयाभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनासंभवश्च पूर्ववदेव द्रष्टव्यः। अतो ब्रह्मैवानाद्यविद्याशवलं स्वगतनानात्वं पश्यतीत्यद्वितीयत्वं ब्रह्मणोभ्युपयद्भिरभ्युपेत्यम्।

यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति न तद्ब्रह्माज्ञानवा-
10 दिनश्चोद्यम्। एकस्यैव ब्रह्मणोज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वाद्बद्धमुक्तादिव्यवस्थाया एवाभावात्। व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्यादिव्यवस्थायाः काल्पनिकत्वात्। स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः। स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्यादयस्तदविद्याकल्पिता एव। अत एव
15 बह्वविद्याकल्पनमपि न युक्तिमत्। पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनापि नाभ्युपेयते। अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते। प्रयोगाश्च बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिता अपारमार्थिकत्वात्स्वप्रदृष्टव्यवस्थावदिति। शरीरान्तराण्यपि मयैवात्मवन्ति शरीर-
20 त्वादेतच्छरीरवत्। शरीरान्तराण्यपि मदविद्याकल्पितानि शरीरत्वात्कार्यत्वाज्जडत्वात्कल्पितत्वाद्वैतच्छरीरवत्। विवादाध्यासितं चेतनजातमहमेव चेतनत्वात्। यदनहं तदचेतनं दृष्टं

8. E. reads अभ्युपेतव्यम् for अभ्युपेत्यम्.

9. C. reads ज्ञान for अज्ञान before वादिनः.

12. A. B. om. आदि after आचार्य.

17. B. C. E. read प्रयोगः for प्रयोगाः.

यथा घटः। अतः स्वपरविभागो बद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चैकस्याविद्याकल्पिताः।

द्वैतवादिनापि बद्धमुक्तव्यवस्था दुरुपपादा। अतीतानां कल्पानामानन्त्यात्। एकैकस्मिन्कल्प एकैकमुक्तावपि सर्वेषां मोक्षसंभवादमुक्तानुपपत्तेः। अनन्तत्वादात्मनाममुक्ताश्च सन्तीति 5 चेत्। किमिदमनन्तत्वम्। असंख्येयत्वमिति चेन्न। भूयस्त्वादल्पज्ञैरसंख्येयत्वेपीश्वरस्य सर्वज्ञस्य संख्येया एव। तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्। आत्मनां निःसंख्येयत्वादीश्वरस्याविद्यमानसंख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेन्न। भिन्नत्वे संख्याविधुरत्वं नोपपद्यते। आत्मानः संख्यावन्तो भिन्नत्वान्माषसर्षपघटपटादिवत्। भिन्नत्वे चात्मनां घटादिवज्जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते। ब्रह्मणश्चानन्तत्वं न स्यात्। अनन्तत्वं नाम परिच्छेदरहितत्वम्। भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुम्। वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः। वस्तुतः 1 परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते। वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परिच्छिन्ना एव हि घटादयो देशतः कालतश्च परिच्छिन्ना दृष्टाः। तथा सर्वे चेतना ब्रह्म च वस्तुतः परिच्छिन्नाः देशकालाभ्यामपि परिच्छिद्यन्ते। एवं च सत्यं ज्ञानमनन्तम् (तै. २।१) इत्यादिभिः सर्वप्रकारपरिच्छेदरहि- 2

7. C. om. अपि after तस्य.

9. C. om. न after चेत्.

11. C. om. पट.

15. B. C. read अभावः for भावः.

16. A. B. read च before न युज्यते.

17. C. reads विलक्षणत्वे for विलक्षणत्वेन; A. B. om. हि after एव.

18. B. reads अचेतनाः for चेतनाः.

तत्वं वदद्भिर्विरोधः। उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्। कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम्। अत एकस्यैवापरिच्छिन्नस्य ब्रह्मणोविद्याविजृम्भितं ब्रह्मादि स्तम्बपर्यन्तं कृत्स्नं जगत्। सुखदुःखप्रतिसंधानव्यवस्थादयोपि स्वाप्न-
5 व्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते। तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशाज्जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति।

अत्रोच्यते। निर्विशेषस्वप्रकाशमात्रं ब्रह्मानाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्प्रकाशस्वरूपस्य निरंशस्य
10 प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधानासंभवादिभ्यः सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तम्।

यत्पुनरुक्तं कारणव्यतिरिक्तं कार्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद्भ्रम इति तदयुक्तम्। युक्तेरभावात्। यत्त्वनुवर्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्तमानानां घटशरावादि-
15 कार्याणामसत्यत्वमिति तदप्यन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम्। यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्यस्य मृषात्वमिति तदसत्। उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति किं त्वनित्यत्वम्। यद्देशकालसंबन्धितया यदुपलब्धं तद्देशकालसं-
20 बन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः। देशान्तरकालान्तरसंबन्धितयोपलब्धस्यान्यदेशकालसंबन्धित्वेन बाधितत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति न तु मिथ्या-

3. C. reads अपि for एव after एकस्य.

7. A. B. read जगति for जगतः.

10. A. B. read असंभवादित्यादिभ्यः for असंभवादिभ्यः.

11 B. om. स्ववचनविरुद्धम्.

त्वम् । प्रतिप्रयोगश्च घटादिकार्यं सत्यं देशकालादिप्रतिपन्नोपाधावबाधितत्वात् । आत्मवत् ।

यच्चोक्तं कारणस्वरूपादविकृताद्विकृताच्च कार्योत्पत्तिर्न संभवतीति तदसत् । देशकालादिसहकारिसमवहितात्कारणात्कार्योत्पत्तिसंभवात् । तत्समवधानं च विकृतस्याविकृतस्य च न संभवतीति यदुक्तं तदयुक्तम् । पूर्वमविकृतस्यैव कालादिसमवधानसंभवात् । अविकृतत्वाविशेषात्पूर्वमपि देशकालादिसमवधानं प्रसज्यत इति चेन्न । देशकालादिसमवधानस्य कारणान्तरायत्तस्यैतदायत्तत्वाभावात् । अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्यमुत्पादयतीति न किंचिदवहीनम् । कारणस्य च कार्यं प्रत्यारम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापह्नोतुं शक्यते ।

यत्तु हेमादिमात्रस्य रुचकादिकार्यस्य तदाश्रयस्य वा हेमादेरारम्भकत्वं न संभवतीति तदयुक्तम् । हेमादिमात्रस्यैव यथोक्तपरिकरयुक्तस्यारम्भकत्वसंभवात् । न चारम्भकहेमव्यतिरिक्तं कार्यं न दृश्यत इति वक्तुं शक्यम् । हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात् । बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च । न चायं शुक्तिकारजतादिवद्भ्रमः । उत्पत्तिविनाशयोरन्तराल उपलभ्यमानस्य तद्देशकालसंबन्धितया बाधादर्शनात् ।

5 B. reads कार्योत्पत्तिर्न for कार्योत्पत्ति; B. C. om. च after अविकृतस्य.

6. E. reads अपि before अयुक्तम्.

9. A. B. read तत् for एतत्.

10. A. B. read अपहीनम् for अवहीनम्.

15. C. reads असंभवात् for संभवात्; B. reads हेतु for हेम.

न चास्या उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते । प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्तेरविरुद्धा । श्रुतिभिस्तु प्रपञ्चमिथ्यात्वसाधनं पूर्वमेव निरस्तम् । यच्चान्यदत्र प्रत्यक्षविरोधादि प्रतिवक्तव्यं तदपि
5 सर्वं पूर्वमेव सूक्तम् ।

यच्चोक्तमेकेनात्मना सर्वाणि शरीराण्यात्मवन्तीति तदसत् । एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसंधानप्रसङ्गात् । सौभरिप्रभृतिषु ह्यात्मैकत्वेनानेकशरीरप्रयुक्तसुखादिप्रतिसंधानमेकस्य दृश्यते । न चाहमर्थस्य ज्ञातृत्वात्तद्भेदात्प्रतिसंधानाभावो नात्म-
10 भेदादिति वक्तुं शक्यम् । आत्मा ज्ञातैव । स चाहमर्थ एव । अन्तःकरणभूतस्त्वहंकारो जडत्वात्करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात् । यच्च शरीरत्वजडत्वकार्यत्वकल्पितत्वैः सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तं तदपि सर्वशरीराणामविद्याकल्पितत्वस्यैवाभावादयुक्तम् । तदभावश्चाबाधितस्य
15 सत्यत्वोपपादनात् । यच्च चेतनादन्यस्य जडत्वदर्शनात्सर्वचेतनानामनन्यत्वमुक्तं तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम् । यत्तु मय्येवात्मवन्ति मदविद्याकल्पितान्यहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितं तदज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम् । अहंत्वमाद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा
20 त्वन्मते ।

किं च निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः । अविद्याकार्यत्वात् । शुक्तिकार-

1. C. reads प्रागनुपलब्धेः for प्रागनुपलब्ध.
8. B. C. read आत्मैकत्वे for आत्मैकत्वेन.
14. C. reads अबाधित for अबाधितस्य.
15. E. reads सत्यता for सत्यत्व.

जतादिषु रजताद्युपादानादिप्रयत्नवत्। मोक्षार्थप्रयत्नो व्यर्थः। कल्पिताचार्यायत्तज्ञानकार्यत्वात्। शुकप्रह्लादवामदेवादिप्रयत्नवत्। तत्त्वमस्यादिवाक्यजन्यं ज्ञानं न बन्धनिवर्तकम्। अविद्याकल्पितवाक्यजन्यत्वात्स्वयमविद्यात्मकत्वादविद्याकल्पितज्ञात्राश्रयत्वात्कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा। स्वाप्रबन्ध- 5
निवर्तकवाक्यजन्यज्ञानवत्। किं च निर्विशेषचिन्मात्रं ब्रह्म मिथ्या। अविद्याकार्यज्ञानगम्यत्वादविद्याकल्पितज्ञात्राश्रितज्ञानगम्यत्वादविद्यात्मकज्ञानगम्यत्वाद्वा। यदेवं तत्तथा यथा स्वाप्रगन्धर्वनगरादि। न च निर्विशेषचिन्मात्रं ब्रह्म स्वयं
प्रकाशते येन न प्रमाणान्तरमपेक्षते। यत्त्वात्मसाक्षिकं स्वयं- 10
प्रकाशज्ञानं दृश्यते तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तम्। यानि च तस्य निर्विशेषत्वसाधनानि यौक्तिकानि ज्ञानान्युपन्यस्तानि तानि चानन्तरोक्तैरविद्याकार्यत्वादित्यादिभिरनुमानैर्निरस्तानि। न च निर्विशेषस्य चिन्मात्रस्याज्ञानसाक्षित्वमहंकारादिजगद्भ्रमश्चोपपद्यते। साक्षित्वभ्रमा- 15
दयोऽपि हि ज्ञातृविशेषगता दृष्टा न ज्ञप्तिमात्रगताः। न च तस्य प्रकाशकत्वं स्वायत्तप्रकाशता वा सिध्यति। प्रकाशो हि नाम कस्यचित्पुरुषस्य कंचनार्थविशेषं प्रति सिद्धिरूपो दृश्यते। तत एव हि तस्य स्वयंप्रकाशतोपपाद्यते भवद्भिरपि। न चातादृशस्य

1. E. reads अपि after मोक्षार्थप्रयत्नः.
3. A. B. read वाक्यजन्य for वाक्यजन्यम्.
5. A. B. om. वा after श्रवणजन्यत्वात्.
6. A. B. read निवर्तन for निवर्तक.
7. C. reads आश्रय for आश्रित.
8. E. reads अविद्याकल्पित for अविद्यात्मक.
18. C. reads प्रकाश for सिद्धि; A. B. read अत एव for तत एव.
19. A. B. read तादृशस्य for अतादृशस्य.

निर्विशेषस्य स्वप्रकाशता संभवति । यः पुनः स्वगोष्ठीष्वपरमार्थादपि परमार्थकार्यं दृश्यत इत्युद्घोषः सोपि तानि कार्याणि सर्वाण्यबाधितकल्पानि व्यावहारिकसत्यानि वस्तुतस्त्वविद्यात्मकान्येवेति स्वाभ्युपगमादेव निरस्तः । अस्माभिरपि
5 सर्वत्र परमार्थादेव कारणात्सर्वकार्योत्पत्तिमुपपादयद्भिः पूर्वमेव निरस्तः । न च त्वयैषामनुमानानां श्रुतिविरोधो वक्तुं शक्यते । श्रुतेरप्यविद्याकार्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो विशेषाभावात् ।

यत्तु ब्रह्मणोपारमार्थिकज्ञानगम्यत्वेपि पश्चात्तनबाधादर्श-
10 नाद्ब्रह्म सत्यमेवेति तदसत् । दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिंचित्करत्वात् । यथा शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेपि दोषमूलत्वनिश्चयादेव तदर्थस्यासत्यत्वम् । किं च नेह नानास्ति किंचन ( बृ. ४।४।१९ ) । विज्ञानमानन्दं ब्रह्म (बृ. ३।९।२८)
15 इति विज्ञानमात्रातिरिक्तस्य कृत्स्नस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात्परत्वात्पश्चात्तनबाधादर्शनमुच्यते । शून्यमेव तत्त्वमिति तस्याप्यभावं वदतस्तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते । सर्वशून्यतातिरेकिनिषेधासंभवात्तस्यैव पश्चात्तनबाधादर्शनम् । दोषमूलत्वं तु प्रत्यक्षादीनां वेदान्तजन्मनः सर्वशून्यज्ञानस्याप्य-
20 विशिष्टम् । अतः सर्वं विज्ञानजातं पारमार्थिकज्ञातृगतं स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपम् । तत्र किंचिज्ज्ञानं दोषमूलं दोषश्च परमार्थः किंचिच्च निर्दोषं पारमार्थिकसामग्रीजन्यमिति

1. B. C. om. स्व before प्रकाशता.

6. E. reads अनुभूयमानानाम् for अनुमानानाम्.

16. C. om. परत्वात्.

22. C. reads पारमार्थिकम् for पारमार्थिक.

यावन्नाभ्युपेयते न तावत्सत्यमिथ्यार्थव्यवस्था लोकव्यवहारश्च सेत्स्यति। लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः। निर्विशेषसन्मात्रस्य तु पारमार्थिकस्यापारमार्थिकस्य च प्रतिभासादेर्हेतुत्वासंभवाल्लोकव्यवहारो न संभवति। 5

यत्तु तैर्निरधिष्ठानभ्रमासंभवात्सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य पारमार्थिकत्वमुक्तं तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येपि भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येपि भ्रमोपपत्तेर्निरस्तम्। अथाधिष्ठानापारमार्थ्ये न कचिद्भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे हन्त 10 तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येपि न कचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चिद्विशेषोन्यत्र संरम्भात्।

यत्तु भेदपक्षेप्यतीतकल्पानामानन्त्यात्सर्वेषामात्मनां मुक्तत्वेन बद्धासंभवाद्बद्धमुक्तव्यवस्था न संभवतीति तदात्मानन्त्येन प- 15 रिहृतम्। यत्त्वात्मनां भिन्नत्वे माषसर्षपघटादिवत्संख्यावत्त्वमवर्जनीयमिति। तत्र घटादीनामप्यनन्तत्वाद्दृष्टान्तः साध्यविकलः स्यात्। दश घटाः सहस्रं माषा इति संख्यावत्त्वं दृश्यत इति चेत्सत्यम्। तत्तु न घटादिस्वरूपगतमपि तु देशकालाद्युपा-

2. A. B. read अपि for हि.

4. C. reads च after पारमार्थिकस्य.

7. E. reads तु after सन्मात्रस्य.

10. C. reads मन्यते for मन्यसे.

13. A. B. read कचित् for कश्चित्.

15. B. om. बद्धासंभवात्.

16. E. reads पट after घट.

धिमद्धटादिगतम् । तादृशं तु संख्यावत्त्वमात्मनामप्यभ्युपग-
च्छामः । न च तावता सर्वमुक्तिप्रसङ्गः । आत्मस्वरूपानन्त्यात् ।
यत्त्वात्मनां भिन्नत्वे घटादिवज्जडत्वानात्मत्वक्षयित्वप्रसङ्ग इति
तदयुक्तम् । एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीय-
5 त्वानापादकत्वात् । न हि घटानां भेदस्तेषां पटत्वमापादयति ।
यत्तु भिन्नत्वे वस्तुतः परिच्छेदाद्देशकालाभ्यामपि परिच्छेदो
ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यतीति तद-
युक्तम् । वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूना-
धिकभावेनानियमदर्शनाद्देशकालसंबन्धेयत्तायाः प्रमाणान्तराय-
10 त्तनिर्णयत्वेन ब्रह्मणः सर्वदेशकालसंबन्धस्यापि प्रमाणान्तरादा-
पततो विरोधाभावात् । वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारप-
रिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्तद्भवतोप्यविद्यावि-
लक्षणत्वं ब्रह्मणोभ्युपयतः समानम् । अतः सतोविद्याविल-
क्षणत्वाभ्युपगमाद्ब्रह्मणोपि भिन्नत्वेन भेदप्रयुक्ता दोषाः सर्वे
15 तवापि प्रसज्येरन् ।

यद्यविद्याविलक्षणत्वं नाभ्युपेयते तर्ह्यविद्यात्मकमेव ब्रह्म
स्यात् । सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इति लक्षणवाक्य-
मपि तत एवापार्थकं स्यात् । भेदतत्त्वानभ्युपगमे हि स्वपक्षपर-
पक्षसाधनदूषणादिविवेकाभावात्सर्वमसमञ्जसं स्यात् । आनन्त्य-

1. B. reads स्वरूप after घटादि; A. om. अपि after आत्मनाम्.

5. B. C. om. त्व before अनापादकत्वात्; C. E. read अनापादनात् for अनापादकत्वात्; C. E. read घटादीनाम् for घटानाम्.

6. B. C. read अपरिच्छेदः for अपि परिच्छेदः.

10. A. B. om. निर्णय.

13. A. B. read अभ्युपेयतः for अभ्युपयतः.

16. E. reads अविद्यात्मकत्वमेव ब्रह्मणः for अविद्यात्मकमेव ब्रह्म; B. om. ब्रह्म.

प्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण । वस्तुतोपि परिच्छेदरहितत्वे तथाविधस्य शशविषाणायमानस्यानुपलब्धेः । भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात्स्वतः परतोपि परिच्छेदो न विद्यते । तदेवं कारणाद्भिन्नस्य कार्यस्य सत्यत्वाद्ब्रह्मकार्यं कृत्स्नं जगद्ब्रह्मणोन्यदेवेति प्राप्ते प्रचक्ष्महे । 5

तदनन्यत्वमारम्भणशब्दादिभ्यः। तस्मात्परमकारणाद्ब्रह्मणोनन्यत्वं जगत आरम्भणशब्दादिभ्यस्तदुपपादयद्भ्योवगम्यते । आरम्भणशब्द आदिर्येषां वाक्यानां तान्यारम्भणशब्दादीनि । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (छा. ६।१।१)। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा. ६।२।१) । त- 10 दैक्षत बहु स्यां प्रजायेयेति। तत्तेजोसृजत (छा. ६।२।३) । अनेन जीवेनात्मनानुप्रविश्य (छा. ६।३।२) । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।६) । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो (छा. ६।८।७) इत्येतानि प्रकरणान्तरस्थान्यप्येवंजातीयकान्यत्रा- 15 भिप्रेतानि । एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद्ब्रह्मणोनन्यत्वमुपपादयन्ति । तथा हि । स्तब्धोस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् (छा. ६।१।१) इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन 20 कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण कथं नु भगवः स आदेशः (छा. ६।१।१) इत्यन्यज्ञानेनान्यज्ञानासंभवं चोदितो जगतो ब्रह्मै-

1. C. E. read न after मात्रेण.
2. E. reads रहितत्वेन for रहितत्वे; B. reads अप्युपलब्धेः for अनुपलब्धेः.
23. A. E. read ज्ञाततासंभवम् for ज्ञानासंभवम्.

ककारणतामुपदेक्ष्यँल्लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावद्यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् ( छा. ६।१।१ ) इति दर्शयति । यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञातते-
5 त्यर्थः । अत्र काणादवादेन कारणात्कार्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतामुपपादयति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ( छा. ६।१।१ ) इति । आरभ्यत आलभ्यते स्पृश्यत इत्यारम्भणम् । कृत्यल्युटो बहु-लम् ( पा. सू. ३।३।११३ ) इति कर्मणि ल्युट् । वाचा वा-
10 क्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः । घटेनोदकमाहरेत्यादिवा-क्पूर्वको ह्युदकाहरणादिव्यवहारः । तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशे-षस्तत्प्रयुक्तं च घट इत्यादि नामधेयं स्पृश्यते । उदकाहरणादि-व्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभा-
15 ग्भवति । अतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिकाद्रव्यमित्येव सत्यं प्रमाणेनोपलभ्यत इत्यर्थः । न तु द्रव्यान्तरत्वेन । अत-स्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धि-शब्दान्तरादय उपपद्यन्ते । यथैकस्यैव देवदत्तस्यावस्थाविशेषैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते ।

6. C. E. read अनन्यत्वम् for अनन्यताम्.
12. E. reads आकार after बुध्नोदर.
14. A. B. om. अन्तर after नामधेय.
15. B. om. मृत्तिकाद्रव्यमित्येव सत्यम्.
17. E. reads एव after मात्रेण.
18. E. reads एव after शब्दान्तरादयः; A. B. read भेदैः for विशेषैः.
19. B. om. अन्तर after शब्द; C. reads काय for कार्य.

यदुक्तं सत्यामेव मृदि घटो नष्ट इति व्यवहारात्कारणादन्यत्कार्यमिति तदुत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतम् । तत्तदवस्थस्य तस्यैव द्रव्यस्य ते ते शब्दास्तानि तानि च कार्याणीति युक्तं द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम् । अभि- 5 व्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि । उत्पत्त्यभ्युपगमेपि सत्कार्यवादो न विरुध्यते । सत एवोत्पत्तेः। विप्रतिपिद्धमिदमभिधीयते पूर्वमेव सत्तदुत्पद्यते चेति । अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यम् । द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्य तूत्पत्तिः । 10 अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात्सत्कार्यवादो न विरुध्यते । संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेदसत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः । उत्पत्तिमत्त्वे चानवस्था । अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम् । क- 15 पालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावदेकत्वावस्थाप्रहाणेन बहुत्वावस्था तत्प्रहाणेनैकत्वावस्था चेति न कश्चिद्विरोधः।

तथा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा. ६।२।१) इति सदेवेदमिदानीं विभक्तनामरूपत्वेन नानारूपं जगदग्रे नामरूपविभागाभावेनैकमेवासीत्सर्वशक्तित्वेनाधिष्ठात्र- 20 न्तरासहतयाद्वितीयं चेत्यनन्यत्वमेवोपपादितम् । तथा त-

---

3. A. B. om. त्व after अवस्थाविशेष; B. reads एव, E. एकस्यैव, after तत्तदवस्थस्य.

9. C. om विनाश.

10. C. om. पूर्व after पूर्व.

14. C. reads योग after प्रतिपत्ति.

20. E. reads एकम् after जगत.

दैक्षत बहु स्यां प्रजायेय (छा. ६।२।३) इति वक्ष्यमाणतेजः-प्रभृतिविविधविचित्रस्थिरत्रसरूपजगत्त्वेनात्मनो बहुभवनं संकल्प्य जगत्सर्गाभिधानात्कार्यभूतस्य जगतः परमकारणात्परस्माद्ब्रह्मणोनन्यत्वमवसीयते । सच्छब्दवाच्यस्यैव परस्य ब्रह्मणः
5 सर्वज्ञस्य सत्यसंकल्पस्य निरवद्यस्यैव सदेवेदमिति निर्देशार्हजगत्त्वं सच्छब्दवाच्यस्य च जगतो नामरूपविभागाभावेनैकत्वमद्वितीयत्वमधिष्ठात्रन्तरनिरपेक्षत्वं पुनरपि तस्यैव विचित्रस्थिरत्रसरूपजगत्त्वेन बहुभवनसंकल्परूपेक्षणं यथासंकल्पं सर्गश्च कथमुपपद्यत इत्याशङ्क्याह सेयं देवतैक्षत हन्ताहमिमा-
10 स्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतम् (छा. ६।३।२-३) इत्यादि । तिस्रो देवता इति कृत्स्नमचिद्वस्तु निर्दिश्य स्वात्मकजीवानुप्रवेशेनैतद्विचित्रनामरूपभाक्करवाणीत्युक्तम् । अनेन जीवेनात्मना मदात्मकजीवेनात्मतयानुप्रविश्यैतद्विचित्रनामरूपभा-
15 क्करवाणीत्यर्थः। स्वात्मनो जीवस्य चात्मतयानुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति। तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् (तै. २।६) इति श्रुत्यन्तरेण स्पष्टमजीवं जगत्परेण ब्रह्मणात्मतयानुप्रविष्टमिति तदेतत्कार्यावस्थस्य

2. C. om. विविध.
4–6. A. C. om. परस्य ब्रह्मणः—वाच्यस्य च.
6. B. reads एव for च before जगतः.
7. E. reads अनपेक्षत्वम् for निरपेक्षत्वम्; E. reads विविध after तस्यैव.
12. C. reads आदि after देवता इति.
14. B. reads स्वात्मक for मदात्मक.
15. A. B. om. च after जीवस्य.
18. A. E, read च after कार्यावस्थस्य.

कारणावस्थस्य च चिदचिद्वस्तुनः सकलस्य स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वं परस्य च ब्रह्मण आत्मत्वमन्तर्यामिब्राह्मणादिषु सिद्धं स्मारितम्। अनेन पूर्वोक्ताशङ्का निरस्ता। अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयावस्थिते नामरूपव्याकरणवचनाच्चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति सदेव सोम्येदमग्र एकमेवासीत् (छा. ६।२।१) इत्यादि सर्वमुपपन्नतरम्। शरीरभूतचिदचिद्वस्तुगताः सर्वे विकाराश्चापुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम्। तदेतदधिकं तु भेदनिर्देशात् (ब्र. सू. २।१।२२) इत्यनन्तरमेव वक्ष्यति। तथैतदात्म्यमिदं सर्वम् (छा. ६।८।७) इति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति। तदेव च तत्त्वमसि (छा. ६।८।७) इति निगमयति। तथा प्रकरणान्तरस्थेष्वपि वाक्येषु सर्वं खल्विदं ब्रह्म (छा. ३।१४।१)। आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् (बृ. ४।५।६)। इदं सर्वं यदयमात्मा (बृ. २।४।५,४।५।७, नृ. ता. ५)। ब्रह्मैवेदं सर्वम् (नृ. ता. ५)। आत्मैवेदं सर्वम् (नृ. ता. ५) इत्यनन्यत्वं प्रतीयते। तथान्यत्वं च निषिध्यते सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद (बृ. २।४।६,४।५।७)। नेह नानास्ति किंचन (बृ. ४।४।१९)।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
(का. ४।१०, बृ. ४।४।१९)

1. C. om. सकलस्य; B. reads च after सकलस्य; B. C. om. च after सूक्ष्मस्य.

4. C. reads जीवे for सजीवे.

5. A. B. C. om. सोम्य.

8. A. B. read गुणात्मकत्वम् for गुणाकरत्वम्.

इति । तथा यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ( बृ. २।४।१४,४।५। १५ ) इत्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयदनन्यत्वमेव तात्त्विकमिति प्रतिपादयति । तदेवमारम्भणशब्दा-
5 दिभ्यो जगतः परमकारणात्परस्माद्ब्रह्मणोनन्यत्वमुपपद्यते ।

अत्रेदं तत्त्वम् । चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम् । तत्कदाचित्स्वस्मात्स्वशरीरतयापि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तु-
10 शरीरं तच्च कार्यावस्थमिति कारणात्परस्माद्ब्रह्मणः कार्यरूपं जगदनन्यत् । शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च न तु दृष्टान्तभावात् ( ब्र. सू. २।१।९ ) इत्यत्रोक्ता ।

15 ये तु कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति न तेषां कार्यकारणयोरनन्यत्वं सिध्यति । सत्यमिथ्यार्थयोरैक्यानुपपत्तेः । तथा सति ब्रह्मणो मिथ्यात्वं जगतः सत्यत्वं वा स्यात् ।

ये च कार्यमपि पारमार्थिकमभ्युपयन्त एव जीवब्रह्मणोरौ-
20 पाधिकमन्यत्वं स्वाभाविकं चानन्यत्वमचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरा-

5. E. reads उपपाद्यते for उपपद्यते.

6. C. reads ब्रह्मैव तत्प्रकारम् for तत्प्रकारं ब्रह्मैव.

9. C. om. स्थूल.

11. C. reads अन्यत् for अनन्यत्.

13. B. reads व्यवस्थया for व्यवस्था.

भावान्निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधिसंबन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामाच्च शक्तिपरिणामाभ्युपगमे शक्तेर्ब्रह्मणोऽनन्यत्वाच्च जीवब्रह्मणोः कर्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिन्योश्चिद्ब्रह्मणोश्च परिणामापरिणामवादिन्यः श्रुतयो व्याकुप्येयुः । 5

ये पुनर्निरस्तनिखिलभोक्तृत्वादिविकल्पविप्लवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारणं ब्रह्म । तच्च प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तात्मवदचिद्विलक्षणमवस्थितं सृष्टिवेलायां मृत्तिकाद्रव्यमिव घटशरावादिरूपं समुद्र इव च फेनतरङ्गबुद्बुदादिरूपो भोक्तृभोग्यनियन्तृरूपेणांशत्रयावस्थमवतिष्ठते । अतो भोक्तृत्वभोग्यत्वनियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत्तद्गतकार्यभेदवच्च व्यवतिष्ठन्ते । भोक्तृभोग्यनियन्तॄणां सदात्मनैकत्वं च घटशरावमणिकादीनां मृदात्मनैकत्ववदुपपद्यते । अतः सन्मात्रमेव द्रव्यं सर्वावस्थावस्थितमिति ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते । तेषां सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः । सर्वा हि श्रुतयः सस्मृती- 10 15

2. C. om. च after परिणामात्; C. E. read शक्तिब्रह्मणोः for शक्तेर्ब्रह्मणः.
4. C. reads व्याकुलीभवेयुः for व्याकुप्येयुः.
6. E. reads समस्त after भोक्तृत्वादि.
8. C. reads अविलक्षणम् for अचिद्विलक्षणम्.
10. C. om. च after इव.
11. A. B. read भोक्तृभोग्य for भोक्तृत्वभोग्यत्व.
12. C. reads तत् before तद्गत.
13. B. reads भोग्यभोक्तृ for भोक्तृभोग्य; A. B. read सदात्मकत्वम् for सदात्मनैकत्वम्.
14. C. reads सन्मात्रद्रव्यमेव for सन्मात्रमेव द्रव्यम्.
15 B. reads अन्यत् for अनन्यत्.

तिहासपुराणाः सर्वेश्वरेश्वरं सदैव सर्वज्ञं सर्वशक्ति सत्यसंकल्पं निरवद्यं देशकालानवच्छिन्नानवधिकातिशयानन्दं परमकारणं ब्रह्म प्रतिपादयन्ति। न पुनरीश्वरादपि परमीश्वरांशि सन्मात्रम्।

तथा हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा. ६।२।१)। तदैक्षत बहु स्यां प्रजायेयेति (छा. ६।२।३)। ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः (बृ. १।४।११) इति। आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ऐक्षत लोकान्नु सृजा इति (ऐ. १।१)। एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्य (म. ना. १) इत्यादिभिः परमकारणं सर्वेश्वरेश्वरो नारायण एवेत्यवगम्यते। सद्ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्थास्तत्तुल्यप्रकरणस्थेन नारायणशब्देन विशेषितास्तमेवावगमयन्ति।

तमीश्वराणां परमं महेश्वरं तदैवतानां परमं च दैवतम्।
(श्वे. ६।७)

स कारणं करणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिपः।
(श्वे. ६।९)

इतीश्वरस्यैव कारणत्वं श्रूयते। स्मृतिरपि मानवी ततः स्वयंभूर्भगवान् (मनुस्मृ. १।६) इति प्रकृत्य

3. C. reads ईश्वरांशे for ईश्वरांशि.
6. C. reads अत्यसृजत् for अत्यसृजत.
7. A. reads देवत्राक्षत्राणि for देवक्षत्राणि.
14. C. reads समान for तुल्य.
16. B. C. om. तदैवतानां परमं च दैवतम्.

सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥
(म. स्मृ. १।८)

इति। इतिहासपुराणान्यपि पुरुषोत्तममेव परमकारणमभिदधति। 5

नारायणो जगन्मूर्त्तिरनन्तात्मा सनातनः।
स सिसृक्षुः सहस्रांशादसृजत्पुरुषान्द्विधा ॥ (भार.)
विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।
(वि. पु. १।१।३५)

इत्यादिषु। 10

नचेश्वरः सन्मात्रमेवेति वक्तुं शक्यम्। तस्य तदंशत्वाभ्युपगमात्सविशेषत्वाच्च। न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगः कादाचित्क इति वक्तुं शक्यते। तेषां स्वाभाविकत्वेन सदातनत्वात्।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। 15
(श्वे. ६।८)

यः सर्वज्ञः सर्ववित् (मु. १।१।९,२।२।७) इत्यादिभ्यो ज्ञानानन्दादिशक्तियोग एवास्य स्वाभाविक इति मा वोचः। शक्तिः स्वाभाविकी ज्ञानबलक्रिया च स्वाभाविकीति पृथङ्निर्देशवैलक्षण्याप्रसङ्गाच्च। न च पाचकादिवत्सर्वज्ञ इत्यादिषु श- 20
क्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्यम्। कृत्प्रत्ययमात्रस्य शक्तावस्मरणात्। शक्तौ हस्तिकपाटयोः (पा. सू. ३।२।५४) इत्यादिषु केषांचिदेव कृत्प्रत्ययानां शक्तिविषयत्वस्मरणात्। पाचका-

2. reads अवासृजत् for अपासृजत्,

दिषु त्वगत्या लक्षणा समाश्रीयते । किं चेश्वरस्य तदंशविशेषत्वात्तस्य चांशित्वे तरङ्गात्समुद्रस्येवांशादंशिनोधिकत्वात्तमीश्वराणां परमं महेश्वरम् ( श्वे. ६।७ ) । न तत्समश्चाभ्यधिकश्च दृश्यते ( श्वे. ६।८ ) इत्यादीनीश्वरविषयाणि परःशतानि
5 वचांसि बाध्येरन् । किं च सन्मात्रस्य सर्वात्मकत्वेंशित्वे चेश्वरस्य तदंशविशेषत्वात्तस्य सर्वात्मकत्वांशित्वोपदेशा व्याहन्येरन् । न हि मणिकात्मकत्वं तदंशत्वं वा घटशरावादेः । स्वांशेषु सर्वेषु सन्मात्रस्य पूर्णत्वेनेश्वरांशेपि तस्य पूर्णत्वात्तदात्मकानि तदंशाश्चेतराणि वस्तूनीति चेन्न । घटेपि सन्मात्रस्य पूर्णत्वादी-
10 श्वरस्यापि घटात्मकत्वात्तदंशत्वप्रसङ्गात् । न च सन्मात्रस्य घटोस्ति पटोस्तीति वस्तुधर्मतयावगतस्य द्रव्यत्वं कारणत्वं चोपपद्यते । व्यवहारयोग्यता हि सत्त्वं विरोधिव्यवहारयोग्यता च तद्व्यवहारयोग्यस्यासत्त्वम् । द्रव्यमेव सदित्यभ्युपगमे क्रियादीनामसत्त्वप्रसङ्गः । क्रियादिषु काशकुशावलम्बनेपि सर्वत्रैकरूपा
15 सत्ता दुरुपपादा । सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसंधानात्सर्वगुणदोषसंकरप्रसङ्गश्च पूर्वमेवोक्तः । अतो यथोक्तप्रकारमेवानन्यत्वम् ॥ १५ ॥

अथोच्येतैकस्यैवावस्थान्तरयोगेपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते । मृदारुहिरण्यादिषु द्रव्यान्तरत्वेपि
20 दृश्यन्ते । तत्र मृद्धटादिषु कार्यकारणेषु बुद्धिशब्दान्तरादयोवस्थानिबन्धना एवेति कुतो निर्णीयत इति । तत्रोत्तरम् ।

1. C. reads सदंश for तदंश.

2. B. om. अंशात्.

9. B. om. इति after वस्तूनि; B. reads घटादिषु for घटेपि.

10. A. B. read घटात्मकत्व for घटात्मकत्वात्.

11. C. reads वा for च after कारणत्वम्.

13. C. om. च before तत्.

## भावे चोपलब्धेः ॥ १६ ॥

कुण्डलादिकार्यसद्भावे च कारणभूतहिरण्यस्योपलब्धेः । इदं कुण्डलं हिरण्यमिति हिरण्यत्वेन प्रत्यभिज्ञानादित्यर्थः । न चैवं हिरण्यादिषु द्रव्यान्तरेषु मृदादय उपलभ्यन्ते । अतो बालयुवादिवत्कारणभूतमेव द्रव्यमवस्थान्तरापन्नं कार्यमिति नीगते । 5
द्रव्यान्तरवादिनाप्यभ्युपेतेनावस्थान्तरयोगेन बुद्धिशब्दान्तरादिपूपपन्नेष्वनुपलब्धद्रव्यान्तरकल्पनानुपपत्तेश्च । न च जातिनिबन्धनेयं प्रत्यभिज्ञा । जात्याश्रयभूतद्रव्यान्तरानुपलब्धेः । एकमेव हि हेमजातीयं द्रव्यं कार्यकारणोभयावस्थं दृश्यते । न च द्रव्यभेदे समवायिकारणानुवृत्त्या कार्ये प्रतिसंधानमिति 10
वक्तुं शक्यम् । द्रव्यान्तरत्वे सत्याश्रयानुवृत्तिमात्रेण तदाश्रिते द्रव्यान्तरे प्रतिसंधानानुपलब्धेः । गोमयादिकार्ये वृश्चिकादौ गोमयादिप्रतिसंधानं न दृश्यत इति चेन्न । तत्राप्यादिकारणभूतपृथिवीद्रव्यप्रत्यभिज्ञानात् । अग्निकार्ये धूमेऽग्निप्रत्यभिज्ञानं न दृश्यत इति चेद्भवतु न तत्र प्रत्यभिज्ञानम् । तथापि न 15
दोषः । अग्नेर्निमित्तकारणमात्रत्वात् । अग्निसंयुक्तार्द्रेन्धनाद्धि धूमो जायते । गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः । अतः का-

---

2. E. reads कारणभूतस्य for कारणभूत.

4. C. reads त्व after बाल.

7. B. reads द्रव्यत्वं तत for द्रव्यान्तर; C. reads अजाति for जाति after न च.

8. B. reads द्रव्यत्व for जाति.

9. C. om. हि after एव.

11. A. B. read तदाश्रित for तदाश्रिते.

13. C. E. read आद्य for आदि before कारण.

15. B. reads न after चेत्; C. reads भवतु after प्रत्यभिज्ञानम् instead of after चेद्.

र्यभावे च तदेवेदमित्युपलब्धेर्बुद्धिशब्दान्तरादयोवस्थाभेदमात्र-
निबन्धना इत्यवगम्यते । तस्मात्कारणादनन्यत्कार्यम् ॥ १६ ॥

इतश्च

## सत्त्वाच्चापरस्य ॥ १७ ॥

5 अपरस्य कार्यस्य कारणे सत्त्वाच्च कारणात्कार्यस्यानन्यत्वम्।
लोकवेदयोर्हि कार्यमेव कारणतया व्यपदिश्यते । यथा लोके
सर्वमिदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति । वेदे च
सदेव सोम्येदमग्र आसीन् ( छा. ६।२।१ ) इति ॥ १७ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशे-
10 षाद्युक्तेः शब्दान्तराच्च ॥ १८ ॥

यदुक्तं कारणे कार्यस्य सत्त्वं लोकवेदाभ्यामवगम्यत इति
तदयुक्तम् । असद्व्यपदेशात् । असदेवेदमग्र आसीत् ( छा.
३।१९।१,६।२।१ ) । असद्वा इदमग्र आसीत् ( तै. २।७ ) । इदं
वाग्रे नैव किंचनासीत् ( बृ. १।२।१ ) इति । लोके च सर्वं
15 घटशरावादिकं पूर्वाह्णे नासीदिति । अतो यथोक्तं नोपपद्यत
इति चेत्तन्न । धर्मान्तरेण तथा व्यपदेशात् । स खल्वसद्व्य-
पदेशस्तस्यैव कार्यद्रव्यस्य पूर्वकाले धर्मान्तरेण संस्थानान्तरेण
न भवदभिप्रेतेन तुच्छत्वेन । सत्त्वासत्त्वे हि द्रव्यधर्मावित्यु-
क्तम् । तत्र सत्त्वधर्माद्धर्मान्तरमसत्त्वम् । इदंशब्दनिर्दिष्टस्य ज-
20 गतः सत्त्वधर्मो नामरूपे । असत्त्वधर्मस्तु तद्विरोधिनी सूक्ष्मा-
वस्था । अतो जगतो नामरूपयुक्तस्य तद्विरोधिसूक्ष्मदशापत्ति-
रसत्त्वम् ।

कथमिदमवगम्यते । वाक्यशेषाद्युक्तेः शब्दान्तराच्च । वा-

13. A. B. om. असद्वा इदमग्र आसीत.

क्यशेषस्तावदिदं वाग्रे नैव किंचनासीत् ( बृ. १।२।१ ) इत्यत्र तदसदेव सन्मनोकुरुत तस्यामिति ( बृ. १।२।१ ) इति । अनेन वाक्यशेषगतेन मनस्कारलिङ्गेनासच्छब्दार्थे तुच्छातिरिक्ते निश्चिते तदैकार्थ्यादसदेवेदम् ( छा. ३।१९।१,६।२।१ ) इत्यादिष्वप्यसच्छब्दस्यायमेवार्थ इति निश्चीयते । युक्तेश्चासत्त्वस्य धर्मान्तरत्वमवगम्यते । युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्मावगमयति । मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगो घटोस्तीतिव्यवहारहेतुः । तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीतिव्यवहारहेतुः । तत्र कपालाद्यवस्थायास्तद्विरोधित्वेन सैव घटाद्यवस्थस्य नास्तीतिव्यवहारहेतुः । न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । न च कल्प्यते । तावतैवाभावव्यवहारोपपत्तेः । तथा शब्दान्तराच्च पूर्वकाले धर्मान्तरयोग एवावगम्यते । शब्दान्तरं च पूर्वोदाहृतं सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इत्यादिकम् । तत्र हि कुतस्तु खलु सोम्यैवं स्यात् ( छा. ६।२।२ ) इति तुच्छत्वमाक्षिप्य सत्त्वेव सोम्येदमग्र आसीत ( छा. ६।२।२ ) इति स्थापितम् । तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत (बृ. १।४।७) इति सुस्पष्टमुक्तम् ॥ १८ ॥

इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं द्वाभ्यां सूत्राभ्यां दर्शयति ।

2. E. om. सत् after एव.

7. C. reads आकारः for आकारयोगः.

11. E reads तत् after न च; B. reads कल्पते for कल्प्यते.

12. C reads शब्दान्तर for धर्मान्तर.

16. L. reads व्यत्र before स्थापितम्.

## पटवच्च ॥ १९ ॥

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते तद्वद्ब्रह्मापि ॥ १९ ॥

## यथा च प्राणादिः ॥ २० ॥

5 यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते तद्वद्ब्रह्मैकमेव विचित्रस्थिरत्रसरूपं जगद्भवतीति परमकारणात्परस्माद्ब्रह्मणोनन्यत्वं जगतः सिद्धम् ॥ २० ॥ आरम्भणाधिकरणं समाप्तम्। ( ६ )

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

10 जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिस्तत्त्वमसि (छा. ६।८।७)। अयमात्मा ब्रह्म ( बृ. २।५।१९ ) इत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तम्। तत्रेदं चोद्यते। यदीतरस्य जीवस्य ब्रह्मभावोमीभिर्वाक्यैर्व्यपदिश्यते तदा ब्रह्मणः सार्वज्ञ्यसत्यसंकल्पत्वादियुक्तस्यात्मनो हितरूपजगदकरणमहितरूपजग-
15 त्करणमित्यादयो दोषाः प्रसज्येरन्। आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरं चेदं जगत्। न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान्प्रवर्तते। जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः। भेदे सत्यनन्यत्वासिद्धेः। औपाधिकभेदविषया भेदश्रुतयः स्वाभाविकाभेदविष-
20 याश्चाभेदश्रुतय इति चेत्तत्रेदं वक्तव्यम्। स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा न वा।

---

3. A. B. read भजन्ति for भजन्ते.

5. B. C. read वा for च after यथा.

6. E. reads आदि after नामरूप.

21. C. reads अभिन्नजीवः for अभिन्न जीवम्; C. om. वा after जानाति.

न जानाति चेत्सर्वज्ञत्वहानिः । जानाति चेत्स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या । जीवब्रह्मणोरज्ञानकृतो भेदस्तद्विषया भेदश्रुतिरिति चेत्तत्रापि[1] जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थम् । ब्रह्माज्ञानपक्षे[2] स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति । अज्ञानेन प्रकाशस्तिरोहितश्चेत्तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम् । अत इदमसंगतं ब्रह्मणो जगत्कारणत्वम् ॥ २१ ॥

इति प्राप्तेऽभिधीयते । 10

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति । आध्यात्मिकादिदुःखयोगार्हात्प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म । कुतः । भेदनिर्देशात् । प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म । य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२२ )। 15

पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।
( श्वे. १।६ )

स कारणं करणाधिपाधिपः । ( श्वे. ६।९ )

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति । 20
( मु. ३।१।१, श्वे. ४।६ )

ज्ञाज्ञौ द्वावजावीशानीशौ ( श्वे. १।९ ) । प्राज्ञेनात्मना संपरिष्वक्तः ( बृ. ४।३।२१ ) । प्राज्ञेनात्मनान्वारूढः (बृ.४।३।३५)।

---

1. E. reads अत्रापि for तत्रापि.
2. B. reads ब्रह्मज्ञान for ब्रह्माज्ञान.

अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः। (श्वे. ४।९)

प्रधानक्षेत्रज्ञपतिर्गुणेशः । ( श्वे. ६।१६ )

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । ( श्वे. ६।१३ )

योऽव्यक्तमन्तरे संचरन्यस्याव्यक्तं शरीरं यमव्यक्तं न वेद । योक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेद । यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरीरं यं मृत्युर्न वेद । एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः । (सुबा. १५) इत्यादिभिः ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्यापहतपाप्मा (छा. ८।१।५) इत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणाकरब्रह्मभावानुपपत्तिः । सामानाधिकरण्यनिर्देशो यस्यात्मा शरीरम् ( बृ. ३।७।२२ ) इत्यादिश्रुतर्जीवस्य ब्रह्मशरीरत्वाद्ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारब्रह्मप्रतिपादनपरश्चैतदविरोधी । प्रत्युतैतस्यार्थस्योपपादकश्चेत्यवस्थितेरिति काशकृत्स्नः (ब्र. सू. १।४।२२) इत्यादिभिरसकृदुपपादितम् । अतः सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं तदेव ब्रह्म स्थू-

7–8. C. om. यो मृत्यु° ... वेद.

11. C. reads स्व before स्वरूप

त्वचिदचिद्वस्तुशरीरं जगदाख्यं कार्यमिति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः । जगतो ब्रह्मकार्यत्वं ब्रह्मणोनन्यत्वमचिद्वस्तुनो जीवस्य च ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावासंकरः सर्वश्रुत्यविरोधश्च भवति । सदेव सोम्येदमग्र आसीदेकमेव ( छा. ६।२।१ ) इत्यविभागावस्थायामचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम् । वैषम्यनैर्घृण्ये न सापेक्षत्वात् । न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ( ब्र. सू. २।१।३४–३५ ) इति सूत्रद्वयोदितत्वात्तदानीमपि सूक्ष्मरूपेणावस्थानस्य । अविभागस्तु नामरूपविभागाभावादुपपद्यते । अतो ब्रह्मकारणत्वं संभवत्येव ।

ये तु पुनरस्यैव जीवस्याविद्याविद्युक्तावस्थामभिप्रेत्येमं भेदं वर्णयन्ति तेषामिदं सर्वमसंगतं स्यात् । न हि तदवस्थस्य सर्वज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मकत्वं सर्वनियन्तृत्वमित्यादीनि सन्ति । अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते । तस्य सर्वस्याविद्यापरिकल्पितत्वात् । तत्सर्वं ह्यविद्यापरिकल्पितं त्वन्मते । न चाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतादिभेदवत्परस्परभेदोत्र सूत्रकारेणाधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) इत्यादिषु प्रतिपाद्यते । ब्रह्मजिज्ञासा कर्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जग-

4. C. reads संकरः for असंकरः.

5. C. reads अपि after अवस्थायाम्.

13. C. reads न ये for ये तु; B. reads येन for ये; E. om. तु; E. reads एवम् for इमम्.

14. A. B. om. सर्वेश्वरत्वम्.

16. B. om. तस्य सर्वस्याविद्यापरिकल्पितत्वात्; A. reads तत्सर्वस्य for तस्य सर्वस्य.

16-18. C. om. भेदः...शुक्तिकारजतादि.

जन्मादिकारणस्य वेदान्तवेद्यत्वं तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियते । अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् । न तु दृष्टान्तभावात् ( ब्र. सू. २।१।८-९ ) इति सूत्रद्वयमेतदधिकरणसिद्धमनुवदति । तत्र हि विलक्षणयोः कार्यकारणभावसंभव
5 एवाधिकरणार्थः । असदिति चेन्न प्रतिषेधमात्रत्वात् ( ब्र.सू. २।१।७ ) इति च पूर्वाधिकरणस्थमनुवदति ॥ २३ ॥ इतरव्यपदेशाधिकरणं समाप्तम् । ( ७ )

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

परस्य ब्रह्मणः सर्वज्ञस्य सत्यसंकल्पस्य स्थूलसूक्ष्मावस्थ-
10 सर्वचेतनाचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मकत्वं सकलेतरविलक्षणत्वं चाविरुद्धमिति स्थापितम । इदानीं सर्वज्ञस्य सत्यसंकल्पस्य परस्य ब्रह्मणः संकल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते । ननु च परिमितशक्तीनां कारककलापोपसंहारसापेक्षत्वदर्शनेनैव सर्वशक्तेर्ब्रह्मणः कारकक-
15 लापानुपसंहारेण जगत्कारणत्वविरोधः कथमाशङ्क्यते । उच्यते । लोके तत्तत्कार्यजननशक्तियुक्तस्यापि तत्तदुपकरणापेक्षित्वदर्शनात्सर्वशक्तियुक्तस्य परस्य ब्रह्मणोऽपि तत्तदुपकरणविरहिणः स्रष्टृत्वं नोपपद्यत इति कस्यचिन्मन्दधियः शङ्का जायत इति सा निराक्रियते । घटपटादिकारणभूतानां कुलालकुविन्दादीनां त-
20 ज्जननसामर्थ्ये सत्यपि कानिचिदुपकरणान्युपसंहृत्यैव जनयितृत्वं दृश्यते । तज्जननाशक्ताः कारककलापोपसंहारेपि जनयितुं

---

4. B. reads भावः for भावसंभवः; C. reads असंभवः for संभवः.

10. A. B. read सर्वात्मत्वम् for सर्वात्मकत्वम्.

11. C. om. सर्वज्ञस्य.

14. C. om. एव after दर्शनेन.

16. C. reads अपेक्षत्व for अपेक्षित्व.

20. E. reads तत् after तत्.

न शक्नुवन्ति । शक्ताः पुनः कारककलापोपसंहारे जनयन्तीत्येतावानेव विशेषः । ब्रह्मणोपि सर्वशक्तेः सर्वस्य जनयितृत्वं तदुपकरणानामनुपसंहारे नोपपद्यते । प्राक्सृष्टेश्चासहायत्वं सदेव सोम्येदमग्र आसीत् (छा. ६।२।१) । एको ह वै नारायण आसीत् (महा. १) इत्येवमादिषु प्रतीयते । अतः स्रष्टृत्वं नोपपद्यत इत्येवं प्राप्तम् । तदिदमाशङ्कते । उपसंहारदर्शनान्नेति चेदिति । 5

परिहरति । न क्षीरवद्धीति । न सर्वेषां कार्यजननशक्तानामुपसंहारसापेक्षत्वमस्ति । यथा क्षीरजलादेर्दधिहिमजननशक्तस्य तज्जनने । एवं ब्रह्मणोपि स्वयमेव सर्वजननशक्तेः सर्वस्य जनयितृत्वमुपपद्यते । हीति प्रसिद्धवन्निर्देशश्चोद्यस्य मन्दताख्यापनाय । क्षीरादिष्वातञ्चनाद्यपेक्षा न दध्यादिभावाय । अपि तु शैघ्र्यार्थं रसविशेषार्थं वा ॥ २४ ॥ 10

## देवादिवदपि लोके ॥ २५ ॥

यथा देवादयः स्वे स्वे लोके संकल्पमात्रेण स्वापेक्षितानि सृजन्ति तथासौ पुरुषोत्तमः कृत्स्नं जगत्संकल्पमात्रेण सृजति । देवादीनां वेदावगतशक्तीनां दृष्टान्ततयोपादानं ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् ॥ २५ ॥ उपसंहारदर्शनाधिकरणं समाप्तम् । ( ८ ) 15

1. A. B. om. पुनः; C. om. इति after जनयन्ति.

8. B. C. om. इति after क्षीरवद्धि.

9. A. reads हैम for हिम.

12. E. reads सा before न.

13. E. reads च for वा.

15. C. reads स्व before संकल्प.

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) । इदं वाग्रे नैव किंचनासीत् ( बृ. १।२।१ ) । आत्मा वा इदमेक एवाग्र आसीत् ( ऐ. १।१ ) इत्यादिषु कारणावस्थायां ब्रह्मैकमेव निर-
5 वयवमासीदिति कारणावस्थायां निरस्तचिदचिद्विभागतया निरवयवं ब्रह्मैवासीदित्युक्तम् । तदविभागमेकं निरवयवमेव ब्रह्म बहु स्यामिति संकल्प्याकाशवाय्वादिविभागं ब्रह्मादिस्तम्बपर्यन्त-क्षेत्रज्ञविभागं चाभवदिति चोक्तम् । एवं सति तदेव परं ब्रह्म कृत्स्नं कार्यत्वेनोपयुक्तमित्यभ्युपगन्तव्यम् । अथ चिदंशः क्षेत्र-
10 ज्ञविभागविभक्तोचिदंशश्चाकाशादिविभागविभक्त इत्युच्यते तदा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ( छा. ६।२।१ ) । ब्रह्मैकमेव ( बृ. १।४।११ ) । आत्मैक एव ( बृ. १।४।१७ ) इत्येवमादयः कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः कुप्येयुर्बाधिता भवेयुः । यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म
15 कारणं स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते तथापि शरीर्यंशस्यापि कार्यत्वाभ्युपगमादुक्तदोषो दुर्वारः । तस्य निरवयवस्य बहुभवनं च नोपपद्यते । कार्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते । तस्मादसमञ्जसमेवाभाति । अतो ब्रह्मकारणत्वं नोपपद्यते ॥ २६ ॥
20 इत्याक्षिप्ते समाधत्ते ।

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्द उक्तदोषं व्यावर्तयति । नैवमसामञ्जस्यम् । कुतः । श्रुतेः । श्रुतिस्तावन्निरवयवत्वं ब्रह्मणस्ततो विचित्रसर्गं चाह ।

7. C. reads पर्यन्तम् for पर्यन्त.

15. B. reads ब्रह्मणः for ब्रह्म before कार्यम्.

18. C. reads इव for एव.

श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः। ननु श्रुतिरप्यग्निना सिञ्चेदितिवत्परस्परान्वयायोग्यमर्थं प्रतिपादयितुं न समर्थात आह। शब्दमूलत्वादिति। शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुध्यत इति न सामान्यतो दृष्टं साधनं दूषणं वार्हति ब्रह्म ॥ २७ ॥ 5

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

किं चैवं वस्त्वन्तरसंबन्धिनो धर्मस्य वस्त्वन्तरे चारोपणे सत्यचेतने घटादौ दृष्टा धर्मास्तद्विसजातीये चेतने नित्य आत्मन्यपि प्रसज्यन्ते। तदप्रसक्तिश्च भावस्वभाववैचित्र्यादित्याह। विचित्राश्च हीति। यथाग्निजलादीनामन्योन्यविसजातीयानामौष्ण्यादिशक्तयश्च विसजातीया दृश्यन्ते तद्वल्लोकदृष्टसर्वविसजातीये परे ब्रह्मणि तत्र तत्रादृष्टाः सहस्रशः शक्तयः सन्तीति न किंचिदनुपपन्नम्। यथोक्तं भगवता पराशरेण। 10

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥ (वि. पु. १।३।१) 15

इति सामान्यदृष्ट्या परिचोद्य

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥ (वि.पु.१।३।२-३)

इति। श्रुतिश्च 20

किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥

4. C. reads सर्व for अर्थस्य; B. om. न before विरुध्यते; C. reads विरुद्धः for विरुध्यते.

8. C. reads पटादौ for घटादौ.

12. C. om. one तत्र.

ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्॥
(तै. ब्रा. २।८।९)

इति । सामान्यतो दृष्टं चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि
5 नावतरतीत्यर्थः ॥ २८ ॥

इतश्च

## स्वपक्षदोषाच्च ॥ २९ ॥

स्वपक्षे प्रधानादिकारणवादे लौकिकवस्तुविसजातीयत्वाभा-
वेन प्रधानादेर्लोकदृष्टा दोषास्तत्र भवेयुरिति सकलेतरविलक्षणं
10 ब्रह्मैव कारणमभ्युपगन्तव्यम् । प्रधानं च निरवयवम् । तस्य
निरवयवस्य कथमिव महदादिविचित्रजगदारम्भ उपपद्यते ।
सत्त्वं रजस्तम इति तस्यावयवा विद्यन्त इति चेत् । तत्रेदं वि-
वेचनीयम् । किं सत्त्वरजस्तमसां समूहः प्रधानमुत सत्त्वरज-
स्तमोभिरारब्धं प्रधानम् । अनन्तरे कल्पे प्रधानं कारणमिति
15 स्वाभ्युपगमविरोधः । स्वाभ्युपेतसंख्याविरोधश्च । तेषामपि
निरवयवानां कार्यारम्भविरोधश्च । समूहपक्षे च तेषां निर-
वयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां न स्थूलद्रव्यारम्भ-
कत्वसिद्धिः । परमाणुकारणवादेपि तथैव । अणवो हि निरंशा
निष्प्रदेशाः प्रदेशभेदमनपेक्ष्य परस्परं संयुज्यमाना अपि न
20 स्थूलकार्यारम्भाय प्रभवेयुः ॥ २९ ॥

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सकलेतरवस्तुविसजातीया परा देवता सर्वशक्त्युपेता च ।
तथैव परां देवतां दर्शयन्तीह श्रुतयः ।

---

11. E. reads प्रधानस्य after निरवयवस्य.
23. C. om. इह.

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।
(श्वे. ६।८)
तथापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः (छा. ८।१।५) इति सकलेतरविसजातीयतां परस्या देवतायाः प्रतिपाद्य सत्यकामः सत्यसंकल्पः (छा. ८।१।५) 5
इति सर्वशक्तियोगं प्रतिपादयन्ति। तथा मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोवाक्यनादरः (छा. ३।१४।२) इति च ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ 10

यद्यप्येकमेव ब्रह्म सकलेतरविलक्षणं सर्वशक्ति तथापि न तस्य कार्यं करणं च विद्यते (श्वे. ६।८) इति करणविरहिणस्तस्य न कार्यारम्भः संभवतीति चेत्। तत्रोत्तरं शब्दमूलत्वाद्विचित्राश्च हीत्युक्तम्। शब्दैकप्रमाणकं सकलेतरविलक्षणं तत्तत्करणविरहेणापि तत्तत्कार्यसमर्थमित्यर्थः। तथा च श्रुतिः प- 15
श्यत्यचक्षुः स शृणोत्यकर्णः (श्वे. ३।१९)। अपाणिपादो जवनो ग्रहीता (श्वे. ३।१९) इत्येवमाद्या ॥ ३१ ॥ कृत्स्नप्रसक्त्यधिकरणं समाप्तम्। (९)

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

यद्यपीश्वरः प्राक्सृष्टेरेक एव सन्सकलेतरविलक्षणत्वेन 20
सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत्स्रष्टुं शक्नोति तथा-

---

7. A. E. read सत्यकामः after भारूपः; A. B. om. सर्वकर्मा.

9. C. om. च.

13. C. reads कार्यारम्भसंभवः for कार्यारम्भः संभवति.

21. E. reads एवम् for एव after स्वयम्; C. om. वि before चित्रम्.

पीश्वरस्य कारणत्वं न संभवति । प्रयोजनवत्त्वाद्धि चित्रसृष्टेः । ईश्वरस्य च प्रयोजनाभावात् । बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनं स्वार्थः परार्थो वा । न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किंचन प्रयोजनमनवाप्तमवाप्यते । नापि परार्थः । आप्तसमस्तकामस्य परार्थता हि परानुग्रहेण भवति । न चेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत्करुणावान्सृजति । प्रत्युत सुखैकतानमेव सृजेज्जगत्करुणया सृजन् । अतः प्रयोजनाभावाद्ब्रह्मणः कारणत्वं नोपपद्यत इति ॥ ३२ ॥

एवं प्राप्ते प्रचक्ष्महे ।

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसंकल्पविकार्यविविधचिदचिन्मिश्रजगत्सर्गे लीलैव केवला प्रयोजनम् । लोकवत् । यथा लोके सप्तद्वीपां मेदिनीमधितिष्ठतः संपूर्णशौर्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्दुकाद्यारम्भा दृश्यन्ते तथैव परस्यापि ब्रह्मणः स्वसंकल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ॥ ३३ ॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥३४॥

यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचि-

1 C. reads ईश्वर for ईश्वरस्य.
4. A. B. read आप्त for अवाप्त.
5. B. C. om. समस्त.
7. C. reads करुणया for करुणावान्.
12. E. reads विचित्र after विविध.
13. E. reads केवलम् for केवला.
14. C. reads वीर्यशौर्य for शौर्यवीर्य.

न्यशक्तियोगात्प्राक्सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः संभाव्येत तथापि देवतिर्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत । अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति । तत्रोत्तरं न सापेक्षत्वादिति । न प्रसज्येयातां वैषम्यनैर्घृण्ये । कुतः । सापेक्षत्वात् । 5
सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वाद्विषमसृष्टेः । देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्मसापेक्षं दर्शयन्ति हि श्रुतिस्मृतयः । साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा ( बृ. ४।४।५ ) ।
तथा भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां 10
क्षेत्रज्ञानां प्राचीनकर्मशक्तिरेवेत्युक्तम् ।

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥
निमित्तमात्रं मुक्त्वैव नान्यत्किंचिदपेक्षते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ॥ 15

( वि. पु. १।४।५१-५२ )

इति । स्वशक्त्या स्वकर्मणैव देवादिवस्तुताप्राप्तिरिति ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति । कुतः । अविभागश्रवणात् । सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इति । 20
अतस्तदानीं तदभावात्तत्कर्म न विद्यते कथं तदपेक्षं सृष्टिवैष-

7. B. om. शरीर; E. reads सापेक्षत्वम् for सापेक्षम्; C. om. हि after दर्शयन्ति.

14. A. reads उक्त्वा for मुक्त्वा.

20. A. B. om. नाम.

म्यमित्युच्यत इति चेन्न । अनादित्वात्क्षेत्रज्ञानां तत्कर्मप्रवाहाणां च । तदनादित्वेप्यविभाग उपपद्यते च यतस्तत्क्षेत्रज्ञवस्तु परित्यक्तनामरूपं ब्रह्मशरीरतयापि पृथग्व्यपदेशानर्हमतिसूक्ष्ममवतिष्ठते । तथानभ्युपगमेकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च ।
5 उपलभ्यते च तेषामनादित्वं न जायते म्रियते वा विपश्चित् (का. २।१८) इति । सृष्टिप्रवाहानादित्वं च सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् (म. ना. ५।७) इत्यादौ। तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत (बृ. १।४।७) इति नामरूपव्याकरणमात्रश्रवणात्क्षेत्रज्ञानां स्वरूपानादित्वं
10 सिद्धम् । स्मृतावपि

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । (गी. १३।१९) इति । अतः सर्वविलक्षणत्वात्सर्वशक्तित्वाल्लीलैकप्रयोजनत्वात्क्षेत्रज्ञकर्मानुगुण्येन विचित्रसृष्टियोगाद्ब्रह्मैव जगत्कारणम् ॥३५॥

## सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

15 प्रधानपरमाण्वादीनां कारणत्वे यद्धर्मवैकल्यमुक्तं वक्ष्यमाणं च तस्य सर्वस्य धर्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम् ॥ ३६ ॥ प्रयोजनवत्त्वाधिकरणं समाप्तम् । (१०)

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसा-
20 भाष्ये द्वितीयाध्यायस्य प्रथमः पादः ॥

---

2. A. B. read तत् after यतस्तत्.
3. C. reads नामरूप for नामरूपम्.
4. C. om. अवतिष्ठते.
15. C. om. यत् after कारणत्वे.

# अथ श्रीभाष्ये

## द्वितीयाध्यायस्य द्वितीयः पाद आरभ्यते।

## रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति । तत्र परैरुद्भाविता
दोषाश्च परिहृताः । इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षि- 5
प्यन्ते । इतरथा कस्यचिन्मन्दधियस्तेषां पक्षाणां युक्त्याभास-
मूलतामजानतः प्रामाणिकत्वशङ्कया वैदिकपक्षे किंचिच्छ्रद्धावै-
कल्यं जायेतापि । अतः परपक्षप्रतिक्षेपायानन्तरः पादः प्रव-
र्तते । तत्र प्रथमं तावत्कापिलमतं निरस्यते । वैदिकानुमतस-
त्कार्यवादाद्यर्थसंग्रहेण तस्य सत्पक्षनिक्षेपसंभावनाभ्रमहेतुत्वा- 10
तिरेकात् । ईक्षतेर्नाशब्दम् ( ब्र. सू. १।१।५ ) इत्यादिभिर्वैदि-
कवाक्यानामतत्परत्वमात्रमुक्तम् । अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः
क्रियत इति न पौनरुक्त्याशङ्का ।

एषा साङ्ख्यानां दर्शनस्थितिः ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । 15
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

( सां. का. ३ )

इति तत्संग्रहः । मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि ला-
घवप्रकाशचलनावष्टम्भनगौरवावरणकार्याण्यत्यन्तातीन्द्रियाणि

---

7. C. reads वेदिक for वैदिक.

8. A. B. read अनन्तर for अनन्तरः.

10. B. C. read उपष्टम्भन for अवष्टम्भन.

कार्यैकनिरूपणीयविवेकान्यन्यूनातिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि। सा च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतनानेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः। अपि तु परमकारणमेव।
5 महदाद्यास्तद्विकृतयोन्येषां च प्रकृतयः सप्त। महानहंकारः शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तत्राहंकारस्त्रिविधो वैकारिकस्तैजसो भूतादिश्च क्रमात्सात्त्विको राजसस्तामसश्च। तत्र वैकारिकः सात्त्विक इन्द्रियादिः। भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः। तैजसो
10 राजसस्तूभयोरनुग्राहकः। आकाशादीनि पञ्च महाभूतानि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणि मन इति केवलविकाराः षोडश। पुरुषस्तु निष्परिणामत्वेन न कस्यचित्प्रकृतिर्न कस्यचिद्विकृतिः। तत एव निर्धर्मकश्चैतन्यमात्रवपुर्नित्यो निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च। नि-
15 र्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न संभवति। एवंभूतेपि तत्त्वे मूढाः प्रकृतिपुरुषसंनिधिमात्रेण पुरुषस्य चैतन्यं प्रकृतावध्यस्य प्रकृतेश्च कर्तृत्वं स्फटिकमणाविव जपाकुसुमस्यारुणिमानं पुरुषेध्यस्याहं कर्ता भोक्तेति मन्यन्ते। एवमज्ञानाद्भोगस्तत्त्वज्ञानाच्चापवर्गः। तदेतत्प्रत्यक्षानुमानागमैः साध-
20 यन्ति। तत्र प्रत्यक्षसिद्धेषु पदार्थेषु नातीव विवादास्पदमस्ति। आगमोपि कपिलादिसर्वज्ञज्ञानमूल इति सोपि प्रथमे काण्डे प्रमाणलक्षणे निरस्तप्रायः। यदिदं प्रधानमेव जगत्कारणमित्यनुमानं तन्निरसनेन तन्मतं निरस्तं भवतीति तदेव निरस्यते।

ते चैवं वर्णयन्ति। कृत्स्नस्य जगत एकमूलत्वमवश्याभ्यु-

1. B. C. E. read निरूपण for निरूपणीय; C. reads अनतिरेकाणि for अतिरेकाणि.
23. C. reads सर्वम् after तन्मतम्.

पगमनीयम् । अनेकेभ्यः कार्योत्पत्त्यभ्युपगमे कारणानवस्था-
नात् । तन्तुप्रभृतयो ह्यवयवाः स्वांशभूतैः षड्भिः पार्श्वैः परस्परं
संयुज्यमाना अवयविनमुत्पादयन्ति । ते च तन्त्वादयः स्वाव-
यवैस्तथाभूतैरुत्पाद्यन्ते । ते च तथाभूतैः स्वावयवैरिति परमा-
णुभिरपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानैरेव स्वकार्योत्पाद-   5
नमभ्युपेतव्यम् । अन्यथा प्रथिमानुपपत्तेः । परमाणवोप्यंशि-
त्वेन स्वांशैस्तथैवोत्पाद्यन्ते ते च स्वांशैरिति न कचित्कारण-
व्यवस्थितिः । अतः कारणव्यवस्थासिद्ध्यर्थमेकं द्रव्यं विविध-
विचित्रपरिणामशक्तियुक्तं स्वयमप्रच्युतस्वरूपमेव महदाद्यनन्ता-
वस्थाश्रयं कारणमाश्रयणीयम् । तच्चैकं कारणं गुणत्रयसाम्य-   10
रूपं प्रधानमिति तत्कल्पनहेतूनुपन्यस्यन्ति ।

भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्तम् ( सां. का. १५-१६ ) इति ।

अयमर्थः । विश्वरूपमेव वैश्वरूप्यं विचित्रसंनिवेशं तनुभु-   15
वनादि कृत्स्नं जगत् । तच्च जगद्विचित्रसंनिवेशत्वेन कार्यभूतं
तत्सरूपाव्यक्तकारणकम् । कुतः । कार्यत्वात् । कार्यस्य हि
सर्वस्य तत्सरूपात्कारणविशेषाद्विभागस्तस्मिन्नेवाविभागश्च दृ-
श्यते । यथा घटमुकुटादेः कार्यस्य तत्सरूपान्मृत्सुवर्णादेः का-
रणाद्विभागस्तस्मिन्नेव चाविभागः । अतो विश्वरूपस्य जगत-   20

---

4. B. om. उत्पाद्यन्ते । ते च तथाभूतैः.
6. C. reads अभ्युपेत्यम् for अभ्युपेतव्यम्.
8. A, B. read ततः for अतः; B. reads एक for एकम्.
10. C, E. read आश्रयः for आश्रयम्.
13. A. reads कार्यकारण for कारणकार्य.
18. E. reads स्वरूपात् for सरूपात्.

स्तत्स्वरूपात्प्रधानादुत्पत्तिस्तस्मिन्नेव लयश्चेति प्रधानकारणकमेव जगत्। गुणत्रयसाम्यरूपं प्रधानमेव जगत्स्वरूपं कारणम्। सत्त्व-रजस्तमोमयसुखदुःखमोहात्मकत्वाज्जगतः। यथा च मृदात्मनो घटस्य मृद्द्रव्यमेव कारणम्। तदेव हि तदुत्पत्त्याख्यप्रवृत्तिशक्ति-
5 मत्। तथा दर्शनात्। अव्यक्तस्य गुणसाम्यरूपस्य देशतः काल-तश्चापरिमितस्यैव कारणत्वं भेदानां महदहंकारतन्मात्रादीनां परिमितत्वादवगम्यते। महदादीनि च घटादिवत्परिमितानि कृत्स्नजगदुत्पत्तौ न प्रभवन्ति। अतस्त्रिगुणं जगद्गुणत्रयसा-म्यरूपप्रधानैककारणकमिति निश्चीयते। अत्रोच्यते।

10 रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च। अनुमीयत इत्यनुमानम्। न भवदुक्तं प्रधानं विचित्रजगद्रचनासमर्थम्। अचेतनत्वे सति तत्स्वभावाभिज्ञानधिष्ठितत्वात्। यदेवं तत्तथा यथा रथप्रासा-दादिनिर्माणे केवलदार्वादिकम्। दार्वादेरचेतनस्य तज्ज्ञानधि-ष्ठितस्य कार्यारम्भानुपपत्तेर्दर्शनात्। तज्ज्ञाधिष्ठितस्य कार्यार-
15 म्भप्रवृत्तेर्दर्शनाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणमित्युक्तं भ-वति। चकारादन्वयस्यानैकान्त्यं समुच्चिनोति। न ह्यन्वितं शौक्ल्यगोत्वादि कारणत्वव्याप्तम्। न च वाच्यं माभूदन्विता-नामपि शौक्ल्यादिधर्माणां कारणत्वम्। द्रव्यस्य तु हेमादेः कार्यान्वितस्य कारणत्वव्याप्तिरस्त्येव। सत्त्वादीन्यपि द्रव्याणि

1. C. reads प्रधानकारणम् for प्रधानकारणकम्.
2. E. reads जगत्स्वरूप for जगत्स्वरूपम्.
3. C. om. च after यथा.
4. E. reads शक्तिप्रकृति for प्रवृत्तिशक्ति.
9. C. reads एककारणम् for एककारणकम्.
12. C. reads स्वभावाविज्ञ for स्वभावाभिज्ञ.
13. C. reads तज्ज्ञान for तज्ज्ञ.
18. A. B. om. तु after द्रव्यस्य.
19. C. reads कार्ये for कार्य.

कार्यान्वितानि कारणत्वव्याप्तानीति। यतः सत्त्वादयो द्रव्यधर्मा न तु द्रव्यस्वरूपम्। सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव न तु मृद्धिरण्यादिवद्द्रव्यतया कार्यान्विता उपलभ्यन्ते। गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः। यच्च कारणव्यवस्थासिद्धये जगत एकमूलत्वमुक्तं तदपि सत्त्वादीनामनेकत्वान्नोपपद्यते। अत एव कारणव्यवस्था च न सिध्यति। साम्यावस्थाः सत्त्वादय एव हि प्रधानमिति त्वन्मतम्। अतः कारणबहुत्वादनवस्था तदवस्थैव। न च तेषामपरिमितत्वेन व्यवस्थासिद्धिः। अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकभावाभावाद्वैषम्यासिद्धेः कार्यारम्भासंभवात्कार्यारम्भायैव परिमितत्वमवश्याश्रयणीयम्॥१॥

यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टं तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्याह।

## पयोम्बुवच्चेत्तत्रापि ॥ २ ॥

यदुक्तं प्रधानस्य प्राज्ञानधिष्ठितस्य विचित्रजगद्रचनानुपपत्तिरिति तन्न। यतः पयोम्बुवत्प्रवृत्तिरुपपद्यते। पयसस्तावद्दधिभावेन परिणममानस्यानन्यापेक्षस्याद्यपरिस्पन्दनप्रभृतिपरिणामपरंपरा स्वत एवोपपद्यते। यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नालिकेरतालचूतकपित्थनिम्बतिन्तिण्यादिविचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव दृश्यते तथा प्रधानस्यापि

1. C. reads कार्ये for कार्य.

4. B. om. वत् before द्रव्यतया; C. reads कार्यें for कार्य.

8. E. reads तन्मतम् for त्वन्मतम्.

17. C. reads परिस्पन्द for परिस्पन्दन.

20. C. reads उप before दृश्यते.

परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशप-
रिणामेनावस्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्तविचित्रपरि-
णाम उपपद्यते । यथोक्तम् ।

परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात् ।

5 (सां. का. १६)

इति । तदेवमव्यक्तमन्यानपेक्षं प्रवर्तत इति चेदत उत्तरं
तत्रापीति । यत्क्षीरजलादिदृष्टान्ततया निदर्शितं तत्रापि प्राज्ञा-
नधिष्ठाने प्रवृत्तिर्नोपपद्यते। तदपि पूर्वत्र पक्षीकृतमित्यभिप्रायः।
उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि (ब्र. सू. २।१।२४) इ-
10 त्यत्र दृष्टपरिकरान्तररहितस्यापि स्वासाधारणपरिणाम उपप-
द्यत इत्येतावदुक्तं न प्राज्ञाधिष्ठितत्वं पराकृतम् । योऽप्सु तिष्ठन्
(बृ. ३।७।४) इत्यादिश्रुतेः ॥ २ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

इतश्च सत्यसंकल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यति-
15 रेकेण प्रतिसर्गावस्थाया अनवस्थितिप्रसङ्गाच्च न प्राज्ञानधिष्ठितं
प्रधानं कारणम् । प्राज्ञाधिष्ठितत्वे तस्य सत्यसंकल्पत्वेन सर्ग-
प्रतिसर्गविचित्रसृष्टिव्यवस्थासिद्धिः । न च वाच्यं प्राज्ञाधिष्ठि-
तत्वेपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयान-
न्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावाद्वि-

2. C. reads निमित्तः for निमित्त.

6. C. reads अनन्यापेक्षम् for अन्यानपेक्षम्.

8. E. reads पूर्वमेव for पूर्वत्र.

11. A. B. om. एतावदुक्तम्; C. reads प्राज्ञानधिष्ठितत्वम् for प्राज्ञा-धिष्ठितत्वम्.

14. C. reads व्यतिरेके for व्यतिरेकेण.

17. C. om. वि before चित्रसृष्टि.

षमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोयं दोष इति। परिपूर्णस्यापि लीलार्थप्रवृत्तिसंभवात्। सर्वज्ञस्य तस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गप्रतिसर्गविशेषहेतोः संभवात्। क्षेत्रज्ञकर्मणामेव विषमसृष्टेर्व्यवस्थापकत्वाच्च।

नन्वेवं क्षेत्रज्ञपुण्यापुण्यकर्मभिरेव सर्वा व्यवस्थाः सिध्यन्तीति 5 कृतमीश्वरेणाधिष्ठात्रा। पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथा तथा व्यवस्थया परिणंस्यते। यथा विषादिदूषितानामन्नपानादीनामौषधिविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषो देशकालव्यवस्थया दृश्यते। अतः सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिः कैवल्यव्यवस्था 10 च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यत इति।

अनभिज्ञो भवान्पुण्यापुण्यकर्मस्वरूपयोः। पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये। शास्त्रं चानादिनिधनाविच्छिन्नपाठसंप्रदायानाघ्रातप्रमादादिदोषगन्धवेदाख्याक्षरराशिः। तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये तदनुग्रहनिग्रहायत्ते 15 च तत्फले सुखदुःखे इति वदति। तथा चाह द्रमिडाचार्यः फलसंविधित्सया हि कर्मभिरात्मानं पिप्रीषन्ति स प्रीतोलं

reads लीलार्थम् for लीलार्थ.

5. E. om. प्रतिसर्ग.

4. C. reads विषमसृष्टि for विषमसृष्टेः.

7. A. B. om. one तथा; B. C. read तथा for यथा.

8. C. reads औषध for औषधि.

11. B. C. om. इति after उपपद्यते.

12. C. reads हि after अनभिज्ञः; B. om. स्व before रूपे.

13. A. B. om. पाठ.

15. B. reads निग्रहापन्ने for निग्रहायत्ते.

16. C. reads द्रविड for द्रमिड.

17. A. B. C. read संबिभित्सया for संविधित्सया.

फलायेति शास्त्रमर्यादेति। तथा च श्रुतिः। इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः (म. ना. १।६) इति। तथा च भगवता स्वयमेवोक्तम्

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
5 स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
(भ. गी. १८।४६)

इति।

तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥
10 (भ. गी. १६।१९)

इति च। स च भगवान्पुरुषोत्तमोवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसंकल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्त एतानि कर्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च
15 सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदर्श्य स्वशासनावबोधि शास्त्रं च प्रदर्श्य तदुपसंहारार्थं चान्तरात्मतयानुप्रविश्यानुमन्तृतया च नियच्छंस्तिष्ठति। ते क्षेत्रज्ञास्तु तदाहितशक्तयस्तत्प्रदिष्टकरणकलेवरादिकास्तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते। ततश्च पुण्यरूपकर्मकारिणं स्वशासना-
20 नुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते। शासनातिवर्तिनं च

---

11. A. C. E. om. च after इति; C. om. च after सः; C. om. सर्वज्ञः.

15. A. B. read प्रदिश्य for प्रदर्श्य.

16. A. B. read प्रदिश्य for प्रदर्श्य.

17. C. om. ते before क्षेत्रज्ञाः.

18. C. reads तदाधारान् for तदाधाराः.

20. C. reads अतिवर्तिनाम् for अतिवर्तिनम्

तद्विपर्ययैर्योजयति । अतः स्वातन्त्र्यादिवैकल्यचोद्यानि नावकाशं लभन्ते ।

दया हि नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता । सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते। प्रत्युतापुंस्त्वमेवावहति । तन्निग्रह एव तत्र गुणः । अन्यथा 5 शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते । यथोक्तम्

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ 10
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
( भ. गी. १०।१०-११ )

इति । अतः प्राज्ञानधिष्ठितं प्रधानमकारणम् ॥ ३ ॥

अथ स्याद्यद्यपि प्राज्ञानधिष्ठितायाः प्रकृतेः परिस्पन्दप्रवृत्ति- 15 रपि न संभवतीत्युक्तं तथाप्यनपेक्षाया एव परिणामप्रवृत्तिः संभवति । तथा दर्शनात् । धेन्वादिनोपभुक्तं हि तृणोदकादि स्वयमेव क्षीराद्याकारेण परिणममानं दृश्यते । अतः प्रकृतिरपि स्वयमेव जगदाकारेण परिणंस्यत इति चेत्तत्राह ।

**अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥** 20

नैतदुपपद्यते । तृणादेः प्राज्ञानधिष्ठितस्य परिणामाभावा-

5. A. B. read नृशंसत्वम् for अपुंस्त्वम्.
6. C. om. स्व before शासन; E. reads व्यवसायि for व्यवसाय.
14. C. reads कारणम् for अकारणम्.
16 B. reads अनपेक्षया for अनपेक्षायाः.
17. C. reads उपयुक्तम् for उपभुक्तम्.
19. C. om. चेत्.
21. B. reads असंभवात् for अभावात्.

दृष्टान्तासिद्धेः । कथमसिद्धिः । अन्यत्राभावात् । यदि हि तृणोदकादिकमनडुहाद्युपभुक्तं प्रहीणं वा क्षीराकारेण परिणंस्यते तदा प्राज्ञानधिष्ठितमेव परिणमत इति वक्तुं शक्येत । न चैतदस्ति । अतो धेन्वाद्युपभुक्तं प्राज्ञ एव क्षीरीकरोति । पयोम्बु-
5 वच्चेत्तत्रापि ( ब्र. सू. २।२।२ ) इत्युक्तमेवात्र प्रपञ्चितं तत्रैव व्यभिचारप्रदर्शनाय ॥ ४ ॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

अथोच्यते । यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः प्रधानमपि दृक्शक्तिविकलं तथापि पुरुषसंनिधानादचेतनं प्रधानं
10 प्रवर्तते । तथा दर्शनात् । गमनशक्तिविकलदृक्शक्तियुक्तपङ्गुसंनिधानाच्चैतन्योपकृतो दृक्शक्तिविकलः प्रवृत्तिशक्तियुक्तोन्धः प्रवर्तते । अयस्कान्ताश्मसंनिधानाच्चायः प्रवर्तते । एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः प्रवर्तते । यथोक्तम्

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
1 पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥

( सां. का. २१ )

इति । पुरुषस्य प्रधानोपभोगार्थं कैवल्यार्थं च पुरुषसंनिधानात्प्रधानं सर्गादौ प्रवर्तत इत्यर्थः ।

अत्रोत्तरं तथापीति । एवमपि प्रधानस्य प्रवृत्त्यसंभवस्तद-
20 वस्थ एव । पङ्गोर्गमनशक्तिविकलस्यापि मार्गदर्शनतदुपदेशादयः कादाचित्का विशेषाः सहस्रशः सन्ति । अन्धोपि चेतनः संस्तदुपदेशाद्यवगमेन प्रवर्तते । तथायस्कान्तमणेरप्ययःसमीपागमनादयः सन्ति । पुरुषस्य तु निष्क्रियस्य न तादृशा विकाराः

2. C. reads उपयुक्तम् for उपभुक्तम्.
3. C. reads ततः for तदा.
8. C. reads उच्येत for उच्यते.
22. C. reads अवगमे for अवगमेन; B. reads समीपगमन for समीपागमन.

संभवन्ति । संनिधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गः । नित्यमुक्तत्वेन बन्धाभावोपवर्गाभावश्च ॥ ५ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः प्रतिप्रतिगुणाश्रयविशेषात् ( सां. का. १६ ) इति वदद्भिर्भवद्भिरभ्युपगम्यते । प्रतिसर्गावस्थायां तु साम्यावस्थानां सत्त्वरजस्तमसामन्योन्याधिक्यन्यूनताभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते । तथापि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः । अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ॥ ६ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात्त एव दोषाः प्रादुःष्युः । अतो न कथंचिदप्यनुमानेन प्रधानसिद्धिः ॥ ७ ॥

## अभ्युपगमेप्यर्थाभावात् ॥ ८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेपि प्रधानेन प्रयोजनाभावान्न तदनुमातव्यम् ।

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।

( सां. का. २१ )

इति प्रधानस्य प्रयोजनं पुरुषभोगापवर्गावभिमतौ । तौ च न संभवतः । पुरुषस्य चैतन्यमात्रवपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगस्तद्वियोगरूपोपवर्गश्च न संभवति । एवंरूपस्यैव प्रकृतिसंनिधानात्तत्परिणामविशेषसुखदुःखदर्शनरूपभोगसंभावनायां प्रकृतिसंनिधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ॥ ८ ॥

7. C. reads न्यूनत्व for न्यूनता.

19. C. reads उप before भोगापवर्गौ.

## विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

विप्रतिषिद्धं चेदं सांख्यानां दर्शनम् । तथा हि । प्रकृतेः परार्थत्वेन दृश्यत्वेन भोग्यत्वेन च प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारं साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य
5 कैवल्यमपि प्राप्यं वदन्त एव तस्य नित्यनिर्विकारचैतन्यमात्रस्वरूपतयाकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः । तत एव बन्धमोक्षसाधनानुष्ठानं मोक्षं च प्रकृतेरेवाहुः । एवंभूतनित्यनिर्विकारोदासीनपुरुषसंनिधानात्प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्तिं पुरुषभोगापवर्गार्थत्वं चाहुः ।

10 संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥
(सां. का. १७)

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वं कर्तृभावश्च ॥
15 (सां. का. १९)

इति ।

पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।
(सां. का. ५८)

इत्युक्त्वैवमाहुः ।

20 तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥
(सां. का. ६२)

इति । तथा

7. C. reads इति before आहुः; B. reads अनित्य for नित्य.

9. C. reads प्रवृत्ति for प्रवृत्तिम्.

14. C. reads अकर्तृभावः for कर्तृभावः.

19. A. B. read एव for एवम्.

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥

( सां. का. २०-२१ ) 5

इति । साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनस्य कैवल्यैकस्वरूपस्य न संभवन्ति । एवंरूपस्य तस्याध्यासकृतो भ्रमोपि न संभवति । अध्यासभ्रमयोरपि विकारत्वात् । प्रकृतेश्च तौ न संभवतः । तयोश्चेतनधर्मत्वात् । अध्यासो हि नाम चेतनस्यान्यस्मिन्नन्यधर्मानुसंधानम् । स च चेतनधर्मो 10 विकारश्च । न च पुरुषस्य प्रकृतिसंनिधिमात्रेणाध्यासादयः संभवन्ति । निर्विकारत्वादेव । संभवन्ति चेन्नित्यं प्रसज्येरन् । सांनिध्यमकिंचित्करत्वं च न विलक्षणत्वात् ( ब्र. सू. २।१।४ ) इत्यत्र प्रतिपादितम् । प्रकृतिरेव संसरति बध्यते मुच्यते चेत्कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते । वदन्ति हि 15

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥

( सां. का. ६१ )

इति । तथा प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा तस्मात्पुरुषादिदानीमत्र निवर्तत इति चाहुः । 20

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥

( सां. का. ६० )

7. C. om. स्य before रूपस्य.
10. C. om. न after सः.

प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥

(सां. का. ६२)

इति । तदप्यसंगतम् । पुरुषो हि नित्यमुक्तत्वान्निर्विकार-
5 त्वान्न तां कदाचिदपि पश्यति नाध्यस्यति च । स्वयं च
स्वात्मानं न पश्यति । अचेतनत्वात् । पुरुषस्य स्वात्मदर्शनं स्वद-
र्शनमिति नाध्यस्यति च । स्वयमचेतनत्वात् । पुरुषस्य च
दर्शनरूपविकारासंभवात् । अथ संनिधिमात्रमेव दर्शनमित्यु-
च्यते संनिधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तम् । स्वरूपाति-
10 रिक्तकादाचित्कसंनिधिरपि नित्यनिर्विकारस्य नोपपद्यते । किं
च मोक्षहेतुस्तु स्वसंनिधिमात्रमेव दर्शनं चेद्बन्धहेतुरपि तद-
वेति नित्यं तद्बन्धो मोक्षश्च स्याताम् । अयथादर्शनं बन्धहेतुर्य-
थावत्स्वरूपदर्शनं मोक्षहेतुरिति चेदुभयविधस्यापि दर्शनस्य
संनिधानरूपतानतिरेकात्सदोभयप्रसङ्ग एव । संनिधेरनित्यत्वे
15 तस्य हेतुरन्वेषणीयस्तस्यापीत्यनवस्था । अथैतद्दोषपरिजिहीर्षया
स्वरूपसद्भाव एव संनिधिरिति तदा स्वरूपस्य नित्यत्वेन नित्य-
वद्बन्धमोक्षौ । अत एवमादेर्विप्रतिषेधात्सांख्यानां दर्शनमसम-
ञ्जसम् ।

येपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्माविद्यासा-
20 क्षित्वेनापारमार्थिकबन्धमोक्षभागिति वदन्ति तेषामप्युक्तनी-
त्याविद्यासाक्षित्वाध्यासाद्यसंभवादसामञ्जस्यमेव । इयांस्तु वि-
शेषः । सांख्या जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुष-

11. C. reads संनिधानरूपम् for संनिधिमात्रम्.

12. C. reads नित्यवत् for नित्यं तत्; C. reads अयथार्थं for अयथा.

19. C. reads ब्रह्मविद्या for ब्रह्माविद्या.

21. C. reads अभावात् for असंभवात्.

22. B. reads मरणम for मरण.

बहुत्वमिच्छन्ति । ते तु तदपि नेच्छन्तीति सुतरामसामञ्जस्यम् ।
यत्तु प्रकृतेः पारमार्थ्यापारमार्थ्यविभागेन वैषम्यमुक्तं तदयु-
क्तम् । पारमार्थिकत्वे नित्यनिर्विकारस्य प्रकाशैकरसचिन्मात्रस्य
स्वव्यतिरिक्तसाक्षित्वाद्यनुपपत्तेः । अपारमार्थिकत्वे तु तस्या-
दृश्यत्वबाध्यत्वाभ्युपगमात्सुतरामसंगतम् । औपाधिकभेदवा- 5
देऽप्युपाधिसंबन्धिनो ब्रह्मणोयमेव स्वभाव इत्युपाधिसंबन्धा-
द्यनुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तम् ॥ ९ ॥ रचनानुपपत्त्यधिकरणं
समाप्तम् । ( १ )

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥

प्रधानकारणवादस्य युक्त्याभासमूलतया विप्रतिषिद्धत्वाच्चा- 10
सामञ्जस्यमुक्तम् । संप्रति परमाणुकारणवादस्याप्यसामञ्जस्यं
प्रतिपाद्यते महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामिति । असम-
ञ्जसमिति वर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां द्व्यणु-
कपरमाणुभ्यां महद्दीर्घवत्त्र्यणुकद्व्यणुकोत्पत्तिवादवदन्यच्च त-
दभ्युपगतं सर्वमसमञ्जसम् । परमाणुभ्यो द्व्यणुकादिक्रमेण 15
जगदुत्पत्तिवादवदन्यदप्यसमञ्जसमित्यर्थः ।

तथा हि । तन्तुप्रभृतयो ह्यवयवाः स्वांशैः षड्भिः पार्श्वैः
संयुज्यमाना अवयविनमुत्पादयन्ति । परमाणवोपि स्वकीयैः
षड्भिः पार्श्वैः संयुज्यमाना एव द्व्यणुकादीनामुत्पादका भवेयुः ।
अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगे- 20
प्येकस्मात्परमाणोरनतिरिक्तपरिमाणतयाणुत्वह्रस्वत्वमहत्त्वदीर्घ-
त्वाद्यसिद्धिः स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोपि

---

3. C. reads अप्यपारमार्थिकत्वेपि after पारमार्थिकत्वे; C. reads निर्विकारस्वप्रकाश for निर्विकारस्य प्रकाश.

14. C. reads त्र्यणुकोत्पत्तिवत् for वत्त्र्यणुकद्व्यणुकोत्पत्तिवादवत्; B. om. द्व्यणुक.

सांशाः स्वकीयैरंशैस्ते च स्वकीयैरंशैरित्यनवस्था । न च वाच्य-
मवयवाल्पत्वमहत्त्वाभ्यां हि सर्षपमहीधरयोर्वैषम्यम् । परमा-
णोरप्यनन्तावयवत्वेवयवानन्त्यसाम्यात्सर्षपमहीधरयोर्वैषम्या-
सिद्धेरवयवापकर्षकाष्ठावश्याभ्युपगमनीयेति । परमाणूनां प्रदे-
5 शभेदाभावे सत्येकपरमाणुपरिमाणातिरेकिप्रथिमा न जायेतेति
सर्षपमहीधरयोरेवासिद्धेः । किं कुर्म इति चेद्वैदिकः पक्षः परि-
गृह्यताम् ।

यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातं
तदसंगतं पुनरुक्तं च । ब्रह्मकारणवादे परोक्तान्दोषान्पूर्व-
10 स्मिन्पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन्पादे क्रियते । चेत-
नाद्ब्रह्मणो जगदुत्पत्तिसंभवश्च न विलक्षणत्वात् (ब्र. सू. २।१।४)
इत्यत्रैव प्रपञ्चितः। अतो ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वो-
त्पत्तिवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसमित्येव सूत्रार्थः ॥१०॥

किमत्रान्यदसमञ्जसमित्याह ।

15 **उभयथापि न कर्मातस्तदभावः ॥ ११ ॥**

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वक-
द्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते । तत्र निखिलजगदुत्पत्ति-
कारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते ।
अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्टका-
20 रितानि (वै. सू. ५।२।१३) इति । तदिदं परमाणुगतं कर्म

1. E. reads स्वीयैः for स्वकीयैः after सांशाः.
4. E. reads अवश्यम् for अवश्य.
5. C. reads अतिरेक, E. अतिरेकी for अतिरेकि.
6. A. B. read वैदिक for वैदिकः.
14. A. B. read अत्र before आह.
15. B. reads च after तदभावः.
18. C. om. इति after अदृष्टकारितम्.
19. C. reads अदृष्टकारितम् for अदृष्टकारितानि.

स्वगतादृष्टकारितमात्मगतादृष्टकारितं वा । उभयथापि न संभवति । क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासंभवात् । संभवे च सदोत्पादकत्वप्रसङ्गः । आत्मगतस्य चादृष्टस्य परमाणुगतकर्मोत्पत्तिहेतुत्वं न संभवति । अथादृष्टवदात्मसंयोगादणुषु कर्मोत्पत्तिस्तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः । 5

नन्वदृष्टं विपाकापेक्षं फलायालम् । कानिचिददृष्टानि तदानीमेव विपच्यन्ते । कानिचिज्जन्मान्तरे । कानिचित्कल्पान्तरे । अतो विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसङ्ग इति । नैतत् । अनन्तैरात्मभिरसंकेतपूर्वकयुगपदनुष्ठितानेकविविधकर्मजनितानामदृष्टानामेकस्मिन्काल एकरूपविपाकस्याप्रामाणिकत्वात् । अत एव युगपत्सर्वसंहारो द्विपरार्धकालमविपाकेनावस्थानं च न संगच्छते । न चेश्वरेच्छाहितविशेषादृष्टसंयोगादणुषु कर्म । आनुमानिकेश्वरासिद्धेः शास्त्रयोनित्वात् (ब्र. सू. १।१।४) इत्यत्रोपपादितत्वात् । अतो जगदुत्पत्तेरणुगतकर्मपूर्वकत्वासंभवः ॥ ११ ॥ 10 15

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥**

समवायाभ्युपगमाच्चासमञ्जसम् । कुतः । साम्यादनवस्थितेः । समवायस्याप्यवयविजातिगुणवदुपपादकान्तरापेक्षासाम्यादुप-

---

1. C. reads सर्वदा for सदा; A. B. om. च after आत्मगतस्य.
4. C. reads स्थ for गत after परमाणु.
8. C. om. वि before पच्यन्ते.
10. C. reads पूर्वकम् for पूर्वक; A. टिप्पणी reads पूर्वकमयुगपत् for पूर्वकयुगपत्; C. reads अनेकविध for अनेकविविध.
11. C. reads एकरूपस्य for एकरूप.
16. B. reads अवयव for अवयवि.

पादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव । एतदुक्तं भवति । अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुर्यः संबन्धः स समवाय इति समवायोभ्युपगम्यते । अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथाभावस्य निर्वाहकत्वेन चेत्समवायोभ्युपगम्यते समवायस्यापि तत्साम्यात्तथाभावहेतुरन्वेषणीयः । तस्यापि तथेत्यनवस्थितिः । समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेज्जातिगुणादीनामेवैष स्वभावः परिकल्पनीयः । न पुनरदृष्टचरं समवायमभ्युपगम्य तस्यैष स्वभाव इति कल्पयितुं युक्तमिति । समवायस्य नित्यत्वेनित्यत्वे चायं दोषः समानः ॥ १२ ॥

नित्यत्वे दोषान्तरं चाह ।

**नित्यमेव च भावात् ॥ १३ ॥**

समवायस्य संबन्धत्वात्संबन्धनित्यत्वे संबन्धिनो जगतश्च नित्यमेव भावादसमञ्जसम् ॥ १३ ॥

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥**

परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्त्वाभ्युपगमादभिमतनित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपर्ययेणानित्यत्वस्थूलत्वसावयवत्वादि प्रसज्येत । रूपादिमतां घटादीनामनित्यत्वं तथाविधकारणान्तरारब्धत्वादिदर्शनात् । न हि दर्शनानुगुण्येनादृष्टोर्थः कल्प्यमानः स्वाभिमतविशेषं

2. C. reads आधार्याधार for आधाराधेय; C. om. यः.
6. C. om. समवायस्य तदपृ...पुनरदृष्टचरम्.
9. C. reads परि before कल्पयितुम्.
11. C. om. च after दोषान्तरम्.
20. C. reads विशेषे for विशेषम्.

व्यवस्थापयितुं शक्यः । दर्शनानुगुण्येन हि परमाणूना रूपादिमत्त्वं त्वया कल्प्यते । अतोप्यसमञ्जसम् ॥ १४ ॥

अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते तत्राह ।

**उभयथा च दोषात् ॥ १५ ॥** 5

न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम एव दोषः । रूपादिविरहेपि कारणगुणपूर्वकत्वात्कार्यगुणानां पृथिव्यादयो रूपादिशून्याः स्युः । तत्परिजिहीर्षया रूपादिमत्त्वाभ्युपगमे पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसम् ॥ १५ ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥** 10

कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादादिना कचिदंशे वैदिकैः परिग्रहोस्ति । अस्य तु काणादपक्षस्य केनाप्यंशेनापरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या ॥ १६ ॥ महद्दीर्घाधिकरणं समाप्तम् । ( २ )

**समुदाय उभयहेतुकेपि तदप्राप्तिः ॥ १७ ॥** 15

परमाणुकारणवादिनो वैशेषिका निरस्ताः । सौगताश्च जगतः परमाणुकारणत्वमभ्युपगच्छन्तीत्यनन्तरं तन्मतेपि जगदुत्पत्तिस्थितिव्यवहारादिकं नोपपद्यत इत्युच्यते । ते च चतुर्विधाः । केचित्पार्थिवाप्यतैजसवायवीयपरमाणुसंघातरूपान्भूतभौतिकान्बाह्यांश्चित्तचैत्तरूपांश्चाभ्यन्तरानर्थान्प्रत्यक्षानुमानसिद्धानभ्युपयन्ति । अन्ये तु बाह्यार्थान्सर्वान्पृथिव्यादीन्विज्ञानानुमेयान्व- 20

2. C. reads च after रूपादिमत्त्वम्.

15. C. om. अपि after उभयहेतुके.

20. C. reads अभ्यन्तर for अभ्यन्तरान्; C. reads अभ्युपगच्छन्ति for अभ्युपयन्ति.

दन्ति। अपरे त्वर्थशून्यं विज्ञानमेव परमार्थसद्बाह्यार्थास्तु स्वाप्नार्थकल्पा इत्याहुः। त्रयोप्येते स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते। उक्तभूतभौतिकचित्तचैत्तव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्यन्ते। अन्ये तु सर्वशून्यत्वमेव संगिरन्ते।

5 तत्र ये बाह्यार्थास्तित्ववादिनस्ते तावन्निरस्यन्ते।

ते चैवं मन्यन्ते। रूपरसस्पर्शगन्धस्वभावाः पार्थिवाः परमाणवो रूपरसस्पर्शस्वभावाश्चाप्या रूपस्पर्शस्वभावास्तैजसाः स्पर्शस्वभावा वायवीयाः पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते। तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयरूपसंघाता भवन्ति। 10 तत्र च शरीरान्तर्वर्तिग्राहकाभिमानारूढो ज्ञानसंतान एवात्मत्वेनावतिष्ठते। तत एव सर्वो लौकिकव्यवहारः प्रवर्तत इति। तत्राभिधीयते।

समुदाय उभयहेतुकेपि तदप्राप्तिः। योयमणुहेतुकः पृथिव्यादिभूतात्मकः समुदायो यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविष- 15 यरूपः समुदायस्तस्मिन्नुभयहेतुकेपि समुदाये तत्प्राप्तिर्नोपपद्यते। जगदात्मकसमुदायोत्पत्तिर्नोपपद्यत इत्यर्थः। परमाणूनां पृथिव्यादिभूतानां च क्षणिकत्वाभ्युपगमात्। क्षणध्वंसिनः परमाणवो भूतानि च कदा संहतौ व्याप्रियन्ते कदा वा संहन्यन्ते कदा विज्ञानविषयीभूताः कदा च हानादिव्यवहारास्पदतां भजन्ते।

---

1. A. E. read परमार्थम् for परमार्थ.
2. C. reads अभ्युपेतम् for अभ्युपगतम्.
4. C. reads संगिरन्ति for संगिरन्ते.
7. C. reads च before तैजसाः.
8. C. reads च before वायवीयाः.
10. C. om. च after तत्र; B. reads रूपः for आरूढः; C. reads वि before ज्ञानसंतानः.
11. C. reads सर्व for सर्वः.
19. C. reads च before विज्ञान; C. reads आदान after हान.

को वा विज्ञानात्मा कं च विषयं स्पृशति। कश्च विज्ञानात्मा कमर्थं कदा वेदयते। कं वा विदितमर्थं कश्च कदोपादत्ते। स्प्रष्टा हि नष्टः स्पृष्टश्च नष्टः। तथा वेदिता विदितश्च नष्टः। कथं चान्येन स्पृष्टमन्यो वेदयते। कथं चान्येन विदितमन्यमर्थमन्य उपादत्ते। संतानानामेकत्वेपि संतानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्यु- 5
पगमान्न तन्निबन्धनं व्यवहारादिकमुपपद्यते। अहमर्थ एवात्मा स च ज्ञातैवेति चोपपादितं पुरस्तात्॥ १७॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्॥ १८॥

अविद्यादीनामितरेतरहेतुत्वेनोपपन्नं संघातभावादिकमिति 10
चेत्। एतदुक्तं भवति। यद्यपि क्षणिकाः सर्वे भावास्तथाप्यविद्ययैतत्सर्वमुपपद्यते। अविद्या हि नाम विपरीतबुद्धिः क्षणिकादिषु स्थिरत्वादिगोचरा। तया संस्काराख्या रागद्वेषादयो जायन्ते। ततश्चित्ताभिज्वलनरूपं विज्ञानम्। ततश्च नामाख्याश्चित्तचैत्ताः। ततश्च पृथिव्यादिकं च रूपिद्रव्यम्। ततः षडायत- 15
नाख्यमिन्द्रियषट्कम्। ततः स्पर्शाख्यः कायः। ततो वेदनादयः। ततश्च पुनरप्यविद्यादयो यथोक्ता इत्यनादिरियमविद्यादिकान्योन्यमूला चक्रपरिवृत्तिः। एतच्च सर्वं पृथिव्यादिभूतभौतिकसंघातमन्तरेण नोपपद्यते। अतः संघातभावादिकमुपपन्नमिति।

तत्रोत्तरं न संघातभावानिमित्तत्वादिति। नैतदुपपद्यते। 20

1. B. reads ज्ञानात्मा for first विज्ञानात्मा.
8. C. reads संघातभान for न संघातभाव.
12. C. reads एव तत् for एतत् before सर्वम्.
13. B. reads गोचरतया for गोचरा। तया.
14. C. reads नामाख्य for नामाख्याः.
15. C. om. ततश्च.

एषामविद्यादीनां पृथिव्यादिभूतभौतिकसंघातभावं प्रत्यनिमित्तत्वात् । न खल्वस्थिरादिषु स्थिरत्वादिबुद्ध्यात्मिकाविद्या तन्निमित्ता रागद्वेषादयो वार्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते । शुक्तिकारजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति ।
5 किं च यस्य क्षणिके स्थिरबुद्धिः स तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते । संस्काराश्रयं स्थिरमेकद्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुम् ॥ १८ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते। उत्तरक्षणोत्पत्ति-
10 वेलायां पूर्वक्षणस्य विनष्टत्वात्तस्योत्तरक्षणं प्रति हेतुत्वानुपपत्तेः । अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत । अथ पूर्वक्षणवर्तित्वमेव हेतुत्वमित्युच्यत एवं तर्हि कश्चिदेव घटक्षणस्तदुत्तरकालभाविनां सर्वेषामेव गोमहिषाश्वकुड्यपाषाणादीनां त्रैलोक्यवर्तिनां हेतुः स्यात् । अथैकजातीयस्यैव पूर्वक्षणवर्तिनो हेतु-
15 त्वमिष्यते तथापि सर्वदेशवर्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्ती घटो हेतुः स्यात् । अथैकस्यैव हेतुरेक इति मनुषे तथापि कस्यैकस्य को हेतुरिति न ज्ञायते । अथ यस्मिन्देशे यो घटक्षणः स्थितस्तद्देशसंबन्धिन एवोत्तरघटक्षणस्य हेतुरिति । किं देशस्य स्थिरत्वं मनुषे । किं च चक्षुरादिसंप्रयुक्त-
20 स्यार्थस्य ज्ञानोत्पत्तिकालेनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवति ॥ १९ ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥

असत्यपि हेतौ कार्यमुत्पद्यते चेत्सर्वं सर्वत्र सर्वदोत्पद्येते-

1. C. reads तेषाम् for एषाम्.
6. C. reads संस्काराश्रयस्थिरमेकम for संस्काराश्रयं स्थिरमेक.
19. B. om. प्र after मम.

त्युक्तम् । न केवलमुत्पत्तिविरोध एव प्रतिज्ञा च भवतामुपरुध्येत । अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतव इति वः प्रतिज्ञा । अधिपतिरिन्द्रियम् । अथ प्रतिज्ञानुपरोधाय घटक्षणे स्थित एव घटक्षणान्तरोत्पत्तिरिष्यते तथा च सति द्वयोः कार्यकारणयोर्घटक्षणयोर्यौगपद्येनोपलब्धिः 5 प्रसज्येत । न च तथोपलभ्यते । क्षणिकत्वप्रतिज्ञा चैवं हीयेत । क्षणिकत्वं स्थितमेवेति चेदिन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत ॥ २० ॥

**प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्**
**॥ २१ ॥** 10

एवं तावदसत उत्पत्तिर्निरस्ता । सतो निरन्वयो विनाशोपि नोपपद्यत इत्युच्यते । क्षणिकत्ववादिभिर्मुद्गराभिघाताद्यनन्तरभावितयोपलब्धियोग्यः सदृशसंतानावसानरूपः स्थूलो यः सदृशसंताने प्रतिक्षणभावी चोपलब्ध्यनर्हः सूक्ष्मश्च यो निरन्वयो विनाशः प्रतिसंख्याप्रतिसंख्यानिरोधशब्दाभ्यामभिधीयते 15 तौ न संभवत इत्यर्थः । अविच्छेदात् । सतो निरन्वयविच्छेदासंभवात् । असंभवश्च सत उत्पत्तिविनाशौ नामावस्थान्तरापत्तिरेव । अवस्थायोगि तु द्रव्यमेकमेव स्थिरमिति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिस्तदनन्यत्वम् (ब्र. सू. २।१। १५) इत्यत्र प्रतिपादितम् । निर्वाणस्य दीपस्य निरन्वयविना- 20 शदर्शनादन्यत्रापि विनाशो निरन्वयोनुमीयत इति चेन्न । घट-

1. B. reads उपरुध्यते for उपरुध्येत.
6. C. reads हीयते for हीयेत.
7. B. om. प्र before योग.
11. A. E. read अभिधीयेते for अभिधीयते.
16. C. reads स्वतः for सतः after न.
18. A. B. E. om. अस्माभिः.

शरावादौ मृदादिद्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव विनाश इति निश्चिते सति प्रदीपादौ सूक्ष्मदशापत्त्याप्यनुपलम्भोपपत्तेस्तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात् ॥ २१ ॥

5 **उभयथा च दोषात् ॥ २२ ॥**

क्षणिकत्ववादिभिरभ्युपेतात्तुच्छादुत्पत्तिरुत्पन्नस्य तुच्छतापत्तिश्च न संभवतीत्युक्तम् । तदुभयप्रकाराभ्युपगतो दोषश्च भवति। तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्यं स्यात् । यद्धि यस्मादुत्पद्यते तत्तदात्मकं दृष्टं यथा मृत्सुवर्णादेरुत्पन्नं मणिकमुकुटादि मृत्सुव-
10 र्णाद्यात्मकं दृष्टम् । न च जगत्तुच्छात्मकं भवद्भिरभ्युपगम्यते न च प्रतीयते । सतो निरन्वयविनाशे सत्येकक्षणादूर्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात् । पश्चात्तु तुच्छाज्जगदुत्पत्तावनन्तरोक्तं तुच्छात्मकमेव स्यात् । अत उभयथापि दोषान्न भवदुक्तप्रकारावुत्पत्तिनिरोधौ ॥ २२ ॥

15 **आकाशे चाविशेषात् ॥ २३ ॥**

बाह्यान्तरवस्तुनः स्थिरत्वप्रतिपादनाय प्रतिसंख्याप्रतिसंख्यानिरोधयोस्तुच्छरूपता निराकृता । तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन सौगतैः परिगणितस्याकाशस्यापि तुच्छता प्रतिक्षिप्यते । आकाशे च निरुपाख्यता न युक्ता । भावरूपत्वेना-
20 भ्युपगतपृथिव्यादिवदाकाशस्याप्यबाधितत्वप्रतीतिसिद्धत्वाविशेषात् । प्रतीयते ह्याकाशोत्र श्येनः पतत्यत्र गृध्र इति श्येनादिप-

10. A. reads दृष्टम् after तुच्छात्मकम्.
14. A. B. C. read प्रकारात् for प्रकारौ.
16. C. reads बाह्याभ्यन्तर for बाह्यान्तर.
20. C. om. अपि after आकाशस्य.

तनदेशत्वेन। न च पृथिव्याद्यभावमात्रमाकाश इति वक्तुं शक्यम्। विकल्पासहत्वात्। पृथिव्यादेः प्रागभावः प्रध्वंसाभाव इतरेतराभावोत्यन्ताभावो वाकाशः। सर्वथाप्याकाशप्रतीत्यनुपपत्तिः स्यात्। प्रागभावप्रध्वंसाभावयोराकाशत्वे पृथिव्यादिषु वर्तमानेष्वाकाशप्रतीत्ययोगान्निराकाशं जगत्स्यात्। इतरेतराभावस्याकाशत्वेपीतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराल आकाशप्रतीतिर्न स्यात्। अत्यन्ताभावस्तु पृथिव्यादीनां न संभवति। अभावस्य विद्यमानपदार्थावस्थाविशेषत्वोपपादनाच्चाकाशस्याभावरूपत्वेपि न निरुपाख्यत्वम्। अण्डान्तर्वर्तिन आकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुपत्वेप्यविरोधः॥ २३॥

## अनुस्मृतेश्च॥ २४॥

पूर्वप्रस्तुतं वस्तुनः स्थिरत्वमेवोपपाद्यते। अनुस्मरणं पूर्वानुभूतवस्तुविषयं ज्ञानं प्रत्यभिज्ञानमित्यर्थः। तदेवेदमिति सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते। न च भवद्भिर्ज्वालादिष्विव सादृश्यनिबन्धनोयमेकत्वव्यामोह इति वक्तुं शक्यम्। व्यामुह्यतो ज्ञातुरेकस्यानभ्युपगमात्। न ह्यन्यानुभूतेनैकत्वं सादृश्यं वा स्वानुभूतस्यान्योनुसंधत्ते। अतो भिन्नकालवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिर्ज्ञातुरेकत्वमवश्याश्रयणीयम्। न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे। येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम।

2. A. B. read न च before पृथिव्यादेः.

7. A. B. read अन्तराल for अन्तराले.

17. B. reads अस्य for अन्य after हि.

यदपि चेदमुच्यते प्रत्यक्षानुमानाभ्यां घटादेः क्षणिकत्वं सिध्यति। प्रत्यक्षं तावद्वर्तमानार्थविषयमवर्तमानाद्वस्तुनो व्यावृत्तं स्वविषयमवगमयति नीलमिव पीतात् । एवं च भूतभविष्यद्भ्या-वर्तमानस्य वस्त्वन्तरत्वमवगतं भवति। अनुमानमपि। अर्थक्रिया-
5 कारित्वात्सत्त्वाच्च घटादि क्षणिकम् । यदक्षणिकं शशविषाणादि तदनर्थक्रियाकार्यसच्च। तथान्त्यघटक्षणसत्त्वात्पूर्वघटक्षणसत्त्वानि विनाशीनि घटक्षणसत्त्वादन्त्यघटक्षणसत्त्ववदिति । तच्च कार्यकारणभावानुपपत्त्यादिभिः पूर्वमेव निरस्तम् । किं च प्रत्यक्ष-गम्या वर्तमानस्यावर्तमानाद्व्यावृत्तिर्न वर्तमानस्य वस्त्वन्तरत्वम-
10 वगमयति। अपि तु वर्तमानकालयोगितामात्रम्। न च तावता वस्त्वन्तरत्वं सिध्यति । तस्यैव कालान्तरयोगसंभवात् ।

यत्तु सत्त्वादर्थक्रियाकारित्वादिति क्षणिकत्वे हेतुद्वयमुक्तं तदभिमतविपरीतसाधनत्वाद्विरुद्धम् । सत्त्वादर्थक्रियाकारित्वाद्वा घटादि स्थास्नु । यदस्थास्नु तदसदनर्थक्रियाकारि च यथा
15 शशविषाणमित्यपि वक्तुं शक्यम् । किं चार्थक्रियाकारित्वमक्षणि-कत्वमेव साधयेत् । क्षणध्वंसिनो हि व्यापारासंभवादर्थक्रिया-कारित्वं न संभवतीत्युक्तम् । तथान्त्यघटक्षणस्य हेतुतो नाश-दर्शनादितरेऽपि घटक्षणा हेत्वपेक्षविनाशाः स्युरित्या मुद्गरा-दिहेतूपनिपातात्स्थास्नुत्वमेव । न च वाच्यं न मुद्गरादयो

3. E. reads भूतभविष्यद्भ्यां वर्तमानस्य for भूतभविष्यद्भ्यावर्तमानस्य.
5. C. reads घटादिः क्षणिकः for घटादि क्षणिकम्.
9. A. B. om. वर्तमानस्य after न.
12. E. reads च after अर्थक्रियाकारित्वात्.
13. A. reads त्वत् before अभिमत.
15. E. reads हि after इत्यपि.
16. C. reads अपि for हि.
17. C. reads वि before नाशदर्शनात्.

विनाशहेतवोपि तु कपालादिविसदृशसंतानोत्पत्तिहेतव इति।
कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात्।
कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेपि विनाशस्य विनाशहेतुत्व-
मेव मुद्गरादेरानन्तर्याद्युक्तम्। अतः प्रत्यभिज्ञायाःस्थिरत्वमवग-
म्यमानं न केनापि प्रकारेणापह्नोतुं शक्यम्। पूर्वापरकालसंब- 5
न्ध्यर्थैक्यविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वं ब्रुवन्नीलादि-
ज्ञानानामपि नीलादेरर्थान्तरविषयत्वं ब्रूयात्। किं च प्रमातृप्र-
मेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमाना-
भ्युपगमोपि दुःशकः। तथेदं क्षणिकमित्यादिप्रतिज्ञापूर्वकहेतूप-
न्यासादिकमपि नोपपद्यते भवताम्। प्रतिज्ञोपक्रमक्षण एव व- 10
क्तुर्विनष्टत्वात्। न ह्यन्येनोपक्रान्तमजानद्भिरन्यैः समापयितुं
शक्यम्॥ २४॥

## नासतोदृष्टत्वात्॥ २५॥

एवं तावद्वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्ववादिनोः सा-
धारणानि दूषणान्युक्तानि। तत्र यदुक्तं संप्रयुक्तस्यार्थस्य ज्ञानो- 15
त्पत्तिकालेनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवतीति
तत्र सौत्रान्तिकः प्रत्यवतिष्ठते।

न ज्ञानकालेवस्थानमर्थस्य ज्ञानविषयत्वहेतुः। ज्ञानोत्पत्ति-
हेतुत्वमेव हि ज्ञानविषयत्वम्। न चैतावता चक्षुरादेर्ज्ञानविष-

2. C. reads अवस्थाविशेषः for अवस्थापत्तिः.
4. C. reads प्रत्यभिज्ञा for प्रत्यभिज्ञायाः.
5. C. reads आस्थातुम् for अपह्नोतुम्.
6. B. reads अनन्यविषयत्वम् for अन्यविषयत्वम्.
9. B. reads तत् for तथा before इदम्.
15. A. B. om. तत्र; B. om. प्र before युक्तस्य.
18. A. B. read अनवस्थानमर्थस्य ज्ञानाविषयत्व for अवस्थानमर्थस्य ज्ञानविषयत्व; C. reads विषयत्वे for विषयत्व.

यत्वप्रसङ्गः। स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्यु-
पगमात्। ज्ञाने स्वाकारं समर्प्य विनष्टोप्यर्थो ज्ञानगतेन नी-
लाद्याकारेणानुमीयते। न च पूर्वपूर्वज्ञानेनोत्तरोत्तरज्ञानाकार-
सिद्धिः। नीलज्ञानसंततौ पीतज्ञानानुत्पत्तिप्रसङ्गात्। अतोर्थ-
5 कृतमेव ज्ञानवैचित्र्यमिति। अत्रोच्यते।

नासतोदृष्टत्वादिति। योयं ज्ञाने नीलादिराकार उपलभ्यते
स विनष्टस्यासतोर्थस्याकारो भवितुं नार्हति। कुतः। अदृष्ट-
त्वात्। न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृ-
ष्टम्। प्रतिबिम्बादिकमपि स्थिरस्यैव भवति। तत्रापि न धर्म-
10 मात्रस्य। अतोर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमर्थस्य ज्ञानकालेव-
स्थानादेव भवति॥ २५॥

पुनरपि साधारणं दूषणमाह।

**उदासीनानामपि चैवं सिद्धिः॥ २६॥**

एवं क्षणिकत्वासदुत्पत्त्यहेतुकविनाशाद्यभ्युपगम उदासीना-
15 नामनुद्युञ्जानानामपि सर्वार्थसिद्धिः स्यात्। इष्टप्राप्तिरनिष्टनि-
वृत्तिर्वा प्रयत्नादिभिः साध्यते। क्षणध्वंसे हि सर्वेषां भावानां
पूर्वपूर्ववस्तु तद्गतो वा विशेषः संस्कारादिकोविद्यादिर्वोत्तरत्र न
कश्चिदनुवर्तत इति प्रयत्नादिसाध्यं न किंचिदस्ति। एवं स-
त्यहेतुसाध्यत्वात्सर्वसिद्धीनामुदासीनानामप्यैहिकामुष्मिकफलं
20 मोक्षश्च सिध्येत्॥ २६॥ समुदायाधिकरणं समाप्तम्। (३)

3. C. om. पूर्वं after पूर्व; A. B. E. om. उत्तर after उत्तर.
11. E. reads सम् before भवति.
12. B. reads हि for अपि after पुनः.
17. A. B. read पूर्वपूर्वम् for पूर्वपूर्व; C. reads वस्तुगतो वा विशेष for वस्तु तद्गतो वा विशेषः.
18. E. reads प्रयत्नादिभिः for प्रयत्नादि.
19. C. reads आमुष्मिकम् for आमुष्मिक.

## नाभाव उपलब्धेः ॥ २७ ॥

विज्ञानमात्रास्तित्ववादिनो योगाचाराः प्रत्यवतिष्ठन्ते । यदुक्तमर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमिति तन्नोपपद्यते । अर्थवज्ज्ञानानामेव साकाराणां स्वयमेव विचित्रत्वात् । तच्च स्वरूपवैचित्र्यं वासनावशादेवोपपद्यते । वासना च विलक्षणप्रत्ययप्रवाह एव । यद्घटाकारं ज्ञानं कपालाकारज्ञानस्योत्पादकं तस्य तथाविधस्योत्पादकं तत्पूर्वघटज्ञानं तस्य च तथाविधस्योत्पादकं ततःपूर्वघटज्ञानमित्येवंरूपः प्रवाह एव वासनेत्युच्यते । कथं व्रीहियवसर्षपमहीधरादिराकार आन्तरस्य ज्ञानस्यैवेत्युच्यते । इत्थम् । अर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम् । अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात् । प्रकाशमानस्य च ज्ञानस्य साकारत्वमवश्याश्रयणीयम् । निराकारस्य प्रकाशायोगात् । एकश्चायमाकार उपलभ्यमानो ज्ञानस्यैव । तस्य च बहिर्वदवभासोपि भ्रमकृतः । ज्ञानार्थयोः सहोपलम्भनियमाच्च ज्ञानादव्यतिरिक्तोर्थः । किं च बाह्यमर्थमभ्युपयद्भिरपि घटपटादिविज्ञानेषु ज्ञानस्य तत्तदर्थासाधारण्यं तत्तदर्थसारूप्यमन्तरेण नोपपद्यत इत्यवश्यं ज्ञानेर्थसरूपं रूपमास्थेयम् । तावतैव सर्वव्यवहारोपपत्तेस्तद्व्यतिरिक्तार्थकल्पना निष्प्रमाणिका । अतो विज्ञानमात्रमेव तत्त्वं न बाह्यार्थोस्तीत्येवं प्राप्ते प्रचक्ष्महे ।

नाभाव उपलब्धेरिति । ज्ञानव्यतिरिक्तस्यार्थस्याभावो वक्तुं

6. A. B. read घटाकार for घटाकारम्; A. reads तत्पूर्वघटज्ञानम् after ज्ञानस्योत्पादकम्; B. om. तस्य तथाविधस्योत्पादकम्.

9. C. om. एव after ज्ञानस्य.

17. C. reads अर्थस्य for अर्थसरूपम्.

19. C. reads बाह्यः for बाह्य.

20. C. om. वि before अतिरिक्तस्य.

न शक्यते । कुतः । उपलब्धेः । ज्ञातुरात्मनोऽर्थविशेषव्यवहार-
योग्यतापादनरूपेण ज्ञानस्योपलब्धेः । एवमेव हि सर्वे लौ-
किकाः प्रतियन्ति घटमहं जानामीति । एवंरूपेण सकर्मकेण
सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमाने-
5 नैव ज्ञानमात्रमेव परमार्थ इति साधयन्तः सर्वलोकोपहासोप-
करणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं
प्रपञ्चितम् ( पृ. ३९ ) । यत्तु

सहोपलम्भनियमादभेदो नीलतद्धियोः ।

इति तत्स्ववचनविरुद्धम् । साहित्यस्यार्थभेदहेतुकत्वात् ।
10 तदर्थव्यवहारयोग्यतैकस्वरूपस्य ज्ञानस्य तेन सहोपलम्भनिय-
मस्तस्माद्वैलक्षण्यसाधनमिति च हास्यम् । निरन्वयविनाशिनां
ज्ञानानामनुवर्तमानस्थिराकारविरहाद्वासना च दुरुपपादा । वि-
नष्टेन पूर्वज्ञानेनानुत्पन्नमुत्तरज्ञानं कथं वास्यते । अतो ज्ञानवै-
चित्र्यमप्यर्थवैचित्र्यकृतमेव । तत्तदर्थव्यवहारयोग्यतापादनरूप-
15 तया साक्षात्प्रतीयमानस्य ज्ञानस्य तत्तदर्थसंबन्धायत्तं तत्तदसा-
धारण्यम् । संबन्धश्च संयोगलक्षणः । ज्ञानमपि हि द्रव्यमेव ।
प्रभाद्रव्यस्य प्रदीपगुणभूतस्येव ज्ञानस्याप्यात्मगुणभूतस्य द्रव्य-
त्वमविरुद्धमित्युक्तम् । अतो न बाह्यार्थाभावः ॥ २७ ॥

यत्परैः स्वप्नज्ञानदृष्टान्तेन जागरितज्ञानानामपि निरालम्ब-
20 नत्वमुक्तं तत्राह ।

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

स्वप्नज्ञानवैधर्म्याज्जागरितज्ञानानामर्थशून्यत्वं न युज्यते च-

6. A. B. read भवति for भवन्ति.

10. A. B. read आपादनता after योग्यता.

14. C. om. तत् before तदर्थ.

15. C. om. ज्ञानस्य.

तुम्। स्वप्नज्ञानानि हि निद्रादिदोषदुष्टकरणजन्यानि बाधितानि च। जागरितज्ञानानि तु तद्विपरीतानीति तेषां न तत्साम्यम्। सर्वेषां च ज्ञानानामर्थशून्यत्वे भवद्भिः साध्योप्यर्थो न सिध्यति। निरालम्बनानुमानज्ञानस्याप्यर्थशून्यत्वात्। तस्यार्थवत्त्वे ज्ञानत्वस्यानैकान्त्यात्सुतरामर्थशून्यत्वासिद्धिः ॥ २८ ॥ 5

**न भावोनुपलब्धेः ॥ २९ ॥**

न केवलस्यार्थशून्यस्य ज्ञानस्य भावः संभवति। कुतः। क्वचिदप्यनुपलब्धेः। न ह्यकर्तृकस्याकर्मकस्य वा ज्ञानस्य क्वचिदुपलब्धिः। स्वप्नज्ञानादिष्वपि नार्थशून्यत्वमिति ख्यातिनिरूपणे (पृ. ९७) प्रतिपादितम् ॥२९॥ उपलब्ध्यधिकरणं समाप्तम्। (४) 10

**सर्वथानुपपत्तेश्च ॥ ३० ॥**

अत्र सर्वशून्यवादी माध्यमिकः प्रत्यवतिष्ठते। शून्यवाद एव हि सुगतमतकाष्ठा। शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमादिना क्षणिकत्वादय उक्ताः। विज्ञानं बाह्यार्थाश्च सर्वे न सन्ति। शून्यमेव तत्त्वम्। अभावापत्तिरेव च मोक्ष इत्येव बुद्धस्याभि- 15 प्रायः। तदेव हि युक्तम्। शून्यस्याहेतुसाध्यतया स्वतःसिद्धेः। सत एव हि हेतुरन्वेषणीयः। तच्च सद्भावादभावाच्च नोत्पद्यते। भावात्तावन्न कस्यचिदुत्पत्तिर्दृष्टा। न हि घटादिरनुपमृदिते पिण्डादिके जायते। नाप्यभावादुत्पत्तिः संभवति। नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घटादिकमभावात्मकमेव स्यात्। 20

7. C reads केवलम् for केवलस्य.
9. C reads अपि before उपलब्धिः; C. reads स्वप्नज्ञानस्य for स्वप्नज्ञानादिषु.
12. E. reads त्व after सर्वशून्य.
14. B. om. सर्वे.
17. C. reads उपपद्यते for उत्पद्यते.
20. A. B. read उत्पाद्यमानम् for उत्पद्यमानम्.

तथा स्वतः परतश्चोत्पत्तिर्न संभवति । स्वतश्चोत्पत्तावात्माश्रय-
दोषप्रसङ्गात्प्रयोजनाभावाच्च । परतः परोत्पत्तौ परत्वाविशे-
षात्सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः । जन्माभावादेव विनाशस्या-
प्यभावः । अतः शून्यमेव तत्त्वम् । अतो जन्मविनाशसदसदा-
5 दयो भ्रान्तिमात्रम् । न च निरधिष्ठानभ्रमासंभवाद्भ्रमाधिष्ठानं
किंचित्पारमार्थिकं तत्त्वमाश्रयितव्यम् । दोषदोषाश्रयत्वज्ञातृ-
त्वाद्यपारमार्थ्येपि भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येपि भ्रमो-
पपत्तेः । अतः शून्यमेव तत्त्वमिति प्राप्त उच्यते ।

सर्वथानुपपत्तेश्च । सर्वथानुपपत्तेः सर्वशून्यत्वं च भवदभि-
10 प्रेतं न संभवति । किं भवान्सर्वं सदिति वा प्रतिजानीतेस-
दिति वान्यथा वा । सर्वथा तवाभिप्रेतं तुच्छत्वं न संभ-
वति । लोके भावाभावशब्दयोस्तत्प्रतीत्योश्च विद्यमानस्यैव वस्तु-
नोवस्थाविशेषगोचरत्वस्य प्रतिपादितत्वात् । अतः सर्वं शून्य-
मिति प्रतिजानता सर्वं सदिति प्रतिजानतेव सर्वस्य विद्यमान-
15 स्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति भवदभिमता तु-
च्छता न कुतश्चिदपि सिध्यति । किं च कुतश्चित्प्रमाणाच्छून्य-
त्वमुपलभ्य शून्यत्वं सिसाधयिषता तस्य प्रमाणस्य सत्यत्वम-
भ्युपेत्यम् । तस्यासत्यत्वे सर्वं सत्यं स्यादिति । सर्वथा सर्वशू-
न्यत्वं चानुपपन्नम् ॥ ३० ॥ सर्वथानुपपत्त्यधिकरणं समाप्तम् । (५)

20 **नैकस्मिन्नसंभवात् ॥ ३१ ॥**

निरस्ताः सौगताः । जैना अपि परमाणुकारणत्वादिकं ज-
गतो वदन्तीत्यनन्तरं जैनपक्षः प्रतिक्षिप्यते ।

---

15. C. reads योगितया for योगिता.

17. C. reads सत्त्वम् for सत्यत्वम्.

18. C. reads असत्त्वे for असत्यत्वे.

21. C. reads कारणत्वम् for कारणत्वादिकम्.

ते किल मन्यन्ते। जीवाजीवात्मकं जगदेतन्निरीश्वरम्। तच्च षड्द्रव्यात्मकम्। तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशाख्यानि। तत्र जीवा बद्धा योगसिद्धा मुक्ताश्चेति त्रिविधाः। धर्मो नाम गतिमतां गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी। अधर्मश्च स्थितिहेतुभूतो व्यापी। पुद्गलो नाम वर्णग- 5
न्धरसस्पर्शवद्द्रव्यम्। तच्च द्विविधं परमाणुरूपं तत्संघातरूपं च पवनज्वलनसलिलधरणीतनुभुवनादिकम्। कालस्त्वभूदस्तिभविष्यतीतिव्यवहारहेतुरणुरूपो द्रव्यविशेषः। आकाशोऽप्येकोऽनन्तप्रदेशश्च। तेषु चाणुव्यतिरिक्तद्रव्याणि पञ्चास्तिकाया इति च संगृह्यन्ते। जीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः 10
पुद्गलास्तिकाय आकाशास्तिकाय इति। अनेकदेशवर्तिनि द्रव्येऽस्तिकायशब्दः। जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षा इति। मोक्षसंग्रहेण मोक्षोपायश्च गृहीतः। स च सम्यग्ज्ञानदर्शनचारित्ररूपः। तत्र जीवस्तु ज्ञानदर्शनसुखवीर्यगुणः। अजीवश्च जीवभोग्यवस्तुजा- 15
तम्। आस्रवस्तद्भोगोपकरणभूतमिन्द्रियादिकम्। बन्धश्चाष्टविधो घातिकर्मचतुष्टयमघातिकर्मचतुष्टयं चेति। तत्राद्यं जीवगुणानां स्वाभाविकानां ज्ञानदर्शनवीर्यसुखानां प्रतिघातकरम्। अपरं शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतम्। निर्जरं मोक्षसाधनमर्हदुपदेशावगतं तपः। संवरो 20
नामेन्द्रियनिरोधः समाधिरूपः। मोक्षस्तु निवृत्तरागादिक्लेशस्य

---

7. A. B. read भवन for भुवन.
9. C. reads व्यतिरिक्तानि for व्यतिरिक्त.
10. C. om. च after इति.
16. C. reads करणम् for करणभूतम्.
19. B. reads अपेक्षा for उपेक्षा.
20. C. reads साधनभूतम् for साधनम्.

स्वाभाविकात्मस्वरूपाविर्भावः । पृथिव्यादिहेतुभूताश्चाणवो वैशेषिकादीनामिव न चतुर्विधा अपि त्वेकस्वभावाः । पृथिव्यादिभेदस्तु परिणामकृतः ।

सर्वं च वस्तुजातं सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्ति । १ स्यादस्ति २ स्यान्नास्ति ३ स्यादस्ति च नास्ति च ४ स्यादवक्तव्यम् ५ स्यादस्ति चावक्तव्यम् ६ स्यान्नास्ति चावक्तव्यम् ७ स्यादस्ति च नास्ति चावक्तव्यं चेति सर्वत्र सप्तभङ्गिनयावतारान् । सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मना सत्त्वैकत्वनित्यत्वाद्युपपादयन्ति । पर्यायात्मना च तद्विपरीतम् । पर्यायाश्च द्रव्यस्यावस्थाविशेषाः । तेषां च भावाभावरूपत्वात्सत्त्वासत्त्वादिकं सर्वमुपपन्नमिति । अत्राभिधीयते ।

नैकस्मिन्नसंभवादिति । नैतदुपपद्यते । कुतः । एकस्मिन्नसंभवात् । एकस्मिन्वस्तुन्यस्तित्वनास्तित्वादेर्विरुद्धस्य च्छायातपवद्युगपदसंभवात् । एतदुक्तं भवति । द्रव्यस्य तद्विशेषणभूतपर्यायशब्दाभिधेयावस्थाविशेषस्य च पृथक्पदार्थत्वान्नैकस्मिन्विरुद्धधर्मसमावेशः संभवति । तथा ह्येकेनास्तित्वादिनावस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीतनास्तित्वादिविशिष्टत्वं संभवति । उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वं च द्रव्यस्यानित्यत्वं तद्विपरीतं च नित्यत्वं तस्मिन्कथं समवैति । विरोधिधर्माश्रयत्वं च भिन्नत्वं तद्विपरीतं चाभिन्नत्वं कथं वा तस्मिन्समवैति । यथाश्वत्वमहिषत्वयोर्युगपदेकस्मिन्नसंभवः । अयमर्थः पूर्वमेव भेदाभेदवादिनिरसनसमये तत्तु समन्वयात्

15. E. reads तत् after तत.

19. C. om. सम् before भवति.

23. C. reads वाद for वादि after भेदाभेद.

( ब्र. सू. १।१।४ ) इत्यत्र प्रपञ्चितः । कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्या न च परिहर्तव्याः । कालोस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः । जात्यादयो हि द्रव्यविशेषणतयैव प्रतीयन्त इति पूर्वमेवोक्तम् । 5

कथं पुनरेकमेव ब्रह्म सर्वात्मकमिति श्रोत्रियैरुच्यते । सर्वचेतनाचेतनशरीरत्वात्सर्वज्ञस्य सर्वशक्तेः सत्यसंकल्पस्य पुरुषोत्तमस्येत्युक्तम् । शरीरशरीरिणोस्तद्धर्माणां चात्यन्तवैलक्षण्यमप्युक्तम् । किं च जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात्तेषु द्रव्यैकत्वेन पर्यायात्मना चैकत्वानेकत्वादयो दुरुपपादाः। 10 अथोच्येत षडेतानि द्रव्याणि स्वकीयैः पर्यायैः स्वेन स्वेन चात्मना तथा भवन्तीति । एवमपि सर्वमनैकान्तिकमित्यभ्युपगमविरोधः । अन्योन्यतादात्म्याभावात् । अतो न युक्तमिदं जैनमतम् । ईश्वरानधिष्ठितपरमाणुकारणवादे पूर्वोक्ता दोषास्तत्रैवावतिष्ठन्ते । 15

## एवं चात्माकार्त्स्न्यम् ॥ ३२ ॥

एवं भवदभ्युपगमे सत्यात्मनश्चाकार्त्स्न्यं प्रसज्यते । जीवोसंख्यातप्रदेशो देहपरिमाण इति हि भवतां स्थितिः । तत्र हस्त्यादिशरीरे स्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकाशरीरे प्रविशतोल्पदेशव्यापित्वेनाकार्त्स्न्यं प्रसज्यते। अपरिपूर्णता प्रसज्यत इत्यर्थः ॥ ३२ ॥ 20

---

2. C. om. नास्तित्व.
6. C. om. पुनः.
12. C. reads सम् before भवन्ति.
18. B. om. हि after इति.
19. C. reads अव before स्थितस्य; C. reads आदि after पिपीलिका.

अथ संकोचविकाशधर्मतयात्मनः पर्यायशब्दाभिधेयावस्थान्तरापत्त्या विरोधः परिह्रियत इत्युच्यते तत्राह ।

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥**

न च संकोचविकाशरूपावस्थान्तरापत्त्यापि विरोधः परिहर्तुं
5 शक्यते । विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वादिदोषप्रसङ्गात् ॥ ३३ ॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥**

जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतं तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वादात्मनश्च मोक्षावस्थस्य तत्परिमाणस्य
10 चोभयोर्नित्यत्वात्तद्देवात्मनः स्वाभाविकं परिमाणमिति पूर्वमपि तस्मादविशेषः स्यात् । अतो देहपरिमाणत्वमात्मनो न स्यादित्यसंगतमेवेदमार्हतमतम् ॥ ३४ ॥ एकस्मिन्नसंभवाधिकरणं समाप्तम् । (६)

**पत्युरसामञ्जस्यात् ॥ ३५ ॥**

कपिलकणादसुगतार्हतमतानामसामञ्जस्याद्वेदबाह्यत्वाच्च निः-
15 श्रेयसार्थिभिरनादरणीयत्वमुक्तम् । इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्चानादरणीयतोच्यते । तन्मतानुसारिणश्चतुर्विधाः कापालाः कालामुखाः पाशुपताः शैवाश्चेति । सर्वे चैते वेदविरुद्धां तत्त्वप्रक्रियामैहिकामुष्मिकश्रेयःसाधनकल्पनां च क-

1. C. reads विकास for विकाश.
4. C. reads विकास for विकाश.
6. C. om. आदिदोष.
9. C. reads परिग्रहात् for परिग्रहाभावात्.
12. C. reads आर्हतम् for आर्हत.
14. C. reads अर्हत् for आर्हत.
17. C. reads कापालिकाः for कापालाः.
18. C. reads निःश्रेयस for श्रेयः.

ल्पयन्ति। निमित्तोपादानयोर्भेदं निमित्तकारणं च पशुपतिमा-
चक्षते। तथा निःश्रेयससाधनमपि मुद्रिकाषट्कधारणादिकम्।
यथाहुः कापालाः।

मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति॥ 5
कण्ठिका रुचकं चैव कुण्डलं च शिखामणिः।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते॥
आभिर्मुद्रितदेहस्तु न भूय इह जायते।

इत्यादि। तथा कालामुखा अपि कपालपात्रभोजनशवभ-
स्मस्नानतत्प्राशनलगुडधारणसुराकुम्भस्थापनतदाधारदेवपूजादि- 10
कर्मैहिकामुष्मिकसकलफलसाधनमभिदधति।

रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके।

कपालं भस्मना स्नानमित्यादि च प्रसिद्धं शैवागमेषु। तथा
केनचित्क्रियाविशेषेण विजातीयानामपि ब्राह्मण्यप्राप्तिमुत्तमा-
श्रमप्राप्तिं चाहुः। 15

दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात्।
कापालं व्रतमास्थाय यतिर्भवति मानवः॥

इति। तत्रेदमुच्यते।

पत्युरसामञ्जस्यादिति। नैकस्मिन्नसंभवादित्यतो नेत्यनुव-
र्तते। पत्युः पशुपतेर्मतं नादरणीयम्। कुतः। असामञ्जस्यात्। 20
असामञ्जस्यं चान्योन्यव्याघाताद्वेदविरोधाच्च। मुद्रिकाषट्कधारण-
भगासनस्थात्मध्यानसुराकुम्भस्थापनतत्स्थदेवतार्चनगूढाचारश्म-
शानभस्मस्नानप्रणवपूर्वाभिध्यानान्यन्योन्यविरुद्धानि। वेदवि-

---

9. C. reads इत्यादिकम् for इत्यादि; C. reads मात्र for पात्र.
11. E. reads इति after अभिदधति.
22. C. reads वन्दन for अर्चन; C. reads स्मशान for श्मशान.
23. B. om. प्रणव.

रुद्धं चेदं तत्त्वपरिकल्पनमुपासनमाचारश्च । वेदाः खलु परं ब्रह्म नारायणमेव जगन्निमित्तमुपादानं च वदन्ति

नारायणपरं ब्रह्म तत्त्वं नारायणः परः । (म.ना. १३।१)

नारायणपरो ज्योतिरात्मा नारायणः परः । (म.ना. १३।१)

5 तदैक्षत बहु स्यां प्रजायेयेति ( छा. ६।२।३ ) । सोकामयत बहु स्यां प्रजायेयेति ( तै. २।६ ) । तदात्मानं स्वयमकुरुत ( तै. २।७।१ ) इत्यादयः । परब्रह्मभूतपरमपुरुषवेदनमेव च मोक्षसाधनमुपासनं वदन्ति

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।

10 ( तै. आ. ३।११ )

तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ।

( तै. आ. ३।११ )

इत्यादिनैकतां गताः सर्वे वेदान्ताः । तदितिकर्तव्यताभूतं कर्म च वेदविहितवर्णाश्रमसंबन्धि यज्ञादिकमेव वदन्ति

15 तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ।··· एतमेव लोकमिच्छन्तः प्रव्राजिनः प्रव्रजन्ति ( बृ. ४।४।२२ ) इत्यादयः । केवलपरतत्त्वप्रतिपादनपरनारायणानुवाकप्रसिद्धतत्त्वपराः केषुचिदुपासनादिविधिपरेषु वाक्येषु श्रुताः प्रजापतिशिवेन्द्राकाशप्राणादिशब्दा

20 इति शास्त्रदृष्ट्या तूपदेशो वामदेववत् ( ब्र. सू. १।१।३१ ) इत्यत्र प्रतिपादितम् । तथैको ह वै नारायण आसीन्न ब्रह्मा नेशानः ( महा. १ ) इत्यारभ्य स एकाकी न रमते (महा. १) इति सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इत्यादिषु साधा-

---

4. E. reads नारायणः for नारायण before परो ज्योतिः.
18. B. om. आदि after उपासन.
24. C. om. अग्र आसीत्.

रणा: सद्ब्रह्मादिशब्दा: प्रतिपादयन्तीति जन्माद्यस्य यत: ( ब्र. सू. १।१।२ ) इत्यत्र प्रतिपादितम् । अतो वेदविरुद्धतत्त्वोपासनानुष्ठानाभिधानात्पशुपतिमतमनादरणीयमेव ॥ ३५ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥

वेदबाह्यानामनुमानाद्धि केवलनिमित्तेश्वरकल्पना । तथा 5 सति दृष्टानुसारेण कुलालादिवदधिष्ठानं कर्तव्यम् । न च कुलालादेर्मृदाद्यधिष्ठानवत्पशुपतेर्निमित्तभूतस्य प्रधानाधिष्ठानमुपपद्यते । अशरीरत्वात् । सशरीराणामेव हि कुलालादीनामधिष्ठानशक्तिर्दृष्टा। न चेश्वरस्य सशरीरत्वमभ्युपगन्तव्यम् । तच्छरीरस्य सावयवस्य नित्यत्वेनित्यत्वे च शास्त्रयोनित्वात् ( ब्र. सू. 10 १।१।४ ) इत्यत्र ( पृ. १४५ ) दोषस्योक्तत्वात् ॥ ३६ ॥

## करणवच्चेन्न भोगादिभ्य: ॥ ३७ ॥

यथा भोक्तुर्जीवस्य करणकलेवराद्यधिष्ठानमशरीरस्यैव दृश्यते तद्वन्महेश्वरस्याप्यशरीरस्य प्रधानाधिष्ठानमुपपद्यत इति चेन्न । भोगादिभ्य: । पुण्यपापरूपकर्मफलभोगार्थं पुण्यपा- 15 परूपादृष्टकारितं हि तदधिष्ठानम् । तद्वत्पशुपतेरपि पुण्यपापरूपादृष्टवत्तया तत्फलभोगादि सर्वं प्रसज्येत । ततो नाधिष्ठानसंभव: ॥ ३७ ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥

वाशब्दश्चार्थे । पशुपते: पुण्यपापरूपादृष्टवत्त्वे जीववदन्त- 20 वत्त्वं सृष्टिसंहारास्पदत्वमसर्वज्ञता च स्यादित्यनादरणीयमेवेदं मतम् । विरोधे त्वनपेक्षं स्यात् ( जै. सू. १।३।३ ) इत्यादिना वेदविरुद्धस्यानादरणीयत्वे सिद्धेपि पशुपतिमतस्य वेदविरुद्धता-

2. B. reads उपन्यासन for उपासन.
11. E. reads च after अशरीरस्य.
17. C. reads अनधिष्ठान for नाधिष्ठान.

ख्यापनार्थं पत्युरसामञ्जस्यात् (ब्र. सू. २।२।३५) इति पुनरारम्भः । यद्यपि पाशुपतशैवयोर्वेदाविरोधिन इव केचन धर्माः प्रतीयन्ते तथापि वेदविरुद्धनिमित्तोपादानभेदकल्पनापरावरतत्त्वव्यत्ययकल्पनामूलत्वात्सर्वमसमञ्जसमेवेत्यसामञ्जस्यादित्युक्तम् ॥ ३८ ॥ पशुपत्यधिकरणं समाप्तम् । (७)

उत्पत्त्यसंभवात् ॥ ३९ ॥

कपिलादितन्त्रसामान्याद्भगवदभिहितपरमनिःश्रेयससाधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते । तत्रैवमाशङ्क्यते । परमकारणात्परब्रह्मभूताद्वासुदेवात्संकर्षणो नाम जीवो जायते । संकर्षणात्प्रद्युम्नसंज्ञं मनो जायते । तस्मादनिरुद्धसंज्ञोऽहंकारो जायत इति हि भागवतप्रक्रिया । अत्र जीवस्योत्पत्तिः श्रुतिविरुद्धा प्रतीयते । श्रुतयो हि जीवस्यानादित्वं वदन्ति न जायते म्रियते वा विपश्चित् (का. २।१७) इत्याद्याः ॥ ३९ ॥

न च कर्तुः करणम् ॥ ४० ॥

संकर्षणात्प्रद्युम्नसंज्ञं मनो जायत इति कर्तुर्जीवात्करणस्य मनस उत्पत्तिर्न संभवति ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । (मु. २।१।३) इति परस्मादेव ब्रह्मणो मनसोऽप्युत्पत्तिश्रुतेः । अतः श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यत इति ॥ ४० ॥

एवं प्राप्ते प्रचक्ष्महे ।

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥

वाशब्दात्पक्षो विपरिवर्तते । विज्ञानं चादि चेति परं ब्रह्म

3. C. reads परावरत्व for परावरतत्त्व.

विज्ञानादि । संकर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति तत्प्रतिपादनपरस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते । एतदुक्तं भवति । भागवतप्रक्रियामजानतामिदं चोद्यं यज्जीवोत्पत्तिर्विरुद्धाभिहितेति । वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलं स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया चतुर्धावतिष्ठत इति हि तत्प्रक्रिया । 5
यथा पौष्करसंहितायाम्

कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते ।
क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत् ॥

इत्यादि । तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्वतसंहितायामुक्तम् । 10

ब्राह्मणानां हि सद्ब्रह्मवासुदेवाख्ययाजिनाम् ।
विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत् ॥

इति । तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वेण कर्मणाभ्यर्चितं सम्यक्प्राप्यते । विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म 15
वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति । विभवो हि नाम रामकृष्णादिप्रादुर्भावगणः । व्यूहो वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपश्चतुर्व्यूहः । सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म । यथा पौष्करे

यस्मात्सम्यक्परं ब्रह्म वासुदेवाख्यमव्ययम् । 20
तस्मादवाप्यते शास्त्राज्ज्ञानपूर्वेण कर्मणा ॥

---

4. C. reads इव for एव.
7. C. reads उपास्यते for उपासते.
17. E. reads नाम after व्यूहः.
19. B. reads पर for परम्.
21. C. E. read अस्मात् for तस्मात्.

इत्यादि । अतः संकर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वादजायमानो बहुधा विजायते (तै. आ. ३।१२) इतिश्रुतिसिद्धस्यैवाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मनोभिधानात्तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेध इति । तत्र
5 जीवमनोहंकारतत्त्वानामधिष्ठातारः संकर्षणप्रद्युम्नानिरुद्धा इति तेषामेव जीवादिशब्दैरभिधानमविरुद्धम् । यथाकाशप्राणादिशब्दैर्ब्रह्मणोभिधानम् ॥ ४१ ॥

## विप्रतिषेधाच्च ॥ ४२ ॥

विप्रतिषिद्धा हि जीवोत्पत्तिरस्मिन्नपि तन्त्रे । यथोक्तं परमसं-
10 हितायाम्

अचेतना परार्था च नित्या सततविक्रिया ।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥
व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च ।
स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥

15 इति । एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैव । जन्ममरणादिव्यवहारस्तु लोकवेदयोर्जीवस्य यथोपपद्यते तथा नात्मा श्रुतेः (ब्र. सू. २।३।१८) इत्यत्र वक्ष्यते । अतो जीवस्योत्पत्तिस्तत्रापि प्रतिषिद्धेति जीवोत्पत्तिवादनिमित्ताप्रामाण्यशङ्का दूरोत्सारिता ।
20 यश्चैष केषांचिदुद्धोषः साङ्गेषु वेदेषु निष्ठामलभमानः शा-

1. C. om. आदि after इति.
4. B. reads प्रामाण्यप्रतिषेधः for प्रामाण्यस्याप्रतिषेधः.
5. E. reads सत्त्वानाम् for तत्त्वानाम्.
9. E. reads तस्मिन् for अस्मिन्.
16. B. reads तन्त्र for तन्त्रे.
19. E. reads एव after प्रतिषिद्धा.

ण्डिल्यः पञ्चरात्रशास्त्रमधीतवानिति साङ्गेषु वेदेषु पुरुषार्थ-निष्ठा न लब्धेति वचनाद्वेदविरुद्धं तन्त्रमिति सोऽप्यनाघ्रात-वेदवचसामनाकलिततदुपबृंहणन्यायकलापानां श्रद्धामात्रवि-जृम्भितः। यथा

प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। 5
(ऐ. ब्रा. ५।३१।६)

इत्यनुदितहोमनिन्दोदितहोमप्रशंसार्थेत्युक्तम्। यथा च भूम-विद्याप्रक्रमे नारदेन ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवे-दमथर्वणं चतुर्थमितिहासपुराणं पञ्चमम् (छा. ७।१।२) इ-त्यारभ्य सर्वविद्यास्थानमभिधाय सोऽहं भगवो मन्त्रविदेवास्मि 10 नात्मवित् (छा. ७।१।३) इति भूमविद्याव्यतिरिक्तासु सर्वासु विद्यास्वात्मवेदनालाभवचनं वक्ष्यमाणभूमविद्याप्रशंसार्थं कृतम्। अथवास्य नारदस्य साङ्गेषु वेदेषु यत्परतत्त्वं प्रतिपाद्यते तद-लाभनिमित्तोऽयं वादः। एवमेव शाण्डिल्यस्येति पश्चाद्वेदान्त-वेद्यवासुदेवाख्यपरब्रह्मतत्त्वाभिधानादवगम्यते। तथा वेदार्थस्य 15 दुर्ज्ञानतया सुखावबोधार्थशास्त्रारम्भः परमसंहितायामुच्यते।

अधीता भगवन्वेदाः साङ्गोपाङ्गाः सविस्तराः।
श्रुतानि च मयाङ्गानि वाकोवाक्ययुतानि च॥
न चैतेषु समस्तेषु संशयेन विना क्वचित्।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति॥ 20

2. B. om. न after निष्ठा; C. reads एवेदम् after वेदविरुद्धम्; C. reads अयम् after सः.
7. C. om. च after यथा.
9. A. B. E. read आथर्वणम् for अथर्वणम्.
12. A. reads आत्मनः for आत्म before वेदन.
16. E. reads बोधार्थः for बोधार्थ.
17. C. reads सकलाः for भगवन्.

इति ।

वेदान्तेषु यथासारं संगृह्य भगवान्हरिः ।
भक्तानुकम्पया विद्वान्संचिक्षेप यथासुखम् ॥

इति च। अतः स भगवान्वेदान्तवेद्यः परब्रह्माभिधानो वासुदेवो
5 निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दाद्यपरिमितो-
दारगुणसागरः सत्यसंकल्पश्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयावस्थि-
तान्धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान्भक्तानवलोक्यापार-
कारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वस्वरूपस्वविभूति-
स्वाराधनतत्फलयाथात्म्यावबोधिनो वेदानृग्यजुःसामाथर्वभेद-
10 भिन्नानपरिमितशाखान्विध्यर्थवादमन्त्ररूपान्स्वेतरसकलसुरनर-
दुरवगाहांश्चावधार्य तदर्थयाथात्म्यावबोधि पञ्चरात्रं शास्त्रं स्वय-
मेव निरमिमीतेति निरवद्यम् ।

यत्तु परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य प्रामाण्यनिषेध-
परं व्याख्यातं तत्सूत्राक्षराननुगुणं सूत्रकाराभिप्रायविरुद्धं च ।
15 तथा हि सूत्रकारेण वेदान्तन्यायाभिधायीनि सूत्राण्यभिधाय
वेदोपबृंहणाय च भारतसंहितां शतसाहस्रिकां कुर्वता मोक्षधर्मे
ज्ञानकाण्डेभिहितम् ।

गृहस्थो ब्रह्मचारी च वानप्रस्थोथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥

20 (भा. शा. ३३४।१)

इत्यारभ्य महता प्रबन्धेन पञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥

---

4. A. (टिप्पणी) C. read वेदैक for वेदान्त.
8. B. C. om. स्व before विभूति.
9. B. reads वेद for भेद.
16. B. reads उपबृंहण for उपबृंहणाय च.

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
(भा. शा. ३४३।११-१२)
आरण्यकं च वेदेभ्य ओषधिभ्यो यथामृतम् ।
(भा. शा. ३४३।१३)
इदं महोपनिषदं चतुर्वेदसमन्वितम् । 5
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
(भा. शा. ३३९।१११-११२)
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
(भा. शा. ३३५।३२)
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा । 10
(भा. शा. ३३५।४०)
भविष्यति प्रमाणं वा एतदेवानुशासनम् ।
(भा. शा. ३३५।४४)

इति। सांख्ययोगशब्दाभ्यां ज्ञानयोगकर्मयोगावभिहितौ। यथोक्तम्

ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् । (गी.३।३) 15

इति । भीष्मपर्वण्यपि

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
(भा. भी. ६६।३९)
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ।
सात्वतं विधिमास्थाय गीतः संकर्षणेन यः । 20
(भा. भी. ६६।४०)

इति । कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्वतशास्त्रस्याप्रामाण्यं ब्रूयात् ।

---

6. भारत reads कृतं तेन for कृतान्तेन.

23. C. om. आदि after अर्चन.

ननु च

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ॥

( भा. शा. ३४९।२ )

5 इत्यादिना सांख्यादीनामप्यादरणीयतोच्यते । शारीरके तु सांख्यादीनि प्रतिषिध्यन्ते । अत इदमपि तन्त्रं तत्तुल्यम् । नेत्युच्यते । यतस्तत्रापीममेव शारीरोक्तन्यायमवतारयति । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वेति प्रश्नस्यायमर्थः । किं सांख्ययोगपाशुपतवेदपञ्चरात्राण्येकतत्त्वप्रतिपादनपराणि पृथक्त-
10 त्त्वप्रतिपादनपराणि वा । यदैकतत्त्वप्रतिपादनपराणि किं तदेकं तत्त्वम् । यदा तु पृथक्तत्त्वप्रतिपादनपराणि तदैषां परस्परविरुद्धार्थप्रतिपादनपरत्वाद्वस्तुनि विकल्पासंभवाच्चैकमेव प्रमाणमङ्गीकरणीयम् । किं तदेकमित्यस्योत्तरं ब्रुवन्

ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ।
15 सांख्यस्य वक्ता कपिलः ( भा. शा. ३४९।६४-६५ )

इत्यारभ्य सांख्ययोगपाशुपतानां कपिलहिरण्यगर्भपशुपतिकृतत्वेन पौरुषेयत्वं प्रतिपाद्य

अवान्तरतपा नाम वेदाचार्यः स उच्यते ।

( भा. शा. ३४९।६६ )

20 इति वेदानामपौरुषेयत्वमभिधाय

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।

( भा. शा. ४४९।६८ )

5. E. reads अपि for तु after शारीरके.
10. C. reads यथा for यदा before एकतत्त्व; C. reads तथा for तत् before एकम्.
12. C. reads प्रतिपादकत्वात् for प्रतिपादनपरत्वात्.
17. C. reads प्रणीत for कृत.
18. C. reads अपान्तरतमाः for अवान्तरतपाः.

इति पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान् ।

एवं वदतश्चायमाशयः । पौरुषेयाणां हि तन्त्राणां परस्परविरुद्धवस्तुवादितयापौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम् । वेदवेद्यश्च परब्रह्मभूतो नारायणः । अतस्तत्तन्त्राभिहितप्रधानपुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयमिति । तदिदमाह

> सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।
> यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ॥
>
> (भा. शा. ३४९।६८-६९)

इति । यथागमं यथान्यायमिति न्यायानुगृहीतं तत्तदागमोक्तं वस्तु परामृशतो नारायण एव सर्वस्य वस्तुनो निष्ठेति दृश्यते । अब्रह्मात्मकतया तत्तत्तन्त्राभिहितानां तत्त्वानां सर्वं खल्विदं ब्रह्म (छा. ३।१४।१) । विश्वं नारायणः (ना. १३) इत्यादिना सर्वस्य ब्रह्मात्मकतामनुसंदधानस्य नारायण एव निष्ठेति प्रतीयत इत्यर्थः । अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति तत्स्वरूपतदुपासनाभिधायि तत्तन्त्रमिति च तस्मिन्नितरतन्त्रसामान्यं न केनचिद्भावयितुं शक्यम् । अतस्तत्रैवेदमुच्यते ।

> एवमेकं सांख्ययोगं वेदारण्यकमेव च ।
> परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥
>
> (भा. शा. ३४८।८२)

---

2. B. reads पौरुषाणाम् for पौरुषेयाणाम्.
5. C. E. om. तत् after तत्.
7. E. reads च after आह.
12. B. reads परामृशता for परामृशतः.
18. E. reads उत् before भावयितुम्.

इति । सांख्यं च योगश्च सांख्ययोगम् । वेदाश्चारण्यकानि च वेदारण्यकम् । परस्परान्वितान्येकतत्त्वप्रतिपादनपरतयैकीभूतान्येकं पञ्चरात्रमिति कथ्यते । एतदुक्तं भवति । सांख्योक्तानि पञ्चविंशतितत्त्वानि योगोक्तं च यमनियमाद्यात्मकं योगं
5 वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं योगस्य च ब्रह्मोपासनप्रकारत्वं कर्मणां च तदाराधनरूपतामभिदधति ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि । एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति । शारीरके च सांख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतं न स्वरूपम् ।
10 योगपाशुपतयोश्चेश्वरस्य केवलनिमित्तकारणता परावरतत्त्वविपरीतकल्पना वेदबहिष्कृताचारो निराकृतो न योगस्वरूपं पशुपतिस्वरूपं च । अतः

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥

15 इति तत्तदभिहिततत्तत्स्वरूपमात्रमङ्गीकार्यं जिनसुगताभिहिततत्त्ववत्सर्वं न बहिष्कार्यमित्युच्यते ।

यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ।

(भा. शा. ३४९।६९)

इत्यनेनैकार्थ्यात् ॥ ४२ ॥ उत्पत्त्यसंभवाधिकरणं समाप्तम् । (८)

20 इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥

2. B. reads वेदारण्यकानि च before वेदारण्यकम्; E. reads अन्या-न्येतानि for अन्वितानि.
10. C. reads परावरत्व for परावरतत्त्व.
11. C. reads बहिष्कृतश्च for बहिष्कृत.
15. C. reads अपि before तत्तदभिहित; B. om. तत् after तत.

# अथ श्रीभाष्ये



## द्वितीयाध्याये तृतीयः पाद आरभ्यते ।

### न वियदश्रुतेः ॥ १ ॥

सांख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया विप्रतिषेधाच्चासामञ्जस्यमुक्तम् । इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यतयाभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते । तत्र वियदुत्पद्यते न वेति संशय्यते । किं युक्तम् । न वियदुत्पद्यत इति । कुतः । अश्रुतेः । संभावितस्य हि श्रवणसंभवः । असंभावितस्य तु गगनकुसुमवियदुत्पत्त्यादेः शब्दाभिधेयत्वं न संभवति । न खलु निरवयवस्य सर्वगतस्याकाशस्यात्मन इवोत्पत्तिर्निरूपयितुं शक्यते । अत एव चोत्पत्त्यसंभवाच्छान्दोग्ये सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोसृजत (छा. ६।२।३) इति । तैत्तिरीयाथर्वणादिषु तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१) ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापः (मु. २।१।३) इत्यादिषु श्रूयमाणा वियदुत्पत्तिरर्थविरोधाद्बाध्यत इति ॥ १ ॥

11. B. om. आकाशस्य.

14. E. reads क after तैत्तिरीय; C. reads आथर्वणिक for आथर्वण.

17. C. reads श्रयमाण for श्रयमाणा.

एवं प्राप्तेऽभिधीयते ।

## अस्ति तु ॥ २ ॥

अस्ति त्वाकाशस्योत्पत्तिः । अतीन्द्रियार्थविषया हि श्रुतिः प्रमाणान्तराप्रतीतामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव । न
5 च श्रुतिप्रतिपन्नेऽर्थे तद्विरोधि निरवयवत्वादिहेतुकमनुत्पत्त्यनुमानमुदेतुमलम् । आत्मनोऽप्यनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यति ॥ २ ॥

पुनश्चोदयति ।

## गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥

10 तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१) इत्यादिवियदुत्पत्तिश्रुतिर्गौणीति कल्पयितुं युक्तम् । तत्तेजोऽसृजत (छा. ६।२।३) इति सिसृक्षोर्ब्रह्मणः प्रथमं तेज उत्पद्यत इति तेजउत्पत्तिप्राथम्येन वियदुत्पत्तिप्रतिपादनासंभवात् । वायुश्चान्तरिक्षं चैतदमृतम् (बृ. २।३।३, श. ब्रा. १४।५।३।४)
15 इति वियतोऽमृतत्वशब्दाच्च ॥ ३ ॥

कथमेकस्य संभूतशब्दस्याकाशापेक्षया गौणत्वमन्याद्यपेक्षया मुख्यत्वमिति चेत्तत्राह ।

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

एकस्यैव तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१)
20 इत्याकाशे मुख्यत्वासंभवाद्गौणतया प्रयुक्तस्य संभूतशब्दस्य वायोरग्निः (तै. २।१) इत्यादिष्वनुपक्तस्य मुख्यत्वं स्याच्च । ब्रह्मशब्दवत् । यथा ब्रह्मशब्दः

4. E. reads अप्राप्ताम् for अप्रतीताम्.
7. E. reads वक्ष्यते for वक्ष्यति.
16. A. reads एक for एकस्य.
21. C. reads अग्नि after इति.

तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते । ( मु. १।१।९ )
इत्यत्र प्रधाने गौणतया प्रयुक्तस्तस्मिन्नेव प्रकरणे
तपसा चीयते ब्रह्म ततोन्नमभिजायते । ( मु. १।१।८ )
इति ब्रह्मणि मुख्यतया प्रयुज्यते तद्वत् । अनुषङ्गे च श्रवणावृ-
त्ताविवाभिधानावृत्तिर्विद्यत एवेत्यर्थः ॥ ४ ॥ 5

परिहरति ।

## प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिवादिनीनां श्रुतीनां
गौणत्वं कल्पयितुं न युज्यते । यतश्छान्दोग्यश्रुत्यैव वियदुत्प-
त्तिरङ्गीकृता । येनाश्रुतं श्रुतम् ( छा. ६।१।३ ) इत्यादिना 10
ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञानात् । तस्या हि प्रतिज्ञाया अहानि-
राकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति ॥ ५ ॥

## शब्देभ्यः ॥ ६ ॥

इतश्च वियदुत्पत्तिश्छान्दोग्ये प्रतीयते । सदेव सोम्येदमग्र
आसीदेकमेवाद्वितीयम् ( छा. ६।२।१ ) इति प्राक्सृ- 15
ष्टेरेकत्वावधारणशब्दादैतदात्म्यमिदं सर्वम् ( छा. ६।८।७ )
इत्येवमादिशब्देभ्यश्च कार्यत्वेन ब्रह्मणोव्यतिरेकप्रतीतेः । न च
तत्तेजोसृजत ( छा. ६।२।३ ) इति तेजस उत्पत्तिश्रुति-
र्वियदुत्पत्तिं वारयति । वियदुत्पत्त्यवचनमात्रेण तेजसः प्रतीय-
मानं प्राथम्यं श्रुत्यन्तरप्रतिपन्नां वियदुत्पत्तिं न निवारयितु- 20
मलम् ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तुशब्दश्चार्थे । ऐतदात्म्यमिदं सर्वम् ( छा. ६।८।७ ) इत्या-

---

19. B. reads प्रतीयमान for प्रतीयमानम्.

दिभिराकाशस्य विकारत्ववचनेन तस्याकाशस्य ब्रह्मणो विभाग उत्पत्तिरप्युक्तैव । लोकवत् । यथा लोक एते सर्वे देवदत्तपुत्रा इत्यभिधाय तेषु केषांचित्तत उत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात्तद्वत् । एवं च सति वायुश्चान्तरिक्षं चैतदमृतम् (बृ.२।३।३)
5 इति सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अनेनैव हेतुना मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्याता । वियन्मातरिश्वनोः पृथग्योगकरणं तेजोतस्तथा ह्याह ( ब्र. सू. २।३।१० ) इत्यत्र मातरिश्वपरामर्शार्थम् ॥ ८ ॥

## 10 असंभवस्तु सतोनुपपत्तेः ॥ ९ ॥

तुशब्दोवधारणार्थः । असंभवोनुत्पत्तिः सतो ब्रह्मण एव । तद्व्यतिरिक्तस्य कस्यचिदनुत्पत्तिर्न संभवति । एतदुक्तं भवति । वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम् । उत्पत्त्यसंभवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्न-
15 स्याव्यक्तमहदहंकारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यत इति ॥ ९ ॥ वियदधिकरणं समाप्तम् । ( १ )

## तेजोतस्तथा ह्याह ॥ १० ॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्यत्वमुक्तम् । इदानीं व्यव-
20 हितकार्याणां किं केवलात्तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिराहोस्वित्तत्तद्रूपाद्ब्रह्मण इति चिन्त्यते । किं युक्तम् । केवला-

---

9. E. om. अत्र after इति; E. reads मातरिश्वनः for मातरिश्व.

15. C. om. इन्द्रिय.

19. C. om. ब्रह्म before कार्यत्वम्.

तत्तद्वस्तुन इति । कुतः । तेजस्तावदतो मातरिश्वन एवोत्पद्यते । वायोरग्निः ( तै. २।१ ) इति ह्याह ॥ १० ॥

## आपः ॥ ११ ॥

आपोऽप्यतस्तेजस एवोत्पद्यन्ते । अग्नेरापः ( तै. २।१ ) । तदपोऽसृजत ( छा. ६।२।३ ) इत्याह ॥ ११ ॥ 5

## पृथिवी ॥ ११ ॥

पृथिव्यद्भ्य उत्पद्यते । अद्भ्यः पृथिवी ( तै. २।१ ) । ता अन्नमसृजन्त ( छा. ६।२।४ ) इत्याह ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिव्यभिधीयतेत आह ।

## अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥ 10

महाभूतसृष्ट्यधिकारात्पृथिव्येवान्नशब्देनोक्तेति प्रतीयते । अदनीयस्य सर्वस्य पृथिवीविकारत्वात्कारणे कार्यशब्दः । तथा वाक्यशेषे भूतानां रूपसंशब्दने यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ( छा. ६।४।१ ) इत्यग्नेजसोः सजातीयमेवान्नशब्दवाच्यं प्रतीयते । शब्दान्तरं च समानप्रकरणेऽग्नेरापः । अद्भ्यः पृथिवी ( तै. २।१ ) इति श्रूयते । अतः पृथिव्येवान्नशब्देनोच्यत इत्यद्भ्य एव पृथिवी जायते । उदाहृतास्तेजःप्रभृतयः प्रदर्शनार्थाः । महदादयोऽपि हि स्वानन्तरवस्तुन एवोत्पद्यन्ते । यथाश्रुत्यभ्युपगमाविरोधात् । 15

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । 20
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ (मु. २।१।३)

1. A. reads अनन्तरकारणभूतात् after तत्तत्.
2. C. om. हि before आह.
8. C. reads हि before आह.
9. E. reads तत्र for अतः.
13. C. reads वाक्यशेष for वाक्यशेषे.

तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते । ( मु. १।१।९ ) तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१ )। तत्तेजोऽसृजत ( छा. ६।२।३ ) इत्यादयो ब्रह्मणः परंपरया कारणत्वेऽप्युपपद्यन्त इति ॥ १३ ॥

5 एवं प्राप्ते प्रचक्ष्महे ।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥

तुशब्दात्पक्षो व्यावृत्तः । महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकः स एव पुरुषोत्तमः कारणम् । कुतः । तदभिध्यानरूपात्तल्लिङ्गात् । अभिध्यानं बहु स्यामिति संकल्पः । तत्तेज

10 ऐक्षत बहु स्यां प्रजायेयेति ( छा. ६।२।३ )। ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि ( छा. ६।२।४ ) इत्यात्मनो बहुभवनसंकल्परूपेक्षणश्रवणान्महदहंकाराकाशादीनामपि कारणानां तथाविधेक्षापूर्विकैव स्वकार्यसृष्टिरिति गम्यते । तथाविधं चेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते । श्रूयते च

15 सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणोन्तर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन् ( बृ. ३।७।३ )। योऽप्सु तिष्ठन् (बृ. ३।७।४)। यस्तेजसि तिष्ठन् (बृ.३।७।१४)। यो वायौ तिष्ठन् (बृ.३।७।७)। य आकाशे तिष्ठन् ( बृ.३।७।१२ ) इत्यादि । सुबालोपनिषदि च यस्य पृथिवी शरीरमित्यारभ्य यस्याहंकारः शरीरं यस्य

20 बुद्धिः शरीरं यस्याव्यक्तं शरीरमित्यादि ॥ १४ ॥

यच्चोक्तम्

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। ( मु.२।१।३ ) इत्यादिषु श्रूयमाणा ब्रह्मणः प्राणादिसृष्टिः परंपरयाप्युपपद्यत इति । अत्रोच्यते ।

25

## विपर्ययेण तु क्रमोत उपपद्यते च ॥ १५ ॥

तुशब्दोऽवधारणार्थः । अव्यक्तमहदहंकाराकाशादिक्रमाद्धि-

पर्यायेण यः सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रम एतस्माज्जायते प्राणः ( मु. २।१।३ ) इत्यादिषु प्रतीयते स च क्रमस्तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्योत्पत्तेरेवोपपद्यते । परंपरया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत । अत एतस्माज्जायते ( मु. २।१।३ ) इत्यादिकमपि सर्वस्य ब्रह्मणः साक्षात्संभवोत्तम्भनम् ॥ १५ ॥ 5

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते । यदुक्तमेतस्माज्जायते ( मु. २।१।३ ) इत्यादिना सर्वस्य ब्रह्मणोनन्तरकार्यत्वं श्रूयते। अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्प- 10 त्तिरभिध्यानलिङ्गावगतोत्तभ्यत इति । तन्नोपपद्यते । क्रमविशेपपरत्वादस्य वाक्यस्य । अत्रापि सर्वेषां क्रमप्रतीतेः । खादिषु तावच्छ्रुत्यन्तरसिद्धः क्रमोत्रापि प्रतीयते । तैः सहपाठलिङ्गाद्भूतप्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते । अतः सर्वस्य साक्षाद्ब्रह्मण एव संभवस्योत्तम्भक- 15 मिदं वाक्यं न भवतीति चेत्तन्न । अविशेषात् । एतस्माज्जायते प्राणः ( मु. २।१।३ ) इत्यनेनाविशेपात् । विज्ञानमनसोः खादीनां चैतस्माज्जायत इत्यनेन साक्षात्संभवरूपसंबन्धस्याभिधेयस्य सर्वेषां प्राणादिपृथिव्यन्तानामविशिष्टत्वात्स एव विधेयो न क्रमः । श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम् । 20 पृथिव्यप्सु प्रलीयत इत्यारभ्य तम एकीभवतीत्यन्तेन क्रमान्तर-

1. C. reads रूप for रूपः.
4. B. reads उपरुध्यते for उपरुध्येत.
5. C. reads संभवस्य for संभव.
15. C. reads उत्तम्भनम् for उत्तम्भकम्.
16. C. reads सम् before भवति; E. om. तत् after चेत्.

प्रतीतेः । अतोऽव्यक्तादिशरीरकात्परस्माद्ब्रह्मण एव सर्वकार्याणा-
मुत्पत्तिः । तेजःप्रभृतयश्च शब्दास्तदात्मभूतं ब्रह्मैवाभिदधति
॥ १६ ॥

नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैः शब्दैस्तत्तद्व-
5 स्तुव्यपदेशो व्युत्पत्तिसिद्ध उपरुध्यते तत्राह ।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त- स्तद्भावभावित्वात् ॥ १७ ॥

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः । निखिलजङ्गमस्थावरव्यपा-
श्रयस्तत्तच्छब्दव्यपदेशो भाक्तः । वाच्यैकदेशे भज्यत इत्यर्थः ।
10 समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमा-
णाविषयत्वाद्वेदान्तश्रवणात्प्राक्प्रकार्यप्रतीतेः प्रकारिप्रतीतिभाव-
भावित्वाच्च तत्पर्यवसानस्य लोके तत्तद्वस्तुमात्रे वाच्यैक-
देशे ते ते शब्दा भङ्क्त्वा भङ्क्त्वा व्यपदिश्यन्ते । अथ वा
तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो
15 व्यपदेशो भाक्तः स्यादमुख्यः स्यादित्याशङ्क्य चराचरव्य-
पाश्रयस्त्वित्याद्युच्यते । चराचरव्यपाश्रयस्तद्व्यपदेशस्तद्वाचि-
शब्दश्चराचरवाचिशब्दो ब्रह्मण्यभाक्तो मुख्य एव । कुतः ।
ब्रह्मभावभावित्वात्सर्वशब्दानां वाचकभावस्य । नामरूपव्याक-
रणश्रुत्या हि तथावगतम् ॥ १७ ॥ तेजोधिकरणं समाप्तम् । (२)

20 ## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

वियदादेः कृत्स्नस्य परस्माद्ब्रह्मण उत्पत्तिरुक्ता । इदानीं
जीवस्याप्युत्पत्तिरस्ति नेति संशय्यते । किं युक्तम् । अस्तीति ।

---

1. C. om. एव after ब्रह्मणः.

16. E. om. तु after व्यपाश्रयः.

18. E. reads भावितत्वात् for भावित्वात्.

कुतः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः। प्राक्सृष्टेरेकत्वावधारणाच्च। वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति।

यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्विससर्ज भूम्याम्। (ना. १।१)

प्रजापतिः प्रजा असृजत (तै. ब्रा. १।१।१०)। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।४)। यतो वा इमानि भूतानि जायन्ते (तै. ३।१।१) इति। एवं सचेतनस्य जगत उत्पत्तिवचनाज्जीवस्याप्युत्पत्तिः प्रतीयते। न च वाच्यं ब्रह्मणो नित्यत्वात्तत्त्वमस्यादिभिर्जीवस्य ब्रह्मत्वावगमाज्जीवस्य नित्यत्वमिति। ऐतदात्म्यमिदं सर्वम् (छा. ६।८।७)। सर्वं खल्विदं ब्रह्म (छा. ३।१४।१) इत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात्तस्यापि नित्यत्वप्रसक्तेः। अतो जीवोपि वियदादिवदुत्पद्यत इति। एवं प्राप्तेभिधीयते।

नात्मा श्रुतेरिति। नात्मोत्पद्यते। कुतः। श्रुतेः। न जायते म्रियते वा विपश्चित् (का. २।१८)। ज्ञाज्ञौ द्वावजावीशानीशौ (श्वे. १।९) इत्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते। आत्मनो नित्यत्वं च ताभ्यः श्रुतिभ्य एवावगम्यते।

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। (श्वे. ६।१३)

अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे। (का. २।१८)

इत्यादिभ्यः। अतश्च नात्मोत्पद्यते। कथं तर्ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते। इत्थमुपपद्यते। जीवस्यापि कार्यत्वा-

---

9. C. reads च after तत्त्वमस्यादिभिः.
11. C. om. एवम् after ब्रह्मेति.
16. C. om. ईशानीशौ.
23. C. om. उपपद्यते after इत्थम्.

त्कारणकार्ययोरनन्यत्वाच्च । एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गी-
कृतं स्यात् । नेत्युच्यते । कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरा-
पत्तिः । तज्जीवस्याप्यस्त्येव । इयांस्तु विशेषः । वियदादेरचेतनस्य
यादृशोन्यथाभावो न तादृशो जीवस्य । ज्ञानसंकोचविकास-
5 लक्षणो जीवस्यान्यथाभावः । वियदादेस्तु स्वरूपान्यथाभा-
वलक्षणः । सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते ।
एतदुक्तं भवति । भोग्यभोक्तृनियन्तृन्विविक्तस्वभावान्प्रतिपाद्य
भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यतां च
प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चापुरुषार्थाश्रयत्वं
10 नियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं
सत्यसंकल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वं च प्रतिपाद्य
सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपा-
दितम् । अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म ।
तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्व-
15 स्तुशरीरं तिष्ठति । तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनाम-
रूपस्थूलचिदचिद्वस्तुशरीरम् । तच्च कार्यावस्थम । तत्र कारणा-
वस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिवि-
हीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो
भवति । चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञा-
20 नविकासरूपविकारो भवति । उभयप्रकारविशिष्टनियन्त्रंश

1 B. C. read कार्यकारणयोः for कारणकार्ययोः.
4. B. reads विकाश for विकास.
9. C. reads प्रतिपेद्य for प्रतिपाद्य.
12. C. reads च after आत्मत्वम्.
13. E. reads ब्रह्म कदाचित् for ब्रह्म । तत्कदाचित्.
14. C. reads विभक्तस्य for विभक्त.
19. B. om. च after चिदंशस्य; C. reads विशेषफल for फलविशे.
20. A. B. read विकाश for विकास.

तत्तदवस्थतदुभयविशिष्टतारूपविकारो भवति । कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः । अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया येनाश्रुतं श्रुतम् ( छा. ६।१।१ ) इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो यथा सोम्यैकेन ( छा. ६।१।१ ) इत्यादिना निदर्शितः । ईदृशज्ञानसंकोचविकासकरतत्तद्देहसंबन्धवियोगाभिप्राया जीवस्योत्पत्तिमरणवादिन्यः प्रजापतिः प्रजा असृजत ( तै. ब्रा. १।१।१० ) इत्याद्याः श्रुतयः । अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च न जायते म्रियते ( का. २।१८ ) इत्याद्या नित्यो नित्यानाम ( श्वे. ६।१३ ) इत्याद्याश्च श्रुतयः । स्वरूपान्यथात्वज्ञानसंकोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः स वा एष महानज आत्माजरोमरोमृतो ब्रह्म ( बृ. ४।४।२५ ) । नित्यो नित्यानाम् ( श्वे. ६।१३ ) इत्याद्याः परविषयाः श्रुतयः । एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते । तद्धेदं तर्ह्यव्याकृतमासीत । तन्नामरूपाभ्यां व्याक्रियत ( बृ. १।४।७ ) इति हि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे वदन्तीति ।

ये त्वविद्योपाधिकं जीवत्वं वदन्ति ये च पारमार्थिकोपाधिकृतं ये च सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधावस्थितं वदन्ति सर्वेप्येतेविद्याशक्त्युपाधिशक्तेर्भोक्तृभोग्य-

1. E. om. तत् after तत्.
10. B. reads वा कदाचित् after म्रियते.
12. C. reads विकार for विधानिष्टविकाराभाव.
14. C. om. परविषयाः.
18. E. reads च after नानात्वैकत्वे.
21. B. om. उपाधिशक्तेः.

नियन्तृशक्तीनां च प्रलयकालेऽवस्थानेपि तदानीमेकत्वावधारणं नामरूपविभागाभावादेवोपपादयन्ति । वैषम्यनैर्घृण्ये न सापेक्षत्वात्.... । न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ( ब्र. सू. २।१।३४-३५ ) इति सूत्राभ्यां
5 जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच्च । इयान्विशेषः । एकस्यानाद्यविद्यया ब्रह्म स्वयमेव मुह्यति । अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्मस्वरूपमेव बध्यते । उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् । अपरस्य ब्रह्मैव विचित्राकारेण परिणमते कर्मफलानि चानिष्टानि भुङ्क्ते । नियन्त्रंशस्य भोक्तृत्वा-
10 भावेपि सर्वज्ञत्वात्स्वस्मादभिन्नं भोक्तारमनुसंदधातीति स्वयमेव भुङ्क्ते । अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसंकल्पत्वाद्यपरिमितोदारगुणसागरमवतिष्ठते । प्रकारभूतचिदचिद्वस्तुगता अपुरुषार्थाः स्वरूपान्यथाभावश्चेति सर्वं सम-
15 ञ्जसम् ॥ १८ ॥ आत्माधिकरणं समाप्तम् । ( ३ )

## ज्ञोऽत एव ॥ १९ ॥

वियदादिवज्जीवो नोत्पद्यत इत्युक्तम् । तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते । किं सुगतकपिलाभिमतचिन्मात्रमेवात्मनः स्वरूपमुत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वरूपमेवागा-
20 न्तुकचैतन्यगुणकमथ ज्ञातृत्वमेवास्य स्वरूपमिति । किं युक्तम् । चिन्मात्रमिति । कुतः । तथा श्रुतेः । अन्तर्यामि-

1. C. om. अपि after अवस्थाने.

7. B. om. स्व before रूपम्; E. reads स्वयम् for स्वरूपम्.

12. C. reads गन्ध for गन्धम्.

14. E. reads अन्यथाभावाः for अन्यथाभावः.

19. C. reads स्वभावम् for स्वरूपम् after अचित्.

ब्राह्मणे हि य आत्मनि तिष्ठन् (बृ. ३।७।२२) इति माध्यंदिनीयपर्यायस्य स्थाने यो विज्ञाने तिष्ठन्निति काण्वा अधीयते । तथा

विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च । (तै. २।५)

इति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते । स्मृतिषु च 5

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । (वि. पु. १।२।६)

इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते । अपरस्तु जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्करणानां च वैयर्थ्यात्सुषुप्तिमूर्छादिषु सतोप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रतः सामग्र्यां 10 सत्यां ज्ञानोत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपं नापि ज्ञातृत्वम् । आगन्तुकमेव तु चैतन्यम् । सर्वगतत्वं चात्मनोवश्याभ्युपेत्यम् । सर्वत्र कार्योपलब्धेः सर्वत्रात्मनः संनिधानाभ्युपगमाच्छरीरगमनेनैव कार्यसंभवे सति गतिकल्पनायां प्रमाणाभावाच्च । श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति नाह खल्वयमेवं 15 संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि (छा. ८।११।१) इति । तथा मोक्षदशायां ज्ञानाभावं दर्शयति न प्रेत्य संज्ञास्ति (बृ. २।४।१२,४।५।१३) इति । ज्ञानस्वरूपम् (वि. पु. १।२।६) इत्यादिप्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इति । एवं प्राप्ते प्रचक्ष्महे । 20

2. C. reads पर्याय for पर्यायस्य.

8. B. om. ज्ञानत्वे.

10. A. B. read हि for अपि; E. reads जाग्रत् for जाग्रतः.

12. C. E. om. तु after एव.

14. C. om. सति.

15. E. reads नाहं खल्वयमेवं संप्रत्यात्मानं जानामि for नाह खल्वयमेवं संप्रत्यात्मानं जानाति.

ज्ञोत एव । ज्ञ एवायमात्मा ज्ञातृस्वरूप एव न ज्ञानमात्रं नापि जडस्वरूपः । कुतः । अत एव । श्रुतेरेवेत्यर्थः । नात्मा श्रुतेः ( ब्र. सू. २।३।१८ ) इति प्रकृता श्रुतिरत इति शब्देन परामृश्यते । तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्म-
5 स्वरूपकथनेथ यो वेदेदं जिघ्राणीति स आत्मा (छा. ८।१२।४)। मनसैवैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ( छा. ८। १२।५-६ ) । सत्यकामः सत्यसंकल्पः ( छा. ८।१।५ ) । नोपजनं स्मरन्निदं शरीरम् ( छा. ८।१२।३ ) । अन्यत्रापि न पश्यो मृत्युं पश्यति ( छा. ७।२६।२ ) । तथा वाजसने-
10 यके कतम आत्मा ( बृ. ४।३।७ ) इति पृष्ट्वा योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ( बृ. ४।३।७ ) इति । तथा विज्ञातारमरे केन विजानीयात् ( बृ. २।४।१४ )। जानात्येवायं पुरुषः । तथैष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ( प्र. ४।९ )। एवमेवास्य परि-
15 द्रष्टुरिमाः षोडश कलाः ( प्र. ६।५ ) इति ॥ १९ ॥

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वत्रोपलब्धिः प्रसज्यत इति । अत्रोच्यते ।

## उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥

नायं सर्वगतः । अपि त्वणुरेवायमात्मा । कुतः । उत्क्रा-
20 न्तिगत्यागतीनां श्रुतेः । उत्क्रान्तिस्तावच्छ्रूयते तेन प्रद्योते-

3. E. om. इति before शब्देन.
4. B. C. om. अमुक्त.
6. C. om. एव after मनसा.
12. A. B. om. तथा.
16. E. reads सर्वदा after तस्य.
17. B. C. read तत्र for अत्र.

नैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः ( बृ. ४।४।२ ) इति । गतिरपि ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ. १।२ ) इति । आगतिरपि तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे (बृ. ४।४।६) इति । विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् ॥ २० ॥

## स्वात्मना चोत्तरयोः ॥ २१ ॥

चशब्दोवधारणे । यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः स्थिरस्यात्मनः कथंचिदुपपद्यते गत्यागती तु न कथंचिदुपपद्येते । अतस्ते स्वात्मनैव संपाद्ये ॥ २१ ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥ 10

योयं विज्ञानमयः प्राणेषु ( बृ. ४।३।७,४।४।२२ ) इति जीवं प्रस्तुत्य स वा एष महानज आत्मा ( बृ.४।४।२२ ) इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न । इतराधिकारात् । जीवादितरस्य प्राज्ञस्य तत्राधिकारात् । यद्यप्युपक्रमे जीवः प्रस्तुतस्तथापि यस्यानुवित्तः प्रतिबुद्ध आत्मा ( बृ. ४।४।१३ ) इति मध्ये परः 15 प्रतिपाद्यत इति तत्संबन्धीदं महत्त्वं न जीवस्य ॥ २२ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २३ ॥

साक्षादणुशब्द एव श्रूयते

एषोणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश।

( मु. ३।१।९ ) 20

इति । उद्धृत्य मानमुन्मानम् । अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते

4. E. reads प्रत्यास्मै for एत्यस्मै.

8. B. reads स्थितस्यापि, C. स्थितस्य, for स्थिरस्य.

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ (श्वे.५।९)
इति । आराग्रमात्रो ह्यवरोपि दृष्टः (श्वे.५।८) इति च ।
अतोणुरेवायमात्मा ॥ २३ ॥

5 अथ स्यादात्मनोणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत
इति तत्र मतान्तरेण परिहारमाह ।

## अविरोधश्चन्दनवत् ॥ २४ ॥

यथा हरिचन्दनबिन्दुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमा-
ह्लादं जनयति तद्वदात्मापि देहैकदेशवर्ती सकलदेहवर्तिनीं वेद-
10 नामनुभवति ॥ २४ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥

हरिचन्दनबिन्द्वादेर्देहदेशविशेषावस्थितिविशेषात्तथाभावः ।
आत्मनस्तु तन्न विद्यत इति चेन्न । आत्मनोपि देहदेशविशेषे
15 स्थित्यभ्युपगमात् । हृदयदेशे ह्यात्मनः स्थितिः श्रूयते हृदि
ह्ययमात्मा तत्रैकशतं नाडीनाम् (प्र. ३।६) इति । तथा
कतम आत्मा (बृ. ४।३।७) इति प्रकृत्य योयं विज्ञानमयः
प्राणेषु हृद्यन्तर्ज्योतिः (बृ. ४।३।७) इति । आत्मनो देहदे-
शविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः । न तु
20 चन्दनस्य देशविशेषापेक्षा ॥ २५ ॥

2. B. C. om. स चानन्त्याय कल्पते.
9. E. reads सकलदेश for सकलदेह.
13. C. reads एक before देशविशेष.
14. C. reads विशेषेण after देशविशेषे.
18. E. reads हि after आत्मनः.

एकदेशवर्तिनः सकलदेहव्यापिकार्यकरत्वप्रकारं स्वमतेनाह ।

**गुणाद्वालोकवत् ॥ २६ ॥**

वाशब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः । आलोकवत् । यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तिनामालोको नैकदेशव्यापी दृश्यते तद्वद्धृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य वर्तते । ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति प्रथमसूत्रे ( पृ. ४१ ) स्थापितम् ॥ २६ ॥

नन्वुक्तं ज्ञानमात्रमेवात्मेति । तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यते । तत्राह ।

**व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥**

यथा पृथिव्या गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकस्तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्यात्मनो व्यतिरेकः सिद्धः । दर्शयति च श्रुतिर्जानात्येवायं पुरुष इति ॥ २७ ॥

**पृथगुपदेशात् ॥ २८ ॥**

स्वशब्देनैव विज्ञानं विज्ञातुः पृथगुपदिश्यते न हि विज्ञा-

1. C. reads देश for देह.
5. E. reads अनेकदेश for नैकदेश.
9. E. reads वि before ज्ञानमात्रम्.
11. B. reads च after गन्धवत्; B. C. read हि for च.
12. A. B. read पृथिव्याम् for पृथिव्याः; C. reads तत् before गुणत्वेन.
13. E. reads ज्ञातुः for ज्ञातृ.
14. E. reads व्यतिरेकसिद्धिम् for व्यतिरेकः सिद्धः ।
17. E. om. वि before ज्ञानम्.

तुर्विज्ञातेर्विपरिलोपो विद्यते ( बृ. ४।३।३० ) इति ॥ २८ ॥

यत्तूक्तं यो विज्ञाने तिष्ठन् ( बृ. ३।७।२२ )। विज्ञानं यज्ञं तनुते ( तै. २।५ )। ज्ञानस्वरूपमत्यन्तनिर्मलम् ( वि. पु. १।२।६ ) इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति तत्राह।

5 **तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । तद्गुणसारत्वाद्विज्ञानगुणसारत्वादात्मनो विज्ञानमिति व्यपदेशः। विज्ञानमेवास्य सारभूतो गुणः। यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ आनन्दशब्देन व्यपदिश्यते यदेष आकाश आनन्दो न स्यात् ( तै.
10 २।७ )। आनन्दो ब्रह्मेति व्यजानात् (तै. ३।६) इति। प्राज्ञस्य ह्यानन्दः सारभूतो गुणः। स एको ब्रह्मण आनन्दः (तै.२।८)।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन। ( तै. २।९ ) इति। यथा वा सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः। सह ब्रह्मणा विपश्चिता
15 ( तै. २।१ )। यः सर्वज्ञः ( मु. १।१।९ ) इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥ २९ ॥

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥**

विज्ञानस्य यावदात्मभाविधर्मत्वात्तेन तद्व्यपदेशो न दोषः। तथा च खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति
20 व्यपदिश्यमाना दृश्यन्ते। स्वरूपनिरूपणधर्मत्वादित्यर्थः। चकाराज्ज्ञानवदात्मनोपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशे न दोष इति समुच्चिनोति ॥ ३० ॥

---

3. E. reads परमार्थतः after निर्मलम्.

18. C. reads भावित्वात् for भाविधर्मत्वात्; E. reads धर्मत्वेन for धर्मत्वात्तेन.

20. A. reads निरूपक for निरूपण; E. reads चकारः for चकारात्.

21. C. reads व्यपदेशः for व्यपदेशे.

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावाज्ज्ञानस्य न स्वरूपानुबन्धिधर्मत्वमिति तत्राह ।

**पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ ३१ ॥**

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः । अस्य ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादिष्वभिव्यक्तिसंभवात्स्वरूपानुबन्धिधर्मत्वोपपत्तिः । पुंस्त्वादिवत् । यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोप्यनभिव्यक्तस्य युवत्वेभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति । सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि ।

तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम् ।

( गर्भोप. १ )

इति शरीरस्वरूपव्यपदेशात् । सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम् ( पृ. ४९ ) । तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते । एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः ( पृ. ६१ ) । अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम् । स चायमात्माणुपरिमाणः । न प्रेत्य संज्ञास्ति ( बृ. २।४।१२ ) इत्यपि न मुक्तस्य ज्ञानाभाव उच्यते । अपि त्वेतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ( बृ. २।४।१२ ) इति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यते ।

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ (छा. ७।२६।२)

---

1. E. reads न ज्ञानस्य for ज्ञानस्य न.
4. C. reads व्यावृत्ति for निवृत्ति.
14. B. C. read अर्थाः for धर्माः.
19. C. reads प्रयुक्त for प्रयुक्तम्.
21. A. B. read इति after सर्वशः.

नोपजनं स्मरन्निदं शरीरम् (छा. ८।१२।३)। मनसैतान्कामान्पश्यन्रमते (छा. ८।१२।५) इत्यादिश्रुत्यैकार्थ्यात् ॥ ३१ ॥

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह ।

5 **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ॥ ३२ ॥**

अन्यथा सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम् । अन्यतरनियमो वा । उपलब्धिरेव वा नित्यं स्यादनुपलब्धिरेव वा । एतदुक्तं भवति । 10 लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यादुपलब्धेरेव वानुपलब्धेरेव वा । उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत । यद्युपलब्धेरेव सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात् । अथानुपलब्धेरेव सर्वदा सर्वत्रोपलब्धिर्न स्यादिति । अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्म- 15 नस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः । करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वाददृष्टादेरप्यनियमादुक्तदोषः समानः ॥ ३२ ॥ ज्ञाधिकरणं समाप्तम् । (४)

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

20 अयमात्मा ज्ञाता स चाणुपरिमाण इत्युक्तम् । इदानीं किं स एव कर्तेति स्वयमकर्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते । किमत्र युक्तम् । अकर्तैवात्मेति ।

1. A. B. read एव after मनसा.
13. B. om. सर्वदा.
14. A. B. om. अव before स्थितत्वात्.
16. B. reads सर्व for सर्वैः.

कुतः। आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते। तथा हि कठवल्लीषु जीवस्य न जायते म्रियते (का. २।१८) इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। 5
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ (का. २।१९)

इति। हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः। तथा च भगवता स्वयमेव जीवस्याकर्तृत्वं स्वरूपं कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। 10
अहंकारविमूढात्मा कर्ताहमिति मन्यते॥ (गी. ३।२७)
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति। (गी. १४।१९)
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥ (गी. १३।२०)

इति च। अतः पुरुषस्य भोक्तृत्वमेव। प्रकृतेरेव तु कर्तृत्वम्। 15 एवं प्राप्ते प्रचक्ष्महे।

कर्ता शास्त्रार्थवत्त्वात्। आत्मैव कर्ता न गुणाः। कस्मात्। शास्त्रार्थवत्त्वात्। शास्त्राणि हि यजेत स्वर्गकामः। मुमुक्षुर्ब्रह्मोपासीतेत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते। न ह्यचेतनस्य कर्तृत्वे चेतनो नियुज्यते। शासनाच्च 20 शास्त्रम्। शासनं च प्रवर्तनम्। शास्त्रस्य च प्रवर्तकत्वं बोध-

1. A. B. om. च after एव.
12. B. reads यथा for यदा.
15. C. om. च after इति; B. C. read इति after कर्तृत्वम्.
17. C. reads इति after शास्त्रार्थवत्त्वात्; B. reads गुणः for गुणाः.
18. A. B. om. हि after शास्त्राणि.
20. E. reads अन्यः for चेतनः; C. om. च after शासनात्.

जननद्वारेण। अचेतनं च प्रधानं न बोधयितुं शक्यम्। अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत्। तदुक्तं शास्त्रफलं प्रयोक्तरि (जै. सू. ३।७।१८) इति। यदुक्तं हन्ता चेन्मन्यते (का. २।१९) इत्यादिना हननक्रियायामकर्तृ-
5 त्वमात्मनः श्रूयत इति तदात्मनो नित्यत्वेन हन्तव्यत्वाभावा- दुच्यते। यच्च प्रकृतेः क्रियमाणानि (३।२७) इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवे- केन गुणानामेव कर्तृत्वमित्युच्यते। तथा च तत्रैवोच्यते

10 कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु। (गी. १३।२१)

इति। तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते

तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥
(गी. १८।१६)

15 इति।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥
(गी. १८।१४)

इत्यधिष्ठानादिदैवपर्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मान-
20 मेव केवलं कर्तारं मन्यते न स पश्यतीत्यर्थः॥ ३३॥

## उपादानाद्विहारोपदेशाच्च॥ ३४॥

स यथा महाराजः (बृ. २।१।१८) इति प्रकृत्यैवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते (बृ. २।१।१८) इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते॥ ३४॥

17. E. reads विविधाः for विविधा.
19. C. reads कर्तृत्वेन for कर्तृत्वे यः.

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च । ( तै. २।५ )
इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता । विज्ञान-
शब्देन नात्मनो व्यपदेशोपि त्वन्तःकरणस्य बुद्धेरिति चेदेवं
सति निर्देशविपर्ययः स्यात् । बुद्धेः करणत्वाद्विज्ञानेनेति करण- 5
विभक्तिनिर्देशः स्यात् ॥ ३५ ॥

## उपलब्धिवदनियमः ॥ ३६ ॥

आत्मनोकर्तृत्वे दोष उच्यते । यथात्मनो विभुत्वे नित्योपल-
ब्ध्यनुपलब्धिप्रसङ्गः ( ब्र. सू. २।३।३२ ) इत्यादिनोपलब्धे-
रनियम उक्तस्तद्वदात्मनोकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरु- 10
षसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युः । नैव वा
कस्यचित् । आत्मनो विभुत्वाभ्युपगमात्संनिधानमपि सर्वेषाम-
विशिष्टम् । अत एव चान्तःकरणादीनामपि नियमो नोपप-
द्यते यदायत्ता व्यवस्था स्यात् ॥ ३६ ॥

## शक्तिविपर्ययात् ॥ ३७ ॥ 15

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि
तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत । भोक्तृत्वं च
बुद्धेरेव संपद्यत इत्यात्मसद्भावे प्रमाणाभावश्च स्यात् । पुरुषो-
स्ति भोक्तृभावात् ( सां. का. १७ ) इति हि तेषामभ्युपगमः
॥ ३७ ॥ 20

## समाध्यभावाच्च ॥ ३८ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात् । स

12. C. reads आत्मनाम् for आत्मनः.

13. B. om. च after अत एव; C. reads अन्तःकरणादिना for अन्तः-करणादीनाम्.

च समाधिः प्रकृतेरन्योस्मीत्येवंरूपः । न च प्रकृतेरन्योस्मीति प्रकृतिः समाधातुमलम् । अतोप्यात्मैव कर्ता ॥ ३८ ॥

नन्वात्मनः कर्तृत्वेभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेतेत्यत्राह ।

5 **यथा च तक्षोभयथा ॥ ३९ ॥**

वागादिकरणसंपन्नोप्यात्मा यदेच्छति तदा करोति यदा तु नेच्छति तदा न करोति । यथा तक्षा वास्यादिकरणसंनिधानेपीच्छानुगुण्येन करोति न करोति च । बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्या भोगवाञ्छादिनियमकारणाभावात्सर्वदा कर्तृत्व-
10 मेव स्यात् ॥ ३९ ॥ कर्त्रधिकरणं समाप्तम् । ( ५ )

**परात्तु तच्छ्रुतेः ॥ ४० ॥**

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येणोत परमात्मायत्तमिति । किं प्राप्तम् । स्वातन्त्र्येणेति । परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्यते । यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भ-
15 शक्तः स एव नियोज्यो भवति । अतः स्वातन्त्र्येणास्य कर्तृत्वमिति प्राप्तेभिधीयते ।

परात्त्विति । तुशब्दः पक्षं व्यावर्तयति । तत्कर्तृत्वमस्य परात्परमात्मन एव हेतोर्भवति । कुतः । श्रुतेः । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ( तै. आ. ३।११।२ ) । य आत्मनि
20 तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२२ ) इति । स्मृतिरपि

2. C. reads हि for अपि after अतः.

14. C. E. read प्रसज्येत for प्रसज्यते.

17. E. om. परात्त्विति; C. reads जीवस्य after अस्य.

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
(गी. १५।१५)

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ (गी. १८।६१)

इति ॥ ४० ॥ 5

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तं तत्राह ।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-दिभ्यः ॥ ४१ ॥

सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नमुद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति । परमात्मानुमतिमन्तरेणास्य 10 प्रवृत्तिर्नोपपद्यत इत्यर्थः । कुत एतत् । विहितप्रतिषिद्धावैयर्थ्यादिभ्यः । आदिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते । यथा द्वयोः साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते तथापीतरानुमतिः स्वेनैव कृतेति तत्फलं स्वस्यैव भवति । पाप-कर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति सांख्य- 15 समयनिरूपणे प्रतिपादितम् । नन्वेवमेष ह्येव साधु कर्म कार-यति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कार-यति तं यमधो निनीषति (कौ. ३।९) इत्युन्निनीषयाधोनि-नीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीति तन्नोप-

9. C. reads अवेक्ष्य for अपेक्ष्य.
10. A. reads प्रवर्तयते for प्रवर्तयति.
13. C. reads अन्यतम for अन्यतर.
14. C. reads अथापि for तथापि; A. B. read अनुमतेस्तु for अनुमतिः; B. C. read कृतम् for कृता; E. reads तस्यैव for स्वस्यैव.
15. C. reads नियन्तृत्वम् for निवर्तनशक्तस्याप्यनुमन्तृत्वम्.
17. C. reads हि after एषः.
19. C. reads साध्वसाधूनि कर्माणि for साध्वसाधुनी कर्मणी; C. reads इत्येतत्; E. एतत्, for इति तत्.

पद्यते । उच्यते । एतन्न सर्वसाधारणम् । यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते तमनुगृह्णन्भगवान्स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्मस्वेव रुचिं जनयति । यश्चातिमात्रप्रातिकूल्ये व्यवस्थितः प्रवर्तते तं स्वप्राप्तिविरोधिष्वधो-
5 गतिसाधनेषु कर्मसु रुचिं जनयति । यथोक्तं भगवता स्वयमेव ।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
(भ. गी. १०।८)

इत्यारभ्य

10 तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
(भ. गी. १०।१०-११)

15 इति । तथा

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । (भ. गी. १६।८)

इत्यादि

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
(भ. गी. १६।१८)

---

2. B. reads अनुकूले for आनुकूल्ये; C. E. read व्यवसितः for व्यवस्थितः.

3. E. reads एव after कल्याणेषु.

4. C. reads व्यवसितः for व्यवस्थितः; E. reads निगृह्णन् after तम्.

5. C. reads सज्जयति for रुचिं जनयति.

18. C. reads हि for अभि before असूयकाः.

इत्यन्तमुक्त्वा

तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥
(भ. गी. १६।१९)

इत्युक्तम्॥ ४१॥ परायत्ताधिकरणं समाप्तम्। (६) 5

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके॥ ४२॥

जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम्। इदानीं किमयं जीवः परस्मादत्यन्तभिन्न उत परमेव ब्रह्म भ्रान्तमुत ब्रह्मैवोपाध्यवच्छिन्नमथ ब्रह्मांश इति संशय्यते। श्रुतिविप्रतिपत्तेः 10 संशयः। ननु तदनन्यत्वमारम्भणशब्दादिभ्यः (ब्र. सू. २।१।१५)। अधिकं तु भेदनिर्देशात् (ब्र. सू. २।१।२२) इत्यत्रैवायमर्थो निर्णीतः। सत्यम्। स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्याक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते। यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतं तावज्जीवस्य ब्रह्मणोनन्यत्वं ब्रह्मणस्तस्मादधिकत्वं च न प्रतितिष्ठति। किं तावत्प्राप्तम्। अत्यन्तभिन्न इति। कुतः। ज्ञाज्ञौ द्वावजौ (श्वे. १।९) इत्यादिना भेदनिर्देशात्। ज्ञाज्ञयोरभेदश्रुतयस्त्वग्निना सिञ्चेदितिवद्विरुद्धार्थप्रतिपादनादौपचारिक्यः। ब्रह्मणोंशो जीव इत्यपि न साधीयः। एकवस्त्वेकदेशवाची ह्यंशशब्दः। जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः। न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः। खण्डनानर्हत्वाद्ब्रह्मणः। प्रागुक्तदोषप्रसङ्गाच्च।

5. C. om. उक्तम् after इति.

9. B. om. ब्रह्म before भ्रान्तम्.

15. C. om. न before निर्णीतम्.

17. E. reads ईशानीशौ after द्वावजौ.

तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम् । यद्वा भ्रान्तं ब्रह्मैव जीवः । कुतः । तत्त्वमसि (छा. ६।८।७)। अयमात्मा ब्रह्म (बृ. २।५।१९) इत्यादिब्रह्मात्मभावोपदेशात् । नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धार्थानुवादित्वादनन्यथासिद्धाद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इवाविद्यान्तर्गताः ख्याप्यन्ते । अथ वा ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः । कुतः । तत एव ब्रह्मात्मभावोपदेशात् । न चायमुपाधिर्भ्रान्तिपरिकल्पित इति वक्तुं शक्यम् । बन्धमोक्षादिव्यवस्थानुपपत्तेरिति । एवं प्राप्तेभिधीयते ।

ब्रह्मांश इति । कुतः । नानात्वव्यपदेशात् । अन्यथा च । एकत्वेन व्यपदेशात् । उभयथा हि व्यपदेशो दृश्यते । नानात्वव्यपदेशस्तावत्स्रष्टृत्वसृज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वाज्ञत्वस्वाधीनत्वपराधीनत्वशुद्धत्वाशुद्धत्वकल्याणगुणाकरत्वतद्विपरीतत्वपतित्वशेषत्वादिभिर्दृश्यते । अन्यथा चाभेदेन व्यपदेशोपि तत्त्वमसि (छा. ६।८।७) । अयमात्मा ब्रह्म (बृ. २।५।१९) इत्यादिभिर्दृश्यते । अपि दाशकितवादित्वमधीयत एके । ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवाः (आथ.

3. C. reads ब्रह्मभाव for ब्रह्मात्मभाव.
4. C. om. उपदेश after अद्वैत.
6. B. reads न after ब्रह्मैव.
7. C. reads ब्रह्मभाव for ब्रह्मात्मभाव; C. reads शक्यं वक्तुम् for वक्तुं शक्यम्.
8. C. reads व्यवस्थासिद्धेः for व्यवस्थानुपपत्तेः; A.B. read प्रचक्ष्महे for अभिधीयते.
9. B. C. om. त्व after नाना.
10. A. B. read अपि for हि.
11. B. C. om.. त्व after नाना.
12. B. om. अज्ञत्व; C. om. अशुद्धत्व.
13. A. reads अभेद for अभेदेन.

ब्र. सूक्त) इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधी-
यते । ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः ।
एवमुभयव्यपदेशमुख्यत्वसिद्धये जीवोयं ब्रह्मणोंश इत्यभ्युपग-
न्तव्यः । न च भेदव्यपदेशानां प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथा-
सिद्धत्वम् । ब्रह्मसृज्यत्वतन्नियाम्यत्वतच्छरीरत्वतच्छेषत्वतदा- 5
धारत्वतत्पाल्यत्वतत्संहार्यत्वतदुपासकत्वतत्प्रसादलभ्यधर्मार्थ-
काममोक्षरूपपुरुषार्थभाक्त्वादयस्तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्य-
क्षाद्यगोचरत्वेनानन्यथासिद्धः । अतो न जगत्सृष्ट्यादिवा-
दिनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वम् ।
न चाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणात्मनोतद्भावानुसंधानं 10
बहुभवनसंकल्पपूर्वकवियदादिसृष्टिं जीवभावेन तत्प्रवेशं विचि-
त्रनामरूपव्याकरणं तत्कृतानन्तविषयानुभवनिमित्तसुखदुःख-
भागित्वमभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वं जीव-
भूतस्य स्वस्य कारणब्रह्मात्मभावानुसंधानं संसारमोक्षं तदुप-
देशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते । तथा सत्यु- 15
न्मत्तप्रलपितत्वापातात् । उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि
न साधीयः । पूर्वनिर्दिष्टनियन्तृत्वनियाम्यत्वादिव्यपदेशभावा-
देव । न हि देवदत्तादेरेकस्यैव गृहाद्युपाधिभेदान्नियन्तृनियाम्य-

4. C. om. प्र before सिद्धार्थत्वेन.

7. E. reads भोक्तृत्व for भाक्त्व.

8. C. reads अन्यथासिद्धः for अनन्यथासिद्धः.

10 C. reads आत्मनां तद्भेदाभाव for आत्मनोतद्भाव; A. B. read अतदभाव for अतद्भाव.

12. B. om. व्या before करणम्.

14. C. reads उपदेशम् for उपदेशशास्त्रम्.

17. B. E. om. त्व after नियन्तृ; E. reads बाधात् for भावात्.

18. C. reads भेदानियन्तृत्व for भेदान्नियन्तृ.

भावादिसिद्धिः । अत उभयव्यपदेशोपपत्तये जीवोयं ब्रह्मणोंश इत्यभ्युपेत्यम् ॥ ४२ ॥

**मन्त्रवर्णात् ॥ ४३ ॥**

पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि। (तै.आ.३।१०)
5 इति मन्त्रवर्णाच्च ब्रह्मांशो जीवः । अंशवाची हि पादशब्दः । विश्वा भूतानीति जीवानां बहुत्वाद्बहुवचनं मन्त्रे । सूत्रेप्यंश इत्येकवचनं जात्यभिप्रायम् । नात्मा श्रुतेः (ब्र. सू. २।३।१८) इत्यत्राप्येकवचनं जात्यभिप्रायम् ।

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति
10 कामान् । (श्वे. ६।१३)

इत्यादिश्रुतिभ्य ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात् । एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेपामेकरूपत्वेपि भेदकाकार आत्मयाथात्म्यवेदनक्षमैरवगम्यते । असंततेश्चाव्यतिकरः (ब्र. सू. २।३।४८)
15 इत्यनन्तरमेव चात्मबहुत्वं वक्ष्यति ॥ ४३ ॥

**अपि स्मर्यते ॥ ४४ ॥**

ममैवांशो जीवलोके जीवभूतः सनातनः । (भ.गी.१५।७)
इति जीवस्य पुरुषोत्तमांशत्वं स्मर्यते । अतश्चायमंशः ॥ ४४ ॥

अंशत्वेपि जीवस्य ब्रह्मैकदेशत्वेन जीवगता दोषा ब्रह्मण
20 एवेत्याशङ्क्याह ।

**प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । प्रकाशादिवज्जीवः परमात्मनोंशः । यथाग्न्यादित्यादेर्भास्वतो भारूपः प्रकाशोंशो भवति ।

---

6. A. B. read च after जीवानाम्; C. reads अत्र before मन्त्र.

8. A, B. om. एकवचनम् after इत्यत्रापि.

13. C. reads आत्मत्व for आत्म.

23. A. B. read भारूप for भारूपः.

यथा गवाश्वशुक्लकृष्णादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः । यथा वा देहिनो देवमनुष्यादेर्देहोंशस्तद्वत् । एकवस्त्वेकदेशत्वं ह्यंशत्वम् । विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव । तथा च विवेचका विशिष्टे वस्तुनि विशेषणांशोयं विशेष्यांशोयमिति व्यपदिशन्ति । विशेषणविशेष्ययोरंशांशित्वेपि स्वभाववैलक्षण्यं दृश्यते । एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते । तदिदमुच्यते नैवं पर इति । यथाभूतो जीवो न तथाभूतः परः । यथैव हि प्रभायाः प्रभावानन्यथाभूतस्तथा प्रभास्थानीयात्स्वांशाज्जीवादंशी परोप्यर्थान्तरभूत इत्यर्थः । एवं जीवपरयोर्विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते । तत्त्वमसि ( छा. ६।८।७ ) । अयमात्मा ब्रह्म ( बृ. २।५।१९ ) इत्यादिषु तच्छब्दब्रह्मशब्दवत्त्वमयमात्मेति शब्दा अपि जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वादिति । अयमर्थः प्रागेव प्रपञ्चितः ॥ ४५ ॥

## स्मरन्ति च ॥ ४६ ॥

एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चांशांशिभावं जगद्ब्रह्मणोः पराशरादयः स्मरन्ति

3. C. reads च after एकस्य.
4. C. reads विशिष्ट for विशिष्टे.
5. C. reads विशेष्यांशयोः for विशेष्ययोः.
7. C. reads अंशांशि for अंशांशित्वम्.
8. E. reads तथाभूतो न for न तथाभूतः.
12. C. reads अपृथक् for पृथक्.
15. A. B. read शब्दः for शब्दाः; C. om. क after शरीर; A. B. read ऐकार्थ्य for एकार्थ.

एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥
(वि. पु. १।२२।५५)

यत्किंचित्सृज्यते येन सत्त्वजातेन वै द्विज ।
5 तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः ॥
(वि. पु. १।२२।३७)

इत्यादिना । चकाराच्छ्रुतयोपि यस्यात्मा शरीरम् ( बृ. ३।७।२२) इत्यादिनात्मशरीरभावेनांशांशित्वं वदन्तीत्युच्यते ॥ ४६ ॥

एवं ब्रह्मणोंशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वे च सर्वेषां समाने केषां-
10 चिद्वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा केषांचित्तत्परिहारः केषां-चिद्दर्शनस्पर्शनाद्यनुज्ञा केषांचित्तत्परिहारश्च शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह ।

**अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥**

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रिय-
15 वैश्यशूद्रादिरूपशुच्यशुचिदेहसंबन्धनिबन्धनावनुज्ञापरिहारावुपपद्येते । ज्योतिरादिवत् । यथाग्नेरग्नित्वेनैकरूपत्वेपि श्रोत्रियागारादग्निराह्रियते श्मशानादेस्तु परिह्रियते । यथा चान्नादि श्रोत्रियादेरनुज्ञायतेभिशस्तादेस्तु परिह्रियते ॥ ४७ ॥

**असंततेश्चाव्यतिकरः ॥ ४८ ॥**

20 ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदादणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोपि न भवति । भ्रान्तब्र-

---

9. A. B. read च after प्रवर्त्यत्वे; C. om. ज्ञत्वे.
11. C. om. स्पर्शन.
16. C. reads सति after एकरूपत्वे.
17. A. B. read वा for च after यथा.
20. C. reads ब्रह्मांशत्वेन for ब्रह्मांशत्वादिना.
21. E. reads सम् before भवति.

ह्मजीववादे चोपहितब्रह्मजीववादे च जीवपरयोर्जीवानां च भोगव्यतिकरादयः सर्वे दोषाः सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः ॥ ४८ ॥

ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्तेत आह । 5

## आभास एव च ॥ ४९ ॥

अखण्डैकरसप्रकाशमात्रस्वरूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव । प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितम् (पृ. ८५) । आभासा एवेति वा पाठः । तथा सति हेतव आभासाः । चकारात्पृथगात्मानं प्रेरितारं च मत्वा (श्वे. १।६) । ज्ञाज्ञौ द्वावजावीशानीशौ (श्वे. १९.) । तयोरन्यः पिप्पलं स्वाद्वत्ति (मु. ३।१।१, श्वे. ४।६) इत्यादिश्रुतिविरोधश्च । अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिरुपहितस्वरूपस्यैकत्वाभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव ॥ ४९ ॥

पारमार्थिकोपाध्युपहितब्रह्मजीववादेऽप्युपाधिभेदहेतुभूतानामदृष्टवशाद्व्यवस्था भविष्यतीत्याशङ्क्याह ।

## अदृष्टानियमात् ॥ ५० ॥

उपाधिपरंपराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव । उपाधिभिरदृष्टैश्च स्वसंबन्धेन ब्रह्मस्वरूपच्छेदासंभवान ॥ ५० ॥

5. E. reads तत्र for अतः.
7. C. reads औपाधिक for उपाधि.
12. B. C. om. अजावीशानीशौ.
14. C. reads अपि for हि.
16. E. om. अपि.
20. A. B. read त्व after नियमहेतु.

## अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसंध्यादिष्वप्युक्तादेव हेतोरनियम एव॥५१॥

## प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५२ ॥

यद्यप्येकमेव ब्रह्मस्वरूपं तच्छेदानर्हं नानाविधोपाधिभिः
5 संबध्यते तथाप्युपाधिसंबन्धिब्रह्मप्रदेशभेदादुपपद्यत एव भोग-
व्यवस्थेति चेत्तन्न । उपाधीनां तत्र तत्र गमनात्सर्वप्रदेशानां
सर्वोपाध्यन्तर्भावाद्व्यतिकरस्तदवस्थ एव । प्रदेशभेदेन संबन्धेपि
सर्वस्य ब्रह्मप्रदेशत्वात्तत्तत्प्रदेशसंबन्धि दुःखं ब्रह्मण एव स्यात्।
पूर्वत्र नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ( ब्र.
10 सू. २।३।३२ )। उपलब्धिवदनियमः ( ब्र. सू. २।३।३६ )
इति द्वाभ्यां सूत्राभ्यां वेदबाह्यानां सर्वगतजीववादिनां दोष
उक्तः । अत्र त्वाभास एव च ( ब्र. सू. २।३।४९ ) इत्या-
दिभिः सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिनां दोष उच्यते ॥५२॥
अंशाधिकरणं समाप्तम् । ( ७ )

15 इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसा-
भाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥



3. B. reads प्रदेशात् for प्रदेशभेदात्.
4. C. reads छेदन for छेद.
6. C. om. तत्र after तत्र.
8. E. om. तत् after तत्.
11. C. reads आभ्याम् for द्वाभ्यां सूत्राभ्याम्.
13. C. reads दोषा उच्यन्ते for दोष उच्यते.

# अथ श्रीभाष्ये



## द्वितीयाध्याये चतुर्थः पाद आरभ्यते ।

### तथा प्राणाः ॥ १ ॥

ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्यत्वेनोत्पत्तावुक्तायां जीवस्य कार्यत्वेपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता । त- 5
त्प्रसङ्गेन जीवस्वरूपं विशोधितम् । संप्रति जीवोपकरणानामि-
न्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते । तत्र किमि-
न्द्रियाणां कार्यत्वं जीववदुत वियदादिवदिति चिन्त्यते ।
किं युक्तम् । जीववदेवेत्याह पूर्वपक्षी तथा प्राणा इति । प्राणा
इन्द्रियाणि । यथा जीवो नोत्पद्यते तथेन्द्रियाण्यपि नोत्पद्यन्ते। 10
कुतः । श्रुतेः । यथा जीवस्यानुत्पत्तिः श्रुतेरवगम्यते तथा
प्राणानामप्यनुत्पत्तिः श्रुतेरेवावगम्यते । तथा प्राणा इति प्रमा-
णमप्यतिदिश्यते । का पुनरत्र श्रुतिः । असद्वा इदमग्र आसीत्।
तदाहुः किं तदासीदिति । ऋषयो वाव तेग्रे सदासीत् । तदाहुः
के ते ऋषय इति । प्राणा वाव ऋषयः ( शत. ब्रा. ६।१।१ ) 15
इति जगदुत्पत्तेः प्रागिन्द्रियाणां सद्भावः श्रूयते । प्राणशब्दे
बहुवचनादिन्द्रियाण्येवेति निश्चीयते । न चेयं श्रुतिर्वायुश्चान्त-
रिक्षं चैतदमृतम् (बृ. २।३।३) । सैषानस्तमिता देवता यद्वायुः

5. C. reads रूप for लक्षण.

7. C. reads इन्द्रियादीनाम् for इन्द्रियाणाम्.

12. C. om. प्राणा इति.

16. A. B. read प्राणशब्द for प्राणशब्दे.

(बृ. १।५।२२) इतिवच्चिरकालावस्थायित्वेन परिणेतुं शक्या। असद्वा इदमग्र आसीत् (शत. ब्रा. ६।१।१) इति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात्। उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इत्येवं प्राप्तेभिधीयते। वियदादिवदेव प्राणाश्चोत्पद्यन्ते। कुतः। सदेव सोम्येदमग्र आसीत् (छा. ६।२।१)। आत्मा वा इदमेक एवाग्र आसीत् (ऐ. १।१) इत्यादिषु प्राक्सृष्टेरेकत्वावधारणात्।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। (मु. २।१।३) इतीन्द्रियाणामुत्पत्तिश्रवणाच्च प्रागवस्थानासंभवात्। न चात्मोत्पत्तिवादवदिन्द्रियोत्पत्तिवादाः परिणेतुं शक्याः। आत्मवदुत्पत्तिप्रतिषेधश्रुतीनां नित्यत्वबोधकश्रुतीनां चादर्शनात्। असद्वा इदमग्र आसीत् (शत. ब्रा. ६।१।१) इत्यादिवाक्येपि प्राणशब्देन परमात्मैव निर्दिश्यते। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते (छा. १।११।५) इति प्राणशब्दस्य परमात्मन्यपि प्रसिद्धेः। प्राणा वाव ऋषयः (शत. ब्रा. ६।१।१) इत्यृषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते न त्वचेतनेष्विन्द्रियेषु ॥ १ ॥

ऋषयः प्राणा इति बहुवचनश्रुतिः कथमुपपद्यत इति चेत्तत्राह।

1. C. reads नेतुम् for परिणेतुम्.
9. A. B. read च after संभवात्.
10. A. B. read आत्मनः for आत्म after च; A. B. read उत्पत्तिवादः परिणेतुं शक्यः for उत्पत्तिवादाः परिणेतुं शक्याः.
11. C. om. बोधक.
15. B. C. read वा for वाव.
17. C. reads अचेतन for अचेतनेषु.
18. E. reads च after इति.

## गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥ २ ॥

बहुवचनश्रुतिर्गौणी बह्वर्थासंभवात्तस्यैव परमात्मनः सृष्टेः प्रागवस्थानश्रुतेरेव ॥ २ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

इतश्च प्राणशब्दः परमात्मवचनः । वाचः परमात्मव्यतिरिक्तविषयस्य नामधेयस्य वाग्विषयभूतस्य वियदादिसृष्टिपूर्वकत्वात् । तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत (बृ. १।४।७) इति नामरूपभाजामभावात्तदानीं वागादीन्द्रियकार्याभावाच्च तानि न सन्तीत्यर्थः ॥ ३ ॥ प्राणोत्पत्त्यधिकरणं समाप्तम् । (१)

## सप्त गतेर्विशेषितत्वाच्च ॥ ४ ॥

तानीन्द्रियाणि किं सप्तैव स्युरथ वैकादशेति चिन्त्यते । श्रुतिविप्रतिपत्तेः संशयः । किं प्राप्तम् । सप्तेति । कुतः । गतेर्विशेषितत्वाच्च । गतिस्तावज्जायमानेन म्रियमाणेन च जीवेन सह लोकेषु संचरणरूपा सप्तानामेव श्रूयते ।

सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त । (मु. २।१।८)

इति । वीप्सा पुरुषभेदाभिप्राया । विशेषिताश्च ते गतिमन्तः प्राणाः स्वरूपतः

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ (का. ६।१०)

6. E. reads विषयभूत for विषयभूतस्य; C. reads वेद् for वियत्.
13. C. reads एव after सप्त.
14. C. om. च after म्रियमाणेन.
16. E. reads सम् before चरन्ति.

इति । शरीरान्तःसंचरणं विहाय मोक्षार्थगमनं परमा गतिः । एवं जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणाद्योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेति गम्यते । यानि त्वित-
5 राणि विषयाणां ग्राहकत्वेनाष्टौ ग्रहाः ( बृ. ३।२।१ ) । सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ ( तै. सं ५।१।७।१ ) इत्यादिषु चतुर्दशपर्यन्तानि प्राणप्रतिपादकवाक्येषु वाक्पाणिपादपायूपस्थाहंकारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते तेषां जीवेन सह गतिश्रवणाभावाज्जीवस्याल्पोपकारकत्वमात्रेणौपचारिकः प्राण-
10 व्यपदेश इति ॥ ४ ॥

एवं प्राप्ते प्रचक्ष्महे ।

## हस्तादयस्तु स्थितेतो नैवम् ॥ ५ ॥

न सप्तैवेन्द्रियाणि । अपि त्वेकादश । हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात्कार्यभेदाच्च । दृश्यते हि
15 श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः । अतस्तेपि सन्त्येव । अतो नैवम् । अतो हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः । अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इत्येकादशेन्द्रियाणि । अतो

2. B. reads जनन for जन्म.
3. A. reads वि before ज्ञानानि.
7. C. reads पादपाणि for पाणिपाद.
9. E. reads अल्प before अल्प.
11. E. om. एवम् before प्राप्ते.
13. B. reads शरीर for शरीरे.
16. C. om. इति after सन्ति.
18. C. reads एव after एकादश.

दशेमे पुरुषे प्राणा आत्मैकादशः (बृ. ३।९।४) इत्यात्मशब्देन मनोभिधीयते ।

इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । (गी. १३।५)
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र ( वि. पु. १।२।४५-४६ ) 5

इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसंख्या स्थिता । अधिकसंख्यावादा मनोवृत्तिभेदाभिप्रायाः । न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः ॥ ५ ॥ सप्तगत्यधिकरणं समाप्तम् । (२)

## अणवश्च ॥ ६ ॥

त एते सर्वे एव समाः सर्वेनन्ताः ( बृ. १।५।१३ ) इत्यानन्त्यश्रवणाद्विभुत्वं प्राणानामिति प्राप्तेभिधीयते । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ( बृ. ४।४।२ ) इत्युत्क्रान्त्यादिश्रवणात्परिमितत्वे सिद्धे सत्युत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणाः । आनन्त्यश्रुतिस्त्वथ यो हैताननन्तानुपास्ते ( बृ. १।५।१३ ) इत्युपासनश्रवणादुपास्यप्राणविशेषभूतकार्यबाहुल्याभिप्राया ॥ ६ ॥ 10 15

## श्रेष्ठश्च ॥ ७ ॥

प्राणसंवादे शरीरस्थितिहेतुत्वेन श्रेष्ठतया निर्णीतो मुख्यप्राण आनीदवातं स्वधया तदेकम् ( तै. ब्रा. २।८।९ ) इति महाप्रलयसमये स्वकार्यभूतप्राणनसद्भावश्रवणादेतस्माज्जायते (मु. २।१।३ ) इति जन्मश्रवणस्य जीवजन्मश्रवणवदुपपत्तेर्नोत्पद्यत इत्याशङ्क्य प्राक्सृष्टेरेकत्वावधारणादिविरोधादेतस्मा- 20

7. C. om. तत्र after तत्र.

15. C. E. read विशेषण for विशेष; B. reads कार्यभूत for भूतकार्य.

18. E. reads मुख्यः for मुख्य.

ज्जायते प्राणः ( मु. २।१।३ ) इति पृथिव्यादितुल्योत्पत्तिश्रवणादुत्पत्तिनिषेधाभावाच्च जायत एव श्रेष्ठश्च प्राण इत्युच्यते । आनीदवातम् ( तै. ब्रा. २।८।९ ) इति तु न जैवं श्रेष्ठं प्राणमभिप्रेत्योच्यते । अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमु-
5 च्यते । अवातमिति तत्रैव श्रवणात् । पूर्वेणैव तुल्यन्यायत्वेपि पृथग्योगकरणमुत्तरचिन्तार्थम् ॥७॥ प्राणाणुत्वाधिकरणं समाप्तम् । (३)

## न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥

सोयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रं तस्य वा स्पन्दरूपक्रियाथ वायुरेव कंचन विशेषमापन्न इति विशये
10 वायुरेवेति प्राप्तम् । यः प्राणः स वायुः ( बृ. ३।१।५ ) इति व्यपदेशात् । यद्वा वायुमात्रे प्राणत्वप्रसिद्ध्यभावादुच्छ्वासनिःश्वासादिवायुक्रियायां प्राणशब्दप्रसिद्धेश्च तत्क्रियैवेति प्राप्ते न वायुमात्रं न च तत्क्रियेत्युच्यते । कुतः । पृथगुपदेशात् ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

15 खं वायुः ( मु. २।१।३ )

इति । तत एव पृथगुपदेशाद्वायुक्रियापि न भवति प्राणः । न हि तेजःप्रभृतीनां क्रिया तैः सह पृथग्द्रव्यतयोपदिश्यते । यः प्राणः स वायुः (बृ. ३।१।५) इति तु वायुरेवावस्थान्तरमापन्नः प्राणो न तेजःप्रभृतिवत्तत्त्वान्तरमिति ज्ञापनार्थम् । उच्छ्वास-
20 निःश्वासादावपि प्राणः स्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिर्न क्रियामात्रे ॥ ८ ॥

---

3. C. reads चैव for जैवम्.

6. C. reads त्र after उत्तर.

8. C. reads श्रेष्ठ for श्रेष्ठः.

11. B. reads वायुमात्रेण for वायुमात्रे.

13. C. om. कुतः.

21. B. reads प्रसिद्धेः for प्रसिद्धिः.

किमयं प्राणो वायोर्विकारः सन्नग्निवद्भूतान्तरम् । नेत्याह ।

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥**

नायं भूतविशेषः । अपि तु चक्षुरादिवज्जीवोपकरणविशेषः । तच्चोपकरणत्वमुपकरणभूतैरिन्द्रियैः सहशिष्ट्यादिभ्योवगम्यते । चक्षुरादिभिः सहायं प्राणः शिष्यते प्राणसंवादादिषु । तत्स- 5 जातीयत्वे हि तैः सह शासनं युज्यते । प्राणशब्दपरिगृहीतेषु करणेष्वस्य विशिष्याभिधानमादिशब्देन गृह्यते । अथ ह य एवायं मुख्यप्राणः ( छा. १।२।७ ) । योयं मध्यमप्राणः ( बृ. १।५।२१ ) इत्यादिषु विशिष्याभिधानात् ॥ ९ ॥

चक्षुरादिवदस्यापि करणत्वे तद्वदस्यापि जीवं प्रत्युपकार- 10 विशेषरूपक्रियया भवितव्यम् । सा तु न दृश्यते । अतो नायं चक्षुरादिवद्भवितुमर्हतीति चेत्तत्राह ।

**अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥**

अकरणत्वात् । करणं क्रिया । अक्रियत्वात् । अस्य प्राणस्य जीवं प्रत्युपकारविशेषरूपक्रियारहितत्वाच्च यो दोष उद्भाव्यते 15 स नास्ति । यत उपकारविशेषरूपशरीरेन्द्रियधारणादिरूपां क्रियां दर्शयति श्रुतिः । यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते स एव श्रेष्ठः (छा. ५।१।७) इत्युक्त्वा वागाद्युत्क्रमणेपि शरीरस्थेन्द्रियान्तराणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरे-

4. E. reads विशेष before भूतैः.
10. C. om. अपि before करणत्वे; C. reads तद्वदेव for तद्वदस्यापि.
14. B. reads अक्रियात्वात् for अक्रियत्वात्.
16. E. reads विशेषरूपाम् for विशेषरूप; C. om. रूपशरीरेन्द्रियधारणादि.
18. C. reads वै for एव after सः.

न्द्रियशैथिल्याभिधानात् । अतः प्राणापानव्यानोदानसमानाकारेण पञ्चधावस्थितोयं प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत्करणत्वम् ॥ १० ॥

नन्वेवं नामभेदात्कार्यभेदाच्च प्राणापानादयस्तत्त्वान्तराणि
5 स्युस्तत्राह ।

**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥**

यथा कामादिवृत्तिभेदे तत्कार्यभेदेपि न कामादिकं मनसस्तत्त्वान्तरम् । कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ( बृ. १।५।३ ) इति वच-
10 नात् । एवं प्राणोपानो व्यान उदानः समान इत्येतत्सर्वं प्राण एव ( बृ. १।५।३ ) इति वचनादपानादयोपि प्राणस्यैव वृत्तिविशेषा न तत्त्वान्तरमित्यवगम्यते ॥ ११ ॥ वायुक्रियाधिकरणं समाप्तम् । (४)

**अणुश्च ॥ १२ ॥**

अणुश्चायम् । पूर्ववदुत्क्रान्त्यादिश्रवणात् । तमुत्क्रामन्तं प्राणो-
15 नूत्क्रामति ( बृ. ४।४।२ ) इत्यादिषु । अधिकाशङ्का तु सम एभिस्त्रिभिर्लोकैः समोनेन सर्वेण ( बृ. १।३।२२ ) । प्राणे सर्वं प्रतिष्ठितम् ( प्र. २।६ ) । सर्वं हीदं प्राणेनावृतमित्यादिश्रवणान्महापरिमाण इति । परिहारस्तूत्क्रान्त्यादिश्रवणात्परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपप-
20 त्तिरिति ॥ १२ ॥ श्रेष्ठाणुत्वाधिकरणं समाप्तम् ।(५)

**ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥**

सश्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिरियत्तापरिमाणं चोक्तम् ।

10. E. reads प्राणापानव्यानोदान for प्राणोपानो व्यान उदानः.
11. A. B. om. एव after प्राणस्य.

तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वं च पूर्वमेवाभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् (ब्र. सू. २।१।५) इत्यनेन सूत्रेण प्रसङ्गादुपपादितम् । जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकसिद्धम् । एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते (बृ. २।१।१८) इत्यादिश्रुतिसिद्धं च । 5
तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तमुत परायत्तमिति विशये नैरपेक्ष्यात्स्वायत्तमिति प्राप्त उच्यते ज्योतिराद्यधिष्ठानमिति । प्राणवता जीवेन सह ज्योतिरादीनामग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात्तस्य परमात्मन आमननाद्भवति । आमननमाभिमुख्येन मननं 10
परमात्मनः संकल्पादेव भवतीत्यर्थः । कुत एतत । शब्दात् । इन्द्रियाणां साभिमानिदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुषमननायत्तत्वशास्त्रात् । यथान्तर्यामिब्राह्मणादिषु योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त आत्मान्तर्याम्यमृतः (बृ. ३।७।५)। यो वायौ तिष्ठन् 15
(बृ. ३।७।७)। य आदित्ये तिष्ठन् (बृ. ३।७।९)। य आत्मनि तिष्ठन् (बृ. ३।७।२२)। यश्चक्षुषि तिष्ठन् (बृ. ३।७।१८) इत्यादि । यथा च भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः (तै. २।८) इति। तथैतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ 20
तिष्ठतः (बृ. ३।८।९) इत्यादि ॥ १३ ॥

3. B. om. च after जीवस्य.
4. C. om. प्राणान्.
10. E. reads परात्मनः for परमात्मनः.
12. C. reads स्वाभिमानि for साभिमानि; A. B. om. स्व before कार्येषु.
13. A. reads आयत्तत्वम् for आयत्तत्व.
20. E. reads चैतस्य for एतस्य वा.

## तस्य च नित्यत्वात् ॥ १४ ॥

सर्वेषां परमात्माधिष्ठितत्वस्य नित्यत्वात्स्वरूपानुबन्धित्वेन नियतत्वाच्च तत्संकल्पादेवैषामधिष्ठातृत्वमवर्जनीयम् । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् (तै. २।६) 5 इत्यादिना परमपुरुषस्य नियन्तृत्वेन सर्वचिदचिद्वस्त्वनुप्रवेशः स्वरूपानुबन्धी श्रूयते । स्मर्यते च ।

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् । (गी १०।४२) इति ॥ १४ ॥ ज्योतिराद्यधिष्ठानाधिकरणं समाप्तम् । ( ६ )

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

10 किं सर्वे प्राणशब्दनिर्दिष्टा इन्द्रियाण्युत श्रेष्ठप्राणव्यतिरिक्ता एवेति विशये प्राणशब्दवाच्यत्वात्करणत्वाच्च सर्व एवेन्द्रियाणीति प्राप्त उच्यते । श्रेष्ठव्यतिरिक्ता एव प्राणा इन्द्रियाणि । कुतः । श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात् । इन्द्रियव्यपदेशात् ।

15 इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः । (गी. १३।५) इत्यादिभिर्हि चक्षुरादिषु समनस्केष्वेवेन्द्रियशब्दो व्यपदिश्यते ॥ १५ ॥

## भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । (मु. २।१।३) 20 इत्यादिष्विन्द्रियेभ्यः प्राणस्य पृथक्श्रवणात्प्राणव्यतिरिक्तानामेवेन्द्रियत्वमवगम्यते । मनसः पृथक्श्रवणेपि तस्यान्यत्रेन्द्रिया-

---

5. C. om. सर्व before चिदचित्.

9. B. om. ते and reads तु after इन्द्रियाणि.

16. E. om. हि; C. om. एव.

21. C. om. तस्य.

न्तर्भाव उक्तो मनःषष्ठानीन्द्रियाणि (गी. १५।७) इत्यादौ । वैलक्षण्यं चक्षुरादिभ्यः श्रेष्ठप्राणस्योपलभ्यते । सुषुप्तौ हि प्राणस्य वृत्तिरुपलभ्यते । चक्षुरादीनां तु वृत्तिर्नोपलभ्यते । कार्यं च चक्षुर्वागादीनां समनस्कानां ज्ञानकर्मसाधनत्वम् । प्राणस्य तु शरीरेन्द्रियधारणम् । प्राणाधीनधारणत्वादिन्द्रियेषु प्राणशब्द- 5 व्यपदेशः । तथा च श्रुतिस्त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते (बृ. १।५।२१) इति । रूपमभवञ्छरीरमभवंस्तदधीनप्रवृत्तयोभवन्नित्यर्थः ॥ १६ ॥ इन्द्रियाधिकरणं समाप्तम् । (७)

**संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥** 10

भूतेन्द्रियादीनां समष्टिसृष्टिर्जीवानां कर्तृत्वं च परस्माद्ब्रह्मण इत्युक्तं पुरस्तात् । जीवानां स्वेन्द्रियाधिष्ठानं च परायत्तमिति चानन्तरं स्थिरीकरणाय स्मारितम् । या त्वियं नामरूपव्याकरणात्मिका प्रपञ्चव्यष्टिसृष्टिः सा किं समष्टिजीवस्य हिरण्यगर्भस्यैव कर्मोत तेजःप्रभृतिशरीरकस्य परस्यावादिसृष्टिवद्धि- 15 रण्यगर्भशरीरकस्य परस्य ब्रह्मण इतीदानीं चिन्त्यते । किं युक्तम् । समष्टिजीवस्येति । कुतः । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा. ६।३।२) इति जीवकर्तृत्व-

4. E. om. वाक् after चक्षुः.

6. B. om. ते after श्रुतिः.

7. A. B. read वि before आख्यायन्ते; C. reads आप्यायन्ते for आख्यायन्ते.

8. B. om. शरीरमभवन्.

12. C. om. च after अधिष्ठानम्.

13. C. om. व्याकरण.

14. C. reads जीवरूपस्य for जीवस्य.

15. A. B. om. एव after हिरण्यगर्भस्य.

16. B. om. परस्य.

18. E. reads कर्तृकत्व for कर्तृत्व.

श्रवणात् । न हि परा देवता स्वेन रूपेण नामरूपे व्याकरवाणीत्यैक्षत । अपि तु स्वांशभूतेन जीवरूपेण । अनेन जीवेनात्मनेति वचनात् । नन्वेवं चारेणानुप्रविश्य परबलं संकलयानीतिवद्व्याकरवाणीत्युत्तमपुरुषः कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकः स्यात् । नैवम् । तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम् । इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात्तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः । न च सहयोगलक्षणेयं तृतीया । कारकविभक्तौ संभवन्त्यामुपपदविभक्तेरन्याय्यत्वात् । न च करणे तृतीया । ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात् । न च जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति नामरूपव्याकरणं तु ब्रह्मण एवेति शक्यं वक्तुम् । क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः । जीवस्य स्वांशत्वेन स्वरूपत्वेपि परस्वरूपव्यावृत्त्यर्थोनेन जीवेनेति पराक्त्वेन परामर्शः । अतो हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया। अत एव स्मृतिषु चतुर्मुखकर्तृकं सृष्टिप्रकरणे नामरूपव्याकरणं संकीर्त्यते ।

नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥

(वि. पु. १।५।६२)

इत्यादि । एवं प्राप्तेभिधीयते ।

संज्ञामूर्तिक्लृप्तिस्त्विति । तुशब्दः पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणम् । तत्त्रिवृत्कुर्वतः परस्यैव ब्रह्मणः । तस्यैव नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं कुर्वत

13. B. reads परत्वात्केन for पराक्त्वेन.
15. E. reads च after एव; C. E. read कर्तृक for कर्तृकम्.
22. C. om. एव after परस्य.

एव हि नामरूपव्याकरणमुपदिश्यते । सेयं देवतैक्षत हन्ताह-मिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्या-करवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि (छा. ६।३।२-३) इति समानकर्तृकत्वप्रतीतेः । त्रिवृत्करणं तु चतुर्मुखस्याण्डान्त-र्वर्तिनो न संभवति । त्रिवृत्कृतैस्तेजोबन्नैर्ह्यण्डमुत्पाद्यते । चतु- 5
र्मुखस्य चाण्डे संभवः स्मर्यते ।

तस्मिन्नण्डेभवद्ब्रह्मा सर्वलोकपितामहः । ( मनु. १।९ )

इति । अतस्त्रिवृत्करणं परस्यैव ब्रह्मणः । तत्समानकर्तृकं नामरू-पव्याकरणं च तस्यैवेति विज्ञायते । कथं तर्ह्यनेन जीवेन ( छा. ६।३।२ ) इति संगच्छते । आत्मना जीवेनेति सामानाधिकर- 10
ण्याज्जीवशरीरकं परं ब्रह्मैव जीवशब्देनाभिधीयते । यथा तत्तेज ऐक्षत ।····तदपोसृजत ( छा. ६।२।३ ) । ता आप ऐक्ष-न्त ।··· ता अन्नमसृजन्त ( छा. ६।२।४ ) इति तेजःप्रभृति-शरीरकं परमेव ब्रह्माभिधीयते । अतो जीवसमष्टिभूतहिरण्य-गर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम् । एवं 15
च प्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) इति प्रवि-शनिरुत्तमपुरुषश्चाक्लिष्टौ मुख्यार्थावेव भवतः । प्रवेशव्याकर-णयोः समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते । अतः सेयं देवता ( छा. 20
६।३।२ ) इत्यादिवाक्यस्यायमर्थः । इमास्तेजोबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य

5. C. E. read उत्पद्यते for उत्पाद्यते.

11. A. B. read परब्रह्म for परं ब्रह्म.

19. A. B. om. कर्तृक after चतुर्मुख.

22. B. C. om. जीवेन.

नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणीति । अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ॥ १७ ॥

5 अथ स्यान्नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात्परमात्मकर्तृकत्वमिति न शक्यते वक्तुम् । त्रिवृत्करणस्यापि जीवकर्तृकत्वसंभवात् । अण्डसृष्ट्युत्तरकालं हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ( छा. 10 ६।४।७)। अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो भागस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योणिष्ठस्तन्मनः (छा. ६।५।१) इत्यादिना । तथा पूर्वस्मिन्नपि वाक्ये यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ( छा. ६।४।१ ) इत्यादिना चतुर्मुखसृष्टाग्न्यादित्यचन्द्रविद्युत्सु त्रिवृत्करणं प्रद-15 श्यते । नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते । सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत् (छा. ६।३।३-४) इति । तत्राह ।

1. B. reads सृष्टि for सृष्टिम्.
2. E. reads इति before तदर्थम्.
3. B. om. त्रिवृतम्.
6. E. om. त्व after परमात्मकर्तृक.
7. C. reads सृष्टि for सृष्ट.
8. C. reads तु after यथा.
10. A. C. E. read त्रिधा for त्रेधा.
16. A. reads ऐक्षत after देवता.

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥

यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोयं तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ( छा. ६।३।४ ) इति त्रिवृत्करणोपदेश इति तन्नोपपद्यते । अन्नमशितं त्रेधा विधीयते ( छा. ६।५।१ ) इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेनाप्यतैजसत्वप्रसङ्गात् । आपः पीताः ( छा. ६।४।२ ) इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवतैजसत्वप्रसङ्गाच्च । न चैवमिष्यते । मांसादेर्हि भौमत्वमिष्यते पुरीषवत् । मांसमनसी अपि भौमे पार्थिवे इष्येते । अन्नमशितं त्रेधा ( छा. ६।५।१ ) इति प्रक्रमात् । यथाशब्दमितरयोश्च । इतरयोरप्याप: पीतास्तेजोशितमिति पर्याययोर्यथाशब्दं विकारा इष्यन्ते । आपः पीतास्त्रेधा विधीयन्ते (छा. ६।५।२) इत्यपामेव त्रिधा परिणामः शब्दात्प्रतीयते । तथा तेजोशितं त्रेधा विधीयते ( छा. ६।५।३ ) इत्यपि तेजस एव त्रिधा परिणामः शब्दात्प्रतीयते । अतः पुरीषमांसमनांसि पृथिवीविकाराः । मूत्रलोहितप्राणा अब्विकाराः । अस्थिमज्जावाचस्तेजोविकारा इति प्रतिपत्तव्यम् । अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् ( छा. ६।५।४ ) इति वाक्यशेषाविरोधाच्च । अतस्तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ( छा. ६।३।४ ) इत्युक्तस्त्रिवृत्करणप्रकारोन्नमशितम् ( छा. ६।५।१ ) इत्यादिना न

---

8. E. reads त्व after पार्थिव; B. C. read मांसादि हि भौमम् for मांसादेर्हि भौमत्वम्.

12. A. B. read विकाराविष्येते for विकारा इष्यन्ते.

13. C. reads त्रेधा for त्रिधा after अपामेव; E. reads यथा for तथा.

14. B. C. read त्रेधा for त्रिधा after तेजस एव.

19. C. reads इत्युक्तम् for इत्युक्तः.

प्रदर्श्यते । तथा सति मनःप्राणवाचां त्रयाणामप्यणीयस्त्वेन तैजसत्वादन्नमयं हि सोम्य मनः ( छा. ६।५।४ ) इत्यादिर्विरुध्यते । प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानामन्नमशितम् ( छा. ६।५।१ ) इत्यादिनैकैकस्य त्रेधा परिणाम
5 उच्यते । अण्डसृष्टेः प्रागेव च तेजोबन्नानां त्रिवृत्करणेन भवितव्यम् । अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम् । तदेव च त्रिवृत्करणम् । तथा च स्मर्यते

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
10 नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥

( वि. पु. १।२।५०-५२ )

इति । अत एव चानेन जीवेनात्मनानुप्रविश्य नामरूपे व्या-
15 करोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत् (छा. ६।३।३-४) इति पाठक्रमोऽर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात्त्रिवृत्कृतानां कार्येष्वग्न्यादित्यादिषु क्रियते ॥ १८ ॥

2. C. reads इत्यादि विरुध्येत for इत्यादिर्विरुध्यते.

5. C. om. च after प्रागेव.

8. E. reads यथा for तथा.

14. A. B. read एवं चानेनैव for अत एवं चानेन.

16. C. reads अपि after पाठक्रमः; B. om. अग्न्यादित्यादिषु; A. om. आदित्य.

18. C. reads योगात् for अयोगात्.

स्यादेतत् । अन्नमशितम् (छा. ६।५।१) । आपः पीताः (छा. ६।५।२) । तेजोशितम् (छा. ६।५।३) इति त्रिवृत्कृता-नामन्नादीनामेकैकस्य तेजोबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमा-पस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इति । तत्राह ।

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥** 5

वैशेष्यं विशेषभावः । त्रिवृत्करणेन त्रिरूपेष्येकैकस्मिन्नन्ना-द्याधिक्यात्तत्र तत्रान्नादिवादः । द्विरुक्तिरध्यायपरिसमाप्तिं द्यो-तयति ॥ १९ ॥ संज्ञामूर्तिकॢप्त्यधिकरणं समाप्तम् ॥ (८)

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसा-भाष्ये द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ॥ समाप्तश्चाय-मध्यायः ॥ 10



3. C. reads अन्नात्मत्वेन for अन्नात्मकत्वेन.

# अथ श्रीभाष्ये



## तृतीयाध्याये प्रथमः पाद आरभ्यते ।

### तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

5 अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणं निरस्तनिखिलदोषगन्धमपरिमितोदारगुणसागरं सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्तीत्ययमर्थः स्मृतिन्यायविरोधपरिहारपरपक्षप्रतिक्षेपवेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्यस्वरूपसंशोधनैस्तदुद्धर्पणत्वहेतुभिः सह स्थापितः ।
10 अतोध्यायद्वयेन ब्रह्मस्वरूपं प्रतिपादितम् । उत्तरेणेदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारश्चिन्तयितुमिष्यते । तत्र तृतीयेध्याय उपायभूतोपासनविषया चिन्ता वर्तते । उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु संचरतो जाग्रतः स्वपतः सुषुप्तस्य
15 मूर्छतश्च दोषाः परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरता च प्रथमद्वितीययोः पादयोः प्रतिपाद्यते ।

तत्र देहाद्देहान्तरं गच्छन्नयं जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छत्युत नेति चिन्तायां यत्र

---

11. A. reads तृतीय for तृतीये.

15. C. om. च after परस्य; B. reads गुणाकरत्वम् for गुणाकरता च.

17. C. om. अन्तर before आरम्भ.

यत्र जीवो याति तत्र तत्र भूतसूक्ष्माणां सुलभत्वादसंपरिष्वक्तो यातीति प्राप्तम्। पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति। तत्र सिद्धान्तमाह।

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति। संज्ञामूर्तिक्लृप्तिः (ब्र. सू. २।४।१७) इति मूर्तिशब्देन देहः प्रस्तुतः स तच्छब्देन परामृश्यते। तदन्तरप्रतिपत्तौ देहान्तरगमने भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहति गच्छतीत्यर्थः। कुतः। प्रश्ननिरूपणाभ्याम्। प्रश्नप्रतिवचनाभ्याम्। पञ्चाग्निविद्यायामेवं प्रश्नप्रतिवचने आम्नायेते। श्वेतकेतुं किलारुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं देवयानपितृयाणपथव्यावर्तनं अमुष्य लोकस्याप्राप्तारं च वेत्थेति पृष्ट्वेदमपि पप्रच्छ वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति (छा. ५।३।३) इति। तत्रेमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति (छा. ५।४।२) इत्यादिना देवाख्या जीवस्य प्राणा अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति। सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते। तं चामृतमयं देहं त एव प्राणाः पर्जन्येऽग्नित्वरूपिते

2. B. reads निरसिष्यते for निरसिष्यति.

7. A. B. om. सम् before परिष्वक्तः.

11. B. reads प्राप्तारम् for अप्राप्तारम्.

13. C. reads पञ्चमम् for पश्चिमम्; C. reads प्र for प्रति.

15. B. om. सम् before भवति; C. reads देवाख्यजीवस्य प्राणाग्नित्वेन रूपिते for देवाख्या जीवस्य प्राणा अग्नित्वेन रूपिते.

16. A. reads नि before रूपिते.

17. B. reads स्व before रूपेण.

18. B. reads परिणमति for परिणमते; E. reads अग्नित्वेन for अग्नित्व.

प्रक्षिपन्ति । स च देहस्तत्र प्रक्षिप्तो वर्षं भवति । तच्च वर्षं त
एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति । तच्च तत्र
प्रक्षिप्तमन्नं भवति । तच्चान्नंत एव पुरुषेग्नित्वरूपिते प्रक्षिपन्ति।
तच्च तत्र रेतो भवति । तच्च त एव योषायामग्नित्वरूपितायां
5 प्रक्षिपन्ति । तच्च तत्र प्रक्षिप्तं गर्भो भवतीत्युक्त्वाहेति तु
पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ( छा. ५।९।१ )
इति । एवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या
भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुतिष्वनुवर्तमानानामेवापां
सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत
10 एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्र तत्र
यातीति गम्यते ॥ १ ॥

नन्वापः पुरुषवचसः ( छा. ५।९।१ ) इत्युक्तेपां पुरुषा-
कारपरिणामप्रतीतेर्गच्छता जीवेन तासामेव परिष्वङ्गः प्रती-
यते । अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इत्यतः प्राह ।

15 **त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । देहारम्भिकाणामपां केवलानां
न देहारम्भसंभवः। देहाद्यारम्भायैव हि तासां त्रिवृतं त्रिवृतमे-
कैकाम् ( छा. ६।३।३ ) इति त्रिवृत्करणम् । केवलानामपां

---

1. A. B. read परि for प्र before क्षिप्तः.
3. B. reads प्रति for प्र before क्षिप्तम्.
5. B. reads प्रति for प्र before क्षिप्तम्.
12. C. reads भवन्ति after पुरुषवचसः.
14. C. reads तत्र, E. अत्र for अतः प्र; B. om. प्र before आह.
16. A. reads आरम्भकाणाम् for आरम्भिकाणाम्.
17. E. om. एव before हि.
18. C. reads अकरोत् after एकैकाम्.

श्रवणं तु तासां भूयस्त्वात् । देहे च लोहितादिभूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते ॥ २ ॥

## प्राणगतेश्च ॥ ३ ॥

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिः श्रूयते तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ( बृ. ४।४।२ ) इति । स्मर्यते च

मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ (गी. १५।७-८)

इति । न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम् ( बृ. ३।२।१३ ) इत्यादिना प्राणानां जीवमरणकालेऽग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न । भाक्तत्वादग्न्यादिष्वप्ययश्रवणस्य । कथं भाक्तत्वम् । ओषधीर्लोमानि वनस्पतीन्केशाः ( बृ. ३।२।१३ ) इत्यनपियद्भिर्लोमादिभिः सह श्रवणात् । अतश्चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवतापक्रमणपरा ॥ ४ ॥

## प्रथमेश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

यदुक्तमद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो

5. B. reads तदनुगतिः प्राणानाम् for प्राणानां तदनुगतिः.
16. C. om. गति before श्रुतिः.
19. A. reads ततः for अतः.
22. C. om. सूक्ष्माभिः.

गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति तन्नोपपद्यते । द्युलोकाग्निविषये प्रथमे होमेपां होम्यत्वाश्रवणात् । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति ( छा. ५।४।२ ) इति श्रद्धैव होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्र-
5 सिद्धा । अतो नापस्तत्र होम्या इति चेन्न । यतस्ता आप एव श्रद्धाशब्देन तत्राभिधीयन्ते । कुतः । प्रश्नप्रतिवचनोपपत्तेः । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ( छा. ५।३।३ ) इति प्रश्नस्य प्रतिवचनोपक्रमे श्रद्धा द्युलोकाग्नौ हो-म्यत्वेन श्रुता । तत्र यदि श्रद्धाशब्देनापो नोच्येरंस्ततोन्यथा
10 प्रश्नोन्यथा प्रतिवचनमित्यसंगतं स्यात् । इति तु पञ्चम्यामाहुतावापः पुरुषवचसः ( छा. ५।९।१ ) इति प्रतिवचने निगमनं च श्रद्धाया अप्त्वमेव सूचयति । वेत्थ यथा ( छा. ५।३।३ ) इति हि प्रश्नगतः प्रकार इति तु पञ्चम्याम् ( छा. ५।९।१ ) इतीतिशब्देन परिहारो निगम्यते । श्रद्धासोमराजवर्षान्नरेतो-
15 गर्भरूपेणापां परिणाममुक्त्वा ह्येवमापः पुरुषवचस इति निगम्यते । श्रद्धाशब्दस्य चाप्सु वैदिकः प्रयोगो दृश्यते । अपः प्रणयति । श्रद्धा वा आपः ( तै. ब्रा. ३।२।४ ) इति । श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा संभवति ( छा. ५।४।२ ) इति सोमाकारेण परिणामश्चापामेवोपपद्यते । अतो भूतान्तरसंसृष्टा-
20 भिरद्भिः संपरिष्वक्तो जीवो रंहतीत्युपपन्नम् ॥ ५ ॥

---

3. A. B. om. एतस्मिन्.
8. E. reads हि after उपक्रमे.
11. C. reads प्रतिवचनम् for प्रतिवचने.
12. E. reads साधयति for सूचयति.
14. C. om. राज after सोम.
16. A. B. E. read वैदिक for वैदिकः.
18. A. om. सम् before भवति.
20. A. B. om. जीवः.

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

यत्पुनरुक्तमद्भिः संपरिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत इति तन्नोपपद्यते । अस्मिन्वाक्ये जीवस्याश्रवणात् । अत्र हि श्रद्धादय एवाम्ब्ववस्थाविशेषा होम्यत्वेन श्रुता न तु जीवस्तत्परिष्वक्त इति चेत्तन्न । इष्टादिकारिणां प्रतीतेः । तस्मिन्नेव वाक्ये ह्युत्तरत्र ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमराजानो भवन्तीति पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्तीत्युच्यते । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति (छा. ५।१०।३) इत्यारभ्य पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते । ...यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवति (छा. ५।१०।४-५-६) इति । अत्रापि द्युलोकाग्नौ श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति (छा. ५।४।२) इति तदेकार्थत्वाच्छ्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्तमिति गम्यते । देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति । अतः संपरिष्वक्तो जीवो यातीत्युपपद्यते ॥ ६ ॥

ननु च तं देवा भक्षयन्ति (छा. ५।१०।४) इति देवै-

2. C. reads एतद्वाक्यादेव for एतस्माद्वाक्यात्.
3. E. reads एतस्मिन् for अस्मिन्.
4. A. om. अम्बु.
6. E. reads अस्मिन् for तस्मिन्.
7. E. om. इति after भवन्ति.
9. C. reads संविशन्ति for संभवन्ति.
11. A. om. तत्.
13. C. reads इति after सिञ्चति.

भक्ष्यमाणत्ववचनात्सोमो राजेति न जीव उच्यते । जीवस्यान-
दनीयत्वात् । तत्राह ।

**भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥**

वाशब्दश्चोद्यं व्यावर्तयति । इष्टादिकारिणोनात्मवित्त्वात्स
5 देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते । इहेष्टादिना तदारा-
धनं कुर्वन्नुपकरोति । आराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र
तत्समानभोगस्तदुपकरणं भवति । यथा पशुरेवं स देवानाम्
( बृ. १।४।१० ) इत्यनात्मविदो देवानामुपकरणत्वं दर्शयति
श्रुतिः । स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिमनात्मविदां च देवभोग्यत्वं
10 दर्शयति

देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि । (गी.७।२३)
इति । अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन
भक्ष्यत्ववचनम् । अतस्तद्भाक्तम् । तेन तृप्तिरेव च देवानां
भक्षणमिति श्रूयते । न ह वै देवा अश्नन्ति न पिबन्त्येतदेवा-
15 मृतं दृष्ट्वा तृप्यन्ति ( छा. ३।६।१ ) इति । तस्माद्भूतसूक्ष्मैः
संपरिष्वक्तो जीवो रंहतीति सिद्धम् ॥ ७ ॥ तदन्तरप्रतिपत्त्यधिकरणं
समाप्तम् । (१)

**कृतात्ययेनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च॥८॥**

केवलेष्टापूर्तदत्तकारिणां धूमादिना पितृयाणेन पथा गमनं
20 कर्मफलावसाने पुनरावर्तनं चाम्नातम् । यावत्संपातमुषित्वाथैत-
मेवाध्वानं पुनर्निवर्तन्ते ( छा. ५।१०।५ ) इति । तत्र प्रत्यव-

---

1. B. om. त्व after भक्ष्यमाण.

5. C. om. इह before इष्टादिना; E. reads इष्टापूर्तादिना for इष्टा-दिना.

7. A. reads एव for एवम् after पशुः.

19. C. reads पितृयानेन for पितृयाणेन.

रोहञ्जीवः किमनुशयवान्प्रत्यवरोहत्युत नेति संशय्यते । किं युक्तम् । कर्मणः कृत्स्नस्योपभुक्तत्वान्नानुशयवानिति प्राप्तम् । अनुशयो ह्युपभुक्तशिष्टं कर्म । तच्च कृत्स्नफलोपभोगे सति नावशिष्यते । यावत्संपातमुषित्वा ( छा. ५।१०।५ ) इति वचनात्कृत्स्नोपभोगश्च ज्ञायते । संपतन्त्यनेन स्वर्गं लोकमिति संपातः   5
कर्मोच्यते । श्रुत्यन्तरं च

प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥ ( बृ. ४।४।६ )

इति । एवं प्राप्तेभिधीयते ।

अनुशयवान्प्रत्यवरोहतीति । कुतः । दृष्टस्मृतिभ्याम् । श्रुति-   10
स्मृतिभ्यामित्यर्थः । श्रुतिस्तावत्तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्छ्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा ( छा. ५।१०।७ ) इति प्रत्यवरूढान्प्रति श्रूयते । अमुष्मा-   15
ल्लोकात्प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते कपूयचरणाः कुत्सितकर्माणः कुत्सितां श्वशूकरचाण्डालादियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मभोगं दर्शयति । स्मृतिरपि वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्म-
फलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्त-   20
सुखमेधसो जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता नश्यन्ति

3. E. om. उप before भोगे.
5. C. reads वि before ज्ञायते; E. reads स्वर्ग for स्वर्गम्.
8. C. reads एत्य for एति.
18. A. B. E. read योगम् for भोगम् after कर्म.
20. C. reads तत् for ततः.
21. E. reads हि before जन्म.

(गौत. स्मृ. २।११।१२-१३) इति। तथा ततः परिवृत्तौ कर्मफल-
शेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति
प्रतिपद्यन्ते। तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तन्ते (आ. ध. सू.
२।१।२।३) इति। यावत्संपातम् (छा. ५।१०।५) इति फल-
5 दानप्रवृत्तकर्मविशेषविषयम्। यत्किंचेह करोत्ययम् (बृ. ४।४।६)
इतीदमपि तद्विषयमेव। अभुक्तफलानामकृतप्रायश्चित्तानां च
कर्मणां कर्मान्तरफलानुभवान्नाशोप्यनुपपन्नः। अतोमुं लोकं गताः
सानुशया एव यथेतमनेवं च पुनर्निवर्तन्ते। आरोहणप्रकारेण
प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः। आरोहणं च धूमरात्र्य-
10 परपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण। अवरो-
हणं तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण। तत्रा-
काशावरोहणाद्यथेतं वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम्॥८॥

**चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः॥९॥**

रमणीयचरणाः कपूयचरणा इति न चरणशब्देन पुण्यपा-
15 परूपं कर्माभिधीयते। चरणशब्दस्य लोकवेदयोराचारे प्र-
सिद्धेः। लौकिकाः खलु चरणमाचारः शीलं वृत्तमिति पर्या-
यानभिमन्यन्ते। वेदे च यान्यनवद्यानि कर्माणि। तानि सेवित-
व्यानि। नो इतराणि। यान्यस्माकं सुचरितानि। तानि त्वयोपा-
स्यानि (तै. १।११।२) इति चरणकर्मणी भेदेन व्यपदि-
20 श्येते। अतश्चरणाच्छीलाद्योनिविशेषप्राप्तिर्नानुशयादिति चेन
तन्न। चरणश्रुतिः कर्मोपलक्षणार्थेति हि कार्ष्णाजिनिराचार्य

1. C. om. इति.
3. B. reads वर्तेते for वर्तन्ते.
9. E. reads हि for च after आरोहणम्.
11 B. om. मेघ.
12. A. B. read आ for अव before रोहणात्; C. reads वाय्वादिप्राप्तिः पितृलोकाप्राप्तिः for वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेः.
17. C. reads अभिधीयन्ते for अभिमन्यन्ते.

मन्यते केवलाचारात्सुखदुःखप्राप्त्यसंभवात् सुखदुःखे हि पुण्यपापरूपकर्मफले ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

एवं तर्ह्यफलत्वादाचारस्य स्मृतिविहितस्यानर्थक्यमेवेति चेत्तन्न । तदपेक्षत्वात्पुण्यस्य कर्मणः । आचारवत एव पुण्यकर्मस्वधिकारः । 5

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मणि । ( दक्षस्मृ. २।२७ ) आचारहीनं न पुनन्ति वेदाः ( वसिष्ठस्मृ. ६।३ ) इत्यादिवचनेभ्यः । अतश्चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः ॥ १० ॥ 10

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

पुण्यं कर्माचरति पापं कर्माचरतीति कर्मणि चरतेः प्रयोगात्पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेर्मुख्ये संभवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते । अत्र बादरिमतमेव स्वमतम् । आचारानुमितश्रुतिविहितसंध्यावन्दनादेः कर्मान्तराधिकारापादनं फलमिति तु स्वीकृतम् । अतः सानुशय एव प्रत्यवरोहति ॥ ११ ॥ 15

कृतात्ययाधिकरणं समाप्तम् । ( २ )

1. C. reads केवलात् for केवल.
5. A. B. E. read आचरतः for आचारवतः.
7. C. reads कर्मसु for कर्मणि.
12. C. reads इति before पापम्.
16. C. reads अतः for अत्र; E. reads च after अत्र.
17. B. reads अपादानम्, E. संपादनम्, for आपादनम्.
18. C. om. तु after इति; E. reads सानुशया एव प्रत्यवरोहन्ति for सानुशय एव प्रत्यवरोहति.

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

केवलेष्टापूर्तदत्तकारिणश्चन्द्रमसं गत्वा सानुशया एव निवर्तन्त इत्युक्तम्। इदानीमनिष्टादिकारिणोपि चन्द्रमसं गच्छन्ति नेति चिन्त्यते। ये विहितं न कुर्वन्ति निषिद्धं च कुर्वन्ति त उभयेपि पापकर्माणोनिष्टादिकारिणः। किं युक्तम्। तेपि चन्द्रमसं गच्छन्तीति। कुतः। तेषामपि हि तद्गमनं श्रुतम्। ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ. १।२) इत्यविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥

एवं तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गतिः स्यात्। नेत्याह।

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः शङ्कां व्यावर्तयति। इतरेषामनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने यमशासने तत्प्रयुक्तयातना अनुभूयैव नान्यथा। कुतः। तद्गतिदर्शनात्। दृश्यते हि पापकर्मणां यमवश्यतया तद्गमनम्।

अयं लोको नास्ति न पर इति मानी पुनःपुनर्वशमापद्यते मे। (का. २।६)

वैवस्वतं संयमनं जनानां यमं राजानम् (ऋ. सं. १०।१४।१, तै. आ. ६।१) इत्यादिषु ॥ १३ ॥

4. C. reads अविहितम् before निषिद्धम्; E. reads ये च निषिद्धम् for निषिद्धं च.

5. C. reads कर्मकारिणः for कर्माणः.

9. C. om. तर्हि.

17. A. reads इमानि for इति मानी.

## स्मरन्ति च ॥ १४ ॥

स्मरन्ति च सर्वेषां यमवश्यतां पराशरादयः ।

सर्वे चैते वशं यान्ति यमस्य भगवन्किल । (वि.पु.३।७।५)
इत्यादिषु ॥ १४ ॥

## अपि सप्त ॥ १५ ॥ 5

पापकर्मणां गन्तव्यत्वेन रौरवादीन्सप्त नरकानपि स्मरन्ति ॥ १५ ॥

ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिरत आह ।

## तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु यमाज्ञयैव गमनादविरोधः । अतोनिष्टादि- 10
कारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चाच्चन्द्रारोहावरोहौ स्तः ॥ १६ ॥

इति प्राप्त उच्यते ।

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । अनिष्टादिकारिणामपि चन्द्रप्रा- 15
प्तिरस्तीत्येतन्नोपपद्यते । कुतः । विद्याकर्मणोरिति । विद्याकर्मणोः फलभोगार्थत्वाद्देवयानपितृयाणयोः । एतदुक्तं भवति । अनिष्टादिकारिणां यथा विद्याविधुरत्वाद्देवयानेन पथा गमनं न संभवति तद्वदेवेष्टापूर्तदत्तविधुरत्वात्पितृयाणेन चन्द्रगमनमपि न संभवतीति । देवयानपितृयाणयोर्विद्याविषयत्वं पुण्य- 20
कर्मविषयत्वं च कथमवगम्यत इति चेत् । प्रकृतत्वात्तयोः ।

---

3. A. om. किल.

20. C. om. अपि.

प्रकृता हि देवयाने विद्या पितृयाणे च कर्म । तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धां तप इत्युपासते ( छा. ५।१०।१ ) इत्युक्त्वा तेर्चिषमभिसंभवन्त्यर्चिषोहः ( छा. ५।१०।१ ) इत्यादिना देवयानवचनात् । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते
5 ( छा. ५।१०।३ ) इत्युक्त्वा ते धूममभिसंभवन्ति ( छा. ५।१०।३ ) इत्यादिना पितृयाणवचनाच्च । ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ( कौ. १।२ ) इत्यपि वचनं य इष्टादिकारिणस्ते सर्वे इति परिणेयम् ॥१७॥

ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसंभवाच्छरी-
10 रारम्भ एव नोपपद्यते । पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ( छा. ५।९।१ ) इति हि शरीरारम्भः श्रूयते । सा चाहुतिश्चन्द्रप्राप्तिपूर्विकेति दर्शितम् । अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहाववश्याभ्युपेत्यावित्यत आह ।

## न तृतीये तथोपलब्धेः ॥ १८ ॥

15 तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा । कुतः । तथोपलब्धेः । तृतीयस्थानशब्देन केवलपापकर्माण उच्यन्ते । तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते । वेत्थ यथा केनासौ लोको न संपूर्यते ( छा. ५।३।३ ) इत्यस्य प्रश्नस्य प्रति-

---

1. A. reads पितृयाने for पितृयाणे.
3. C. reads संविशन्तीति for संभवन्ति.
4. E. om. इत्युपासते.
5. C. reads संविशन्ति for संभवन्ति.
6. A. reads पितृयान for पितृयाण.
8. C. reads एतत् before अपि.
11. B. E. om. हि after इति.
15. E. reads *न तृतीयस्य स्थानस्य शरीरारम्भाय* for *तृतीयस्थानस्य शरीरारम्भाय न*.

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

इष्टादिकारिणो भूतसूक्ष्मसंपरिष्वक्ताः सानुशयाश्चन्द्रमसमव-
रोहन्तीत्युक्तम् । अवरोहप्रकारश्चाथैतमेवाध्वानं पुनर्निवर्तन्ते ।
यथेतमाकाशम् । आकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति । धूमो
5 भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति
( छा. ५।१०।५-६ ) इति वचनाद्यथेतमनेवं चेत्युक्तम् । तत्रा-
स्याकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभाव उत
तत्सादृश्यापत्तिमात्रमिति विशये श्रद्धावस्थस्य सोमभाववदवि-
शेषादाकाशादिभाव इति प्राप्ते तत्स्वाभाव्यापत्तिरेवेत्युच्यते ।
10 तत्स्वाभाव्यापत्तिस्तत्सादृश्यापत्तिरित्यर्थः । कुत एतत् । उपपत्तेः ।
सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः । अत्र
त्वाकाशादौ सुखदुःखोपभोगाभावात्तद्भावानुपपत्तेस्तदापत्ति-
वचनं तत्संसर्गकृतं तत्सादृश्यापत्त्यभिप्रायम् ॥ २२ ॥
तत्स्वाभाव्यापत्त्यधिकरणं समाप्तम् । ( ४ )

## 15 नातिचिरेण विशेषात् ॥ २३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्र तत्र नाति-
चिरं तिष्ठत्युतानियम इति विशये नियमहेत्वभावादनियम
इति प्राप्त उच्यते नातिचिरेणेति । कुतः । विशेषात् । उत्त-
रत्र व्रीह्यादिप्राप्तावतो वै खलु दुर्निष्प्रपतरम् ( छा. ५।१०।६ )
20 इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात्पूर्वत्र ह्याकाशादिप्रा-

---

2. C. E. om. सम् before परिष्वक्ताः; A. B. read चन्द्रमस' for चन्द्रमसम्.

6. B. reads यथैतम् for यथेतम्.

9. B. reads इव for एव before इति.

11. E. om. उप before भोगाय.

13. A. B. read कृत for कृतम्; C. om. ऽ।पत्ति.

प्राक्चिरं निष्क्रमणं गम्यते। दुर्निष्प्रपतरमिति छान्दसस्तश-
ब्दलोपः। दुर्निष्प्रपततरं दुःखनिष्क्रमणमित्यर्थः॥ २३॥

नातिचिराधिकरणं समाप्तम्। (५)

## अन्याधिष्ठिते पूर्ववदभिलापात्॥ २४॥

अवरोहन्तो जीवा व्रीह्यादिभावेन जायन्त इति श्रूयते। 5
मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिल-
माषा जायन्ते (छा. ५।१०।६) इति। ते किमन्यैर्भोक्तृ-
भिर्व्रीह्यादिशरीरैरधिष्ठितान्व्रीह्यादीनाश्लिष्यन्त्युत ते भोक्तारो
व्रीह्यादिशरीरा जायन्त इति विशये जायन्त इति वचना-
द्देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एवेति 10
प्राप्त उच्यतेन्याधिष्ठित इति। जीवान्तरेणाधिष्ठिते व्रीह्या-
दिशरीरे तेषां संश्लेषमात्रमेव। कुतः। पूर्ववदभिलापात्।
आकाशादिमेघपर्यन्तवत्केवलतत्तद्भावाभिलापात्। यत्र हि भो-
क्तृत्वमभिप्रेतं तत्र तत्साधनभूतं कर्माभिलप्यते। रमणीयच-
रणाः कपूयचरणाः (छा. ५।१०।७) इति। इह चाकाशा- 15
दिवन्नाभिलप्यते कर्म। फलदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्ये-
ष्टादेः कर्मणः स्वर्गभोगादेव समाप्तत्वात्। अनारब्धस्य च रम-
णीयचरणाः कपूयचरणा इति वक्ष्यमाणत्वात्। मध्ये कर्मा-
न्तराभावाच्च। अत आकाशादिभाववचनवद्व्रीह्यादिभावेन
जन्मवचनमौपचारिकम्॥ २४॥ 20

1. E. reads छान्दसत्वात् for छान्दसः.
2. C. reads दुर्निष्क्रमतरम् for दुर्निष्प्रपततरम्; E. reads निष्क्रमण-
तरम् for निष्क्रमणम्.
13. A. E. om. तत् before तद्भाव.
16. E. reads प्र before दाने; A. B. read दानप्रवृत्त for दाने
प्रवृत्तस्य.
17. A. B. om. च after अनारब्धस्य.

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

नैतदस्ति यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रं भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्मेति । भोक्तृत्वहेतुसद्भावात् । स्वर्गोपभोग्यफलमिष्टादिकर्मैवाशुद्धं पापमिश्रम् । अग्नीषोमीयादि-
5 हिंसायुक्तत्वात् । हिंसा च न हिंस्यात्सर्वभूतानि (भा.शा.२७८।५) इति निषिद्धत्वात्पापमेव । न चात्र पदाहवनीयादिवदुत्सर्गापवादः संभवति । भिन्नविषयत्वात् । अग्नीषोमीयादिहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति । न हिंस्यादिति तु हिंसायाः प्रत्यवायफलत्वम् । अथोच्येताग्नीषोमीयादिषु विधितः प्रवृत्तेर्न
10 तद्विषयं निषेधविधिरास्कन्दति । रागप्राप्तविषयत्वात्तस्येति । नैवम् । इहापि रागप्राप्तेरविशिष्टत्वात् । स्वर्गकामो यजेत ( तै. सं. २।५।५ ) इत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशाद्यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्तते । अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य
15 यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते । लौकिक्यामपि हिंसायां केनचित्प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात्प्रवर्तत इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् ( आ. ध. सू. २।१।२।२ ) इत्यादिवचनात्फलसाधनत्वमव-
20 गम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम् । अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेनुभाव्यं फलं स्वर्ग-

4. C. reads इष्टादिकम् for इष्टादिकर्म; A. B. E. om. आदि after अग्नीषोमीय.
7. A. B. read आदि after हिंसा.
16. C. om. स्व before समीहित.
21. B. reads इष्टानाम् for इष्टादीनाम्.

नुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते । स्थाव-
रभावं च पापफलं स्मरन्ति ।

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । ( मनुः १२।९ )
इति । अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्त इति
चेत्तत्र । कुतः । शब्दात् । अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलो- 5
कप्राप्तिहेतुतया हिंसात्वाभावशब्दात् । पशोर्हि संज्ञपननि-
मित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति हिरण्यशरीर
ऊर्ध्वस्वर्गं लोकमेतीत्यादिकम् । अतिशयिताभ्युदयसाधनभूतो
व्यापारोल्पदुःखोपि न हिंसा । प्रत्युत रक्षणमेव । तथा च
मन्त्रवर्णः 10

न वा उ वैतन्म्रियसे न रिष्यसि देवानिदेषि पथिभिः
सुगेभिः ।
यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता
दधातु ॥ ( तै. ब्रा. ३।७।७।१४ )

इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षक- 15
मेव वदन्ति पूजयन्ति च तज्ज्ञाः ॥ २५ ॥

## रेतःसिग्योगोथ ॥ २६ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम् । व्रीह्यादिभाववचनान-
न्तरं यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भ-

4. B. reads अनुशायिनः for अनुशयिनः.

7. E. reads यज्ञे हिंसितः पशुर्दिव्यदेहो भूत्वा स्वर्गं लोकं यातीति शब्दार्थं कुर्वन्ति after आमनन्ति.

8. C. reads और्ध्वम् for उर्ध्वं.

11. A. reads उदेषि for इदेषि.

16. B. reads अपि for एव.

19. A. reads यो योनौ for यो यः.

वति ( छा. ५।१०।६ ) इति रेतःसिग्योगोनुशयिनां श्रूयमाणो यथा तद्भावमात्रं प्रतिपादयति तद्वद्व्रीह्यादिभावोपीत्यर्थः॥२६॥

## योनेः शरीरम् ॥ २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः । तत्रैव सुखदुःखोपभोगसद्भावात् । ततः प्रागाकाशादिप्राप्तिप्रभृति तत्तद्योगमात्रमेवेत्यर्थः ॥ २७ ॥ अन्याधिष्ठिताधिकरणं समाप्तम् । ( ६ )

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥



1. E. reads भावः for योगः after रेतःसिक्; B. reads अनुशायिनाम् for अनुशयिनाम्.
2. C. reads तद्योग for तद्भाव.
4. B. reads अनुशायिनाम् for अनुशयिनाम्.
5. E. om. तत् before तद्योग.

# अथ श्रीभाष्ये

## *तृतीयाध्यायस्य द्वितीयः पाद आरभ्यते ।*

## संध्ये सृष्टिराह हि ॥ १ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं स्थापितम् । इदानीमस्य स्वप्नावस्था परीक्ष्यते । स्वप्न- 5
मधिकृत्य श्रूयते न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते । न तत्रानन्दा मुदः प्रमुदो भव- न्त्यथानन्दान्मुदः प्रमुदः सृजते । न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता ( बृ. ४।३।१० ) इति । तत्र संशयः किमियं रथादि- 10
सृष्टिर्जीवेनैव क्रियत आहोस्विदीश्वरेणेति । किं युक्तम् । संध्ये सृष्टिर्जीवेनेति । कुतः । संध्यं स्वप्नस्थानमुच्यते । संध्यं तृतीयं स्वप्नस्थानमिति वचनात् । सा तु जीवेनैव क्रियते । सृजते स हि कर्ता ( बृ. ४।३।१० ) इत्याह हि । स्वप्नदृग्जीव एव तत्र प्रतीयते ॥ १ ॥ 15

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

किं चैनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधी- यते य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ( का. ५।८ ) इति । पुत्रादयश्च तत्र काम्यमानतया कामश- ब्देन निर्दिश्यन्ते नेच्छामात्रम् । पूर्वत्र हि सर्वान्कामां- 20

13. C. om. एव after जीवेन.

20. C. om. पूर्वत्र हि.

श्छन्दतः प्रार्थयस्व (का. १।२५)। शतायुषः पुत्रपौत्रान्वृणीष्व (का. १।२३) इति पुत्रादय एव कामाः प्रकृताः। अतो रथादींजीवः स्वप्ने सृजति। जीवस्य च सत्यसंकल्पत्वं प्रजापतिवाक्ये श्रुतम्। अत उपकरणाद्यभावेपि सृष्टिरुपपद्यते॥२॥

5 इति प्राप्तेभिधीयते।

**मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात्॥३॥**

तुशब्दः पक्षं व्यावर्तयति। स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषसृष्टमित्यर्थः। मायाशब्दो ह्याश्चर्यवाची।

जनकस्य कुले जाता देवमायेव निर्मिता। (रा. बा. १।२७)

10 इत्यादिषु तथा दर्शनात्। अत्रापि न तत्र रथा न रथयोगा न पन्थानः सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः। अथ रथान्रथयोगान्पथः सृजते स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान्सृजत इत्याश्चर्यरूपत्वमेवाह। एवंविधाश्चर्यरूपा सृष्टिः सत्यसंकल्पस्य परमपुरुषस्यैवोपपद्यते न जीवस्य।

15 तस्य सत्यसंकल्पत्वादियुक्तस्यापि संसारदशायां कात्स्न्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते। कामं कामं पुरुषो निर्मिमाणः (का. ५।८) इति च परमपुरुषमेव निर्मातारमाह। य एषु सुप्तेषु जागर्ति (का. ५।८)।

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।

20 तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन॥ (का. ५।८)

इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः।

3. A. B. read इति after सृजति.

14. C. reads भूता for रूपा.

15. C. om. तस्य before सत्यसंकल्पत्वादि.

16. B. om. आश्चर्य.

अथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्ता ( बृ. ४।३।१० ) इति च तया श्रुत्यैकार्थ्यात्परमपुरुषमेव कर्तारमाह ॥ ३ ॥

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकं कुतस्तन्नाभिव्यज्यत इत्यत आह । 5

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥

तुशब्दः शङ्काव्यावृत्त्यर्थः । पराभिध्यानात्परमपुरुषसंकल्पादस्य जीवस्य स्वाभाविकं रूपं तिरोहितम् । अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति । ततस्तत्संकल्पादेव ह्यस्य जीवस्य बन्धमोक्षौ 10 श्रुतौ यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयं प्रतिष्ठां विन्दते । अथ सोभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति (तै. २।७।१) । एष ह्येवानन्दयाति ( तै. २।७।१ ) । भीषास्माद्वातः पवते 15 (तै. २।८।१ ) इत्यादिषु ॥ ४ ॥

## देहयोगाद्वा सोपि ॥ ५ ॥

सोपि तिरोभावोपि देहयोगद्वारेण वा भवति सूक्ष्माचिच्छक्तियोगद्वारेण वा । सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति । प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयो- 20 गात् । अतोनभिव्यक्तस्वरूपत्वात्स्वप्ने जीवो न रथादीन्संकल्पमात्रेण स्रष्टुं शक्नोति ।

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । (का.५।८) इति सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो

18. C. om. अपि after तिरोभावः.

हि परमपुरुषस्यैव संभवन्ति। अतो जीवानामल्पाल्पकर्मानुगुण-
फलानुभवार्थं तावन्मात्रकालावसानांस्तदेकानुभाव्यानर्थानुत्पा-
दयति ॥ ५ ॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥**

5 इतश्च स्वाप्ना अर्था न जीवसंकल्पपूर्वकाः। यतः स्वप्नोऽभ्युद-
यानभ्युदययोः सूचकश्च श्रुतेरवगम्यते।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।

समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥ (छा. ५।२।९)

इति। अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं
10 हन्ति (ऐ. श्रु.) इत्यादेश्च। स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः
सूचकमाचक्षते। सूचकत्वं च स्वसंकल्पायत्तस्य नोपपद्यते।
तथा चाशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव सृष्ट्वा पश्येत्। अतः
स्वप्ने सृष्टिरीश्वरेणैव कृता ॥ ६ ॥ संध्याधिकरणं समाप्तम्। (१)

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

15 इदानीं सुषुप्तिस्थानं परीक्ष्यते। इदमाम्नायतेऽथ यत्रैत-
त्सुप्तः समस्तः संप्रसन्नः स्वप्नं न कंचन विजानात्यासु तदा
नाडीषु सुप्तो भवति (छा. ८।६।३) इति। तथाथ यदा
सुषुप्तो भवति यदा न कश्चन वेद हिता नाम नाड्यो द्वासप्तति-
सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते। ताभिः प्रत्यवसृप्य

1. E. reads हि after एव.
5. E. reads स्वाप्न for स्वाप्नाः.
6. A. B. read अनभ्युदय for अनभ्युदययोः; C. E. om. च after सूचकः.
10. C. reads इत्यादयः for इत्यादेः.
13. A. B. read स्वप्न for स्वप्ने.
16. E. reads संपन्नः for संप्रसन्नः; C. om. कंचन.
18. A. reads सुप्तः for सुषुप्तः; A. B. E. read द्विसप्तति for द्वासप्तति

पुरीतति शेते ( बृ. २।१।१९ ) इति । तथा यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति ( छा. ६।८।१ ) इति । एवं नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते । किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेर्युगपदनेकस्थानवृत्त्यसंभवाच्च विकल्प इति प्राप्त उच्यते तदभाव 5 इति । तदभावः स्वप्नाभावः सुषुप्तिर्नाडीषु पुरीतत्यात्मनि च भवति । एषां स्थानानां समुच्चय इत्यर्थः । कुतः । तच्छ्रुतेः । त्रयाणां स्थानत्वश्रुतेः । न च कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पो न्याय्यः । संभवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः । तत्र नाडीपुरीततौ प्रासाद- 10 खट्वास्थानीयौ । ब्रह्म तु पर्यङ्कस्थानीयम् । अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥ ७ ॥

## अतः प्रबोधोस्मात् ॥ ८ ॥

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानमतोस्माद्ब्रह्मण एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते । सत आगम्य न विदुः सत आग- 15 च्छामहे ( छा. ६।१०।२ ) इत्यादिषु ॥ ८ ॥ तदभावाधिकरणं समाप्तम् । ( २ )

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

किं सुषुप्त एव प्रबोधसमय उत्तिष्ठत्युतान्य इति संशये-

5. A. B. read प्र before वृत्त्यसंभवात्.
7. E. reads तेषाम् for एषाम्.
8. C. reads स्थानानाम् for स्थानत्व.
9. E. om. च.
11. A. B. read च for तु after ब्रह्म.
15. E. reads आगत्य for आगम्य.
19. A. B. read अपि after प्रबोधसमये.

स्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि संपन्नस्य मुक्तादविलक्ष-
णत्वेन प्राचीनशरीरेन्द्रियादिसंबन्धाभावादन्य इति प्राप्त उ-
च्यते स एव त्विति । तुशब्दः पक्षं व्यावर्तयति । स एवो-
त्तिष्ठति । कुतः । कर्मानुस्मृतिशब्दविधिभ्यः । कर्म तावत्सुपु-
5 प्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक्तेनैव भोक्तव्यम् ।
अनुस्मृतिरपि य एवाहं सुप्तः स एव प्रबुद्धोस्मीति । शब्दोपि
सुषुप्तप्रबुद्धः स एवेति दर्शयति । त इह व्याघ्रो वा सिंहो वा
वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा
यद्यद्भवन्ति तथा भवन्ति ( छा. ६।१०।२ ) इति । विधयश्च
10 मोक्षार्थाः सुषुप्तस्य मुक्तत्वेनर्थकाः स्युः । न चासौ सर्वोपाधिवि-
निर्मुक्त आविर्भूतस्वरूपः । तद्यत्रैतत्सुषुप्त इति सुप्तं प्रकृत्य नाहं
खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि
भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि
( छा. ८।११।१ ) इति वचनात्। मुक्तस्य च परं ज्योतिरुपसं-
15 पद्य स्वेन रूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन्क्रीडन्रम-
माणः ( छा. ८।१२।३ ) । स स्वराड्भवति । तस्य सर्वेषु लो-
केषु कामचारो भवति ( छा. ७।२५।२ ) ।

सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः। (छा.७।२६।२)
इति सर्वज्ञत्वादि श्रूयते। अतः सुषुप्तः संसरन्नेवापास्तसर्वकरणो

1. B. reads अविलक्षणत्वे for अविलक्षणत्वेन.

7. E. reads प्रतिबुद्धः for प्रबुद्धः.

8. A. B. om. कीटो वा पतङ्गो वा.

9. A. B. read तत् before तथा.

11. E. reads सुषुप्तम् for सुप्तम्; C. reads नाह for नाहम्.

14. A. E. om. च after मुक्तस्य.

19. A. B. read आयस्त for अपास्त.

ज्ञानभोगाद्यशक्तो विश्रमस्थानं परमात्मानमुपसंपद्याश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ९ ॥ कर्मानुस्मृतिशब्दविध्यधिकरणं समाप्तम्। (३)

## मुग्धेर्धसंपत्तिः परिशेषात् ॥ १० ॥

मुग्धमधिकृत्य चिन्त्यते। किमियं मूर्छा सुषुप्त्यादिष्वन्यतमावस्थोतावस्थान्तरमिति विशये सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्छाप्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्थेति प्राप्त उच्यते मुग्धेर्धसंपत्तिरिति। मुग्धे पुरुषे या तस्यावस्था सा मरणायार्धसंपत्तिः। कुतः। परिशेषात्। न तावत्स्वप्नजागरौ। ज्ञानाभावात्। निमित्तवैरूप्यादाकारवैरूप्याच्च न सुप्तिमरणे। निमित्तं हि मूर्छाया अभिघातादिः। परिशेषान्मरणायार्धसंपत्तिर्मूर्छा। मरणं हि सर्वप्राणदेहसंबन्धोपरतिः। सूक्ष्मप्राणदेहसंबन्धावस्थितिर्मूर्छा ॥ १० ॥ मुग्धाधिकरणं समाप्तम्। (४)

## न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः। इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते। तत्र जागरस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषास्ते तदन्तर्यामिणः परस्य ब्रह्मणोपि तत्र तत्रावस्थितस्य सन्ति नेति विचार्यते। किं युक्तम्। सन्तीति। कुतः। तत्तदवस्थशरीरेवस्थानात्। ननु संभोगप्राप्तिरिति चेन्न वैशेष्यात् (ब्र. सू. १।२।८)। स्थित्यदनाभ्यां च (ब्र. सू. १।३।६) इत्यादिषु

1. A. B. E. read विश्राम for विश्रम.
10. E. reads पारिशेष्येण for परिशेषात्.
16. A. B. read प्राप्य for प्राप्यस्य.
17. C. reads जागरण for जागर.

परस्याकर्मवश्यत्वेन दोषाभाव उक्तः । तत्कथमकर्मवश्यस्य परस्य ब्रह्मणस्तत्तत्स्थानसंबन्धाद्दोष उच्यते । इत्थमुच्यते । कर्माण्यपि देहसंबन्धमापादयन्त्यपुरुषार्थजननानि भवन्तीति देहयोगाद्वा (ब्र. सू. ३।२।५) इत्यत्रोक्तम् । तच्च देहसंबन्धस्यापुरुषार्थत्वेन भवति । इतरथा कर्माण्येव दुःखं जनयिष्यन्ति किं देहसंबन्धेन । अतोकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसंबन्धोपुरुषार्थ एव । अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशेप्यपुरुषार्थसंबन्धोवर्जनीयः । पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव । यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म तथापि यः पृथिव्यां तिष्ठन् (बृ. ३।७।३) । य आत्मनि तिष्ठन् (बृ. ३।७।२२) । यश्चक्षुषि तिष्ठन् (बृ. ३।७।१८) । यो रेतसि तिष्ठन् (बृ. ३।७।२३) इत्यादिवचनात्तत्र तत्रावस्थितस्य तत्तत्संबन्धरूपापुरुषार्थाः सन्तीत्येवं प्राप्ते प्रचक्ष्महे ।

न स्थानतोपि परस्येति । न पृथिव्यात्मादिस्थानतोपि परस्य ब्रह्मणोपुरुषार्थगन्धः संभवति । कुतः । उभयलिङ्गं सर्वत्र हि । यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्मोभयलिङ्गमुभयलक्षणमभिधीयते । निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः । अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः (छा. ८।१।५) ।

समस्तकल्याणगुणात्मकोसौ स्वशक्तिलेशोद्धृतभूतसर्गः ।
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥
(वि. पु. ६।५।८४-८५)

---

7. A. reads तत् before तन्नियमनार्थम् and before तत्प्रवेशे. A. B. om. अपि after प्रवेशे.

9. A. B. read सर्वज्ञता for सर्वज्ञत्व.

21. E. reads भूतवर्गः for भूतसर्गः.

समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् । (वि.पु. १।२२।५१)
इत्यादिश्रुतिस्मृतिभ्य उभयलक्षणं हि ब्रह्मावगतम् ॥ ११ ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगस्तथान्तर्यामिणः परस्यापि स्वतोपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगोवर्जनीय इति चेत्तन्न । प्रत्येकमतद्वचनात् । यः पृथिव्यां तिष्ठन् (बृ. ३।७।३) । य आत्मनि तिष्ठन् (३।७।२२) इत्यादिषु प्रतिपर्यायं स त आत्मान्तर्याम्यमृत इत्यन्तर्यामिणोमृतत्ववचनेन तत्र तत्र स्वेच्छया नियमनं कुर्वतस्तत्तत्संबन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत्स्वरूपं तिरोहितमिति पराभिध्यानात्तु तिरोहितम् (ब्र. सू. ३।२।४) इत्यत्रोक्तम् ।

ननु स्वेच्छया कुर्वतोपि तत्तद्वस्तुस्वभावायत्तापुरुषार्थसंबन्धोवर्जनीय इत्युक्तम् । नैतद्युक्तम् । न ह्यचिद्वस्त्वपि स्वभावतोपुरुषार्थरूपम् । कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वा स्यात् । न चैवं दृश्यते । तथा चोक्तम् ।

---

10. E. reads वचनात् for वचनेन.
14. C. reads आयत्तः for आयत्त.
16. E. reads स्व before रूपम्.
17. A. B. om. च after पुरुषभेदेन.
18. C. reads प्रयुक्तत्वे for प्रयुक्ते; B. om. तु.

नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ।
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
5 तदेव कोपाय यतः प्रसादाय च जायते ॥
तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम् ।

(वि. पु. २।६।४४-४७)

इति । अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसंबन्ध एवापुरुषार्थः स्यात् । परस्य तु ब्रह्मणः स्वाधीनस्य
10 स एव संबन्धस्तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात्॥१२॥

### अपि चैवमेके ॥ १३ ॥

अपि चैके शाखिन एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्यायत्तं दीप्तियोगं च स्वशब्देनाधीयते ।

15 द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योभिचाकशीति ॥

(मु. ३।१।१)

इति ॥ १३ ॥

अथ स्यादनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकर-
20 वाणि (छा. ६।३।२) इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तत्तन्नामभाक्त्वं चास्ति । ततश्च ब्राह्मणो यजेतेत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति । तत्राह ।

3. C. reads अवस्त्वात्मकम् for वस्त्वात्मकम्.
8. C. om. तत्तत् before कर्म.
13. C. reads तदभाव for तदभावम्; E. reads आयत्त for आयत्तम्.
22. A. B. E. om. तत् after तत्.

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

देवादिशरीरानुप्रवेशे तेन तेन रूपेण युक्तमप्यरूपवदेव तद्ब्रह्म रूपरहिततुल्यमेव । जीववच्छरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इत्यर्थः । कुतः । तन्निर्वाहकत्वेन प्रधानत्वात् । आकाशो ह वै नामरूपयोर्निर्वहिता । ते यदन्तरा तद्ब्रह्म ( छा. ८।१४।१ ) इति सर्वानुप्रवेशेपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति । ननु तच्छरीरत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसंबन्धरहिततुल्यत्वमुच्यते । इत्थम् । यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसंबन्धस्तथा तदभावात्परस्य ब्रह्मणोरूपवत्त्वम् । विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति । तस्मादरूपतुल्यमेव परं ब्रह्म । ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

ननु च सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते । अन्यत्तु सर्वज्ञत्वसत्यसंकल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं नेति नेति ( बृ. ४।२।४ ) इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम् । तत्कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इत्यत आह ।

4. A. B. E. om. तत् before निर्वाहकत्वेन.
6. C. reads अनुप्रवेशः for अनुप्रवेशे.
7. E. reads क after तच्छरीर.
9. A. reads भोक्तृत्वेन, B. उपभोक्तृत्वेन, for भाक्त्वेन.
10. C. reads अरूपत्वम् for ब्रह्मणोरूपवत्त्वम्.
11. E. reads कर्मवश्यान् for कर्मवश्यम्.
15. C. om. स्व before रूपम्.
16. A. reads एष आदेशः, B. स एष आदेशः, before नेति नेति.
19. E. reads तत्र for अतः.

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इत्यादिवाक्यावैयर्थ्यात्प्रकाशस्वरूपत्वं ब्रह्मणोभ्युपगम्यते तथा सत्यसंकल्पत्वसर्वज्ञत्वसर्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादि-
5 दोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥ १५ ॥

## आह च तन्मात्रम् ॥ १६ ॥

किं च सत्यं ज्ञानमनन्तम् ( तै. २।१ ) इत्यादि वाक्यं ब्रह्मण: प्रकाशस्वरूपतामात्रं प्रतिपादयति । नान्यत्सत्यसंकल्पत्वादिकं वाक्यान्तरावगतं निषेधति । नेति नेति ( बृ. ४।२।४ )
10 इति च निषेधस्य विषयोनन्तरमेव वक्ष्यते ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च वेदान्तवाक्यगण: कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च ।

तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ।
15 ( श्वे. ६।७ )

स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप: । ( श्वे. ६।९ )

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
20 ( श्वे. ६।८ )

2. E. reads च after यथा.

4. A. B. om. सर्वज्ञत्व; C. om. सर्व before जगत्कारणत्व; A. B. om. सर्वात्मकत्व.

5. E. reads अर्थ after वाक्य.

9. A. B. E. read निषेधयति for निषेधति.

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः (मु. १।१।९)। भीषास्माद्वातः पवते। भीषोदेति सूर्यः (तै. २।८।१)। स एको ब्रह्मण आनन्दः (तै. २।८)।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन॥ (तै. २।९)　　5
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। (श्वे. ६।१९)

इत्यादि। स्मर्येते च

यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। (गी. १०।३)
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्। (गी. १०।४२)
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।　　10
हेतुनानेन कौन्तेय जगद्विपरिवर्तते॥ (गी. ९।१०)
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ (गी. १५।१७)
सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञानबलर्द्धिमान्।
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोनादिमान्वशी॥　　15
क्लमतन्द्राभयक्रोधकामादिभिरसंयुतः।
निरवद्यः परः प्राप्तेर्निरधिष्ठोक्षरक्रमः॥ (वि.पु.५।१।४६-४८)

इत्यादि। अतः सर्वावस्थावस्थितस्यापि ब्रह्मण उभयलिङ्गत्वान्न तत्तत्स्थानप्रयुक्ता दोषाः परं ब्रह्म स्पृशन्ति॥ १७॥

## अत एव चोपमा सूर्यकादिवत्॥ १८॥　　20

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वमत एव जलदर्पणादिप्रतिबिम्बितसूर्या-

---

17. A. reads परप्राप्तिः, C. परप्राप्तः, for परः प्राप्तेः.
21. C. reads अव before स्थितस्यापि; E. reads उभयलिङ्गत्वान्न तत्तत्स्थान for न तत्.

दिवत्परमात्मा तत्र तत्रावस्थितोपि निर्दोष इति शास्त्रेषूपमा क्रियते

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥
5 एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

( याज्ञ. स्मृ. ३।१४३-४ )

इत्यादिषु ॥ १८ ॥

अत्र चोदयति ।

10 **अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

तुशब्दश्चोद्यं द्योतयति । अम्बुवदिति सप्तम्यन्ताद्वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतस्तत्रस्थाः । इह तु यः पृ-
15 थिव्यां तिष्ठन् ( बृ. ३।७।३ ) । योप्सु तिष्ठन् (बृ. ३।७।४)। य आत्मनि तिष्ठन् ( बृ. ३।७।२२ ) इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अतः सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गस्तत्र तत्र स्थित्यभावादेव । अतो न तथात्वं दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥

12. C. reads तथा न for न तथा.
13. B. om. हि after अम्ब्वादिषु.
14. A. B. read इति for इव.
16. B. om. एवम् before आदिना.
18. A. B. om. तत्र after तत्र.
19. B. reads तु after न.

परिहरति ।

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥**

पृथिव्यादिस्थानान्तर्भावात्स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते । कथमिदमवगम्यते । उभयसामञ्जस्यादेवम् । उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते ।    5

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।

...जलाधारेष्विवांशुमान् ( याज्ञ. स्मृ. ३।१४३ ) इति दोषवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्याकाशस्य वस्तुतोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जसं भवति। घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक्पृथक्संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते यथा च जलाधारेषु विषमेषु दृश्यमानोंऽशुमांस्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते तथायं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽप्येक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव । एतदुक्तं भवति । यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावाज्जलादिदोषानभिष्वङ्गस्तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसंबन्ध इति ।    10 15 20

11. B. reads उभय for उभयस्य; A. reads आपादनम्, B. उपपादनम्, for उपादानम्.
14. E. reads सम् before स्पृश्यते.
15. C. reads अपि after दृश्यमानः.
16. C. reads नानाप्रकारेषु for नानाकारेषु; B. om. च after चेतनेषु.
18. A. B. read तदुक्तम् for एतदुक्तम्.

दर्शनाच्च । दृश्यते चैवं सर्वात्मना साधर्म्याभावेपि विवक्षितांशसाधर्म्याद्दृष्टान्तोपादानं सिंह इव माणवक इत्यादौ । अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोपि न दोषसंभवः ॥ २० ॥

5 अथ स्याद्द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च (बृ. २।३।१) इति प्रकृत्य समस्तस्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः (बृ. २।३।६) इत्यादिनाकारविशेषं चाभिधायाथात आदेशो नेति नेतीति न ह्येतस्मादिति नेत्यन्यत्परमस्ति (बृ. २।३।६) 10 इति सर्वं प्रकृतं ब्रह्मणः प्रकारमितिशब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म विशेषास्त्वेवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति । अतः कथमुभयलिङ्गत्वं ब्रह्मण इत्यत्राह ।

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति 15 च भूयः ॥ २१ ॥

नैतदुपपद्यते यद्ब्रह्मणः प्रकृतविशेषवत्त्वं नेति नेति ( बृ. २। ३।६ ) इति प्रतिषिध्यत इति । तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि 20 निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धास्तथापि

7. E. reads महारजनम् for माहारजनम्.
13. C. reads तत्र for अत्र.
17. B. E. read भ्रान्ति for भ्रान्त.
18. C. reads विशेषतया for विशेषणतया.
19. B. reads प्रतिषेधयति for प्रतिषेधति.
20. E. om. केचन.

तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव । इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाप्रज्ञातम् । अतस्तेषामनुवादासंभवादत्रैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेवं तस्मात्प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये ब्रह्मणो विशेषाः प्रकृतास्तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता नेति नेति ( बृ. २। ३।६ ) इति प्रतिषिध्यते । नेति नेति नैवं नैवम् । उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म । उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता सात्रेतिशब्देन परामृश्यत इत्यर्थः । यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति । अतश्च प्रकृतविशेषयोगित्वमात्रतां ब्रह्मणः प्रतिषेधति । ब्रवीति हि भूयो गुणजातं न ह्येतस्मादिति नेत्यन्यत्परमस्ति । अथ नामधेयं सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम् ( बृ. २।३।६ ) इति । अयमर्थः । इति नेति नेति यद्ब्रह्म प्रतिपादितं तस्मादेतस्मादन्यद्वस्तु परं न ह्यस्ति । ब्रह्मणोऽन्यत्स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम् । तस्य च निर्वचनं प्राणा वै सत्यं तेषामेष सत्यमिति । प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते । ते तावत्सत्यम् । वियदादिवत्स्व-

1. E. reads अप्रतिज्ञातम् for अप्रज्ञातम्.
2. C. E. read अज्ञातम् for अप्रज्ञातम्.
4. E. reads तु after ये.
5. C. om. ब्रह्मणः after विशिष्टतया.
7. B. reads मात्रम् for मात्र.
9. C. reads प्र before ब्रवीति; E. reads विशेषण for विशेष.
13. A. B. om. नेति after नेति.
16. A. B. read वाव for वै after प्राणाः; B. reads एव for एषः after तेषाम्.
17. A. B. read वाव for तावत्; C. reads सत्य for सत्यम्.

रूपान्यथाभावरूपपरिणामाभावात् । तेषामेष सत्यम् । तेभ्योप्येष परमपुरुषः सत्यम् । जीवानां कर्मानुगुण्येन ज्ञानसंकोचविकासौ विद्येते । परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते । अतस्तेभ्योप्येष सत्यम् । अतश्चैवं वाक्यशेषोदितगुणजातयोगान्नेति नेति ( बृ. २।३।६ ) इति ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते । अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्गमेव परं ब्रह्म ॥ २१ ॥

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्संबन्धितया मूर्तामूर्तादिरूपानुवादेन तन्निषेधासंभवात्प्रकृतेयत्ताप्रतिषेध उक्तः । तदेव प्रमाणान्तरागोचरत्वं द्रढयति ।

## तदव्यक्तमाह हि ॥ २२ ॥

तद्ब्रह्म प्रमाणान्तरेण न व्यज्यते । आह हि शास्त्रम्

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।

( का. ६।९ )

न चक्षुषा गृह्यते नापि वाचा ( मु. ३।२।८ ) इत्यादि ॥ २२ ॥

हेत्वन्तरं चाह ।

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपि च संराधने सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्या-

1. B. reads एव for एषः after तेषाम्; A. reads तेभ्योप्येष सत्यम् before तेभ्योपि.
3. B. reads विकाशो for विकासौ.
4. E. reads ततश्च for अतश्च; C. reads वि before शेषोदित; E. reads व्रात for जात.
5. C. om. नेति after नेति.
8. E. reads तथा च before ब्रह्मणः; C. om. अमूर्त.
12. C. om. न before व्यज्यते; E. reads एव after न.
18. A. B. read आपन्न for आपन्ने.

सन एवास्य साक्षात्कारो नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते ।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ( मु. ३।२।३ )
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । ( मु. ३।१।८ )　　5

इति श्रुतिः । स्मृतिरपि

नाहं वेदैर्न तपसा न दानेन न चेज्यया । ( गी. ११।५३ )
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ( गी. ११।५४ )　　10

इति । भक्तिरूपापन्नमेवोपासनं संराधनं तस्य प्रीणनमिति पूर्वमेवोक्तम् । अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशद्वे वाव ब्रह्मणः ( बृ. २।३।१ ) इत्यादि शास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥२३॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥**　　15

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति न मूर्तामूर्तादिविशिष्टत्वम् । यतः साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवज्ज्ञानानन्दादिस्वरूपवन्मूर्तामूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते तद्धैतत्पश्यन्नृषिर्वामदेवः　　20 प्रतिपेदेऽहं मनुरभवं सूर्यश्च ( बृ. १।४।१० ) इत्यादि । ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधना-

5. A. E. read पश्यति for पश्यते.
11. C. reads तत् for तस्य before प्रीणनम्.
12 E. reads उपादिशत् for उपदिशत्.
17. E. om. एव.

त्मके कर्मण्यभ्यासादुपलभ्यते । तद्वचाभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः ॥ २४ ॥

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति ।

## अतोनन्तेन तथा हि लिङ्गम् ॥ २५ ॥

5 अत उक्तैर्हेतुभिर्ब्रह्मणोनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम् । तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥ २५ ॥

उभयलिङ्गाधिकरणं समाप्तम् । ( ५ )

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥

मूर्तामूर्तात्मकस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्वं द्वे वाव ब्रह्मणो 10 रूपे ( बृ. २।३।१ ) इत्यादिनोपदिश्यते । अथात आदेशो नेति नेति ( बृ. २।३।६ ) इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते । न ह्येतस्मादिति नेत्यन्यत्परमस्ति ( बृ. २।३।६ ) इति ब्रह्मणोन्यदुत्कृष्टं नास्तीति प्रतिपादितम् । तदुपपादनायाथ नामधेयं सत्यस्य सत्यमिति 15 प्राणा वै सत्यं तेषामेष सत्यम् ( बृ. २।३।६ ) इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योप्येष सत्यमिति कदाचिदपि ज्ञानादिसंकोचाभावादुक्तम् । तथा प्रधानक्षेत्रज्ञपतिर्गुणेशः ( श्वे. ६।१६ ) । पतिं विश्वस्यात्मेश्वरम् (ना. १३।१) । नित्यो नित्यानां चेतनश्चेतनानाम् ( श्वे. ६।१३ ) इत्यादिश्रुतेश्चायमर्थोवग20 म्यते । तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम् ।

किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेनोत प्रभा-

9. C. reads चित् for अचित्.
13. C. reads हि after न.
14. E. om. अथ.

प्रभावतोरिवैकजातियोगेनोत जीवस्येव विशेषणविशेष्यतयां-शांशिभावेनेति । इह स्थाप्यमानं विशेषणविशेष्यभावमङ्गी-कृत्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ( ब्र. सू. १।४।२३ )। तदनन्यत्वमारम्भणशब्दादिभ्यः ( ब्र. सू. २।१।१५ ) इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्विशिष्टस्योत्पत्ति-रनन्यत्वं चोक्तम् । किं युक्तम् । अहिकुण्डलवदिति । कुतः । उभयव्यपदेशात् । ब्रह्मैवेदं सर्वम् ( नृ. ता. ५ ) । आत्मैवेदं सर्वम् ( नृ. ता. ५ ) इति तादात्म्यव्यपदेशाद्धन्ताह-मिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छा. ६।३।२ ) इति भेदव्यपदेशाच्चाहेः कुण्डलभावर्जुभाववत्तस्यैव ब्रह्मणः संस्थानविशेषा एवाचि-द्वस्तूनि ॥ २६ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

वाशब्दः पक्षव्यावृत्त्यर्थः । ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोपरिणामित्ववादिन्योपि बाधिता भवेयुः । अतो यथा तेजस्त्वेन प्रभातदाश्रययोर्भिन्नयोरपि तादात्म्यमेव-मचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः ॥ २७ ॥

## पूर्ववद्वा ॥ २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । एकस्यैव द्रव्यस्यावस्थाविशेष-योगेपि ब्रह्मस्वरूपस्यैवाचिद्रूपत्वादुक्तदोषादनिर्मोक्षः । अथ

5. B. om. वस्तु.

9. B. reads इत्यादि for नामरूपे व्याकरवाणीति.

11. C. E. read कुण्डलभाववद्रज्जुभाववत् for कुण्डलभावर्जुभाववत्.

14. E. reads द्वय after पक्ष.

16. C. reads यतः for अतः.

20. C. reads द्रव्यत्वात्, E. द्रव्यस्वरूपत्वात्, for रूपत्वात्; E. reads अनिर्मोक्षप्रसङ्गः for अनिर्मोक्षः.

प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रं विवक्षितम् । एवं तद्वदश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः पूर्ववदेव । अंशो नानाव्यपदेशात् ( ब्र. सू. २।३।४२ ) ।
5 प्रकाशादिवत्तु नैवं परः ( ब्र. सू. २।३।४५ ) इति जीववत्पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम् । विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारोपि मुख्यः । ब्रह्मणो निर्दोषत्वं च रक्षितम् । तदेवं प्रकाशजातिगुणशरीराणां मणि-
10 व्यक्तिगुण्यात्मनः पृथक्सिद्ध्यनर्हविशेषणतया यथांशत्वं तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम् ॥ २८ ॥

## प्रतिषेधाच्च ॥ २९ ॥

स एष महानज आत्माजरोमरः ( बृ. ४।४।२५ ) । नास्य जरयैतज्जीर्यति ( छा. ८।१।५ ) इत्यादिभिर्ब्रह्मणोचिद्धर्म-
15 प्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः । अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वं कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम् । ब्रह्मणो निर्दो-

2. A. B. read ब्रह्मणि for ब्रह्मापि.
6. C. reads त्व after पृथक्.
8. B. om. स्वभाव; A. B. om. अपि after भेदव्यवहारः.
9. E. om. च; B. reads एव for एवम्.
10. A. reads प्रत्यपृथक्सिद्धलक्षण, E. प्रत्यपृथक्सिद्धिलक्षण, for पृथक्सिद्ध्यनर्ह.
16. B. om. वस्तु after सूक्ष्मचिदचित् and स्थूलचिदचित्.
18. A. B. om. ब्रह्मणो निर्दोषत्वं च रक्षितम्.

षत्वं च रक्षितम्। ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥ अहिकुण्डलाधिकरणं समाप्तम्। (६)

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३० ॥

इदानीमस्मात्परस्माज्जगन्निमित्तोपादानरूपपरमकारणात्परब्रह्मणः परमपि किंचित्तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य 5 निराक्रियतेस्योपास्यस्य निर्दोषत्वानवधिकातिशयासंख्येयकल्याणगुणाकरत्वस्थेम्ने।

तत्रेयमाशङ्का यदिदं परं ब्रह्मोभयलिङ्गमेतस्मान्निखिलजगत्कारणात्परमपि किंचित्तत्त्वमस्ति। कथम्। अथ य आत्मा स सेतुर्विधृतिः ( छा. ८।४।१ ) इत्यस्य परस्य सेतुत्वव्यप- 10 देशात्। सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोन्यदनेन प्राप्यमस्तीति गम्यते। तथैतं सेतुं तीर्त्वान्धः सन्ननन्धो भवति ( छा. ८।४।२ ) इति तरितव्यता चास्याभिधीयते। अतश्चान्यत्प्राप्यमस्ति। उन्मानव्यपदेशाच्च। उन्मितं परिमितमिदं परं ब्रह्म। चतुष्पाद्ब्रह्म ( छा. ३।१८।२ )। षोड- 15 शकलम् ( प्र. ६।१ ) इत्युन्मानव्यपदेशात्। स चायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तित्वं द्योतयति। तथा संबन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते।

---

8. E. om. आ before शङ्का.

12. C. reads प्राप्तव्यम् for प्राप्यम्; E. reads अथ संनद्धः for अन्धः सन्ननन्धः.

13. A. B. read तर्तव्यता for तरितव्यता.

14. C. reads प्राप्तव्यम् for प्राप्यम्.

15. A. B. om. इदम्.

17. C. reads अस्तिताम् for अस्तित्वम्.

अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् । ( श्वे. ६।१९ )
अमृतस्यैष सेतुः ( मु. २।२।५ ) इति । अतश्च परात्पर-
मस्ति । भेदेन च परात्परं व्यपदिश्यते परात्परं पुरुषमु-
पैति ( मु. ३।२।८ ) । परात्परं यन्महतो महान्तम् (ना. १।५)
5 इति च । तथा

तेनेदं पूर्णं पुरुषेण सर्वम् ।

ततो यदुत्तरतरं तद्रूपमनामयम् । ( श्वे. ३।९-१० )
इति । अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किंचिदस्तीति
गम्यत इति ॥ ३० ॥

10 एवं प्राप्तेभिधीयते ।

## सामान्यात्तु ॥ ३१ ॥

तुशब्दः पक्षं व्यावर्तयति । यत्तावदुक्तं सेतुत्वव्यपदेशा-
त्परात्परमस्तीति तन्नोपपद्यते । न ह्ययमत्र किंचित्प्राप्यं प्रति
सेतुरुच्यते । एषां लोकानामसंभेदाय ( छा. ८।४।१ ) इति
15 सेतुसामान्येन सर्वलोकासंकरत्वश्रुतेः । सिनोति बध्नाति स्वस्मि-
न्सर्वं चिदचिद्वस्तुजातमसंकीर्णमिति सेतुरुच्यते । एतं सेतुं
तीर्त्वा ( छा. ८।४।२ ) इति तरतिश्च प्राप्तिवचनो यथा
वेदान्तं तरतीति ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् ॥ ३२ ॥

20 योयं चतुष्पाद्ब्रह्म ( छा. ३।१८।२ ) । षोडशकलम् ( प्र.
६।१ ) । पादोस्य विश्वा भूतानि ( तै. आ. ३।१० ) इत्यु-
न्मानव्यपदेशः स बुद्ध्यर्थः । उपासनार्थः । सत्यं ज्ञानमनन्तं
ब्रह्म ( तै. २।१ ) इत्यादिभिर्जगत्कारणस्य ब्रह्मणोपरिच्छि-

12. E. om. त्व after सेतु.

18. C. reads देवताम् for वेदान्तम्.

23. C. reads इति हि for इत्यादिभिः.

न्नत्वावगमात्स्वत उन्मितत्वासंभवात् । जगत्कारणत्वं हि तस्यैव श्रूयते तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१) । सोकामयत बहु स्यां प्रजायेय (तै. २।६) इति। अतो यथा वाक्पादः प्राणः पादश्चक्षुष्पादः (छा. ३।१८।२) इत्यादिना ब्रह्मणो वागादिपादव्यपदेश उपासनार्थ एव- 5
मयमपि ॥ ३२ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतयाप्युन्मानसंभवस्तत्राह ।

**स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥**

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्तत्संबन्धितयोन्मि- तत्वानुसंधानं संभवति । यथा प्रकाशादेर्विततस्य वातायन- 10 घटादिस्थानभेदैः परिच्छिद्यानुसंधानसंभव इत्यर्थः ॥ ३३ ॥

**उपपत्तेश्च ॥ ३४ ॥**

यदुक्तममृतस्यैष सेतुः ( मु. २।२।५ ) इति प्राप्यप्रापक- संबन्धव्यपदेशात्प्रापकात्परं प्राप्यमस्तीति तन्न । प्राप्यस्य पर- मपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः । 15

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं
स्वाम् ॥ ( मु. ३।२।३ )

इत्यनन्योपायत्वश्रवणात् ॥ ३४ ॥

**तथान्यप्रतिषेधात् ॥ ३५ ॥** 20

यत्पुनरुक्तं ततो यदुत्तरतरम् ( श्वे. ३।१० ) । परात्परं

---

4. A. reads चक्षुःपादः for चक्षुष्पादः; E. reads मनः पादः after चक्षुष्पादः.

14. C. om. प्रापकात्.

पुरुषम् ( मु. ३।२।८ ) । अक्षरात्परतः परः ( मु. २।१।२ ) इत्यादिभेदव्यपदेशात्परात्परमस्तीति तन्नोपपद्यते । तत्रैव ततोन्यस्य परस्य प्रतिषेधात् ।

यस्मात्परं नापरमस्ति किंचि-
5 द्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् । ( श्वे. ३।९ )

इति । यस्मादपरं परं नास्ति किंचित् । न केनापि प्रकारेण परमस्तीत्यर्थः । तथान्यत्रापि न ह्येतस्मादिति नेत्यन्यत्परमस्ति ( बृ. २।३।६ ) इति नेति निर्दिष्टादेतस्माद्ब्रह्मणोन्यत्परं न ह्यस्तीत्यर्थः । तथा

10 न तस्येशे कश्चन तस्य नाम महद्यशः । ( ना. १।२ )

इति । तद्धि जगदुपादानकारणतयानन्तरमुक्तम्

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । ( ना. १।२ )

स आपः प्रदुधे उभे इमे (ना. १।२) इत्यादिना । अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ( ना. १।३ ) इति च जगत्कारणं पुरु-
15 षमेनं प्रत्यभिज्ञापयति ।

ततो यदुत्तरतरम् ( श्वे. ३।१० ) इति किमुच्यत इति चेत् । पूर्वत्र

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेयनाय ॥
20 ( श्वे. ३।८ )

2. C. om. भेद after इत्यादि.
5. C. reads किंचित् for कश्चित्.
8. C. reads अस्मात् for एतस्मात्.
9. C. om. हि.
15. E. reads च after प्रत्यभिज्ञापयति.
16. B. reads उत्तरम् for उत्तरतरम्.
19. A. B. E. read तमेवं विद्वानमृत इह भवति for तमेव विदित्वाति मृत्युमेति.

इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनं नान्योऽमृतत्वस्य पन्था इत्युपदिश्य तदुपपादनाय

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ 5
(श्वे. ३।९)

इति पुरुषस्य परतरत्वं तद्व्यतिरिक्तस्य परत्वासंभवं च प्रतिपाद्य

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥
(श्वे. ३।१०) 10

इति पूर्वोक्तमर्थं हेतुतो निगमयति । यदुत्तरतरं पुरुषतत्त्वं तदेवारूपमनामयं यतस्ततो ये तत्पुरुषतत्त्वं विदुस्त एवामृता भवन्त्यथेतरे दुःखमेवापियन्तीति । अन्यथोपक्रमविरोधोऽनन्तरोक्तविरोधश्च । परात्परं पुरुषमुपैति दिव्यम् (मु. ३।२।८) इत्यपि पूर्वत्राक्षरात्परतः परः (मु. २।१।२) इत्यक्षराद्व्याकृताद्यः परः समष्टिपुरुषस्तस्मात्परो योऽदृश्यत्वादिगुणकः सर्वज्ञः परमपुरुषः स एवेहापि परात्पर इति समष्टिपुरुषात्परत्वेनोच्यते ॥ ३५ ॥ 15

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

अनेन ब्रह्मणा सर्वगतत्वं सर्वस्य जगतो व्याप्तत्वमायामशब्दादिभ्यः सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमस्मात्परं 20

3. C. om. यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्.

7. B. reads परतत्त्वम्, E. परत्वम, for परतरत्वम.

14. E. reads उक्ति for उक्त.

20. E. reads व्याप्तत्वम for व्याप्तत्वम.

नास्तीत्यवगमयति । आयामशब्दस्तावत्तेनेदं पूर्णं पुरुषेण सर्वम् ( श्वे. ३।९ ) ।

यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ (ना. ११।६)
5 नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः । ( मु. १।१।६ )

इति । आदिशब्दाद्ब्रह्मैवेदं सर्वम् ( नृ. ता. ५ ) । आत्मैवेदं सर्वम् ( नृ. ता. ५ ) इत्यादयो गृह्यन्ते । अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ ३६ ॥ पराधिकरणं समाप्तम् । ( ७ )

10 **फलमत उपपत्तेः ॥ ३७ ॥**

उक्तमुपासिसिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वं प्राप्यभूय च परमपुरुषस्य निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वं च । अतः परमुपासनं विवक्षन्नुपासीनानां परस्मादेवास्मात्पुरुषात्तत्प्राप्तिरूपमपवर्गाख्यं फलमिति संप्रति
15 ब्रूते । तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलमत एव परस्मात्पुरुषाद्भवतीति सामान्येन फलमत इत्युच्यते । कुत एतत् । उपपत्तेः । स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधित ऐहिकामुष्मिकं भोगजातं स्वस्वरूपावाप्तिरूपमपवर्गं च दातुमीष्टे । न ह्यचेतनं कर्म क्षण-
20 ध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥

7. E. om. इति.
12. C. reads परमपुरुषस्य च for च परमपुरुषस्य.
13. A. om. च after परत्वम्.
14. C. reads प्राप्तिरूप for प्राप्तिरूपम्.
18. A. B. read आमुष्मिक for आमुष्मिकम्.
19. E. reads प्राप्ति for अवाप्ति.

## श्रुतत्वाच्च ॥ ३८ ॥

स वा एष महानज आत्मान्नादो वसुदानः (बृ.४।४।२४)। एष ह्येवानन्दयाति ( तै. २।७ ) इति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

संप्रति पूर्वपक्षमाह । 5

## धर्मं जैमिनिरत एव ॥ ३९ ॥

अत एवोपपत्तेः शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते । लोके हि कृष्यादिकं कर्म दानादिकं च कर्म साक्षाद्वा परंपरया वा स्वयमेव फलसाधनं दृष्टम् । एवं वेदेपि यागदानहोमादीनां साक्षात्फलसाधनत्वा- 10 भावेपि परंपरयापूर्वद्वारेण फलसाधनत्वमुपपद्यते । तथा यजेत स्वर्गकाम इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्तव्यतया यागाद्यभिदधदन्यथानुपपत्त्यापूर्वद्वारेण फलसाधनत्वमेव गमयति ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥ 15

तुशब्दः पक्षव्यावृत्त्यर्थः । पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान्बादरायणो मन्यते । कुतः । हेतुव्यपदेशात् । यज देवपूजायामिति देवताराधनभूतयागादावाराध्यभूताग्नि-

4. C. om. हि after इति.

7. C. reads रूपम् for रूप.

8. B. reads फलदम् for फलप्रदम्; C. om. हि; B. reads खननादिकं च कृष्यादिकम् for कृष्यादिकं कर्म दानादिकं च कर्म; A. reads खननादिकम्, C. reads मर्दनादिकम् for कर्म दानादिकम्.

13. C. reads अव for एव; E. reads अव after एव.

18. A. B. E. read यागादि for यागादौ.

वाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशाद्वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति (तै. सं. २।१।१) इत्यादिषु। कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशोपि विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता।

एवमपेक्षितेपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वादिपरिकल्पनं च प्रामाणिका न सहन्ते। लिङादयोपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति नान्यदलौकिकमिति प्रागेव (पृ. १३१) उक्तम्। तदेवं वायुर्वै क्षेपिष्ठा देवता (तै. सं. २।१।१) इत्यादिशब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते। वाय्वाद्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते

इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः।
तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः॥ (ना. १।२)

इति। अन्तर्यामिब्राह्मणे च यो वायौ तिष्ठन्⋯यस्य वायुः शरीरम् (बृ. ३।७।७)। योग्नौ तिष्ठन् (बृ. ३।७।५)। य आदित्ये तिष्ठन् (बृ. ३।७।९) इत्यादि श्रूयते। स्मर्यते च

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान्मयैव विहितान्हि तान्॥

(गी. ७।२१–२२)

---

1. A. B. om. नत् after तत्; C. om. तस्मिन् after तस्मिन्
6. C. om. अपि after अपेक्षिते.
7. C. reads वि for परि before कल्पनम्.
16. C. reads च after इति.

इति ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । (गी. ९।२४)

इति । प्रभुरिति फलप्रदायीत्यर्थः ।

देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि । (गी. ७।२३)

यान्ति मद्याजिनोऽपि माम् (गी. ९।२५) इति च । लोके 5
च कृष्यादिभिर्विचित्ररूपान्द्रव्यविशेषान्संपाद्य तै राजानं
भृत्यद्वारेण साक्षाद्वार्चयन्ति । अर्चितश्च राजा तत्तदर्चनानु-
गुणं फलं च प्रयच्छन्दृश्यते । वेदास्त्वतिपतितसकलेतर-
प्रमाणसंभावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभावि-
कानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य 10
तदाराधनरूपाणि च यागदानहोमात्मकानि स्तुतिनमस्कार-
कीर्तनार्चनध्यानानि च तदाराधनानि तदाराधितात्परस्मात्पु-
रुषाद्भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥

फलाधिकरणं समाप्तम् । (८)

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृ- 15
तीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

5. C. reads लोकादि for लोके च.

7. A. B. E. read आराधन for अर्चन.

8. E. reads वेदान्ताः for वेदाः.

9. B. reads ऽभूमिम् for भूमिम्.

12. E. reads च after तदाराधनानि; A. B. om. तद् before आराधितात्.

15. A. reads च after इति.

# अथ श्रीभाष्ये



## तृतीयाध्याये तृतीयः पाद आरभ्यते ।

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायिता-
5 पर्यन्तम् । इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय
विद्याभेदाभेदचिन्ता प्रस्तूयते । प्रथमं तावदेकस्या वैश्वानर-
विद्यादिकाया अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वमुत
विद्याभेद इति चिन्त्यते । अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य
च भेदकत्वाच्छाखान्तरे चोभयोरवर्जनीयत्वाद्विद्याभेद इति
10 प्राप्तम् । अत एव

तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ।
(मु. ३।२।१०)

इति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उप-
पद्यते । विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां
15 प्राप्तेर्नियमो नोपपद्यते । एवं प्राप्त उच्यते ।

सर्ववेदान्तप्रत्ययमेकमुपासनमिति । कुतः । चोदनाद्यविशे-
षात् । चोदना तावदुपासीत विद्यादित्येवंजातीयको धात्वर्थ-
विशेषविधिः । आदिशब्देनैकं वा संयोगरूपचोदनाख्याविशे-
शेषात् (जै. सू. २।४।९) इति कर्मकाण्डशाखान्तराधिकर-

4. C. reads फलदायित्व for फलदायिता.

14. C. om. विद्याङ्गस्य.

णसूत्रोक्ताः संयोगरूपाख्या गृह्यन्ते । एषां चोदनादीनामवि-
शेषात्सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते । तथा हि
छान्दोग्यवाजसनेयकयोर्वैश्वानरमुपास्ते ( छा. ५।११, श. ब्रा.
१०।६।१।११ ) इति चोदना तावदेकरूपा । विदिपर्यायस्योपा-
सेर्निर्देशात् । वेद्यैकनिरूपणीयस्वरूपस्योपासनस्य वेद्यभूतवै- 5
श्वानरैक्याद्रूपमप्यविशिष्टम् । आख्या च वैश्वानरविद्येत्यवि-
शिष्टा । फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोविशिष्टः । अत
एभिः प्रत्यभिज्ञानाच्छाखान्तरेपि विद्यैक्यम् ॥ १ ॥

यत्तूक्तमविशेषपुनःश्रवणात्प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न
विद्यैक्यमिति तदनुभाष्य परिहरति । 10

## भेदान्नेति चेदेकस्यामपि ॥ २ ॥

अविशेषपुनःश्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्य-
मिति चेदेकस्यामपि विद्यायां प्रतिपत्तृभेदात्पुनःश्रुतिः प्रकर-
णान्तरं चोपपद्यते । यत्र ह्येकस्मिन्प्रतिपत्तरि पुनःश्रुतिः प्रक-
रणान्तरं च विद्यते तत्रान्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः । 15
प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनःश्रुत्याद्युपपत्तेस्तत्र न
विधेयान्तरसंभवः ॥ २ ॥

यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमद-
र्शनाद्विद्याभेदः प्रतीयत इत्यत्राह ।

4. B. reads उपास्तेः for उपासेः.
5. B. reads विद्या for वेद्य.
9. B. reads भेदात् for भेदप्रतीतेः.
11. C. om. न after भेदात्.
15. B. om. च after प्रकरणान्तरम्.
19. C. reads तत्र for अत्र.

## स्वाध्यायस्य तथात्वे हि समाचारेधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

नैतदस्ति शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयतीति। शिरोव्रतस्य विद्याङ्गत्वाभावात् । स्वाध्यायस्य तथात्वे हि
5 तन्नियमः । स्वाध्यायस्य तथात्वसिद्ध्यर्थं तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि शिरोव्रतोपदेशनियमो न विद्यायाः । कुत एतत् । नैतदचीर्णव्रतोऽधीते (मु. ३।२।११) इति तस्याध्ययनसंयोगात् । समाचारेधिकाराच्च । समाचाराख्ये ग्रन्थ इदमपि वेदव्रतत्वेन व्याख्यातमित्यतिदेशात् । तेषामेवैतां ब्रह्म-
10 विद्यां वदेत (मु. ३।२।१०) वेदविद्यामित्यर्थः । सववच्च तन्नियमः । यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसंबन्धिनस्तत्रैव भवन्ति न त्रेताग्निषु ॥ ३ ॥

## दर्शयति च ॥ ४ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् । तथा
15 हि छान्दोग्ये तस्मिन्यदन्तस्तदन्वेष्टव्यम् (छा. ८।१।१) इत्युक्त्वा किं तदत्र विद्यते यदन्वेष्टव्यम् (छा. ८।१।२) इति प्रश्नपूर्वकमपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम् । तैत्तिरीयके तु छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य

---

7. A. E. read अधीयीत for अधीते.
8. A. B. read समाचाराख्य for समाचाराख्ये.
11. C. reads शतादन, E. शतोदन, for शतौदन.
12. A. B. read इति after भवन्ति.
15. C. reads उपासितव्यम् for अन्वेष्टव्यम.
16. E. reads तत्र for तदत्र.
18. A. B. read इत्युक्तः for इत्युक्तम.

तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।
(ना. १२।३)

इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते । तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ४ ॥

तदेवं शाखान्तराधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य　5
तत्प्रयोजनमाह ।

**उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥**

एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तर उपसंहारः कर्तव्यः । कुतः । विधिशेषवदर्थाभेदात् । यथैकस्मिन्वेदान्ते श्रुतो वैश्वानरदहरादिविधिशे-　10
षो गुणस्तद्विद्यासंबन्धात्तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते तथा वेदान्तान्तरोदितोपि तद्विद्यासंबन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोवधारणे ॥ ५ ॥
सर्ववेदान्तप्रत्ययाधिकरणं समाप्तम् । (१)

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥**　15

एवं चोदनाद्यविशेषाद्विद्यैकत्वमेकत्वे च गुणोपसंहारः कर्तव्य इत्युक्तम् । अतः परं काश्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोस्ति नेतीति निरूप्य निर्णीयते । अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च । वाजिनां तावद्द्वया ह प्राजापत्या देवाश्चासुराश्च (बृ. १।३।१) इत्यारभ्य ते ह　20

1. C. reads दहम् for दहरम्.
8. C. om. अन्त before अन्तराम्नातानाम्.
13. C. reads उपसंहारः कर्तव्यः for उपसंहर्तव्यः.
18. C. reads हि before उद्गीथविद्या.
20. A. E. read वा after ते ह.

देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययाम ( बृ. १।३।१ ) इत्युद्गीथेनासुरविध्वंसं प्रतिज्ञायोद्गीथे वागादिमनःपर्यन्तदृष्टावसुरैरभिभवमुक्त्वाथ हेममासन्यं प्राणमूचुः (बृ. १।३।७) इत्यादिनोद्गीथे प्राणदृष्ट्यासुरपराभवमुक्त्वा भवत्यात्मना परास्य
5 द्विषन्भ्रातृव्यो भवति य एवं वेद ( बृ. १।३।७ ) इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता । एवं छन्दोगानामपि देवासुरा ह वै यत्र संयेतिरे ( छा. १।२।१ ) इत्यारभ्य तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्याम: ( छा. १।२।१ ) इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वद्देवोद्गीथे वागादिदृष्टिं
10 दोषमभिधायाथ ह य एवायं मुख्य: प्राणस्तमुद्गीथमुपासांचक्रिरे (छा. १।२।७) इत्यादिनोद्गीथे प्राणदृष्ट्यासुरपराभवमुक्त्वा यथाऽश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते य एवंविदि पापं कामयते ( छा. १।२।८ ) इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता । वेदनविषयविधिप्रत्ययाश्रवणेपि फलसाध-
15 नत्वश्रवणाद्वेदनविषयो विधि: कल्प्यते । उद्गीथविद्याया: क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे (ब्र. सू. १।३।२५) प्रतिपादितम् ।

तत्र संशय्यते किमत्र विद्यैक्यमुत नेति । किं युक्तम् । विद्यैक्यमिति । कुत: । उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्व-
20 श्रवणाच्चोदनाद्यविशेषात् । फलसंयोगस्तावच्छत्रुपरिभवरूपो न विशिष्यते । रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादभिन्न-

2. C. reads विध्वंसनम् for विध्वंसम्.

8. B. reads एतान् for एनान्.

10. B. E. om. ह after अथ; E. reads मुख्य for मुख्य:.

12. A. B. read ह वै for हैव.

16. C. reads क्रत्वर्थत्वे for क्रत्वर्थत्वेन; B. reads विरुद्धम् for अविरुद्धम्.

ष्टम्। चोदना च विदिधात्वर्थगताविशिष्टा । आख्या चोद्गी-
थविद्येत्यविशिष्टा। अत्र राद्धान्तिच्छायया परिचोद्य परिह-
रत्यन्यथात्वं शब्दादिति चेन्नाविशेषादिति । यदुक्तं विद्यै-
क्यमिति तन्नोपपद्यते। रूपभेदात् । रूपान्यथात्वं हि शब्दा-
दव प्रतीयते । वाजसनेयके ह्यथ हेममासन्यं प्राणमूचुस्त्वं 5
न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत् (बृ. १।३।७)
इत्युद्गानस्य कर्तरि प्राणदृष्ट्यासुरपराभवमुक्त्वा य एवं वेद
(बृ. १।३।७) इति कर्तर्येव प्राणदृष्टिरेवंशब्दादवगम्यते ।
छान्दोग्येथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे
(छा. १।२।७) इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्यासुरपरा- 10
भवमुक्त्वा य एवंविदि पापं कामयते (छा. १।२।८) इत्येवं-
शब्दात्कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्तरि
प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं
गम्यम्। रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यवि-
शेषोऽकिंचित्कर इति विद्याभेद इति चेत्तन्न । अविशेषात् । 15
अविशेषेण ह्युभयत्रोद्गीथसाधनकः परपरिभव उपक्रमे प्रतीयते।
वाजसनेयके ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययाम
(बृ. १।३।१) इत्युपक्रमे श्रूयते। छान्दोग्येपि तद्ध देवा उद्गी-
थमाजह्रुरनेनैनानभिहनिष्याम: (छा. १।२।१) इति। अत
उपक्रमाविरोधाय तेभ्य एष प्राण उदगायत् (बृ. १।३।७) 20

2. A. B. read राद्धान्त for राद्धान्ति.

7. B. reads उद्गायनस्य for उद्गानस्य.

9. C. om. ह after अथ; B. om. प्राणः.

16. E. reads साधनक for साधनकः; C. reads परिभवरूपः for परिभवः.

18. A. B. om. अपि after छान्दोग्ये.

19. C. reads एतान् for एनान्.

इत्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिष्वोदना-
दिवत्सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते । अन्यथोपक्र-
मगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात् । अतो विद्यै-
क्यम् ॥ ६ ॥

5 इति प्राप्ते प्रचक्ष्महे ।

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

न वेति पक्षं व्यावर्तयति । न चैतदस्ति यद्विद्यैक्यमिति ।
कुतः । प्रकरणभेदात् । ओमित्येतदक्षरमुद्गीथमुपासीत (छा.
१।१।१) इति प्रकृतमुद्गीथावयवभूतं प्रणवं प्रस्तुत्यैतस्यैवा-
10 क्षरस्योपव्याख्यानं भवति । देवासुरा ह वै यत्र संयेतिरे (छा.
१।१।१०–१।२।१) इत्यारभ्याथ ह य एवायं मुख्यः प्रा-
णस्तमुद्गीथमुपासांचक्रिरे ( छा. १।२।७ ) इत्युद्गीथावयव-
भूतप्रणवविषयमुपासनं छन्दोगा अधीयते । वाजिनस्तु तादृश-
प्राचीनप्रकरणाभावाद्धन्तासुरान्यज्ञ उद्गीथेनात्ययाम ( बृ.
15 १।३।१ ) इति कृत्स्नमुद्गीथं प्रस्तुत्याथ हेममासन्यं प्राणमू-
चुस्त्वं न उद्गाय ( बृ. १।३।७ ) इत्यादि कृत्स्नोद्गीथविषयम-
धीयते । अतः प्रकरणभेदेन विधेयभेदः । विधेयभेदे च
रूपभेद इति न विद्यैक्यम् ।

किं चाथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे
20 ( छा. १।२।७ ) इति पूर्वप्रकृतोद्गीथावयवभूतः प्रणव
एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः । वाजिनां तु कृत्स्नस्यो-

---

3. C. reads गत for गतः.

9. A. B. read अवयवम् for अवयवभूतम्; A. E. read वा for एव after एतस्य.

17. C. reads विधेयभेदेन for विधेयभेदे.

द्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति । अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत् (बृ. १।३।७) इत्युद्गातरि प्राणाध्यासं निर्दिश्य य एवं वेद (बृ. १।३।७) इत्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते । अतश्च रूपभेदः । न चोद्गातर्युपास्ये विहित उद्गीथेनात्ययाम (बृ. १।३।१) इत्याख्यायिकोपक्रमविरोधः शङ्कनीयः । उद्गातुरुपासन उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात्तस्यापि परपरिभवाख्यं फलं प्रति हेतुत्वात् । अतो रूपभेदाद्विद्याभेद इति चोदनाविशेषेपि न विद्यैक्यम् ।

परोवरीयस्त्वादिवत् । यथैकस्यामेव शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येपि हिरण्मयपुरुषदृष्टिविधानात्परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

उद्गीथविद्येति संज्ञैक्यात्तद्विद्यैक्यमुक्तं चेत्तत्संज्ञैक्यं विधेयभेदेप्यस्त्येव । यथाग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च । यथा चोद्गीथविद्येति च्छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

छान्दोग्ये प्रथमप्रपाठक उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य तद्ध देवा उद्गीथमाजह्रुः (छा. १।२।१) उद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम् । अवयवे च समुदायशब्दः पटो दग्ध

9. E. reads आदि after चोदना.

10. C. reads यदेकस्यामेव for यथैकस्यामेव.

16. A. B. om. अयन before अग्निहोत्रे.

इत्यादिषु दृश्यते । अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्द-
निर्दिष्ट इति स एव प्राणदृष्ट्योपास्यश्छान्दोग्ये प्रतिपत्तव्यः ।
वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य
कर्तोद्गाता प्राणदृष्ट्योपास्य इति विज्ञानानात्वं सिद्धम् ॥ ९ ॥
5 अन्यथात्वाधिकरणं समाप्तम् । (२)

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्याम्नायते यो ह वै ज्येष्ठं च
श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च
श्रेष्ठश्च ( छा. ५।१।१, बृ. ६।१।१ ) इत्यादि । तत्र ज्येष्ठ्य-
10 श्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुःश्रोत्रमनःसु व-
सिष्ठत्वप्रतिष्ठात्वसंपत्त्यायतनत्वाख्यान्गुणान्प्रतिपाद्य वागादीनां
देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्कार्यत्वेन च प्राणस्य
श्रैष्ठ्यं प्रतिपाद्य वागादिसंबन्धितया श्रुतान्वसिष्ठत्वादीन्गुणांश्च
प्राणसंबन्धितया प्रतिपादयति । एवं छान्दोग्यवाजसनेयकयोर्ज्ये-
15 ष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते ।
कौषीतकिनां तु प्राणविद्यायां ( कौ. २।१४ ) तथैव ज्येष्ठ्य-
श्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः । न पुनर्वसिष्ठत्वादयो
वागादिसंबन्धिनो गुणाः प्राणसंबन्धितया प्रतिपादिताः ।

तत्र संशयः । किमत्र विद्या भिद्यत उत नेति । किं युक्तम् ?
20 भिद्यत इति । कुतः । रूपभेदात् । यद्यप्युभयत्र प्राण एव

8. E. reads ह after प्राण.
10. B. reads वशिष्ठत्व for वसिष्ठत्व.
12. C. om. च before प्राणस्य
13. B. reads वशिष्ठत्व for वसिष्ठत्व.
15. A. B. E. read श्रेष्ठ्यज्येष्ठ्य for ज्येष्ठ्यश्रेष्ठ्य.
17. B. reads वशिष्ठ for वसिष्ठ; B. reads वा after वसिष्ठत्वादयः.

ज्यैष्ठ्यश्रैष्ठ्यगुणक उपास्यः प्रतीयते तथाप्येकत्र वसिष्ठत्वादिभि-
रपि गुणैर्युक्तः प्राण उपास्यः प्रतीयत इतरत्र तु तद्विधुर इत्यु-
पास्यरूपभेदाद्विद्याभेद इति प्राप्ते ब्रूमः।

सर्वाभेदादन्यत्रेमे। नात्र विद्याभेदः। अन्यत्र कौषीतकिनां
प्राणविद्यायामपीमे वसिष्ठत्वादयो गुणा उपास्याः सन्ति। 5
कुतः। सर्वाभेदात्। प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रका-
रस्य सर्वस्य तत्राप्यभेदात्

तथा हि छान्दोगवाजसनेयिनां प्राणविद्यायामेता ह वै
देवता अहंश्रेयसि व्यूदिरे (छा. ५।१।६)। अहंश्रेयसे वि-
वदमानाः (बृ. ६।१।७) इति चोपक्रम्य वागादेरेकैकापक्रमणे- 10
ऽपि प्राणातिरिक्तेन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं
च सकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं
च प्रतिपाद्य सर्वेषां प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां प्रा-
णस्य श्रैष्ठ्यमुपपादितम्। एवमुपपादितं वागादिकार्यस्य प्राणा-
यत्तत्वमथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि 15
(छा. ५।१।१३. बृ. ६।१।१४) इत्यादिना वागादिभिरनू-
द्यते। कौषीतकिनां प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रति-
पादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः। अथ हेमा
देवताः प्रजापतिं पितरमेत्याब्रुवन्को वै नः श्रेष्ठ इत्यादिना वागा-
दीनां बुधाः वागादयश्च देहश्च प्राणाधीन इति प्राणस्य ज्यैष्ठ्य- 20

1. A. B. read तथा before प्रतीयते.

2. A. B. om. तु after इतरत्र.

9. E. reads अहंश्रेयसे for अहंश्रेयसि

11. C. om. तत् after तत्.

15. C. reads तावत् for तत्; B. reads वशिष्ठः for वसिष्ठः.

16. B. reads वशिष्ठ for वसिष्ठ.

20. A. B. read प्राणाधीनाः for देहश्च प्राणाधीनः.

मुपपादितम् । वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतम् । नैतावता रूपभेदः । वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात् । तदेव हि
5 प्राणस्य वसिष्ठत्वादिगुणयोगित्वं यद्वागादिवसिष्ठत्वादिहेतुत्वम् । अतोत्रापि वसिष्ठत्वादिगुणयोगात्प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः । प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते ॥ १० ॥ सर्वाभेदाधिकरणं समाप्तम् । ( ३ )

यथा प्राणस्य वसिष्ठत्वाद्यनुसंधानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसं-
10 धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिस्तथा ब्रह्मस्वरूपानुसंधानं यैर्गुणैर्विना नोपपद्यते ते ब्रह्मविद्यासु सर्वास्वनुसंधेया इत्ययमर्थः प्रतिपाद्यते ।

## आनन्दादयः प्रधानस्य ॥ ११ ॥

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोस्ति नेति
15 विचार्यते । अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात्प्रकरणश्रुतानामेवोपसंहार इत्येवं प्राप्ते ब्रूमः ।

आनन्दादयः प्रधानस्य । अभेदादिति वर्तते । प्रधानस्य गुणिनो ब्रह्मणः सर्वेपूपासनेष्वभेदाद्गुण्यपृथक्भावाद्गुणानां सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः ॥ ११ ॥

1. C. om. स्व after स्व; B. reads वशिष्ठ for वसिष्ठ.

3. B. reads वशिष्ठ for वसिष्ठ.

4. B. reads वशिष्ठ for वसिष्ठ; B. om. हि after तदेव.

5. B. reads वशिष्ठ for वसिष्ठ; E. reads गुणयोगित्वम् after वसिष्ठत्वादिहेतुत्वम्.

6. B. reads वशिष्ठ for वसिष्ठ.

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत्प्रियशिरस्त्वाद-योपि तस्य प्रियमेव शिरः ( तै. २।५ ) इत्यादौ ब्रह्मगुणत्वेन श्रुताः सर्वत्र प्रसज्येरन् । नेत्याह ।

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनाम- 5
प्राप्तिः । तेषामब्रह्मगुणत्वात् । ब्रह्मणः पुरुषविधत्वरूपणमात्रा-न्तर्गतत्वात्प्रियशिरस्त्वादीनाम् । अन्यथा शिरःपक्षपुच्छाद्य-वयवभेदे सति ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम् । तथा च सति सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१) इत्यादि विरुध्यते॥१२॥

नन्वेवमेव ब्रह्मसंबन्धिनामैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां 10
गुणानामनन्तानां गुण्यपृथक्स्थितित्वमात्रेण तत्राश्रुतानामप्युप-संहारे सति सर्वे सर्वत्र प्रसज्येरन् । आनन्त्यादुपसंहाराशक्तिश्च । तत्राह ।

**इतरे त्वर्थसामान्यात् ॥ १३ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । इतरे त्वानन्दादयोऽर्थसामा- 15
न्यात्सर्वत्रानुवर्तन्ते । ये त्वर्थसमाना अर्थस्वरूपनिरूपणधर्मत्वे-नार्थप्रतीत्यनुबन्धिनस्तेऽर्थस्वरूपवत्सर्वत्रानुवर्तन्ते । ते च गुणाः सत्यज्ञानानन्दामलत्वादयः । यतो वा इमानि ( तै. ३।१ ) इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म

3. C. reads आनन्त्यादुपसंहाराशक्तिश्च तत्राह for नेत्याह.
8. A. B. read हि for अपि after ब्रह्मणः.
10. A. B. om. औदार्य.
11. C. E. read स्थितत्व for स्थितित्व.
16. A. B. om. तु after ये.
17. A. B. read च after अनुबन्धिनः.
18. A. B. read अनन्तत्व after अमलत्व.

( तै. २।१ ) । आनन्दो ब्रह्म ( तै. ३।६ ) इत्यानन्दादिभिर्हि स्वरूपतो निरूप्यते । अत उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोनुवर्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नास्तेषां गुण्यपृथक्स्थितित्वेपि प्रती-
5 त्यनुबन्धित्वाभावाद्ये यत्र श्रुतास्ते तत्रोपसंहार्या इति निरवद्यम ॥ १३ ॥

यद्युपचयापचयप्रसङ्गात्प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वनिरूपणमात्रार्था न तु ब्रह्मगुणास्तर्हितथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते । अतथाभूतस्य हि तथात्व-
10 रूपणे केनचित्प्रयोजनेन भवितव्यम । यथात्मानं रथिनं विद्धि ( का. ३।३ ) इत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वरूपणमुपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम् । न चेह तथाविधं किंचित्प्रयोजनं दृश्यत इति बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यम । तत्राह ।

15 **आध्यानाय प्रयोजनाभावात् ॥ १४ ॥**

प्रयोजनान्तराभावादाध्यानायायं रूपणोपदेशः क्रियते । आध्यानमनुचिन्तनमुपासनमुच्यते । ब्रह्मविदाप्नोति परम ( तै. २।१ ) इत्यत्रोपदिष्टाध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्राप्त्यर्थमानन्दमयं ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षा-
20 दित्वेन रूपयित्वोपदिश्यते । यथान्नमयः पुरुषोयं देहः शिरःपक्षादिभिस्तस्यदमेव शिरः ( तै. २।१ ) इत्यादिना ब्रह्म-

---

2. C. reads अपि after सर्वासु.
7. B. C. E. read अपि after यदि.
8. A, B. om. नि before रूपण: A. B. read तथाभूतस्य for तथारूपस्य.
21. E. reads पुच्छ after पक्ष.

आरोप्यते यथा च प्राणमयमनोमयविज्ञानमयास्तस्य प्राण एव शिरः (तै. २।२) इत्यादिना प्राणाद्यवयवैर्बुद्धावारोप्यन्त एवमेवैभ्योऽर्थान्तरभूतस्तदन्तरात्मानन्दमयोऽपि प्रियमोदादिभि-रेकदेशैः शिरःप्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते । एवमानन्दमयोपलक्षणत्वात्प्रियशिरस्त्वादीनां न सर्वदानन्दम- 5
यप्रतीतावनुवर्तन्ते ॥ १४ ॥

## आत्मशब्दाच्च ॥ १५ ॥

अन्योऽन्तर आत्मानन्दमयः (तै. २।५) इत्यात्मशब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छासंभवात्प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥ 10

नन्वन्योऽन्तर आत्मा प्राणमयः (तै. २।२)। अन्योऽन्तर आत्मा मनोमयः (तै. २।३) इत्यात्मशब्दस्यानात्मस्वपि पूर्व प्रयुक्तत्वादन्योऽन्तर आत्मानन्दमयः (तै. २।५) इत्यात्मशब्द-स्यात्मविषयत्वं कथं निश्चीयते । तत्राह ।

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ 15

अन्योऽन्तर आत्मानन्दमयः (तै. २।५) इत्यत्रात्मशब्देन परमात्मन एव ग्रहणम् । इतरवत् । यथेतरत्रात्मा वा इदमेक एवाग्र आसीत्।...स ऐक्षत लोकान्नु सृजै (ऐ. १।१) इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणं तद्वत् । कुत एतत् । उत्तरात् । सोऽकामयत बहु स्यां प्रजायेय (तै. २।६) इत्यान- 20
न्तरात्मविषयादुत्तराद्वाक्यात् ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

पूर्वत्र[*] प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनान्नोत्तरान्नि-

---

* A. B. om. पूर्वम्.

श्चेतुं शक्यत इति चेत्स्यादवधारणात्। स्यादेव निश्चयः। कुतः। अवधारणात्। पूर्वत्रापि तस्माद्वा एतस्मादात्मन आकाशः संभूतः (तै. २।१) इति परमात्मन एव बुद्ध्यावधारितत्वादन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा।
5 तदनन्तरं च प्राणमयादन्तरे मनोमये। ततो विज्ञानमये। तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिस्तदन्तराभावादुत्तरात्र सोऽकामयत (तै. २।६) इति वाक्यात्प्रतिष्ठितेत्युपक्रमेऽप्यपरमात्मनि परमात्मबुद्ध्यात्मशब्दान्वय इति निरवद्यम्॥ १७॥
आनन्दाद्यधिकरणं समाप्तम्। (४)

10 ## कार्याख्यानादपूर्वम्॥ १८॥

पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते। छान्दोग्यवाजसनेयकयोर्ज्येष्ठं श्रेष्ठं च प्राणमुपास्यमुक्त्वा प्राणस्य वासस्त्वेनापोऽभिधीयन्ते। छान्दोग्ये तावत्स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरि-
15 ष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति (छा. ५।२।२) इति। वाजसनेयके किं मे वासः (बृ. ६।१।१४) इति प्राणेन पृष्टा वागादय ऊचुरापो वासः (बृ. ६।१।१४) इति। तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति। एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते (बृ.
20 ६।१।१४)। तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव

1. E. reads शक्यः for शक्यते.
4. B. reads अनन्तरं, C. reads उत्तरं for अन्तरे.
5. B. reads अनन्तरं for अन्तरे.
17. E. reads दृष्टाः for पृष्टाः.
19. C. reads एतत् for एतमेव तत्.
20. A. reads वा for च after अशित्वा; E. reads एतदेव for एतमेव.

तदनमनग्नं कुरुते (श. ब्रा. १४।९।२।१५) इति। तत्र संशयः। किमत्राचमनं विधीयत उतापां प्राणवासस्त्वानुसंधानमिति। अशिष्यन्नाचामेदशित्वा चाचामेदित्याचमने विधिप्रत्ययश्रवणादेतमेव तदनमनग्नं कुरुत इति वेदने विधिप्रत्ययाभावादनग्नतासंकीर्तनस्य स्तुत्यर्थतयान्वयोपपत्तेश्च भोजनाङ्गस्याचमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात्प्राणविद्याङ्गमाचमनान्तरं विधीयत इति प्राप्ते ब्रूमः। 5

आचमनीयानामपां प्राणस्य वासस्त्वानुसंधानमेवेहापूर्वमप्राप्तं विधीयते। कार्याख्यानात्। अप्राप्ताख्यानात्। अप्राप्ताख्याने शास्त्रस्यार्थवत्त्वादित्यर्थः। एतदुक्तं भवति। किं मे वासः। आपो वासः (छा. ५।२।२, बृ. ६।१।१४)। अद्भिः परिदधति (छा. ५।२।२)। एतमेव तदनमनग्नं कुरुते (श. ब्रा. १४।९।२।१५) इत्युपक्रमोपसंहारयोर्वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेराचमनस्य स्मृत्याचारप्राप्तत्वादाचमनमनूद्याचमनीयास्वप्सु प्राणवासस्त्वानुसंधानं विधीयत इति। अत एव छान्दोग्ये तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति (छा. ५।२।२) इत्यद्भिः परिधानमेवोक्तं नाचमनम् ॥ १८ ॥ कार्याख्यानाधिकरणं समाप्तम्। (५) 10 15

## समान एवं चाभेदात् ॥ १९ ॥

वाजसनेयकेऽग्निरहस्ये शाण्डिल्यविद्याम्नाता। सत्यं ब्रह्मेत्युपासीत। अथ खलु क्रतुमयोऽयं पुरुषः (श. ब्रा. १०।६।३।१) इत्यारभ्य स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमाकाशात्मानम् (श. ब्रा. १०।६।३।२) इति। तथा 20

5. C. reads अन्यथा for अन्वय.
10. A, B. read शब्दस्य for शास्त्रस्य.
12. E. reads एतदेव for एतमेव.
21. C. reads उपक्रम्य for उपासीत.

तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याम्नायते । मनोम-
योयं पुरुषो भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स
एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति
यदिदं किं च (बृ. ५।६।१) इति। तत्र संशयः। किमत्र विद्या
5 भिद्यत उत नेति । संयोगचोदनाख्यानामविशेषेपि वशित्वाद्यु-
पास्यगुणभेदेन रूपभेदाद्विद्याभेद इति प्राप्त उच्यते समान एव-
मिति । यथाग्निरहस्ये मनोमयप्राणशरीरभारूपसत्यसंकल्पत्वा-
दिगुणगणः श्रुत एवं बृहदारण्यकेपि मनोमयत्वादिके समाने
सत्यधिकस्य वशित्वादेश्च सत्यसंकल्पत्वगुणाभेदान्न रूपभेदः ।
10 अतो विद्यैक्यम् ॥ १९ ॥ समानाधिकरणं समाप्तम्। (६)

## संबन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके श्रूयते । सत्यं ब्रह्म (बृ. ५।५।१) इत्युपक्रम्य
तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं
दक्षिणेक्षन् (बृ. ५।५।२) इत्युपक्रम्यादित्यमण्डलेक्षिणि च
15 सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा तस्योपनिष-
दहः (बृ. ५।५।३) इत्यधिदैवतं तस्योपनिषदहम् (बृ. ५।५।४)
इत्यध्यात्ममिति द्वे उपनिषदौ रहस्यनामनी उपासनशेषतयाम्ना-
येते । ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते उतो-
भयत्रोभे अनियमेनेति संशये सत्यस्य व्याहृतिशरीरस्यैवोपा-
20 स्यस्य ब्रह्मणो द्वयोः स्थानयोः संबन्धादुपास्यैक्येन रूपाभेदा-
त्संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तम्। तदिदमुच्यते सं-

2. A. B. read सर्षपो वा श्यामाको वा after यवो वा.

7. E. reads मनोमयः प्राणशरीरो भारूपः for मनोमयप्राणशरीरभारूपः
A. B. read भारूपप्राणशरीर for प्राणशरीरभारूप.

14. E. reads अक्षिन् for अक्षन्; C. E. read अक्षिणि for अक्षणि.

बन्धादेवमन्यत्रापीति । यथा मनोमयत्वादिगुणविशिष्टस्यैक्या-
दुपास्यैक्येन रूपाभेदाद्विद्यैक्याद्गुणोपसंहार एवमन्यत्राक्ष्यादि-
त्यसंबन्धिनो ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रो-
पसंहार इति ॥ २० ॥

एवं प्राप्ते प्रचक्ष्महे ।

## न वा विशेषात् ॥ २१ ॥

न चैतदस्ति यद्विद्यैक्यादुपसंहार इति । कुतः । विशेषात् ।
उपास्यरूपविशेषात् । ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्थतयोपा-
स्यत्वमितरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसंबन्धित्वभेदेन रू-
पभेदाद्विद्याभेदः । नैवं शाण्डिल्यविद्यायां उपास्यस्थानं भि-
न्नं । उभयत्र हृदयाधारत्वेनोपास्यत्वात् । अतो व्यवस्थिते
इति ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

दर्शयति चाक्ष्याधारादित्याधारयोर्गुणानुपसंहारं तस्यैतस्य
तदेव रूपं यदमुष्य रूपम् ( छा. १।७।५ ) इत्यादिना रूपाद्यति-
देशेन । स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥ संबन्धा-
धिकरणं समाप्तम् । ( ७ )

## संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

तैत्तिरीयके राणायनीयानां खिलेषु च

1. A. C. read एकत्वात् for ऐक्यात्; B. reads ऐक्येन रूपाभावात् for ऐक्यादुपास्यैक्येन रूपाभेदात्.
2. C. om. रूपाभेदात्.
3. C. reads विद्येत्रयात् for विद्यैक्यात्; A. B. om. उभयोः.
7. C. om. वा after न; E. reads न for वा.
19. C. E. read नारायणीयानाम् for राणायनीयानाम्.

ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान।
ब्रह्म भूतानां प्रथमोथ जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः॥
(तै. ब्रा. २।४।६, अथर्वसं. १९।२२।२१)

इति ब्रह्मणि ज्येष्ठानां वीर्याणां संभृतिर्द्युव्याप्तिश्चेत्यादिगुण-
5 जातमाम्नातम्। तेषामुपासनविशेषमनारभ्याधीतानां गुणानां
सर्वासु विद्यासूपसंहारे प्राप्त उच्यते संभृतिद्युव्याप्त्यपीति। संभृति-
द्युव्याप्तीति समाहारद्वंद्वत्वादेकवद्भावः। संभृत्यादिकमनारभ्या-
धीतमप्यत एव स्थानभेदाद्व्यवस्थाप्यं न सर्वत्रोपसंहर्तव्यम्।
कथमनारभ्याधीतानां स्थानविशेषनियतत्वम्। स्वसामर्थ्यादिति
10 ब्रूमः। द्युव्याप्तिस्तावद्धृदयाद्यल्पस्थानगोचरासु विद्यासु नो-
पसंहर्तुं शक्या। संभृत्यादयोपि तत्सहचारिणस्तत्तुल्य-
देशा इत्यल्पस्थानविषयासु विद्यास्वनुपसंहार्याः। शाण्डि-
ल्यदहरादिविद्यास्वल्पस्थानविषयासु ज्यायान्पृथिव्याः (छा.
३।१४।३) । यावान्वायमाकाशस्तावानेषोन्तर्हृदय आकाशः
15 (छा. ८।१।३) इत्यादयस्तत्र तत्राशक्योपसंहारा मनोमयत्वा-
पहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः॥
२३॥ संभृत्यधिकरणं समाप्तम्। (८)

**पुरुषविद्यायामपि चेतरेषामनाम्नानात्॥ २४॥**

तैत्तिरीयके पुरुषविद्याम्नायते तस्यैवं विदुषो यज्ञस्यात्मा
20 यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः (ना
८०) इत्यादिका। छान्दोग्येपि पुरुषविद्याम्नायते पुरुषो वाव
यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि (छा. ३।१६।१) इत्या-
दिका। तत्र संशयः। किमत्र विद्या भिद्यत उत नेति। पुरुष-
विद्येति नामैक्यात्पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपै-
25 क्यात्तैत्तिरीयके फलसंयोगाश्रवणात्प्राह षोडशं वर्षशतं जी-

25. E. reads प्र ह for प्राह

वति (छा. ३।१६।७) इति च्छान्दोग्ये श्रुतस्यैव पुरुषविद्या-फलत्वात्फलसंयोगस्याप्यविशेषाद्विद्यैक्यमिति प्राप्त उच्यते ।

उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेपि विद्याभेदोस्त्येव । कुतः । इतरेषामनाम्नानात् । एकस्यां शाखायामाम्नातानां गुणा-नामन्यत्रानाम्नानात् । तथा हि यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि (ना. ८०) इत्यादयस्तैत्तिरीयक आम्नाताश्छान्दोग्ये सवनत्वेन नाम्नायन्ते । त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते । छान्दोग्ये (छा. ३।१७।१) श्रुतानामशिशिषादीनां दीक्षा-दित्वकल्पनं तैत्तिरीयके न कृतम् । यजमानपत्न्यादिपरिकल्पनं चान्यथा । अतो रूपमुभयत्र भिद्यते । तथा फलसंयोगोपि भिद्यते । तैत्तिरीयके हि पूर्वानुवाके ब्रह्मणे त्वा महस ओमि-त्यात्मानं युञ्जीत (ना. ७९) इति ब्रह्मविद्यामभिधाय तत्फ-लत्वेन ब्रह्मणो महिमानमाप्नोति (ना. ७९) इत्युक्त्वा तस्यैवं विदुषः (ना. ८०) इत्यादिनाम्नाता पुरुषविद्या तस्यैव ब्रह्म-विदुषो यज्ञत्वकल्पनमिति गम्यते । अतो ब्रह्मविद्याङ्गत्वा-द्ब्रह्मप्राप्तिरेवात्र फलम् । फलवत्संनिधावफलं तदङ्गमिति च न्यायात्तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते । छान्दोग्ये त्वायुष्प्राप्तिफला पुरुषविद्येत्युक्तम् । अतो रूपफल-संयोगयोर्भेदाद्विद्याभेद इत्येकत्राम्नातानां गुणानामितरत्रानुपसं-हारः ॥ २४ ॥ पुरुषविद्याधिकरणं समाप्तम् । (९)

8. B. om. छान्दोग्ये श्रुताना०....रूपमुभयत्र भिद्यते; E. reads आशिशिषा for अशिशिषा; A. om. त्व after दीक्षादि.
10. C. reads अन्यथा after अन्यथा.
14. E. reads अस्यैव for तस्यैव.
16. A. B. om. च after तदङ्गमिति.
17. C. reads तथैवात्राप्याम्नायते ब्रह्मणो महिमानमाप्नोतीति after गम्यते.
18. A. E. read आयुःप्राप्ति for आयुष्प्राप्ति; A. om. फल after रूप.
19. E. reads एकत्र for इतरत्र.

## वेधाद्यर्थभेदात् ॥ २५ ॥

आथर्वणिका उपनिषदारम्भे शुक्रं प्रविध्य हृदयं प्रविध्येत्यादीन्मन्त्रानधीयते। सामगाश्च रहस्यब्राह्मणारम्भे देव सवितः प्रसुव यज्ञं प्रसुव (सा. ब्रा. १।१।१) इत्याद्यामनन्ति।
5 काठकास्तैत्तिरीयकाश्च शं नो मित्रः शं वरुणः (तै. १।१।१) इत्यादिकम्। शाठ्यायनिनश्च श्वेतोश्वो हरिनीलोसीत्यादिकम्। ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयत इन्द्रो ह वै वृत्रं हत्वा महानभवदित्यादि। कौषीतकिनोपि महाव्रतब्राह्मणमेव प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रतमिति। वाजसनेयिनस्तु
10 प्रवर्ग्यं ब्राह्मणं देवा ह वै सत्रं निषेदुः (श. ब्रा. १४। १।१।१) इत्यादि।

तत्र संशयः। किमुपनिषदारम्भेष्वधीताः शुक्रं प्रविध्य। शं नो मित्रः (तै. १।१।१) इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गमुत नेति। किं युक्तम्। विद्याङ्ग-
15 मिति। कुतः। संनिधिसमाम्नानाद्विद्याङ्गत्वप्रतीतेः। यद्यपि शुक्रं प्रविध्येत्यादीनां मन्त्राणां प्रवर्ग्यादेश्च कर्मणः श्रुतिलिङ्गवाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोवगम्यते तथापि शं नो मित्रः (तै. १।१।१)। स ह नाववतु (का. १।१।१, तै. २, तै. ३) इत्यादेर्मन्त्रस्यान्यत्र विनियो-

3. C. reads इत्यादिकान् for इत्यादीन्.
4. A. B. om. आदि after इति.
5. A. B. read काठाः for काठकाः.
6. C. reads हरिनीलोनीति for हरिनीलोसीति.
7. A. B. om. ह before वै.
10. A. B. read प्रवर्ग्य for प्रवर्ग्यम्.
12. C. reads आरम्भे for आरम्भेषु.

गाभावाद्विद्याधिकाराच्च विद्याङ्गत्वमवर्जनीयमिति सर्वासु वि-
द्यासु ते मन्त्रा उपसंहर्तव्या इति प्राप्ते प्रचक्ष्महे ।

वेधाद्यर्थभेदात् । शुक्रं प्रविध्य हृदयं प्रविध्य । ऋतं वदि-
ष्यामि । सत्यं वदिष्यामि (तै. १।१)। ऋतमवादिषम् ।
सत्यमवादिषम् (तै. १।१२)। तेजस्वि नावधीतमस्तु । मा 5
विद्विषावहै (तै. २।१, का. १।१) इत्यादिभिर्लिङ्गैरभिचा-
राध्ययनादिष्वेषां विनियोगावगमान्न विद्याङ्गत्वम् । एतदुक्तं
भवति । यथा हृदयं प्रविध्येत्यादिमन्त्रसामर्थ्याच्छुक्रं प्रवि-
ध्येत्यादीनामभिचारादिशेषत्वमवगम्यत एवमेवर्तं वदिष्यामि
(तै. १।१।१)। तेजस्वि नावधीतमस्तु (तै. २।१, का. 10
१।१) इत्यादिमन्त्रसामर्थ्यादेव स्वाध्यायविधिशेषत्वं शं नो मित्रः
(तै. १।१।१) इत्यादिमन्त्राणामवगम्यते । अतो न तेषां विद्या-
ङ्गत्वमिति । शुक्रं प्रविध्येत्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह
पाठो द्विवाकीर्त्यत्वारण्येनुवाक्यत्वकृतः ॥ २५ ॥ वेधाद्यधिकरणं
समाप्तम् । (१०) 15

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तु-त्युपगानवत्तदुक्तम् ॥ २६ ॥

छन्दोगा आमनन्त्यश्व इव रोमाणि विधूय पापं चन्द्र
इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोक-
मभिसंभवामि (छा. ८।१३।१) इति । आथर्वणिकाश्च 20

---

2. A. B. read इमे for ते.
5. B. om. सत्यमवादिषम्
8. C. E. read वै after यथा.
11. A. E. om. विधि after स्वाध्याय.
19. A. B. read कृत आत्मा for कृतात्मा.
20. C. E. read संभवानि for संभवामि.

तथा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।
( मु. ३।१।३ )

इति । शाठ्यायनिनस्तु तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामित्यादि । कौषीतकिनस्तु तत्सुकृ-
5 तदुष्कृते विधूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम् ( कौ. १।४ ) इति । एवं कचित्पुण्यपापयोर्हानिः क-
चित्प्रियाप्रियेषु तत्प्राप्तिः कचिदुभयं च श्रुतम् । तदुभयमेकै-
कविद्यायां श्रुतमपि सर्वविद्याङ्गमास्थेयम् । सर्वब्रह्मविद्यानिष्ठ-
स्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यंभावित्वात् । प्रही-
10 णविषयत्वाच्चोपायनस्य । तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति ।

तत्रेदं विचार्यते हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं च विकल्पेरन्नुपसंह्रियेरन्वा । किं युक्तम् । विकल्पेर-
न्निति । कुतः । पृथगाम्नानसामर्थ्यात् । समुच्चये हि सर्वदोभ-
15 यानुसंधानं स्यात् । तच्च कौषीतकिवाक्येनैव सिद्धमित्यन्यत्रा-
म्नानमनर्थकमेव स्यात् । अतोनेकत्राम्नानस्य विकल्प एव प्रयो-
जनम् । न चाध्येतृभेदेन परिहर्तुं शक्यम् । अनेकत्राम्नानम-
विशेषपुनःश्रवणं ह्यध्येतृभेदपरिहार्यम् । अत्र तु हानिरेव
द्वयोः शाखयोरुपायनमेव चैकस्याम् । न च विद्याभेदेन व्यव-
20 स्थापयितुं शक्यम् । सर्वशेषभूतमिदमनुसंधानमित्युक्तत्वात् ।
अत्रेदमुच्यते ।

4. C. om. आदि after इति.
7. A. B. om. च after उभयम्.
14. E. reads सर्वत्र for सर्वदा.
15. E. reads कौषीतकी for कौषीतकि.
18. C. om. पुनः.

हानौ तूपायनशब्दशेषत्वादिति । तुशब्दः पक्षं व्यावर्तयति । हानाविति प्रदर्शनार्थम् । केवलायां हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोवश्यंभावी । कुतः । उपायनशब्दशेषत्वात् । उपायनशब्दस्य हानिवाक्यशेषत्वात् । उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम् । विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य । प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते कुशाच्छन्दस्तुत्युपगानवदिति । कौषीतकिनः कुशा वानस्पत्या इत्यामनन्ति । शाठ्यायनिनां त्वौदुम्बर्यः कुशा इति वाक्यं सामान्येन वानस्पत्यत्वेनावगताः कुशा औदुम्बर्य इति विशिषत्तद्वाक्यशेषतामापद्यते । तथा देवासुराणां छन्दोभिरित्यादिनाविशेषेण देवासुराणां छन्दसां प्रसङ्गे देवच्छन्दांसि पूर्वमिति वचनं क्रमविशेषं प्रतिपादयत्तद्वाक्यशेषभावं भजते । तथा हिरण्येन षोडशिनः स्तोत्रमुपाकरोतीत्यविशेषेण प्राप्ते समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति (तै. सं. ६।६ ११, सत्या. श्रौ. सू. ९।७।१९) इति विशेषविषयं वाक्यं तद्वाक्यशेषभावं भजते । तथर्त्विज उपगायन्तीत्यविशेषप्राप्तस्य नाध्वर्युरुपगायेत् (तै. सं. ६।३।१) इति वाक्यमनध्वर्युविषयतामवगमयत्तद्वाक्यशेषत्वमृच्छति । एवं सामान्येनावगतमर्थं विशेषेण व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पः समाश्रयितव्यः । स च संभवन्त्यां गतौ

6. C. om. पुण्यपापयोः.
8. A C. read कालापिनः for कौषीतकिनः.
10. C. reads वानस्पत्या इति for वानस्पत्यत्वेन.
11. A. reads विशेषयत्, B. विशेषम्, for विशिषत्.
13. A. E. read वाक्यशेषतां गच्छति for वाक्यशेषभावं भजते.
16. A B. read विशेषयत् for विशेषविषयम्.
17. B. E. read वाक्यशेषत्वम् for वाक्यशेषभावम्.

न युज्यते । तदुक्तं पूर्वस्मिन्काण्डेपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् (जै. सू. १०।८।४) इति । तदेवं केवलहानोपायनवाक्ययोरेकवाक्यत्वात्केवलस्य हानस्य केवलस्य चोपायनस्याभावाद्विकल्पो नोपपद्यते । कौषी-
5 तकिनामुभयाम्नानमविशेषपुनःश्रवणत्वेन प्रतिपत्तृभेदादविरुद्धम् ॥ २६ ॥ हान्यधिकरणं समाप्तम् । (११)

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

सुकृतदुष्कृतयोर्हानमुपायनं च सर्वासु विद्यासु चिन्तनीयमित्युक्तम् । तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि
10 चोत देहवियोगकाल एवेति विशय उभयत्रेति युक्तम् । उभयथा श्रुतत्वात् । एवं हि कौषीतकिनः समामनन्ति स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति (कौ. १।३) इत्युपक्रम्य स आगच्छति विरजां नदीम् । तां मनसात्येति । तत्सुकृतदुष्कृते धूनुते (कौ. १।४) इति । अत्र वाक्येऽध्वनि सुकृत-
15 दुष्कृतहानिः प्रतीयते । ताण्डिनस्त्वश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि (छा. ८।१३।१) इति । अत्र तु देहवियोगकाल एवेति प्रतीयते । शाट्यायनकेपि तस्य पुत्रा दा-

1. E. reads वाक्यशेषत्वात् for वाक्यशेषः स्यात्.
3. A. B. read केवल for केवलस्य.
4. E. reads कौषीतकीनाम् for कौषीतकिनाम्.
11. A. E. om. हि after एवम्.
15. C. reads दुष्कृतयोः for दुष्कृत.
16. A B. read कृत आत्मा for कृतात्मा.
17. C. E. read संभवानि for संभवामि.
18. B. C. om. एव after वियोगकाले.

यमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति पुत्रेषु दायसंक्रान्तिसमकालं सुकृतदुष्कृतसंक्रमणं श्रूयमाणं देहवियोगकाल इति प्रतीयते । अतः सुकृतदुष्कृतयोरेकदेशो देहवियोगकाले हीयते शेषस्त्वध्वनीति प्राप्त उच्यते ।

सांपराय इति । सांपराये देहापक्रमणकाल एव विदुषः सुकृतदुष्कृते निरवशेषं हीयेते । कुतः । तर्तव्याभावात् । विदुषो देहवियोगात्पश्चात्सुकृतदुष्कृताभ्यां तरितव्यभोगाभावात् । विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि सुकृतदुष्कृताभ्यां भोक्तव्ये सुखदुःखे न विद्येते । तथा ह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखोपभोगाभावमधीयतेशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ( छा. ८।१२।१ ) । एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।३।४ ) । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये ( छा. ६।१४।२ ) इति च ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ २८ ॥

एवमर्थस्वाभाव्यात्सुकृतदुष्कृतहानिकालेऽवधृते सत्युभयाविरोधेन श्रुतेरर्थस्वभावस्य चाविरोधेन च्छन्दतो यथेष्टं पदानामन्वयो वर्णनीयः । कौषीतकिवाक्ये तत्सुकृतदुष्कृते धूनुते ( कौ. १।४ ) इति चरमश्रुतो वाक्यावयव एतं देवयानं पन्थानमापद्य ( कौ. १।३ ) इति प्रथमश्रुतावयवात्प्रागनुगमयितव्य इत्यर्थः ॥ २८ ॥

2. E. reads वियोगकालम् for वियोगकाले.
3. B. E. read गम्यते for प्रतीयते.
5. E. reads उत्क्रमण for अपक्रमण.
8. C. reads भोक्तव्य for भोक्तव्ये.
14. A. B. om. च after इति.
18. E. reads कौषीतकी for कौषीतकि.

अत्र पूर्वपक्षी प्रत्यवतिष्ठते ।

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥**

सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः शेषस्य पश्चादित्युभयथा कर्मक्षये सत्येव गतेरर्थवत्त्वम् । देवयानगति-
5 श्रुतेरर्थवत्त्वमित्यर्थः । अन्यथा हि विरोधः । देहवियोगकाल एव सर्वकर्मक्षये सूक्ष्मशरीरस्यापि विनाशः स्यात् । तथा सति केवलस्यात्मनो गमनं नोपपद्यते । अत उत्क्रान्तिसमये विदुषो निःशेषकर्मक्षयोनुपपन्नः ॥ २९ ॥

अत्रोत्तरम् ।

10 **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

उपपन्न एवोत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् । तल्लक्षणा-र्थोपलब्धेः । क्षीणकर्मणोप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणा-र्थोपलब्धेः । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छा. ८।३।४) । स तत्र पर्येति जक्षत्क्रीडन्रममाणः (छा. ८।
15 १२।३) । स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति (छा. ७।२५।२) । स एकधा भवति त्रिधा भवति (छा. ७।२६।२) इत्यादिषु देहसंबन्धाख्योर्थो ह्युपलभ्यते । अतः क्षीणकर्मणोपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते । कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेवतिष्ठत इति चेत् ।
20 विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वयं सूक्ष्मशरीरस्या-नारम्भिकापि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्व-

2. B. om. अन्यथा.
6. E. reads हि after एव; E. om. वि before नाशः.
8. A. B. read नोपपन्नः for अनुपपन्नः.
12. C. reads अथ for अपि; B. reads स्वरूप for स्वरूपस्य.
17. C. reads असंबन्ध for संबन्ध.

कर्मणां च निरवशेषक्षयेपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति । लोकवत् । यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तडागादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तडागादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादिकं कुर्वन्ति तद्वत् ॥ ३० ॥ 5

अथ स्याज्ज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयाद्देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते सुखदुःखानुभवो न विद्यत इति यदुक्तं तन्नोपपद्यते । वसिष्ठापान्तरतमःप्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्ध्वं देहान्तरसंगमः पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यत 10 इति । अत उत्तरं पठति ।

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥**

नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाश उक्तः । अपि तु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिका गतिः प्राप्ता तेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृत- 15 हानिरुक्ता । वसिष्ठादीनां त्वाधिकारिकाणां न देहपातादनन्तर-

2. A. B. om. लोकवत्.

3. A. B. read तटाक for तडाग here and in next line.

5. A. B. read पानादि for पानादिकम्.

6. C. reads अवर after पर.

9. A. B. E. read अवान्तरतपः for अपान्तरतमः.

14-16. B. reads तेषाम् for येषां ज्ञानिनां देह०...आधिकारिकाणां न.

14-15. A. reads अर्चिरादि for अर्चिरादिका.

15. C. reads तत् for ज्ञानिनाम्.

16. C. reads च for तु after वसिष्ठादीनाम्; C. reads देहपात for देहपातात्.

मार्चिरादिगतिप्राप्तिः । प्रारब्धस्याधिकारस्यासमाप्तत्वात् । तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते । प्रारब्धस्य हि कर्मणो भोगादेव क्षयः । अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते । 5 अतस्तेषां न देहपातादनन्तरमर्चिरादिगतिप्राप्तिः ॥ ३१ ॥
सांपरायाधिकरणं समाप्तम् । (१२)

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥**

उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिरुत सर्वेषां ब्रह्मोपासननिष्ठानामिति 10 संशय इतरेष्वनाम्नानाद्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ( छा. ५।१०।१ )। श्रद्धां सत्यमुपासते ( बृ. ६।२।१५ ) इतीतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते ।

अनियम इति । सर्वेषां सर्वोपासननिष्ठानां तयैव गन्तव्य- 15 त्वात्तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि सति शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामविरोधः । अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावच्छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वब्रह्मोपासननिष्ठानां गमनमाह । य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभि- 20 संभवन्ति ( बृ. ६।२।१५ ) इति वाजसनेयके तत्र इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति

1. C. E. read अर्चिरादिका for अर्चिरादि.
5. C. E. read देहपात for देहपातात्.
8. A. B. read उपकोशल for उपकोसल.
18. E. om. ब्रह्म after सर्व.
19. C. E. read इमे for अमी.

(छा. ५।१०।१) इति च्छान्दोग्ये य इत्थं विदुः (छा. ५।१०।१) इति पञ्चाग्निविद्यानिष्ठान्ये चेमेऽरण्य इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्चिरादिगतिरुपदिश्यते । सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१)। सत्यं त्वेव विजिज्ञासितव्यम् (छा. ७।१६।१) इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः । तपः- 5
शब्दस्यापि तेनैकार्थ्यात्सत्यतपःशब्दाभ्यां ब्रह्मैवाभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम् । सत्यं त्वेव विजिज्ञासितव्यम् (छा. ७।१६।१) इत्युपक्रम्य श्रद्धा त्वेव विजिज्ञासितव्या (छा. ७।१९।१) इति । स्मृतिरपि

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । 10
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ (गी. ८।२४)

इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह । एवंजातीयकाः श्रुतिस्मृतयो बह्व्यः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥ अनियमाधिकरणं समाप्तम् । (१३) 15

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

बृहदारण्यके श्रूयत एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राण- 20
ममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन ।...एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (बृ. ३।८।८-९) इति । तथाथर्वणेऽथ परा यया तदक्षरमधि-

3. C. E. read अर्चिरादिका for अर्चिरादि.
14. C. E. read उपकोशल for उपकोसल.
21. E. reads असुखम for अमुखम्.

गम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् (मु. १।१।५-६) इति । तत्र संशयः किमिमेक्षरशब्दनिर्दिष्टब्रह्मसंबन्धितया श्रुता अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मविद्यास्वनुसंधेया उत यत्र श्रूयन्ते तत्रै-
5 वेति । किं युक्तम् । यत्र श्रुतास्तत्रैवेति । कुतः । विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात् । प्रतिषेधरूपाणामेषां गुणानामानन्दादिवत्स्वरूपावगमोपायत्वाभावाच्च । आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते । निरालम्बनप्रतिषेधायोगात् । एवं
10 प्राप्ते प्रचक्ष्महे ।

अक्षरधियां त्ववरोध इति । अक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिधियां सर्वब्रह्मविद्यास्ववरोधः संग्रहणमित्यर्थः । कुतः । सामान्यतद्भावाभ्याम् । सर्वेपूपासनेपूपास्यस्याक्षरस्य ब्रह्मणः समानत्वादस्थूलत्वादीनां तत्स्वरूपप्रतीतौ भावाच्च । एतदुक्तं
15 भवति । असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम् । न च केवलानन्दादि ब्रह्मणोसाधारणमाकारमुपस्थापयति । प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात् । हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणोसाधारणं रूपम् । प्रत्यगात्मनस्तु स्वतो हेयविरहिणोपि हेयसंबन्धयोग्यतास्ति । हेयप्रत्यनीकत्वं च चिदचिदात्मकप्रपञ्चभूतस्थूलत्वादिविपरीतरूपम् । अतोसाधारणाकारेण ब्रह्मानुम-
20 (see above)

---

2. A. reads इत्येतत् for इमे.

4. A. om. स्व before रूपाः.

7. A. B. om. गुणानाम्.

19. C. om. हेय before प्रत्यनीकत्वम्; B. om. च after प्रत्यनीकत्वम्.

21. A. B. read दधतः for दधता.

स्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्सर्वासु ब्रह्मविद्यासु तथैव ब्रह्मानुसंधेयमिति । गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाहौपसदवदिति । यथा जामदग्न्यचतूरात्रपुरोडाशाद्युपसद्गुणभूतः सामवेदपठितोऽग्निर्वै होत्रं वेतु (ता. ब्रा. २१।१०।११) इत्यादिको मन्त्रः प्रधानानुवर्तितया याजुर्वैदिकेनोपांशुत्वेन प्रयुज्यते। तदुक्तं प्रथमे काण्डे गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः (जै. सू. ३।३।९) इति॥३३॥ 5

नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद्गुणानां न प्रधानानुवर्तित्वात्सर्वकर्मा सर्वगन्धः सर्वरसः (छा. ३।१४।२) इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात् । तत्राह । 10

## इयदामननात् ॥ ३४ ॥

आमननमाभिमुख्येन मननमनुचिन्तनम् । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसंधेयत्वेन प्राप्तं यदस्थूलत्वादिविशेषितमानन्दादिकम् । येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसंधानं न संभवति तदेव सर्वत्रानुवर्तनीयं तच्चेयदेवेत्यर्थः । इतरे तु सर्वकर्मत्वादयः प्रधानानुवर्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥ अक्षरध्यधिकरणं समाप्तम् । (१४) 15

3. A. B. read चतूरात्रे for चतूरात्र; A. reads पुरोडाश्य for पुरोडाशादि.

4. A. B. read गुणभूत for गुणभूतः.

5. A. B. read वैदिकेषु for वैदिकेन.

11. B. om. तत्राह.

13. C. om. अनु before चिन्तनम्.

## अन्तरा भूतग्रामवत्स्वात्मनोन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥

बृहदारण्यक उपस्तप्रश्न एवमाम्नायते यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व ( बृ. ३।४।१ )
5 इति । तस्य प्रतिवचनं यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योपानेनापानिति स त आत्मा ( बृ. ३।४।१ ) इत्यादि । अतुष्टेन तेन पुनः पृष्ट आह न दृष्टेर्द्रष्टारं पश्येः। न श्रुतेः श्रोतारं शृणुयाः । न मतेर्मन्तारं मन्वीथाः । न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरः । अतोन्यदार्तम् (बृ. ३।४।२)
10 इति । तथा तदनन्तरं कहोलप्रश्ने चैवमाम्नायते यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व ( बृ. ३।५।१ ) इति । प्रतिवचनं च योशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एवं हैतमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च ( बृ. ३।५।१ ) इत्याद्यतोन्यदार्तम् ( बृ. ३।५।१ )
15 इत्यन्तम् ।

तत्र संशय्यते किमनयोर्विद्याभेदोस्ति नेति । किं युक्तम् । भेद इति । कुतः । रूपभेदात् । प्रतिवचनभेदाद्रूपं भिद्यते । प्रश्नस्यैकरूप्येपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते। पूर्वत्र प्राणनादीनां कर्ता सर्वान्तरात्मत्वेनोच्यते परत्राशनाया-
20 पिपासादिरहितः । अतः पूर्वत्र प्राणिता देहेन्द्रियबुद्धिमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते । परत्र तु तदतिरिक्तोशनायापिपासादिरहितः परमात्मा । अतो रूपं भिद्यते । भूतग्राम-

16. C. reads विद्यते for अस्ति.
19. B. reads प्राण for प्राणन.
20. C. reads प्राणि for प्राणिता.
20–1. C. reads मनःप्राणबुद्धि for बुद्धिमनःप्राण.

वतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वा-
न्तरत्वमप्युपपन्नम् । यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्राम-
मात्रापेक्षत्वेनापेक्षिकं तथापि तदेव ग्राह्यम् । अन्यथा मुख्या-
न्तरात्मपरिग्रहलोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते ।
प्रतिवचनं हि पूर्वत्र प्रत्यगात्मविषयम् । परमात्मनः प्राणितृ- 5
त्वापानितृत्वाद्यसंभवात् । परं च परमात्मविषयम् । अशनाया-
द्यतीतत्वात् । तदिदमाशङ्कतेन्तरा भूतग्रामवत्स्वात्मनोन्यथा
भेदानुपपत्तिरिति चेदिति । अन्तरा सर्वान्तरत्वेन प्रथमप्र-
तिवचनं भूतग्रामवत्स्वात्मनः । भूतग्रामवांस्तदन्तरः स्वात्मा प्रत्य-
गात्मा सर्वान्तर इत्युच्यत इत्यर्थः । अन्यथा यः प्राणेन प्राणिति 10
( बृ. ३।४।१ ) योशनायापिपासाद्यतीत इति प्रतिवचनभेदा-
नुपपत्तिरिति चेन्न ।

अत्रोत्तरं नेति । न विद्याभेद इत्यर्थः । उभयत्र परविषय-
त्वात्प्रश्नप्रतिवचनयोः । तथा हि यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा
सर्वान्तरः ( बृ. ३।४।१ ) इति प्रश्नस्तावत्परमात्मविषय एव । 15
ब्रह्मशब्दस्य परमात्मासाधारणत्वेपि प्रत्यगात्मन्यपि कदाचिदुप-
चरितप्रयोगदर्शनात्तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं यत्साक्षाद्ब्र-
ह्मेति विशेषणं क्रियते । अपरोक्षत्वमपि सर्वदेशसर्वकालसं-
बन्धित्वं सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इत्यनन्तत्वेना-
वगतस्य परमात्मन एवोपपद्यते । सर्वान्तरत्वमपि यः पृथिव्यां 20

1. C. reads अन्तरत्वेन for अन्तरात्मत्वेन.
4. C. reads लाभात् for लोभात्; A. B. read उपपद्येत for उपपद्यते.
6. C. reads पिपासा after अशनाया.
8. E. reads सर्वान्तरात्मत्वेन for सर्वान्तरत्वेन.
17. C. reads परमात्मनः for परमात्म.
18. B. om. काल.

तिष्ठन्पृथिव्या अन्तरः ( श. ब्रा. १४।६।७।७ ) इत्यारभ्य य आत्मनि तिष्ठन्नात्मनोन्तरः ( श. ब्रा. १४।६।७।३० ) इति सर्वान्तर्यामिणः परमात्मन एव संभवति । प्रतिवचनमपि तथैव परमात्मविषयं यः प्राणेन प्राणिति ( बृ. ३।४।१ ) इति । 5 निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव । प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात् ।

एवमजानतोपस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन प्रत्यगात्मनोपि साधारणत्वं प्रतिवचनस्य मत्वातुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं 10 परमात्मानमाह न दृष्टेर्द्रष्टारं पश्येः ( बृ. ३।४।२ ) इत्यादिना । इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः । तस्य सुषुप्तिमूर्छादौ प्राणनादेरकर्तृत्वात् । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् ( तै. २।७ ) इति सर्वप्राणिप्राणनहेतुत्वं 15 हि परमात्मन एवान्यत्र श्रुतम् । अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये । एवमुत्तरे अपि । अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात् । उभयत्रातोन्यदार्तम् ( बृ. ३।४।२,३।५।१ ) इत्युपसंहारश्चैकरूपः । प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणोशनायाद्यतीतत्वप्रतिपादनाय । तत्र दृष्टा- 20 न्तमाहोपदेशवदिति । यथा सद्विद्यायामुत तमादेशमप्राक्ष्य-

---

5. B. reads संभवति after परमात्मन एव.

7. A. B. om. उक्तम्.

9. C. reads प्राणस्य for प्राणनस्य.

11. C. reads इन्द्रियादीनाम् for इन्द्रियाधीनानाम्.

15. A. B. om. हि.

18-9. A. reads प्राणने for प्राणन.

(छा. ६।१।१) इति प्रक्रान्ते सदुपदेशे भगवांस्त्वेवमेतद्ब्रवीतु (छा. ६।१।४) इति भूय एव मा भगवान्विज्ञापयतु (छा. ६।५।४) इति प्रश्नस्यैषोणिमैतदात्म्यमिदं सर्वं तत्सत्यम् (छा. ६।८।७) इति प्रतिवचनस्य च भूयो भूय आवृत्तिः सतो ब्रह्मणस्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते 5 तद्वत्। अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्नप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपैक्याद्विद्यैक्यम् ॥ ३५ ॥

अथ स्याद्यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये तथापि विद्याभेदोवर्जनीयः। एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यमिनरत्राशनायाद्यतीतत्वेनेत्युपास्यगुणभेदेन रूपभेदात्। प्रष्टृभे- 10 दाच्च। पूर्वत्र ह्युषस्तः प्रष्टोत्तरत्र तु कहोल इति। तत्राह।

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

नात्र विद्याभेदः। प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः। प्रश्नद्वयं तावत्सर्वान्तरात्मत्वविशिष्टब्रह्मविषयम्। द्वितीये प्रश्ने यदेव साक्षादपरोक्षा- 15 द्ब्रह्म य आत्मा सर्वान्तरः (बृ. ३।५।१) इत्येवकारश्च पूर्वत्रोपस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति। प्रतिवचनं चोभयत्रैष त आत्मा सर्वान्तरः (बृ. ३।४।१, ३।५।१) इति सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव। विधिप्रत्ययश्चोत्तरत्रैव दृश्यते तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य 20 बाल्येन तिष्ठासेत् (बृ. ३।५।१) इति। एवं सर्वान्तरात्मत्व-

---

2. C. om. इति after ब्रवीतु; C. E. read एवमाह for एव मा.
5. C. reads तस्मात्, E. तत्तत्, for तत् before माहात्म्य.
6. B. reads हेतुत्वाय for हेतुत्व.
9. A. B. read उपास्यः for उपास्यम्.
18. E. reads सः for एषः before त आत्मा.
21. A. B. om. एवम्.

विशिष्टब्रह्मैकविषयत्वे द्वयोरवधृते सत्येकस्मिन्नेव सर्वान्तरा-
त्मत्वविशिष्टे ब्रह्मण्युपास्य उषस्तकहोलयोरितरेतरबुद्धि-
व्यतिहारः कर्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः
सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः सा कहोलेनापि प्रष्ट्रा कार्या ।
5 या च कहोलस्य तस्यैव ब्रह्मणोशनायाद्यतीतत्वविषया बुद्धिः
सोषस्तेनापि कार्या । एवं व्यतिहारे कृत उभाभ्यां सर्वा-
न्तरस्य ब्रह्मणो जीवव्यावृत्तिरवधृता भवति । एवं सर्वान्तरा-
त्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वा-
शनायाद्यतीतत्वप्रतिपादनेन विशिंषन्ति हि याज्ञवल्क्यस्य प्रति-
10 वचनानि । अतो ब्रह्मणः सर्वान्तरात्मत्वमेवोपास्यगुणः । प्राण-
नहेतुत्वादयस्तु तस्योपपादका नोपास्याः ।

ननूपास्यगुणः सर्वान्तरात्मत्वमेव चेत्प्राणनहेतुत्वस्याशना-
याद्यतीतत्वस्य च प्रष्ट्रोर्व्यतिहृत्यानुसंधानं किमर्थम् । तदुच्यते ।
सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मण्यु-
15 षस्तेनावधृते सति कहोलेन जीवस्य सर्वात्मनासंभावि-
तेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोनुसंधेय इति
कृत्वा पुनः प्रश्नः कृतः । याज्ञवल्क्योपि तदभिप्रायमभिज्ञाय
प्रत्यगात्मनोसंभावितमशनायादिप्रत्यनीकत्वमुक्तवान् । अतश्चो-
पास्यस्य व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः
20 कर्तव्यः । इतरवत् । यथेतरत्र सद्विद्यायां (छा. ६) भूयो भूयः
प्रश्नैश्च प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते न पुनः पूर्व-
प्रतिपन्नाद्गुणाद्गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते तद्वत् ॥३६॥

7. E. reads एनम् for एवम्.
8. C. om. सर्वे before प्राणि.
11. A. B. read एव after तस्य.
19. C. reads उपास्यप्रीतिव्यावृत्ति for उपास्यस्य व्यावृत्तिप्रतीति.
21. A. B. om. च after प्रश्नैः.

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्तत्राह ।

## सैव हि सत्यादयः ॥ ३७ ॥

सैव हि सच्छब्दाभिहिता परमकारणभूता परा देवतैव सेयं देवतैक्षत ( छा. ६।३।२ ) । तेजः परस्यां देवतायाम् 5 ( छा. ६।८।६ ) इति प्रकृता यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति ( छा. ६।९।१ ) इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते । यत ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा ( छा. ६।८।७ ) इति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते । 10

केचित्तु व्यतिहारो विशिंषन्ति हीतरवत् । सैव हि सत्यादय इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति ।

तत्र पूर्वेण त्वं वाहमस्मि भगवो देवते । अहं वै त्वमसि भगवो देवते ( जाबा. ) । तद्योहं सोसौ योसौ सोहम् ( ऐ. आ.२ ।२।४।६ ) इति वाक्ये जीवपरयोर्व्यतिहारानुसंधानं प्रति- 15 पाद्यत इत्युच्यत इत्याहुः । तत्सर्वं खल्विदं ब्रह्म ( छा. ३। १४।१ ) । ऐतदात्म्यमिदं सर्वम्....तत्त्वमसि ( छा. ६।८।७ ) इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम् । तत्तु वक्ष्यत्यात्मेति तूपगच्छन्ति ग्राहयन्ति च ( ब्र. सू. ४।१।३ ) इति । न च सर्वात्मत्वा- 20

1. C. reads अत्रापि for तत्रापि.

4. B. reads पर for परा.

6. B. reads मधुनि for मधु after सोम्य.

13. A. B. om. भगवो देवते after त्वमसि.

18. B. reads तत्र for नात्र.

नुसंधानातिरेकेण परस्मिन्ब्रह्मणि जीवत्वानुसंधानं जीवे च परब्रह्मत्वानुसंधानं तथ्यं संभवति ।

उत्तरेण च सूत्रेण स यो ह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म (बृ. ५।४।१) इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य तद्यत्सत्य-
5 मसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेक्षन् (बृ. ५।५।२) इत्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रति-
पाद्यत इति तदप्ययुक्तम् । उत्तरवाक्येक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव न वा विशेषात् (ब्र. सू. ३।३।२१) इत्यनेन प्रतिपादितत्वात् । न च द्वयोरनयोर्व्याहृत्यादिशरीर-
10 कत्वेन रूपवतोर्हन्ति पाप्मानं जहाति च य एवं वेद (छा. ५।५।३) इति च पृथक्संयोगचोदनावतोर्द्वयोरुपासनयोः स यो ह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् (बृ. ५।४।१) इति संयोगरूपादिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः संभवति । न च हन्ति पाप्मानं जहाति
15 (बृ. ५।५।३) इति च गुणफलाधिकारत्वम् । प्रमाणाभावात् । पूर्वेणैकविद्यात्वं प्रमाणमिति चेन्न । इतरेतराश्रयत्वात् । एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव प्रधानफलत्वेनोत्तरयोः फलयोर्गुण-फलत्वं तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात्पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमित्येवमादिभिर्यथोक्तप्रकारमेव सूत्र-
20 द्वयम् ॥ ३७ ॥ अन्तरत्वाधिकरणं समाप्तम् । (१५)

2. C. om. सम् before भवति.

5. C. E. read अक्षिन् for अक्षन्.

10. C. om. च after जहाति.

15. B. om. च after इति.

17. B. om. सति.

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

छान्दोग्ये श्रूयतेथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम् ( छा. ८।१।१ ) इत्यादि । वाजसनेयके च स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेषु य एषोन्तर्हृदय आकाश- 5
स्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः ( बृ. ४।४।२२ ) इत्यादि । तत्र संशयः किमनयोर्विद्याभेद उत नेति । किं युक्तम् । भेद इति । कुतः । रूपभेदात् । अपहतपाप्मत्वादिगुणाष्टकविशिष्ट आकाशश्छान्दोग्य उपास्यः प्रतीयते । वाजसनेयके त्वाकाशे शयानो वशित्वादिगुणविशिष्ट उपास्यः प्रतीयते । 10
अतो रूपभेदाद्विद्याभेद इति प्राप्ते प्रचक्ष्महे ।

न भेद इति । कुतः । रूपाभेदात् । इतरत्र तत्र च कामाद्येव हि रूपम् । वाजसनेयके छान्दोग्ये च सत्यकामत्वादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुत एतदवगम्यते । आयतनादिभ्यः । हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव वि- 15
द्येति प्रत्यभिज्ञायते । वशित्वादयश्च वाजसनेयके श्रुताश्छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसंकल्पत्वस्य विशेषा एवेति सत्यसंकल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति । अतो रूपं न भिद्यते । संयोगोपि परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।३।४। ) । 20
अभयं वै ब्रह्म भवति ( बृ. ४।४।२५ ) इति ब्रह्मप्राप्तिरूपो न भिद्यते । आकाशशब्दश्छान्दोग्ये परमात्मविषय इति दहर

---

3. E. reads अन्तर आकाशः for अन्तराकाशः.

12. B. reads भेदात् for अभेदात्.

13. E. om. त्व after सत्यकाम.

18. B. om. त्व after सकल्प.

उत्तरेभ्यः ( ब्र. सू. १।३।१३ ) इत्यत्र निर्णीतम् । वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणात्तस्य शयानस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य तस्यान्ते सुषिरं सूक्ष्मम् ( ना. १३।२ ) इति हृदयान्तर्गतस्य सुषिरशब्दवाच्य-
5 स्यावकाशस्याभिधायकत्वमवगम्यते । अतो विद्यैक्यम् ॥ ३८ ॥

अथ स्याद्यदुक्तं वाजसनेयके वशित्वादिभिः सह सत्यका-मत्वादिसद्भावोवगम्यत इति तन्नोपपद्यते । वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात् । तदभावश्च

मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन ।
10 मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥
एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् । ( बृ. ४।४।१९-२० )

इति प्रकृतेन वाक्येन स एष नेति नेत्यात्मा ( बृ. ४।४।२२ ) इत्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेष-त्वप्रतीतेरवगम्यते । अतो वशित्वादयोपि स्थूलत्वादिवन्नि-
15 षेध्या इति प्रतीयन्ते । अत एव च्छान्दोग्येपि सत्यकाम-त्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते । अतोपार-मार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थेपूपासनेषु लोप इति । तत्राह ।

## आदरादलोपः ॥ ३९ ॥

20 ब्रह्मगुणत्वेन प्रमाणान्तराप्रतिपन्नानां गुणानामेषां सत्य-कामत्वादीनां तस्मिन्यदन्तस्तदन्वेष्टव्यम् ( छा. ८।१।१ ) । एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोपिपासः

---

5. C. om. अवकाशस्य; E. reads आकाशस्य for अवकाशस्य.

13. E. reads वक्ष्यमाणेन after इति.

14. C. reads अणुत्व after स्थूलत्व.

सत्यकामः सत्यसंकल्पः ( छा. ८।१।५ ) । सर्वस्य वशी सर्वस्येशानः ।.... एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय ( बृ. ४।४।२२ ) इत्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः । अपि तूपसंहार एव कार्यः । 5 छान्दोग्ये तावत्तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ( छा. ८।१।६) इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनं विधायाथ य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति ( छा. ८।१।६ ) इत्यवेदननिन्दा 10 क्रियमाणा गुणविशिष्टवेदनस्यादरं दर्शयति । तथा वाजसनेयके सर्वस्य वशी सर्वस्येशानः।...एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः ( बृ. ४।४।२२ ) इति भूयो भूय ऐश्वर्योपदेशाद्गुणेष्वादरः प्रतीयते । एवमन्यत्रापि ।

नच मातापितृसहस्रेभ्योपि वत्सलतरं शास्त्रं प्रतारकवद- 15 पारमार्थिकान्निरसनीयान्गुणान्प्रमाणान्तराप्रतिपन्नानादरेणोपदिश्य संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान्मुमुक्षून्भूयोपि भ्रमयितुमलम् । नेह नानास्ति किंचन ( बृ. ४।४।१९ ) । एकधैवानुद्रष्टव्यम् ( बृ. ४।४।२० ) इति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधानुदर्शनं विधाया- 20 ब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव प्रपञ्चितः । स एष नेति नेत्यात्मा ( बृ. ४।४।२२ ) इत्यत्र चेतिशब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं परामृश्य न

9. A. reads सर्वान् for सत्यान्.
11. E. reads आदरणीयताम् for आदरम्.
15. E. reads वात्सल्यपरम् for वत्सलतरम्.
23. C. E. read प्रकारम् for आकारम्.

तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते । तदेव चानन्तरमुपपादयत्यग्राह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्जते । अव्यथितो न व्यथते न रिष्यति ( बृ. ४।४।२२ ) इति । प्रमाणान्तरग्रा-
5 ह्यविसजातीयत्वात्प्रमाणान्तरेण न गृह्यते । विशरणीयविस-जातीयत्वान्न विशीर्यते । एवमुत्तरत्रानुसंधेयम् । छान्दो-ग्येपि नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः ( छा. ८।१।५ ) इति सर्व-विसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन्सत्यकामत्वादयो विधी-
10 यन्ते ॥ ३९ ॥

नन्वेवमपि तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्का-मांस्तेषां सर्वेषु लोकेषु कामचारो भवति । स यदि पितृलोक-कामो भवति ( छा. ८।१।६ ) इत्यादिना सत्यकामत्वादिगुण-विशिष्टवेदनस्य सांसारिकफलसंबन्धश्रवणान्मुमुक्षोर्ब्रह्म प्रेप्सोर्न
15 सगुणं ब्रह्मोपास्यम् । परविद्याफलं च परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।३।४ ) इतीदमेव । अतः सत्य-कामत्वादयो ब्रह्म प्रेप्सोर्नोपसंहार्या इति । अत उत्तरं पठति ।

## उपस्थितेतस्तद्वचनात् ॥ ४० ॥

उपस्थिनिरुपस्थानं ब्रह्मोपसंपत्तिः । उपस्थिते ब्रह्मोपसंपन्ने
20 सर्वबन्धविनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मन्यत एवो-

2. A. B. read उपपादयन्ति for उपपादयति; A. B. om. हि before गृह्यते.

3. E. reads सज्यते for सज्जते.

5. B. om न after प्रमाणान्तरेण.

7. A. B. read जीर्यते for जीर्यति.

13. E. om. त्व after सत्यकाम.

पसंपत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः । स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम् (छा. ८।१२।३) । स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति (छा. 5 ७।२५।२) इति । तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते । अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वान्मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥ ४० ॥ कामाद्यधिकरणं समाप्तम् । (१६)

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥ 10

ओमित्येतदक्षरमुद्गीथमुपासीत (छा. १।१।१) इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत्कर्माङ्गत्वेन निरूढानुष्ठानानीत्युद्गीथाद्युपासनसंबन्धिनो यदेव विद्यया करोति श्रद्ध- 15 योपनिषदा तदेव वीर्यवत्तरं भवति (छा. १।१।१०) इति वर्तमाननिर्देशस्य पर्णतादिसंबन्ध्यपापश्लोकश्रवणवत्पृथक्फलत्वकल्पनायोगात्क्रतुषु नियमेनोपसंहार्याणीत्येवं प्राप्ते प्रचक्ष्महे तन्निर्धारणानियम इति । निर्धारणं निश्चयेन मनसोऽवस्थापनं ध्यानमित्यर्थः । तन्निर्धारणानियमः कर्मसू- 20 द्गीथाद्युपासनानामनियमः । कुतः । तद्दृष्टेः । उपलभ्यते ह्युपासनानुष्ठानानियमः । तेनोभौ कुरुतो यश्चैतदेवं वेद

---

3. C. om. ज्ञातिभिर्वा.

14. C. reads रूढानि for निरूढानुष्ठानानि.

16. C. om. भवति.

यश्च न वेद ( छा. १।१।१० ) इत्यविदुषोप्यनुष्ठानवचनात् ।
न चाङ्गत्वे सत्युपासनस्यानुष्ठानानियम उपपद्यते । एवमुपा-
सनस्यानङ्गत्वे निश्चिते सत्युपासनविधेः फलाकाङ्क्षायां रात्रि-
सत्रन्यायेन वीर्यवत्तरत्वं कर्मफलात्पृथग्भूतमेव फलमित्यवग-
5 म्यते । किमिदं वीर्यवत्तरत्वम् । कर्मफलस्यैवाप्रतिबन्धः ।
प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन । तावन्तं कालं
तदभावोप्रतिबन्धः । स ह्यप्रतिबन्धः कर्मफलात्स्वर्गादिलक्षणा-
त्पृथग्भूतमेव फलम् । तदिदमुच्यते पृथग्घ्यप्रतिबन्धः फल-
मिति । अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वाद्गोदोहनादिवत्क-
10 र्मसूद्गीथाद्युपासनानामनियमेनोपसंहारः ॥ ४१ ॥ तन्निर्धारणानि-
यमाधिकरणं समाप्तम् । ( १७ )

## प्रदानवदेव तदुक्तम् ॥ ४२ ॥

दहरविद्यायां तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्का-
मान् ( छा. ८।१।६ ) इति दहराकाशस्य परमात्मन उपा-
15 सनमुक्त्वैतांश्च सत्यान्कामानिति गुणानामपि पृथगुपासनं
विहितम् । तत्र संशयो गुणचिन्तनेपि तत्तद्गुणविशिष्टतया
दहरस्यात्मनश्चिन्तनमावर्तनीयमुत नेति । दहराकाश-
स्यैवापहतपाप्मत्वादीनां गुणित्वात्तस्य च सकृदेवानुसंधातु
शक्यत्वाद्गुणार्थं तच्चिन्तनं नानुवर्तनीयमिति प्राप्त उच्यते ।

1. C. reads अति for अपि after अविदुषः.

7. A. B. read हि after तदभावः; C. om. स ह्यप्रतिबन्धः.

10. C. reads न नियमेन for अनियमेन.

16. C. om. तत्र before तद्गुण.

18. C. reads गुणत्वात् for गुणित्वात्; E. reads सदा for सकृत्.

19. A. B. read आ for अनु before वर्तनीयम्.

प्रदानवदेवेति । प्रदानवदावर्तनीयमेवेत्यर्थः । यद्यपि दहराकाश एक एवापहतपाप्मत्वादीनां गुणानां गुणी । स च प्रथमं चिन्तितः । तथापि स्वरूपमात्राद्गुणविशिष्टाकारस्य भिन्नत्वादपहतपाप्मा विजरः ( छा ८।१।५ ) इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात्पूर्वं स्वरूपे- 5
णानुसंहितस्यापहतपाप्मत्वादिविशिष्टतयानुसंधानार्थमावृत्तिः कर्तव्या । यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे (तै. सं.२।३।६) इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेपि तत्तद्गुणसंबन्ध्याकारस्य भिन्नत्वात्प्रदाना-
वृत्तिः क्रियते । तदुक्तं संकर्षणे नाना वा देवता पृथक्त्वात् 10
( जै. सं. का. १४।२।१५ ) इति ॥ ४२ ॥ प्रदानाधिकरणं समाप्तम् । ( १८ )

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

तैत्तिरीयके दहरविद्यानन्तरमधीयते

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । 15

विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥ ( ना. १३।१ )

इत्यारभ्य सोक्षरः परमः स्वराट् ( ना. १३।२ ) इत्यन्तम् । तत्र संशयः किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्धारणमनेन क्रियत उत सर्ववेदान्तोदितपरवि-
द्योपास्यविशेषनिर्धारणमिति । किं युक्तम् । दहरविद्योपा- 20

1. B. reads प्रधान for प्रदान before वदेव and वदावर्तनीयम्.
2. A. reads पाप्मत्वादि for पाप्मत्वादीनाम्.
7. E. reads अनु before निर्वपेत्.
9. B. C. read प्रधान for प्रदान.
14. A. D. read तैत्तिरीयाः for तैत्तिरीयके.
15. E. reads संभवम् for शंभुवम्.

स्यविशेषनिर्धारणमिति । कुतः । प्रकरणात् । पूर्वस्मिन्नुवाके दहरविद्या हि प्रकृता

दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥
5 ( ना. १२।३ )

इति । अस्मिंश्चानुवाके

पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् । ( ना. १३।२ )

इत्यादिना हृदयपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्यविशेषनिर्धारणार्थत्वमुपोद्बलयतीति । एवं प्राप्ते
10 प्रचक्ष्महे ।

लिङ्गभूयस्त्वादिति । अस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते । तथा हि परविद्यास्वक्षरशिवशंभुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं विधी-
15 यते । भूयसीषु विद्यासु श्रुताननूद्य नारायणत्वविधानभूयस्त्वं नारायण एव सर्वविद्यासूपास्यमस्थूलत्वादिविशेषितानन्दादिगुणकं परं ब्रह्मेति विशेषनिर्णये भूयो बहुतरं लिङ्गं भवति । अत्र लिङ्गशब्दश्चिह्नपर्यायः । चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः । तद्धि प्रकरणाद्बलीयः । तदप्युक्तं प्रथमे काण्डे श्रुतिलिङ्गवाक्य-
20 प्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्
( जै. सू. ३।३।१४ ) इति ।

3. A. E. read विपाप्मम् for विपापम्.
9. E. om. विशेष after उपास्य; B. C. om. इति after उपोद्बलयति.
15. A. B. read भूयस्त्वात् for भूयस्त्वम्.
16. B. reads उपास्यः for उपास्यम्.
17. C. reads निर्णयः for निर्णये.
20. E. reads पर for पार.

यत्तूक्तं पद्मकोशप्रतीकाशम् ( ना १३।२ ) इत्यादि वचनं दहरविद्याशेषत्वमस्योपोद्बलयतीति तन्न । बलीयसा प्रमाणेन सर्वविद्योपास्यविशेषनिर्धारणार्थत्वेवधृते सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः । न च सहस्र-शीर्षम् ( ना. १३।१ ) इत्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदि-　5
तोपासिना संबन्धः शङ्कनीयः । तस्मिन्यदन्तस्तदुपासितव्यम् ( ना. १२।३ ) इत्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणो-भिहितत्वात्तदुपास्ये द्वितीयानुपपत्तेः । विश्वमेवेदं पुरुषः ( ना. १३।१ ) । तत्त्वं नारायणः परः ( ना. १३।१ ) इत्यादि-प्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या ।　10

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। (ना.१३।१)
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्म स शिवः सेन्द्रः सोक्षरः परमः स्वराट्॥ (ना.१३।२)

इति निर्देशैः सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ ४३ ॥　15

लिङ्गभूयस्त्वाधिकरणं समाप्तम् । ( १९ )

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥४४॥

वाजसनेयकेग्निरहस्ये ( श. ब्रा. १०।५।३ ) मनश्चिता-दयोग्नयः श्रूयन्ते मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोग्निचित इति । तत्र संशयः । किमेते　20
मनश्चितादयः सांपादिकत्वेन विद्यारूपा अग्नयः क्रियामयक्र-

2. B. om. इति after उपोद्बलयति.
3. A. B. E. om. विशेष after उपास्य.
13. A. B. read ब्रह्मा for ब्रह्म.
19. C. reads अनग्नयः for अग्नयः.
21. C. reads विद्यारूप for विद्यारूपाः.

त्वनुप्रवेशेन क्रियारूपा आहोस्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवेति विशये क्रियारूपत्वं तावदाह पूर्वविकल्प इत्यादिना । चित्याग्नित्वेन संपादितानामेषां मनश्चितादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात्पूर्वत्रासद्वा
5 इदमग्र आसीत् ( श. ब्रा. १०।५।३।१ ) इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात्तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसंनिधानात्तत्प्रकरणगृहीता मनश्चितादयस्तेनेष्टकचितेनाग्निना विकल्प्यमानाः क्रियारूपा एव स्युः । विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते ।
10 यथा द्वादशाहेविवाक्ये दशमेहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वं तथेहापि ॥ ४४ ॥

## अतिदेशाच्च ॥ ४५ ॥

इतश्चेष्टकचितेनाग्निना मनश्चितादीनां विकल्पः क्रिया-
15 रूपत्वं चावगम्यते । तेषामेकैक एव तावान्यावानसौ पूर्वः ( श. ब्रा. १०।५।३।११ ) इति पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चितादिष्वतिदिश्यते । तेन तुल्यकार्यत्वाद्विकल्पः । ततश्चेष्टकचितवत्तत्क्रतुनिर्वर्तनेन तदङ्गभूता मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रियामया एवेति ॥ ४५ ॥

20 एवं प्राप्ते प्रचक्ष्महे ।

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं मनश्चितादयः क्रियामय-

3. C. reads चित्ताग्नि for चित्याग्नि.
6. B. om. च after तस्य.
8. A. reads विकल्पमानाः for विकल्प्यमानाः.
19. E. reads क्रियारूपाः for क्रियामयाः.
20. A. om. एवम्.
22. B. reads क्रियामयाक्रतु for क्रियामयक्रतु.

क्रत्वनुप्रवेशेन क्रियामया एवेति नैतदस्ति । विद्यारूपा एवैते । विद्यारूपक्रत्वन्वयिन इत्यर्थः । कुतः । निर्धारणाद्दर्शनाच्च । निर्धारणं तावत्ते हैते विद्याचित एव । विद्यया हैवैत एवंविदश्चिता भवन्ति ( श. ब्रा. १०।५।३।१२ ) इति । वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवच्चयनानुपपत्तेर्मनसा सं- 5
पादिताग्नित्वेन विद्यारूपत्वे सिद्धेपि विद्याचित एव । विद्यया हैवैते ( श. ब्रा. १०।५।३।१२ ) इति चावधारणं विद्याम-यक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते ।

दृश्यते चात्रैवैषां शेषी विद्यारूपः क्रतुः । ते मनसैवा-धीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त 10
मनसा शंसन्यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत ( श. ब्रा. १०।५।३।३ ) इति । इष्टकचितेष्वग्निषु यत्क्रियामयं यज्ञीयं कर्म क्रियते तन्मनोनिर्वर्त्येषु मनश्चिताद्यग्निषु मनोमयमेवा-क्रियतेति वचनात्क्रतुरपि विद्यामयोत्र प्रतीयते ॥ ४६ ॥ 15

नन्वत्र विधिपदाश्रवणात्फलसंबन्धाप्रतीतेश्चेष्टकचिताभ्युप-स्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत । नेत्याह ।

1. B. reads क्रियारूपाः for क्रियामयाः.

6. C. om. विद्यारूपत्वे; B. om. अपि after सिद्ध.

9. A. B. read एतेषाम् for एषाम्.

11. A. E. read मनसा पश्यति after शंसन्; C. reads यज्ञियम् for यज्ञीयम् here and in l. 13.

12. A. B. read क्रियते for अक्रियत here and in l. 15.

18. B. reads बाध्यते for बाध्येत.

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते । श्रुतिस्तावत्ते हैते विद्याचित एव ( श. ब्रा. १०।५।३।१२ ) इति । तान्विवृणोति विद्यया हैवैत एवंविदश्चिता भवन्ति ( श. ब्रा. १०।५।३।१२ ) इति । विद्यया विद्यामयेन क्रतुना संबद्धा मनश्चितादयश्चिता भवन्तीत्यर्थः । तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते ( श. ब्रा. १०।५।३।१२ ) इति लिङ्गम् । वाक्यं चैवंविदे चिन्वन्ति ( श. ब्रा. १०।५।३।१२ ) इति । समभिव्याहारो वाक्यम् । एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा संपादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसंभवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥४७॥

यच्चेदमुक्तं विधिप्रत्ययाश्रवणात्फलसंबन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योत्र विद्यामयः क्रतुर्न संभवतीति तत्राह ।

5. A. B. read ताम् for तान्.
7. C. reads मनश्चिताः for मनश्चितादयश्चिताः.
8. A. B. read सदा for सर्वदा here and in l. 11; C. E. read वि before चिन्वन्त्यपि.
9. C. reads एवंविधे for एवंविदे.
12. E. reads वि before चिन्वन्तीत्यर्थः.
13. C. reads आ for सम् before पादितम्; C. reads इष्टकचित्कार्य for इष्टकचितकार्य.
14. C. reads °प्रवेशम् for °प्रवेशसंभवम्.
15. C. reads एतत् for इदम् after यच्च.
16. B. reads विद्यामय for विद्यामयः.

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥

इष्टकचितान्वयिनः क्रियामयात्क्रतोर्विद्यामयोयं क्रतुः पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योवगम्यते । अनुबन्धा यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयो मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त मनसाशंसन् ( श. ब्रा. १०।५।३।३ ) इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुत्यादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तरं दहरविद्यादिक्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यत एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेवगते सति विधिः परिकल्प्यते । दृष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः । तदुक्तं वचनानि त्वपूर्वत्वात् ( जै. सू. १०।४।२० ) इति । फलं च तेषामेकैक एव तावान्यावानसौ पूर्वः ( श. ब्रा. १०।५।३।११ ) इत्यतिदेशात् । स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत्फलं तदेव मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

यत्पुनरतिदेशेन तुल्यवीर्यत्वावगमात्क्रियामयक्रत्वनुप्रवेशोवगम्यत इत्युक्तं तत्राह ।

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यं येन क्रियामयक्रत्वनुप्रवेश एषां स्यात् । यस्मात्कस्मा-

8. E. reads लिङ्ग after श्रुति.

12. C. reads स्वरूपेषु for सरूपेषु.

14. E. reads एव before एकैकः.

च्चित्सामान्यमात्रादतिदेशोपलब्धेः । उपलभ्यते हि स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः ( श. ब्रा. १०।५। २।२३ ) इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः । न हि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिस्तद्देशप्राप्तिरपि
5 भवति । एवमिहापि मनश्चितादीनामिष्टकचिताग्निवद्भावा-तिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम् । अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेव मनश्चितादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादव-गम्यते ॥ ४९ ॥

10 **परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥५०॥**

परेण च ब्राह्मणेनास्यापि मनश्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं तद्विधत्वं विद्यामयप्रतिपादित्वमवगम्यते । परेण हि ब्राह्मणेनायं वाव लोक एषोग्निश्चितस्तस्याप एव परिश्रितः ( श. ब्रा. १०।५।४।१ ) इत्यादिना स यो हैतदेवं वेद
15 लोकं पृणानमेनं भूतमेतत्सर्वमभिसंपद्यते ( श. ब्रा. १०। ५।४।१ ) इति पृथक्फला विद्यैव विधीयते । तथा वैश्वानर-विद्यादौ च विद्यैव विधीयते । अतोग्निरहस्यस्य क्रियैकविषयत्वं नास्ति। एवं तर्हि विद्यामया मनश्चितादयो बृहदारण्यकेनुबन्धव्याः किमर्थमिहानुबध्यन्ते । तत्रोच्यते भूयस्त्वात्त्वनुबन्ध इति ।

---

4. C. reads अप्राप्तिः for प्राप्तिः.

12. B. reads विद्या for विद्यामय; C. reads प्रतिपादितत्वम् for प्रतिपादित्वम्.

15. C. reads लोकं प्राणानाम् for लोकं पृणानम्; A. reads लोकं पृणीनामेवंभूतम् or लोकं पृणानामेनं भूतम् for लोकं पृणानमेनं भूतम्.

17. E. om. च.

18. A. B. read अनुबद्धव्याः for अनुबन्धव्याः.

मनश्चितादिषु संपादनीयानामग्न्यङ्गानां भूयस्त्वात्तत्संनिधाविद्यानुबन्धः कृतः ॥ ५० ॥ पूर्वविकल्पाधिकरणं समाप्तम्। (२०)

## एक आत्मनः शरीरे भावात् ॥ ५१ ॥

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तं त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ( ब्र. सू. १।४।६ ) इति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसंधानमात्मेति तूपगच्छन्ति ग्राहयन्ति च (ब्र.सू. ४।१।३) इति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेहामुत्र संचारक्षमोऽनुसंधेय उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः । किं युक्तम् । ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते । कुतः । अस्योपासकस्यात्मनः शरीरे भावात् । आत्मनः शरीरे वर्तमानस्य तादृशमेव रूपम् । तावतैवानुसंधानेन तत्फलसिद्ध्युपपत्तेश्च। न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपं तादृशं रूपं साधनानुष्ठानदशायामनुसंधातव्यम् । तावतैव साधनानुष्ठानतत्फलयोः सिद्धेरतिरिक्तानुसंधाने प्रयोजनाभावात् । तदविशेषादिहापि तथैव । ननु चात्र यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ( छा. ३।१४। १ ) इति विशेषवचनादपहतपाप्मत्वाद्याकार एवानुसंधातव्य इत्यवगम्यते । नैवम् । तं यथा यथोपासते (मुद्ग. ख. ३ ) इत्युपास्यविषयत्वात्तस्येति ॥ ५१ ॥

एवं प्राप्ते प्रचक्ष्महे ।

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न त्वेतदस्ति यज्ज्ञातृत्वाद्याकार एवानुसंधेय इति । अस्यात्मनः संसारदशाया मोक्षदशायां यो व्यतिरेकः सोपहतपाप्म-

A. B. C. om. आत्मनः.

B. C. read संसारदशायाम् for संसारदशायाः; C. om. मोक्षदशायाम्.

त्वादिकोनुसंधेयः । अस्य मोक्षदशायां यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्मानुसंधेय इत्यर्थः । कुतः । तद्भावभावित्वात्तद्रूपोपपत्तेः । यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति (छा. ३।१४।१) । तं यथा यथोपासते तथैव भवति (मुद्ग. 5 ख. ३) इति यथोपासनमेव हि प्राप्तिः श्रूयते । न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते । प्रत्यगात्मनोप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात् । अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरकपरमात्मोपासनस्य तथा रूपमेव प्राप्यमित्युक्तं भवति । अत एवैवंक्रतुरिहामुं 10 लोकं प्रेत्याभिसंभवितास्मि (छा. ३।१४।४) इत्युच्यते । तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसंधेयः ।

उपलब्धिवत् । ब्रह्मोपलब्धिवत् । यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया तथात्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेत्यर्थः । कर्मस्वात्मस्वरूपानुसंधानं न कर्मा-15 ङ्गम् । यजेत स्वर्गकाम इति कर्मानुष्ठानमेव हि फलाय चोद्यते । देहाद्यतिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किंचिदपहीनम् ॥ ५२ ॥ शरीरे भावाधिकरणं समाप्तम् । (२१)

3. B. E. read आपत्तेः for उपपत्तेः.

5. C. reads परपर for परस्व.

7. C. reads परमात्म for परब्रह्म.

8. E. om. क after शरीर.

9. C. reads प्राप्तम् for प्राप्यम्.

14. E. om. न before कर्माङ्गम्.

16. B. om. आदि after देह.

18. C. reads अव for अप before हीनम्.

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

ओमित्येतदक्षरमुद्गीथमुपासीत ( छा. १।१।१ ) । लोकेषु पञ्चविधं सामोपासीत ( छा. २।२।१ ) । उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी ( ऐ.आ.२।१।२ )। अयं वाव लोक एषोग्निश्चितः ( श. ब्रा. १०।५।४।१ ) इत्येव- 5
माद्याः क्रत्वङ्गाश्रया उपासना भवन्ति । ताः किं यासु शाखासु श्रूयन्ते तास्वेव नियता उत सर्वासु शाखासूद्गीथादिषु संबध्यन्त इति विचारः । सर्ववेदान्तप्रत्ययत्वे स्थितेपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्र तत्र व्यवतिष्ठे-
रन्निति युक्ता शङ्का । किं युक्तम् । व्यवतिष्ठेरन्निति । कुतः । 10
उद्गीथमुपासीत ( छा. १।१।१ ) इति सामान्येनोद्गीथसंबन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य संनिधानात्तस्मिन्नेव विशेषे पर्यवसानं युक्तमित्येवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्निति । एवं प्राप्ते प्रचक्ष्महे ।

अङ्गावबद्धास्त्विति । तुशब्दः पक्षं व्यावर्तयति । न ह्यु- 15
द्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन् । अपि तु प्रतिवेदं संबध्येरन् । सर्वासु शाखास्वित्यर्थः । हिशब्दो हेतौ । यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धास्तस्माद्यत्रोद्गीथादयस्तत्र सर्वत्र संबध्येरन् । यद्यपि स्वरभेदेनोद्गीथ-
व्यक्तयो भिद्यन्ते तथापि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः 20
संनिहिता इति न क्वचिद्व्यवस्थायां प्रमाणमस्ति । सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः । अतः सर्वासु

5. E. reads वा for वाव.
10. C. reads शङ्का युक्ता for युक्ता शङ्का.
13. B. reads विशेष for विशेषे; E reads इति before इत्येवम्.
20. A. B. read सामान्य for सामान्येन.
22. C. om. च after न्यायेन.

शाखास्वेकस्य क्रतोः संनिधानात्क्रत्वङ्गभूतोद्गीथादयोपि संनिहिता इति नैकस्य संनिधिविशेषोऽस्तीति न व्यवस्था ॥ ५३ ॥

## मन्त्रादिवद्वाविरोधः ॥ ५४ ॥

वाशब्दश्चार्थे । आदिशब्देन जातिगुणसंख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते । यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते तद्वदिहाप्यविरोधः ॥ ५४ ॥ अङ्गावबद्धाधिकरणं समाप्तम् । (२२)

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

प्राचीनशाल औपमन्यवः ( छा. ५।११।१ ) इत्यारभ्य वैश्वानरविद्याम्नाता । तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः । तत्र च द्यौर्मूर्धादित्यश्चक्षुर्वायुः प्राण आकाशः संदेहो मध्यकाय इत्यर्थः । आपो बस्तिः पृथिवी पादावित्यवयवविशेषाः ।

तत्र संशयः किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यमुत व्यस्तस्य समस्तस्य चाथ समस्तस्यैवेति । किं युक्तम् । व्यस्तस्येति । कुतः । उपक्रमे व्यस्तोपासनोपदेशात् । तथा ह्युपदिश्यते । औपमन्यवादयः किलोद्दालकपर्यन्ताः केकयमश्वपतिमुपसद्यात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि ( छा. ५।११।६ ) इति पप्रच्छुः । स च तेभ्यः प्रत्येकं स्वोपास्यान्द्युप्रभृतीनुक्तवद्भ्यो मूर्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं चोक्तवान् । अत्त्यन्नं पश्यति प्रियं भव-

12. B. om. अप् after आकाश.

21. C. om. व्यस्तेषु.

22. C. reads तत् for तत्र तत्र.

त्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मनः ( छा. ५।१२।२ ) इति । एष वै सुतेजा आत्मा वैश्वानरः ( छा. ५।१२।१ ) इत्यादिना तेषु तेषूपासनेषू-पास्यस्य वैश्वानरत्वं चाह । अतो व्यस्तस्योपासनं कर्तव्यम् । परत्र यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमु- 5
पास्ते ( छा. ५।१८।१ ) इति द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानर उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार इत्यव-गन्तव्यम् ।

अपर आहैवमेव समस्तस्याप्युपासनं कार्यमिति । पृथ-क्फलनिर्देशात् । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं 10
वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्व-न्नमत्ति ( छा. ५।१८।१ ) इति । न चैतावता वाक्यभेदः । यथा भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभिधायैष तु वा अतिवदति यः सत्येनातिवदति ( छा. ७।१६।१ ) इत्यादिना भूमविद्यामुपदिश्य स स्वराड्भवति तस्य सर्वेषु 15
लोकेषु कामचारो भवति ( छा. ७।२५।२ ) इति तत्फलं च व्यपदिशति । तत्र भूमविद्यापरत्वेपि वाक्यस्य नामा-द्यन्तरोपासनं तत्फलं चाङ्गीक्रियते तथेहापीति । एवं प्राप्ते-भिधीयते ।

1. A. B. om. एवम्; C. reads एव for एवम्.
3. A. B. om. तेषु after तेषु.
4. E. reads एव after व्यस्तस्य.
6. C. reads विच्छिन्न for अवच्छिन्न.
10. E. om. आत्मानम्.
13. A. reads तत् before तत्फलम्.
17. A. B. read परस्यापि for परत्वेपि.
18. A. reads तत् before तत्फलम्.

भूम्नः क्रतुवज्ज्यायस्त्वमिति । भूम्नो विपुलस्य समस्तस्यैव ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः । एकवाक्यत्वावगतेः । तथा हि प्राचीनशाल औपमन्यवः ( छा. ५।११।१ ) इत्युपक्रम्योद्दालको वै भगवन्तोयमारुणिः संप्रतीममात्मानं वैश्वा-
5 नरमध्येति तं हन्ताभ्यागच्छाम ( छा. ५।११।२ ) इति वैश्वानरात्मबुभुत्सयौपमन्यवादयः पञ्च महर्षयस्तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं कैकयं वैश्वानरात्मवेदिनमुपसङ्गम्यात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि ( छा. ५।११।६ ) इति पृष्ट्वा तत्सकाशात्प-
10 रमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मान्नभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते । एवमेकवाक्यत्वेवगते सत्यवयवविशेषेपूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति निश्चीयते ।

15 क्रतुवत् । यथा वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते ( तै. सं. २।२।५ ) इति विहितस्यैव क्रतोरेकदेशा यदष्टाकपालो भवति ( तै. सं. २।२।५ ) इत्यादिभिरनूद्यन्ते तथा समस्तोपासनमेव न्याय्यं न व्यस्तोपासनम् । तथा हि दर्शयतीयं श्रुतिर्व्यस्तोपासनेनर्थं ब्रुवती मूर्धा ते व्यपतिष्यद्यन्मां
20 नागमिष्य इति ( छा. ५।१२।२ ) । अन्धो भविष्यसि यन्मां

1. B. om. क्रतुवत्.
4. A. B. E. read ह after उद्दालकः.
8. E. reads उपसंगत्यात्मानम् for उपसंगम्यात्मानम्.
12. B. reads उपसंहरतः for उपसंहारतः.
16. B. om. एव after विहितस्य.
17. A. B. read इत्यादिना for इत्यादिभिः.
19. C. om. इयम् before श्रुतिः.
20. B. om. अन्धो भविष्यसि यन्मां नागमिष्य इति.

नागमिष्यः ( छा. ५।१३।२ ) इत्यादिका । अत इदमप्यपास्तं यन्नामाद्युपासनसाम्यमुक्तम् । तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः । नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतमेष तु वा अतिवदति यः सत्येनातिवदति ( छा. ७।१६।१ ) इति । तत एव तत्र भूमविद्यापरत्वेपि वाक्यस्य नामाद्युपास- 5
नानां सफलानां विवक्षितत्वम् । अन्यथातिशयितफलत्वनिमित्तानिवादेन भूमविद्यास्तुत्यनुपपत्तेः । अतः समस्तोपासनमेव न्याय्यम् ॥ ५५ ॥ भूमज्यायस्त्वाधिकरणं समाप्तम् । ( २३ )

## नाना शब्दादिभेदात् ॥ ५६ ॥

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्या- 10
भूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्यानन्दमयविद्याक्षरविद्यादिका एकशाखागताः शाखान्तरगताश्चोदाहरणम् । अन्याः प्राणाद्येकविषयफलाश्च । किमत्र विद्यैक्यमुत विद्याभेद इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायाः सर्ववेदान्तप्रत्यय- 15
न्यायः । किं युक्तम् । विद्यैक्यमिति । कुतः । वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि विद्याया रूपम् । अतो रूपैक्याद्विद्यैक्यमिति । एवं प्राप्तेभिधीयते ।

नानेति । नानाभूता विद्याः । कुतः । शब्दादिभेदात् । आदिशब्देनाभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते । 20
शब्दान्तरादिभिरत्र विधेयभेदहेतवोनुबन्धभेदा दृश्यन्ते । यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः प्रत्ययाश्च ब्रह्मैकविषयास्तथापि तत्तत्प्रकरणोदितजगदेककारणत्वापह-

11. B. reads उपकोशल for उपकोसल.
12. A. B. read अव after एकशाखा.
20. C. om. प्र before क्रिया.

तपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति। ब्रह्मप्राप्तिरूपफलसंबन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याभिधायीनीति निश्चीयते। अस्मिन्नर्थे
5 शब्दान्तरे कर्मभेदः (जै. सू. २।२।१) इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैः सिद्धेपि पुनरिह प्रतिपादनं वेदान्तवाक्यान्यभिधेयज्ञानपराणीति कुदृष्टिनिरसनाय। अतो विद्याभेद इति स्थितम॥ ५६॥ शब्दादिभेदाधिकरणं समाप्तम्। (२४)

## विकल्पोविशिष्टफलत्वात्॥ ५७॥

10 ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्। इदानीमासां विद्यानां किमेकस्मिन्पुरुषे प्रयोजनवत्त्वेन समुच्चयोपि संभवत्युत प्रयोजनाभावाद्विकल्प एवेति विशये किं युक्तम्। समुच्चयोपि संभवतीति। कुतः। एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात्। दृश्यते ह्येकस्यैव स्वर्गादेः
15 साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः। एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोपि संभवतीति। एवं प्राप्ते प्रचक्ष्महे।

विकल्प एव न समुच्चयः संभवति। कुतः। अविशिष्टफलत्वात्। सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्द
20 ब्रह्मानुभवः फलमविशिष्टं श्रूयते ब्रह्मविदाप्नोति परम् (तै. २।१)। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य (तै. २।८)।

6–7. A. B. read अविधेय for अभिधेय.

11. A. B. om. किम् after विद्यानाम्; A. reads प्रयोजनत्वेन for प्रयोजनवत्त्वेन.

18. E. reads इति after संभवति.

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
( मु. ३।१।३ )

इत्यादिभ्यः । ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमान-
मनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव 5
एकया विद्ययावाप्यते चेत्किमन्ययेति न समुच्चयसंभवः ।
स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशा-
द्यपेक्षया भूयस्त्वसंभवात्तदर्थिनः समुच्चयः संभवति । इह तु
तद्विपरीतस्वरूपे ब्रह्मणि तन्न संभवति । सर्वाश्च विद्या ब्रह्मा-
नुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्य- 10
विशिष्टफलत्वात्सर्वासां विकल्प एव । ब्रह्मप्राप्तिव्यतिरिक्त-
फलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्पेरन्समुच्चीयेरन्वा ।
तासां परिमितफलत्वेन भूयस्त्वापेक्षासंभवात् ॥ ५७ ॥

तदाह ।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभा- 15
वात् ॥ ५८ ॥**

अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥ विकल्पाधिकरणं
समाप्तम् । ( २५ )

**अङ्गेषु यथाश्रयभावः ॥ ५९ ॥**

उद्गीथादिकत्वङ्गेष्वाश्रिता ओमित्येतदक्षरमुद्गीथमुपासीत 20

1. E. reads स्वरूपम् for स्वयम्.
6. C. om. न before समुच्चय.
8. E. reads इति after संभवति.
12. E reads विकल्प्येरन् for विकल्पेरन्.
13. A. B. read विपरीत for परिमित.

( छा. १।१।१ ) इत्यादिका विद्याः किमुद्गीथादिवत्क्रत्वर्थतया क्रतुषु नियमेनोपादेया उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये नियमेनोपादेया इति युक्तम् । ननु चासां पुरुषार्थत्वेनानियमः प्रतिपादितस्तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ( ब्र. सू. ३।३।४१ ) इत्यत्र । सत्यम् । तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते । तत्र हि तेनोभौ कुरुतः ( छा. १।१।१० ) इत्यनियमदर्शनात्पृथक्फलत्वमुक्तम् । उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते । न ह्यत्र गोदोहनेन पशुकामस्य प्रणयेदित्यादिवदुपासनाविधिवाक्ये फलसंबन्धः श्रूयते । उद्गीथमुपासीत ( छा. १।१।१ ) इत्युद्गीथादिसंबन्धितयैवोपासनं प्रतीयते । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम् ( छा. १।१।१० ) इति वर्तमानापदेशरूपवाक्यान्तराद्धि फलसंबन्धो ज्ञायते । स्ववाक्येनैवाव्यभिचरितक्रतुसंबन्ध्युद्गीथादिसंबन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसंबन्धनिर्देशोऽर्थवादमात्रं स्यात् । अपापश्लोकश्रवणादिवत् । अतो यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते तथा तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥

## शिष्टेश्च ॥ ६० ॥

शिष्टिः शासनं विधानमित्यर्थः । उद्गीथमुपासीत ( छा.

3. B. om. यथा before कामम्.
4. C. reads अपुरुषार्थत्वेन for पुरुषार्थत्वेन.
14. A. B. read निर्देश for अपदेश.
15. A. B. om. आदि after उद्गीथ; C. reads विज्ञात for निर्ज्ञात.

१।१।१ ) इत्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः ।
गोदोहनेन पशुकामस्य प्रणयेदित्यादिवद्विधिवाक्येधिकारान्त-
राश्रवणादुद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥

## समाहारात् ॥ ६१ ॥

होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति ( छा. १।५।५ )   5
इत्युपासनस्य समाहारनियमो दृश्यते । दुरुद्गीथं वेदनवि-
हीनमुद्गीथम् । वेदनहानावन्येन समाधानं ब्रुवंस्तस्य नियमेनो-
पादानं दर्शयति ॥ ६१ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

उपासनगुणस्योपासनाश्रयस्य प्रणवस्य सोपासनस्य तेनेयं   10
त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति
( छा. १।१।९ ) इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते ।
तेनेति प्रकृतपरामर्शात्सोपासन एव प्रणवः सर्वत्र संचरति ।
अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपास-
नानामुद्गीथादिवन्नियमेनोपादानम् ॥ ६२ ॥   15

इति प्राप्त उच्यते ।

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न वैतदस्ति यदुद्गीथाद्युपासनानां क्रतुपूद्गीथादिवदुपादा-
नानियम इति । कुत. । तत्सहभावाश्रुतेः । उद्गीथाङ्गभावा-

2. C. reads इतिवत् for इत्यादिवत्.

6-7. C. om. वेदनविहीनमुद्गीथम्; C. E. read ब्रुवत् for ब्रुवन्.

12. A. B. read अव before गम्यते.

13. C. reads प्राणः for प्रणवः.

14. B. reads श्रवण for प्रणव.

18. E. reads न चैतत् for न वैतत्.

श्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमो भवति । यद्यप्युद्गीथमुपासीत ( छा. १।१।१ ) इत्यस्मिन्पदसमुदायेऽधिकारान्तरं न प्रतीयते तथापि तदनन्तरमेव यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ( छा. १।१।१० )
5 इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते । तेन क्रतुफलात्पृथग्भूतफलसाधनभूता विद्योद्गीथमुपासीत ( छा. १।१।१ ) इति कर्तव्यतया विधीयते । क्रतुफलात्पृथग्भूतफलसाधनतयावगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते । अत उपासनस्याश्रयापे-
10 क्षायां संनिहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाद्याश्रय उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः । वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम् । क्रतोरविलम्बितफल-
15 त्वमित्यर्थः । पर्णतादीनां तु यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति ( छा. १।१।१० ) इति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थ-
20 वादमात्रं स्यात् ॥ ६३ ॥

## दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियममेवंविद्ध ह वै

5. C. reads विद्यया for विद्यायाः क्रतु
11. A. B. om. आदि after उद्गीथ.
12. C. om. इदम्.
17. C. reads श्रुति after साधनत्व.
22. B. om. च after दर्शयति.

ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोभिरक्षति ( छा. ४।१७।१० ) इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती। उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते । अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोनियम एवेति स्थितम् ॥ ६४ ॥ यथाश्रयभावाधिकरणं समाप्तम् । ( २६ ) 5

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥



1. B. reads ब्रह्मयज्ञम् for ब्रह्मा यज्ञम्.

# अथ श्रीभाष्ये



## तृतीयाध्याये चतुर्थः पाद आरभ्यते ॥

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता।
5 इदानीं किं विद्यातः पुरुषार्थ उत विद्याङ्गकात्कर्मण इति चिन्त्यते। किं युक्तम्। अतो विद्यातः पुरुषार्थ इति भगवान्बादरायणो मन्यते। कुतः। शब्दात्। दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्ब्रह्मविदाप्नोति परम् (तै. २।१)।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
10 तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय ॥
(श्वे. ३।८)

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥
(मु. ३।२।८)

15 इत्यादिः ॥ १ ॥

तत्र पूर्वपक्षी प्रत्यवतिष्ठते।

### शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

नैतदेवं यद्विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यत इति।

5. A. B. E. om. किम् after इदानीम्; C. reads विद्याङ्गात् for विद्याङ्गकात्.

8. C. reads पुरुषार्थ इति for पुरुषार्थम्.

16. C. reads अत्र for तत्र.

न ह्येष ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्यादिशब्दो वेद-
नात्पुरुषार्थावाप्तिमवगमयति। कर्मसु कर्तृभूतस्यात्मनो याथात्म्य-
वेदनप्रतिपादनपरत्वात्। अतः कर्तुः संस्कारद्वारेण विद्यायाः
क्रतुशेषत्वात्तत्र फलश्रुतिरर्थवादमात्रं यथान्येषु द्रव्यादिष्विति
जैमिनिराचार्यो मन्यते। तदुक्तं द्रव्यसंस्कारकर्मसु परार्थ- 5
त्वात्फलश्रुतिरर्थवादः स्यात् ( जै. सू. ४।३।१ ) इति।

ननु च कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदा-
न्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितं नेतरोनुपपत्तेः ( ब्र.सू.
१।१।१७)। भेदव्यपदेशाच्च (ब्र. सू. १।१।१८)। अनुपपत्तेस्तु
न शारीरः ( ब्र. सू. १।२।३ )। इतरपरामर्शात्स इति चेन्ना- 10
संभवात् ( ब्र. सू. १।३।१७ ) इत्येवमादिभिः सूत्रैः। तदेव
ब्रह्म तत्त्वमसि (छा. ६।८।७) इत्यादिसामानाधिकरण्येन जीवा-
दनतिरिक्तमित्येतदप्यधिकं तु भेदनिर्देशात् ( ब्र. सू. २।
१।२२ ) इत्येवमादिभिर्निरस्तम्। सामानाधिकरण्यनिर्देशश्चै-
तदात्म्यमिदं सर्वम् ( छा. ६।८।७ )। सर्वं खल्विदं ब्रह्म ( छा. 15
३।१४।१ ) इति चेतनाचेतनसाधारणो यः पृथिव्यां तिष्ठन्
(बृ. ३।७।३)। य आत्मनि तिष्ठन् (श. ब्रा. १४।६।७।३०) इत्या-
दिनावगततत्तदात्मतयावस्थितिनिबन्धन इत्यवस्थितेरिति काश-
कृत्स्नः (ब्र. सू. १।४।२२) इत्यादिभिरुपपादितम्। तत्कथं क-
र्मसु कर्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः 20
कर्माङ्गत्वं प्रतिपाद्यते। उच्यते। वेदान्तवाक्येष्वेव विद्यायाः कर्म-
प्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन

1. C. reads इत्यादिः for इत्यादि.
4. A. B. read तत् for तत्र.
5. A. E. read गुण after द्रव्य.
12. E. om. इति after तत्त्वमसि.

च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोभिप्रायः।

ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्। कर्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसं-
5 बन्धित्वाभावात्। नैवम्। लौकिकस्य कर्मणः कर्तुर्देहादव्य-तिरिक्तत्वेप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगा-त्तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते। अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः॥ २॥

कानि पुनस्तानि लिङ्गानि यदुपबृंहितसामानाधिकरण्यनि-
10 र्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते तत्राह।

## आचारदर्शनात्॥ ३॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यतेश्वपतिः केकयः किलात्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन्प्रत्याह यक्ष्यमाणो ह वै भगवन्तोहमस्मि (छा. ५।११।५) इति। तथा च जन-
15 कादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते

कर्मणैव हि संसिद्धिमास्थिता जनकादयः। (गी. ३।२०)
इयाज सोपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः।
(वि. पु. ६।६।१२)

इति। अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तुः
20 स्वरूपवेदनपरत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः॥३॥

3. C. reads कर्तुः for कर्तृ.
5. A. B. read लौकिक for लौकिकस्य.
10. C. reads निर्णीयते for निर्णीयन्ते.
15. C. reads च after स्मृतिषु.
19. A. B. read कर्तृ for कर्तुः

लिङ्गमिदं प्राप्तिरुच्यतामित्यत्राह ।

**तच्छ्रुतेः ॥ ४ ॥**

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ( छा. १।१।१० ) इति । नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थाप- 5
यितुं शक्या । यतः प्रकरणाच्छ्रुतिर्बलीयसी । यदेव विद्यया करोति ( छा. १।१।१० ) इति विद्यामात्रविषया हीयं श्रुतिः ॥ ४ ॥

**समन्वारम्भणात् ॥ ५ ॥**

तं विद्याकर्मणी समन्वारभेते ( बृ. ४।४।२ ) इति विद्या-
कर्मणोः साहित्यं च दृश्यते । साहित्यं चोक्तेन न्यायेन विद्यायाः 10
कर्माङ्गत्वे सत्येव भवति ॥ ५ ॥

**तद्वतो विधानात् ॥ ६ ॥**

विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमित्यवगम्यते ।
आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभि-
समावृत्य कुटुम्बे शुचौ देशे ( छा. ८।१५।१ ) इत्यादौ वेद- 15
मधीत्येत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत
एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् ।
अतो ब्रह्मविद्यापि कर्मसु विनियुक्तेति न पृथक्फलायावक-
ल्पते ॥ ६ ॥

**नियमात् ॥ ७ ॥** 20

इतश्च न विद्यातः पुरुषार्थः ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । ( ई. २ )

इत्यात्मविदः पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात्क-
र्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गमिति ॥ ७ ॥

13. C. reads कर्तुः for कर्म before विधानात्.
17. C. om. इति after अध्ययनम्.
23. C. reads नियमन for नियमेन

एवं प्राप्ते प्रचक्ष्महे

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥**

तुशब्दात्पक्षो व्यावृत्तः । विद्यात एव पुरुषार्थः । कुतः । अधिकोपदेशात् । कर्मसु कर्तुर्जीवाद्धेयप्रत्यनीकानवधिकाति-
5 शयासंख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशाद्भगवतो बादरायणस्य विद्यातः फल-मित्येव मतम् ।

लिङ्गानि तिष्ठन्तु । वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनो-धिकस्यैव । कथम् । तद्दर्शनात् । प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसंभा-
10 वनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य स्वसं-कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मन-सापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनादपहतपाप्मा विजरो वि-मृत्युर्विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः ( छा.
15 ८।१।५ ) । तदैक्षत । बहु स्यां प्रजायेयेति । तत्तेजोसृजत ( छा. ६।२।३ ) । यः सर्वज्ञः सर्ववित् ( मु. १।१।९ ) ।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
( श्वे. ६।८ )

स एको ब्रह्मण आनन्दः ( तै. २।८ ) ।

20 यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति ॥ ( तै. २।९ )

7. A. B. read एवम् before एव मतम्.
8. C. om. तु after उपदेशः.
9. C. om. शुद्धे before अपि.
10. A. B. read निखिलनिरस्त for निरस्तनिखिल.
11. C. reads वि before लय.

एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः
( बृ. ४।४।२२ ) ।

स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न
चाधिपः । ( श्वे. ६।९ )

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ 5
तिष्ठतः ( बृ. ३।८।९ ) । भीषास्माद्वातः पवते । भीषोदेति
सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः ( तै. २।८ )
इत्यादिषु । तस्माद्वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योत-
कल्पस्याविद्यादिहेयसंबन्धयोग्यस्य गन्धोपि नास्तीति परमपुरुष-
विषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फल- 10
मिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते ।

## तुल्यं तु दर्शनम् ॥ ९ ॥

यदुक्तं ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति
तन्न । विद्याया अनङ्गत्वेपि तुल्यं दर्शनम् । ब्रह्मविदां कर्मानु- 15
ष्ठानदर्शनमनैकान्तिकमित्यर्थः । अननुष्ठानस्यापि दर्शनात् ।
दृश्यते हि ब्रह्मविदां कर्मत्याग ऋषयः कावषेयाः किमर्था
वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे ( कौ. २।५ )
इत्यादौ । अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम् । कथ-
मिदमुपपद्यते ब्रह्मविदां कर्मानुष्ठानमननुष्ठानं च । फलाभिसं- 20
धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात्तथाविधस्य कर्मणो-
नुष्ठानदर्शनमुपपद्यते । वक्ष्यति च सर्वापेक्षा च यज्ञादिश्रु-

6. E. reads एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः after तिष्ठतः.

22. A. B. read वक्ष्यते for वक्ष्यति

तेरश्ववत् ( ब्र. सू. ३।४।२६ ) इति । फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात्तस्यैवाननुष्ठानदर्शनमुपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ॥ ९ ॥

5 यदुक्तं श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यत इति तत्राह ।

## असार्वत्रिकी ॥ १० ॥

न सर्वविद्याविषयेयं श्रुतिः । अपि तूद्गीथविद्याविषयैव । यदेव विद्यया करोति ( छा. १।१।१० ) इति यच्छब्दस्यानिर्धारितविशेषस्योद्गीथमुपासीत ( छा. १।१।१ ) इति प्रस्तुतो-
10 द्गीथविशेषनिष्ठत्वात् । न हि यत्करोति तद्विद्ययेति संबध्यते । यदेव विद्यया करोति....तदेव वीर्यवत्तरम् (छा. १।१।१०) इति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते ॥ १० ॥

यच्चेदमुक्तं तं विद्याकर्मणी समन्वारभेते ( बृ. ४।४।२ )
15 इति विद्याकर्मणोः साहित्यदर्शनाद्विद्या कर्माङ्गमिति तत्राह ।

## विभागः शतवत् ॥ ११ ॥

तं विद्याकर्मणी समन्वारभेते ( बृ. ४।४।२ ) इत्यत्रोक्तन्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः । शतवत् । यथा
20 क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागः प्रतीयते तथेहापि ॥ ११ ॥

1. C. om. अश्ववत्.
2. B. C. read तस्यानुष्ठान for तस्यैवाननुष्ठान.
8–9. B. reads निर्धारित for अनिर्धारित.
12. C. om. हि after तस्य.

## अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति नैत-युक्तम् । वेदमधीत्य ( छा. ८।१५।१ ) इत्यध्ययनमात्रवतो विधानात् । न चाध्ययनविधिरेवार्थावबोधे प्रवर्तयति । आधा-नवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थ-विचारे पुरुषः स्वयमेव प्रवर्तते । ततः कर्मार्थी कर्मज्ञाने प्रव-र्तते मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गम् । यद्यप्यध्य-यनविधिरेवार्थावबोधे प्रवर्तयति तथापि न विद्या कर्माङ्गम् । अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः । यथा ज्योतिष्टोमादिकर्मस्व- 10 रूपविज्ञानात्फलसाधनभूतं तत्कर्मानुष्ठानमर्थान्तरं तथार्थ-ज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्द-वाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसंबन्ध-गन्धो विद्यते ॥ १२ ॥

## नाविशेषात् ॥ १३ ॥ 15

यच्चोक्तं कुर्वन्नेवेह कर्माणि ( ई. २ ) इत्यात्मविदं ज्ञाना-द्व्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति तन्नोपपद्यते । कुतः । अविशेषात् । न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्म-विषय इति विशेषहेतुरस्ति । विद्याङ्गभूतकर्मविषयतयाप्युपपत्तेः ।

11. C. reads फलसाधनभूतकर्मानुष्ठानमर्थान्तरभूतम् for फलसाधनभूतं तत्कर्मानुष्ठानमर्थान्तरम्; A. B. om. तत् before कर्मानुष्ठान.

12. E. reads स्व after अर्थज्ञान.

13. C. om. पुरुषार्थसाधनभूता.

14. E. reads अपि after गन्धः.

17. C. E. read व्यावृत्य for व्यावर्त्य.

18. A. B. om. कुतः.

कर्मणैव हि संसिद्धिमास्थिता जनकादयः । ( गी. ३।२० )
इतिवद्विदुषस्त्वा प्रायणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य कुर्वन्नेवेह कर्माणि ( ई. २ ) इत्यस्य वाक्यस्यार्थमाह ।

5 **स्तुतयेनुमतिर्वा ॥ १४ ॥**

वाशब्दोवधारणार्थः । ईशावास्यमिदं सर्वम् ( ई. १ ) इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात्सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैतदेव दर्शयति

10 एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे । ( ई. २ )
इति । अतो न कर्माङ्गं विद्या ॥ १४ ॥

**कामकारेण चैके ॥ १५ ॥**

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते किं प्रजया करिष्यामो येषां नोयमात्मायं
15 लोकः ( बृ. ४।४।२२ ) इति । विदुषो विरक्तस्य कामकारेण गार्हस्थ्यत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति । यज्ञादिकर्माङ्गत्वे हि विद्याया विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न संभवति । अतो न विद्या कर्माङ्गम् ॥ १५ ॥

2. E. reads इति च for इतिवत्; A. B. read आ प्रयाणात् for आ प्रायणात्.
3. C. reads स्वभावेन for स्वाभाव्येन.
4. C. om. अस्य; E. om. वाक्यस्य.
9. A. B. read एवम् for एतत्.
10. C. E. read कर्मणा for कर्म.
15. C. om. विदुषः.
16. C. reads कर्म after गार्हस्थ्य.

## उपमर्दं च ॥ १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्म-
विद्ययोपमर्दं प्रतिवेदान्तमधीयते

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ (मु.२।२।८)　5
इत्यादिकम् । तद्विद्यायाः कर्माङ्गत्वे न संगच्छते ॥ १६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःस्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासा-
दिकर्माभावाच्च न विद्या कर्माङ्गम् । ननूर्ध्वरेतस आश्रमा न
सन्त्येव । यावज्जीवमग्निहोत्रं जुहोति (आप.श्रौ.३।१४।८) इत्या-　10
दिनाग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः । श्रुतिवि-
रुद्धानां स्मृतीनां चाप्रामाण्यात् । अत आह शब्दे हीति ।
वैदिक एव हि शब्दे ते दृश्यन्ते त्रयो धर्मस्कन्धाः ( छा.
२।२३।१ ) । ये चेमेरण्ये श्रद्धा तप इत्युपासते ( छा.
५।१०।१) । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति (बृ.　15
४।४।२२ ) इत्यादौ । यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥

यदिदं त्रयो धर्मस्कन्धाः ( छा. २।२३।१ ) इत्यादौ वैदिके
शब्द ऊर्ध्वरेतस आश्रमा दृश्यन्तेतस्ते सन्त्येवेति नैतदु-

3. A. B. read विद्या for विद्यया; A. B. read च after उपमर्दम्.
9. C. om. न before विद्या.
11. C. reads त्व after अधिकार.
18. C. reads एवम् before आदौ.
19. C. reads और्ध्व for ऊर्ध्व.

पपद्यते । यतस्त्रयो धर्मस्कन्धाः ( छा. २।२३।१ ) इत्येवमादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते । अनुवादमात्रमित्यर्थः । कुत एतत् । अचोदनात् । अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते । त्रयो धर्मस्कन्धाः ( छा. २।
5 २३।१ ) इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते । ब्रह्मसंस्थोमृतत्वमेति ( छा. २।२३।१ ) इत्युपसंहारात् । अतोन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम् । ये चेमेरण्ये श्रद्धा तप इत्युपासते ( छा. ५।१०।१ ) इति च देवयानविधिपरत्वात्तत्रापि नाश्रमान्तरविधिसंभवः । अपि चापवदति
10 हि श्रुतिराश्रमान्तरं वीरहा वा एष देवानां योग्निमुद्वासयते ( तै. सं. १।५।२ ) इत्यादिका । अत ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान्बादरायणो मन्यते ।
15 कुतः । साम्यश्रुतेः । उपादेयतयाभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते । त्रयो धर्मस्कन्धाः ( छा. २।२३।१ ) इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया संकीर्तनं गृहस्थाश्रमस्येतरेषां च समानम् । अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव संभवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतं तदितरे-
20 षामपि समानं किमन्यत्राभिनिवेशात् । न च गार्हस्थ्यधर्म एव यज्ञोध्ययनं दानं तपो ब्रह्मचर्यमिति सर्वैः शब्दैरभिधीयते

---

1. A. B. om. एवम् after इति.
5. C. reads एवम् before आदिना.
9. B. reads उभयत्र for तत्र.
19. C. om. सम् before भवति.
20. B. C. om. किम् before अन्यत्र; E. reads अन्याभिनिवेशात् for अन्यत्राभिनिवेशात्.

ब्रह्मचर्यतपसोर्गृहस्थस्यैव संभवादिति युक्तम् । त्रयो धर्मस्कन्धाः ( छा. २।२३।१ ) इति त्रित्वेन संगृह्य प्रथमो द्वितीयस्तृतीय इति विभागवचनानुपपत्तेः । अतो यज्ञोध्ययनं दानम् ( छा. २।२३।१ ) इति गृहस्थाश्रम उच्यते । अध्ययनशब्दो वेदाभ्यासपरः । तपःशब्देन वैखानसपारिव्राज्ययोर्ग्रहणम् । उभयोस्तपःप्रधानत्वात् । तपःशब्दो हि कायक्लेशे रूढः । स च द्वयोरपि समानः । ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते । ब्रह्मसंस्थोमृतत्वमेति ( छा. २।२३।१ ) इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः । सर्वेषामाश्रमिणां ब्रह्मसंस्थासंभवात् । ब्रह्मणि संस्था संस्थितिर्ब्रह्मसंस्थत्वम् । तच्च सर्वेषां संभवत्येव । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः । तेष्वेव ब्रह्मनिष्ठोमृतत्वभाग्भवति । तदेतद्विस्पष्टमुक्तं भगवता पराशरेण प्राजापत्यं ब्राह्मणानाम् ( वि. पु. १।६।३४ ) इत्यारभ्य ब्राह्मं संन्यासिनां स्मृतम् ( वि. पु. १।६।३७ ) इत्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय

> एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।
> तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥
> ( वि. पु. १।६।३८ )

इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता । अतो गृहस्थाश्रमतुल्या ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेष्यनुष्ठेयाः । ये चेमेरण्ये श्रद्धा तप इत्युपासते (छा. ५।१०।१) इति

2. C. reads परि for सम् after त्रित्वेन; B. om. तृतीयः.
11. C. reads विकलाश्रमिणः for विकलाः केवलाश्रमिणः.
13. A. B. read गृहस्थानाम् for ब्राह्मणानाम्.
14. C. reads स्थानम् for स्मृतम्.

चारण्य इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद्देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्व-मित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां नानुवाद इत्युपपाद-
5 यितुमाह ।

## विधिर्वा धारणवत् ॥ २० ॥

वाशब्दोऽवधारणार्थः । विधिरेवायमाश्रमाणां धारणवत् । यथा दिष्टाग्निहोत्रेऽधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीत्यत्रानुवादसरूपादपि वाक्यादुपरि धारणस्याप्राप्त-
10 त्वाद्विधिराश्रीयते । तदुक्तं शेषलक्षणे विधिस्तु धारणेऽपूर्व-त्वात् ( जै. सू. ३।४।३ ) इति । तथात्राप्यप्राप्तत्वाद्विधिरे-वाश्रयणीयः । ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । यदहरेव विरजेत्तदहरेव प्रव्रजेत् ( जा. ४ ) इति जाबालानामाश्रमविधि-
15 मसन्तमिव कृत्वैतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्र-यणीयेत्युपपादितम् । एवमाश्रमान्तरविधानादृणश्रुतिर्यावज्जीव-श्रुतिरपवादश्रुतिश्चाविरक्तविषया एवेति वेदितव्याः । अन्याश्च ब्रह्मविदः कर्मणामा प्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः । अत ऊर्ध्वरेतःसु च ब्रह्मविद्या-
20 विधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥ २० ॥ पुरुषार्था-धिकरणं समाप्तम् । ( १ )

15. B. om. अन्यपरेषु.

16. C. reads गुणश्रुतिः for ऋणश्रुतिः.

18. B. reads अब्रह्मविदः for ब्रह्मविदः; B. reads आश्रयणात् for आ प्रयाणात्.

19. C. om. च after ऊर्ध्वरेतःसु.

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

इदमिदानीं चिन्त्यते स एष रसानां रसतमः परमः पराध्योऽष्टमो य उद्गीथः ( छा. १।१।३ ) इत्येवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराण्याहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानीति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः । किं युक्तम् । स्तुतिमात्रपराणीति । कुतः । उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् । यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्येयमेव जुहूः स्वर्गो लोक आहवनीय इत्यादिकस्य तत्स्तुतिमात्रपरत्वं तथेहापि । तदिदमाशङ्कते स्तुतिमात्रमुपादानादिति चेदिति । उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत् ।

अत्रोत्तरं नापूर्वत्वादिति । न स्तुतिमात्रत्वमुपपद्यते । कुतः । अपूर्वत्वात् । अप्राप्तत्वात् । न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्ना येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । न चोद्गीथादिविधिरत्र संनिहितो येनेयमेव जुहूः स्वर्गो लोक आहवनीय इत्यादिवत्तदेकवाक्यत्वेन यया कयाचिद्विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतु-

8. C. reads अवयव for अङ्ग after क्रतु.
10. E. reads स्वः for स्वर्गः.
12. A. B. om. तत् before स्तुति.
14. A. B. read स्तुतिमात्रम् for स्तुतिमात्रत्वम्.
16. A. B. om. उत्पत्ति.
18. C. reads एकवाक्यत्वे for एकवाक्यत्वेन.
19. A. B. read च for चित् after कया.

वीर्यवत्त्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

उपासीत ( छा. १।१।१ ) इत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम् । विधिप्रत्यययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताः श्रुतयः ॥२२॥
स्तुतिमात्राधिकरणं समाप्तम् । ( २ )

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम ( कौ. ३।१ ) । श्वेतकेतुर्हारुणेय आस ( छा. ६।१।१ ) इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थान्युत विद्याविशेषप्रतिपादनार्थानीति चिन्तायामाख्यानानि शंसन्तीत्याख्यानानां पारिप्लवे विनियोगान्न विद्याप्रधानत्वं न्याय्यमिति चेन्न । सर्वाण्याख्यानानि परिप्लवप्रयोगे न विनियोगमर्हन्ति । कुतः । विशेषितत्वाद्विनियोगस्य । आख्यानानि शंसन्तीत्युक्त्वा तत्रैव मनुर्वैवस्वतो राजेत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते । अतस्तेषामेव तत्र विनियोग इति गम्यते । तस्मान्न सर्ववेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः । अपि तु विद्याविध्यर्थाः ॥ २३ ॥

## तथा चैकवाक्योपबन्धात् ॥ २४ ॥

आत्मा वा अरे द्रष्टव्यः ( बृ. २।४।५ ) इत्यादिविधिनैक-

---

6. B. om. अव before गमयति; C. om. विधान.

15. B. reads शंसति for शंसन्ति.

16. E. reads वै before वैवस्वतः.

वाक्यतयोपबन्धाद्व्याख्यानानां विद्याविध्यर्थान्येव तानीति गम्यते । यथा सोरोदीत् ( तै. सं. १।५।१ ) इत्येवमादेः कर्मविध्यर्थत्वं न पारिप्लवार्थत्वम् ॥ २४ ॥ पारिप्लवाधिकरणं समाप्तम् । ( ३ )

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ 5

स्तुतिप्रसङ्गादवान्तरसंगतिविशेषेणार्थद्वयं चिन्तितम् । विद्यावन्त ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तमूर्ध्वरेतःसु च शब्दे हि ( ब्र. सू. ३।४।१७ ) इत्यादिभिः सूत्रैः । इदानीमूर्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न संभवतीत्याशङ्क्याहात एव चाग्नीन्धनाद्यनपेक्षेति । यत ऊर्ध्वरेतस आश्रमिणो 10 विद्यासंबन्धित्वेन श्रुत्या परिगृह्यन्ते ब्रह्मसंस्थोमृतत्वमेति ( छा. २।२३।१ ) । ये चेमेरण्ये श्रद्धा तप इत्युपासते ( छा. ५।१०।१ ) । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ( बृ. ४।४।२२ ) । यदिच्छन्तो ब्रह्मचर्यं चरन्ति ( का. २। १५ ) इत्यादिकयात एवोर्ध्वरेतःसु विद्याग्नीन्धनाद्यनपेक्षा । 15 अग्नीन्धनमग्न्याधानम् । आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥२५॥ अग्नीन्धनाद्यधिकरणं समाप्तम् । ( ४ )

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति तर्हि गृहस्थे- 20 ष्वपि तदनपेक्षैव साधयितुमर्हति । यज्ञादिश्रुतिरपि विविदिषन्ति ( बृ. ४।४।२२ ) इति शब्दात्कर्मणो वेदनाङ्गतां न प्रतिपादयति । अत आह सर्वापेक्षेति । अग्निहोत्रादिसर्वकर्मो-

---

1. A. B. read सम् before बन्धात्; C. reads एतानि for तानि.

11. E. reads इति after एति.

13. A. reads एवमेव for एतमेव.

पेक्षैव विद्या कर्मवत्सु गृहस्थेषु । कुतः । यज्ञादिश्रुतेः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ( बृ. ४।४।२२ ) इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति । यज्ञादि-
5 भिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते । यथासेर्हननसाधनत्वे सत्यसिना जिघांसतीति व्यपदेशः । अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षताप-
10 न्नस्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयमा प्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव । वक्ष्यति चावृत्तिरसकृदुपदेशात् ( ब्र. सू. ४।१।१ ) इत्यादिना । एवंरूपं च ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिकैः कर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायत इति
15 यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या ।

अश्ववत् । यथा पुरुषगमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्ष एवं मोक्षसाधनभूतापि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा । तदिदमाह स्वयमेव भगवान्

1. C. reads कर्मवत् for कर्मवत्सु.

9–10. E. reads आपन्नं स्मृतिरूप for आपन्नस्मृतिरूपम्.

13. E. om. च after एवंरूपम्; C. E. read नित्यैर्नैमित्तिकैः for नित्यनैमित्तिकैः.

17. C. E. read पुरुष before गमन; E. reads सपरिकर for परिकर.

18. C. om. अपि after मोक्षसाधनभूता.

19. A. B. om. परिकर after कर्म.

यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ (गी. १८।५)
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
(गी. १८।४६) 5

इति ॥ २६ ॥ सर्वापेक्षाधिकरणं समाप्तम्। (५)

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

गृहस्थस्य शमदमादीन्यप्यनुष्ठेयान्युत नेति चिन्तायामा-
न्तरबाह्यकरणव्यापाररूपत्वात्कर्मानुष्ठानस्य शमदमादीनां तद्वि- 10
परीतरूपत्वाच्चाननुष्ठेयानीति प्राप्त उच्यते। यद्यपि गृहस्थः
करणव्यापाररूपकर्मसु प्रवृत्तस्तथापि स विद्वाञ्छमदमाद्यु-
पेतः स्यात्। कुतः। तदङ्गतया तद्विधेः। विद्याङ्गतया तेषां विधेः।
तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा-
त्मन्येवात्मानं पश्येत् (बृ. ४।४।२३) इति। विद्योत्पत्तेश्चि- 15
त्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां विद्यानिर्वृत्तये
तेषां शमादीनामवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि। न च करण-
व्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्पर-
विरोधः। भिन्नविषयत्वात्। विहितेषु करणव्यापारोविहि-
तेषु प्रयोजनशून्येषु च तदुपशम इति। न च करणव्या- 20
पाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वा-

1. A. B. read यज्ञदान for यज्ञो दानम्.
8. A. C. om. अपि after तेषाम्; E. reads आवश्य for अवश्य.
9. A. B. read च after गृहस्थस्य.
11. C. reads नानुष्ठेयानि for अननुष्ठेयानि.

संभवः । विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसा-
दद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात् । अतो गृहस्थस्य
शमदमाद्योऽप्यनुष्ठेयाः ॥ २७ ॥ शमदमाधिकरणं समाप्तम्। ( ६ )

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

5 वाजिनां छन्दोगानां च प्राणविद्यायां न ह वा अस्यानन्नं
जग्धं भवति नानन्नं परिगृहीतं भवति ( बृ. ६।१।१४ )।
न ह वा एवंविदि किंचनानन्नं भवति ( छा. ५।२।१ ) इति
प्राणविदः सर्वान्नानुमतिः संकीर्त्यते । किमियं सर्वान्नानुमतिः
प्राणविद्यानिष्ठस्य सर्वदोत प्राणात्ययापत्ताविति विशये विशे-
10 षानुपादानात्सर्वदेति प्राप्त उच्यते प्राणात्यय इति । चशब्दो-
वधारणे । प्राणात्ययापत्तावेवेत्यर्थः । कुतः । तद्दर्शनात् । दृश्य-
ते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा
किं पुनः प्राणविदः । उषस्तः किल चाक्रायणो ब्रह्मविद्प्र-
सरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेष्विभ्यग्रामे वसन्ननशने-
15 न प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसाद-
माकाङ्क्षमाण इभ्यं कुल्माषान्खादन्तं भिक्षमाणस्तेन चोच्छि-
ष्टेभ्योन्ये न विद्यन्त इति प्रत्युक्तः पुनरप्येतेषां मे देहीत्यु-
क्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान्कुल्माषान्परिगृह्या-
नुपानप्रतिग्रहमिभ्येनार्थित उच्छिष्टं मे पीतं स्यात् ( छा.
20 १।१०।३) इति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा
इतीभ्येन पर्यनुयुक्तो न वा अजीविष्यमिमानखादन्कामो म
उदपानम् ( छा. १।१०।४ ) इति कुल्माषाखादने स्वस्य

10–11. B. om. चशब्दोवधारणे.
13. A. B. read उषस्तिः for उषस्तः.
18. A. B. read प्रतिगृह्य for परिगृह्य.
19. E. reads एव after उच्छिष्टम्.
22. A. B. read उदक for उद.

प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टो-
दकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं
जायायै दत्त्वा तया च रक्षितानपरेद्युर्योजनेनार्जिजीषया जिग-
मिषुः पुनरपि प्राणसंशयमापन्नस्तानेवेभ्योच्छिष्टान्स्वोच्छि-
ष्टभूतान्पर्युषितांश्चखाद । अतो ब्रह्मविदामपि प्राणसंशय 5
एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदः
सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

## अबाधाच्च ॥ २९ ॥

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ( छा. ७।
२६।२ ) इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्म- 10
विदां सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदामतिशयि-
तशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात्प्राणविदोल्पशक्तेः
सर्वान्नानुमतिरापद्विषयैव ॥ २९ ॥

## अपि स्मर्यते ॥ ३० ॥

अपि चापद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च 15
स्मर्यते

प्राणसंशयमापन्नो योन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

इति ॥ ३० ॥

## शब्दश्चातोकामकारे ॥ ३१ ॥ 20

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेवात
एव सर्वेषामकामकारे शब्दः कामकारस्य प्रतिषेधकः शब्दो

---

1. A. B. read आपत्तिः. for आपत्तेः.

4. A. B. om. इभ्योच्छिष्टान्स्व.

12. C. reads वृत्तीनाम् for शक्तीनाम्.

वर्तते । अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दस्तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा इतीति । पाप्मना संसृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥ सर्वान्नानुमत्यधिकरणं समाप्तम् । ( ७ )

5 **विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥**

यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम् । तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाप्यनुष्ठेयान्युत नेति चिन्तायां विद्याङ्गानां सतां केवलाश्रमशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां केवलाश्रमधर्मत्वं न संभवतीति प्राप्त

10 उच्यत आश्रमकर्मापीति । आश्रमस्य कर्मापि भवति केवलाश्रमिणामप्यनुष्ठेयानीत्यर्थः । कुतः । यावज्जीवमग्निहोत्रं जुहोति (आ.श्रौ.३।१४।११) इत्यादिना विहितत्वात् । जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा विद्याङ्गतया च तमेतं वेदानुवचनेन (बृ. ४।४।२२)

15 इत्यादिना विहितत्वाद्विद्याशेपतयाप्यनुष्ठेयानीत्याह ।

**सहकारित्वेन च ॥ ३३ ॥**

विद्योत्पत्तिद्वारेण विद्यासहकारितयाप्यनुष्ठेयानि । अग्निहोत्रादीनामिव जीवनाधिकारस्वर्गादिवद्विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यत इत्यर्थः ॥ ३३ ॥

1. A. B. read काठानाम् for कठानाम्.
2. A. B. read सम् after उत्; C. om. इति after उत्सृजा इति.
3. E. om. सम् before सृष्टः.
8. E. reads आश्रमिशेषत्वे for आश्रमशेपत्वे.
14. C. om. च before तमेतम्.
18. B. reads एव for इव before जीवन; A. B. read स्वर्गाधिकारवत् for स्वर्गादिवत्.

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह ।

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथा विद्यार्थत्व आश्रमार्थत्वेपि त एव यज्ञादय इति प्रतिपत्तव्यं न कर्मस्वरूपभेद इत्यर्थः । कुतः । उभयलिङ्गात् । उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्यविनियोगात्कर्मस्वरूपभेदे 5 प्रमाणाभावाच्च ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

धर्मेण पापमपनुदति ( म. ना. २२।१ ) इत्यादिभिश्च तानेव यज्ञादिधर्मान्निर्दिश्य तैर्विद्याया अनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति । अहरहरनुष्ठीयमानैर्हि यज्ञादि- 10 भिर्विशुद्धेन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते । अतस्त एवोभयत्र यज्ञादयः ॥ ३५ ॥ विहितत्वाधिकरणं समाप्तम् । ( ८ )

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोस्ति विद्यासहकारिण आश्रमधर्मा इति चोक्तम् । ये पुनराश्रमानन्तरा वर्तन्ते विधु- 15 रादयस्तेषां ब्रह्मविद्यायामधिकारोस्ति नेति विशय आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्याया अनाश्रमिणां चाश्रमधर्माभावान्नास्त्यधिकार इति प्राप्त उच्यतेन्तरा चापि त्विति । तुशब्दः

3. C. om. आश्रमार्थत्वे.
9. C. om. तैः.
11. B. om. प्र before कृष्यमाणा,
12. E. reads यज्ञादरः for यज्ञादयः.
14. B. reads ब्रह्मविद्यायाः for ब्रह्मविद्यायामधिकारोस्ति.
15. B. reads आश्रमान्तरा for आश्रमानन्तरा.
16. E. reads ब्रह्मविद्या for ब्रह्मविद्यायाम्; A. B. read न वेति for नेति.

पक्षव्यावृत्त्यर्थः । चशब्दोऽवधारणे । अन्तरा वर्तमानानामना-
श्रमिणामपि विद्यायामधिकारोऽस्त्येव । कुतः । तद्दृष्टेः । दृश्यते
हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् ।
न चाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम् । यज्ञेन दानेन
5 तपसानाशकेन ( बृ. ४।४।२२ ) इति दानादीनामाश्रमे-
ष्वनैकान्तिकानामप्यनुग्राहकत्वश्रवणात् । यथोर्ध्वरेतःसु विद्या-
निष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते तथा-
नाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवतारा-
धनादिभिर्विद्यानुग्रहः शक्यते कर्तुम् ॥ ३६ ॥

10 **अपि स्मर्यते ॥ ३७ ॥**

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते

जप्येनापि च संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

( मनुस्मृ. २।८७ )

15 इति । संसिध्येज्जपाद्यनुगृहीतया विद्यया सिद्धो भवती-
त्यर्थः ॥ ३७ ॥

**विशेषानुग्रहश्च ॥ ३८ ॥**

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः । श्रूयते चा-
नाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रहस्तपसा ब्रह्मचर्येण श्रद्धया
20 विद्ययात्मानमन्विष्येत् ( प्र. १।१० ) इति ॥ ३८ ॥

1. E. reads अवधारणार्थः for अवधारणे.
3. C. om. आदि after संवर्त; B. om. विद्या before निष्ठत्वम्.
6. E. reads अनेकान्तानाम् for अनैकान्तिकानाम्; C. reads दर्श-
नात् for श्रवणात्.
7. C. reads अदर्शनात् for दर्शनात्.
20. C. om. विद्यया.

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

तुशब्दोवधारणे । अतोनाश्रमित्वादितरदाश्रमित्वमेव ज्यायः । अनाश्रमित्वमापद्विषयम् । शक्तस्य त्वाश्रमित्वमेवोपादेयमित्यर्थः । भूयोधर्मैकाल्पधर्मैकयोरतुल्यकार्यत्वात् । लिङ्गाच्च । स्मृतेरित्यर्थः । स्मर्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम् 5

अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः । (दक्षस्मृ. १।१०)

इत्यादिना । निवृत्तब्रह्मचर्यस्याकृतदारस्य मृतभार्यस्य चावैराग्ये सति दारालाभ आपत् ॥ ३९ ॥ विधुराधिकरणं समाप्तम् । ( ९ )

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ 10

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोस्ति नेति चिन्तायां विधुरादिवदनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसंभवादस्त्यधिकार इति प्राप्त उच्यते तद्भूतस्य तु नातद्भाव इति । तुशब्दः पक्षव्यावृत्त्यर्थः । तद्भूतस्य नैष्ठिकाद्याश्रमनिष्ठस्य नातद्भावः । अतथाभावोनाश्रमित्वेनावस्थानं न संभवति । कुतः । तद्रूपाभावेभ्यो नियमात् । तद्रूपाणि तेषां नैष्ठिकादीनां रूपाणि तेषां धर्मा इत्यर्थः । तेषामभावास्तद्रूपाभावाः । तेभ्यः शास्त्रैर्नियमात् । नैष्ठिकाद्याश्रमं प्रविष्टान्स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि । ब्रह्मचा- 15

3. E. reads च for तु after शक्तस्य.

7. B. om. नि before वृत्तब्रह्मचर्यस्य; C. E. om. अकृतदारस्य.

11. C. om. परिव्राजक.

12. C. om. आश्रम before एकान्तैः.

17. C. E. read वेषाः for तेषाम्.

18. A. B. read तद्रूपाभावेभ्यो नियमात् after नियमात्; C. reads आश्रम for आश्रमम्.

र्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेवसादयन् (छा. २।२३।१ ) इति । अरण्यमियात्ततो न पुनरेयादिति च । संन्यस्याग्निं न पुनरावर्तयेदिति च । अतो विधुरादिवन्नैष्ठिकादीनामनाश्रमित्वेनावस्थानासंभवान्न तानधिकरोति ब्रह्मविद्या ।
5 जैमिनेरपीत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति ॥ ४० ॥

अथ स्यान्नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्तादधिकारः संभवति । अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितमवकीर्णिपशुश्च तद्वत् ( जै. सू. ६।८।२४ ) इति । अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसंभवात्कृतप्रायश्चित्तो ब्रह्मविद्या-
10 यामधिकरिष्यतीति । तत्राह ।

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां ततो भ्रष्टानां न संभवति । कुतः । पतनानुमानात्तदयोगात् । नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासंभवात् ।

15 आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥

( अत्रिस्मृ. ८।१६ )

इति । अतोधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥

20 **उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वमुपपातकं महापात-

2. A. B. read ईयात् for इयात्.
6. C. reads प्रायश्चित्त for प्रायश्चित्तात्.
9–10. C. reads विद्यायामधिकारी भवति for ब्रह्मविद्यायामधिकरिष्यतीति.
12. A. B. read तत् for ततः.
18. C. reads अधिकारि for अधिकार.

केष्वपरिगणितत्वादिति तत्र प्रायश्चित्तस्य भावं विद्यमानता-
मप्येक आचार्या मन्यन्ते । अशनवत् । यथा मध्वशनादि-
निषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम् ।
तदुक्तं स्मृतिकारैरुत्तरेषां चैतदविरोधि ( गौत. १।३।४ ) इति ।
गुरुकुलवासिनो यदुक्तं तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां　5
भवतीत्यर्थः । तद्वदिहापीति ब्रह्मचर्यप्रच्यवने प्रायश्चित्तसंभवा-
द्ब्रह्मविद्यायोग्यताप्यस्ति ॥ ४२ ॥

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

तुशब्दो मतान्तरव्यावृत्त्यर्थः । उपपातकत्वे महापातक-
त्वेप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः । ब्रह्मविद्यायाम-　10
नधिकृता इत्यर्थः । कुतः । स्मृतेः । पूर्वोक्तात्पतनस्मरणात् ।
यद्यपि कलुषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते
तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न संभवति ।

प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ।

( अत्रिस्मृ. ८।१६ )　15

इति स्मृतेरित्यर्थः । आचाराच्च । शिष्टा हि नैष्ठिकादीन्भ्र-
ष्टान्कृतप्रायश्चित्तानपि वर्जयन्ति । तेभ्यो ब्रह्मविद्यादिकं नो-
पदिशन्ति । अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥
तद्भूताधिकरणं समाप्तम् । ( १० )

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**　20

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाण्युत-

---

6. E. reads सम् before भवति; C. om. इति after इहापि; C. reads सद्भावात् for संभवात्.

7. A. B. om. अपि after योग्यता.

12. C. reads कल्मष for कलुष.

16. C. E. read वि before शिष्टाः.

र्त्विक्कर्तृकाणीति चिन्तायां यजमानकर्तृकाणीत्यात्रेयो मन्यते। कुतः । फलश्रुतेः । वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनादिह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः । न च गोदोहना-
5 दिवदङ्गाश्रयत्वेन यजमानकर्तृकात्वसंभवः । गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानमन्येनाशक्यम् । इह तूद्गातृकर्तृकेप्युद्गीथे तस्योद्गीथादे रसतमत्वानुसंधानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥

इति प्राप्तेभिधीयते ।

10 **आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥४५॥**

आर्त्विज्यमृत्विजः कर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते । कुतः । तस्मै हि प्रयोजनायर्त्विक्परिक्रीयते । फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः । कर्मविधिष्वृत्विजो वृणीते (सत्या. श्रौ.सू. १०।१)। ऋत्विग्भ्यो दक्षिणां ददातीत्यृत्वि-
15 क्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्मर्त्विग्भिरनुष्ठेयमित्यवगम्यते । तदन्तर्गतानि कायिकानि मानसानि च कर्माण्यृत्विक्कर्तृकाण्येव । न च शक्त्यशक्ती तस्य निबन्धनम् । यद्यप्युद्गीथाद्युपासनं पुरुषार्थस्तथापि क्रत्वधिकृताधिकारत्वात्क्रतोश्च साङ्गस्यर्त्विक्कर्तृकत्वाद्यदेव विद्यया करोति तदेव वीर्यवत्तरम्
20 ( छा. १।१।१० ) इत्यृत्विक्कर्तृकक्रियोपयोगित्वेन विद्या-

2. C. reads दहरविद्यासु for दहराद्युपासनेषु.

6–7. C. reads यत्तु for इह तूद्गातृकर्तृकेपि; B. reads कर्तृकत्वे for कर्तृके.

10,12. F. reads परिक्रियते for परिक्रीयते.

18. C. om. अधिकृत.

यास्तदेककर्तृकत्वश्रवणादृत्विक्कर्तृकाण्येतानि । दहरादिषूपासनेष्वृ-त्विक्कर्तृकत्वाश्रवणाच्छास्त्रफलं प्रयोक्तरि ( जै. सू. ३।७। १८ ) इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥ स्वाम्यधि-करणं समाप्तम् । ( ११ )

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥　　5

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः ( बृ. ३।५।१ ) इत्यत्र बाल्य-पाण्डित्यवन्मौनमपि विधीयत उतानूद्यत इति विशये मौनपा-ण्डित्यशब्दयोर्ज्ञानार्थत्वात्पाण्डित्यं निर्विद्येति विहितमेव ज्ञान-　　10
मथ मुनिरित्यनूद्यते । विधिशब्दो न ह्यत्र श्रूयत इति । एवं प्राप्ते ब्रूमः ।

सहकार्यन्तरविधिरिति । तद्वतो विद्यावतः । विध्यादिवत् । विधीयत इति विधिः । यज्ञादिः सर्वाश्रमधर्मः शमदमादयश्च विधिशब्देनोच्यन्ते । आदिशब्देन श्रवणमनने गृह्येते । सह-　　15
कार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः । सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः । एतदुक्तं भवति । यथा तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन (बृ.४।४।२२) इत्यादिना शान्तो दान्तः ( बृ. ४।४।२३ ) इत्या-दिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते यथा च　　20
श्रोतव्यो मन्तव्यः ( बृ. २।४।५ ) इति श्रवणमनने चार्थ-प्राप्ते विद्यासहकारित्वेन गृह्येते तथा तस्माद्ब्राह्मणः पाण्डित्यं

---

1. B. reads अश्रवणात् for श्रवणात्.

9. C. om. अपि after मौनम्.

17. B. reads तथा for यथा; E. om. यथा.

18. A. B. E. om. तपसानाशकेन.

निर्विद्य ( बृ. ३।५।१ ) इत्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायाः सहकार्यन्तरं विधीयत इति । मौनं च पाण्डित्यादर्थान्तरमित्याह पक्षेणेति । मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनान्मौनं पाण्डित्यबाल्ययो-
5 र्द्वयोस्तृतीयम् । यद्यप्यथ मुनिः ( बृ. ३।५।१ ) इत्यत्र विधिप्रत्ययो न श्रूयते तथापि मौनस्याप्राप्तत्वाद्विधेयत्वमङ्गीकरणीयमथ मुनिः स्यादिति । इदं च मौनं श्रवणप्रतिष्ठार्थमननादर्थान्तरभूतमुपासनालम्बनस्य पुनः पुनः संशीलनं तद्भावनारूपम् ।

10 तदेवं वाक्यार्थः । ब्राह्मणो विद्यावान्पाण्डित्यं निर्विद्योपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्भक्तिकृतसत्त्वविवृद्धिकृतम् । यथोक्तं नाहं वेदैः ( गी. ११।५३ ) इत्यारभ्य भक्त्या त्वनन्यया शक्यो ज्ञातुम् ( गी. ११।५४ ) इति । श्रुतिश्च
15 यस्य देवे परा भक्तिः ( श्वे. ६।२३ ) । नायमात्मा प्रवचनेन ( का. २।२३, मु. ३।२।३ ) इत्यादिका । बाल्येन तिष्ठासेत् ( बृ. ३।५।१ ) । बाल्यस्वरूपं चानन्तरमेव वक्ष्यते । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः स्यात् ( बृ. ३।५।१ ) । बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो
20 भवेन्निदिध्यासनरूपविद्यावाप्तये । एवं त्रितयोपादानेन लब्धविद्यो भवतीत्याहामौनं मौनं च निर्विद्याथ ब्राह्मणः ( बृ. ३।५।१ ) इति । अमौनं मौनेतरसहकारिकलापः । तं च

3. B. om. इति before आह.

5. C. om. द्वयोः.

7–8. E. reads प्रतिष्ठार्थात् for प्रतिष्ठार्थं.

12. C. reads प्राप्त for प्राप्तम्; B. reads शुद्धि for विवृद्धि.

15. E. reads लभ्यः after प्रवचनेन.

मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्पाद्यां लभेते-त्यर्थः । स ब्राह्मणः केन स्यात् ( बृ.३।५।१ ) इत्युक्तादुपा-यात्किमन्योप्युपायोस्तीति पृष्टे येन स्यात्तेनेदृश एव ( बृ. ३।५।१ ) इति येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्तं तेनैवे-दृशः स्यान्न केनाप्यन्येनोपायेनेति परिहृतम् । अतः सर्वे- 5 ष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत्पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते ॥ ४६ ॥

अथ स्याद्यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रम-धर्मसहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमु-च्यते कथं तर्हि च्छान्दोग्येभिसमावृत्य कुटुम्बे शुचौ देशे 10 ( छा. ८।१५।१ ) इत्यारभ्य स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ( छा. ८।१५।१ ) इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यत इति। अत्राह।

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

तुशब्दश्चोद्यं व्यावर्तयति । कृत्स्नभावात्कृत्स्नेषु भावा- 15 त्कृत्स्नेष्वाश्रमिषु विद्यायाः सद्भावाद्गृहिणोप्यस्तीति तेनोप-संहारः । तस्मात्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभि-प्रायः ॥ ४७ ॥

3. C. reads अपि after उपायः.

10. A. B. read हि for अभि before समावृत्य.

12 B. om. अभि before संपद्यते; C. reads सः for च.

13. A. B. read स्थितिः for स्थितिदर्शनम्; A. B. read अतः for इति । अत्र.

14. वेदान्तदीपे तुशब्दरहितः सूत्रपाठो दृश्यते.

15. A. B. om. कृत्स्नेषु भावात्.

तथैतस्मिन्नपि वाक्ये ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ( बृ. ३।५।१ ) इति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य ( बृ. ३।५।१ ) इत्यादिना पारिव्राज्यधर्मस्थितिहेतु-
5 कमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह ।

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः । कुतः । एवंविधमौनोपदेशवदितरेषामाश्रमिणामपि त्रयो धर्मस्कन्धाः ( छा. २।२३।१ ) इत्या-
10 रभ्य ब्रह्मसंस्थोमृतत्वमेति ( छा. २।२३।१ ) इति ब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः सर्वाश्रमिसाधारण इति । अतः सुष्ठूक्तं यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयत इति ॥ ४८ ॥ सहकार्यन्तरविध्यधिकरणं समाप्तम् । ( १२ )

15
## अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् ( बृ. ३।५।१) इत्यत्र विदुषो बाल्यमुपादेयतया श्रुतम् । बालस्य भावः कर्म वा बाल्यम् । बालभावस्य वयोवस्थाविशेषस्यानुपादे-

1. C. reads एव after तथा; E. reads ब्राह्मणः for ब्राह्मणाः.
2. A B. read सर्वैषणायाः for लोकैषणायाः; E. reads चरति for चरन्ति.
4. C. om. धर्म before स्थिति.
5. C. reads तृतीयम् for तृतीय.
9. E. reads आश्रमिधर्माणाम् for आश्रमिणाम्.
11. C. reads उपपादितम् for उपपादितः; A. B. read सर्वाश्रम for सर्वाश्रमि.
16. B. om. ब्राह्मणः.
18. C. om. बाल before भावस्य; E. reads आदि after वयोवस्था.

यत्वात्कर्मैवेह गृह्यते । तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयमुत दम्भादिरहितमेवेति विशये विशेषाभावात्सर्वमुपादेयम् । नियमशास्त्राणि च विशेषविधिनानेन बाध्यन्त इति । एवं प्राप्तेभिधीयते ।

अनाविष्कुर्वन्निति । बालस्य यत्स्वभावानाविष्काररूपं कर्म 5 तदुपाददानो वर्तेत विद्वान् । कुतः । अन्वयात् । तस्यैवान्वयात् । बाल्येन तिष्ठासेत् ( बृ. ३।५।१ ) इत्यस्मिन्विधौ तस्यैव ह्यन्वयसंभवः । इतरेषां विद्याविरोधित्वश्रवणात्

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।

नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ ( का. २।२३ ) 10

आहारशुद्धौ सत्त्वशुद्धिः ( छा. ७।२६।२ ) इत्यादिषु ॥ ४९ ॥

अनाविष्काराधिकरणं समाप्तम् । (१३)

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

द्विविधा विद्याभ्युदयफला मुक्तिफला च । तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्मभिः कर्मानन्तरमेवोत्पद्यत 15 उतानन्तरं कालान्तरे वेत्यनियम इति संशयः । पूर्वकृतैः पुण्यकर्मभिर्हि विद्वाञ्जायते । यथोक्तं भगवता

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । ( गी. ७।१६ )

इति । साधने निर्वृत्ते विलम्बहेत्वभावादनन्तरमेवेति प्राप्त उच्यते ।

1. C. E. read कामचारादि for कामचारादिकम्.
2. C. E. read रहितत्वम् for रहितम्.
5. C. reads स्व before स्वभाव.
6–7. B. om. तस्यैवान्वयात्.
15. C. reads पुण्य for कर्म before अनन्तरम्; E. reads पुण्य before कर्मानन्तरम्.
16. A. B. read च for वा after कालान्तरे; C. reads पूर्वप्रकृतैः for पूर्वकृतैः.
17. C. om. हि after पुण्यकर्मभिः.

ऐहिकमप्रस्तुतप्रतिबन्ध इति । ऐहिकमभ्युदयफलमुपासनम् । अप्रस्तुतप्रतिबन्धेप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरं प्रतिबन्धे सति तदुत्तरकालमित्यनियमः । कुतः । तद्दर्शनात् । दृश्यते हि प्रबलेन कर्मान्तरेण कर्मफलप्रतिबन्धा-
5 भ्युपगमः श्रुतौ । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम् ( छा. १।१।१० ) इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥ ऐहिकाधिकरणं समाप्तम् । (१४)

**एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५१ ॥**

10 मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः । तस्यापि पूर्ववत्प्रतिबन्धाभावप्रतिबन्धसंप्राप्तिरूपावस्थावधृतेः । अत्रापि तस्य हेतोः समानत्वादित्यर्थः । सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात्प्रतिबन्धासंभव इत्यधिकाशङ्का । तत्रापि ब्रह्मविदपचा-
15 राणां पूर्वकृतानां प्रबलानां संभवात्प्रतिबन्धसंभव इति परिहारः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ ५१ ॥ मुक्तिफलाधिकरणं समाप्तम् । ( १५ )

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥

1. A. B. om. प्रतिबन्धे.
3. B. reads अप्रतिबन्धे for प्रतिबन्धे.
4. A. B. read प्रबल for प्रबलेन.
12. A. B. om. संप्राप्ति; E. reads समाप्ति for संप्राप्ति; C. reads तत्रापि for अत्रापि.
13. C. om. कर्मभ्यः.
15. C. reads सद्भावात् for संभवात्; A. B. read प्रतिबन्धः for प्रतिबन्धसंभवः.

# अथ श्रीभाष्ये

## चतुर्थाध्याये प्रथमः पाद आरभ्यते ।

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र ब्रह्मविदाप्नोति परम् ( तै. २।१ ) । तमेव विदित्वाति मृत्युमेति ( श्वे. ३।८) । ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) । यदा पश्यः पश्यते रुक्मवर्णम् ( मु. ३।१।३ ) इत्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थ उतासकृदावृत्तमिति संशयः । किं युक्तम् । सकृत्कृतमिति । कुतः । ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) इति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात् । न चावघातादिवद्वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वाद्यावत्कार्यमावृत्तिरिति शक्यं वक्तुम् । वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम् । आराधिताच्च परमपुरुषाद्धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि फलमत उपपत्तेः ( ब्र. सू. ३।२।३७ ) इत्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रार्थ इति प्राप्ते प्रचक्ष्महे ।

*आवृत्तिरसकृदिति । असकृदावृत्तमेव वेदनं शास्त्रार्थः ।* कुतः । उपदेशात् । ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात् । तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन्विषये वेदनोपदे-

6. E. reads एवम् for एव.
21. E. om. शब्देन.

शपरवाक्येषु प्रयोगादवगम्यते । तथा हि मनो ब्रह्मेत्युपासीत ( छा. ३।१८।१ ) इत्युपासिनोपक्रान्तोर्थो भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ( छा. ३।१८।३ ) इति विदिनोपसंह्रियते । तथा यस्तद्वेद यत्स वेद स मयैतदुक्तः ( छा. ४।१।४ ) इत्युपक्रमे विदिनोक्तं रैकस्य ज्ञानमनु म एतां भगवो देवतां शाधि यां देवतामुपास्से ( छा. ४।२।२ ) इत्युपासिनोपसंह्रियते । तथा ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्यादिवाक्यसमानार्थेषु वाक्येष्वात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. २।४।५ ) । ततस्तु तं पश्यते निष्कलं ध्यायमानः ( मु. ३।१।८ ) इत्यादिषु ध्यायतिना वेदनमभिधीयते। ध्यानं च चिन्तनम्। चिन्तनं च स्मृतिसंततिरूपं न स्मृतिमात्रम् । उपास्तिरपि तदेकार्थः । एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात् । तदुभयैकार्थ्यादसकृदावृत्तसंततस्मृतिरिह ब्रह्म वेद ब्रह्मैव भवति ( मु. ३।२।९ ) । ज्ञात्वा देवं मुच्यते सर्वपाशैः ( श्वे. १।८ ) इत्यादिषु वेदनादिशब्दैरभिधीयत इति निश्चीयते ॥ १ ॥

## लिङ्गाच्च ॥ २ ॥

लिङ्गं स्मृतिः । स्मृतेश्चायमर्थोवगम्यते । स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसंततिरूपम्

2. A. B. read उपक्रान्त for उपक्रान्तः.
10. E. reads पश्यति for पश्यते.
11. C. E. read तच्च for चिन्तनं च.
12. B. reads तदेकार्था for तदेकार्थः; C. reads एकार्थ for एकाग्रचित्त.
13–14. B. reads स्मृतिसंततिः for संततस्मृतिः.
15. B. reads सर्वपापैः for सर्वपाशैः.
19. B. om. संतति after स्मृति.

तद्रूपप्रत्यये चैका संततिश्चान्यनिःस्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा ॥ (वि.पु. ६।७।९१)

इति । तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ २ ॥
आवृत्त्यधिकरणं समाप्तम् । ( १ )

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥** 5

इदमिदानीं चिन्त्यते किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यमुतोपासितुरात्मत्वेनेति । किं युक्तम् । अन्यत्वेनेति । कुतः । उपासितुः प्रत्यगात्मनोर्थान्तरत्वाद्ब्रह्मणः । अर्थान्तरत्वं चाधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) । अधिकोपदेशात् ( ब्र. सू. ३।४।८ ) । नेतरोनुपपत्तेः ( ब्र. सू. 10 १।१।१७ ) इत्यादिषूपपादितम् । यथावस्थितं च ब्रह्मोपास्यम् । अयथावस्थितोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात् । यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ( छा. ३। १४।१ ) इति न्यायात् । अतोन्यत्वेनोपास्यमिति । एवं प्राप्तेभिधीयते । 15

आत्मेति त्विति । तुशब्दोवधारणे । उपासितुरात्मत्वेवोपास्यम् । उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथात्मा तथा स्वात्मनोपि परं ब्रह्मात्मत्वेवोपासीतेत्यर्थः । कुतः । एवं ह्युपगच्छन्ति पूर्वे उपासितारस्त्वं वा अहमस्मि भगवो देवतेहं वै त्वमसि ( जाबा. ) इति । उपासितुरर्थान्तरभूतं ब्रह्मोपासि- 20 ताहमिति कथमभ्युपगच्छन्तीत्यत्राह ग्राहयन्ति चेति । इममर्थमविरुद्धमुपासितॄन्ग्राहयन्ति शास्त्राणि । तान्प्रत्युपपादयन्ती-

---

12. A. B. om. अवस्थित.
18. B. om. स्व before आत्मनोपि.
19. E. reads अभि for हि before उपगच्छन्ति.
21. B. reads इदम् for इमम्.

त्यर्थः। य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः (श. ब्रा. १४।१६।७।३०) इति। तथा सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा. ६।८।६)। ऐत-
5 दात्म्यमिदं सर्वम् (छा. ६।८।७) इति। सर्वं खल्विदं ब्रह्म तज्जलान् (छा. ३।१४।१) इति च सर्वस्य चिदचिद्वस्तुनस्त-ज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्याय-मात्मा। अतः स त आत्मा। अतो यथा प्रत्यगात्मनः स्व-शरीरं प्रत्यात्मत्वाद्देवोहं मनुष्योहमित्यनुसंधानं तथा प्रत्यगा-
10 त्मनोप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसंधानं युक्तमिति। एवं शास्त्रैरुपपादितम्। सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वश-ब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तस्त्वं वा अहमस्मि भगवो देवतेहं वै त्वमसि भगवो देवते (जाबा.) इति व्यतिहारेणोक्तवन्तः। एवं चाथ योन्यां देवतामुपास्तेन्योसा-
15 वन्योहमस्मीति न स वेद (बृ. १।४।१०)। अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत (बृ. १।४।७)। सर्वं तं परादाद्यो-न्यत्रात्मनः सर्वं वेद (बृ. २।४।६) इत्यात्मत्वाननुसंधान-निषेधः पृथगात्मानं प्रेरितारं च मत्वा (श्वे. १।६) इति पृथक्त्वानुसंधानविधानं चाविरुद्धम्। अहमिति स्वात्मतया-

5. A. B. om. इति after इदं सर्वम्.
8. A. B. om. अतः before सः.
9. B. reads च after तथा.
11. B. reads निष्ठत्वे for निष्ठत्वेन.
13. B. om. भगवो देवते after त्वमसि.
14. A. B. read व्यतिकरेण for व्यतिहारेण.
17. E. reads अन्यत्वानुसंधान for आत्मत्वाननुसंधान.
19. A. B. read पृथक्त्वानुसंधानात् before पृथक्त्वानुसंधानविधानम्; B. reads त्वात्मतया for स्वात्मतया.

नुसंधानादन्यत्वानुसंधाननिषेधो रक्षितः। स्वशरीरात्स्वात्मनोधिकत्वानुसंधानवत्स्वात्मनोपि परमात्मनोधिकत्वानुसंधानात्पृथक्त्वानुसंधानविधानं च रक्षितम्। अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्येकृत्स्नो ह्येषः (बृ. १।४।७) इत्युक्तम्। अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम्॥ ३॥ आत्मत्वोपासनाधिकरणं समाप्तम्। (२) 5

## न प्रतीके न हि सः॥ ४॥

मनो ब्रह्मेत्युपासीत (छा. ३।१८।१)। स यो नाम ब्रह्मेत्युपास्ते (छा. ७।१।५) इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसंधानं कार्यमुत नेति चिन्तायां मनो ब्रह्मेत्युपासीत (छा. 10 ३।१८।१) इति ब्रह्मोपासनत्वसाम्याद्ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेत्येवं प्राप्तेभिधीयते न प्रतीक इति। प्रतीके नात्मत्वानुसंधानं कार्यम्। न हि सः। न ह्युपासितुरात्मा प्रतीकः। प्रतीकोपासनेषु प्रतीक एवोपास्यो न ब्रह्म। ब्रह्म तु तत्र दृष्टिविशेषणमात्रम्। प्रतीकोपासनं हि नामा- 15 ब्रह्मणि ब्रह्मदृष्ट्यनुसंधानम्। तत्रोपास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथानुसंधेयम्॥ ४॥

नन्वत्रापि ब्रह्मैवोपास्यम्। ब्रह्मण उपास्यत्वसंभवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात्। अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति। तत्राह।

---

1. C. reads अनुसंधान for अनुसंधानात्.
3. B. reads अनुसधानम् for अनुसंधानविधानम्.
8. A. reads ह वै after स यः.
12. A. B. om. एवम् before प्राप्ते.
13. C. om. न हि सः.
14. B. reads च after उपास्यो न.
16. E. reads दृष्ट्या for दृष्टि; B. reads उपास्य for उपास्यस्य.
18. C. reads असंभवे for संभवे.

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता। न ब्रह्मणि मनआदिदृष्टिः।
ब्रह्मणो मनआदिभ्य उत्कर्षात्। तेषां च विपर्ययात्। उत्कृष्टे
हि राजनि भृत्यदृष्टिः प्रत्यवायकरी। भृत्ये तु राजदृष्टिरभ्यु-
5 दयाय ॥ ५ ॥ प्रतीकाधिकरणं समाप्तम्। (३)

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

य एवासौ तपति तमुद्गीथमुपासीत (छा. १।३।१) इ-
त्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः किमुद्गीथादौ कर्माङ्ग
आदित्यादिदृष्टिः कर्तव्योतादित्यादिषूद्गीथादिदृष्टिरिति। उत्कृ-
10 ष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायादुद्गीथादीनां च फलसाधनभूत-
कर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिषूद्गी-
थादिदृष्टिरिति प्राप्तेभिधीयत आदित्यादिमतयश्चाङ्ग इति।
चशब्दोवधारणे। क्रत्वङ्ग उद्गीथादावादित्यादिदृष्टय एव
कार्याः। कुतः। उपपत्तेः। आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः।
15 आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम्।
अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥ आदित्यादिमत्यधिकरणं समाप्तम्। (४)

## आसीनः संभवात् ॥ ७ ॥

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादि-
शब्दवाच्यमसकृदावृत्तं संततस्मृतिरूपमित्युक्तम्। तदनुतिष्ठ-
20 न्नासीन उतासीनः शयानस्तिष्ठन्गच्छंश्च विशेषाभावादनियमे-

3. C. reads त्वविपर्ययात् for च विपर्ययात्.
12. C. reads दृष्टेः for दृष्टिः.
18. C. om. ज्ञानम्.
19. E. reads स्मृत for स्मृति; A. B. read एव after स्मृतिरूपम्.
20. B. C. E. om. उतासीनः.

नानुतिष्ठेदिति प्राप्त उच्यत आसीन इति । आसीन उपासनमनुतिष्ठेत् । कुतः । संभवात् । आसीनस्यैव ह्येकाग्रचित्ततासंभवः । स्थितिगत्योः प्रयत्नसापेक्षत्वाच्छयाने च निद्रासंभवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रय आसीनः कुर्यात् ॥ ७ ॥ 5

## ध्यानाच्च ॥ ८ ॥

निदिध्यासितव्यः ( बृ. २।४।५ ) इति ध्यानरूपत्वादुपासनस्यैकाग्रचित्ततावश्यंभाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥ 10

निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वताः ( छा. ७।६।१ ) इति । अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव संभवेत् ॥ ९ ॥ 15

## स्मरन्ति च ॥ १० ॥

स्मरन्ति चासीनस्यैव ध्यानम्

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥

2. B. reads अनुतिष्ठत for अनुतिष्ठेत्.

3. A. B. read शयने for शयाने.

4. B. reads पश्चात् for पश्चार्ध; A. B. C. read निर्वृत्तये for निवृत्तये; E. reads साश्रयः for सापाश्रयः.

11. C. reads हि for च after निश्चलत्वम्.

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥
( भ. गी. ६।११-१२ )

इति ॥ १० ॥

5 **यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥**

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलो यो देशः कालश्च स एवोपासनस्य देशः कालश्च । समे शुचौ शर्करावह्निवालुकाविवर्जिते ( श्वे. २।१० ) इति वचनमेकाग्रतैकान्तमाह न तु देशं नियच्छति । मनोनुकूले ( श्वे.२।१० )
10 इति वाक्यशेषात् ॥ ११ ॥ आसीनाधिकरणं समाप्तम् । (५)

**आ प्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥**

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव संपाद्यमुता प्रयाणात्प्रत्यहमनुवर्तनीयमिति विशय एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयमिति प्राप्त उच्यते
15 आ प्रयाणादिति । आ मरणादनुवर्तनीयम् । कुतः । तत्रापि हि दृष्टम् । उपासनोद्योगप्रभृत्या प्रयाणान्मध्ये यः कालस्तत्र सर्वत्रापि दृष्टमुपासनं स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते ( छा. ८।१५।१ ) इति ॥ १२ ॥ आप्रयाणाधिकरणं समाप्तम् । ( ६ )

20 **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥**

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते ।

---

1. C. reads क्रमः for क्रियः after इन्द्रिय.
7. E. reads देशे after शुचौ.
8. C. E. read आदि after वालुका.
9. A. E. read एकान्तदेशम् for एकान्तम्.
12. E. reads उक्तलक्षण for उक्तलक्षणम्.
20. C. reads विनाशात् for विनाशौ.

ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते। तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते ( छा. ४।१४।३ )।

तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन।
( बृ. ४।४।२३ ) 5

इत्युत्तराघाश्लेषः। तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ( छा. ५।२४।३ )।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। (मु.२।२।८)
इति पूर्वाघविनाशः। एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते नेति संशयः। किं युक्तम्। नोपपद्येते इति। कुतः। 10

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
( ब्रह्मवै. प्रकृ. २६।७० )

इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथंचिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते। न च विद्या पूर्वोत्तराघयोः प्रायश्चि- 15
त्ततया विधीयते। येन प्रायश्चित्तेनाघविनाश उच्येत। विद्या हि ब्रह्मविदाप्नोति परम् ( तै. २।१ )। ब्रह्म वेद ब्रह्मैव भवति (मु. ३।२।९ ) इति ब्रह्मप्राप्त्युपायतया विधीयते। अतो विद्यास्तुत्यर्थवादोयमघविनाशाश्लेषव्यपदेश इति। एवं प्राप्तेभिधीयते।

तदधिगम इति। विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपू- 20
र्वाघयोरश्लेषविनाशावुपपद्येते। कुतः। एवंविधं हि विद्यामाहात्म्यमवगम्यते। एवंविदि पापं कर्म न श्लिष्यते (छा.४।१४।३)। एवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छा. ५।२४।३) इत्यादिव्यपदेशात्।

6. A. B. reads इषीका for इषीक.
14. A. om. भूत after साधन.
16. C. reads उच्यते for उच्येत.
18. A. B. E. om. स्तुति after विद्या.

न च नाभुक्तं क्षीयते कर्म (ब्रह्मवै. प्रकृ. २६।७०) इत्यनेनास्य विरोधः । भिन्नविषयत्वात् । तद्धि कर्मणां फलजननसामर्थ्य-द्रढिमविषयम् । एतत्तूत्पन्नाया विद्यायाः प्राकृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यमुत्पत्स्यमानानां च फलजनन-
5 शक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते । यथाग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यमेवमत्रापीति न कश्चिद्विरोधः । अघस्याश्लेषकरणं वैदिककर्मायोग्यतावासना-प्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम् । अघानि हि कृतानि
10 पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति । अघस्य विनाशकरणमुत्पन्नायास्तच्छक्तेर्विनाशकरणम् । शक्तिरपि परमपुरुषाप्रीतिरेव । तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसंचयजनितपरमपुरुषा-
15 प्रीतिं विनाशयति । सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति । तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम् । नाविरतो दुश्चरितात् (का. २। २४) इत्यादिभिः शास्त्रैरा प्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्या विद्याया दुश्चरितविरतिनिष्पाद्यत्वावगमात्
20 ॥ १३ ॥ तदधिगमाधिकरणं समाप्तम् । (७)

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

उत्तरपूर्वाघयोर्विद्ययाश्लेषविनाशावुक्तौ । इतरस्य पुण्यस्या-

1. B. C. read न कर्म क्षीयते for नाभुक्तं क्षीयते कर्म; C. E. read शास्त्रेण after अनेन.
5. C. reads तयोः for द्वयोः.
10. C. reads रुचि for रुचिम्.
11. B. om. च after प्रत्यवायम्.
18–19. C. om. उत्तरोत्तरातिशयभागिन्याः.

प्येवमुक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम् । विद्याफल-
विरोधित्वसामान्यात् । व्यपदेशाच्च । भवति च व्यपदेश
उभे सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मानोतो निवर्तन्ते ( छा.
८।४।१ ) इति । तत्सुकृतदुष्कृते धूनुते ( कौ. १।४ ) इति
च । मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्मशब्देन व्यपदेशः । 5
सुकृतस्य शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्यया-
विरोधशङ्कां निवर्तयितुमतिदेशः । ननु विदुषोपि सेतिकर्त-
व्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव । कथं तेषां
विरोधाद्विनाश उच्यते । तत्राह पाते त्विति । शरीरपाते तु
तेषां विनाशः । शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृ- 10
तानि नश्यन्तीत्यर्थः ॥ १४ ॥ इतराधिकरणं समाप्तम् । ( ८ )

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविना-
शावुक्तौ । ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण
विनाश उतानारब्धकार्ययोरेवेति विशये सर्वे पाप्मानः 15
प्रदूयन्ते ( छा. ५।२४।३ ) इति विद्याफलस्याविशेषश्रवणा-
द्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रम-
णादिवत्संस्कारवशादप्युपपत्तेरविशेषेणेति प्राप्त उच्यतेना-
रब्धकार्ये एव तु पूर्वे इति । विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते
अनारब्धकार्ये अप्रवृत्तफले एव विद्यया विनश्यतः । कुतः । 20

---

1. A. B. read असंश्लेष for अश्लेष.

4. C. E. read वि before धूनुते.

5. C. reads शब्द for शब्देन.

6. E. reads अपि after सुकृतस्य; A. B. read विद्यायाः for विद्यया.

8. C. reads अन्नादीनि for अन्नादि.

16. C. reads अविशेषेण for अविशेष.

तदवधेः । तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्ये ( छा. ६।१४।२ ) इति शरीरपातविलम्बावधिश्रुतेः । न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थिति-हेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥ अनारब्धकार्याधिकरणं समाप्तम् । ( ९ )

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

इतरस्याप्येवमसंश्लेषः ( ब्र. सू. ४।१।१४ ) इति विद्या-बलात्सुकृतस्याप्यसंश्लेष उक्तः । अग्निहोत्रादीनां नित्यनैमित्ति-कानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषा-दनिच्छतोननुष्ठाने प्राप्त उच्यतेग्निहोत्रादि त्विति । तुशब्दः सुकृतान्तरेभ्यो विशेपार्थः । अग्निहोत्राद्याश्रमधर्माः फलाश्ले-षासंभवादनुष्ठेया एव । तदसंभवश्च तत्कार्यार्थत्वात्तेपाम् । विद्याख्यकार्यायैव हि विदुषोग्निहोत्राद्यनुष्ठानम् । कथमिदमव-गम्यते । तद्दर्शनात् । दृश्यते हि तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ( बृ. ४।४।२२ ) इत्यादिनाग्निहोत्रादीनां विद्यासाधनत्वम् । विद्यायाश्चा प्रयाणा-दभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमक-र्माप्यहरहरनुष्ठेयमेव । अन्यथाश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था विद्योत्पत्तेः प्राचीनं च सुकृतं यावत्संपातमुषित्वा ( छा. ५।१०।५ ) प्राप्यान्ते

3. C. om. कर्म after अपुण्य.
8. C. reads एवम् after सुकृतस्यापि; B. reads अत्र before अग्नि होत्रादीनाम्.
11. C. E. read विशेषणार्थः for विशेपार्थः; B. reads धर्म for धर्माः after आश्रम.

कर्मणः ( बृ. ४।४।६ ) इत्यनुभवेन विनष्टं भुक्तावशिष्टं च प्रारब्धफलं सुहृदः साधुकृत्यामित्यस्य को विषयः । तत्राह ।

**अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥**

अतोग्निहोत्रादिसाधुकृत्याया विद्योत्पत्त्यर्थाया अन्यापि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्यानन्ता संभवत्येव । तद्विषयमिदमेकेषां शाखिनां वचनं तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यामिति । विद्ययाश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥ 5

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसंभवं पूर्वोक्तं स्मारयति ।

**यदेव विद्ययेति हि ॥ १८ ॥** 10

यदेव विद्यया करोति तदेव वीर्यवत्तरम् ( छा. १।१।१० ) इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि । अतो विदुषोनुष्ठितप्रतिबद्धफलविषयं सुहृदः साधुकृत्यामिति शाट्यायनकम् ॥ १८ ॥

अग्निहोत्राद्यधिकरणं समाप्तम् । ( १० ) 15

**भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥ १९ ॥**

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशये तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्ये ( छा. ६।१४।२ ) 20

1. B. C. read भुक्तशिष्टम् for भुक्तावशिष्टम्.

2. E. reads प्रारब्धं कर्मफलम् for प्रारब्धफलम्; E. reads विधेयः for विषयः.

5–6. C. reads प्रतिषिद्धफल for प्रतिबद्धफला.

11. E. reads शाठ्यायनिकम् for शाट्यायनकम्.

20. C. om. अथ संपत्स्ये.

इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने इति प्राप्त उच्यते भोगेन त्विति । तुशब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म संपद्यते । ते च पुण्यपापे एकशरी-
5 रोपभोग्यफले चेत्तच्छरीरावसाने संपद्यते । अनेकशरीरोपभोग्यफले चेत्तदवसाने संपद्यते । भोगेनैव च क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । तस्य तावदेव चिरं यावन्न विमोक्ष्ये ( छा. ६।१४।२ ) इति च भोगेन तयोः कर्मणोर्विमोक्ष उच्यते । देहावधिनियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्राग-
10 नुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्मानादिकालसंचितमनन्तं विद्यामाहात्म्याद्विनश्यति । विद्यारम्भोत्तरकालमनुष्ठितं च न श्लिष्यति । तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥ इतरक्षपणाधिकरणं समाप्तम् । ( ११ )

15 इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥



1. C. om. वि before मोक्षावसानत्व.
5. A. B. om. उप in both the places; E. reads इति after अवसाने.
6. A. B. om. च after भोगेनैव; E. reads क्षययितव्यत्वात् for क्षपयितव्यत्वात्.

# अथ श्रीभाष्ये

## चतुर्थाध्यायस्य द्वितीयः पादः प्रारभ्यते ॥

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावदुत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायतेऽस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ( छा. ६।८।६ ) इति । अत्र वाङ्मनसि संपद्यत इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषयोत वाग्विषयेति विशये वृत्तिमात्रविषयेति युक्तम् । कुतः । मनसो वाक्प्रकृतित्वाभावात्तत्र वाक्स्वरूपसंपत्त्यसंभवात् । वागादिवृत्तीनां मनोधीनत्वेन वृत्तिसंपत्तिश्रुतिः कथंचिदुपपद्यत इति । एवं प्राप्तेऽभिधीयते ।

वाङ्मनसीति । वाक्स्वरूपमेव मनसि संपद्यते । कुतः । तद्दर्शनात् । दृश्यते हि वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिः । वृत्तिमात्रसंपत्त्यापि तदुपपद्यत इति चेत्तत्राह शब्दाच्चेति । वाङ्मनसि संपद्यते ( छा. ६।८।६ ) इति वाक्स्वरूपसंपत्तावेव हि शब्दो न वृत्तिमात्रसंपत्तौ । न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते येन वृत्तिमात्रं संपद्यत इत्युच्येत । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि संपत्तिर्नोपपद्यत इति तद्वाङ्मनसि संपद्यते ( छा. ६।८।६ )

10. C. reads अभावात् for असंभवात्.

16. A. om. स्वरूप.

18. C. reads एव after वृत्तिमात्रम्.

19. E. reads क after प्रकृति.

इति वचनान्मनसा वाक्संयुज्यते न तु तत्र लीयत इति परिहर्तव्यम् ॥ १ ॥

## अत एव सर्वाण्यनु ॥ २ ॥

यतो वाचो मनसा संयोगमात्रं संपत्तिर्न तु लयोत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि संपत्तिश्रुतिरुपपद्यते । तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ( प्र. ३।९ ) इति ॥ २ ॥ वागधिकरणं समाप्तम् । ( १ )

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे संपद्यते प्राणेन संयुज्यते । न मनोवृत्तिमात्रम् । कुतः । उत्तरात् । मनः प्राणे (छा. ६।८।६) इति वाक्यात् । अधिकाशङ्का त्वन्नमयं हि सोम्य मनः ( छा. ६।५।४ ) इति वचनान्मनसोऽन्नप्रकृतिकत्वमवगम्यते । अन्नस्य च ता अन्नमसृजन्त ( छा. ६।२।४ ) इत्यम्मयत्वं सिद्धम् । आपोमयः प्राणः ( छा. ६।५।४ ) इति चाप्प्रकृतित्वं प्राणस्यावगम्यते । अतो मनः प्राणे संपद्यते ( छा. ६।८।६ ) इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनःसंपत्तिप्रतिपादने परंपरया स्वकारणे लय इति संपत्तिवचनमुपपन्नं भवतीति । परिहारस्त्वन्नमयं हि सोम्य मन आपोमयः प्राणः ( छा. ६।५।४ ) इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते न तत्प्रकृतित्वम् । आहंकारिकत्वान्मनस आकाशविकारत्वाच्च प्राणस्य । प्राणशब्देनापां लक्षणा च स्यादिति ॥ ३ ॥ मनोधिकरणं समाप्तम् । ( २ )

6. A. C. E. read अपुनर्भवम् for पुनर्भवम्.
10. A. B. read मनसो वृत्ति for मनोवृत्ति.
12. B. om. क after प्रकृति.
13. A. B. om. च after अन्नस्य.
21. C. E. read आदि after आकाश.

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

यथा वाङ्मनसि संपद्यते मनः प्राणे (छा. ६।८।६) इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिस्तथा प्राणस्तेजसि (छा. ६।८।६) इति वचनात्तेजस्येव प्राणः संपद्यत इति प्राप्त उच्यते सोऽध्यक्ष इति। स प्राणोऽध्यक्षे करणाधिपे जीवे संपद्यते। कुतः। तदुपगमादिभ्यः। प्राणस्य जीवोपगमस्तावच्छ्रूयते एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति (बृ. ४।३।३८) इति। तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते तमुत्क्रामन्तं प्राणोऽनूत्क्रामति (बृ. ४।४।२) इति। प्रतिष्ठा च जीवेन सह श्रूयते कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि (प्र. ६।३) इति। एवं जीवेन संयुज्य तेन सह तेजःसंपत्तिरिह प्राणस्तेजसि (छा. ६।८।६) इत्युच्यते। यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुध्यते तद्वत् ॥ ४ ॥ अध्यक्षाधिकरणं समाप्तम्। (३)

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

प्राणस्तेजसि (छा. ६।८।६) इति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता। सा संपत्तिः किं तेजोमात्र उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसीति प्राप्त उच्यते भूतेष्विति। भूतेषु संपद्यत इति। कुतः। तच्छ्रुतेः। पृथिवीमय आपोमयस्तेजोमयः (बृ. ४।४।५) इति जीवस्य संचरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥

11. A. E. read प्रतिष्ठितः स्याम् for प्रतिष्ठास्यामि.
19. A. B. om. विशये.
20. A. B. om. भूतेष्विति.

ननु तेजःप्रभृतिष्वेकैकस्मिन्क्रमेण संपत्तावपि पृथिवीमयः ( बृ.४।४।५ ) इत्यादिका श्रुतिरुपपद्येतेत आह ।

## नैकस्मिन्दर्शयतो हि ॥ ६ ॥

नैकस्मिन् । एकैकस्य कार्याक्षमत्वात् । दर्शयतो ह्यक्षमत्वं
5 श्रुतिस्मृती । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ( छा. ६।३।२-३ ) इति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते ।

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
10 समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥
( वि. पु. १।२।५०-५२ )

इति । अतः प्राणस्तेजसि ( छा. ६।८।६ ) इति तेजःशब्देन भूतान्तरसंसृष्टमेव तेजोभिधीयते । अतो भूतेष्वेव संपत्तिः
15 ॥ ६ ॥ भूताधिकरणं समाप्तम् । ( ४ )

## समाना चा सृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इयमुत्क्रान्तिः किं विद्वदविदुषोः समानोताविदुष एवेति चिन्तायामविदुष एवेति प्राप्तम् । कुतः । विदुषोत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्यत्रैवामृतत्ववचनं श्रूयते
20 यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि श्रिताः ।
अथ मर्त्योमृतो भवत्यत्र ब्रह्म समश्नुते ॥
( का. ६।१४; बृ.४।४।७ )

इति । एवं प्राप्तेभिधीयते समाना चा सृत्युपक्रमादिति । विदुषो-

19. C. reads अमृतत्वम् for अमृतत्ववचनम्.

20. C. E. read स्थिताः for श्रिताः.

त्या सृत्युपक्रमादुत्क्रान्तिः समाना । आ सृत्युपक्रमादा ग-त्युपक्रमान्नाडीप्रवेशात्प्रागित्यर्थः । विदुषोपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ 5
( का. ६।१६, छा. ८।६।६ )

इति । एवं नाडीविशेषेण गतिश्रवणाद्विदुषोप्युत्क्रान्तिरव-र्जनीया । सा च नाडीप्रवेशात्प्राग्विशेषाश्रवणात्समाना । तत्प्रवेशदशायां च विशेषः श्रूयते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः 10 ( बृ.४।४।२ ) इति । शतं चैका च हृदयस्य ( का. ६।१६; छा. ८।६।६ ) इत्यनया श्रुत्यैकाध्र्यान्मूर्ध्नो निष्क्रमणं विद्वद्विषयमितरदविद्वद्विषयम् ।

यदुक्तं विदुषोत्रैवामृतत्वं श्राव्यत इति तत्रोच्यतेमृतत्वं चानुपोष्येति । चशब्दोवधारणे । अनुपोष्य शरीरेन्द्रिया- 15 दिसंबन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते तदुच्यते यदा सर्वे प्रमुच्यन्ते ( का. ६।१४ ) इत्यादिकया श्रुत्येत्यर्थः । अत्र ब्रह्म समश्नुते ( बृ. ६।१४ ) इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्रायः ॥ ७ ॥

**तदापीतेः संसारव्यपदेशात् ॥ ८ ॥** 20

अवश्यं च तदमृतत्वमदग्धदेहसंबन्धस्यैवेति विज्ञेयम् । कुतः । आपीतेः संसारव्यपदेशात् । अपीतिरप्ययो ब्रह्म-

2. B. om. हि after विदुषोपि.
9. C. E. read प्रद्योतनेन for प्रद्योतेन.
12. A. B. read मूर्ध्ना for मूर्ध्नः.
14. C. reads अत्र for तत्र.

प्राप्तिः । सा चार्चिरादिमार्गेण देशविशेषं गत्वेति वक्ष्यते । आ तदवस्थाप्राप्तेः संसारो देहसंबन्धलक्षणो हि व्यपदिश्यते तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये (छा.६।१४।२) इति । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखा-
5 त्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि ( छा. ८।१३।१ ) इति च ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

इतश्च विदुषोपि बन्धो नात्र विदग्धः । यतः सूक्ष्मं शरीरमनुवर्तते । कुत इदमवगम्यते । प्रमाणतस्तथोपलब्धेः । उपल-
10 भ्यते हि देवयानेन पथा गच्छतो विदुषस्तं प्रतिब्रूयात्सत्यं ब्रूयात् ( कौ. १।६ ) इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः ॥९॥

## नोपमर्देनातः ॥ १० ॥

अतो
15 यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥
( का. ६।१४ बृ. ४।४।७ )

इति वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

20 अस्य सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रस्थान्त-

1. C. om. च after सा; C. E. read अर्चिरादिना for अर्चिरादि.
5. A. B. read कृत आत्मा for कृतात्मा.
6. C. om. च after इति.
8. C. E. read सूक्ष्म for सूक्ष्मम्.
15. A. B. E. read स्थिताः for श्रिताः.
18. C. om. न after वचनम्.

मरणस्य मरणात्प्रागूष्मा स्थूले शरीरे क्वाचित्क उपलभ्यते।
न च स्थूलस्यैव शरीरस्यायमूष्मा। अन्यत्रानुपलब्धेः। ततश्चो-
ष्मणः क्वचिदुपलब्धिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति
गम्यते। तस्माद्विदुषोप्या सृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठू-
क्तम्॥ ११॥ 5

पुनरपि विदुष उत्क्रान्तिर्न संभवतीत्याशङ्क्य परिह्रियते।

**प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम्॥ १२॥**

यदुक्तं विदुषोप्युत्क्रान्तिः समानेति तन्नोपपद्यते। विदुष
उत्क्रान्तिप्रतिषेधात्। तथा हि स एतास्तेजोमात्राः समभ्या-
ददानो हृदयमेवान्ववक्रामति (बृ. ४।४।१) इत्युपक्रम्य तेन 10
प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोनूत्क्रामति
(बृ. ४।४।२) इत्यविदुष उत्क्रान्तिप्रकारमभिधायान्यन्न-
वतरं कल्याणतरं रूपं कुरुते (बृ. ४।४।४) इति देहान्तर-
परिग्रहं चाभिधाय

प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। 15
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे॥

इति नु कामयमानः (बृ. ४।४।६) इत्यविद्वद्विषयं परिस-
माप्याथाकामयमानो योकामो निष्काम आप्तकाम आत्मकामो
न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति (बृ. ४।४।६)
इति विदुष उत्क्रान्तिः प्रतिषिध्यते। तथा पूर्वत्रार्तभागप्रश्नेपि 20
विदुष उत्क्रान्तिप्रतिषेधो दृश्यते। अप पुनर्मृत्युं जयति (बृ.
३।२।१०) इति विद्वांसं प्रस्तुत्य याज्ञवल्क्येति होवाच यत्रायं

1. E. reads स्थूल for स्थूले.
2. B. reads उपलब्धेः for अनुपलब्धेः.
10. A. E. read अप for अव before क्रामति.
13. C. reads कल्याणम् for कल्याणतरम्.

पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो न (बृ. ३।२।११) इति पृष्टे नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातो मृतः शेते (बृ. ३।२।११) इति । अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्तन्न । शारीरात्प्रत्यगात्मनः
5 प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते न शरीरात् । न तस्य प्राणा उत्क्रामन्ति (बृ. ४।४।६) इत्यत्र तच्छब्देनाथाकामयमानः (बृ. ४।४।६) इति प्रकृतः शारीर एव परामृश्यते नाश्रुतं शरीरम् ।

तस्येति षष्ठ्या प्राणानां संबन्धित्वेन शारीरो निर्दिष्टो न
10 तूत्क्रान्त्यपादानत्वेन । उत्क्रान्त्यपादानं तु शरीरमेवेति चेन्न । अपादानापेक्षायामश्रुताच्छरीरात्संबन्धितया श्रुतस्यात्मन एव संनिहितत्वेनापादानतयापि ग्राह्यत्वात् । किं च प्राणानां जीवसंबन्धितयैव प्रज्ञातानां तत्संबन्धकथने प्रयोजनाभावात्संबन्धमात्रवाचिन्या षष्ठ्यापादानमेव विशेष इति निश्चीयते ।
15 यथा नटस्य शृणोतीति । न चात्र विवदितव्यम् । स्पष्टो ह्येकेषां माध्यंदिनानामाम्नाये शारीरो जीव एवापादानमिति योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति (श. ब्रा. १४।७।२।८) इति । शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तन्निषेधो नोपपद्यत इति चेन्न । तस्य तावदेव चिरम् (छा.
20 ६।१४।२) इति विदुषः शरीरवियोगकाले ब्रह्मसंपत्तिवचनेन

1. C. E. read उत् before क्रामन्ति.
6. C. reads इति न after तच्छब्देन.
7. B. reads प्रकृत for प्रकृतः.
13. C. reads संबन्धित्व for संबन्ध after तत्.
14. C. reads अपादानत्वम् for अपादानम्.
19. B. om. तत्; C. E. read प्रतिषेधः for निषेधः.

प्राणानामपि तस्मिन्काले शारीराद्विदुषो वियोगः प्रस-
ज्यते । ततश्च देवयानेन पथा ब्रह्मसंपत्तिर्नोपपद्यत इति न
तस्य प्राणा उत्क्रामन्ति देवयानेन पथा ब्रह्मप्राप्तेः प्राग्जीवा-
द्विदुषोपि प्राणा न विश्लिष्यन्त इत्युच्यते ।

आर्तभागप्रश्नोपि यदा विद्वद्विषयस्तदायमेव परिहारः । 5
स त्वविद्वद्विषयः । तत्र प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्श-
नात् । तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावोपामन्यन्नत्वं
म्रियमाणस्य जीवस्य प्राणापरित्यागो मृतस्य नामवाच्यकीर्त्यनु-
वृत्तिस्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेर्थाः प्रश्नपूर्वकं प्र-
त्युक्ताः । तत्र चाप पुनर्मृत्युं जयति ( बृ. ३।२।१० ) इत्यपा- 10
मन्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते । अतो नात्र
विदुषः प्रसङ्गः । अविदुषस्तु प्राणानुत्क्रान्तिवचनं स्थूलदेहव-
त्प्राणा न मुञ्चन्त्यपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य ग-
च्छन्तीति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥

**स्मर्यते च ॥ १३ ॥** 15

स्मर्यते च विदुषोपि मूर्धन्यनाड्योत्क्रान्तिः

ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥

( याज्ञ. स्मृ. ३।१६७)

इति ॥ १३ ॥ आसृत्युपक्रमाधिकरणं समाप्तम् । (५) 20

1. A. B. om. अपि.
4. E. reads विश्लिष्यन्ति for विश्लिष्यन्ते.
7. C. reads एव after तत्र; A. reads रूप for रूपेण after अतिग्रह; B. reads इन्द्रियेण for इन्द्रिय before इन्द्रियार्थ.
9. A. B. read प्रश्नपूर्वम् for प्रश्नपूर्वकम्.
11. B. reads मृत्युंजयः for मृत्युजयः.
14. C. om. प्रतिपादयतीति.

## तानि परे तथा ह्याह ॥ १४ ॥

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मोत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु संपद्यत इत्युक्तम् । सैषा संपत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम् । तानि पुनर्जीवपरिष्वक्तानि
5 भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्त्युत परमात्मनि संपद्यन्त इति विशये मध्ये परमात्मसंपत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्तीति प्राप्त उच्यते तानि पर इति । तानि परस्मिन्नात्मनि संपद्यन्ते । कुतः । तथा ह्याह श्रुतिस्तेजः
10 परस्यां देवतायाम् (छा. ६।८।६) इति । यथाह श्रुतिस्तदनुगुणं कार्यं परिकल्प्यमित्यर्थः । सुषुप्तिप्रलययोर्यथा परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रमस्तद्वदिहापि ॥ १४ ॥ परसंपत्त्यधिकरणं समाप्तम् । (६)

## अविभागो वचनात् ॥ १५ ॥

15 सेयं परमात्मनि संपत्तिः किं प्राकृतलयवत्कारणापत्तिरूपोत वाङ्मनसीत्यादिवदविभागरूपेति चिन्तायां परमात्मनः सर्वेषां योनिभूतत्वात्कारणापत्तिरूपेति प्राप्त उच्यतेऽविभाग इति । अपृथग्भावः पृथग्व्यवहारानर्हः संसर्ग इत्यर्थः । कुतः । वचनात् । तेजः परस्यां देवतायाम् ( छा. ६।८।६ ) इत्यत्रापि
20 वाङ्मनसि संपद्यत ( छा. ६।८।६ ) इत्यतः संपद्यत इति वच-

11. C. E. om. परि before कल्प्यम्.
12. E. reads विश्रामः for विश्रमः.
14. C. reads अविभागेन for अविभागः.
16. C. reads परमात्मनि for परमात्मनः.
18. C. E. read अनर्ह for अनर्हः.
20. B. E. om. इत्यतः संपद्यते.

तस्यानुषङ्गात् । तस्य च संसर्गविशेषवाचित्वादनुषक्तस्याभि-
धानवैरूप्ये प्रमाणाभावादुत्क्रान्तिवेलायां कारणापत्तिप्रयोज-
नाभावात्पुनस्तत्राव्यक्तादिसृष्टयवचनाच्च ॥ १५ ॥ अविभागा-
धिकरणं समाप्तम् । (७)

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासाम-　5
र्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः श-
ताधिकया ॥ १६ ॥**

एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकार उत्क्रान्ति-
प्रकार उक्तः । इदानीं विदुषो विशेष उच्यते । तत्रेदमाम्नायते

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।　10
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥
(का. ६।१६, छा. ८।६।६)

इति । अनया नाडीनां शताधिकया मूर्धन्यया नाड्यैव विदुषो
गमनमन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते
नेति संशयः । किं युक्तम् । नियमो नोपपद्यत इति । कुतः ।　15
नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचनतया पुरुषेणोपादातु-
मशक्यत्वात् ।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ।
(का. ६।१६ छा. ८।६।६)

इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति । एवं प्राप्ते　20
प्रचक्ष्महे ।

शताधिकयेति । विद्वाञ्छताधिकया मूर्धन्ययैव नाड्यो-

---

1. A. B. om. च after तस्य; E. reads तत् before अनुषक्तस्य; C. om. अनुषक्तस्य.

13. C. E. read मूर्धन्य for मूर्धन्यया.

20 C. om. इति after युक्तम्.

त्क्रामति । न चास्या विदुषो दुर्विवेचनत्वम् । विद्वान्हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद्विद्याशेषभूततयात्मनोत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति । ततश्च तदोकस्तस्य जीवस्य स्थानं हृदयमग्रज्वलनं भवति । अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । परमपुरुषप्रसादात्प्रकाशितद्वारो विद्वांस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ॥ १६ ॥ तदोकोधिकरणं समाप्तम् । (८)

## रश्म्यनुसारी ॥ १७ ॥

विदुषो हृदयाच्छताधिकया मूर्धन्यनाड्या निर्गतस्याप्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ( छा. ८।६।५ ) इति । तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमः संभवति नेति चिन्तायां निशि मृतस्य विदुषो रश्म्यनुसारासंभवादनियमः । वचनं तु पक्षप्राप्तविषयमिति प्राप्त उच्यते रश्म्यनुसारीति । रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति । कुतः । अथैतैरेव रश्मिभिः ( छा. ८।६।५ ) इत्यवधारणात् । पाक्षिकत्वे ह्येवकारोनर्थकः स्यात् ।

यदुक्तं निशि मृतस्य रश्म्यसंभवाद्रश्मीननुसृत्य गमनं नोपपद्यत इति तन्न । निश्यपि सूर्यरश्म्यनुसारः संभवति ।

1. A. B. read विवेचत्वम् for विवेचनत्वम्.
2. C. om. भूत after आराधन; C. reads विद्याशेपभूत for विद्याशेपभूततया.
6. C. E. read तत्प्रसादात् before परमपुरुष.
10. C. E. om. अपि after निर्गतस्य.
11. A. E. read एतस्मात् for एतदस्मात.
18. E. reads हि after यदुक्तम्.

लक्ष्यते हि निश्यपि निदाघसमय ऊष्मोपलब्ध्या रश्मिसंभवः। हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः। श्रूयते च नाडीरश्मीनां सर्वदान्योन्यान्वयस्तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेमुष्मिन्नादित्ये सृप्ताः (छा. ८।६।२) इति। तस्मान्निश्यपि रश्मिसंभवान्निशि मृतानामपि विदुषां रश्म्यनुसारेण ब्रह्मप्राप्तिरस्त्येव ॥ १७ ॥ रश्म्यनुसाराधिकरणं समाप्तम्। (९)

**निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥**

इदमिदानीं चिन्त्यते विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति नेति। यद्यपि निशायां सूर्यरश्मिसंभवाद्रश्म्यनुसारेण गतिर्निशायामपि संभवति तथापि निशामरणस्य शास्त्रेषु गर्हितत्वात्परमपुरुषार्थलक्षणा ब्रह्मप्राप्तिर्निशामृतस्य न संभवति। शास्त्रेषु दिवामरणं प्रशस्तं विपरीतं निशामरणम्

दिवा च शुक्लपक्षश्च उत्तरायणमेव च।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ॥

इति। दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम्। अतो निशामरणमधोगतिहेतु-

1 2. E. reads आष्ण्योपलब्ध्या for ऊष्मोपलब्ध्या; E. reads सद्भावः for संभवः.
4. C. E. read एते for एताः.
6. A. E. read ते for ताः.
8. C. E. read एव after रश्म्यनुसारेण.
15. E. reads लक्षण for लक्षणा.
20. A. B. read निशि for निशा.

त्वान्न ब्रह्मप्राप्तिहेतुरिति चेन्न । विदुषः कर्मसंबन्धस्य याव-
द्देहभावित्वात् ।

एतदुक्तं भवति । अनारब्धकार्याणामधोगतिहेतुभूतानां क-
र्मणां विद्यासंबन्धेनैव विनाशादुत्तरेषां चाश्लेषात्प्रारब्धकार्यस्य
5 च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशामृतस्यापि ब्र-
ह्मप्राप्तिः सिद्धैव । दर्शयति च श्रुतिस्तस्य तावदेव चिरं यावन्न
विमोक्ष्येथ संपत्स्ये (छा. ६।१४।२) इति । दिवा च शुक्लपक्षश्चे-
त्यादिवचनमविद्वद्विषयम् ॥ १८ ॥ निशाधिकरणं समाप्तम् । (१०)

## अतश्चायनेपि दक्षिणे ॥ १९ ॥

10 निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तस्तत एव हे-
तोर्दक्षिणेप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा । अधिकाशङ्का त्वथ
यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः
सायुज्यं गच्छति ( ना. ८० ) इति दक्षिणायने मृतस्य चन्द्र-
प्राप्तिश्रवणाच्चन्द्रमसं प्राप्तानां च तेषां यदा तत्पर्यवैति ( बृ.
15 ६।२।१६ ) । अथैतमेवाध्वानं पुनर्निवर्तन्ते ( छा. ५।१०।५ )
इति पुनरावृत्तिश्रवणाद्भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरा-
यणप्रतीक्षादर्शनाद्दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न संभवतीति ।
परिहारस्त्वविदुषां पितृयाणेन पथा चन्द्रं प्राप्तानामेव पुनरावृ-
त्तिर्विदुषस्तु चन्द्रं प्राप्तस्यापि तस्माद्ब्रह्मणो महिमानमाप्नोति

1. B. reads प्राप्तिः for प्राप्तिहेतुः; C. reads तत् after चेन्.
5. C. E. read निशि for निशा.
6. C. reads इति after सिद्धैव.
10. C. om. अपि विदुषः.
13. A. B. om. मृतस्य.
14. C. reads चन्द्रम् for चन्द्रमसम्.
18. E reads चन्द्रमसम् for चन्द्रम्; A. B. read चन्द्र for चन्

( ना. ८० ) इति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिर्ब्रह्म प्रपित्सतो विश्रमहेतुमात्रमिति गम्यते। वाक्यशेषाभावेपि पूर्वोक्तादेव बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या । भीष्मादीनां योगप्रभावात्स्वच्छन्दमरणानां धर्मप्रवर्तनार्थोत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचार: ॥ १९ ॥ 5

ननु च विदुषो मुमूर्षून्प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिन: ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरह: शुक्ल: षण्मासा उत्तरायणम् । 10
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना: ॥
धूमो रात्रिस्तथा कृष्ण: षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
शुक्लकृष्णे गती ह्येते जगत: शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुन: ॥ 15

( गी. ८।२३-२६ )

इति । तत्राह ।

**योगिन: प्रति स्मर्येते स्मार्ते चैते ॥ २० ॥**

नात्र मुमूर्षून्प्रति मरणकालविशेषोपादानं स्मर्यते । अपि तु योगिनो योगनिष्ठान्प्रति स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते योगाङ्गतयानुदिनं स्मर्तुम् । तथा ह्युपसंहार: 20

2. C. reads प्रेप्सत: for प्रपित्सत:; A. B. E. read विश्राम for विश्रम; C. read अव before गम्यते.
3. B. reads हेतुभावात् for हेत्वभावात्.
15. A. E. read यान्ति for याति.
18. C. E. read स्मर्यते for स्मर्येते.

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥
(गी. ८।२७)

इति । अग्निर्ज्योतिः (गी. ८।२४) । धूमो रात्रिः (गी. 5 ८।२५) इति देवयानपितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च यत्र काले तु (गी. ८।२३) इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः । अग्न्यादेः कालत्वासंभवात् । अतस्तेऽर्चिषमभिसंभवन्ति (बृ. ६।२।१५) इति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान्प्रति विधीयते न मुमूर्षून्प्रति मरणकाल-10 विशेषः ॥ २० ॥ दक्षिणायनाधिकरणं समाप्तम् । (११)

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥



4. B. om. इति.
5. E. reads च after इति.

# अथ श्रीभाष्ये



## चतुर्थाध्याये तृतीयः पाद आरभ्यते ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद्गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते । तत्र श्रुतिषु 5
मार्गप्रकारा बहुविधा आम्नायन्ते । छान्दोग्ये तावद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते (छा. ४।१४।३) इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायतेथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति 10
मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते (छा. ४।१५।५-६) इति । तथात्रैवाष्टमे-थैतैरेव रश्मिभिरूर्ध्वमाक्रमते (छा. ८।६।५) इति । कौषी- 15
तकिनश्च देवयानमार्गमन्यथाधीयते स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् (कौ. १।३) इति । तथा बृहदारण्यके य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेर्चिषमभिसंभवन्त्यर्चिषोहरह्न आपूर्य- 20

---

6. B. om. बहुविधाः; A. E. read बहुधा for बहुविधाः.
9. E. om. एव after यदु च; A. reads यदु च for यदि च.
14. A. B. om. नावर्तन्ते after नावर्तन्ते.
19. C. reads एव after एवम्; C. E. read इमे for अमी.
20. C. reads इति after सत्यम्.

माणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोमानवः स एत्य ब्रह्मलोकान्गमयति ( बृ. ६।२।१५ ) इति । तत्रैव पुनरन्यथा यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति
5 तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम् ( बृ. ५।१०।१ ) इत्यादि ।

10 तत्र संशयः किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वानुत तस्मादन्येऽन्यत्र मार्गा इति तैर्वाऽनेन वेत्यनियम इति । किं युक्तम् । अनियम इति । कुतः । अनेकरूपत्वान्नैरपेक्ष्याच्चेति । एवं प्राप्तेऽभिधीयते ।

अर्चिरादिनेति । अर्चिरादिरेक एव मार्गः सर्वत्र
15 प्रतिपाद्यते । अतोऽर्चिरादिनैव गच्छन्ति । कुतः । तत्प्रथितेः । तस्यैव सर्वत्र प्रथितेः । प्रथितिः प्रसिद्धिः । तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः । प्रत्यभिज्ञानात्स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते । छान्दोग्ये तावदुपकोसलविद्यायां
20 ( छा. ४।१५।५-६ ) पञ्चाग्निविद्यायां ( छा. ५।१०।१-२ )

1. A. B. read मासान् before मासेभ्यः.
5. A. reads ह before ऊर्ध्वम्.
6. C. E. read विजिहीषते for विजिहीते.
7. A. E. read आडम्बरस्य for डम्बरस्य.
8. A. E. read विजिहीषते for विजिहीते.
11. A. reads अपि after अन्ये.
17. C. reads हि after एव.

नैकरूप एवाम्नायते । वाजसनेयके च पञ्चाग्निविद्यायां ( बृ. ६।२।१५ ) तथैवार्चिरादिरल्पान्तर आम्नायते । अतस्तत्रापि स एवेति प्रतीयते । अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥ १ ॥ अर्चिराद्यधिकरणं समाप्तम् । ( १ )

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ 5

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम् । तत्रार्चिरादिके मार्गे छन्दोगा मासादित्ययोरन्तराले संवत्सरमधीयते मासेभ्यः संवत्सरं संवत्सरादादित्यम् ( छा. ४।१५।५ ) इति । वाजसनेयिनस्तु तयोरेवान्तराले देवलोकं मासेभ्यो देवलोकं देवलोकादादित्यम् ( बृ. ६।२।१५ ) इति । उभयत्रापि मार्गस्यै- 10 कत्वादुभावुभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् ( छा. ४।१५।५, बृ. ६।२।१५ ) इत्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात्संवत्सरस्यैव 15 मासानन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते । अन्यत्र वाजसनेयिनो यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति ( बृ. ५।१०।१ ) इत्यादित्या- 20

2. A. B. read अल्पान्तरम् for अल्पान्तरः.

9. B. reads अन्तरे for एवान्तराले.

16. C. E. read मासात् for मास before अनन्तरम्.

17. C. reads च after अन्यत्र.

19. C. E. read विजिहीर्षते for विजिहीते; A. reads ह before ऊर्ध्वम्.

त्पूर्वं वायुमधीयते । कौषीतकिनस्तु स एतं देवयानं पन्था-
नमापद्याग्निलोकमागच्छति स वायुलोकम् (कौ. १।३)
इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते । तत्र कौषी-
तकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनां
5 तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति (बृ.५।१०।१)
इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसादित्यात्पूर्वं प्रवेशो
निश्चीयते । अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको
वायुश्च प्राप्तौ ।

तत्रेदं चिन्त्यते । किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्ट-
10 क्रमेण विद्वानभिगच्छेदुतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देव-
लोकं सन्तं वायुमभिगच्छेदिति । किं युक्तम् । भिन्नार्थत्वम् ।
प्रसिद्धेः । भिन्नार्थत्वे चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्स-
रादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टमिति
प्राप्त उच्यते ।

15 वायुमब्दादिति । वायुं संवत्सरादूर्ध्वमभिगच्छेत् । कुतः ।
अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात् । देवलोकशब्दोऽप्य-
विशेषेण सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभि-
धत्ते । स वायुमागच्छति तस्मै स तत्र (बृ. ५।१०।१)
इति वायुशब्दो विशेषेण वायुमभिधत्ते । अतो देवलोकवायु-
20 शब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्स-

1. B. reads एनम् for एतम्.

3. E. reads वायुलोकम् for वायुम्.

5. A. reads इ before ऊर्ध्वम्.

8. A. B. read वायुलोकः for वायुः before च प्राप्तौ.

16. E. reads हि for अपि after शब्दः.

18. C. E. read अभि for आ before गच्छति.

रादूर्ध्वं वायुमेवाभिगच्छेत् । कौषीतकिनां वायुलोकशब्दश्चा-
ग्निलोकशब्दवद्वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते ।
वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते योयं पवत एष
देवानां गृहा इति ॥ २ ॥ वाय्वधिकरणं समाप्तम् । ( २ )

## तडितोधि वरुणः संबन्धात् ॥ ३ ॥ 5

कौषीतकिनां स एतं देवयानं पन्थानमापद्याग्निलोकमाग-
च्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्र-
लोकं स प्रजापतिलोकं स ब्रह्मलोकम् ( कौ. १।३ ) इत्यत्रा-
ग्निलोकस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम् । वायोश्च
संवत्सरादूर्ध्वं निवेश उक्तः । आदित्यस्याप्यत्र प्राप्तपाठक्रम- 10
बाधेन देवलोकादादित्यमादित्याच्चन्द्रमसम् ( बृ. ६।२।१५ )
इति वाजसनेयकोक्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुप-
रि निवेशः सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता प्राप्ता । कि-
मेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्या आहोस्वि-
द्विद्युतोधीति विशयेर्चिःप्रभृतिषु सर्वेष्वर्चिषोह: ( छा. 15
४।१५।५,५।१०।१; बृ. ६।२।१५ ) इत्यादिश्रुतिक्रमोपरोधा-
द्विद्युतः परस्ताच्च तत्पुरुषोमानवः स एनान्ब्रह्म गमयति
( छा. ४।१५।५,५।१०।२ ) इति विद्युत्पुरुषस्य ब्रह्मगमयितृ-
त्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्याया-
वश्यं कस्यचिद्वाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो 20

1. A. B. read आ for अभि before गच्छेत्.

3. C. reads एषाम् for एषः.

4. B. reads ग्रहाः for गृहाः.

7-8 C. om. स इन्द्रलोकम्.

9. E. reads लोकशब्दस्य for लोकस्य.

16. E. om. आदि after इति; B. reads मात्र for क्रम.

निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति प्राप्त उच्यते ।

तडितोधि वरुण इति । वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः । कुतः । संबन्धात् । मेघोदरवर्तित्वाद्विद्युतो हि
5 वरुणेन संबन्धो लोकवेदयोः प्रसिद्धः । एतदुक्तं भवति । वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोधि वरुणो निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते । तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यं निवेशयितव्यस्य वरु-
10 णादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥ ३ ॥ वरुणाधिकरणं समाप्तम् ।(३)

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

इदमिदानीं चिन्त्यते किमर्चिरादयो मार्गचिह्नभूता उत भोगभूमयोथ वा विदुषां ब्रह्म प्रेप्सतामतिवोढार इति ।
15 किं तावद्युक्तम् । मार्गचिह्नभूता इति । कुतः । उपदेशस्य तथाविधत्वात् । दृश्यते हि लोके ग्रामान्प्रति गन्तृणामेवंविधो देशिकैरुपदेश इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च

4. C. om. हि after विद्युतः.

7. E. reads अर्थक्रमो बलीयानिति for अर्थक्रमस्य बलीयस्त्वात्; C. reads एवम् for ततः.

8. E. om. च after तस्य.

9. C. reads च after निवेशयितव्यस्य.

10. B. reads उपदिष्टात् for उपदिष्टत्वात्.

11. C. reads इन्द्रः for इन्द्रादिः.

16. E. reads लोके हि दृश्यते for दृश्यते हि लोके; B. reads ग्रामादीन् for ग्रामान्.

17. E. reads अमुकीम् for अमुकाम्.

पर्वतपार्श्वं गत्वामुकं ग्रामं गच्छेति । अथवा भोगभूमय एताः स्युः । कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेः । अन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायित्वात् । भोगभूमित्वं चैत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव च कौषीतकिनोऽग्निलोकमागच्छति ( कौ. १।३ ) इत्यादिना लोकशब्दानुविधानेनार्चिरादीन्पठन्तीति । एवं प्राप्ते ब्रूमः ।

आतिवाहिका इति । विदुषामतिवाहे परमपुरुषेण नियुक्ता आतिवाहिका देवताविशेषा एतेऽर्चिरादयः । कुतः । तल्लिङ्गात् । अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । तच्च तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति (छा. ४।१५।५,५।१०।२) इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दा अर्चिराद्यात्मभूतानभिमानिदेवताविशेषांस्तं पृथिव्यब्रवीत् ( तै. सं. ५। ६।२ ) इतिवत् ॥ ४ ॥

यद्येवं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति ( छा. ४। १५।५,५।१०।२ ) इति वैद्युतस्यैव पुरुषस्य ब्रह्म प्रति गमयितृत्वश्रुतेर्विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत आह ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

ततो विद्युत उपरि वैद्युतेनामानवेनैवातिवाहिकेन विदुषा-

6. C. E. om. च after एव.

8. C. reads अतिवाहि for अतिवाहे.

9. C. reads एव ते for एते.

10. C. reads गमयितृत्वं च for तच्च.

17. A. B. om. प्रति after ब्रह्म.

मात्रह्मप्राप्ति गमनम् । कुतः । तच्छ्रुतेः । स एनान्ब्रह्म गमयति ( छा. ४।१५।५,५।१०।२ ) इति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्त्वनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५ ॥ आतिवाहिकाधिकरणं समाप्तम् । ( ४ )

5 **कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥**

अर्चिरादिनैव गच्छति विद्वानर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयत्युत परब्रह्मोपासीनानेवाथ परब्रह्मोपासीनान्प्रत्य-

10 गात्मानं ब्रह्मात्मकतयोपासीनांश्चेति विशये कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते । कुतः । अस्य हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः । न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते । प्राप्तत्वादेव । नित्यप्राप्तपरब्रह्मविषयाविद्यानि-

15 वृत्तिमात्रमेव हि परविद्याकार्यम् । कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यर्थं गमनमुपपद्यते । अतोऽर्चिरादिक आतिवाहिकगणस्तमेव नयति ॥ ६ ॥

**विशेषितत्वाच्च ॥ ७ ॥**

पुरुषोमानवः स एत्य ब्रह्मलोकान्गमयति ( बृ. ६।२।१५ )

20 इति लोकशब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्य-

1. C. E. read प्राप्तः for प्राप्ति.

8. A. B. om. अयम् after किम्.

9. A. B. om. परब्रह्मोपासीनानेवाथ; C. reads अथ वा for अथ पर.

13. A. B. read पर for परम् before ब्रह्म.

16. C. om. वर्ति after देश.

17. A. B. read अर्चिरादिः for अर्चिरादिकः.

गर्भमुपासीनमेवामानवो गमयतीति विशेष्यते । किं च प्रजापतेः सभां वेश्म प्रपद्ये ( छा. ८।१४।१ ) इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतोभिसंधत्ते ॥ ७ ॥

नन्वेवं तत्पुरुषोमानवः स एनान्ब्रह्म गमयति ( छा. ४। १५।५,५।१०।२ ) इत्ययं निर्देशो नोपपद्यते । हिरण्यगर्भेन- 5 यने हि स एनान्ब्रह्माणं गमयतीति निर्देष्टव्यं स्यात् । अत आह ।

## सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

यो ब्रह्माणं विदधाति ( श्वे. ६।१८ ) इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य ब्रह्मशब्देन व्यपदेश इति गत्य- नुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः ॥ ८ ॥ 10

अथ स्यादर्चिरादिना हिरण्यगर्भप्राप्तावेव देवपथो ब्रह्म- पथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ( छा. ४।१५।६ ) । तयोर्ध्वमायन्नमृतत्वमेति ( का. ६।१६; छा. ८। ६।६ ) इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते । हिर- ण्यगर्भस्य कार्यभूतस्य द्विपरार्धकालावसाने विनाशशास्त्रात् । 15

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन । ( गी. ८।१६ )

इति वचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वादिति। तत्राह ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥ 20

कार्यस्य ब्रह्मलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाधिका-

---

2. E. reads प्रपद्यते for प्रपद्ये.

3. C. reads अनु for अभि before संधत्ते.

4. B. reads एतान् for एनान्.

12. B. reads प्रतिपाद्यमानाः for प्रतिपद्यमानाः.

14. A. B. C. om. प्राप्ति after अमृतत्व.

18. A. B. read अत्र for तत्र.

रिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतवि-
द्योतः कार्याद्ब्रह्मलोकात्परं ब्रह्म प्राप्नोतीत्यर्चिरादिना गत-
स्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात्

ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ।
(ना. १२।३)

इति वचनाच्चावगम्यते ॥ ९ ॥

## स्मृतेश्च ॥ १० ॥

स्मृतेश्चायमर्थोवगम्यते

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
10 परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥
(कूर्मपु. पू. ख. १२।२६९)

इति । अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते ।

## 15 परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्मोपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते। कुतः । मुख्यत्वात् । तत्पुरुषोमानवः स एनान्ब्रह्म गमयति (छा. ४।१५।५; ५।१०।२) इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वनिश्चये
20 सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम् । परस्य ब्रह्मणः सर्वगतत्वेपि विदुषो विशिष्टदेशगतस्यैवाविद्या-

1. A. B. read अधिकृत for अधिगत.

2. A. B. read कार्य for कार्यात्.

4. B. reads ब्रह्मलोकेषु for ब्रह्मलोके तु.

16. E. reads उपासीनमेव for उपासीनाम्.

17. C. om. मुख्यत्वात्.

निवृत्तिशास्त्रात् । यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा तमेतं वेदानुवचनेन ( बृ. ४।४।२२ ) इत्यादिशास्त्रादवगम्यते तथा निःशेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । 5

यत्तु ब्रह्मलोकान् ( बृ. ६।२।१५ ) इति लोकशब्दबहुवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति तदयुक्तम् । निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात् । अर्थस्य चैकत्वे निश्चिते बहुवचनस्यादिति. पाशानितिवदुपपत्तेः । परस्य ब्रह्मणः परिपूर्णस्य 10 सर्वगतस्य सत्यसंकल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्तीति श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥ ११ ॥

## दर्शनाच्च ॥ १२ ॥

दर्शयति च श्रुतिर्मूर्धन्यनाड्या निर्गत्य देवयानेन गतस्य 15 परब्रह्मप्राप्तिमेष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते (छा. ८।३।४) इति ॥१२॥

यदुक्तं प्रजापतेः सभां वेश्म प्रपद्ये ( छा. ८।१४।१ ) इत्यर्चिरादिना गतस्य कार्ये प्रत्यभिसंधिर्दृश्यत इति तत्रोत्तरम् ।

1. B. reads तथा हि for यथा हि; A. reads विद्योत्पत्तेः for विद्योत्पत्तिः.

3-4. C. om. विद्यानिष्पत्तिरपि; A. B. om. गति before शास्त्रात्.

9. C. reads तत् before अर्थस्य.

12. B. reads अनन्ताश्च for नात्यन्ताय न; C. reads आवसन्ति for न सन्तीति.

## न च कार्ये प्रत्यभिसंधिः ॥ १३ ॥

न चायं प्रत्यभिसंधिः कार्ये हिरण्यगर्भे । अपि तु परस्मि-
न्नेव ब्रह्मणि । वाक्यशेषे यशोहं भवामि ब्राह्मणानाम् (छा.
८।१४।१) इति तस्याभिसंधातुः सर्वाविद्याविमोकपूर्वकस-
5 र्वात्मभावाभिसंधानात् । अश्व इव रोमाणि विधूय पापं चन्द्र
इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोक-
मभिसंभवामि (छा. ८।१३।१) इत्यभिसंभाव्यस्य ब्रह्मलोक-
स्याकृतत्वश्रवणात् । सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् ।
अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति
10 जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान्स्वमतेन सिद्धान्तमाह ।

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

अप्रतीकालम्बनान्प्रतीकालम्बनव्यतिरिक्तान्नयत्यर्चिरादिरा-
15 तिवाहिको गण इति भगवान्बादरायणो मेने । एतदुक्तं भवति ।
कार्यमुपासीनान्नयतीति नायं पक्षः संभवति । परमेवोपासीना-
न्नित्ययमपि नियमो नास्ति । न च प्रतीकालम्बनानपि नयति ।
अपि तु ये परं ब्रह्मोपासते ये चात्मानं प्रकृतिवियुक्तं ब्रह्मा-
त्मकमुपासते तानुभयविधान्नयति । ये तु ब्रह्मकार्यान्तर्भूतं

---

2. A. reads कार्य for कार्ये before हिरण्यगर्भे.
3. A. B. read सम् before भवामि.
6. A. B. read कृत आत्मा for कृतात्मा.
7. C. E. read संभवानि for संभवामि; B. reads संभाव्य for संभाव्यस्य.
8. A. B. read विनिर्मोचकस्य for विनिर्मोकस्य.
15. E. reads मन्यते for मेने.
17. A. B. om. अयम् before अपि.
19. A. B. read अन्तर्भूत for अन्तर्भूतम्.

नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते न तान्नयति। अतः परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयतीति। कुतः। उभयथा च दोषात्। कार्यमुपासीनान्नयतीति पक्षेऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य (छा. ८।३।४, ८।१२।३) इत्यादिकाः श्रुतयः प्रकुप्येयुः। परमेवोपासीनानिति च नियमे तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति (छा. ५।१०।१) इति पञ्चाग्निविदोऽर्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत्। अत उभयस्मिन्नपि पक्षे दोषः स्यात्। तस्मादुभयविधान्नयतीति। 10

तदेतदाह तत्क्रतुश्चेति। तत्क्रतुस्तथोपासीनस्तथैव प्राप्नोतीत्यर्थः। यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति (छा. ३।१४।१)। तं यथा यथोपासत इति न्यायात्। पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणादर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च। अत एव तत्क्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसंधानं सिद्धम्। नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते॥ १४॥ 15

तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह।

2. C. om. तत् after तत्.
6. E. reads ब्रह्म after परमेव; A. B. om. च after इति.
8. A. C. read अपि after पञ्चाग्निविदः.
10. C. om. इति after उभयविधान्नयति.
12. B. om. तथेतः प्रेत्य भवति.
14. C. reads अर्चिरादि for अर्चिरादिना before गति.
15. C. reads वियुक्त for विनिर्मुक्त.
16. C. om. आत्मन् after ब्रह्मात्मक.
18. A. reads संपद्यते, B. संपद्येते, for विद्यते.

## विशेषं च दर्शयति ॥ १५ ॥

यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति ( छा. ७।१।५ ) इत्यादिका श्रुतिर्नामादिप्राणपर्यन्तप्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति । तस्मादचिन्मिश्रं
5 केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते न तान्नयति । अपि तु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गणो नयतीति सिद्धम् ॥ १५ ॥
कार्याधिकरणं समाप्तम् । ( ५ )

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये
10 चतुर्थाध्यायस्य तृतीयः पादः ॥



2. C. reads तस्य for तत्रास्य.
3. B. reads पर्यन्तम् for पर्यन्तप्रतीकम्.
6. A. B. read पर for परम्.
7. E. reads च after ब्रह्मात्मकम्.

# अथ श्रीभाष्ये



## चतुर्थाध्याये चतुर्थः पाद आरभ्यते ।

## संपद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

परं ब्रह्मोपासीनानामात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते । 5

इदमाम्नायत एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।१२।३ ) इति । किमस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपन्नस्य देवादिरूपवत्साध्येन रूपेण संबन्धोऽनेन वाक्येन प्रतिपाद्यत उत स्वाभाविकस्य स्वरूपस्याविर्भाव इति संशये साध्येन रूपेण संबन्ध इति युक्तम् । अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात् । स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारेषूपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसंबन्धो दृश्यते । न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसंपन्नस्य पुरुषार्थः । येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ( तै. २।८ ) । रसं ह्येवायं लब्ध्वानन्दी भवति ( तै. २।७ ) इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात् । न चापरिच्छिन्नानन्दरूपचैतन्य- 10 15

---

4–5. C. om. आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानाम्; A. B. read अर्चिरादि for अर्चिरादिना; C. reads धृतिः for गतिः.

16. A. B. read उच्यते for उच्येत.

मेवास्य स्वरूपं तच्च संसारदशायामविद्यातिरोहितं परं ज्योति-
रुपसंपन्नस्याविर्भवतीति शक्यं वक्तुम् । ज्ञानस्वरूपस्य तिरो-
धानासंभवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश
एवेति हि पूर्वमेवोक्तम् । न च प्रकाशमात्रस्यानन्दता संभवति ।
5 सुखस्वरूपता ह्यानन्दस्वरूपता । सुखस्वरूपत्वं चात्मनोनुकूलत्वम् ।
प्रकाशमात्रात्मवादिनः कस्य प्रकाशोनुकूलवेदनीयो भवेदिति
प्रकाशमात्रात्मवादिनः कथंचिदप्यानन्दस्वरूपता दुरुपपादा ।
स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसंपन्नस्य
स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।३।४,८।१२।३ ) इति वच-
10 नमनर्थकं स्यात् । अतोपूर्वेण साध्येन रूपेण संबध्यते । एवं
चाभिनिष्पद्यत इति वचनं मुख्यार्थमेव भवति । स्वेन रूपेणे-
त्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति संगच्छत
इति । एवं प्राप्ते ब्रूमः ।

संपद्याविर्भाव इति । अयं प्रत्यगात्मार्चिरादिना परं ज्योति-
15 रुपसंपद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावरूपः । नापू-
र्वाकारोत्पत्तिरूपः । कुतः । स्वेनशब्दात् । स्वेन रूपेणेति
विशेषणोपादानादित्यर्थः । आगन्तुकदेहपरिग्रहे हि स्वेन रूपे-
णेति विशेषणमनर्थकं स्यात् । अविशेषणेपि तस्य स्वकीयरूप-
त्वसिद्धेः ॥ १ ॥

20 यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वादुपसंपद्याभिनिष्पद्यत इति
वचनमनर्थकमिति तत्रोत्तरम् ।

---

1. A. B. read अविद्यया for अविद्या.
2. C. reads न । स्वरूपस्य for ज्ञानस्वरूपस्य.
5. A. om. आत्मनः; C. reads आत्म for आत्मनः.
8. B. C. om. साध्ये.
11. B. reads न भवति । स्वरूपेण for भवति । स्वेन रूपेण.
13. C. reads प्रचक्ष्महे, E. अभिधीयते, for ब्रूमः.

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

कर्मसंबन्धतत्कृतदेहादिविनिर्मुक्तस्वाभाविकरूपेणावस्थितोत्र स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।१२।३ ) इत्युच्यते । अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते । कुतः । प्रतिज्ञानात् । सा 5 हि प्रतिपाद्यतया प्रतिज्ञाता । कुत इदमवगम्यते । य आत्मा ( छा. ८।७।१ ) इति प्रकृतं प्रत्यगात्मानं जागराद्यवस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुमेतं त्वेव ते भूयोनुव्याख्यास्यामि ( छा. ८। ५।३ ) इति पुनः पुनरुक्त्वैवमेवैष संप्रसादोस्माच्छरीरा- 10 त्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।१२।३ ) इत्यभिधानात् । अतः कर्मणा संबद्धस्य परं ज्योतिरुपसंपद्य बन्धनिवृत्तिरूपा विनिर्मुक्तिः स्वेन रूपेणाभिनिष्पत्तिरुच्यते । स्वरूपाविर्भावेप्यभिनिष्पत्तिशब्दो दृश्यते युक्त्यायमर्थो निष्पद्यत इत्यादिषु ॥ २ ॥ 15

यच्चोक्तमात्मस्वरूपस्य सुषुप्तावपुरुषार्थत्वदर्शनात्स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देवाद्यवस्थावत्सुखसंबन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिरिति तत्रोत्तरम् ।

## आत्मा प्रकरणात् ॥ ३ ॥

स्वरूपेणैवायमात्मापहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्तगुणक 20 इति प्रकरणादवगम्यते । य आत्मापहतपाप्मा विजरो विमृत्यु-

---

2. E. reads विनिर्मुक्तः for विनिर्मुक्त; C. E. read स्वाभाविकेन for स्वाभाविक.

7. C. E. read जागरित for जागर.

13. C reads सम् before बन्धनिवृत्ति; A. B. om. विनिर् before मुक्तिः; E. reads अभिनिष्पद्यत इति for अभिनिष्पत्तिः.

20. A. B. read गुणाकरः for गुणकः.

विशोकोविजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः ( छा. ८। ७।१ ) इति प्रजापतिवाक्यप्रक्रमः। इदं च प्रकरणं प्रत्यगात्मविषयमित्युत्तराच्चेदाविर्भूतस्वरूपस्तु ( ब्र. सू. १।३।१८ ) इत्यत्र प्रतिपादितम्। अतोपहतपाप्मत्वादिस्वरूप एवायमात्मा
5 संसारदशायां कर्माख्ययाविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसंपद्याविर्भूतस्वरूपो भवति। अतः प्रत्यगात्मनोपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसंपन्नस्याविर्भवन्ति नोत्पद्यन्ते। यथोक्तं भगवता शौनकेनापि

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
10 दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥
यथोदपानकरणात्क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतः संभवः कुतः॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते॥
15 ( शौनकः सि. त्र. पृ. ६७ )

इति। अतो ज्ञानानन्दादिगुणानां कर्मणात्मनि संकुचितानां परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं संपद्याविर्भाव इति॥ ३॥ संपद्याविर्भावाधिकरणं समाप्तम्। ( १ )

20 **अविभागेन दृष्टत्वात्॥ ४॥**

किमयं परं ज्योतिरुपसंपन्नः सर्वबन्धविनिर्मुक्तः प्रत्य-

---

2. E. reads हि after इति.

5. A. B. read कर्माख्य for कर्माख्यया.

11. A. B. read जलान्तरम् for जलाम्बरम्.

17. C. reads स्व before रूपबन्ध; B. reads विकाश for विकास; C. reads रूपः for रूप after विकास.

गात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवत्युत तत्प्रका-
रतया तदविभक्तमिति विशये सोऽश्नुते सर्वान्कामान्सह
ब्रह्मणा विपश्चिता ( तै. २।१ ) ।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ 5
( मु. ३।१।३ )

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ (गी. १४।२)
इत्यादिश्रुतिस्मृतिभ्यो मुक्तस्य परेण साहित्यसाम्यसाधर्म्या-
वगमात्पृथग्भूतमनुभवतीति प्राप्त उच्यते । 10

अविभागेनेति । परस्माद्ब्रह्मणः स्वात्मानमविभागेनानुभ-
वति मुक्तः । कुतः । दृष्टत्वात् । परब्रह्मोपसंपत्त्या निवृत्ताविद्या-
तिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं
हि तत्त्वमसि ( छा. ६।८।७ ) । अयमात्मा ब्रह्म ( बृ. २।५।
१९ ) । ऐतदात्म्यमिदं सर्वम् ( छा. ६।८।७ ) । सर्वं खल्विदं 15
ब्रह्म ( छा. ३।१४।१ ) इत्यादिसामानाधिकरण्यनिर्देशैर्य आत्मनि
तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानम-
न्तरो यमयति स त आत्मान्तर्याम्यमृतः ( श. ब्रा. १४।६।७।
३०)। अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा(तै. आ. ३।११।२)
इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति 20
प्रतिपादितमवस्थितेरिति काशकृत्स्नः ( ब्र. सू. १।४।२२ )

9. C om. आदि before श्रुतिस्मृतिभ्यः.

12. C. E. read परं ब्रह्मोपसंपद्य for परब्रह्मोपसंपत्त्या.

19. E. reads स त आत्मा for सर्वात्मा.

E. reads तत् before तच्छरीरतया; C. reads तत्प्रकारम् for तत्प्रकारभूतम्.

इत्यत्र । अतोविभागेनाहं ब्रह्मास्मीत्येवानुभवति । साम्यसाधर्म्य-
व्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति
देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सह-
श्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणा-
5 नुभवं प्रतिपादयतीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदवि-
भागोक्तेर्हि संकल्पादेव तच्छ्रुतेः ( ब्र. सू. ४।४।८ ) इत्यादि
न विरुध्यते । अधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) ।
अधिकोपदेशात् ( ब्र. सू. ३।४।८ ) इत्यादि च ॥ ४ ॥ अवि-
भागेन दृष्टत्वाधिकरणं समाप्तम् । ( २ )

10 ## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

प्रत्यगात्मनः परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य स्वरू-
पाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमात्माविर्भवति तत्स्व-
रूपं श्रुतिवैविध्याद्विचार्यते किमपहतपाप्मत्वादिकमेवास्य स्वरू-
पमिति तेन रूपेणायमाविर्भवत्युत विज्ञानमात्रमेवेति तेन
15 रूपेणाथोभयोरविरोध इत्युभयरूपेणेति । किं तावत्प्रा-
प्तम् । ब्राह्मेणेति जैमिनिराचार्यो मन्यते । ब्राह्मेणापहतपाप्म-
त्वादिनेत्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसंबन्धि-
तया श्रुताः । ब्राह्मेणेति कुतोवगम्यते । उपन्यासादिभ्यः ।
उपन्यस्यन्ते हि ब्रह्मगुणा अपहतपाप्मत्वादयः प्रत्यगात्मनोपि
20 प्रजापतिवाक्ये य आत्मापहतपाप्मा ( छा. ८।७।१ ) इत्या-

1. A. B. om. अस्मि.

12. C. om. स्व before रूपेणायम्; A. B. om. आत्मा; C. reads अनुभवति for आविर्भवति.

14. C. om. अयम् after रूपेण.

15. C. E. read स्व after उभय; C. reads अपि for इति after रूपेण.

16-17. C. reads पाप्मत्वादिगुणकेन for पाप्मत्वादिना.

दिना सत्यसंकल्प इत्यन्तेन । आदिशब्देन सत्यसंकल्पत्वादिगुणायत्ता जक्षणादयो जक्षत्क्रीडन्रममाणः (छा. ८।१२।३) इत्यादिवाक्यावगतव्यवहारा गृह्यन्ते । अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न संभवतीति जैमिनेर्मतम् ॥ ५ ॥ 5

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

चैतन्यमात्रमेवास्यात्मनः स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते । कुतः । तदात्मकत्वात् । तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः । स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवैवं वा अरेयमात्मानन्तरोबाह्यः कृत्स्नः 10 प्रज्ञानघन एव (बृ. ४।५।१३) । विज्ञानघन एव (बृ. २। ४।१२) इत्यवधारणाद्विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोस्य गुणान्तराभावादपहतपाप्मेत्यादयः शब्दा विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चितितन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥ 15

संप्रति भगवान्बादरायणः स्वमतेन सिद्धान्तमाह ।

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

एवमपि विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि सत्यकाम-

2. A. om. जक्षणादयः.
3. A E. read अवगताः for अवगत.
4. A. B. read सगच्छते for संभवति.
7. C. reads चैतन्यमेवास्य for चैतन्यमात्रमेवास्यात्मनः; A. B. om. अस्य after एव; A. B. read स्व before रूपेण.
9–10. C. om. स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एव.
11. B. om. विज्ञानघन एव.
13. C. reads पाप्मत्व for पाप्मेति.
14. B. om. चिति; C. reads तन्मात्रेण for तन्मात्ररूपेण.

त्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते । कुतः । उपन्यासात्पूर्वभावात् । औपनिषदाद्य आत्मापहतपाप्मा ( छा. ८।७।१ ) इत्याद्युपन्यासात्प्रमाणात्पूर्वेषामपहतपाप्मत्वसत्यकामत्वादीनामपि भावाद्विद्यमानत्वात् । तुल्यप्रमा-
5 णकानामितरेतरबाधो न युज्यत इत्यर्थः। न च वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम् । विशेषाभावाद्विपरीतं कस्मान्न भवतीति न्यायात् । तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम् । एवमप्यविरोध इत्यभ्युपगम्य वदञ्ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किंचिदस्ती-
10 त्ययमर्थो विज्ञानघन एव ( बृ. २।४।१२ ) इत्यादिभिर्न प्रतिपाद्यत इति मन्यते ।

कस्तर्हि विज्ञानघन एव ( बृ. २।४।१२ ) इत्यवधारणार्थः । कृत्स्नोप्यात्मा जडव्यावृत्तः स्वप्रकाशो नान्यायत्तप्रकाशः स्वल्पोपि प्रदेशोस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः । स
15 यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवैवं वा अरेयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन एव ( बृ. ४।५।१३ ) इति । न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेप्यपहतपाप्मत्वसत्यसंकल्पत्वादिधर्मसंबन्धो वाक्यान्तरावगतो विरुध्यते । यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियाव-
20 गते चक्षुराद्यवगता रूपकाठिन्यादयो न विरुध्यन्ते । इदमत्र

4. E. reads सत्यसंकल्पत्व for सत्यकामत्व.

6–8. C. om. विशेषाभावाद्विप–न्याय्यम्.

12–13. C. reads अस्य after इति; E. reads अवधारणस्य for अवधारण.

14. A. reads स्व before प्रकाशः; C. om. प्रदेशः.

17. B. om. कृत्स्नस्य after धर्मिस्वरूपस्य.

19–20. A. B. read अवगतिः for अवगते.

वाक्यतात्पर्यम् । यथा रसवत्स्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वं तथात्मनोपि सर्वत्र विज्ञानस्वरूपत्वं स्वप्रकाशस्वरूपत्वमित्यर्थः ॥ ७ ॥ ब्राह्माधिकरणं समाप्तम् । ( ३ )

**संकल्पादेव तच्छ्रुतेः ॥ ८ ॥** 5

मुक्तः परं ब्रह्मोपसंपद्य ज्ञानस्वरूपोपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य तस्य सत्यसंकल्पत्वप्रयुक्ता व्यवहाराः श्रूयन्ते स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा ( छा. ८।१२।३ ) इति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षोत परम- 10 पुरुषस्येव संकल्पमात्रादेव भवतीति विशये लोके राजादीनां सत्यसंकल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षेति प्राप्त उच्यते ।

संकल्पादेवेति । कुतः । तच्छ्रुतेः । स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति (छा. ८।२।१) इति हि 15 संकल्पादेवास्य पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसव्यपेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते । येनास्य संकल्पादेवेत्यवधारणस्य विज्ञानघन एव ( बृ. २।४।१२ ) इतिवद्व्यवस्थापनं क्रियते ॥ ८ ॥

3. C. om. स्व before रूपत्वमिति.

6. C. reads स्वेन रूपेण for ज्ञानस्वरूपः.

8. C. E. read च after व्यवहाराः.

11. B. C. read एव for इव after पुरुषस्य.

16. A. B. om. अस्य after एव.

17. C. reads सापेक्षत्व for सव्यपेक्षत्व.

## अत एव चानन्याधिपतिः ॥ ९ ॥

यतो मुक्तः सत्यसंकल्पोत एवानन्याधिपतिश्च । अन्या-
धिपतित्वं हि विधिनिषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि
प्रतिहतसंकल्पत्वं भवेत् । अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधि-
5 पतित्वं च सिद्धम् । अत एव स स्वराड्भवति ( छा. ७।२५।२)
इत्युच्यते ॥ ९ ॥ संकल्पाधिकरणं समाप्तम् । ( ४ )

## अभावं बादरिराह ह्येवम् ॥ १० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्त्युत सन्त्यथ वा
यथासंकल्पं सन्ति न सन्ति चेति विशये शरीरेन्द्रिया-
10 णामभावं बादरिराचार्यो मन्यते । कुतः । आह ह्येवम् । न ह वै
सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न
प्रियाप्रिये स्पृशतः ( छा. ८।१२।१ ) इति शरीरसंबन्धे सुख-
दुःखस्यावर्जनीयत्वमभिधायास्माच्छरीरात्समुत्थाय परं ज्योति-
रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छा. ८।१२।३ ) इति
15 मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

मुक्तस्य शरीरेन्द्रियादिभावं जैमिनिराचार्यो मन्यते । कुतः ।
विकल्पामननात् । विविधः कल्पो विकल्पः । वैविध्यमित्यर्थः ।
स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा ( छा.

2. B. om. च after अधिपतिः and reads it after अत एव.
3. C. om. हि after अधिपतित्वम्.
5. A. B. om. च before सिद्धम्.
6. A. B. read उक्तम् for उच्यते.
8. A. B. read सन्त्युत न for न सन्त्युत.
12. A. B. om. सुख.
17. E. om. आदि after इन्द्रिय.
19. C. E. read भवति after पञ्चधा.

७।२६।२ ) इत्यादिश्रुतेः । आत्मन एकस्याच्छेद्यस्यानेकधाभावासंभवात्त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते । अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम् । तदेव हि शरीरं प्रियाप्रियहेतुः ॥ ११ ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह । 5

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

संकल्पादेवेत्येतदतःशब्देन परामृश्यते । अत एव संकल्पादुभयविधं सशरीरमशरीरं च मुक्तं भगवान्बादरायणो मन्यते । एवं चोभयी श्रुतिरुपपद्यते । द्वादशाहवत् । यथा द्वादशाहमृद्धिकामा उपेयुः ( ता. ब्रा. २३।२३।१ )। द्वादशाहेन प्रजाकामं 10 याजयेदित्युपैतियजतिचोदनाभ्यां संकल्पभेदेन सत्रमहीनं च भवति ॥ १२ ॥

यदा शरीराद्युपकरणवत्त्वं तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह ।

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥** 15

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसंकल्पोपि स्वयं न सृजति । यथा स्वप्ने अथ रथान्रथयोगान्पथः सृजते ( बृ. ४।३।१० ) इत्यारभ्याथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता ( बृ. ४।३।१० ) इति 20

---

4. A. B. om प्रिय before अप्रिय.

5. A. B. om. तु after भगवान्.

9. A. B. read उभय for उभयी; C. reads द्वादशाहे before द्वादशाहम्.

15. A. reads संधिवत् for संध्यवत्.

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । ( का. ५।८ )
इति चेश्वरसृष्टै रथाद्युपकरणैर्जीवो भुङ्क्ते तथा मुक्तोपि
5 लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥१३॥

## भावे जाग्रद्वत् ॥ १४ ॥

स्वसंकल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते । परमपुरुषोपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीला-
10 रसं यथा भुङ्क्ते तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित् । कदाचिच्च मुक्ताः सत्यसंकल्पत्वात्परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माणुपरिमाण इत्युक्तम् । कथमनेकशरीरेष्वेक-
15 स्याणोरात्माभिमानसंभव इत्यत्राह ।

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेशस्तथात्मनोप्येकदेशस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः । यथा चैकस्मिन्नपि देहे हृदयाद्येक-
20 प्रदेशवर्तिनोपि चैतन्यव्याप्त्या सर्वस्मिन्देह आत्माभिमानस्तद्वत् ।

5. A. B. read लीलया for लीला before प्रवृत्तेन.
9. C. reads मानुष for मनुष्य.
10. B. om. यथा after रसम्.
18. C. reads देहे for देश after एक.
19. C. reads अनुप्र for आ before वेशः.
20. C. om. प्र before देशवर्तिनः.

इयान्विशेषः। अमुक्तस्य कर्मणा संकुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न संभवति। मुक्तस्य त्वसंकुचितज्ञानस्य यथासंकल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणा च नानुपपन्ना। तथा हि दर्शयति

बालाग्रशतभागस्य शतधा कल्पितस्य च। 5

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ (श्वे.५।९)

इति। अमुक्तस्य कर्म नियामकं मुक्तस्य तु स्वेच्छेति विशेषः ॥ १५ ॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् (बृ. 10 ४।३।२१) इति। तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते। तत्रोत्तरम्।

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

नेदं वचनं मुक्तविषयम्। अपि तु स्वाप्ययसंपत्त्योरन्यतरापेक्षम्। स्वाप्ययः सुषुप्तिरित्युक्तम्। संपत्तिश्च मरणम्। वाङ्मनसि संपद्यते (छा. ६।८।६) इत्यारभ्य तेजः परस्यां देवता- 15 याम् (छा. ६।८।६) इति वचनात्। तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निःसंबोधत्वं च विद्यते। अतस्तयोरन्यतरापेक्षमिदं वचनम्। सुषुप्तिमरणयोर्निःसंबोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या। नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं 20 पश्यामि (छा. ८।११।१) इति सुषुप्तिवेलायां निःसंबोधत्व-

1. C. reads न before देहान्तरेषु.

2. C. om. न after व्याप्तिः.

13. B. reads तु after वचनम्.

17. E. reads विद्येते for विद्यते.

19. A. E. read नाहम् for नाह.

मुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य स वा एष दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ( छा. ८।१२।५-६ ) इति सर्वज्ञत्वमुच्यते । तथा

सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः। (छा. ७।२६।२)
5 इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निःसंबोधत्वमेतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ( बृ. २।४।१२ ) इत्युक्तम् । विनश्यति न पश्यतीत्यर्थः । अतः प्राज्ञेनात्मनेति वचनं स्वाप्ययसंपत्त्योरन्यतरापेक्षम् ॥ १६ ॥

अभावाधिकरणं समाप्तम् । ( ५ )

10 **जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥**

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमप्युत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः। किं युक्तम् । जगदीश्वरत्वमपीति । कुतः । निरञ्जनः परमं साम्यमुपैति ( मु. ३।१।३ ) इति परमपुरुषेण परमसा-
15 म्यापत्तिश्रुतेः । सत्यसंकल्पत्वश्रुतेश्च । न हि परमसाम्यसत्यसंकल्पत्वे सर्वेश्वरासाधारणजगद्व्यापाररूपजगन्नियमनेन विनोपपद्येते । अतः सत्यसंकल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति । एवं प्राप्ते प्रचक्ष्महे ।

जगद्व्यापारवर्जमिति । जगद्व्यापारो निखिलचेतनाचेतन-
20 स्वरूपस्थितिप्रवृत्तिभेदनियमनम् । तद्वर्जं निरस्तनिखिलतिरो-

5. C. om. च after इति.

7. B. om. इत्युक्तम् । विनश्यति; C. E. om. विनश्यति before न पश्यति.

11. C. reads असाधारण for असाधारणम्.

16. A. B. om. जगद्व्यापाररूप.

18. C. E. read मुक्त for मुक्तस्य.

धानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम्। कुतः। प्रकरणात्। निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म (तै. ३।१) इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं 5 स्यात्तत इदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न संगच्छते। असाधारणस्य हि लक्षणत्वम्। तथा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत (छा. ६।२।२-३) इति। ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा 10 क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः (बृ. १।४।११) इति। आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ऐक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत (ऐ. १।१-२) इति। एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न 15 सोमो न सूर्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि (महो. १) इत्यादिषु यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरः (श. ब्रा. १४।६।७।७) इत्यारभ्य य आत्मनि तिष्ठन् (श. ब्रा. १४।६।७।३०) इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। असंनिहि- 20

2. C. om. हि after नियमनम्; A. B. read पर for परम्.

6. A. E. read च after ततः.

7. B. reads यथा for तथा.

9. E. om. एकमेव after आसीत् and reads it after इदम्.

10. C. reads व्यभजत् for व्यभवत्; C. reads देवता, E. देव, for देवत्रा.

14. A. B. om. इति after असृजत.

तत्वाच्च । न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति । येन जगद्व्यापारस्तस्यापि स्यात् ॥ १७ ॥

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

5 स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति (छा. ७।२५।२) । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् (तै. ३।१०।५) इति प्रत्यक्षेण श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते । अतो न जगद्व्यापारवर्जमिति चेत्तन्न । आधिकारिकमण्डलस्थोक्तेः । आधिकारिका अधिकारेषु नियुक्ता
10 हिरण्यगर्भादयः । मण्डलानि तेषां लोकाः । तत्स्था भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थस्तस्य सर्वेषु लोकेषु कामचारो भवति (छा. ७।२५।२) इत्यादिनोच्यते । अकर्मप्रतिहतज्ञानो मुक्तो विकारिलोकान्ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्तिन आधिकारिकमण्डल-
15 स्थान्सर्वान्भोगान्ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवन्मुक्तोपि विकारान्तर्वर्तिनो भोगान्भुङ्क्ते तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातमल्पं च स्यात् । तत्राह ।

**विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥**

20 विकारे जन्मादिके न वर्तत इति विकारावर्ति । निर्धूत-

6. A. E. read सः before इमान्.

13. C. reads अधिकान्, E. विकार, for विकारि.

14. C. reads अन्तर्वर्तिना for अन्तर्वर्तिनः; A. B. read अधिकारि for आधिकारिक.

15. A. B. om. सर्वान्.

16. B. reads तत् for जगत्.

18. B. om. तत्राह.

निखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम् । तथा हि परस्मिन्ब्रह्मणि निर्विकारेनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिर्यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयं प्रतिष्ठां विन्दते । अथ सोभयं गतो भवति ( तै. २।७ ) । रसो वै स: । रसं ह्येवायं लब्ध्वानन्दी भवति ( तै. २।७ ) इत्यादिका। तद्विभूतिभूतं च जगत्तत्रैव वर्तते।

तस्मिँल्लोका: श्रिता: सर्वे तदु नात्येति कश्चन । ( का. ५।८ ) इति श्रुते: । अत: सविभूतिकं ब्रह्मानुभवन्विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान्भुङ्क्त इति सर्वेषु लोकेषु कामचार: ( छा. ७।२५।२ ) इत्यादिनोच्यते न मुक्तस्य जगद्व्यापार: ॥ १९ ॥

### दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न संभवतीत्युक्तम्। निखिलजगन्नियमनरूपो व्यापार: परमपुरुषासाधारण इति दर्शयत: श्रुतिस्मृती । भीषास्माद्वात: पवते । भीषोदेति सूर्य: । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ( तै. २।८ ) । एतस्य

1. B. C. om. निखिलविकारम्.

2. A. B. read सविभूति for सविभूतिकम्; C. reads स for सकल.

5. A. reads आनन्दस्य for आनन्दे; B. om. श्रुति:.

8. E. om. च after विभूतिभूतम्.

11. B. reads अनुभवस्वीकारान्तदन्तर्वर्तिन: for अनुभवन्विकारान्तर्वर्तिन:.

16. C. reads नियम्य for नियाम्य.

17. C. om. रूपम् after व्यापार.

वा अक्षरस्य प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठतः (बृ. ३।८।९) इत्यादि । तथैव सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय (बृ. ४।४।२२) इति च श्रुतिः । स्मृतिरपि

5 मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ (गी. ९।१०)

इति ।

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् । (गी. १०।४२)

इति च ।

10 तथा मुक्तस्य सत्यसंकल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयत एष ह्येवानन्दयाति (तै. २।७) ।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥
15 ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥

(गी. १४।२६-२७)

इति । यद्यप्यपहतपाप्मत्वादिः सत्यसंकल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतस्तथापि तस्य तथाविधत्वमेव 20 परमपुरुषायत्तं तस्य नित्यस्थितिश्च तदायत्ता । परमपुरुषस्यैतन्नित्यताया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया

4. B. om. च before श्रुतिः.
7. A. E. om. इति.
10. C. om. अपि after पूर्वकस्य.
19. C. reads आविष्कृतः for आविर्भूतः.
22. A. B. om. च after उपकरणस्य.

शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसंकल्पत्वं परमपुरुषसाम्यं च जगद्व्यापारवर्जम् ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गाज्जगद्व्यापारवर्जमित्यवगम्यते। सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता (तै. २।१) इति। अतो मुक्तस्य परमपुरुषसाम्यं सत्यसंकल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥

यदि परमपुरुषायत्तं मुक्तस्यैश्वर्यं तर्हि तस्य स्वतन्त्रत्वेन तत्संकल्पान्मुक्तस्य पुनरावृत्तिसंभवशङ्केत्यत्राह।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसंकल्प आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसंभावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यत एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीत उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसंचयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तय-

1. C. reads शास्त्रात् for शास्त्र.
5. A. B. read भोगमात्रे for भोगमात्रेण.
11. E. reads एव after पुरुषायत्तम्; A. B. read मुक्त for मुक्तस्य.
12. C. reads संभावना शङ्कित for संभवशङ्का; E. reads आ before शङ्का.
16–17. E. reads समस्त after निरस्त; C. om. परब्रह्माभिधानः.
18. C. reads संराधन for समाराधन.
20. B. reads प्राप्य for प्रापय्य.

तीत्यपि शब्दादेवावगम्यते । शब्दश्च स खल्वेवं वर्तयन्याव-
दायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ( छा. ८
१५।१ ) इत्यादिक: । तथा च भगवता स्वयमेवोक्तम्

मामुपेत्य पुनर्जन्म दु:खालयमशाश्वतम् ।
5 नाप्नुवन्ति महात्मान: संसिद्धिं परमां गता: ॥
आ ब्रह्मभुवनाल्लोका: पुनरावर्तिनोर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ (गी. ८।१५-१६)

इति ।

न चोच्छिन्नकर्मबन्धस्यासंकुचितज्ञानस्य परब्रह्मैकानुभवैक-
10 स्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतो-
न्यापेक्षातदर्थारम्भाद्यसंभवात्पुनरावृत्तिशङ्का । न च परमपुरुष:
सत्यसंकल्पोत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति ।
य एवमाह

प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय: ।
15 उदारा: सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थित: स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेव: सर्वमिति स महात्मा सुदुर्लभ: ॥ (गी. ७।१७-१९)

इति । सूत्राभ्यास: शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं
20 समञ्जसम् ॥ २२ ॥ जगद्व्यापारवर्जाधिकरणं समाप्तम् । (६)

इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये
चतुर्थाध्यायस्य चतुर्थ: पाद: समाप्त: ॥ अध्यायश्चतुर्थो ग्रन्थ-
श्च शास्त्रं च परिसमाप्तम् ॥ नमो भगवते रामानुजमुनये
योगिवर्याय ॥ नम: पूर्वाचार्येभ्य: ॥

---

1. C. om. अव before गम्यते.
3. C. E. om. च after तथा.
9. B. om. एक after अनुभव.
11. E. reads तदर्थान्तरारम्भ for तदर्थारम्भ.

# अधिकरणानां वर्णानुक्रमेण सूचीपत्रम् ।

# ब्रह्मसूत्राणां वर्णानुक्रमेण सूचीपत्रम् ।

॥ श्री ॥

# श्रीभाष्ये प्रसङ्गादुद्धृतानां श्रुतिसूत्रादीनां वर्णानुक्रमेण सूचीपत्रम् ।



# BOMBAY SANSKRIT & PRAKRIT SERIES.

*Edited under the superintendence of Prof. S. R. Bhandarkar, M. A. and Prof. V. S. Ghate, M. A.*

| | Rs. | a. |
|---|---|---|
| Âpastambîya Dharmasûtra, Part I., with Critical Notes and Index and various Readings of the Hiranyakes'i-Dharmasûtra, by Dr. G. Bühler ( B. S. S. No. 44 ) ... ... | 1 | 6 |
| " " Part II., containing extracts from Haradatta's Commentary called Ujjvala, by Dr. G. Bühler ( B. S. S. No. 50 ) | 1 | 2 |
| Âtharvana Upanishads and Commentaries, by Col. G. A. Jacob. (B. S. S. No. 40 )—*Under revision.* ... ... | 1 | 4 |
| Bhatti-Kâvya with Mallinâtha's Commentry, Vol. I., by R. B. K. P. Trivedi, B. A. (B. S. S. No. 56) | 9 | 0 |
| " " Vol. II., by R. B. K. P. Trivedi, B. A. ( B. S. S. No. 57) ... ... ... ... | 6 | 0 |
| Concordance to the Principal Upanishads and Bhagavadgîtâ, by Col. G. A. Jacob ( B. S. S. No. 39 )... ... ... | 4 | 0 |
| Dasakumâracharita of Dandin, Part I., with Critical Notes, etc., by Dr. G. Bühler B. S. S. No. 10 )—*Under revision....* ... ... | ... | |
| " " Part II., by Dr. P. Peterson (B. S. S. No. 42)—*Under revision* ... ... ... | 0 | 8 |
| Des'înâmamâlâ Part I., Text and Critical Notes, by Prof. Pischel and Dr. G. Bühler (B. S. S. No. 17) ... ... | | |
| Ekâvali of Vidyâdhara, with the Commentary, Tarala, of Mallinâtha, and Critical Notes, etc., by R. B. K. P. Trivedi, B. A. (B. S. S. No. 63) ... ... ... ... | 14 | 0 |
| Gaüdavaho, by Vâkpati, by S. P. Pandit, M. A. (B. S. S. No. 34 ) ... ... ... ... ... ... ... | 3 | 0 |

| | Rs. | a. |
|---|---|---|
| Hand-book to Ṛigveda Part I. by Dr. P. Peterson, ( B. S. S. No. 41 ) ... ... ... ... | 1 | 8 |
| „ „ Part II., by Dr. P. Peterson ( B. S. S. No. 43 ) ... ... ... ... ... ... ... | 2 | 8 |
| Harshacharita, by Dr. A. A. Führer (B. S. S. No. 66) ... | 2 | 0 |
| Hitopades'a of Nârâyaṇa, by Dr. P. Peterson ( B. S. S. No. 33 ) ... ... ... ... ... ... ... | 0 | 14 |
| Hymns from the Ṛigveda, 3rd edn., by Dr. P. Peterson and S. R. Bhandarkar, M. A. ( B. S. S. No. 36 ) ... ... | 2 | 4 |
| Hymns from the Ṛigveda (Second Selection), by Dr. P. Peterson (B. S. S. No. 58) ... ... ... ... ... | 4 | 0 |
| Kâdambarî, Vol. I. (Text), by Dr. P. Peterson ( B. S. S. No. 21). ... ... ... ... | 2 | 0 |
| „ Vol. II. ( Introduction and Notes ), by Dr. P. Peterson (B. S. S. No. 24) ... ... ... ... | 4 | 8 |
| Kîrti-Kaumudî, by A. V. Kâthavate, B. A. (B. S. S. No. 25) —*Copy-right restored to the Editor* ... ... ... | | |
| Kumârapâla-Charita, by S. P. Pandit, M. A. (B. S. S. No. 60) | 8 | 8 |
| Mṛichchhakatika with two Commentaries and various Readings, by N. B. Godbole, B. A. (B. S. S. No. 52) ... | 3 | 8 |
| Mâlavikâgnimitra by S. P. Pandit, M. A. ( B. S. S. No. 6 ), 2nd edition.—*Under revision* ... ... ... ... | 2 | 2 |
| Mâlatî-Mâdhava, with Critical Notes, etc., by Sir Dr. R. G. Bhandarkar (B. S. S. No. 15), 2nd edition ... ... | 4 | 4 |
| Mahâbhâshya of Patañjali, Vol. I., Parts I., II and III. ( together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 18–20) ... | 4 | 8 |
| „ „ Vol. II., Parts I., II. and III. (together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 21, 22 and 26 ) ... ... ... | 9 | 0 |
| „ „ Vol. III, Parts I., II. and III. (together), 2nd edn., by Do. (B. S. S. Nos. 28–30). ... | 9 | 0 |
| Mudrârâkshasa, with the Commentary of Dhuṇḍirâja, by K. T. Telang, M. A. (B. S. S. No. 27)—*Copy-right restored to the Editor* ... ... ... ... ... | | |

| | Rs. | P. |
|---|---|---|
| Mahânârâyaṇa Upanishad, by Col. G. A. Jacob (B. S. S. No. 35) ... ... ... ... ... ... ... | 0 | 7 |
| Naishkarmyasiddhi, with the Chandrikâ of Jñânottama, by Col. G. A. Jacob (B. S. S. No. 38), 2nd Edn. ... ... | 2 | 8 |
| Navasâhasâṅkacharita, Part I., by Vâmanashâstri Islâmpurkar ( B. S. S.No. 53 ) ... ... ... ... ... | 1 | 10 |
| Nîti and Vairâgya S'atakas, with Notes and extracts from two Commentaries, by K. T. Telang, M. A. (B. S. S. No. 11)—*Copy-right restored to the Editor* ... ... | | |
| Nyâyakos'a, by Mahâmahopâdhâya Bhîmâchârya Zalkikar ( B. S. S. No. 49 ) ... ... ... ... ... | 6 | 0 |
| Pañchatantra, Book I., with Notes, by Dr. F. Kielhorn (B. S. S. No. 4) ... ... ... ... | 0 | |
| Books II. and III., with Notes, by Dr. G. Bühler ( B. S. S. No. 3 ) ... | 0 | |
| ,, Books IV. & V., with Notes by Dr. G. Bühler (B. S. S. No. 1) ... ... ... ... | 0 | |
| Parás'ara Smriti, Vol. I., Part I., by Vâmanshâstri Islâmpurkar ( B. S. S. No. 47 ) ... ... | 2 | 2 |
| ,, ,, Vol. I., Part II, by Do. ( B. S. S. No. 48 ) | 2 | 0 |
| ,, ,, Vol. II., Part I., by Do. (B. S. S. No. 59) | 4 | 0 |
| ,, ,, Vol. II., Part II., by Do. (B. S. S. No. 64) | 5 | 0 |
| ,, ,, Vol. III., Part I., by Do. (B. S. S. No. 67) | 4 | 0 |
| Paribhâshendus'ekhara, Part I., Text and various Readings, by Dr. F. Kielhorn ( B. S. S. No. 2) | 0 | 8 |
| ,, Part II., Translation and Notes, by Do. ( Paribhâshâs 1-37 ), (B. S. S. No. 7) | 0 | 8 |
| ,, Part II., Translation and Notes, by Do. (Paribhâshâs 38 to 69), (B. S. S. No. 9) | 0 | 8 |
| ,, Part II., Translation and Notes, by Do. (Paribhâshâs 70 to 122) (B.S. S. No. 12) | 0 | 8 |
| Patañjala Sûtrâṇi, with the Scholium of Vyâsa and Vâchaspati's Commentary, by Mahâmahopâdhyâya Râjârâm Shâstri Bodas ( B. S. S. No. 46 )... ... ... ... | 1 | 10 |
| Pratâparudrayas'obhûshaṇa of Vidyânâtha, by R. B. K. P. Trivedi, B. A. ( B. S. S. No. 65) ... ... ... | 11 | 0 |
| Raghuvaṃs'a, Part I. (Cantos i–vi), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 5) ... ... ... ... ... ... ... | 1 | 8 |

| | Rs. | a. |
|---|---|---|
| Raghuvaṃs'a, Part II. (Cantos vii–xiii), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 8) ... ... ... | 0 | 12 |
| „ Part III. ( Cantos xiv–xix), with Mallinâtha's Commentary and Notes, by Do. ( B. S. S. No. 13)... ... ... ... ... ... | 0 | 8 |
| Râjataraṅgiṇî, Vol. I., by Pandit Durgaprasad ( B. S. S. No. 45) ... ... ... ... ... | 1 | 8 |
| „ Vol. II., by Do. (B. S. S. No. 51) ... ... | 1 | 4 |
| „ Vol. III., by Dr. P. Peterson (B. S. S. No. 54) | 1 | 2 |
| Rekhâgaṇita, Vol. I., by H. H. Dhruva, B. A. and R. B. K. P. Trivedi, B. A. (B. S. S. No. 61) ... ... | 12 | 0 |
| Do. Vol. II, by Do. Do. (B. S. S. No. 62) ... ... | 9 | 0 |
| S'ârṅgadharapaddhati, Vol. I., by Dr. P. Peterson (B. S. S. No. 37) ... ... ... ... ... ... ... | 3 | 0 |
| Subhâshitâvali of Vallabhadeva, by Do. (B. S. S. No. 31) ... | 2 | 8 |
| Tarka-Kaumudî of Laugâkshi Bhâskara by M. N. Dvivedi, B. A. (B. S. S. No. 32)—*Copy-right restored to the Editor* ... ... ... ... ... ... ... | | |
| Tarka-Saṃgraha, with two Commentaries and Notes, by Y. V. Athalye, M. A. (B. S. S. No. 55)... ... ... | | |
| Vâsishṭha Dharmas'âstra by Dr. A. A. Führer (B. S. S. No. 23) | 0 | 8 |
| Vikramâṅkadevacharita, by Dr. G. Bühler (B. S. S. No. 14) —*Copy-right restored to the Editor* ... ... ... | | |
| Vikramorvas'îya, with Notes, 3rd edn., by S. P. Pandit, M. A. and B. R. Arte, M. A. (B. S. S. No. 16) ... ... | 2 | 0 |

SANSKRIT PUBLICATIONS NOT INCLUDED IN THE BOMBAY SANSKRIT AND PRAKRIT SERIES.

| | Rs. | a. |
|---|---|---|
| *Amarakos'a*, the Thesarus of Sanskrit Words of Amara-Siṃha with the Commentary of Mahes'vara. Edited by Raghunath Shastri Talokar with Index ... ... ... | 0 | 12 |
| *Atharvaveda-Saṃhitâ* with the Commentary of Sâyaṇâchârya. Edited by S. P. Pandit, M. A., Vols. I., II., III., and IV., each at ... ... ... ... ... ... | 10 | 0 |
| Kâvyaprakâs'a ( 2nd edition ), edited by Vâmanâchârya Zalkikar —*Under revision* ... ... ... ... | [illegible] | |

## Pahlavi.

| | Rs. | a. |
|---|---|---|
| Vendidad, complete in 2 Volumes ... ... ... ... | 5 | 0 |

The Department of Public Instruction, Bombay.

# S'RÎ-BHÂSHYA

OF

# RÂMÂNUJÂCHÂRYA

**Edited with Notes in Sanskrit**

BY

VASUDEV SHASTRI ABHYANKAR,
PANDIT, FERGUSSON COLLEGE, POONA.

## Part II.

INTRODUCTION AND NOTES.

300 Copies.

1916.



*Price Rs. Six.*

Bombay Sanskrit and Prakrit Series, No. LXXII



॥ श्रीः ॥

# श्रीमद्रामानुजाचार्यप्रणीतं

# श्रीभाष्यम् ।

अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितया

विवृत्या समेतम् ।



द्वितीयो भागो विवृत्यात्मकः ।



तच्च

मुम्बापुरीस्थराजकीयग्रन्थशालाधिकारिणा

प्राकाश्यं नीतम् ।

शाके १८३७ वत्सरे, १९१६ ख्रिस्ताब्दे.

मूल्यं षड् रूप्यकाः ।

# INTRODUCTION.



The mind of the Aryans of Ancient India was for the most rt guided and ruled by the Vedic literature alone. The dic literature can roughly be divided into two portions— e earlier and the later. The earlier portion, consisting ominently of the nine Maṇḍalas of the Rigveda, deals with e material and practical things of the world; while the later tion, which begins with the tenth Maṇḍala a d has the nishads for its major portion, tackles spiritual and extra- ndane problems. As long as the Ancient Aryans had to carry a struggle for existence, their thoughts were naturally turned ards earthly things alone, such as, wealth, cattle, children d the like. It was the earthly happiness and affluence that od as their goal. Consequently, the earlier Vedic religion not aim at the correct knowledge of the Supreme Being the consequent renunciation of the world. It did not ch devotion and unconditional surrender to the Lord. It not expound quiet and undisturbed meditation on the Lord. so it did not require the people to abide by moral laws ne. In short, the earlier Vedic Religion was not based on of the following four: knowledge, meditation, devotion and es. It was the primitive religion that existed long before people had any idea of meditation, devotion and the like; consequently, it was very simple and of a thoroughly ctical character. It naturally consisted of the performance large number of sacrifices, all meant for happiness or for er. The highest idea that these Aryans had was of Svarga higher region where the meritorious reaped the fruits of good actions. Pleasures and enjoyments in Svarga were arded as superior to the earthly ones in every respect; and equently, the important sacrifices like Jyotishṭoma and the aimed at nothing else but securing a temporary seat in en for the Yajamâna. When the Aryans were properly

settled after the necessary conquests and when they had no longer to maintain such a struggle for existence as they formerly had to do, they found leisure for introspection and were naturally led to the origin of things and the Universe that awakened the interests of man. They were not satisfied with temporary happiness in heaven. They wanted to seek eternal and complete rest for their soul after death, and they began to investigate the ways and means to get such a rest. They did not rest satisfied with the favour of God won by their meritorious deeds. They wanted to go deeper. They wanted to know the real nature of God. Actions alone, they saw could not give knowledge; but thought and solemn meditation were the prerequisites of such a knowledge. A different set of literature arose in which this desire for investigation is discernible. The last portion of the Rigveda (*i. e.* Vedânta which became a proper name afterwards) only began the investigation; but its development is found in the Upanishads which are really the foundation of the great edifice of the Vedânta philosophy. To answer the what the how, and the why of all that exists and that we see so also to answer the usual questions 'who am I', 'what am I' and 'why am I born' is the aim of these Upanishads.

The earlier portion of the Vedic Literature requires men to lead a pious and simple life of actions by observing all the rites and ceremonies enjoined by Veda, while the later portion requires men to live a life of solemn meditation and renunciation in order to obtain the real knowledge of the world and its Creator. As a consequence the injunctions of the first portion and those of the latter seem contradictory in nature to a superficial observer, but really speaking they are not so, and it is a work possible for master-minds alone to remove the difference of view between the two, and to show that both of them aim at one and the same thing—the final, supreme and unending bliss of man. No portion of the ancient Vedic literature, that has come down to us, handles this problem of compromise. It

..ly in later times that Bodhâyana, the author of the Vedânta-Sûtra-Vritti, made a synthesis of the two Mîmâmsâs as shown by the quotation from him in the S'rîbhâshya: "This S'arîraka doctrine is connected with Jaimini's doctrine as contained in sixteen adhyâyas: this proves the two to constitute one body of doctrine" (संहितमेत...शास्त्रैकत्वसिद्धिः। Vol. I. P. 2. L. 20). Laconism and compactness, more often combined with obscurity and vagueness, form the characteristic features of the Sûtra literature. It is only in the Sûtras of Pânini that we find exactness and brevity happily combined. The Bàdarâyana Sûtras sometimes have a number of words to be supplied. They are, it can be said, altogether unintelligible without a commentary for elucidation, and hence there is reason to believe that Vyâsa himself or some one of his pupils must have written an explanatory comment on his Sûtras. Unfortunately for us, however, and in a way unfortunately for the Divine sage himself, such commentary, if written at all, became soon extinct and scholars of Vedânta had to grapple with innumerable difficulties and each was required to work his own way separately.

Various glosses were written by various scholars, each trying to prove his own theory. Some scholars discovered the ...vâda in the Sûtras, others found therein the Upâdhivâda, and others traced the germs of Abhâsavâda, Pratibimbavâda, ...avâda and the like in the same: while, Bodhâyana, Dramida and Tanka laid their fingers on Vis'ishtâdvaitavâda or Qualified Monism. The works of Bodhâyana, Dramida and Tanka are however extinct and we have to rest ourselves satisfied with references to them in other books. Seeds of jealousy and hatred were sown by these differences in views leading eventually to the downfall of all the Vedantins and the success of the ritualistic Mimâmsakas.

Such were the circumstances when the great luminary, S'ankarâchârya, appeared on the horizon. In the very short career of thirty-two years he, as it were, effaced from the sur-

face of the earth the ritualistic Mîmâṃsakas and convinced the people of the pure Monism of the Upanishads by his superhuman genius. People to the extreme South of India, however, continued to be the adherents of the Bhakti School in spite of his teachings. A section of these adherents of the Bhakti School was known by the name Âchâryas. These Âchâryas felt the necessity of a Bhâshya of their School on Bâdarâyaṇa's Sûtras to serve as a rival to the Bhâshya of S'aṃkarâchârya, that had then become exceedingly popular. Yâmunâchârya, the spiritual preceptor of Râmânuja, is said to have expressed to the latter as his last wish that he should write an extensive commentary on those Sûtras.

Râmânuja was born in S'aka 1049 at Bhûtapuri, a village in the district of Trichnopelli. Kes'avabhatta was his father's name; his mother was called Kântimatî. It is said that Râmânujachârya was the incarnation of S'esha, the vehicle of Vishṇu, for the purpose of re-establishing the Vaishṇava cult based upon Bhakti. In his youth, he was the pupil of Yâdavaprakâs'a, his maternal uncle. He showed very early his predilection for the Bhakti School. It is said that he was a devotee of Râma and passed a number of years in solemn meditation on that deity. He was convinced that the Monism of the Upanishads was Qualified Monism; and in order to convince people, he travelled through the length and breadth of the land and paid a visit to almost all the sacred cities. He joined hands with the few Vaishṇavas that still remained unconverted at every place, and founded Maṭhas or schools of learning to propagate his own theories. He wrote many books all propounding his own theory of Qualified Monism. Vedârtha Saṃgraha is his first original work wherein he briefly discusses the principal tenets of Qualified Monism. Vedântadîpa and Vedântasâra followed as short glosses on the Sûtras of Bâdarâyaṇa. Not satisfied with short glosses, he wrote an extensive commentary on the same Sûtras, known by the name

९—८ **न स इति**। योत एकैकमुपास्ते इत्युपक्रमवाक्यम्। यः प्राणादिष्वेकैकमुपास्ते स न वेद हि यत एषोऽकृत्स्नोऽकृत्स्नवित्। किं त्वात्मेत्येवोपासीतेत्यर्थः। अत्रोपक्रमोपसंहारयोरुपासनशब्दो मध्ये वेदनशब्दः।

—९-१० **यस्तदिति**। अत्र वेदेति विदिनोपक्रम्योपास्स इत्युपास्तिनोपसंहारः कृतः। तद्ब्रह्म यो रैक्को वेद, स रैक्को यद्ब्रह्म वेद, एतदुभयं स रैक्क एतद्ब्रह्म चेत्येवंलक्षणं तव मयोक्तमित्यर्थः। **अनु म इति**। हे भगवो हे भगवंस्त्वं यां देवतामुपास्स एतां देवतां मेऽनुशाधि विविच्य ज्ञापयेत्यर्थः।

—१२ **अविच्छिन्नेति**। अविच्छिन्नत्वं विजातीयप्रत्ययान्तराव्यवहितत्वम्। ध्रुवस्मृतेरविच्छिन्नस्मृतिसंतानमेव स्वरूपम्। सा ध्रुवा स्मृतिरेव ध्यानमित्यर्थः।

—१४ **समानाकारेति**। वक्ष्यमाणरीत्यापरोक्षत्वेनेति भावः।

—१५ **भिद्यत इति**। हृदयस्य मनसो रागादिग्रन्थिः। यद्वा हृदयस्थजीवस्य ग्रन्थिः प्रकृतिसंबन्धः। हृदयं शरीरं तद्रूपो ग्रन्थिरिति वा। संशयशब्देन देहात्माभिमानादिर्विपर्ययोऽप्युपलक्षणीयः। **कर्माणि**। पुण्यपापरूपाणि। परे सर्वोत्कृष्टत्वेन प्रसिद्धा अपि हिरण्यगर्भादयोऽवरे निकृष्टा यस्मात्तस्मिन्ब्रह्मणीत्यर्थः। अस्मिन्वचने ग्रन्थिभेदहेतुत्वेन ब्रह्मदर्शनमुक्तम्। पूर्वत्र तु स्मृतिरुक्तेत्यनयोरेकवाक्यत्वं न स्यात्। अतः स्मृतिर्दर्शनसमानाकारेत्यङ्गीकर्तव्यमिति भावः।

—१७-८ **एवं च सति**। उपायदशापन्नज्ञानस्य दर्शनरूपत्वे सिद्धे सति। **इत्यनेन**। इत्यादिनोपायप्रदर्शनपरेण वाक्येन।

—१८-९ स्मृतेरपरोक्षत्वं कथमिति चेत्तत्राह—**भवति चेति**। भावना वासना। दर्शनरूपत्वं च विशदतराभासरूपत्वम्।

—१९ **वाक्यकारेण**। सूत्रकाराभिप्रायज्ञेन। **प्रपञ्चितम्**। वाक्यचतुष्टयेन पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः।

**वेदनमिति**। इदं सिद्धान्तवाक्यम्।

—२१-२ पूर्वपक्षमाह—**सकृदिति**। यथा प्रयाजादयः सकृदनुष्ठिता दर्शपूर्णमासफलोपकारिणस्तथा सकृत्प्रत्यय एव मोक्षोपकारीति तमेव कुर्यान्न तदावृत्तिरूपं ध्यानम्, तावता शब्दार्थस्य शास्त्रार्थस्य कृतत्वाच्छास्त्रस्य कृतार्थत्वादित्यर्थः।

**सिद्धं त्विति**। सिद्धान्तस्त्वित्यर्थः।

—२३-१०-१—उपासनशब्दार्थं चतुर्थवाक्येनाह—**उपासनमिति**। **दर्शनात्**। लोके तथा दर्शनात्। **निर्वचनम्**। निष्कृष्टं प्रमाणभूतं वचनं निर्वचनं श्रुतिवाक्यम्। अथ वोपासनशब्दस्य निरुक्तिः। उपपूर्वस्यासधातोर्हि विजातीयप्रत्ययान्तराव्यवहितं चिन्तनमर्थः।

१०—४ **विशिनष्टीति** । साक्षात्काररूपत्वेनेत्यर्थः । अग्रिमश्रुतौ 'विवृणुते तनुं स्वाम्' इत्युक्तेः ।

—५ **प्रवचनेन** । मननेन । प्रवचनशब्देन तत्साधनीभूतं मननं लक्ष्यते । निदिध्यासनश्रवणार्थकमेधाश्रुतशब्दसमभिव्याहारात् । **मेधया** । निदिध्यासनेन । **यमेवेति** । एष आत्मा यमेव भक्तं वृणुते स्वीकरोति स्वात्मप्राप्त्यर्थं प्रयतते बुद्धियोगं ददातीति यावत् । तेनैव भक्तेनायमात्मा लभ्यः । एष आत्मा स्वां तनुं तस्य भक्तस्य विवृणुत इत्यर्थः ।

—७ **केवलेति** । केवलत्वं च परमात्मकृतवरणरहितत्वम् ।

—९-१० **यस्य** । भक्तस्य । **अयम्** । परमात्मा । **सः** । भक्तः । **अस्य** । परमात्मनः ।

—१० **यथार्थमिति** । **अयम्** । भगवति निरतिशयप्रीतिमान् । **प्रियतमः** । निरतिशयभगवत्प्रीतिविषयः ।

—१२ **सततयुक्तानाम्** । सततयोगं काङ्क्षन्ताम् । 'आशंसायां भूतवच्च' ( पा० सू० ३।३।१३२ ) इति कर्तरि क्तः । प्रीतिपूर्वकमिति मध्यमणिन्यायेनोभयान्वयि ।

—१७-८ **स्मर्यमाणेति** । स्मृतिविषयस्य परमात्मनो निरतिशयप्रियत्वेन स्मृतेरपि निरतिशयप्रियत्वम् ।

अर्थेनैव विशेषो हि निराकारतया धियाम् ।

इत्युक्तेः । स्वतो निराकारायां बुद्धौ विषयसंबन्धेनैव विशेष इति तदर्थः । यस्य । भक्तस्य ।

—२०-११-१ **अत एव** । मोक्षसाधनज्ञानस्य भक्तिरूपत्वादेव । **तमेव** । परमात्मानमेव । विदित्वा मृत्युमत्येतीत्यर्थः । **अयनाय** । मोक्षाय । **इज्यया** । यज्ञेन ।

११-५ अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वं, तस्य कर्मापेक्षा कथमत आह—**एवंरूपाया इति** । मोक्षोपायभूतज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः । 'यज्ञेन विविदिषन्ति' ( बृ. ४।४।२२ ) इत्यत्र यज्ञस्य पूर्वोक्तवेदनसाधनत्वमेव, न त्विच्छासाधनत्वम् । असिना जिघांसतीतिवत् ।

—७-९ इच्छासाधनत्वेऽप्याह—**यद्यपीति** । **अभ्यासेति** । अभ्यासेनाधेयः फलोत्पादनक्षमत्वरूपो विशेषो यस्मिन्नित्यर्थः । **आ प्रायणात्** । मरणपर्यन्तम् ।

—११-३ अस्मिन्नर्थे सूत्रकारसंमतिमाह—**आ प्रायणादिति** । मोक्षसाधनमुपासनमा प्रायणादा मरणादनुवर्तनीयम् । हि यत उपासनोद्योगमारभ्य

मरणपर्यन्तं यः कालस्तत्र सर्वत्राप्युपासनं 'स खल्वेवं वर्तयन्यावदायुषम्' (छा. ८।१५।१) इति श्रुतौ दृष्टमिति सूत्रार्थः। **अग्निहोत्रादीति**। अग्निहोत्रादि कर्म तु तेषां विद्याख्यकार्यायैव, 'विविदिषन्ति यज्ञेन' (बृ. ४।४।२२) इति श्रुतौ तस्य विद्यासाधनत्वदर्शनादिति तदर्थः। **सहकारित्वेनेति**। विद्योत्पत्तिद्वारेण विद्यासहकारितयाप्यनुष्ठेयानि कर्माणीति तदर्थः।

११—१४-६ **विवेकादिभ्यः**। विवेकादिसप्तसाधनेभ्यः। न तु केवलकर्मणा शमादिना चेत्यर्थः। वाक्यकारग्रन्थमाह—**तल्लब्धिरिति**। ध्रुवानुस्मृतिलब्धिरित्यर्थः। अत्र विवेकादिषु कारणत्वं व्यासज्यवृत्ति, न तु प्रत्येकपर्याप्तमिति बोध्यम्। **निर्वचनम्**। अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनं निर्वचनम्।

—१६ **जातीति**। जातिदुष्टं कलञ्जगृञ्जनादि। आश्रयदुष्टं पतितादिस्वामिकम्। निमित्तदुष्टमुच्छिष्टादि। एतत्रिविधदोषरहितादन्नात्कायशुद्धिर्विवेक इत्यर्थः।

—२० **आरम्भणेति**। आरम्भणमालम्बनं शुभाश्रयस्तस्य पुनः पुनः संशीलनं परिशोधनमित्यर्थः।

—२१ **भाष्यकारेण**। द्रमिडाचार्येण।

—२४ **अनाशकेन**। कामानशनयुक्तेन। रागद्वेषप्रयुक्तं यद्विषयसेवनं तदभावः कामानशनम्। यदृच्छालाभसंतुष्टत्वमिति यावत्।

—२५ **सत्येति**। सत्यं भूतहितम्। आर्जवं वाक्कायानामैकरूप्यम्। दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। दानं लोभराहित्यम्। अहिंसा कायेन वाचा मनसा च परपीडानिवृत्तिः। अभिध्या परकीये स्वबुद्धिः। यद्वा निष्फलचिन्ता। अथ वा परकृतापराधचिन्ता। तद्राहित्यमनभिध्या।

१२-१ **शोकवस्तु**। शोकनिमित्तवस्तु। आदिशब्देन भयसंग्रहः। अतीतविषयः शोकः। आगामिविषयं भयमिति विवेकः। अभास्वरत्वमिति दैन्यशब्दविवरणम्। तच्चाभीष्टकार्यप्रवृत्त्यक्षमत्वरूपम्।

—३ **बलहीनेन**। मनोबलहीनेन।

—४ **तद्विपर्ययजेति**। देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजन्येत्यर्थः। **तुष्टिः**। संतोषः। **अतिसंतोष इति**। शोकस्येवास्यापि मनःशैथिल्यहेतुत्वादिति भावः।

—७ **एवं नियमयुक्तस्य**। विवेकादिसाधनसप्तकयुक्तस्य।

—८ **विद्यां चेति**। अविद्याशब्देन विद्याङ्गभूतं कर्म। उभयं सह साहित्येन वेद। अनेन विद्यायाः कर्मसापेक्षत्वं सूचयते।

१२–१० शंकराचार्यास्तु सः ह इति पदच्छेदं कृत्वाऽविद्याया ज्ञातव्यत्वं च हेयत्वेन । अविद्ययाऽज्ञानेन मृत्युं संसारं तीर्त्वा प्राप्य स्थितो विद्ययाऽमृतमश्नुत इति व्याचख्युः । तन्निरासार्थमाह–अत्रेति । विद्यां ब्रह्मोपासनरूपां तदङ्गभूतकर्मरूपामविद्यां चैतदुभयं सह वेद । अङ्गाङ्गिभावेन सहानुष्ठेयं वेदेत्यर्थः । यद्वा विद्यां चाविद्यां चेत्यस्य विद्यानुबन्धि शमदमादि कर्मानुबन्धि फलाभिसंधिकर्तृत्वाभिमानराहित्यादिकं चेत्यर्थः । अथवा चशब्दावुक्तार्थविरोधिसमुच्चयपरौ । तथा च विद्या ब्रह्मज्ञानं तद्विरोधि विषयरागद्वेषादिकम् । अविद्या विद्याङ्गं कर्म तद्विरोधि संसारहेतुभूतं फलाभिसंधिसहितं कर्म । एतदुभयस्य ज्ञातव्यत्वं च हानार्थमित्यर्थः ।

—११ **प्राचीनं कर्म** । पुण्यपापरूपम् । **अपोह्येति** । तरतेरुत्तरणवाचित्वं स्वरससिद्धम् । प्राप्तिवाचित्वे तु स्वरसभङ्ग इति भावः ।

—१३ **विद्येतरदिति** । अविद्याशब्दस्य विद्येतरत्वं प्रवृत्तिनिमित्तम् । तच्च विहितकर्मण्यस्तीति भावः ।

—१४–५ ‘ अविद्यया मृत्युं तीर्त्वा ’ इति पदानां स्वोक्तेर्थे संमतिमाह–**इयाजेति** । स ब्रह्मवेत्ता राजा जनकः । **ज्ञानव्यपाश्रयः** । आगमोत्थज्ञानवान् । इयाजाकरोत् । पाकं पचतीत्यत्र पचेरिवात्र यजेः सामान्यवाचित्वम् । **ब्रह्मविद्यामधिष्ठाय** । उपासनात्मकं ज्ञानं साध्यत्वेनावलम्ब्य । अत्र तर्तुमिति तॄधातोः प्राप्त्यर्थो नैव संभवति । न हि ब्रह्मवेत्ता संसारप्राप्त्यर्थं कर्म करोतीति युक्तम् ।

—१७ **अनिष्टफलतयेति** । इदमेव पापशब्दप्रवृत्तिनिमित्तम् । अलौकिकत्वे सत्यनिष्टफलासाधारणकारणत्वं पापत्वम् । अत एव शास्त्रादावीश्वरे च नातिव्याप्तिः । देवेन्द्रत्वस्यापि वासुदेवभक्त्यन्तरायत्वेन निरयतुल्यतया तज्जनकपुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलदत्वमेवेति बोध्यम् ।

अस्य च । पापस्य च ।

—१९–२० **असाधु कर्म** । फलाभिसंधिकर्तृत्वाभिमानसहितं यज्ञादिकं ब्रह्महत्यादिकं च । **अधो निनीषतीति** । अधोनयनं स्वर्गप्रापणं नरकप्रापणं च । यत्समस्तलोकेभ्य उन्नयनमपवर्गप्रापणरूपं तदपेक्षया स्वर्गप्रापणस्याप्यधोनयनत्वात् ।

—२३ **अतः** । पापस्य ज्ञानविरोधित्ववचनात् । **पापं कर्म** । पूर्वोक्तमुभयविधम् ।

—२४ **अनभिसंहितफलेनेति** । अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः । अनुष्ठितेन । न तु ज्ञानमात्रेण । **धर्मेणेति** । निष्कामकर्मस्वरूपधर्मेण पूर्वोक्तोभयविधपापस्य नाश इत्यर्थः ।

१३-१ ज्ञानस्य कर्मसापेक्षत्वं निगमयति—**तदेवमिति**। तत्। श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः।

अतः। ब्रह्मज्ञानस्य फलाभिसंधिरहिताश्रमकर्मापेक्षत्वात्। अत्रेदं बोध्यम्। कर्मज्ञानं कर्मण उपादानार्थं हानार्थं च। तत्र विहितकर्मणः स्वरूपेणोपादानं फलद्वारा च हानम्। निषिद्धकर्मणस्तु स्वरूपेणापि हानमेवेति।

—५ इदानीं साधनचतुष्टयस्यानपेक्षितत्वेन पूर्ववृत्तत्वं खण्डयति—**अपि चेति। नित्यानित्यवस्तुविवेकादयश्चेति**। चकारः प्रत्युतेत्यर्थे। **मीमांसाश्रवणम्**। पूर्वोत्तरभागद्वयरूपमीमांसाश्रवणम्।

—६-७ **फलेति**। फलविशेषो भोगमोक्षरूपः। साधनविशेषो यज्ञोपासनादिः। इतिकर्तव्यताविशेषः प्रयाजादिः साधनसप्तकं च। अधिकारिविशेषो बुभुक्षुर्मुमुक्षुश्च। कर्मस्वरूपं साङ्गं यज्ञात्मकमुपासनात्मकं च। **दुरवबोधत्वादिति**। तथा चैतन्मीमांसाया न साधनचतुष्टयापेक्षा। किं तु साधनचतुष्टयस्यैव मीमांसापेक्षेति भावः। किं च तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत् (बृ. ४।४।२३) इति श्रुतिरेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति। अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम्। 'प्रशान्तचित्ताय' (मु. १।२।१३) इत्यादिश्रुतिस्तु श्रवणौपयिकावधाननिष्पादनार्थेति बोध्यम्।

—८ प्रकारान्तरेण साधनचतुष्टयस्य कर्मविचारापेक्षत्वं दर्शयति—**एषामिति**। शमादीनामित्यर्थः। **विनियोगः**। अङ्गत्वज्ञापनम्।

—८-९ **श्रुतिलिङ्गादिभ्य इति**। आदिशब्देन वाक्यप्रकरणस्थानसमाख्यानां ग्रहणम्। तत्र निरपेक्षो रवः श्रुतिः। व्रीहीन्प्रोक्षतीत्यत्र द्वितीयाश्रुत्या व्रीहीणां प्रोक्षणाङ्गत्वम्। शब्दसामर्थ्यं लिङ्गम्। बर्हिर्देवसदनं दामीति मन्त्रस्य दाधातोश्छेदनार्थत्वेन कुशच्छेदनाङ्गत्वम्। समभिव्याहारो वाक्यम्। यस्य पर्णमयी जुहूर्भवतीत्यत्र पर्णताजुह्वोः समभिव्याहारेण पर्णताया जुह्वङ्गत्वम्। उभयाकाङ्क्षा प्रकरणम्। प्रयाजादिषु समिधो यजतीत्यत्र फलविशेषस्यानिर्देशात्किमित्यस्त्युपकार्याकाङ्क्षा। दर्शपूर्णमासवाक्ये च कथमित्यस्त्युपकारकाकाङ्क्षा। अतः प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। स्थानं क्रमः। ऐन्द्राग्नमेकादशकपालमित्येवं क्रमविहितेष्टिष्विन्द्राग्नी रोचनेत्यादिमन्त्राणां प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं क्रमेण विनियोगः। समाख्या यौगिकः शब्दः। आध्वर्यवनामककर्मण आध्वर्यवेति समाख्ययाऽध्वर्युकर्तृकत्वं ज्ञायते। अधिकं पूर्वमीमांसायां तृतीयाध्याये द्रष्टव्यम्। तदेवाह—**तार्तीय इति**। पूर्वमीमांसातृतीयाध्यायोक्त इत्यर्थः। इदमुपलक्षणम्। ब्रह्मविचारस्य कर्मविचारोक्तप्रमाणादिविषयककृत्स्नन्यायसापेक्षत्वात्।

१३—९-१० अथ ब्रह्मविचारस्य कर्मविचारापेक्षत्वेऽभ्युच्चययुक्तिरुच्यते-उद्गीथादीत्यादिना सर्वसंमतेत्यन्तेन । कर्मसमृद्ध्यर्थानि । कर्मफलसंपादकानि । समृद्धिरप्रतिबन्धफलत्वम् । ब्रह्मदृष्टिरूपाणीति । अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः । इहैव । उत्तरमीमांसायामेव ।

—११ नोद्गीथाद्युपासनानां केवलं ब्रह्मज्ञानापेक्षत्वेनैवेह चिन्तनीयत्वमपि तु ब्रह्मविद्योत्पादकनिष्कामकर्मसाद्गुण्यापादकत्वेनापीत्याह-तान्यपीति । यत्समृद्ध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः । प्रबलप्रतिबन्धके सत्यपि शीघ्रफलदत्वं साद्गुण्यापादकत्वम् ।

—१२ अस्तूद्गीथाद्युपासनानामिह चिन्तनीयत्वं तथापि कथं ब्रह्मविचारस्य कर्मविचारापेक्षेत्यत आह-तेषां चेति । उद्गीथाद्युपासनानां चेत्यर्थः । तथाचोद्गीथविद्याविचारस्य साक्षात्संगतत्वात्तदपेक्षितं कर्मचिन्तनं पूर्ववृत्तमित्यभ्युच्चयहेतुः ।

—१४ अथ साधनचतुष्टयपूर्ववृत्तत्ववादिनां शंकरमतानुयायिनां मतं महापूर्वपक्षरूपेणोपक्रमते-यदप्याहुरिति । अशेषविशेषा ज्ञात्रादयस्तत्प्रत्यनीकं स्वज्ञानेनैव तन्निवर्तकं शुक्तिरिव रजतस्येत्यर्थः । चिन्मात्रमिति । चिच्छब्देन तुच्छत्वव्यावृत्तिः । स्वयंप्रकाशत्वं हि चित्त्वम् । मात्रशब्देन ज्ञेयत्वज्ञातृत्वादिव्यावृत्तिः । प्रत्यनीकत्वधर्मोऽप्यनेन व्यावर्त्यते । ब्रह्मैवेति । एवकारेण सगुणब्रह्मव्यावृत्तिः । परमार्थः । तत्त्वावेदकप्रमाणविषयः ।

—१४-१५ तदतिरेकि । तद्व्यतिरिक्तम् । आदिशब्देन जन्मजरामरणादिसंग्रहः । तस्मिन्नेवेति । अनेन निरधिष्ठानभ्रमव्युदासः । एवकारेणाधिष्ठानबहुत्वनिषेधः । तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वसिद्धिः ।

—१६ अत्र प्रमाणभूतवाक्यान्युदाहरति-सदेवेत्यादिना । हे सोम्येदमग्रे सृष्टेः पुरा सदेवासीदित्यर्थः । अनेन विजातीयभेदव्यावृत्तिः । एकमेवेति । अनेन सजातीयभेदव्यावृत्तिः । अद्वितीयमिति । अनेन स्वगतभेदव्यावृत्तिः ।

—१७-१९ अथेति । अथ परा विद्या कथ्यते यया परविद्यया तदक्षरं ब्रह्माधिगम्यत इत्यर्थः । अद्रेश्यम् । प्रत्यक्षागोचरम् । अग्राह्यम् । अनुमानाद्यगोचरं कर्मेन्द्रियागोचरं वा । अगोत्रम् । अनामकम् । अवर्णम् । वर्णो नीलादिस्तद्रहितम् । अचक्षुःश्रोत्रम् । ज्ञानेन्द्रियरहितम् । अपाणिपादम् । कर्मेन्द्रियरहितम् । नित्यम् । कालतः परिमाणरहितम् । विभुम् । देशतः परिमाणरहितम् । सर्वगतम् । सर्वेण जगताधिष्ठानतया गतमाश्रितम् । अनेन वस्तुपरिच्छेदरहितत्वं सूच्यते । अदृश्यत्वादिषु हेतुः—सुसूक्ष्ममिति । न तु तुच्छत्वं हेतुरित्याशयः । भूतयोनिम् । भूतानां योनिं मूलकारणम् ।

१४–१ निष्कलमिति । व्याख्यातं प्राक् ( विवृति–पृ. ११ प. ३ )।

—२–३–यस्येति । यस्य ब्रह्मविदोऽमतमविज्ञातं ब्रह्मेति मतमभिप्रायो निश्चयस्तस्य मतं ज्ञातं सम्यग्ब्रह्मेत्यभिप्रायः । यस्य पुनर्मतं ज्ञातं विदितं मया ब्रह्मेति निश्चयः स न वेदैव, न ब्रह्म विजानाति सः । विद्वदविदुषो-र्यथोक्तौ पक्षाववधारयत्युत्तरार्धेन–अविज्ञातममतमविदितमेव ब्रह्म विजा-नतां विज्ञातमित्यभिमानवताम् । अविजानतां तदभिमानरहितानां विदुषां विज्ञातमेवेत्यर्थः । अनेन ज्ञेयत्वनिषेधः सूचितः ।

—४–न दृष्टेरिति । अनेन ज्ञातृत्वनिषेधः सूच्यते ।

—५–इदं सर्वमिति । योयं सर्पः सा रज्जुरित्यत्रेव बाधार्थमेतत्सामानाधिक-रण्यं न तु शरीरशरीरिभावबोधनार्थमित्याशयः ।

—६ भेददर्शयत्यन्ताज्ञ इति दर्शयति–मृत्योरिति । मृत्योः सकाशान्मृत्युं पुनर्मृत्युमित्यर्थः । यद्वा मृत्युरविद्या । इवशब्देन नानात्वस्यापारमार्थ्यं दर्शि-तम् ।

—९ वाचारम्भणमिति । वाचारम्भणं वागालम्बनम् । कोसौ विकारो ना-मधेयम् । वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति । परमार्थ-तो मृत्तिकैव सत्यं वस्त्वस्तीत्यर्थः ।

—११ यदेति । एतस्मिन्नात्मनि । उदिति निश्चये । अरं स्वल्पमन्तरं भेदं कुरुते मन्यत इत्यर्थः ।

—१२ न स्थानत इति । परस्य ब्रह्मण उभयलिङ्गं सविशेषनिर्विशेषलि-ङ्गं स्वभावतस्तु नास्त्येव परं तु स्थानतोप्युपाधितोऽपि नास्ति । हि यतः सर्वत्र ब्रह्मस्वरूपप्रतिपादनपरेषु ‘ अशब्दम् ’ ( का. ३।१५ ) इत्यादिवाक्येष्वपा-स्तसमस्तविशेषमेव ब्रह्मोपदिश्यत इत्यर्थः ।

—१३ मायामात्रमिति । स्वाप्नसृष्टिर्मायामात्रमेव, कार्त्स्न्येन परमार्थव-स्तुधर्मेणाभिव्यक्तस्वरूपत्वाभावादित्यर्थः । अनेन स्वाप्नसृष्टिमिथ्यात्ववज्जग-न्मिथ्यात्वं दृष्टान्ततया दर्शितम् ।

—१५ प्रत्यस्तमितभेदमिति । सजातीयविजातीयभेदरहितमित्यर्थः । सत्तामात्रम् । स्वगतभेदरहितम् । अत एव वचसामगोचरम् ।

१५–८ वेणुरन्ध्रेति । यथा मुरलीवादनादौ ।

—१९ अभिधानादिति । अस्य ‘ अशेषविशेष ’ ( श्रीभाष्य–पृ. १३ प. १४ ) इत्यादिपूर्वप्रतिज्ञावाक्येन सहान्वयः ।

मिथ्यात्वमिति । यथा रज्जौ सर्पस्य मिथ्यात्वम् । तस्य सर्पस्य पूर्वं प्रती-यमानत्वात् । पश्चाद्रज्जरूपयथावस्थितवस्तुनो ज्ञानेन तस्य सर्पस्य निवर्त्य-

त्वाच्च । दण्डनिवर्त्ये घटादावतिव्याप्तिवारणाय ज्ञानशब्दः । प्रबलभ्रान्तिज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिवारणाय यथावस्थितवस्तुशब्दः । ज्ञानप्रागभावेऽतिव्याप्तिवारणाय प्रतीयमानत्वपूर्वकेति । प्रतीयमानत्वं च नियमेन प्रतीयमानत्वम् । तेन ज्ञानप्रागभावस्य कदाचित्प्रतीयमानत्वेऽपि न क्षतिः । यद्यपि यथावस्थितस्य ज्ञानमित्यर्थेनेष्टसिद्धिस्तथापि यथावस्थितं यज्ज्ञानमित्यर्थशङ्कानिरासाय वस्तुशब्दः । निवर्त्यत्वं च निवर्तनार्हत्वम् । तेन रज्जुसर्पस्य कदाचिद्भूरन्ध्रभ्रमेण निवृत्तावपि न क्षतिः ।

१६-२-३ दोषश्चेति । अनाद्यविद्यैव दोषः । सा चाविद्याऽवस्थाभेदेन ब्रह्मस्वरूपतिरोधानहेतुर्विविधविचित्रसंसारहेतुश्च भवति । सदसदिति । सत्त्वेनासत्त्वेन च निर्वक्तुमशक्येत्यर्थः । एतेनाविद्याया अपरमार्थत्वं सूचितम् । परमार्थत्वे तु ज्ञाननिवर्त्यत्वं न स्यात् । न चापरमार्थत्वे तस्याः कल्पकान्तरापेक्षायामनवस्था स्यादिति वाच्यम् । अनादित्वेनादोषात् ।

—३-१० ईदृशाविद्यासत्त्वे प्रमाणमाह—अनृतेनेत्यादिना । अनृतं मिथ्याज्ञानम् । तत्प्रयोज्यविषयतृष्णेहानृतशब्देनोच्यते । तेनानृतेन प्रजाः प्रत्यूढाः । अविद्यादिदोषैः स्वरूपाद्बहिरपकृष्टा इत्यर्थः । तेषामिति । तेषां सत्यानामात्मस्थानां कामानां ' ब्रह्मज्ञानिनः संकल्पादेव पित्रादयः समुत्तिष्ठन्ति ' इत्यादिपूर्वोक्तानामनृतं मिथ्याज्ञानमपिधानमाच्छादनमिवेत्यर्थः । प्रकेतं प्रकर्षेण ज्ञातुमशक्यम् । मायामिति । जगतः प्रकृतिर्माययैवेति विद्यात् । तथा महेश्वरं मायिनं मायायाः सत्तास्फूर्त्यादिप्रदतयाऽधिष्ठानत्वेन प्रेरयितारं विद्यादित्यर्थः । इन्द्र इति । इन्द्रः परमेश्वरो मायाभिर्नामरूपकृतमिथ्याभिमानैर्न तु परमार्थतः पुरुरूपो बहुरूप ईयते गम्यत एकरूप एव सन्नित्यर्थः । ब्रह्मैव । इन्द्रादिशब्देन प्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः ।

—१३ ज्ञानेति । शैलाब्ध्यादिसंघो न वस्तुभूतः । यतोऽसावशेषमूर्तिर्भगवाञ्ज्ञानस्वरूप एवेत्यर्थः । विज्ञानमविद्या । विविधं ज्ञायतेऽनेनेति करणव्युत्पत्तेः ।

—१५ यदेति । शुद्धमविद्यारहितम् । अत एव निजरूपि भेददर्शनरहितम् । दोषा रागादयः । तद्रहितं ज्ञानं यदा भवति तदा वस्तुष्ववियावस्तुषु वस्तुभेदा देवाद्याकारभेदास्तद्रूपाणि संकल्पवृक्षस्य फलानि न भवन्तीत्यर्थः । समन्तात्कल्प्यन्ते भेदा अनेनेति संकल्पशब्देनाविद्योच्यते ।

—१९ निजेति । स्वस्वकर्मभेदेन भिन्नानि चित्तानि चित्तसंकल्पा येषां तैः ।

—२१ सदैकम् । जन्मवृद्ध्यादिरहितम् ।

१७-१ अयमेव सिद्धान्त इत्याह—सद्भाव इति । सद्रूपो भावः सिद्धान्त इति यावत् । एतदिति । भुवनेनाधिष्ठानतयाश्रितं समन्ताद्व्यवहारास्पदं यदेतद्वर्तते तत्रापि कारणमविद्येत्युक्तमित्यर्थः ।

१७—५ न पुनरिति। यस्तदेकं पश्यति स पुनर्मृत्यवेऽविद्यायै न प्रभवति। मृत्युकारणस्य रोगादेरपि निवृत्तिं ज्ञापयति—न पश्य इति। 'न रोगं नोत दुःखताम्' इति हि तच्छेषः।

—६–७ एतस्मिन्। ब्रह्मणि। अनात्म्ये। अशरीरे। अनिरुक्ते। नाम्नाऽनिर्वचनीये। अनिलयने। अनाधारे। अभयमिति। अव्ययीभावः। अभयार्थमित्यर्थः। प्रतिष्ठाम्। निष्ठाम्।

—११ ब्रह्म वेदेति। यथोपासनं हि फलम्। ऐक्यज्ञानमेव बन्धनिवर्तकमिति भावः।

—१३ नन्वत्राविद्यानिवृत्तिर्न प्रतीयते। अविद्यावाचिशब्दाश्रवणादित्यत आह—अत्रेति।

—१४ मोह इति। वस्तुनः स्वरूपेणाज्ञानं प्रमादः। अन्यस्वरूपेण ज्ञानं मोहः। तत्र मोह एव मृत्युरिति कवीनां संमतमस्ति। परं त्वहं मोहहेतुः प्रमाद एव मृत्युरिति ब्रवीमीति फलितोर्थः।

—१६–१७ ननूदाहृतेषु वाक्येषु ज्ञानस्याविद्यानिवर्तकत्वं दृष्टम्। परं तु ब्रह्मणो निर्विशेषचिन्मात्रत्वं तादृशमात्मन एकत्वविज्ञानं निवर्तकमिति च न प्रतिपन्नमत आह—सत्यं ज्ञानमिति। इत्यादीति। आदिशब्देनास्थूलमनण्वित्यादिवाक्यसंग्रहः। इत्यादिशोधकवाक्यावगम्यमानं यन्निर्विशेषस्वरूपं ब्रह्म तेन सह जीवात्मन एकत्वविज्ञानं च वक्ष्यमाणवाक्यसिद्धमित्यर्थः।

१८–१ आत्मेति तूपेति। आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। यतो मुमुक्षव उपासने तथाऽभ्युपगच्छन्ति। ग्राहयन्ति च तथा शास्त्राणीति सूत्रार्थः।

—२ तन्निष्पत्तेः। तत्र ब्रह्मणि कल्पितत्वात्।

—३ युक्तिमप्याह—अनेन चेति। मिथ्यारूपस्येति। हेतुगर्भविशेषणमेतत्।

—५ भेदवादी शङ्कते—ननु चेति। द्विचन्द्रस्वप्नादिभेदनिवृत्तेः प्रत्यक्षविरुद्धत्वाभावात्सकलपदोपादानम्। प्रत्यक्षविरुद्धा। भेदप्रत्यक्षविरुद्धा।

—६–७ तत्राभेदवादी चोदयति—कथं चेति। प्रत्यक्षविरुद्धा। सर्पप्रत्यक्षविरुद्धा। न च सर्पप्रत्यक्षस्याभासत्वाद्बाध्यत्वमिति वाच्यम्। प्रतीतिदशायामाभासत्वानवगमात्। पश्चात्प्रमाणभूतरज्जुप्रत्यक्षेण बाधादाभासत्वं ज्ञायत इति चेत्। प्रपञ्चग्राहिप्रत्यक्षस्यापि तुल्यम्। आभासत्वज्ञानोत्तरं बाधसिद्धिस्तत्सिद्धौ चाभासत्वसिद्धिरित्यन्योन्याश्रयग्रस्तत्वाच्च।

—७–९ पुनर्भेदवादी शङ्कते—तत्रेति। द्वयोः प्रत्यक्षयोः। रज्जुप्रत्यक्षसर्पप्रत्यक्षयोः। प्रत्यक्षमूलस्य। प्रत्यक्षेतरप्रमाणानां प्रत्यक्षमूलकत्वात्। 'प्रत्यक्षेण

प्रत्यक्षस्य बाधो हि युक्तः। शास्त्रेण तु स्वप्रयोजकप्रत्यक्षस्य बाधोऽनुचितः। शास्त्रस्य प्रत्यक्षसापेक्षत्वात्प्रत्यक्षस्य शास्त्रनिरपेक्षत्वात् ' इत्याशयः। अभेदवादी चोदयति- **तुल्ययोरिति**। रज्जुप्रत्यक्षसर्पप्रत्यक्षयोर्मध्ये केन कस्य बाध इति निश्चेतुमशक्यमिति भावः।

१८—९-१० पुनर्भेदवादी शङ्कते-**पूर्वोत्तरयोरिति**। पूर्वस्य सर्पप्रत्यक्षस्य दोषजन्यत्वाद्बाध्यत्वमुत्तरस्य रज्जुप्रत्यक्षस्य दोषजन्यत्वाभावाद्बाधकत्वमिति भावः। अभेदवाद्युत्तरयति-**शास्त्रेति**। प्रपञ्चग्राहिभेदप्रत्यक्षस्याविद्यारूपदोपजन्यत्वाच्छास्त्रस्य तदभावात्। एवं च त्वदुक्तशङ्काऽनवकाश इति भावः।

—११ **निरपेक्षत्वादीति**। आदिशब्देन दुष्टकारणजन्यत्वतदभावपरोक्षत्वापरोक्षत्वादिसंग्रहः।

—१२ **ज्वालेति**। अस्यान्यथेत्यादिः। सादृश्यमूलकं ज्वालैक्यप्रत्यक्षं हि निरपेक्षमप्यपरोक्षमपि दुष्टकारणाजन्यमपि तद्विरुद्धेनानुमानेन बाध्यते। एवमन्यत्रापि प्रत्यक्षस्यानुमानेन बाधो द्रष्टव्यः।

—१३-१४ तर्हि किं बाध्यबाधकभावप्रयोजकमित्यत्राह-**एवं सतीति**। **संभाव्यमानेति**। यस्य प्रमाणस्यान्यथा वादग्रस्तविषयेऽप्रवृत्तौ स्वीकृतायां सत्यामन्यत्र सिद्धिः संभाव्यते तदित्यर्थः। सावकाशमिति यावत्।

—१६-१९ **तस्मादिति**। नादिर्निधनं च यस्य, न विच्छिन्नः संप्रदायो यस्य, न संभाव्यमानो दोपगन्धो यस्य, नावकाशो यस्येति चत्वारि शास्त्रविशेषणानि। **निधनं** नाशः। **विच्छिन्नो** भ्रष्टः। **शास्त्रं** श्रुतिः। अविच्छिन्नसंप्रदायत्वादेवानादिनिधनत्वं तत एवासंभाव्यमानदोषगन्धत्वमिति बोध्यम्। **शास्त्रजन्येति**। इदमवबोधविशेषणम्। **नित्यं** कालापरिच्छिन्नम्। **शुद्धम**विद्यारहितम्। **मुक्तम**विद्याकृतजन्मादिरहितम्। **बुद्धं** भासमानम्। **विविधः** देवादिरूपेण स्वकार्यजन्मजरामरणादिरूपेण च। **विकल्पः** ज्ञातृज्ञेयादिः।

—२० **भेदवासनादीति**। आदिशब्देन भेददर्शनम्। तयोश्च वासनादर्शनयोः परस्परं हेतुहेतुमद्भावः। अनादित्वाद्बीजाङ्कुरवन्नान्योन्याश्रयः।

१९-३-४ **पूर्वापरापच्छेद इति**। अपच्छेदो विच्छेदः। पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति। अध्वर्युं प्रस्तोताऽन्वारभते। प्रस्तोतार प्रतिहर्ता। प्रतिहर्तारमुद्गाता। उद्गातारं ब्रह्मा। ब्रह्माणं यजमानः (सत्या.श्रौ.सू.८।४।२२,आप.श्रौ.सू.१२।१७।१) इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते। बहिष्पवमानं प्रसर्पतां यद्युद्गाताऽपच्छिद्येत, अदक्षिणः स यज्ञः संस्थाप्यः। तेन पुनर्यजेत। तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात्। अथ प्रतिहर्ताऽपच्छिद्येत, सर्ववेदसं दद्यादिति। अत्रोद्गातृप्रतिहर्त्रोरेकस्मिन्प्रयोगे युगपदपच्छेद उद्गातुः प्राधान्यात्तत्प्रायश्चित्तेनैव

निर्वाहः। क्रमेणापच्छेदे तु पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यं पूर्वमीमांसायामुक्तम् । अयमाशयः । पूर्वशास्त्रस्योत्पत्तिरविरोधेनैव । तदानीं विरोधिनः परस्याभावात् । परशास्त्रस्योत्पतिस्तु विरोधेनैव । तदानीं विरोधिनः पूर्वस्य सत्त्वादिति विरोधेनोत्पन्नं परमेव प्रबलं भवति । अयमेवापच्छेदन्यायः । बाध्यत एवेति । भेदावलम्बि कर्मशास्त्रमिति शेषः । एवं पूर्वोत्तरभागयोर्विरोधः परिहृतः ।

१९—४ अधुनोत्तरभागे विरोधपरिहारमाह–वेदान्तवाक्येष्वपीति ।

—६ सर्वज्ञः । सर्वं स्वरूपेण जानाति । सर्ववित् । सर्वं प्रकारतो जानाति ।

—१२ इत्यादिवाक्यानीति । आदिशब्देन यत्तदद्रेश्यमित्यादि गृह्यते ।

—१४ इतराणि । यः सर्वज्ञ इत्यादीनि । सगुणमिति । प्रतिपादयन्तीत्यनुषज्यते ।

—१५ गुणापेक्षत्वेन परत्वादिति । निषेधस्य निषेध्यसापेक्षत्वेन परत्वमित्यर्थः । सगुणवाक्यानां तूपासनार्थत्वान्न वैयर्थ्यमिति बोध्यम् ।

—१७ निर्गुणवाक्येपूपात्तस्य ' सत्यं ज्ञानम् ' इति वाक्यस्य सगुणपरत्वबुद्ध्या चोदयति–ननु चेति । सत्यज्ञानादय इति । भावप्रधानो निर्देशः। सत्यत्वज्ञानत्वादय इत्यर्थः ।

—१८ सामानाधिकरण्येनेति । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः । उक्तश्रुतौ सत्यादिशब्दानां निषेधमुखप्रवृत्तत्वेन तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वम् । अतद्व्यावृत्तपरत्वमिति यावत् । तथा च सत्यशब्दस्य सत्येतरव्यावृत्तमित्यर्थः। एवमेव ज्ञानानन्तशब्दयोर्बोध्यम्। तथा च ब्रह्मणः सकलेतरविरोधित्वं प्रतिपादयदिदं शोधकवाक्यं व्यावृत्तिपरमेव भवितुं युक्तमिति नात्र विधिमुखेन प्रवृत्तिः शङ्कनीया । न चानेन वाक्येन ब्रह्मण्यतद्व्यावृत्तिरूपधर्मबोधनेनास्य वाक्यस्य सगुणपरत्वमेवेति वाच्यम् । अभावानामधिकरणात्मकत्वेन भेदरूपाया व्यावृत्तेर्ब्रह्मात्मकत्वेन धर्मधर्मिभावासंभवात्। अतः सत्यादिशब्दानां सामानाधिकरण्येनैकस्मिन्ब्रह्मणि तात्पर्यनिश्चयेनैकब्रह्मरूपार्थकत्वमेवेति सत्यत्वादिगुणानामत्राप्रतीतिरित्यभिप्रायः ।

—१९ एतदभिप्रायमजानानः शङ्कते-अनेकेति । यः सर्वज्ञ इत्यत्र सत्यं ज्ञानमित्यत्र च गुणविशिष्टस्य ब्रह्मरूपैकार्थस्याभिधानं तुल्यमेवेति शङ्काशयः।

—२० शङ्ककमुपालभते–अनभिधानज्ञ इति । अभिधानमभिधा । वृत्तिरिति यावत् । तदनभिज्ञो देवानांप्रियो मूर्ख इत्यर्थः ।

१९—२१ विशिष्टेति । यथा शूरः सुन्दरो देवदत्त इत्यत्र शूरत्वविशिष्टस्य सुन्दरत्वविशिष्टस्य चैकत्वेऽपि शूरत्वसुन्दरत्वरूपविशेषणयोर्भेदेन शूरादिपदाना-मर्थभेदोऽवश्यंभावी तथैव यः सर्वज्ञ इत्यादिष्वित्येकार्थत्वाभाव इति भावः।

—२२ तर्हि सत्यं ज्ञानमित्यत्र विशेषणस्यापि भेदो नास्तीति चेद्घटकुम्भश-ब्दवत्पर्यायतापत्तिः। ततश्चानेकशब्दोपादानमनर्थकमित्याशयेनाह–एवं तर्हीति।

२०–१ स्वाभिप्रायं स्फोटयन्नुत्तरयति–एकार्थेति ।

—३ अर्थवत्त्वं साफल्यम् ।

—४ लक्षणतः । स्वरूपलक्षणतः । न तु तटस्थलक्षणतः । अतद्व्यावृत्ति-मुखेनास्य वाक्यस्य स्वरूपपरत्वात् ।

—९ परिच्छिन्नादिति । अनन्तपदं सान्ताद्व्यावृत्तपरम् । सान्तत्वस्य परिच्छि-न्नत्वव्यापकत्वेन व्यापकनिवृत्तौ व्याप्यनिवृत्त्यवश्यंभावेन परिच्छिन्नाद्व्यावृत्तिः फ-लिता भवतीति भावः ।

भावरूप इति । प्राभाकरपक्षे सिद्धान्ति–( रामानुज– )मते च व्यावृत्ते-र्भावरूपत्वं, वैशेषिकादिमते चाभावरूपत्वम् ।

—१० स्वरूपस्यैव व्यावृत्तित्वे दृष्टान्तमाह–यथेति । अनुपलम्भादनवस्था-नाच्च न धर्मान्तरमिति भावः ।

—१४ इत्युक्तमिति । सत्यज्ञानादिवाक्येनेति शेषः ।

—१४–५ सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वे कारणान्तरमाह–एवमि-ति । इत्यादिभिः । जगत्कारणत्वप्रतिपादकैर्वाक्यैः ।

—१६ यतो वेति । कारणवाक्ये ह्येकमेवाद्वितीयमित्यादिशब्दैः सजातीय-व्यावृत्ताद्वितीयब्रह्मावगतौ सत्यां तदेकवाक्यतया तादृशकारणवाक्यप्रतिपन्नब्रह्म-स्वरूपशोधकस्य सत्यज्ञानादिवाक्यस्यापि सजातीयव्यावृत्ताद्वितीयवस्तुमात्रपरत्व-मेवोचितमिति भावः ।

—२० ननु सर्वेषु कारणवाक्येषु सजातीयव्यावृत्ताद्वितीयब्रह्मावगतिर्नास्ति । 'यतो वा ' इत्यत्र तदभावादित्यत आह–तत्र सर्वेति । सर्वशाखासु प्रत्ययो ज्ञानमेकरूपमिति न्यायशरीरम् । तेनैकत्रोक्तस्य तत्सदृशेऽन्यत्र संग्रहो भवतीति यतो वेत्यत्रापि तदर्थावगतिरस्तीति भावः ।

—२१–२१–१ ततः किमित्यत्राह–जगदिति । प्रतिपिपादयिषितम् । तात्पर्यभूमिः । वस्तुमात्र एव तात्पर्यमित्यर्थः ।

२१–२ ननु नरपतिरद्वितीय इत्यादिवत्समाभ्यधिकराहित्येऽप्यद्वितीयत्व-मुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरिति चेत्तत्राह–अद्वितीय-त्वेति ।

२१—३ अतश्चेति। ब्रह्मस्वरूपलक्षणपरं सत्यं ज्ञानमित्येतद्वाक्यं निर्विशेषत्वैकस्वभावमेव प्रतिपादयतीत्यर्थः।

—५ स्वार्थेति। स्वार्थो हि विशेषणद्वारकं विशेष्यं तत्प्रहाणेनेत्यर्थः।

—७ अभिधानेति। अभिधानवृत्तिः शक्तिः। तदपेक्षयापि तात्पर्यानुरोधिवृत्तेर्बलीयस्त्वात्। तात्पर्यानुरोधिनी वृत्तिश्चात्र लक्षणैव। वाक्यतात्पर्यानुगुणत्वात्। अतस्तस्या वाक्यतात्पर्यविरोधिमुख्यवृत्त्यपेक्षयापि बलीयस्त्वमिति भावः।

—९ न दृष्टचरीति। क्वाप्यन्यत्र पूर्वं न दृष्टेत्यर्थः।

—११ एकस्यैवेति। यथा तात्पर्याविरोधायैकस्य पदस्य लक्षणायां न दोषस्तथैव द्वयोस्त्रयाणां सर्वेषां वा पदानामित्यर्थः। विरोध एव लक्षणास्वीकारे प्रयोजको न त्वेकपदत्वम्। विषं भुङ्क्ष्वेत्यादौ 'मा चास्य गृहे भुङ्था' इत्यर्थे सर्वपदलक्षणाया दृष्टत्वादिति भावः।

—१२ अत्रार्थे संमत्यर्थं गुरुमतमाह—तथा चेति। कार्येति। कार्यं कृतिसाध्यं स एव वाक्यार्थ इति वदद्भिरित्यर्थः। तेषामयमाशयः—अपूर्वरूपं यत्कार्यं तस्मिन्नर्थे लिङादीनां मुख्यवृत्तत्वम्। शक्तिरिति यावत्। तथा च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमनामकयागविषयकं स्वर्गकामस्यापूर्वरूपं कार्यमिति बोधः। आरोग्यकामो भेषजपानं कुर्यादित्यादिलौकिकप्रयोगे त्वपूर्वरूपवाच्यार्थस्यासंभवाल्लिङादेः क्रियाकार्येऽर्थे लक्षणेति।

—१५ इतरपदानां लक्षणामुपपादयति—कार्यान्वितेति। अन्विताभिधानवादिनये हि घटमानयेत्यत्र घटपदस्यानयनान्वितस्वार्थे शक्तिः। तद्वदत्राप्यारोग्यकामपदस्यापूर्वरूपकार्यान्वितस्वार्थे शक्तिः। तदसंभवादारोग्यकामपदस्य क्रियाकार्यान्वितस्वार्थे लक्षणा स्वीकार्या। एवमेवेतरपदानामपि लक्षणा बोध्या।

—१८ अर्थजातमिति। वस्तुनो निर्विशेषत्वं तस्यैव पारमार्थ्यं तद्व्यतिरिक्तस्य मिथ्यात्वं दोषपरिकल्पितत्वं च दोषस्य सदसदनिर्वचनीयत्वं ज्ञानमात्रनिवर्त्यत्वं चेत्यर्थः।

—२१ शास्त्रस्य प्रत्यक्षादिविरोधमङ्गीकृत्यापि तस्य प्राबल्यमुक्तम्। इदानीं विरोध एव वस्तुतो नास्तीत्याह—विरोध एव नेति। लौकिकघटादिप्रत्यक्षेऽपि निर्विशेषं सन्मात्रं ब्रह्मैव गृह्यत इति भावः।

२२—१ इदमनुभवविरुद्धमित्याशयेनाशङ्कते—ननु चेति।

—३ विलक्षणेति। अयं घटोऽयं सर्प इत्यादीनां सर्वेषां ज्ञानानां घटसर्पादिभिन्नविषयकत्वाभाव एकब्रह्मविषयकत्वेन घटोयं घटोयमिति धारावाहिकज्ञानस्येव प्रवृत्तिव्यवहारहेतुत्वमेव स्यात्। सर्पोयं सर्पोयमिति धारावाहिकज्ञानस्येव निवृत्तिव्यवहारहेतुत्वमेव वा स्यादिति भावः।

२२—५ **अस्तित्वं तद्भेदश्चेति**। घटास्तित्वं घटेतरभेदश्चेत्यर्थः। भिन्न इति व्यवहार इव घट इति व्यवहारेपि घटस्य पटाद्व्यावृत्तत्वेन प्रतीतेरिति भावः।

—६ **तयोरिति**। अस्तित्वव्यवहारप्रयोजकघटस्वरूपप्रत्यक्षानन्तरं घटेतर-स्मृतौ सत्यां तादृशेतरप्रतियोगिकभेदप्रत्यक्षसंभव इति गूढाशयः। 'घटोऽस्तीत्यत्र प्रत्यक्षद्वयं जायते' इति त्वनुभवविरुद्धम्।

—७ क्षणिकैकप्रत्यक्षाङ्गीकारेऽपि तस्य स्वरूपविषयकत्वमेव कुत इत्याह—**तत्रेति**।

—८ गूढाशयं स्फोटयति—**भेदग्रहणस्येति**।

—११ **न्यायविद्भिः**। न त्वापातप्रतीतिमात्रतृप्तैः।

—१३ **सर्वस्मादिति**। भेदस्य वस्तुस्वरूपत्वेन प्रतियोगिनिरपेक्षतया घट-स्वरूपे गृहीते पटादिभ्य इव घटादपि भेदप्रसक्तेरित्यर्थः।

—१४ एतदेव शङ्कासमाधानेन स्फुटयति—**न चेत्यादिना**।

—१९ **नापीति**।यथा भेदो न वस्तुस्वरूपं तथैव वस्तुधर्मोपि नेत्यर्थः।

२३—२ **भेदे चेति**। वस्तुधर्मस्य भेदस्य वस्तुस्वरूपाद्भेदे स्वीकृते द्वितीयभेदस्य धर्मिभूतप्रथमभेदधर्मत्वं वाच्यम्। ततश्च धर्मस्य धर्मिस्वरूपाद्भेदाङ्गीकारेण प्रथमभेदप्रतियोगिको द्वितीयभेदनिष्ठस्तृतीयभेदोऽङ्गीकार्यः। तत्रापि पूर्ववच्चतुर्थभेद इत्यनवस्थेति भावः।

—४ **भेदग्रहणे सतीति**। अगृहीते हि घटस्य पटाद्भेदेऽयं घटजातीय इति ज्ञातुमशक्यमिति भावः।

—६ सदनुभूत्योरेकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति—**घटोऽनुभूयत इत्यादिना**।

—८ **तदेव**। न तु भेदप्रतीतिजनका घटाद्याकाराः।

विशेषाः। भेदाः। तेषामुत्तरोत्तरप्रतीतिविषयेष्वविद्यमानतया व्यावर्तमानत्वं बोध्यम्।

—११ **सर्पेति**। रज्जौ स्थितायां कदाचिदयं सर्प इति भ्रमो भवति। कदाचिदत्र भूमिर्द्विधा भग्नेति भ्रमो भवति। कदाचिदियमम्बुधारा वहतीति भ्रमो भवति।

—१३ **सर्पादेरिति**। इदं मध्यमणिन्यायेनोभयान्वयि।

—१४ **अनुवर्तमानतया**। उत्तरोत्तरप्रतीतिविषयेषु विद्यमानतया। मिथ्यात्वे बाधितत्वं हेतुः सत्यत्वे चाबाधितत्वमिति शङ्काशयः।

२३—१५ **घटादाविति**। घटपटादौ पटघटादिव्यावृत्तेस्तवापि संमतत्वेन तस्याश्चाभावरूपत्वेन चालनीन्यायेन पटादीनां सर्वेषां बाधितत्वात्तेषामपारमार्थ्यं तवापि गले पतितमित्युत्तराशयः।

—२० **प्रयोगः**। अनुमानप्रयोगः। **सदिति** पक्षनिर्देशः। **परमार्थमिति** साध्यनिर्देशः।

२४–१ शङ्करमतानुसारिणो मायावेदान्तिनो हि केवलज्ञानस्यैव परमार्थत्वं वदन्ति। तदत्र तन्मते प्रस्तुते किमर्थं सतः परमार्थत्वसाधनमित्यत्राह–**एवं सतीति**।

**सैव सतीति**। सदनुभूत्योरेकत्वादिति भावः।

—२ **विषयतयेति**। घटतज्ज्ञानयोर्विषयविषयिणोर्भेदस्य प्रत्यक्षसिद्धत्वादित्याशयः।

—४ **निरस्त इति**। न चैवं घटपटयोरपि भेदो न स्यादिति वाच्यम्। घटपटयोर्वस्तुतोऽपरमार्थत्वेन तद्भेदकथाप्रसङ्गस्यैवाभावात्।

**अत एव**। भेदस्य निरस्तत्वादेव। भेदमूलिका हि विषयविषयिभावकल्पनेति भावः। **अनुभूतिविषयभावः**। अनुभवनिष्ठविषयितानिरूपितविषयत्वम्।

—५ ननु ज्ञानभिन्नस्य सर्वस्यापरमार्थत्वे ज्ञानस्य ग्राहकाभावात्तस्यापि शून्यत्वं स्यादित्यत आह–**सा चेति**। यथा ग्राह्यत्वं ग्राहकत्वं चेति शक्तिद्वयं तेजसस्तथैव ज्ञानस्येत्यर्थः।

—७ **सत्तयैवेति**। यथा दीपः सत्तयैव प्रकाशते तद्वदेव ज्ञानं सत्तयैव प्रकाशत इति भावः।

—९ एतदसहमानः शङ्कते–**अथैवमित्यादिना स्वात्मस्पर्शवदशक्यत्वादितीत्यन्तेन**। यदि ज्ञानं स्वप्रकाशं स्यात्तर्हि घटादिवत्तस्यापि सर्वत्रावभासोऽवश्यंभावी। स तु न भवति। न हि यदा घटोऽयमिति जानाति तदानीं 'घटोऽनुभूयते' इति जानाति कश्चिदिति ज्ञानस्य स्वप्रकाशत्वं नास्तीत्याशयः।

—१०–१ घटोनुभूयत इतीति। अस्योत्तरत्रानुभवतीत्यत्रान्वयः। **अविषयभूताम्**। विषयभूतो यो घटशब्दार्थस्तद्व्यतिरिक्ताम्। घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः। **अनिदंभावाम्**। अयंशब्दार्थव्यतिरिक्ताम्। संनिहितदेशवर्तमानकालविशिष्टत्वमिदंशब्दार्थः। एतदुभयव्यतिरिक्तो ह्यनुभवः। स तु घटोऽयमित्यनुभववेलायां नानुभूयत इत्यर्थः।

—१२ ननु यद्यनुभवो नानुभूयते तर्हि तस्य घटादिप्रकाशकत्वं न स्यात्। न ह्यज्ञातस्य शब्दादेरर्थप्रकाशकत्वं दृष्टमिति चेत्तत्राह–**तस्मादिति**। प्रकाशकं

हि क्वचित्स्वयमज्ञातमपि सत्तयैव केवलमर्थं प्रकाशयति । यथेन्द्रियाणि तेषां संनिकर्षश्च, तथैवात्रेति भावः ।

२४—१३ ननु यद्यनुभवस्य प्रकाश्यत्वं नास्ति तर्हि किं तत्सद्भावे प्रमाणमत आह–**तदनन्तरमिति** । घटादिविषयगतप्रकाशातिशयस्य कादाचित्कत्वात्कार्यत्वं कार्यत्वाच्च सहेतुकत्वमित्यनुमानेनानुभवो ज्ञायत इत्यर्थः ।

—१४ **एवं तर्हि** । अनुभवस्य न स्वप्रकाशत्वं किं त्वनुमानेन परप्रकाश्यत्वमेवेत्यङ्गीकारे ।

—१६ **सत्तायाः प्रकाशाव्यभिचारः** । विद्यमानदशायां सर्वदाऽनुभूयमानत्वम् ।

—१७ **सुखादिष्विति** । यदि ज्ञानस्य विद्यमानदशायामप्यनुभूयमानत्वाभावेन जडत्वमापद्यते तर्हि सुखादीनां विद्यमानदशायां सर्वदाऽनुभूयमानत्वेनाजडत्वमापद्येत । तच्चानिष्टम् । तथा च न तदजडत्वे तन्त्रमिति भावः ।

—१८ ननु स्वप्रकाशत्वमजडत्वम् । ज्ञानस्य च परप्रकाश्यत्वेन जडत्वापत्तिरित्युच्यते चेदीदृशजडत्वमिष्टमेवेत्याह–**अत इति** । यथाहुः–

अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।

स्वांशेन, ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥ इति ।

—१९ स्वप्रकाशत्ववाद्युत्तरयति–**तदिदमिति** । **अनाकलितानुभवविभवस्य** । अनुभवमाहात्म्यमजानतः । माहात्म्यं च 'अयमनुभवः स्वातिरिक्तसर्वप्रकाशकः सन्स्वस्मिन्ननन्यापेक्षः । तथाऽयमेवानुभवः प्रकाशत इति व्यवहारहेतुः, न त्वेतद्भिन्नः कश्चन प्रकाशाख्यो विषयधर्मोऽस्ति'इत्येवंरूपं बोध्यम् ।

—२० **अनुभूतीति** । येन घटादिविषयगतप्रकाशरूपलिङ्गेनानुभवोऽनुमीयते सोऽनुभवभिन्नत्वेन त्वदभिमतः प्रकाशः प्रत्यक्षयोग्यो न वा । नाद्यः । अनुभवभिन्नस्य तस्यानुपलब्धेः । नान्त्यः । अप्रत्यक्षेण हेतुनाऽनुमानासंभवात् । तथा च प्रकाशरूपस्यानुभवस्य स्वप्रकाशत्वमेवागत्या स्वीकार्यमिति भावः । रूपादिवदिति वैधर्म्ये दृष्टान्तः ।

२५–२ नन्वनुभूतेः सुखादिवन्मानसप्रत्यक्षवेद्यत्वमस्त्वित्यत आह–**नापीति** । तथात्वे हि सति तस्यापि मानसप्रत्यक्षस्यान्यमानसप्रत्यक्षग्राह्यत्वमित्येवमनवस्था स्यादिति भावः ।

—३ अथ स्वयंप्रकाशत्वेऽनुमानमाह–**प्रयोगश्चेति** । अनुभवः पक्षः । अनन्याधीनस्वधर्मत्वमनन्याधीनस्वव्यवहारत्वं चेति साध्यद्वयम् । स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वं, स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतुत्वं चेति क्रमेण हेतुद्वयम् । अनुभूतेः स्वधर्मः प्रकाशमानत्वम् । तच्च नान्याधीनम् । अनुभूतिसंबन्धे-

नैव घटादौ प्रकाशमानत्वरूपधर्मदर्शनेनानुभूतेस्तादृशधर्महेतुत्वात् । यथा रूपम् । तत्र हि रूपसंबन्धेनैव घटादौ चाक्षुषत्वधर्मदर्शनेन रूपस्य तादृशधर्महेतुत्वं, स्वगतचाक्षुषत्वे च तस्य रूपस्यान्यरूपानधीनत्वं दृश्यते । एवमनुभूतेः स्वव्यवहारः 'प्रकाशते' इति । तत्रापि पूर्ववद्बोध्यम् ।

२५—६ **तयोः** । धर्मव्यवहारयोः ।

—८ **स्वस्मिन्निति** । अस्य चाक्षुषत्वादावित्यत्रान्वयः । रूपादिः स्वगतचाक्षुषत्वादावन्यरूपादिसंबन्धाधीनो नेत्यर्थः ।

—१० अथ ज्ञातृज्ञेयनिरसनं ज्ञानस्य स्वप्रकाशत्वं च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति— **सेयमिति** । स्वयंप्रकाशेति हेतुगर्भं विशेषणम् । स्वयंप्रकाशत्वस्य नित्यत्वव्याप्यत्वात् ।

—११ **स्वतःसिद्धत्वादेव** । स्वयंप्रकाशत्वादेव ।

—१२-३ अनुभूतेः प्रागभावोऽनुभूत्यैवावगम्यतेऽन्येन साधनेन वा । प्रथमेऽपि विद्यमानयाऽनुभूत्याऽविद्यमानया वा । आद्य आह— **अनुभूतिरिति** । **सती** । विद्यमाना । न हि विद्यमानं वस्तु तदानीमेव स्वाभावं बोधयतीति भावः ।

—१४ अन्त्य आह—**एवमिति** । **असती** । अविद्यमाना । न ह्यविद्यमानं वस्तु कस्यापि ग्राहकं भवतीति भावः ।

—१६ द्वितीय आह—**नापीति** । यथा रूपग्राहकमेव चक्षुस्तदभावं ग्राहयति । न हि रूपाग्राहिणा श्रोत्रेण क्वचिदपि रूपाभावो गृह्यते । तथात्रानुभूत्यभावग्राहकं साधनमनुभूतिग्राहकमस्त्येवेति वक्तव्यम् । तच्च पुरस्तादेव ( पृ. २५ प. ४ ) निराकृतमिति भावः । तदेवाह—**अस्या इति** ।

—२० ननूत्पत्त्यभावेऽपि प्रागभावस्यैवानुभूतेरनित्यत्वं स्यादत आह—**उत्पत्तिप्रतिबद्धा इति** । उत्पत्तिसापेक्षा इत्यर्थः । उत्पत्तिव्याप्ता इति वा । प्रतिबन्धशब्दस्य व्याप्तिवाचकत्वात् । 'उत्पत्तिप्रतिबन्धात्' इति पाठ उत्पत्त्यभावादुत्पत्तिव्याप्तेरिति वार्थः । **भावविकाराः** । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंरूपाः षड्भावविकाराः । तत्रानुभूतौ प्रथमस्यैवाभावेनान्येऽपि न सन्तीत्यर्थः । प्रागभावे तु नैवम् । तस्याभावरूपत्वात् । एतेषां च भावविकारत्वात् ।

—२१ अथ बौद्धाभिमतमनुभूत्यनेकत्वं खण्डयति—**अनुत्पन्नेति** । **आत्मनि** । अनुभूतौ ।

—२२ **व्यापकेति** । नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः । **न हीति** । अनुभूतिरनाना । अनुत्पन्नत्वात् । यन्नाना तदुत्पत्तिमद्यथा घट

इति प्रयोगः। मायावेदान्तिनां मते ब्रह्मव्यतिरिक्तस्य सर्वस्यासत्त्वेन न परमाणुषु व्यभिचारः।

२६-१ भेदादीनामिति। अनुभूतेर्नानात्वे हि तास्वनुभूतिषु मिथो भेदोऽवश्यं वाच्यः। स च न संभवति। रूपादीनामिव भेदस्याप्यनुभाव्यत्वेन तस्यानुभूतिधर्मत्वाभावात्। तथा च प्रयोगः–भेदादयो नानुभूतिधर्माः। अनुभाव्यत्वात्। रूपादिवदिति।

—२ अन्योऽपि। नित्यत्वैकत्वस्वयंप्रकाशत्वादिरपि धर्मो नास्तीत्यर्थः। पूर्वत्र तथोक्तिस्त्वनित्यत्वनानात्वपरप्रकाश्यत्वादिविरुद्धधर्मनिरासायैव। न तु तस्यास्तत्र नित्यत्वादिधर्मविधौ तात्पर्यमिति बोध्यम्।

—३ यत इति। सकलभेदनिषेधेन विजातीयभेदोऽपि निषिद्ध इति विजातीयभेदप्रतियोगित्वेन पराभिमतस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा। अपि तु परमार्थभूताऽनुभूतिरेवात्मा। एवं च 'आत्मा आत्मा' इति यो लोके गीयते सोऽनुभूतिस्वरूप एव नानुभूत्याश्रय इति भावः।

—५ तत्रैव हेत्वन्तरमाह–अजडत्वाच्चेति।

व्याप्तमिति। कर्तरि क्तः। अनात्मत्वस्य व्यापकमित्यर्थः। तथा चानुभूतौ व्यापकस्य जडत्वस्याभावाद्व्याप्यस्यानात्मत्वस्याप्यभाव इत्यात्मत्वं सिद्धमित्यर्थः। संविदि। अनुभूतौ। अनुभूतिरात्मा। अजडत्वात्। यदनात्मा तज्जडं यथा घट इति प्रयोगः।

—७ प्रतीतिसिद्धेति। तथा च ज्ञातुर्मिथ्यात्वं न संभवतीति भावः।

—८ किमनुभूतिस्वरूपस्यात्मनो ज्ञातृत्वं ब्रूपेऽनुभूतिव्यतिरिक्तस्य वा। नाद्य इत्याह–अनुभूतेरिति। स्वात्मनि। अनुभूतौ। स्वनिरूपितकर्तृत्वस्य स्वस्मिन्नेवासंभवादिति भावः। नान्त्यः। अनुभूतिव्यतिरिक्तस्यात्मनः प्रागेव निरस्तत्वात्।

—१० पक्षद्वयेऽपि कर्तृत्वायोगमुपपादयति–ज्ञातृत्वं हीति।

—११-२ विक्रियात्मकमिति। क्रियाया उत्पत्तिविनाशयोगात्तदाश्रयत्वमपि कादाचित्कमिति तद्विकाररूपमित्यर्थः। जडं ज्ञेयम्। अत एव विकारिद्रव्याहंकारग्रन्थिस्थम्। अहंकारस्यापि विकारित्वाज्ज्ञेयत्वाच्च। द्रव्यशब्देन ज्ञेयत्वं सूच्यते। द्रव्यत्वस्य ज्ञेयत्वव्याप्यत्वात्। आत्मनश्च द्रव्यत्वानभ्युपगमात्। साक्षिणीति। साक्षित्वं च न ज्ञातृत्वम्। किं त्वविद्यानुभवस्वरूपत्वमेव। चिन्मात्रात्मनि। स्वयंप्रकाशे।

—१३ दृशीति। दृशिक्रियाधीना सिद्धिर्यस्य तत्त्वादित्यर्थः। अनेन 'कर्तृत्वादिर्नात्मधर्मो दृशिक्रियाधीनसिद्धित्वाद्रूपादिवत्' इत्यनुमानं दर्शितम्। कर्तृत्वादेरित्यादिपदेनाहंधीवेद्यत्वसंग्रहः।

२६—१४ अहमर्थो ह्यात्मा । तेन समानाधिकरणतया प्रतीतो ज्ञातात्मा स्यादित्यत्राह–सुषुप्तीति । अहंप्रत्ययाभाव इति । 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति ' ( छा. ८।११।१ ) इति श्रुतेरिति भावः ।

—१६ जडत्वेति । जडत्वं ज्ञेयत्वम् । पराक्त्वं परस्मै भासमानत्वम् । आत्मत्वं देहनियन्तृत्वेन व्यापकत्वम् । तदभावोऽनात्मत्वम् । आदिशब्देन क्षयिष्णुत्वादिसंग्रहः ।

—१७–८ जडत्वादिप्रसङ्गस्येष्टापत्तिं परिहरति–अहंप्रत्ययेति । तत्क्रियाफलस्य । देहकृतयागादिक्रियाफलभूतस्य । प्रामाणिकानाम् । चार्वाकातिरिक्तानाम् ।

—१८ स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह–तथेति । आत्मा हि शरीरातिरिक्तत्वेन प्रमाणबलादभ्युपगम्यते तथा ज्ञातृव्यतिरिक्तत्वेनापि प्रमाणबलात्स्वीकार्यः । अहं जानामीति प्रत्ययस्तु भ्रम एवेति भावः ।

—२० तत्र हेतुमाह–एवमिति । स्वाश्रयतया । स्वमाश्रयो यस्य तत्त्वेन । अहंकारो ज्ञानस्वरूपमात्मानं स्वनिष्ठत्वेनाभिव्यनक्तीत्यर्थः ।

२७–१ आत्मस्थतयेति । अभिव्यञ्जकानामयं स्वभावो यदभिव्यङ्ग्यपदार्थानां स्वनिष्ठत्वेनाभिव्यञ्जनम् । यथा दर्पणादिः स्वनिष्ठत्वेनैव मुखादीनभिव्यनक्ति तथाऽहंकारोऽपि स्वनिष्ठत्वेनैव ज्ञानस्वरूपमात्मानमभिव्यनक्ति । अतश्च युक्तोऽयं भ्रम इति भावः । गवादिसमुदायः खण्डपदार्थः ।

—४ स्वप्रकाशाया इति । अनुभूतेः स्वप्रकाशत्वेन कथमितराभिव्यङ्ग्यत्वम् । कथं च जडस्याहंकारस्येतराभिव्यञ्जकत्वम् । कथंतरामनुभूत्यभिव्यङ्ग्यस्याहंकारस्य स्वाभिव्यञ्जकानुभूतिव्यञ्जकत्वमित्याशयः ।

—६ करतलस्य किरणाभिव्यञ्जकत्वं क्व दृष्टमित्यत्राह–जालकेति । एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम् ।

—८ एतदेव परमार्थवस्तुभासनवेलायां ज्ञातृत्वानवभासप्रदर्शनेन द्रढयति–यत इति । ज्ञातृत्वस्यापारमार्थिकत्वं साध्यमप्यत्र हेतुतया निर्दिश्यते । यथा यतोऽग्निमानतो धूमवानिति । उत्पादकहेतुतया चायं निर्देशः । अनुमाने तु ज्ञापको हेतुः ।

—१२ महापूर्वपक्षमुपसंहरति–तस्मादिति । निर्विशेषत्वं स्वगतभेदराहित्यम् । कूटस्थत्वं निर्विकारत्वं सर्वाधिष्ठानत्वं वा । शुद्धमविद्यारहितम् । बुद्धं स्वयंप्रकाशम् । मुक्तं परमार्थतो भेददर्शनजन्मादिरहितम् । एवंविधब्रह्मात्मैकत्वज्ञानाय सर्वे वेदान्ता आरभ्यन्त इत्यर्थः ।

२७—१७-२० अथ महापूर्वपक्षं खण्डयितुं सिद्धान्ती प्रतिजानीते-तदिद-मिति । उपनिषत्प्रतिपादितः परमात्मा भक्तं वृणुते बुद्धियोगं ददाति तादृश-वरणस्य हेतुभूता ये भक्त्यादयो विशेषगुणास्तद्रहितानामित्यर्थः । मायावादिनो भक्तिरहिता इत्यभिप्रायः । तत्र हेतुगर्भं विशेषणमाह-अनादीति । पापवास-नाबुद्धिदोषयोरन्योन्याश्रयपरिहारायानादिशब्दः । शेमुषी । मोक्षोपयोगि ज्ञानम् । दूषितशेमुषीफलं सम्यग्ज्ञानाभावमाह-अनधिगतेति । प्रकृतिप्रत्य-ययोगेन पदत्वमिति पदस्वरूपम् । अनेकपदार्थसंसर्गविशेषाभिधायित्वं वाक्य-स्वरूपम् । तदर्थयाथात्म्यं पदार्थवाक्यार्थतात्पर्यविषयत्वम् । प्रत्यक्षादिसकल-प्रमाणैर्वृत्तं बोधनम् । आदिशब्देनानुमानादिसंग्रहः । सकलशब्देन प्रत्यक्षादि-व्याप्यानां चाक्षुषादीनां संग्रहः । तेभ्यः प्रमाणेभ्य इतिकर्तव्यताया रूपं स्वरूपनिश्चयः । समीचीनन्यायमार्गः समीचीनस्तत्तन्न्यायसंचारविषयः । एतत्स-र्वमनधिगतमज्ञातं यैस्तेषामित्यर्थः । तर्हि कथं तैर्मायावादिभिर्ग्रन्थाः कृता इत्यत्राह-विकल्पेति । विविधा ये कुतर्काः प्रमाणविरुद्धा मूलशैथिल्यमिथो-विरोधादिदोषाक्रान्ताश्च तर्कास्ते च विकल्पासहा एवं वैवं वेति विचार्यमाणे सद्यो विनाशिन इत्यर्थः । तद्रूपैः कल्कैः कल्पितम् । तर्काणां कल्कत्वं च कुतर्क-कल्पनापटुभिर्बौद्धैरात्तसारत्वात् । इतिर्हेतौ ।

२८-३ सविशेषेति । विशेषरहितस्य वस्तुनो रूपाद्यभावान्न तत्र प्रत्यक्षं क्रमते । नापीतरप्रमाणानि । प्रत्यक्षमूलकत्वात्तेषाम् । ननु विशेषाणां विशेषरहितत्वान्न तेषां प्रमाणविषयत्वम् । विशेषानवगमाच्च सविशेषवस्तुन्यपि न प्रमाणप्रवृत्तिः स्यादिति चेन्न । विशेषाणामाश्रयद्वारा सविशेषत्वात् । एवं च यद्वस्तु कस्यचिद्धर्मभूतं कस्यचिद्धर्मिभूतं वा न भवति तत्प्रमाणशून्यमिति फलि-तम् । अतो मायावादिनां मते ब्रह्मणस्तथात्वापत्तिर्दोष इति भावः ।

—४ ननु न वयं प्रमाणान्तरेण निर्विशेषवस्तुसिद्धिमभ्युपगच्छामः । किं तु स्वानुभवसिद्धमेव तदिति चेत्तत्राह-यस्त्विति । स्वेति । स्वगोष्ठीषु स्थितः संकेत इत्यर्थः । अनेन परवाद्यसंमतत्वं ध्वन्यते ।

—५ आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति-इदमहमिति । इदमि-त्यनेनानुभवस्य कर्मरूपविशेषवत्त्वमहमित्यनेन कर्तृरूपविशेषवत्त्वमदर्शमित्यने-नापरोक्षत्वातीतत्वरूपविशेषवत्त्वं च दर्शितम् । विशिष्टविषयत्वं विशिष्टतया भासमानत्वम् ।

—७-८ ननु न वयमिदमहमदर्शमिति प्रतीतिमपलपामः । किं तु सा तर्क-व्यवस्थापितविषया निर्विशेषे प्रमाणमिति चेत्तत्राह-सविशेषोऽपीति । स्वभावविशेषैः । धर्मविशेषैः । निर्विशेषवस्तुवादिनस्तव निर्विशेषत्वसाधक-त्वेनाभिमता धर्मा अवर्जनीया एवेति भावः ।

२८—१०–१ कैश्चिद्विशेषैः। स्वासाधारणैः प्रामाणिकैर्धर्मैः। अन्ये विशेषाः। अप्रामाणिका रूपादयो धर्माः। न तु सर्वे धर्माः। यथाऽग्न्यभाववदवृत्तिर्धूमः पर्वतादावग्न्यभावमेव निवर्तयति न तु स्वं नाप्याकारान्तरं तद्वदिति भावः।

—१२ किं च त्वदङ्गीकृतैर्धीत्वादिधर्मैरपि ज्ञानस्य सविशेषत्वमेव सिध्यतीत्याह–धिय इति। धीत्वं विषयप्रकाशकत्वं साधनतया त्वयोपन्यस्तम्। स्वप्रकाशतारूपधर्मश्च साध्यतयोपन्यस्तः।

—१३ ज्ञातुरिति। ज्ञातुर्यद्विषयप्रकाशनमयमेव धियः स्वभाव इत्यर्थः।

—१३–४ ननु नोक्तधर्मविशिष्टस्य लौकिकज्ञानस्य निर्विशेषत्वं वदामः। किं तु स्वापाद्यवस्थास्वनुभूतस्यात्मभूतस्यैवेति चेत्तत्राह–स्वापेति। अथ वा विषयप्रकाशनस्वभावश्चेत्स कथं स्वापादौ न दृश्यत इत्यत्राह–स्वापेति। अनुभवः। आत्मस्फुरणम्। स्वावसरे। अहमर्थस्यैवात्मत्वसमर्थने। निपुणतरम्। परदर्शितयुक्त्यैव। तत्र 'सुखमहमस्वाप्सं मामप्यहं न ज्ञातवान्' इति त्वद्दर्शिताकार एव विशेष इति भावः। किं चाहमिति भासमानस्यात्मस्वरूपभूतज्ञानस्य प्रत्यक्त्वादिधर्मैः सविशेषत्वमग्रे वक्ष्यते।

—१५ नित्यत्वादय इति। आदिपदेन स्वयंप्रकाशत्वैकत्वानन्दत्वादिधर्मसंग्रहः।

—१६ न शक्योपपादनाः। उक्तुमशक्याः।

—१७ विधाभेदः। प्रकारभेदः।

स्वाभिमतेति। बौद्धैरात्मनः क्षणिकत्वमुक्तं त्वया तु नित्यत्वम्। वैशेषिकादिभिश्च जडत्वं बहुत्वं चोक्तं त्वया तु स्वप्रकाशत्वमेकत्वं च। तथा च तैः सह विवदता त्वया तद्विरुद्धमात्मनि किंचित्साध्यते न वा। आद्ये यत्साध्यते तेनैवात्मनः सविशेषत्वम्। द्वितीये तव केवलं बहुप्रलापित्वापत्तिः। निर्विशेषत्वमेव साध्यते चेन्निर्विशेषत्वरूपधर्मेणैव सविशेषत्वं दुर्वारमिति भावः।

—१९ अथ पूर्वप्रतिज्ञातं प्रमाणानां सविशेषविषयत्वं वक्तुमारभते–शब्दस्येति। पूर्वपक्षिमते प्रत्यक्षादपि शब्दस्य प्राबल्यादादौ तन्निरूपणम्।

—२० शब्दस्य हि द्विधा प्रवृत्तिः। पदरूपेण वाक्यरूपेण च। तत्राद्यां विवृणोति–प्रकृतीति। यथा पाचक इत्यत्र 'पच्' इति प्रकृतेः पचनमर्थः। ण्वुल्प्रत्ययस्य च कर्तृरूपोऽर्थः। तयोः संबन्धेन पाचकशब्दात्पचनकर्तृत्वं यद्बुध्यते स एव विशेष इति सविशेषमेव वस्तु पाचकशब्देनाभिधीयते। पदस्यैवेति। आदौ पदमेव सविशेषवस्तुप्रतिपादकं भवति किमुत वाक्यमित्यनेन सूच्यते।

—२२ द्वितीयां विवृणोति–पदभेद इति। तत्तत्पदार्थसंसर्गो हि वाक्यार्थो न तु पदार्थप्रमाणमिति सविशेषमेव वस्तु वाक्येन प्रतिपाद्यत इति भावः।

२९—१ प्रत्यक्षप्रमाणस्य सविशेषविषयत्वं दर्शयति–**प्रत्यक्षस्येति** ।

—४ **स्वस्मिन्निति** । स्वस्मिन्निर्विकल्पकेऽनुभूतो यो घटत्वादिपदार्थस्तद्विशिष्टघटादेः सविकल्पके यदनुसंधानं भवति तद्धेतुत्वं निर्विकल्पकस्येत्यर्थः । तथा च यद्याश्रयद्वारापि निर्विशेषं ( निर्धर्मिकं ) वस्तु निर्विकल्पकज्ञानविषयो भवेत्तर्हि कथं तद्विशिष्टत्वेन सविकल्पके प्रतिसंधानं भवेत् । अथ निर्विशेषमित्यस्य निर्धर्मकमित्येवार्थस्तथापि दोष एव । निर्विकल्पकज्ञानविषयीभूतं घटत्वाद्यपीदमित्थमित्याकारेणैव तत्र तत्र प्रतीयत इति सविशेषमेव तत् । निर्धर्मके वस्तुनीत्थंताया असंभवात् । इदं किंचिदिति निर्विकल्पकज्ञानविषयीभूतमपि वस्तु सविशेषमेव । विशेषरहितस्येदंतया बोधासंभवात् । किं च प्राथमिकज्ञाने जातेरग्रहणे द्वितीयादिषु तदनुवृत्तिर्दुर्ग्रहा । अनुवृत्तिश्चानेकव्यक्त्यन्वयः । स चान्वयोन्वयिनः पूर्वव्यक्तिस्थतया परामर्शेनैव द्वितीयादिषु गृह्यते । एतेन जात्यादयो विशेष्यं च निर्विकल्पके संबन्धविरहेण गृह्यत इत्यप्यपास्तम् ।

—७ केनचिद्विशेषेणेति । तथा च निर्विकल्पकशब्दे विकल्पशब्दो विकल्पविशेषपरः । विकल्पविशेषश्च गोत्वादेरनुवृत्ताकारतारूपः ।

—८ **त्रिकोणं गोमुखम् । सास्ना** गोगलकम्बलः । **संस्थानमवयवरचना** ।

—९ ननु निर्विकल्पकेऽपि सविकल्पकवत्त्रिकोणसास्नादिसंस्थानविशेषप्रतीतौ किं तयोर्भेदकमिति चेत्तत्राह–**अत इति** । पिण्डो व्यक्तिः । अनेकगोव्यक्तिषु मध्ये प्रथमत एव गोव्यक्तेर्यज्ज्ञानं जायते तन्निर्विकल्पकम् । तत्र त्रिकोणसास्नादिसंस्थानरूपगोत्वस्य ज्ञानेपि तस्य गोत्वस्यानुवृत्तत्वेन तत्र ज्ञानाभावात् । अनुवृत्तत्वं चैकरूपेणानेकत्रावस्थितत्वम् । तदनन्तरं गोव्यक्तेर्यज्ज्ञानं जायते तत्सविकल्पकम् । तदानीं तादृशगोत्वस्यानुवृत्तत्वेन ज्ञातत्वात् । अनुवृत्तत्वेन ज्ञाने च प्राथमिकज्ञानजन्यसंस्कारस्य हेतुत्वात् । एवं च गोत्वादेरनुवृत्तत्वेन प्रतीतिरेव सविकल्पकशब्दप्रवृत्तिनिमित्तम् । तस्य तत्त्वेनाप्रतीतिरेव च निर्विकल्पकशब्दप्रवृत्तिनिमित्तमिति बोध्यम् ।

—१७ **ऐन्द्रियकत्वाविशेषादिति** । ऐन्द्रियकत्वमिन्द्रियजन्यज्ञानविषयत्वम् । एवं च निर्विकल्पके गोव्यक्तेरिव गोत्वजातेरपि ग्रहणं दुर्वारमिति भावः ।

—२० **संस्थानिवदिति** । यथा संस्थानिरूपा व्यक्तिः सर्वज्ञानेषु गृह्यते यथा वा व्यक्तिधर्मः संस्थानं सर्वज्ञानेषु गृह्यते तथैवानुवृत्तिरूपः संस्थानधर्मोऽपि द्वितीयादिसर्वज्ञानेषु गृह्यत एवेत्यर्थः ।

३०—३ प्रसङ्गाद्भेदाभेदवादं निराकरोति–**अत एवेति** । **सर्वत्रेति** । सजातीयव्यक्तिद्वयमध्ये जातिव्यक्तिमध्ये गुणगुणिमध्ये क्रियातदाश्रयमध्ये कार्यकारणमध्ये चेत्यर्थः । व्यक्तिद्वयमध्ये जात्यात्मनाऽभेदो व्यक्त्यात्मना च भेदः । न चाभेदस्य जातिनिष्ठत्वाद्व्यक्त्योरभेदः कथमिति वाच्यम् । जातिव्यक्त्योरभे-

दस्याप्यङ्गीकारेण जातिनिष्ठस्यापि व्यक्तिनिष्ठत्वात्। जातिव्यक्तिमध्ये भेदस्तु प्रसिद्ध एव। अभेदस्तु व्यक्तेः प्रथमतो ग्रहणे तयोरभेदेन प्रतीत्योपपादनीयः। किं चैकशब्दानुविद्धप्रत्ययो मत्वर्थीयानपेक्षसामानाधिकरण्यं सहधीनियमश्च जातिव्यक्त्योरभेदे प्रमाणमिति तेषामाशयः।

तत्र जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति–**इदमित्थमिति**। इदंभावो व्यक्त्यंशः। इत्थंभावो जात्यंशः।

३०—५ **तद्विशेष्यमिति**। सास्नादिसंस्थानविशेषरूपजातेर्विशेष्यभूता व्यक्तिरित्यर्थः। तथा चाभेदे विशेषणविशेष्यभावासंभवात्प्रथमज्ञानेऽपि जातिव्यक्त्योर्भेदेनैव प्रतीतिरिति भावः।

—७ **व्यावृत्तमेवेति**। तथा च व्यावृत्तिप्रयोजकीभूतधर्मस्य जातेस्तत्र विशेषणतया भानमावश्यकमित्याशयः।

**व्यावृत्तिश्चेति**। गोत्वादिसंस्थानविशेषविशिष्टतयेत्थमिति प्रतीतेर्व्यावृत्तिश्च निश्चीयत इत्यर्थः।

—८ **सर्वत्रेति**। एवं च यथा मनुष्यविशेषणीभूता दण्डकुण्डलादयो मनुष्याद्भिन्नास्तथैव जातिरपि व्यक्तेः सकाशाद्भिन्नेति भावः।

—९–१० ननु दण्डतद्वतोरिव जातिव्यक्त्योरपि भेदः स्याच्चेत्तत्रैव कुतः सहोपलम्भनियमो न दण्डतद्वतोरित्यत्राह–**तत्रेति**। **पृथगिति**। विशेष्यभूतमनुष्यादिभ्यः पृथगवयवरचनया स्थिता इत्यर्थः।

—११ **द्रव्यसंस्थानतयैवेति**। एतेन व्यक्त्यपेक्षया जातेरपृथक्सिद्धत्वं सूचितम्। एतदेव च सहोपलम्भनियमप्रयोजकं न त्वभेदः। जातिव्यक्त्योरेकशब्दानुविद्धप्रत्ययो मत्वर्थीयानपेक्षसामानाधिकरण्यं चेत्येतद्द्वयमप्यपृथक्सिद्धत्वमूलकमेवेत्याशयः।

—१४ **प्रतिपत्तिः**। ज्ञानम्। पृथक्स्थितेः पृथग्ज्ञानस्य च योग्या इत्यर्थः।

—१५ **अत इति**। 'वस्तुविरोधः प्रतीतिपराहतः' इति हि भेदाभेदवादिनो वदन्ति। यद्यपि भेदरूपवस्तुनोऽभेदरूपस्य वस्तुनश्चैकत्र विरोधस्तथापि स त्याज्यः। लोके भेदाभेदयोरेकत्र प्रतीतेः। 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायादिति तस्यार्थः। परं त्वेतद्वास्तविकप्रतीतिप्रकारमपलप्यैव तदुक्तमिति भावः।

—१८ **नैकस्मिन्निति**। जैनमतं नोपपद्यते। एकस्मिन्वस्तुन्यस्तित्वनास्तित्वादेर्विरुद्धस्य च्छायातपवद्युगपदसंभवादिति तत्सूत्रार्थः।

—१९ **प्रत्यक्षादीति**। प्रत्यक्षादिदृष्टधूमादिसंबन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः।

३०—२० **प्रमाणसंख्येति**। प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः। अनुमितिरपीति काणादबौद्धौ। उपमितिरपीति नैयायिकैकदेशिनः। शब्दोपीति नैयायिकाः। अर्थापत्तिरपीति प्राभाकराः। अनुपलब्धिरपीति भाट्टवेदान्तिनौ। संभवैतिह्यकावपीति पौराणिकाः। चेष्टापीति तान्त्रिकाः। इत्थं प्रमाणसंख्याविवादेऽपि प्रमेयविषये न विवादः। सर्वैरपि प्रायशः स्वस्वाभ्युपगतप्रमाणेष्वेवातिरिक्तप्रमाणान्तर्भावस्योक्तत्वात्।

३१—२ **वस्तुगतेति**। सविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति भावः।

—७ **जात्यादिविशिष्टस्यैवेति**। उपपादितमेतत्। एतेन प्रत्यक्षस्य सन्मात्रग्राहित्वं **निरस्तम्**। **जात्यादेरेवेति**। वस्तुनो घटादिव्यक्तेर्यः पटादिप्रतियोग्यपेक्षया भेदव्यवहारस्तथाऽवयवसंस्थानरूपजात्यादेरेव भेदस्वरूपत्वेन स्वस्य जात्यादेर्यः पटाद्यवयवसंस्थानप्रतियोगिकभेदव्यवहारस्तद्धेतुत्वं जात्यादेरेव। तादृशजात्यादिविशिष्टस्यैव च प्रत्यक्षविषयत्वमिति भेदस्य प्रत्यक्षविषयत्वमर्थात्सिद्धमेवेति भावः।

—९ **संवेदनवदिति**। पूर्वपक्ष्युक्ता-( श्रीभाष्य-पृ. २५ प. ४ ) नुमाने संवेदनं पक्षः। रूपं च सपक्षः। अतस्तदुभयमत्र निर्दिष्टम्।

—११ **अत इति**। जात्यादेः स्वपरनिर्वाहकत्वात्तद्विशिष्टग्रहणस्यैव भेदग्रहणत्वाच्चेत्यर्थः। **नानवस्थेति**। भेदस्य दीपवत्स्वस्यैव स्वव्यवहारहेतुत्वेन भेदनिष्ठान्यभेदाङ्गीकारे प्रमाणाभावेन न पूर्वपक्ष्युक्ता-( श्रीभाष्य-पृ. २३ प. ३ ) नवस्थादोषः। तथाऽवयवसंस्थानरूपजात्यादेरेव भेदस्वरूपत्वेन जात्यादिधर्मविशिष्टवस्तुग्रहणमेव भेदग्रहणमिति नान्योन्याश्रयदोषः। जात्यादेरेव भेदस्वरूपत्वेन घटभिन्नशब्दयोरर्थानतिरेकेपि ब्रह्मस्वरूपादिशब्दवत्सहोक्तिः। तथा तयोः शब्दयोः पर्यायत्वेपि शब्दस्वाभाव्याद्भिन्नशब्दजबोध एव प्रतियोग्यपेक्षा न पटशब्दजबोध इति भावः।

—१४ **अपि चेति**। अनेन प्रतिपत्तिविरोध उक्तः।

—१५ **यदि चेति**। अनेन व्यवहारविरोध उक्तः।

—१७ **सर्वास्विति**। अनेन शब्दव्यवस्थाविरोध उक्तः।

—१९-२० प्रतीतिविरोधविशेषं दर्शयति-**किं चेति**। **उपरितनस्येति**। अश्वज्ञानानन्तरं जायमानस्य हस्तिज्ञानस्य पूर्वज्ञानगृहीतविषयातिरिक्तविषयाग्राहित्वप्रसक्तौ पूर्वज्ञानजन्यसंस्कारविलक्षणसंस्कारानुत्पत्तिरिति स्मृतिवैलक्षण्यं न स्यात्। **विशेषाभावाच्चेति**। धारावाहिकस्थले चित्रदर्शनादौ ज्ञानानामेकविषयत्वेपि स्मृतिवैलक्षण्यप्रयोजकं प्रतिक्षणं विशेषदर्शनं भवति तदप्यत्र नास्ति। भवन्मते प्रत्यक्षस्य सन्मात्रग्राहित्वादिति भावः।

३२—३ **रूपरूपीति** । रूपं शुक्लादि, रूपिणो घटादयः, रूपेण सहैकस्मिन्घटादिरूपेऽर्थे समवेता आश्रिताश्च ये पटाभावादय एतत्त्रितयान्यतमग्राहित्वादित्यर्थः ।

—५ **श्रोत्रादीनीति** । आदिना जिह्वाघ्राणयोः संग्रहः ।

—८ **अनुवादकत्वमेव स्यादिति** । तच्चानिष्टम् । 'शास्त्रं ह्यप्राप्तविषयतयार्थवत् । अत एव भेदस्य लोकसिद्धत्वात्तदविषयकत्वं शास्त्रस्य' इति तेषामेवोक्तेः ।

—९ **प्रमेयभावश्चेति** । प्रमेयत्वं च प्राप्नोतीत्यर्थः । सति हि तस्मिंस्तद्व्यापकजडत्वादिधर्मप्रसङ्गः ।

**अत इति** । वस्तुसंस्थानमेव जातिर्जातिरेव च भेद इत्याशयः ।

—१०-२ तत्र संस्थानमेव जातिरित्युपपादयति—**संस्थानातिरेकिण इति** । **संप्रतिपन्नत्वाच्च** । स्वीकृतत्वाच्च ।

—१३ **स्वासाधारणेति** । स्वस्य घटादेरसाधारणं यत्कम्बुग्रीवादिमत्त्वं रूपं तदेव तस्य संस्थानम् । न तु द्रव्यत्वम् । तस्य घटसाधारणरूपत्वात् ।

—१४-५ अथ जातिरेव भेद इत्युपपादयति—**जातिग्रहणेनेति** । न च जातेः प्रतियोगिनिरपेक्षत्वेन भेदस्य च प्रतियोगिसापेक्षत्वेन वैषम्यात्कथं तयोरैक्यमिति वाच्यम् । ईदृशवैषम्यस्याप्रयोजकत्वात् । अन्यथा घटाद्यभावाभावस्य घटादिस्वरूपत्वानापत्तावभावानामनवस्था दुर्वारा स्यादिति भावः । दर्शनं च नेत्याह—**पदार्थेति** । ननु तर्हि शशशृङ्गादिवत्तस्य तुच्छत्वमेव स्यादित्यत आह—**अर्थान्तरवादिनेति** । अन्योन्याभावरूपो भेदोऽप्यस्तीति वदतेत्यर्थः ।

—१८-९ **गोत्वादाविति** । पशुत्वेन गोसजातीया ये महिषादयस्तद्बुद्धिस्तद्व्यवहारश्च संस्थानरूपगोत्वज्ञानेन निवर्तत इति गोत्वमेव व्यावृत्तिरिति भावः ।

३३-१-२ ननु प्रतियोगिनिरपेक्षगोत्वादिस्वरूपस्य भेदस्य कथमयमस्माद्भिन्न इत्यत्र प्रतियोगिसापेक्षत्वमिति चेत्तत्राह-**अयमिति** । **तदपेक्षत्वात्** । प्रतियोग्यपेक्षत्वात् । प्रतियोग्यपेक्षायां हि स निर्दिश्यते नान्यथा । एवं च शब्दस्वाभाव्यात्क्वचित्तादृशशाब्दव्यवहारविशेषस्थले भेदस्य प्रतियोगिसापेक्षत्वेऽपि सर्वत्र तथाङ्गीकारे मानाभावः । उक्तयुक्तिसिद्धस्य भेदस्वरूपस्य त्यागानौचित्यादित्याशयः ।

—५ **अनालोचितेति** । बाध्यबाधकभावस्य व्यावृत्त्यनुवृत्त्योश्च विशेषोऽनालोचितो येन तस्येत्यर्थः ।

—७ **व्यावृत्तिरिति** । अत्र व्यावृत्तिशब्देन मिथ्यात्वसाधकीभूतो व्यावृत्तिविशेष उच्यते । न व्यावर्तमानत्वमात्रमपारमार्थ्ये हेतुरिति वक्ष्यमाणत्वात् । तत्र मात्रशब्देनोक्तव्यावृत्तिविशेषस्य व्यवच्छेदः ।

३३—८ **विरोध एव नास्तीति**। घटे पटस्य व्यावर्तमानत्वेन प्रतीतावपि तस्य घटस्य तस्मिन्काल एवान्यत्र स्थितेन पटेन सह न विरोधः। नापि तस्य घटस्य तस्मिन्देश एवान्यस्मिन्काले स्थितेन पटेन सह विरोधः। किं तु तद्देश एव तत्काल एव स्थितेन पटेन विरोधः। एवं च यथा रज्ज्वास्तद्देश एव तत्काल एव प्रतीतेन सर्पेण विरोध इति तत्र सर्पस्य मिथ्यात्वेऽपि नान्यत्र सर्पस्य मिथ्यात्वं तथैव पटादीनामिति भावः।

—१२ **अन्यत्रेति**। घटे व्यावर्तमानस्य पटस्य पटेऽपि निवृत्तिः कथमुच्यत इत्यर्थः।

—१५ **न दृष्टमिति**। यत्र व्यावर्तमानत्वं तत्र मिथ्यात्वमिति नियमो नास्ति। घटे पटस्य व्यावर्तमानत्वेऽप्यन्यत्र पटस्य सत्यत्वदर्शनादिति भावः।

—१७ **न साधनमिति**। प्रतिपक्षमतेन यदसिद्धं तदेव साधनमर्हति। इतरथा तु सिद्धसाधनं दोषाय भवति।

३४—१ **तद्विषयेति**। यदा देवदत्तस्य घटज्ञानं जायते तदा तज्ज्ञानं देवदत्तस्य स्वप्रकाशं भवति न तु यज्ञदत्तस्य। न हि देवदत्तस्य घटज्ञानवेलायां 'देवदत्तस्य घटज्ञानं जातम्' इति यज्ञदत्तस्य ज्ञानं जायते। किं तु तज्ज्ञानोत्तरं देवदत्तेन त्यक्ते स्वीकृते वा घटे यज्ञदत्तेन दृष्टे सति तेन लिङ्गेन देवदत्तस्य ज्ञानं जातमिति यज्ञदत्तोऽनुमिनोति। अतो ज्ञानं न सर्वेषां स्वप्रकाशम्।

—३ किं च ज्ञातुरपि कदाचिज्ज्ञानं ज्ञानान्तरप्रकाशं भवतीत्याह—**स्वानुभवस्येति**।

—४ **अत इति**। 'अनुभवस्यानुभवविषयत्वेऽनुभवत्वमेव न स्यात्' इति यो दोषः परैरुद्भावितः स नास्ति। अनुभवस्य सर्वत्र स्वतःसिद्धत्वस्य वक्तुमशक्यत्वात्। अनुभवत्वानुभवविषयत्वयोर्विरोधस्यैवाभावाच्चेति भावः।

—७ **परानुभवेति**। घटादिशब्दस्य तदर्थेन यः संबन्धस्तज्ज्ञानं देवदत्तस्य जातमित्यनुमानादिभिर्निश्चित्यैव तेन देवदत्तेन सह घटमानयेत्यादिशब्दैर्यज्ञदत्तो व्यवहरतीति भावः।

—९ **अनुभूयेति**। अनुमानेनेति शेषः। अनुमायेति पाठस्तु सुगम एव। तदुपसत्तिः। आचार्यसमीपे विद्याग्रहणार्थं गमनम्।

—१० **अनुभूतित्वमिति**। अनुभूतिशब्दो ज्ञानमात्रपरः। न तु स्मृतिविलक्षणपरः। **वर्तमानेति**। प्रकाशमानत्वमित्येतावन्मात्रोक्तौ घटादावतिव्याप्तिरतः स्वाश्रयं प्रतीत्युक्तम्। आत्मधर्माणामणुत्वादीनां ज्ञानान्तरप्रकाश्यत्वात्तद्व्यावृत्त्यर्थं स्वसत्तयैवेति। अतीतानुभवव्यावृत्त्यर्थं वर्तमानतादशायामिति। वर्तमानतादशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसंभवात्तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम्।

३४—११ **स्वसत्तयैवेति**। स्वाश्रयं प्रति वर्तमानतादशायामिति संबध्यते। **साधनत्वं** प्रकाशकत्वम्। यद्यपि चक्षुरादीन्द्रियाणि रूपादीन्स्वविषयान्प्रकाशयन्ति तथापि ज्ञानद्वारा न तु साक्षादिति तद्व्यावृत्त्यर्थमेवकारः।

—१२ **ते च**। तौ धर्मौ च।

—१३ नन्वनुभवविषयत्वस्याननुभूतित्वप्रयोजकत्वाभावे कथं घटादेरननुभूतित्वमत आह—**घटादेरिति**।

—१४ परमते दूषणमाह-**तथेति**।

—१७ **निबन्धनं** प्रयोजकम्।

—१८-२० शङ्कते-**अनुभूतेरिति**। **अननुभाव्यत्वेपीति**। यथा शङ्काकृताऽनुभाव्यत्वमज्ञानाविरोधित्वप्रयोजकमिति घटादिदृष्टान्तेन प्रतिपाद्यते तथा गगनकुसुमादिदृष्टान्तेनानुभाव्यत्वमपि तत्प्रयोजकमिति कुतो नोच्यत इत्याशयः।

—२१ **उपहास्यमिति**। समीपस्थैरपि हास्यमित्यर्थः।

३५—१-२ **संविदः**। अनुभूतेः। **तदन्धस्येति**। असिद्धमत्यन्तासिद्धेन हेतुना साध्यत इत्यर्थः।

—७ **अनुभूतिप्रागभावादेरिति**। अनुभूतिप्रागभावादीन्विषयविशेषान्यदाऽनुभूतिः साधयति तदैव तत्समकालभावनियमो न तु सर्वविषयकानुभूतावित्यर्थः।

—९ **न तदभावेति**। अनुभूतिप्रागभावो नास्तीति वक्तुं न शक्यत इत्यर्थः।

—१३ **योगिप्रत्यक्षादिष्विति**। आदिशब्देनेश्वरप्रत्यक्षं गृह्यते। ननु प्रमाणज्ञानेऽपि प्रमेयासद्भावे किं तस्याप्रमाणज्ञानाद्भेदकमिति चेन्न। प्रमेयाविनाभावस्यैव तद्भेदकत्वात्।

तदेवोपपादयति-**अत एवेति**। ज्ञानमात्रस्य समकालवर्तिविषयग्राहकत्वनियमाभावेनैव प्रमेयाविनाभावश्च सिद्ध इत्यर्थः।

—१४ **न हीति**। प्रमाणस्य स्वसमकालवर्तिनार्थेन यः संबन्धः सोऽविनाभावो नेत्यर्थः।

—१५-१६ **कालादीति**। आदिशब्देन संस्थानसंग्रहः। **तथाविधेति**। तादृशदेशकालविशिष्टाकारस्य यन्मिथ्यात्वं तस्य प्रत्यनीकं शत्रुभूतं प्रमाणं तद्भाव एवाविनाभाव इत्यर्थः।

—१७ **स्मृतिर्नेति**। बौद्धैकदेशिसंमतं स्मृतेर्निर्विषयत्वं निरस्तमित्यर्थः। नष्टेऽप्यर्थे समकालत्वनियमाभावेन तस्यैव स्मृतिविषयत्वात्।

—१८ **अथोच्येतेति**। यद्यप्यनुभव एवानुभवप्रागभावं गृह्णातीति स्थापितं तथापि तन्न संभवति। निर्विशेषं न सामान्यमिति न्यायात्। अनुभवविशेषस्य प्रत्यक्षादेः कस्याप्यत्रासंभवादित्याशयः।

३५—१८ अवर्तमानत्वादिति। प्रत्यक्षं हि वर्तमानविषयमेव गृह्णातीति सर्वैरभ्युपेतम्।

—२० नानुपलब्धिरिति। नानुपपत्तिरिति पाठः साधुः। यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रिभोजनं विना पीनत्वानुपपत्तिर्दृश्यते तथा यदि ज्ञानप्रागभावं विना कस्यचिदर्थस्यानुपपत्तिर्दृश्येत तर्हि तयार्थापत्त्या ज्ञानप्रागभावः सिध्येदित्याशयः।

—२२-३ उत्तरयति—यद्येवमिति। स्वयंसिद्धत्वाभिमानेन किमपि वक्तुं प्रवृत्तोऽसि चेत्तर्हि किमपि नास्माभिरुच्यते। अथ वा युक्तिविरुद्धमपि ज्ञानस्य स्वयंसिद्धत्वं गृहीत्वा तत एव तस्य सर्वदा प्रकाशमानत्वयोग्यतया प्रागभावो नास्तीति ब्रूषे तर्ह्यप्यस्माभिर्नोच्यते। यदि शास्त्रमर्यादया वक्तुं प्रवृत्तोऽसि तर्ह्युच्यत इत्यर्थः। योग्येति। ज्ञानस्य प्रागनुपलम्भेन तत्प्रागभावोऽनुपलब्धिप्रमाणेन सिध्यतीति ज्ञानस्य नित्यत्वं नास्तीत्यर्थः।

३६—१ अर्थापत्तिप्रमाणेनापि तत्सिद्धिमाह—किं चेति। स्वं प्रत्यक्षज्ञानम्।

—३ तदप्रतीतिश्चेति। घटादेः पूर्वोत्तरकालसत्ताया अप्रतीतौ बीजं तु ज्ञानस्य कालपरिच्छिन्नतया प्रतीतिरेव। तथा प्रतीतिश्च ज्ञानस्य नित्यत्वेऽनुपपन्नेति तदनित्यत्वं सिध्यति।

—४-६ अर्थापत्त्यन्तरमाह—घटादीति। नित्यः स्यादिति। तथा च घटाद्यनित्यत्वस्यान्यथानुपपत्त्या ज्ञानानित्यत्वं सिध्यतीत्यर्थः।

—६ पुनरप्यर्थापत्तिमाह—नित्यमिति। पूर्वपक्षिणा यथा ज्ञानस्य ज्ञानान्तराविषयत्वेन तत्प्रागभावो दुर्ग्रह इत्युक्तं तथैव तन्मते ज्ञाननित्यत्वमपि ज्ञानान्तरेण दुर्ग्रहमेव। तथा च यदि ज्ञानं स्वयमेव नित्यमिति प्रतीयेत तर्हि तन्नित्यत्वसिद्धिः स्यात्। तथा तु न प्रतीयते। तदन्यथानुपपत्त्या ज्ञानानित्यत्वं सिध्यतीत्यर्थः। एवं १ ज्ञानस्य कालपरिच्छिन्नतया प्रतीतेः २ घटाद्यनित्यत्वस्य ३ ज्ञाननित्यत्वाप्रतीतेश्चान्यथानुपपत्त्याऽर्थापत्तित्रयेण ज्ञानानित्यत्वं साधितम्। अथ वा प्रथमार्थापत्तेरेवानुग्राहकं तर्कद्वयं घटादीत्यादिग्रन्थेन नित्यं चेदित्यादिग्रन्थेन च प्रदर्शितमिति बोध्यम्।

—१० अथ निर्विषयानुभूतेर्नित्यत्वमिति पक्षं निराकरोति—न चेति।

—११ स्वप्रकाशवादिनो मतेऽपि ज्ञानस्य निर्विषयत्वं न सिध्यतीत्याह—विषयप्रकाशनेति।

—१९ निखिलेति। निखिला ये स्मरणप्रयोजकाः संस्कारास्तेषां तिरस्कारकरा ये देहनाशादयः प्रबलहेतवस्तेषामभावेऽपि यतः स्वापाद्यवस्थास्थानुभूतेः स्मरणं कदापि न भवत्यतः सा नैवानुभूतेति निश्चीयते। यद्यपि यत्र र

त्रानुभवस्तत्र तत्र स्मरणं भवत्येवेति न नियमः । पथि गच्छता स्पृष्टतृणादेः स्मरणस्यावश्यंभावादर्शनात् । तथापि यत्र यत्र कदाप्यस्मरणं तत्र तत्र नानुभव इति नियमोऽस्त्येवेत्यर्थः ।

३७—३ न चेति । अस्मरणनियमस्याननुभवो न कारणं किं तु स्वापाद्यवस्थासु विषयसंबन्धराहित्यमहंकारनाशो वा कारणमित्याशयः ।

—४ अर्थान्तरेति । अर्थान्तराननुभवस्येति पाठः । घटाननुभवः पटविनाशश्चानुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः । एवं च स्वापाद्यवस्थास्वनुभूतिर्नानुभूयत एवेति सिद्धम् ।

—७ अनुभवोस्तीति । तथा चात्र तासु दशास्वनुभूतिर्नास्तीति वदतस्तत्र पूर्वोक्तिविरोध इति शङ्काशयः ।

—८ आत्मानुभवः । आत्मस्फुरणम् । दीपस्यौज्ज्वल्यवत् ।

—९ निराश्रयेति । ज्ञानमेवात्मेति वदद्भिर्ज्ञानं निराश्रयमेव स्वीकृतमिति भावः ।

शब्दान्तरेण पूर्वपक्षिमतमेवाङ्गीकृतमित्याशयेनाशङ्कते—केवलेति ।

—११ न साधयतीति । इतिशब्दः प्रागभावासिद्धावन्वेति ।

—१२ नाप्यन्यत इत्यादि प्रागुक्तं ( श्रीभा. पृ. २५ प. १६ ) खण्डयति—अनुभूतेरिति ।

—१७ भावेष्विति । यत्र भावेषु जन्माभावस्तत्र विकाराभाव इत्युक्ते यद्यपि प्रागभावे न व्यभिचारस्तस्याभावरूपत्वात्तथापीयं केवलं तर्ककुशलता । कस्यचिद्वस्तुनः कस्मिंश्चिल्लक्षणे प्रतिपादिते यत्र दोषस्तद्भिन्नत्वेन निवेशे च यद्यपि तल्लक्षणं निर्दुष्टं भवति तथापि न तल्लक्षणं तद्वस्तुस्वरूपपरिचायकं भवतीति भावः ।

—१८ भावेष्वपि व्यभिचारं दर्शयति—तथा चेति । भावरूपा चेत्यर्थः । अनैकान्त्यं व्यभिचारः ।

—१९ शङ्कते—तद्विकारा इति । यत्र भावेषु जन्माभावस्तत्र सत्यविकाराभाव इत्येवं विकारस्य सत्यत्वविशेषणे न व्यभिचारः । अविद्याविकाराणां मिथ्याभूतत्वादित्याशयः ।

—२१ न ह्यसाविति । अद्वैतवादिना त्वया परमार्थविकारस्यानङ्गीकारात् ।

३८—१ अनुत्पन्नेयमित्याद्युक्तं (श्रीभा.पृ. २५ प. २१) खण्डयति—यद्पीति । विभागं भेदम् ।

—२ तत्राजेपि विजातीयभेदोऽस्तीति दर्शयति—अजस्यैवेति ।

—३ अभ्युपगताया इति । त्वयेत्यादिः ।

३८—४ शङ्कते–स विभाग इति । यत्राजत्वं तत्र परमार्थतो विभागो नास्तीत्येव नियमः । तेन तत्र मिथ्याविभागसत्त्वेऽपि न क्षतिरिति शङ्काशयः ।

—५ जन्मप्रतिबद्धः । उत्पत्तिव्याप्तः । प्रागुक्तनियमे हि परमार्थतो विभाग उत्पत्तिसत्त्व एव स्यादिति तस्योत्पत्तिव्याप्तत्वम् । क्वचिदिति । पूर्वपक्षिणा परमार्थतो विभागस्य क्वाप्यनङ्गीकारेण प्रतियोग्यप्रसिद्ध्या 'परमार्थतो विभागो नास्ति' इति वक्तुं न शक्यत इति भावः ।

—६ विभागस्य मिथ्यात्वे दूषणान्तरमाह–अविद्याया इति ।

—७ अथ सजातीयभेदं दर्शयति–अबाधितेति । अबाधिता या घटोऽयं घटोऽयमित्यादिप्रतिपत्तिस्तया सिद्धो यो दृश्यानां घटादीनां भेदस्तत्समर्थनेन ज्ञानभेदोऽपि समर्थित एव । न च घटादिभेदेनाकाशस्यापि भेदः स्यादिति वाच्यम् । घटादीनामाकाशं प्रत्यनुत्पादकत्वात् । घटादयो ह्याकाशस्य केवलं व्यञ्जका एव । ज्ञानस्य तूत्पादका व्यञ्जकाश्चेत्युत्पादकभेदेनोत्पाद्यभेदावश्यंभाव इत्याशयः ।

—९–११ अथ स्वगतभेदं दर्शयति–यदपीति । दृशेः । अनुभूतेः । अयं पक्षनिर्देशः । दृशिस्वरूपाया इति । हेतुनिर्देशः । अनुभूतिर्न दृश्यधर्मवती दृशिस्वरूपत्वात् । यद्दृश्यधर्मवत्तन्न दृशिस्वरूपं यथा घट इति व्यतिरेक्यनुमानम् । अन्वय्यनुमानमाह–दृश्यत्वादेवेति । दृश्यो न दृशिधर्मो दृश्यत्वाद्यथा घटत्वम् । एतदुभयविधलिङ्गस्य परोक्तस्य व्यभिचारमाह–तदपीति । आदिपदेनैकत्वसंग्रहः ।

—१२ ते । नित्यत्वादयो धर्माः । तेषां मिथ्यात्वं तु न । ज्ञानवृत्तिनित्यत्वस्य मिथ्यात्वे ज्ञानस्यानित्यत्वप्रसङ्गात् । अतस्तेषां ज्ञानस्वरूपत्वं परैरुक्तम् । तदपि न संभवतीत्यर्थः ।

—१४ प्रकाशश्चेति । सर्वे पदार्थास्तदा व्यवहारानुगुणा भवन्ति यदा तद्व्यवहारहेतुषु मध्ये ज्ञानं संनिधत्त इत्याशयः ।

—१६ अथ तेषां धर्माणामभावरूपत्वेऽपि व्यभिचारमाह–तेषामिति ।

—१८–२० अभावरूपाणामपि तेषां धर्माणां ज्ञानस्वरूपानतिरिक्तत्वे दूषणमाह–संविदीति । किमपि नोक्तमिति । तदुक्तं संवित्सिद्धौ–

न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम् ।
तेनापि साधितं किंचित्संविदोऽस्ति न वा त्वया ।
अस्ति चेत्पक्षपातः स्यान्नचेत्ते विफलः श्रमः ॥ ( सं. सि. पृ. ९७ ) इति ।

३९–१ अथ ज्ञानस्यात्मत्वं निराकर्तुमारभते–अपि चेति ।

सिध्यति चेदिति । सिद्धिश्च व्यवहारानुगुण्यम् । तच्च प्रमाणविषयतामन्तरेण न संभवति । प्रमाणानां च सविशेषविषयत्वस्य प्रागुक्तत्वेन प्रमाणवि-

षयीभूतायाः संविदः सविशेषत्वेन सधर्मकता दुर्वारैव । अथ वा सिद्धिरूप-धर्मेण संविदः सधर्मकता बोध्या । सा च पूर्वपक्षिणोऽनिष्टेति भावः ।

३९—२ शङ्कते-**सिद्धिरेवेति** । प्रतीतिरेवेत्यर्थः । तस्याश्च प्रतीत्यन्तरानपेक्षत्वेन न प्रमितिविषयत्वप्रयुक्तं सविशेषत्वं नापि च तुच्छत्वमित्याशयः । तत्रापि सविशेषत्वमाह-**कस्येति** । प्रतीतेराश्रयो विषयश्च वक्तव्य इत्यर्थः ।

—७ **तत्संबन्धिनीति** । पुरुषसंबन्धिन्याः संविदः पुरुषरूपत्वं दुर्वचमिति भावः ।

—१३ **भवतापीति** । एतेन ज्ञानं द्विविधं सकर्मकमकर्मकं च । तत्राद्यं जडरूपम् । द्वितीयं त्वात्मरूपमिति परोक्तमपास्तम् । स्वोक्तिविरोधादिति भावः ।

—१४ **अस्येति** । यथा सकर्मकस्य कर्मत्वं नास्ति तथा कर्तृधर्मस्य कर्तृत्वमपि नास्तीति ज्ञानस्यात्मरूपत्वं न संभवतीत्यर्थः ।

—१५ **तथेति** । किं चेत्यर्थः । हिर्हेतौ । ज्ञानस्यास्थिरत्वादपि तस्य स्थिरात्मस्वरूपत्वं नास्तीत्यर्थः ।

—२० अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यं दर्शयति-**एवमिति** ।

—२२ ननु ज्ञानस्य नित्यत्वेन क्षणभङ्गित्वाभावान्नायं दोष इत्यत आह-**किं चेति** ।

४०—४ **अनुभूतिमात्रमेवेति** । यथा गमनक्रियाया गन्तृत्वासंभवस्तथैव ज्ञानस्य ज्ञातृत्वासंभव इत्याशयः ।

ननु न वयं ज्ञानसामान्यस्यात्मत्वं वदामः, किं तु तद्विशेषभूतायाः संविदः । संविच्च निराश्रया निर्विषयात्मरूपैवेति चेत्तत्राह-**संविन्नामेति** ।

—६ ननु त्वन्मतेऽपि साश्रया सविषया च संविदङ्गीकार्यैव । तथा च तस्या एव लाघवादात्मत्वमस्तु । किमतिरिक्तधर्मिभूतात्मकल्पनेन । धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादिति चेत्तत्राह-**उभयेति** । आत्मत्वस्याहं जानामीति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतम् । उक्तलाघवन्यायस्तु कल्पनायामेव न तूपलब्धाविति बोध्यम् ।

**अनुभूतीति** । 'अनुभूतिमात्रमेव परमार्थः' इति यो निष्कर्षः सिद्धान्तस्तत्साधकत्वेन पूर्वपक्षिणा प्रदर्शिता ये हेतवस्ते हेत्वाभासा एव । ते च प्रागेव निराकृता इति भावः ।

—८ अथ ज्ञानात्मवाद्युपलब्धिपराहतत्वं निराकुर्वंश्चोदयति-**ननु चेति** । **अनिदमंशः** । इदमंशः परागर्थस्तद्व्यतिरिक्तो यः प्रकाशैकरसत्वात्प्रत्यगर्थश्चित्पदार्थो ज्ञानं स एवात्मा न त्वहमर्थ आत्मा । परप्रकाश्यत्वं पराक्त्वम् । स्वप्रकाशत्वं च प्रत्यक्त्वम् । यश्चाहं जानामीति प्रतीतावहमर्थः सिध्यति स तु ज्ञान-

बलेन निर्भासितः प्रकाशितोऽत एव युष्मदर्थलक्षणः । ज्ञानबलप्रकाशितत्वरूपं युष्मदर्थस्य लक्षणं तद्विशिष्टः । अतो युष्मदर्थ एव । एवं चाहं जानामीत्यत्र प्रत्यक्त्वलक्षणात्मत्वस्य न ज्ञातृत्वसामानाधिकरण्येनोपलब्धिरिति न तदुपलब्धिपराहतमित्याशयः । प्रयोगश्च ज्ञानं चित्त्वात्स्वप्रकाशम् । ततः प्रत्यक् । तत आत्मा । यन्नैवं तन्नैवं यथा घटः । ज्ञाता चिदन्यत्वात्परप्रकाशः । ततः पराक् । ततो नात्मा यथा घट इति ।

४०—११ धर्मधर्मितयेति । ज्ञानं हि यस्यात्मनो भवति स ज्ञानस्वरूप एवेति ज्ञानं ज्ञानस्यैव भवतीति पर्यवसन्नम् । तथा चाहं ज्ञानमिति प्रत्ययेन भाव्यं न त्वहं जानामीति धर्मधर्मितयेति प्रत्यक्षप्रतीतिविरोधोऽस्त्येवेत्यर्थः ।

—१३ अहमर्थ इति । प्रत्यक्त्वं च न ज्ञानस्यात्मत्वसाधकं किं तु ज्ञातुरहमर्थस्यैव । यतः प्रत्यक्त्वं न स्वेन प्रकाशमानत्वम् । किं तु स्वस्मै प्रकाशमानत्वम् । पराक्त्वं च न परेण प्रकाशमानत्वम् । किं तु परस्मै प्रकाशमानत्वम् । इदंताविशिष्टात्परागर्थादहंबुद्ध्यैव प्रत्यगर्थस्य भेदानुभवात् । ईदृशं प्रत्यक्त्वमहमर्थस्यैव न ज्ञानस्य । तस्य तु प्रत्युत पराक्त्वमेवेति ज्ञानात्मवाद एवात्मनः प्रत्यक्त्वं न सिद्ध्यतीत्यर्थः । एवं च ज्ञानस्य प्रत्यक्त्वाभावाज्ज्ञातुश्च पराक्त्वाभावात्पूर्वोक्तानुमानद्वयं दूषितं वेदितव्यम् ।

—१७ अहमर्थविनाशश्चेदिति । ज्ञानात्मवादेऽनात्मभूतस्याहमर्थस्य मोक्षे विनाशाङ्गीकारात् ।

—१९ अहमर्थस्य नाशेऽपि ज्ञानं नित्यं तिष्ठत्येवेति चेत्तत्राह—मयीति । न हि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति बुद्ध्या कृतः शिरश्छेदः पुरुषार्थो भवति । किं च मोक्षप्राप्तयेऽहमर्थस्य या श्रवणादौ प्रवृत्तिर्जायते सा त्वन्मते न स्यात् । न हि कश्चित्स्वनाशाय प्रवर्तेत इति भावः । ज्ञप्तिर्ज्ञानम् ।

—२१ किं च मोक्षेऽहमर्थस्य विनाशाङ्गीकारे केवलज्ञानस्यास्तित्वमपि न संभवतीत्याह—स्वसंबन्धितयेति । विज्ञप्तिता । विषयप्रकाशत्वम् ।

४१—३ विज्ञातारमिति । श्रुतौ विज्ञातारमित्यनेन जानात्येवेत्यनेन च स्मृतौ यो वेत्ति तमित्यनेन सूत्रे च ज्ञ इत्यनेन ज्ञातुरेवात्मत्वं सिध्यतीत्यर्थः । ज्ञोऽत एवेत्यत्रात्मशब्दानुवृत्तिसूचनार्थं नात्मा श्रुतेरित्युपात्तम् ।

—७ दूषणान्तरमाह—अहंप्रत्ययसिद्धो हीति । अत्र सिद्धशब्देनास्मदर्थस्य स्वतःसिद्धिः सूच्यते । हिशब्देन प्रसिद्धिं दर्शयति । यतो ज्ञानात्मवादिभिरपि शारीरभाष्यारम्भे युष्मदस्मत्प्रत्ययगोचरयोरित्युक्तम् ।

—१२ स्वप्रभेति । यथा घटादिर्दीपप्रभाया बलेन निर्भासितः सन्नेव प्रकाशते तत एव चान्याधीनप्रकाशो भवति न तथा दीपः । तस्य प्रकाशस्वभावत्वात् ।

४१—१३ अन्यानपीति । विषयप्रकाशनक्षमस्यापि दीपस्य सर्वत्र व्याप्त्यभावेन विषयसंबन्धाभावात्तस्य स्वरूपेण न प्रकाशकत्वं किं तु विषयसंबन्धिनी या स्वपरिकरभूता प्रभा तद्द्वारेणेत्यर्थः ।

—१४ यथेति । अस्य दूरतर एवमात्मा चिद्रूप इत्यत्रान्वयः । यथैकमेवैकजातीयमेव तेजोद्रव्यं प्रभारूपेण प्रभावद्रूपेण चावतिष्ठते तथैवात्मा चिद्रूप एव चैतन्यगुण इति भावः ।

—१५-१६ प्रभाया गुणत्वमाशङ्कते—यद्यपीति । प्रभावतो द्रव्यस्य गुणभूतात्यन्तपरतन्त्रा प्रभेत्यर्थः । उत्तरयति—तथापीति ।

—१६ स्वाश्रयादिति । स्वं प्रभा तस्या आश्रयभूतो यो दीपस्तस्मादन्यत्र तत्समीपप्रदेशे वर्तमानत्वात् । न हि शौक्ल्यादयो गुणा एवं दृश्यन्ते । किं च तेषां न रूपवत्त्वं प्रभायास्तु रूपवत्त्वमित्यपि वैधर्म्यम् ।

—२० अथ विशीर्णाश्रयावयवानां प्रभात्वं प्रतिक्षिपति—न चेति ।

—२१ द्युमणिः । सूर्यः ।

—२२ दूषणान्तरमाह—दीपेऽपीति । दीपावयवानां प्रथमतो यत्पिण्डीभावेनोर्ध्वमुद्गमनं नियमेन भवति तत्तेषां विशरणस्वभावत्वेन न स्यात् । ततश्च दीपज्ञानं न स्यादिति भावः ।

४२-४ पुष्कलेति । पुष्कलं यत्कारणं महती वर्तिर्बहु तैलमित्यादि तस्य दीपे क्रमेण संबन्धो भवति । अग्रिमावयवस्य पूर्वमग्निसंयोगः । तत्पश्चात्तनावयवस्य पश्चात् । सर्वेषां च दीपकारणत्वं वर्तत एव । एकदैव सर्वत्राग्निसंयोगे कृते सर्वत्र दीपोत्पत्तिदर्शनात् । ततश्च यद्येक एव दीपः स्थायी स्यात्तर्हि तस्याग्रिमावयवसंबन्धेनैवोत्पत्तौ सत्यामितरावयवसंयोगानपेक्षा स्यात् । चरमावयवसंयोगनाशे दीपनाशश्च न स्यात् । अतो दीपस्य क्षणिकत्वं स्वीकार्यमिति भावः ।

—५ ननु प्रभाया विशीर्णावयवत्वाभावे दीपसमीप एवौष्ण्यप्रकाशयोराधिक्यं दूरे च न्यूनत्वं कथमुपलभ्यत इति चेत्तत्राह—प्रभाया इति ।

—७ चिद्रूप एवेति । ज्ञानस्वरूपस्य धर्मिण आत्मनो गुणोऽपि ज्ञानस्वरूपः । न च धर्मधर्मिणोरुभयोर्ज्ञानस्वरूपत्वं कथमिति वाच्यम् । व्यक्तिभेदेनाविरोधात् । यथा नरस्यैव राज्ञो नरा एव सेवका इति सेव्यसेवकयोर्व्यक्तिभेदेनोभयोरपि नरत्वमविरुद्धं तद्वदित्याहुः । ज्ञानस्य ज्ञानाश्रयत्वं व्याप्तिविरुद्धं चेज्ज्ञानस्य निराश्रितत्वमपि व्याप्तिविरुद्धम् । श्रुतिश्चेच्छरणं तर्ह्यग्रिमश्रुतिभिर्ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वस्वीकारे बाधकाभावः । गुणभूतज्ञानस्य तु न ज्ञानाश्रयत्वम् ।

४२—९–२१ सैन्धवेति । अनेन दृष्टान्तेनात्मनि स्वल्पस्यापि जडांशस्य व्यावृत्तिः। सैव कृत्स्नशब्देन प्रदर्शिता। विज्ञानघन एवेति श्रुतावेवकारस्याप्येतदेव तात्पर्यम्। ज्ञानगुणकत्वज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह–एष हीति। ज्ञेयं यन्निकृष्टात्मस्वरूपं तत्रापि ज्ञातृत्वमाह–विज्ञातारमिति । अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम्। जानात्येवायमिति । एवकारार्थस्यावधारणस्य संकोचे प्रमाणाभावेन सार्वत्रिकत्वान्मुक्तावपि ज्ञातृत्वमस्तीत्यर्थः। मुक्तौ ज्ञाननिषेधश्रुतीनां न प्रेत्य संज्ञास्तीत्यादीनां विषयविभागं दर्शयति–न पश्य इति स उत्तम इति च। नोपजनमिति । स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनं शरीरं मुक्तौ न स्मरन्नित्यर्थः । निषेधस्य प्रतियोगिसापेक्षत्वेन मुक्तौ ज्ञातृत्वमस्तीत्येतच्छ्रुतिः सूचयति । एवमिति । पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वे सत्येव देहेन्द्रियविगम इत्याशयः। १ प्राणः २ श्रद्धा ; पञ्च भूतानि ८ इन्द्रियम् ९ मनः १० अन्नम् ११ वीर्यम् १२ तपः १३ मन्त्राः १४ कर्म १५ लोकाः १६ नाम चेत्येताः षोडशकलाः । पुरुषोयनं स्थानं यासां ताः पुरुषायणाः।

४३–१ ज्ञोत एवेति। अत एव पूर्वोक्तश्रुतिभ्य एवात्मा ज्ञो ज्ञातृस्वरूप एवेति सूत्रार्थः।

—३ कस्यचिदेव। स्वान्यस्य न तु स्वस्य।

—४ केवलज्ञानस्यात्मस्वरूपत्वे दूषणान्तरमाह–संविदिति । तथा च तत्संबन्धित्वेनाश्रयविषयाववश्यं स्वीकार्याविति निराश्रयस्य निर्विषयस्य ज्ञानस्यासिद्धिरिति भावः।

—९ संविदतिरिक्तेति । स्वसत्ताप्रयुक्तप्रकाशत्वमित्युक्तवता स्वपदग्राह्यज्ञानात्तत्सत्ताप्रयुक्तप्रकाशस्यातिरिक्तत्वमवश्यं स्वीकार्यमेव । तस्य च तेन ज्ञानात्मवादिनाऽनङ्गीकाराद्विरोध इति भावः।

—१० अव्यभिचरितेति। यस्य सत्तायां प्रकाशो न व्यभिचरति तत्त्वमजडत्वमित्यर्थः।

—१२ अथ स्वस्मै प्रकाशमानत्वमेवाजडत्वमित्याशयेनाशङ्कते–यद्युच्येतेति।

—१३ उत्तरयति–ज्ञानं किमिति।

—१७ तत्संबन्धेति। ज्ञातृसंबन्धेत्यर्थः। ज्ञातृसंबन्धं विना ज्ञानस्फुरणस्यासंभवात्।

४४–४ संविदपि मिथ्या किं न स्यादित्यत्राह–निरधिष्ठानेति।

—५ अनुभूतिरहमितीति । अत्रानुभूतिः स्वरूपसती विवक्षिता। भ्रमाधिष्ठानभूताया अनुभूतेर्भ्रमे स्वरूपेण ज्ञानासंभवात्।

४४—१० **इतिप्रत्ययवदिति** । यथा केवले दण्डे दण्डीति प्रत्ययो न भवति तथेत्यर्थः ।

—१४ अनुभूतेर्मिथ्यात्वे हेतुमाह—**तद्वत एवेति** । देहात्माभिमानवत एवेत्यर्थः ।

—१५ शङ्कते—**सकलेति** । सकलेतरपदार्थोपमर्दि यत्तत्त्वज्ञानं तेनाबाधितत्वादनुभूतेर्न मिथ्यात्वमिति शङ्काशयः ।

—१६ **तदबाधादिति** । ज्ञातृत्वस्याबाधितत्वं तु 'जानात्येवायं पुरुषः' इति मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यादवसेयम् ।

४५—२ ज्ञातृत्वमन्तःकरणस्य धर्म इति दूषयति—**देहस्येवेति** । अन्तःकरणं न ज्ञातृ । अचेतनत्वाद्देहवदिति प्रयोगः । नन्वचेतनत्वादिना घटादिसाधर्म्येपि देहस्येन्द्रियाश्रयत्वेन वैधर्म्यमिवान्तःकरणस्य ज्ञातृत्वेन वैधर्म्यं स्यादिति चेन्न । ज्ञातृत्वस्य चेतनमात्रधर्मत्वेनाचेतने प्रकृतिपरिणामभूतेऽन्तःकरणे तदयोगात् ।

—५ **तत्प्रत्यनीकेति** । दृश्यत्वस्य प्रत्यनीकं विरुद्धं द्रष्टृत्वम् । पराक्त्वस्य च विरुद्धं प्रत्यक्त्वम् । तादृशद्रष्टृत्वादेः सकाशाद्देहादिर्विविच्यते दूरं तिष्ठति तेर्धर्मैर्न संबध्यते तद्वदेवान्तःकरणमपीति नान्तःकरणस्य द्रष्टृत्वमित्याशयः ।

—६ **तद्दृश्यत्वादिति** । तद्द्रव्यत्वादिति पाठः साधुः । प्रकृतिपरिणामभूतद्रव्यत्वादिति तदर्थः ।

—९ ज्ञातृत्वस्य विक्रियात्मकत्वं परोक्तं खण्डयति—**न चेति** ।

—११ **नात्मा श्रुतेरिति** । आत्मा नोत्पद्यते । 'न जायते म्रियते' (का० २।१७) इत्यादिश्रुतेः । ताभ्यः 'नित्यो नित्यानाम्' (का० ५।१३) इत्यादिश्रुतिभ्य आत्मनो नित्यत्वावगमाच्चेति सूत्रार्थः ।

—१४ **वक्ष्यतीति** । 'यावदात्मभावित्वाच्च' (ब्र. सू. २।३।३०) इति सूत्रेप्येतत्स्पष्टम् ।

—१५-१६ ज्ञानं स्वाभाविकनित्यधर्मश्चेत्सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह—**स्वयमिति** । **उपपादयिष्याम इति** । जीवात्मनः परं ज्योतिरुपसंपद्य ज्ञानविकासो भवतीति 'संपद्याविर्भावः' (ब्र. सू. ४।४।१) इत्यत्र वक्ष्यते ।

—१७ ननु ज्ञानस्य संकोचविकासार्हत्वे मुक्तावेव विकासः प्रागेव च संकोच इति कुतो नियम इत्यत आह—**कर्मणेति** । संकोचकोपाधिः । क्षेत्रज्ञावस्थायामेव संकोच इत्यर्थः ।

—१९ **प्रवर्तत इति** । ज्ञानमुत्पन्नं ज्ञानं नष्टमिति व्यवहारो विकाससंकोचनमूलक एवेत्यर्थः ।

४५—२० अस्त्येवेति। एतेनात्मनोऽकर्तृत्वं निरस्तम्। एतादृशकर्तृत्वस्येष्टत्वात्। आत्मनो मुक्तावचेतनवत्परिणामाङ्गीकारस्यानुचितत्वात्।

नन्वात्मनः कर्तृत्वे विकारापत्तिरत आह–तच्चेति। स्वाभाविकविकारो ह्यचेतनस्यैव न त्वात्मनः। आत्मनि विकारनिषेधश्च स्वाभाविकविषय इति नैमित्तिकविकारेपि न क्षतिः।

—२१ ज्ञानस्वरूपस्येति। ज्ञानमेव स्वरूपमसाधारणो धर्मो यस्य स ज्ञानस्वरूपः। स्वरूपशब्दोऽसाधारणधर्मपरः। ज्ञानधर्मकस्यात्मन एव स्वधर्मभूतज्ञानप्रसरणकर्तृत्वं संभवति न जडस्वरूपस्यातद्धर्मकस्याहंकारस्येत्यर्थः।

४६—२ शङ्कते–जडस्वभावस्येति। तच्छायापत्त्या। चिच्छायापत्त्या।

—४ आद्यं द्वितीयं दूषयति–न तावदिति। संविदश्छायाहंकारे नेत्यर्थः।

—५ अनभ्युपगमादिति। तथा च संविदेव ज्ञातृत्वाभावेन तच्छायया-पन्न ज्ञातृत्वं सुतरां न संभवतीति भावः।

प्रथमं दूषयति–नापीति। अहंकारस्य च्छाया संविदि नेत्यर्थः।

—६ उक्तरीत्येति। अचेतनस्य प्रकृतिपरिणामभूतस्याहंकारस्य ज्ञातृत्वं न संभवतीत्यर्थः।

—१२ उभयत्र। अहंकारे संविदि च।

अनुभूतेः। अनुभूतिस्वरूपस्यात्मनः।

—१४ स्वयंज्योतिष इति। अनेनात्मनो व्यञ्जकापेक्षा नास्तीति सूचितम्। जडरूपेति। अनेनाहंकारस्य व्यञ्जकत्वशक्तिर्नास्तीति सूचितम्।

—१५-१७ तदुक्तमिति। आत्मसिद्धावित्यर्थः। शान्ताङ्गार इति। यथा शान्ताङ्गार आदित्यं व्यनक्तीति न युक्तिसहं तथेत्यर्थः।

—२१ परिहसन्तीति। ईदृशमनुभवमीदृशोहंकारोभिव्यनक्तीत्युक्तवतमेव त्वदीया एव हसन्तीत्यर्थः।

४७-१ स्वभावविरोधादिति। अनुभवस्याशेषार्थसिद्धिहेतुत्वादहंकारस्य तदभावादनुभवाधीनसिद्धित्वाच्च विरोधः। अननुभूतित्वप्रसङ्गाच्चेति। विमताऽनुभूतिर्नानुभूतिर्व्यङ्ग्यत्वाद्घटवदित्यनुमानेनाननुभूतित्वप्रसङ्ग इत्यर्थः। व्यङ्क्तृव्यङ्ग्यभावः। व्यञ्जकव्यङ्ग्यभावः।

—२ प्रातिकूल्यतः। विरोधात्।

—९ बहुला इति। न चात्रापि संविद्बाहुल्यहेतुत्वमहंकारस्य शङ्कनीयम्। तन्मते ब्रह्मस्वरूपायाः संविदः प्रसरणस्वभावत्वाभावात्।

—११ अहंकारनिर्वर्त्या। अहंकारेण जायमाना। किंरूपेति। उत्पत्तिरूपा प्रकाशनरूपानुभवसाधनानुग्रहरूपा वेत्यर्थः।

**४७—१३ तत्प्रकाशनम्** । संविद्रूपात्मविषयकज्ञानोत्पत्तिः ।

**अननुभाव्यत्वात्** । अविषयत्वात् ।

**तत एव** । संविद्रूपात्मविषयकज्ञानोत्पत्तेरसंभवादेव ।

**—१४ द्विधेति** । ज्ञेयगतदोषदूरीकरणद्वारा ज्ञातृगतदोषदूरीकरणद्वारा चेत्याशयः । तदेवाह—**ज्ञेयस्येति** ।

**—१८ अभूमित्वात्** । अविषयत्वात् । संविद्रूपस्यात्मन इन्द्रियाविषयत्वा-श्चाहंकारस्य संविज्ज्ञानजनकेन्द्रियसंबन्धहेतुत्वं नापि बोद्धृगतकल्मषापनयहेतु-त्वमिति भावः ।

**—२१ अनुभाव्येति** । अनुभाव्या यानुभूतिस्तस्या योऽनुभवस्तदुत्पत्तौ यत्प्रतिबन्धकं तन्निरसनमहंकारः करोतीत्यर्थः । परं त्वेतादृशं किंचित्प्रतिबन्ध-कमेवात्र न संभवतीत्याशयः ।

**४८—१ संतमसम्** । गाढान्धकारः ।

**—३ संविदात्मगतमिति** । संविद्रूपो य आत्मा ज्ञेयत्वेनाभिमतस्तन्नि-ष्ठमित्यर्थः ।

**—४ अस्ति हीति** । संविदाश्रयकं संविद्विषयकं चाज्ञानमेव प्रतिबन्ध-कमिति शङ्काशयः ।

तथाविधाज्ञानस्यासंभवेऽपि तुष्यतु दुर्जनन्यायेन तत्स्वीकृत्य प्रकारान्त-रेण दूषयति—**अज्ञानस्येति** ।

**—६ संविदाश्रयत्वमिति** । आश्रयणं संबन्धः । स च विषयत्वेनाधारत्वेन च । आश्रयश्चेतसो ब्रह्मेत्यत्र यथा । तथा च संविन्निष्ठत्वं संविद्विषयकत्वं चेत्यर्थः ।

**ज्ञानसमानेति** । यो हि ज्ञानाश्रयो भवति स एव कालविषयादिभेदेना-ज्ञानाश्रयो भवति नान्यो ज्ञातृभावरहितो घटादिः । तथा च 'संविदो ज्ञातृ-भावरहितत्वेन न तन्निष्ठत्वमज्ञानस्य संभवतीत्यर्थः । **तत्समानेति** । ज्ञानस-मानेत्यर्थः । यो हि ज्ञानस्य विषयो भवति स एव कालज्ञात्रादिभेदेनाज्ञा-नस्य विषयो भवति नान्यो ज्ञानाविषयो वन्ध्यापुत्रादिः । तथा च संविदो ज्ञानविषयभावरहितत्वेन न तद्विषयत्वमज्ञानस्य संभवतीत्यर्थः ।

**—१२ स्वविषय एवेति** । यद्यविषयेऽप्यज्ञाननिवृत्तिस्तर्हि शुक्तिज्ञानेनापि सर्पभ्रमनिवृत्तिः स्यात् ।

—१४ किं चाहंकारापनोद्यत्वेनोक्तमेतदज्ञानं किं सदसदनिर्वचनीयं ज्ञान प्रागभावरूपं वा । आद्य आह—**अस्य चेति** ।

४८—१५-६ अन्य आह—ज्ञानप्रागभावेति। उत्पत्तिविरोधित्वाभावेन। उत्पत्तिप्रतिबन्धकत्वाभावेन। न हि घटप्रागभावो घटोत्पत्तिं प्रतिबध्नाति।

—१७ केनापि प्रकारेण। उत्पादकतया प्रकाशकतया तदनुग्राहकतया चेत्यर्थः।

—१८ स्वाश्रयतयेति। बहुव्रीहेस्तल्।

—१९ यथावस्थितेति। ज्ञानस्य चाक्षुषादेस्तत्साधनस्येन्द्रियादेरनुग्राहकस्य चालोकादेरीदृश एव स्वभावः। ज्ञानस्य स्वतःप्रमाणत्वात्। यथावस्थितपदार्थप्रतीतिजनकत्वमेव प्रमाणत्वम्। तच्च स्वत एवेति ज्ञानस्य तादृशस्वभावः सिध्यति। ज्ञानस्य तादृशस्वभावत्वे च तत्साधनानुग्राहकयोरपि तादृशस्वभावत्वमर्थादेव सिध्यतीत्यर्थः। स्वतःप्रामाण्यन्यायसिद्धमिति पाठः।

—२१ ननु प्रदीपादिष्वदर्शनादित्यसिद्धो हेतुः। दर्पणे व्यक्तौ च दर्शनादिति चेत्तत्राह—न चेति।

४९—१ तद्दोषेति। अन्यथाज्ञानहेतुत्वादेव प्रतिफलनस्य दोषत्वमिति भावः।

—४ आकारः। अपृथक्सिद्धो धर्मः।

—५ वस्तुत इति। यथा जातेर्व्यक्तिनिष्ठत्वेनोपलब्धिर्भवति। तस्याः कारणं वस्तुतस्तयोर्धर्मधर्मिभावः। मुखस्य दर्पणनिष्ठत्वेनोपलब्धिर्भवति। तस्याः कारणं दोषतः प्रतिफलनम्। तथाहंकारनिष्ठत्वेन या संविदुपलब्धिर्भवति तस्याः कारणं किंचिन्न संभवतीत्यर्थः।

—८ ननु ज्ञानस्य प्रत्यक्त्वात्तस्यैवात्मत्वमस्त्वित्यत आह—अहंभावेति। ज्ञानेऽहंभावाभावेन स्वस्मै प्रकाशमानत्वरूपप्रत्यक्त्वाभावान्न प्रत्यक्त्वं ज्ञानस्यात्मत्वसाधकं किं त्वहंताविशिष्टस्य ज्ञातुरेवेत्यर्थः। सुषुप्तावप्यस्फुटोऽहंभावोऽस्त्येव।

—९ तमेव साधयति—तमोगुणेति। तमोगुणकृताभिभवेनाहमर्थस्य किंचिद्विशेषणविशिष्टत्वेन प्रतिभासो न भवति। परागर्थः। इदमर्थः। तस्यानुभवाभावेनाहमर्थस्येतरव्यावृत्तत्वेन प्रतिभासो न भवति। इतरव्यावृत्तत्वेन प्रतिभास एव विविक्तप्रतिभासः। विशेषणविशिष्टत्वेन प्रतिभास एव स्फुटावभासः।

—११-२ ननु यदि सुषुप्तावहंभावोऽस्फुटस्तर्हि तदस्तित्वे किं प्रमाणमिति चेद्भवत्संमतानुभूतावपि तुल्यमेतदित्याह—भवदिति। यथा तव ज्ञातृज्ञेयसंबन्धाभावेन ज्ञानस्य सुषुप्तावस्फुटावभासस्तथा ममापीदमर्थानुभवाभावेनाहमर्थस्यास्फुटावभास इत्याशयः। वक्तव्यमिति। अन्यथा धियोऽप्यप्रकाशत्वप्रसङ्गो भवतो दुर्वारः स्यात्।

४९—१३ अहंभाववियुक्ता। ज्ञातृसंबन्धरहिता। अर्थान्तरप्रत्यनीकाकारा। ज्ञेयादिसमस्तविशेषरहिता। ज्ञप्तिरहमिति। अत्राहंशब्दोपादानं प्रत्यक्त्वसिद्ध्यर्थम्। तथा च परपक्षानुगुणः परामर्शो नास्तीति सिद्धम्।

—१४ अथ स्वपक्षानुगुणं परामर्शं दर्शयति—एवं हीति।

—१७ यथेदानीमिति। पूर्वं कृतात्स्वापादिदानीमहं सुखमनुभवामीत्येव सुखमहमस्वाप्समिति परामर्शस्यार्थो न तु स्वापकाल इति शङ्काशयः।

—१८ उत्तरयति—अतद्रूपत्वादिति। सुखमहमस्वाप्समिति वाक्यात्स्वरसतस्त्वदुक्तार्थाप्रतीतेः। न हि मन्दमगच्छमिति—वाक्यादिदानीं यथा मान्द्यं भवति तथा पूर्वमगच्छमित्यर्थः प्रतीयत इति भावः।

शङ्कते—न चेति। स्वरसतः प्रतीतोऽप्यर्थो नोपपद्यते। अहमर्थस्यात्मनोऽस्थिरत्वात्। अतः सोऽर्थस्त्याज्य एवेत्याशयः।

—१९ उत्तरयति—यत इति। कृतमिति कायिकः परामर्शः। अनुभूतमिति मानसः। अवोचमिति वाचिकः। एभिः परामर्शैरात्मनः स्थिरत्वमेव सिध्यतीति स्वारसिकार्थस्य न काचिदनुपपत्तिरिति भावः।

—२१-२ पुनः शङ्कते—एतावन्तमिति। उत्तरयति—ततः किमिति। अहमर्थो न निषेधविषय इत्याशयः।

५०—१ अमुमाशयमजानानः शङ्कते—न किंचिदिति। परिहरति—नेति।

—४ सुषुप्तिसमयेऽपीति। अहं न किंचिदवेदिषमिति—परामर्शेऽहमर्थो न प्रतिषिध्यते। अहंशब्देन तस्य परामर्शेन तदानीं तस्यानुवर्तमानत्वात्। किं तु तदीयवेदनमेव प्रतिषिध्यते। भवांस्त्वनेनैव परामर्शेन प्रतिषिध्यमानस्यापि वेदनस्य सिद्धिं कल्पयत्यनुवर्तमानस्याप्यहमर्थस्यासिद्धिं कल्पयतीति विरुद्धं वदन्देवानां प्रियो मूर्ख एवेत्यर्थः। 'देवानामेव साधयतु' इति पाठे देवाः प्रतिवचनं न ददतीति तदग्र एव भवान्यथेच्छं वदतु न तु ममाग्र इत्यर्थः।

—९-१० शङ्कते—मामपीति। परिहरति—स्वानुभवेति। अनुभवानुसारेण न ब्रवीषीत्यर्थः।

—११ पुनः शङ्कते—अहमिति।

—१२ तदुच्यत इति। अहंशब्देन कस्यानुवृत्तिर्मामित्यनेन च कस्य निषेधस्तदुच्यत इत्यर्थः।

५१—१ साक्षाद्द्रष्टरीति। साक्षाच्छब्दादिनिप्रत्ययो भवति द्रष्टर्यर्थे अभिधाने संज्ञायां सत्यामिति सूत्रार्थः। साक्षद्रष्टा साक्षीत्युदाहरणम्।

५१—४ **आत्मने स्वयमिति**। सुषुप्तौ भासमान आत्माहमित्येव भासते स्वस्मै प्रकाशमानत्वाज्जाग्रदात्मवदित्यनुमानमनेन सूचितम्।

—८ **तथा सतीति**। ज्ञानसंतत्युच्छेद एव मोक्ष इति बौद्धमतं स्वरूपनाशस्यापुरुषार्थत्वेन दूषयता त्वयापि शब्दान्तरेण स्वरूपनाश एवोक्त इति भावः।

—११ **ज्ञानप्रतीतेरेवेति**। एवं च मोक्षे ज्ञानरूपधर्मस्य सत्त्वेन तद्धर्मिणोऽहमर्थस्यापि सत्त्वमङ्गीकार्यमिति सिद्धम्।

—१२-६ प्रत्युत तदनङ्गीकारे बाधकमाह—**अपि चेति**। **भ्रान्त्या वेति**। यथा वास्तविकदुःखे दुःखिनः स्वदुःखनाश एवापेक्ष्यते न तु स्वविनाशस्तथा दुःखभ्रमेपि द्विचन्द्रज्ञानादिभ्रान्तिमतः स्वभ्रमनाश एवापेक्ष्यते न तु स्वविनाश इति भावः। **आध्यात्मिकादीनि**। आदिशब्देनाधिभौतिकाधिदैविकयोः संग्रहः। आध्यात्मिकं द्विविधं शारीरं मानसं च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। मानसं कामक्रोधादिनिमित्तम्। आधिभौतिकं मानुषपशुपक्षिसर्पस्थावरादिनिमित्तम्। आधिदैविकं यक्षराक्षसग्रहाद्यावेशनिमित्तम्। **अपुनर्भवमिति**। अपोह्येतिक्रियाविशेषणमेतत्। न पुनर्भवः पुनरुत्पत्तिर्यत्रेत्यर्थः। **अनाकुलः**। आगामिदुःखशङ्कया मनःक्षोभ आकुलत्वं तद्रहितः। **अपवर्गपदेवेति**। तथा च मोक्षमार्गप्रवृत्त्यन्यथानुपपत्त्या मोक्षेऽहमर्थोऽनुवर्तत एवेत्यर्थापत्तिप्रमाणेन सिद्धमिति भावः।

—१८ शङ्कते—**अहमिति**।

५२-१ अनुमानमाह—**स चेति**।

—६ **संसारित्वादीति**। आदिशब्देन रागद्वेषदुःखादिसंग्रहः।

—७ **मोक्षविरोधादिति**। मोक्षेण सहाज्ञत्वादीनां विरोधान्न तत्प्रसङ्ग इत्यर्थः। तथा च श्रुतिः 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' (छा. ७।२६।२) इति। कारणं च कार्यमुत्पादयत्येवेति न नियमः। घटानुत्पादकानामपि दण्डानां दर्शनादित्यहंभावे सत्यपि न तत्कार्यस्याज्ञत्वादेः प्रसक्तिरिति बोध्यम्। अथ कार्यकारणभावोऽपि नास्तीत्याह—**अज्ञत्वादीति**। संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण कार्यकारणभावस्वीकारे त्वन्मतेऽपि संसारित्वानुभवयोस्तथात्वापत्तिः।

अहंप्रत्ययस्याज्ञत्वाद्यहेतुत्वमुपपादयति—**अज्ञानमिति**। क्वचित्केवलं स्वरूपाज्ञानम्। यथा तमसि घटादेः। क्वचित्तु तत्पूर्वकमन्यथाज्ञानम्। यथा पीतः शङ्ख इति। अत्र पाण्डुरत्वविशिष्टशङ्खस्वरूपस्याज्ञानं वर्तत एव। क्वचिच्च तत्पूर्वकं विपरीतज्ञानम्। यथा शुक्ताविदं रजतमिति।

५२—१० तत् । अज्ञत्वम् ।

ब्रह्मेति । ब्रह्मात्मभावस्यापरोक्षेण प्रत्यक्षेण निर्धूता निरवशेषा समग्राऽविद्या येषामित्यर्थः ।

—१४-५ ब्रह्मणोऽपि तथा प्रतिपत्तिमाह—सकलेति । अज्ञानविरोधिनो नाज्ञानवश्यत्वमिति भावः । न हि विषहन्तुर्गरुडस्य विषवश्यत्वं दृश्यते । सच्छब्देति । सच्छब्दः सदिति प्रत्ययश्च तन्मात्रभाजः । मात्रचा नामरूपव्यावृत्तिः । एवमेव । अहंप्रत्ययघटित एव । तिस्रो देवताः । तेजोबन्नरूपा अनुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः । देवतानुप्रवेशनामरूपव्याकरणबहुभवनक्षराक्षरातीतत्वादयो धर्मा नान्तःकरणरूपाहंकारस्य संभवन्ति । एषु श्रुतिस्मृतिवाक्येष्वहंशब्देन चिन्मात्रमुपलक्ष्यत इति चेल्लक्षणैव दोषः । अनेकवचनोपादानं 'महाभूतान्यहंकारः' 'अहंकारं बलं दर्पम्' इत्यादिपरमतोपपादकद्वित्रवचनापेक्षयाधिक्यद्योतनार्थम् ।

५३-६ क्षेत्रान्तर्भाव इति । 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते' इति पूर्वमुक्त्वा तादृशशरीररूपक्षेत्रेऽहंकारस्यान्तर्भावः कृतः । अहंकारस्यात्मस्वरूपत्वे तु स न संभवतीत्याशयः ।

—८ उच्यत इति । अहंभावोऽहंकारश्च भिन्नः । तत्राहंभाव एवात्मस्वरूपम् । अहमहंभावं करोत्यनेनेत्यहंकारः । अभूततद्भावे च्विप्रत्ययः । अनेन ह्यहंकारेणानहंभूतेऽनात्मभूते देहादावहंबुद्धिरुत्पद्यते । अयमहंकार एव क्षेत्रान्तर्भूतो नाहंभाव इति भावः ।

अहमित्येव । नत्वहंकार इति ।

—१३ शास्त्रेषु । 'अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः'(गी.१६।१८) इत्यादिषु । तत्र ह्येतादृशान्नराधमान्संसारेषु क्षिपामीत्यग्र उच्यत इति तेषामहंकारादीनां हेयत्वमर्थात्सिध्यति ।

—१४ बाधकापेता । बाधकरहिता ।

—२१-२ उक्तार्थे आत्मसिद्धिग्रन्थमुदाहरति—अत इति । प्रत्यक्षसिद्धत्व धर्मधर्मिभावेन प्रतीतत्वम् । उक्तन्यायः । प्रागुक्तार्थापत्तिः । आगमः । उक्तश्रुतिवाक्यानि । अविद्यायोगः । अनात्मन्यात्मबुद्धिरूपाविद्यायोगात्समनन्तरोक्त शरीरे ज्ञातृत्वभ्रान्तिर्न तु ज्ञानत्वभ्रान्तिः ।

५४-१ ज्ञानस्यानात्मत्वे चात्मसिद्धिग्रन्थमुदाहरति—देहेन्द्रियेति । अत्र धियोऽन्यत्वमात्मनः स्पष्टमेवोक्तम् ।

—६ शास्त्रबाध्यत्वमिति । अद्वैतशास्त्रेण भेदप्रत्यक्षस्य बाध्यत्वमित्यर्थः ।

—८ तिमिरादीति । आदिशब्देन सादृश्यं गृह्यते । तद्धि निर्वापितायाः सद्यः समुत्पादितायाश्च ज्वालाया ऐक्यभ्रमहेतुः ।

५४—१४ **तन्मूलत्वेनेति** । ब्रह्मव्यतिरिक्तस्य सर्वस्य भेदवासनामूलत्वेन शास्त्रस्यापि तत्त्वं बोध्यम् । भेदवासनामूलत्वेनासत्यमेव शास्त्रं सत्यस्य ब्रह्मज्ञानस्य सूचकमिति मृषावादिनो मतम् ।

—१७ **परत्वादिति** । निषेध्योपस्थापकप्रत्यक्षप्रमाणापेक्षया तन्निषेध्यसापेक्षस्य निषेधकशास्त्रस्य पश्चादुपस्थितिकत्वेन परत्वम् । नेदं रजतमिति परज्ञानस्येदं रजतमिति पूर्वज्ञानबाधकत्वं दृष्टमेव ।

—१९–२० **भ्रान्तोऽयमितीति** । नायं सर्प इति वदन्भ्रान्त इति श्रोत्रा परिज्ञात इत्यर्थः । भ्रान्तिश्च वस्तुसती श्रोतुर्भ्रान्त्या कल्पिता वा । **भयानिवृत्तीति** । उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः ।

—२१ **श्रवणावगतेति** । तथाच मननमूलभूतश्रवणकाल एव ब्रह्मात्मैकत्वावगतौ सत्यां निखिलभेदस्य काल्पनिकत्वेन दोषमूलत्वनिश्चयात्तदन्तर्गतस्य शास्त्रस्यापि दोषमूलत्वं ज्ञायत इति भावः ।

५५–३ **सर्वविषयविरक्तत्वादिति** । निर्विषयत्वादित्यर्थः । न हि ज्ञानं स्वाविषयं प्रकाशयतीति भावः । शास्त्रेति । निर्विषयाया अप्यनुभूतेः किंचिदर्थबोधकत्वे प्रत्यक्षस्याप्यसंभाव्यमानदोषतां किं न बोधयेदित्याशयः ।

—४ **नापीति** । ऐन्द्रियकं प्रत्यक्षमपीममर्थं नावगमयतीत्यर्थः ।

**दोषमूलत्वेन** । भेदवासनारूपदोषमूलत्वेन ।

—५ **तन्मूलत्वादेव** । इतरप्रमाणानां प्रत्यक्षमूलत्वादेव । **प्रमाणानीति** । इममर्थमवगमयन्तीति संबन्धः ।

—१० **यौक्तिकबाधादेवेति** । युक्त्या बाधो यौक्तिकबाधः । धूमबुद्ध्या गृहीतस्य बाष्पस्य वह्निनिश्चयहेतुत्वादर्शनात् ।

**अथोच्येतेति** । प्रत्यक्षेण ज्ञातस्य घटादेः शास्त्रेण पश्चाद्बाधो दृश्यते । एवं शास्त्रेण ज्ञातस्य ब्रह्मणो न केनापि पश्चाद्बाधो दृश्यते । तादृशं ब्रह्मैव परमार्थ इत्याशयः ।

—१५–६ **काचादीति** । काचो नेत्ररोगः । 'काचबिन्दु' इति प्रसिद्धः । आदिना कामल–( कावीळ इति प्र. ) संग्रहः । **पुरुषान्तरागोचरेति** । अनेन द्विचन्द्रज्ञानस्य परतोऽबाधितत्वं सूच्यते । **तैमिरिकजनस्येति** । तैमिराख्यनेत्ररोगविशेषविशिष्टजनस्येत्यर्थः । **अज्ञातस्वतिमिरस्येति** । अनेन स्वतोऽप्यबाधितत्वं सूच्यते ।

—१८ **तत्** । द्विचन्द्रज्ञानम् । मिथ्या न भवतीति न किं तु मिथ्यैवेत्यर्थः । एवमेव पशुपक्ष्यादीनां देहात्मज्ञानं तद्दृष्ट्याऽबाधितमपि मिथ्यैवेत्यप्यत्र दृष्टान्तत्वेन योजनीयम् ।

५५—१९ **अविद्यामूलत्वेन**। अविद्याजन्यभेदवासनामूलकशास्त्रजन्यत्वेन।

—२२ **अविद्यावदिति**। अविद्याऽस्ति यस्य तदविद्यावच्छास्त्रम्। प्रयोजकत्वं पञ्चम्यर्थः। अविद्यामूलकशास्त्रोत्पन्नज्ञानविषयत्वादित्यर्थः।

५६-१ **असत्येति**। असत्यो यः शास्त्ररूपो हेतुस्तज्जन्यज्ञानविषयत्वादित्यर्थः।

—३ नन्वयमसिद्धो हेतुः। यतोऽसत्यस्यापि सत्योत्पत्तिहेतुत्वं दृश्यत इत्याशयेनाशङ्कते—**न चेति**।

—५ परिहरति—**स्वाप्नज्ञानस्येति**।

—६ विषयाणामेवेति। इदं पूर्वपक्षिमतानुसारेण। स्वमते तु विषयाणामपि सत्यत्वमग्रे (श्रीभाष्य पृ. ९६) वक्ष्यते।

—९ **दर्शनं तु**। ज्ञानं तु। **अर्थाः**। विषयाः।

—१० **मायामयम्**। मिथ्याविषयकम्। **सत्यमेवेति**। मन्त्रौषधादीनां ज्ञानकारणानां सत्यत्वात्।

—११ **विषयेन्द्रियादीति**। विषयदोषः सादृश्यादिः। इन्द्रियदोषः काचादिः। आदिशब्देन दूरत्वादिदोषसंग्रहः। न चासत्याद्दोषात्कथं सत्यज्ञानोत्पत्तिरिति वाच्यम्। दोषस्यासत्यत्वाभावात्।

—१२ **सत्येवेति**। सर्पसंनिधानज्ञानं कारणं सत्यम्। दष्टबुद्धिश्च सत्यैव। दंशः परमसत्योऽस्तु नामेति भावः।

—१४ **वस्त्विति**। जलादि सत्यम्। तत्कृतचाक्षुषतेजःप्रतिघातश्च सत्य एव।

—१५ **उत्पत्तिमत्त्वादिति**। न ह्यसत्यं शुक्तिरजतमुत्पत्तिमदपि कार्यकरमिति भावः। अर्थभूता प्रयोजनभूता या क्रिया तत्कारकत्वादित्यर्थः।

—१६-७ ननु स्वप्नादौ ज्ञानकारणीभूतानां हस्त्यादीनां विषयाणामसत्त्वे कथं तस्मात्सत्यज्ञानोत्पत्तिरित्याशयेनाशङ्कते—**हस्त्यादीनामिति**। परिहरति **नैतदिति**। **बुद्धीनां सालम्बनत्वमात्रेति**। सविषयत्वमात्रेत्यर्थः। न तु तस्य विषयस्य सत्यत्वापेक्षेति भावः।

—१८ मिथ्याभूतस्य कथं विषयत्वमित्यत्राह—**अर्थस्येति**। अतीतादिविषयत्वदर्शनात्तमसि वस्तुसतोपि घटादेर्विषयत्वादर्शनाच्चेति भावः।

५७-१ **प्रतिभासमानता चेति**। प्रतिभासमानतायाः सत्यो दोष एव कारणं नासत्यो विषय इत्यर्थः।

विषयस्यैव कथमसत्यत्वमित्यत्राह—**स त्विति**। अर्थस्त्वित्यर्थः। एवं चोत्पत्तिहेतुत्वं ज्ञानहेतुत्वं च सत्यस्यैवेति सिद्धम्।

५७–५ उपायत्वायोगात्। वर्णबुद्धिहेतुत्वायोगात्।

—६ निरुपाख्यस्य। तुच्छस्य वन्ध्यापुत्रादेः।

अर्थेति। वर्णबुद्धिहेतुत्वेन प्रतिपादिता या वर्णात्मना प्रतिपन्ना रेखा तस्या-मस्त्यंशद्वयम्। वर्णात्मता तद्रूपेण बुद्धिश्च। तत्र प्रथमांशस्यासत्यत्वेन हेतुत्वा-संभवेऽपि द्वितीयांशस्य सत्यत्वात्तस्यैव हेतुत्वमङ्गीक्रियत इति शङ्काशयः।

—७ परिहरति–एवं तर्हीति। असत्यात्सत्योत्पत्तिसिद्ध्यर्थं हि त्वया रेखो-दाहरणं प्रदर्शितम्। तत्रापि त्वदुक्तरीत्याऽसत्यात्सत्यबुद्धिर्नोत्पद्यते। कारण-भूताया बुद्धेः सत्यत्वादेवेत्यर्थः।

—८ उपायेति। वर्णबुद्धिरूपद्वितीयांशस्यैव कारणत्वे कार्यकारणयोरैक्यप्र-सङ्गः। वर्णबुद्धेरेव कार्यत्वादिति भावः।

—९ अथ प्रथमांशस्यैव कारणत्वे दूषणान्तरमाह–रेखाया इति।

—१४ उदाहरणान्तरं परिहरति–रेखागवयादिति। गवयचित्रादित्यर्थः।

—१६ स्फोटवादाश्रयेणोच्यमानमुदाहरणान्तरं तदाश्रयेणैव प्रथमतः परि-हरति–न चेति। नादैः स्फोटयत इति व्युत्पत्त्या स्फोट एकरूपः शब्दः।

—१७ नानेति। कत्वखत्वादिविशेषविशिष्टतत्तन्नादकृतोऽभिव्यक्तिविशेषः सत्यः। तद्विशिष्टः सत्यशब्दोऽर्थज्ञानहेतुः। कत्वादेरारोपेपि तज्ज्ञानं सत्यमेव। तदेव चार्थज्ञानहेतुरित्याशयः।

—१९ संप्रति स्फोटवादं खण्डयति–शब्दस्येति।

५८–१ बोधकस्यैवेति। एवकारेण स्फोटव्यावृत्तिः।

—१० शास्त्रजन्यज्ञानस्य न केनापि पश्चाद्बाधो दृश्यत इति पूर्वपक्ष्युक्तं (श्रीभाष्य–पृ. ५५ पं. १२) खण्डयति–पश्चात्तनेति।

—११ तस्यापि। शास्त्रजन्यज्ञानस्यापि।

—१२ तत्। शून्यमेव तत्त्वमिति। एतदपि। शास्त्रजन्यज्ञानमपि। त्वयेति। शास्त्रस्याविद्याजन्यभेदवासनामूलकत्वं वदतेत्यर्थः।

—१३ तस्यैव। शून्यमेव तत्त्वमित्यस्यैव। सर्वशून्यवादिनो मते निषेध्या-भावेन ततः परं निषेधानुदयादिति भावः।

–५९–६ ज्ञानैकरसेति। विज्ञानघन इति श्रुतौ ज्ञानैकरसत्वेन प्रतिपाद-नान्निर्विशेषत्वम्। वस्तुमात्रशब्देन श्रुतेः सगुणे ब्रह्मणि तात्पर्याभावः सूच्यते। सदेवेति। पूर्वं येनाश्रुतम् (छा० ६।१।३) इति श्रुतौ कृताया एकवि-ज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञायाः समर्थिकेयं श्रुतिः। घटादिषु या सत्ता सा ब्रह्मसत्तैव ब्रह्म च सत्स्वरूपमेवेति तादृशब्रह्मसत्तयाऽर्थादेव घटादिज्ञानं भवतीति तात्पर्यम्।

५८-१७ **एकविज्ञानेनेति** । ब्रह्मणा ज्ञातेनाज्ञातमपि घटादि ज्ञातं भवतीत्येव प्रतिज्ञार्थः । न तु ब्रह्मसत्तया सर्वं ज्ञातं भवतीति । मृदादिदृष्टान्तानुरोधात् । कारणसत्तया कार्यज्ञानायोगाच्च । न हि मृत्पिण्डसत्तया घटज्ञानं भवति । किं तु मृत्पिण्डज्ञानेनेति । तथा च नानया श्रुत्या सन्मात्रस्वरूपब्रह्मसिद्धिः ।

—२४ **अथ परेति** । अस्यामपि श्रुतावद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ( मु. १।१।६ ) इत्यनेन प्रकृतिसंबन्धिनो गुणा एव ब्रह्मणि निषिध्यन्ते । न सर्वथा निर्गुणत्वं प्रतिपाद्यते । अत एव तदुत्तरं नित्यं विभुम् ( मु. १।१।६ ) इत्यत्र नित्यत्वादयो गुणा उक्ता इति भावः ।

५९-५ **अनेकविशेषणेति** । यथा नीलो घट इत्यत्र नीलत्वविशिष्टो घटत्वविशिष्टश्च य एकोऽर्थो घटरूपस्तस्यैवाभिधानं नीलशब्देन घटशब्देन च क्रियते तथा सत्यं ज्ञानमित्यत्रापि सत्यादिशब्दैः सत्यत्वादिगुणविशिष्टस्यैव ब्रह्मणः प्रतिपादनं न निर्गुणस्येति बोध्यम् ।

—६ **प्रवृत्तीति** । नीलशब्दस्य नीलत्वं प्रवृत्तिनिमित्तम् । नीलत्वं निमित्तीकृत्यैव नीलशब्दस्य घटाद्यर्थे प्रवृत्तत्वात् । घटशब्दस्य च घटत्वं प्रवृत्तिनिमित्तम् । तादृशप्रवृत्तिनिमित्तभेदेन नीलघटपदयोर्यद्घटरूपैकार्थप्रतिपादकत्वं तदेव सामानाधिकरण्यमित्यर्थः ।

—७-८ **मुख्यार्थैरिति** । स्वमतमेतत् । पूर्वपक्षिणा तु सत्यज्ञानादिपदानां तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वं प्रागुक्तम् (श्रीभाष्य–पृ. २० प. ३) । तदनुसारेऽप्याह–**तत्तद्गुणेति** । **अवश्याश्रयणीय इति** । सिद्धे च प्रवृत्तिनिमित्तभेदे ब्रह्मणः सगुणत्वमर्थादेव सिध्यतीत्याशयः ।

—१० **न चेति** । सत्यज्ञानादिगुणविरोधिनो येऽसत्यत्वाज्ञानादयस्तत्प्रत्यनीकता या ब्रह्मरूपवस्तुनि वर्तते सा न धर्मान्तरं किं तु वस्तुस्वरूपमेवेति न लक्षणापक्षे सगुणत्वं सिध्यतीति शङ्काशयः ।

—१३ **ननु** सिद्धान्तिमतेऽपि सत्यज्ञानादिपदानां भिन्नभिन्नार्थत्वाद्घटपटपदयोरिव सामानाधिकरण्यं न संभवतीति चेत्तत्राह–**न चेति** । न हीत्यर्थः । न केवलमविरुद्धं प्रत्युतानुकूलमेवेत्यर्थः ।

—१८ **अद्वितीयपदमिति** । सदेवेत्यनेन विजातीयभेदव्यावृत्तेरेकमेवेत्यनेन सजातीयभेदव्यावृत्तेश्च सिद्धौ परिशेषादद्वितीयपदेन स्वगतभेद एव व्यावर्त्यत इत्याशयः ।

—१९ **सर्वशाखेति** । एतन्न्यायस्वरूपं प्राक् (विवृति–पृ. २५प.२५) उक्तम् ।

६०-५ **स्वव्यतिरिक्तेति** । ब्रह्मापेक्षयाऽन्यजगत्कारणं नास्ति किं त्वेकमेव

ब्रह्म जगदुत्पादनसमर्थमित्येवाद्वितीयपदस्य तात्पर्यम् । एकमेवेत्यनेन तु निमित्तकारणान्तरं व्यावर्त्यत इति न पुनरुक्तिः ।

६०–७ **विचित्रशक्तियोगमेवेति** । न तु निर्गुणत्वमित्यर्थः ।

—८ शङ्कते–**अविशेषेणेति** ।

—१५ **विपरीतफल इति** । सर्वशाखाप्रत्ययन्यायेन हि न श्रुत्युक्तानां गुणानां त्यागो भवति किं त्वनुक्तानां संग्रह एवेति भावः ।

—१८ **न चेति** । निर्गुणब्रह्मवादिनो मते सगुणवाक्यापेक्षया निर्गुणवाक्यस्यापच्छेदन्यायेन बलीयस्त्वान्न निर्गुणसगुणवाक्यविरोधः । सगुणब्रह्मवादे तु तथा वक्तुमशक्यत्वात्स्यादेव विरोध इति शङ्काशयः ।

—१९ परिहरति–**प्राकृतेति** । एवं च विषयभेदान्न विरोध इति भावः ।

—२१ **ज्ञानमात्रस्वरूपवादिन्यः** । विज्ञानघन इत्याद्याः ।

६१–३–६ **ज्ञातृत्वमेवेति** । एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता । **लोकान्नु सृजा इति** । इति श्रुतयो वदन्तीति संबन्धः ।

–७–१६ **नित्य इति** । अत्र मन्त्रे कामप्रदत्वगुण आत्मनः सूचितः । चेतनः । ज्ञाता । **ज्ञाज्ञाविति** । अत्र ज्ञातृत्वमीश्वरत्वं च सूचितम् । **तमीश्वराणामिति** । अत्रेश्वरत्वदेवतात्वपतित्वानि सूचितानि । ईश्वरत्वं च नियन्तृत्वम् । तेन ज्ञातृत्वं सिध्यति । ज्ञातृत्वमन्तरेण नियन्तृत्वायोगात् । देवतात्वं कर्माराध्यत्वम् । **कार्यं** शरीरम् । करणमिन्द्रियादि । **न तत्सम इति** । अस्मिन्विशेषनिषेध एवाद्वितीयमितिसामान्यनिषेधस्य पर्यवसानं बोध्यम् । अत्र च ज्ञानशक्त्यादीनां स्वाभाविकत्वं स्पष्टमेवोक्तम् । **स्वाभाविकानिति** । अनेन गुणानामविद्याकल्पितत्वनिरासः ।

–१७–२० **विपर्ययमिति** । अस्य विविनक्तीत्यनेन संबन्धः । श्रुतिरेव सगुणनिर्गुणवाक्ययोर्विषयविभागं दर्शयतीत्यर्थः । न चापच्छेदन्यायेन सगुणवाक्यानां बाध्यत्वमिति वाच्यम् । यत्र परशास्त्राविषये पूर्वशास्त्रस्य चारितार्थ्यं तत्रैव तन्न्यायप्रवृत्तेः । अत्र तु निर्गुणवाक्याविषये सगुणवाक्यस्य न क्वचिदपि चरितार्थ्यमिति निर्गुणवाक्यविरोधेनैव सगुणवाक्योपस्थितिः । यथा प्रतियोगिसापेक्षत्वेन न हिंस्यादिति निषेधस्य परत्वेपि तद्विरोधेनैव यागीयहिंसाविधेरुपस्थितिरित्यपच्छेदन्यायाप्रवृत्त्या यागीयहिंसाविधेर्न बाध्यत्वं तद्वदेवात्र बोध्यम् । **मिथ्याविषयतेति** । अविद्याकल्पितत्वेन मिथ्याभूता ये गुणास्तद्विषयकत्वं सगुणवाक्यानां पूर्वपक्षिणा यत्प्रतिपादितं तन्नाशङ्कनीयमित्यर्थः ।

—२१ ननु ब्रह्मणः सगुणत्वे तस्य वागादिविषयत्वेन यतो वाच इति श्रुतिविरोधोऽत आह–**भीषेति** । ब्रह्मणो वागाद्यविषयत्वं तु न निर्गुणत्वमूल-

कम् । किं तु गुणातिशयमूलकम् । तथैवोपक्रमात् । आदौ भीषास्मादित्यत्रा-ज्ञापयितृत्वगुण उक्तः । ततस्ते ये शतमित्यादिना मनुष्यगन्धर्वादिक्रमेणोत्तरोत्तरं ब्रह्मपर्यन्तमानन्दगुणस्य शतगुणाधिकत्वमुक्तम् । यतो वाच इत्यत्र ब्रह्मणो निर्गु-णत्वेऽभिधेये तु गुणानां न्यूनतैव प्राक्प्रतिपादिता स्यान्नाधिक्यम् । किं च श्रुतिरेव ब्रह्मस्वरूपापेक्षयाऽपि तद्गुणेष्वादराधिक्यं दर्शयति । श्रुतौ ह्यानन्दं ब्रह्मणो विद्वानित्युक्तम् । न त्वानन्दान्वितं ब्रह्म विद्वानिति ।

६२-२ **ब्रह्मवेदनफलम्** । ब्रह्मज्ञानस्य फलं सर्वकामप्राप्तिरूपम् । **अवगमयत्** । बोधयत् ।

—३ **विपश्चितेति** । विपश्चित्त्वं च ब्रह्मगुण एवात्र भोग्यत्वेनोक्तः ।

—४ **ब्रह्मणा सहेति** । भोग्यत्वेन ब्रह्मसाहित्यं कामानाम् । न तु भोक्तृत्वेन तच्छब्दवाच्योपासकस्य । **तद्गुणानिति** । ब्रह्मगुणानित्यर्थः । कामानश्नुत इत्यत्र किंनिष्ठान्कामानित्याकाङ्क्षायां संनिधानाद्ब्रह्मनिष्ठानिति प्रतीतेः ।

—५ **तस्मिन्यदिति** । तस्मिन्ब्रह्मणि यदन्तरन्तर्वर्त्यपहतपाप्मत्वादि-गुणजातं तदन्वेष्टव्यमिति गुणप्राधान्यं दहरोपासनायां यथोक्तं तथैवात्राप्युपा-सनायां सहशब्देन गुणप्राधान्यं द्योत्यते ।

—६—७ ननु फलप्रतिपादके सोऽश्नुत इत्यादिवाक्ये गुणप्राधान्येऽपि कथमु-पासनायां गुणप्राधान्यमत आह—**फलोपासनयोरिति** । **यथाक्रतुः** । यथा-कामः । इच्छानुरूपं फलं तथैव चोपासनेति भावः ।

—९ शङ्कते—**यस्यामतमिति** । ब्रह्मणो निर्गुणत्व एव तस्य ज्ञानाविषयत्वं संगच्छत इति शङ्काशयः ।

—१२ **न स्यादिति** । ब्रह्मणो ज्ञानाविषयत्वे ब्रह्मज्ञानमेव न संभवतीत्यर्थः ।

—१३ ब्रह्मणो ज्ञानविषयत्वे श्रुतेरादरातिशयं दर्शयति—**असन्नेवेति** ।

—१६ **अत इति** । उक्तश्रुतिषु ब्रह्मज्ञानस्यैव मोक्षसाधनत्वेन सिद्धत्वादि-त्यर्थः । यद्यपि 'विद्ययामृतमश्नुते' (ई. ११) इत्यादिषु कासुचिच्छ्रुतिषु सामान्यतो ज्ञानस्यैव मोक्षसाधनत्वमवगम्यते तथापि तत्र ज्ञानं ब्रह्मविषयकमेव न तु प्रपञ्चमिथ्यात्वविषयकम् । ब्रह्मविदाप्नोतीति श्रुतेः सर्वशाखाप्रत्ययन्या-यादिति भावः ।

—१७ अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति—**ज्ञानं चेति** । **इत्युक्त-मिति** । निर्गुणपरत्वेन पूर्वपक्ष्युक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादना-दिति भावः ।

६२-१७-९ ननु ब्रह्मणो ज्ञानविषयत्वे यस्यामतमित्यस्य कोऽर्थस्तथा यतो वाच इति श्रुतिविरोधश्चेति चेत्तत्राह-**यतो वाच इति** । **अपरिमितगुणस्येति** । अत एवोक्तम्—

संख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः ।
आनन्त्यात्प्रथमो राशिरभावादेव पश्चिमः ॥

इति । प्रथमो राशिः । गुणराशिः । पश्चिमो दोषराशिः । **परिच्छेदः** । इयत्ताविशेषः ।

-२४-५ एवं ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति-**यत्त्विति** । **तदागन्तुकेति** । 'ज्ञातात्मा न ज्ञानस्वरूपः किं तु जडः । ज्ञानं तु तस्यागन्तुको धर्मः' इति नैयायिकाद्युक्तकुतर्कमवलम्ब्य तादृशमात्मानं न पश्येः, अपि तु ज्ञातारमपि ज्ञानस्वरूपमेव पश्येरिति श्रुत्यर्थः ।

६३-५ **अन्यथा** । आत्मनो ज्ञातृत्वाभावे ।

-८-९ **आनन्दमात्रमेवेति** । आनन्दरूपस्यानन्दाश्रयत्वाभावादित्याशयः । **परिहृतमिति** । ज्ञानानन्दयोरैक्यादिति भावः ।

—१० तदेवाह-**ज्ञानमेवेति** ।

तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः सहप्रयोगोऽनुपपन्न इत्यत आह-**विज्ञानमानन्दमिति** । स्वप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदात्सहप्रयोग उपपद्यत इति भावः ।

—११ **अत एवेति** । ज्ञानानन्दशब्दयोरेकविषयत्वादेवात्मन एकरसता भवदभिमता संगच्छत इत्याशयः ।

-१७-२२ अथ भेदनिषेधपरत्वेन पूर्वपक्ष्युक्तां श्रुतिं योजयितुमनुवदति-**यदिदमिति** । परिहरति-**तत्कृत्स्नस्येति** । जगतो ब्रह्मकार्यत्वं तदन्तर्यामिकत्वं च तज्जलानिति श्रुतिसिद्धम् । चिदचिद्विशिष्टं ब्रह्मैव जगतः कारणं जगतोऽन्तर्यामि चेति जगतो ब्रह्मात्मकत्वेन ब्रह्मणा सहैक्यम् । एतादृशैक्यस्य प्रत्यनीकं विरुद्धं यन्नानात्वं तदेवोक्तश्रुतिभिर्निषिध्यते । सामान्यनिषेधस्य विहितविशेषातिरिक्तविषयत्वात् । यस्य ब्रह्म कारणं न भवति नाप्यन्तर्यामि भवति तादृशं ब्रह्मभिन्नं वस्तु किंचिदपि नास्तीति यावत् । ब्रह्मकार्यस्य तु नानात्वं बहु स्यामिति श्रुत्यनुरोधेन स्वीकार्यमेवेति भावः ।

६४-३ शङ्कते-**नानात्वेति** । नेह नानास्तीति नानात्वनिषेधकश्रुत्यविरोधाय बहु स्यामिति श्रुतेर्मिथ्याभूतकार्यविषयकत्वं कल्प्यते । तथा चानेन नानेति निषेधसिद्ध्यर्थं बहु स्यामिति श्रुतौ मिथ्याभूतं नानात्वमनूद्यते । प्रतियोगिप्रसिद्धिं विना निषेधानुदयादित्याशयः ।

६४–३–५ **प्रत्यक्षादीति** । नानात्वस्य मिथ्याभूतत्वेन प्रत्यक्षादिसकलप्रमाणागोचरत्वं तत एव च तस्य दुरारोहत्वं दुर्ज्ञेयत्वम् । ततश्च प्रतिपादनाविषयमपि प्रतिपाद्यते पुनस्तदेव बाध्यते चेत्युपहासास्पदमेतदिति भावः ।

—१० **सर्वस्य जगत इति** । तस्मात्परमात्मनः सकाशाद्य उत्पत्तिस्थितिलयास्तद्रूपा क्रिया यस्य जगत इत्यर्थः । कर्मशब्दः क्रियावाची । अथ वोत्पत्त्यादिशब्दा अन्तर्भावितण्यर्थाः । कर्मशब्दश्च कर्मकारकवाची । अयं भावः–नानात्वस्य भयप्राप्तिहेतुत्वं नास्ति । ब्रह्मणः कार्यजगद्रूपेण नानात्वानुसंधानस्य मुक्तिहेतुत्वात् । अत एव श्रुतौ सर्वं खल्विदं ब्रह्मेत्युक्तम् । न तु केवलं ब्रह्मेति । सर्वशब्दश्च विविधभेदप्रपञ्चपरः । तथा च नानार्थानुसंधानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षहेतुत्वं सिद्धमिति भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिर्विरुद्धेति भावः ।

—१५ **अदृश्य इति** । अनेनाचिद्व्यावृत्तिः । **अनात्म्ये** । आत्म्यं व्याप्यं कर्मकृतं शरीरं तद्रहिते । **अनिरुक्ते** । अनेन मुक्तव्यावृत्तिः । मुक्तो हि बद्धावस्थायां देवादिशब्दैरुक्तो भवति । **अनिलयने** । निराधारे । अनेन नित्यमुक्तव्यावृत्तिः । तस्य भगवद्रूपाधारसत्त्वात् ।

—२० **हानिः** । इष्टहानिः । **छिद्रम्** । अनिष्टप्राप्तिरन्ध्रम् । **भ्रान्तिः** । छिद्रेण कृतं चित्तस्खलनम् । **विक्रिया** । भ्रान्तिमूलको विरुद्धव्यापारः ।

—२१ **अन्तरमवकाश इति** । यदा ह्येवेति श्रुतावन्तरशब्दस्य न भेदोऽर्थः । किं त्ववकाशः । ब्रह्मचिन्तनं विना क्षणमपि न स्थेयम् । तदुक्तम्—

एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं पुनः ॥

इति । तथा च तादृशावकाशो ब्रह्मप्रतिष्ठाविच्छेद एवेति तस्मिन्सत्येव महद्भयं न तु नानात्वज्ञान इति बोध्यम् ।

६५–२ **सविशेषमिति** । न स्थानतोपीति सूत्रस्य ह्ययमर्थः । परस्य परमात्मनः पृथिव्यादिस्थानतोऽपि नापुरुषार्थगन्धः संभवति । हि यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म निर्दोषत्वसगुणत्वैतदुभयलिङ्गमभिधीयत इति ।

—४ **पारमार्थिकत्वमेवेति** । मायामात्रं त्विति सूत्रस्यायमर्थः । स्वप्नसृष्टिर्जीवकृतेति पूर्वपक्षं निरस्यति तुशब्दः । स्वप्नस्थरथादिपदार्थानां स्वरूपं कार्त्स्न्येनाभिव्यक्तं न भवतीति स्वाप्नसृष्टिर्मायामात्रमाश्चर्यरूपेति । तथा चैवंविधाश्चर्यकारकसृष्टेर्जीवकर्तृकत्वं न संभवति किं त्वीश्वरकर्तृकत्वमेवेति पारमार्थिकत्वमर्थात्सिध्यतीति भावः ।

६५—७ **यो मामजमिति** । अत्राजत्वादिविशेषविशिष्टमेव ब्रह्मेति प्रतीयते ।

—८-१० **मत्स्थानि** । मदायत्तस्थितीनि । **न चाहमिति** । अहं तदायत्तस्थितिको नेत्यर्थः । **न च मत्स्थानीति** । जलादीनां घटादिरिव नाहं भूतानामाधारः । अपि तु संकल्पमात्रेण । एतादृशमसाधारणमाश्चर्यकारकं ममैश्वरं योगं पश्य । कोऽसौ योग इत्याह—**भूतभृदिति** । सर्वेषां भूतानां भर्ताऽहम् । न च तैः कश्चिदपि ममोपकारः क्रियते । ममात्मैव संकल्प एव भूतानां भावयिता धारयिता नियन्ता चेत्यर्थः ।

—१२ **मत्त इति** । मद्व्यतिरिक्तं ज्ञानबलादिगुणान्तर्योगि किंचिदपि नास्ति । इदं सर्वं चिदचिद्वस्तुजातं कार्यावस्थं, कारणावस्थं च मच्छरीरभूतं सूत्रे मणिगणवदात्मतयावस्थिते मयि प्रोतमाश्रितमित्यर्थः ।

—१४ **एकांशेन** । अयुतायुतांशेन संकल्पैकदेशेन वा ।

—१६ **अन्यः** । क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्यः ।

—२१-६६-७ अथ पूर्वपक्षिणा प्रदर्शितस्य प्रत्यस्तमितभेदमिति वचनस्यार्थं व्याचिख्यासुस्तदर्थं तदुपक्रमोपसंहारयोः सविशेषपरत्वं दर्शयिष्यन्नुपक्रमवचनानि दर्शयति—**स सर्वेति** । सर्वभूतप्रकृतिं प्रधानं विकारान्महदादीन्सत्वादिगुणहेतुकान्क्लेशादिदोषांश्च विशेषेणातीतस्तत्संबन्धानर्हः । अतीतं सर्वमावरणं ज्ञानसंकोचस्तद्धेतुभूतं प्रकृतिसंबन्धकर्मवासनादिकं वा येन सः । **समस्तेति** । समस्तकल्याणगुण आत्मा यस्य सः । स्वगुणलवधृतभूतजातः । अवतारद्वारा सम्यक्साधितमशेषजगद्धितं येन सः । तेजोबलैश्वर्यावबोधवीर्यशक्त्यादिगुणानामेकराशिः । अपरिच्छिन्नत्ववाचको महच्छब्दो मङ्गलत्ववाचकः सुशब्दश्च सर्वगुणसाधारणः । **पर इति** । पूर्वोक्तरीत्या स्वरूपतो विग्रहतो गुणतश्च परत्वं बोध्यम् । **क्लेशादय इति** । आदिना कर्मविपाकाशयसंग्रहः । विपाका जात्यायुर्भोगाः । आशयो वासना । **व्यष्टीति** । कार्यावस्थश्चेतनवर्गो व्यष्टिः । कारणावस्थश्चेतनवर्गः समष्टिः । एतादृशं रूपं शरीरं यस्य सः । **सर्वदृक्** । स्वरूपतः सर्वज्ञः । **सर्ववेत्ता** । प्रकारतः सर्वज्ञः । **संज्ञायत इति** । दोषरहितं शुद्धं निर्मलमेकरूपं तत्परं ब्रह्म येन शास्त्रजन्यज्ञानेन संज्ञायते तथा तद्ब्रह्म येनोपासनात्मकेन ज्ञानेन संदृश्यते तथा तद्ब्रह्म येन भक्तिरूपेण ज्ञानेन प्राप्यते तदेव ज्ञानम् । अन्यत्सर्वमज्ञानमेवेत्यर्थः । स ज्ञायत इति पाठेऽस्तदोषमित्यादीनि ज्ञानक्रियाविशेषणानि ।

६६-९-१६ पूर्वं यतो वाच इति श्रुतिप्रतिपादितं वागविषयत्वं गुणानन्त्यमूलकत्वेन साधितम् । ब्रह्मणोऽनन्ता गुणा वक्तुं न शक्यन्त इति तदाशयः । तथा च कतिचिद्गुणैर्वाग्विषयत्वं वर्तत एवेति सिद्धम् । तत्रैव प्रमाणवचनान्याह—**शुद्ध इति** । अथ भगवच्छब्दस्यावयवशोऽर्थमाह—**संभर्तेति** । भृधातो-

ईप्रत्यये 'भ' शब्दः सिध्यति। तस्य संभर्ता भर्तेत्यर्थद्वयम्। संभरणमुपकरणसंविधानम्। प्रकृतिपुरुषकालान्कार्योत्पत्तियोग्यान्यः करोति स संभर्तेत्युच्यते। भर्ता स्वामी। तथा गमेर्ण्यन्ताड्डुप्रत्यये 'ग' शब्दः सिध्यति। गमयिता स्थितिकर्ता नेतेत्युच्यते। संगमयिता संहारकर्ता गमयितेत्युच्यते। उद्गमयितोत्पत्तिकर्ता स्रष्टेत्युच्यते। उपसर्गाणां द्योतकत्वेन तदर्थस्य धातुनैवाभिधानात्समुदोरप्रयोगः। भग इत्यक्षरद्वयस्य मिलितेनार्थमाह—ऐश्वर्यस्येति। समग्रशब्दः सर्वत्रान्वेति। गुणवत्त्वेन ख्यातिर्यशः। श्रीर्भाग्यसंपत्। वैराग्यमनादरः। वकारार्थमाह—वसन्तीति। वसधातोरधिकरणे कर्तरि वा डप्रत्यये 'व' शब्दः सिध्यति। भूतात्मनि। भूतानामात्मनि। अखिलात्मनि। अखिलशरीरके।

६६—१८–९ अथ भकारादिवर्णसमुदायशक्तिनिष्पन्नमर्थमाह–ज्ञानेति। ज्ञानादीनां प्रत्येकं न भगवच्छब्दप्रवृत्तिनिमित्तत्वमपि तु समुच्चित्येत्यशेषत इत्यनेन सूच्यते। भगवच्छब्दान्तिमतकारस्यार्थो विना हेयैरित्यादिः। हेयगुणांस्त्यजतीति त्यजधातोर्यकारादिभागस्तदुत्तरकर्तृप्रत्ययश्च पृषोदरादित्वाल्लुप्त इति तकाररूपं व्यञ्जनमात्रमवशिष्यते।

—२१–६७–२ महाशब्द इति। उक्तरीत्याऽवयवशक्त्या समुदायशक्त्या च महतोऽर्थस्य क्रोडीकाराद्भगवच्छब्दस्य महाशब्दत्वम्। तत्रेति। पूज्यानामवयवीभूतभकारादिपदार्थानामुक्तिः पूज्यपदार्थोक्तियोगः। परिभाषा च रूढिः। तथा च योगरूढिभ्यां प्रवृत्तो भगवच्छब्दो मुख्यः। अन्यत्र मुक्तादौ तु लाक्षणिक इति भावः।

६७–४–९ अथ तस्मिन्नेव योगप्रकरण उपसंहारेऽपि सविशेषात्मप्रतिपादकवाक्यानि दर्शयति–समस्ता इति। शक्तयः। विष्णुशक्तिरित्यग्रिमश्लोके वक्ष्यमाणाः। विश्वरूपवैरूप्यम्। विलक्षणसंनिवेशयुक्तम्। देवेति। देवतिर्यङ्मनुष्यादिशब्दस्य चेष्टावच्छब्दस्य च कर्मधारयः। उभयमपि रूपाणीत्यस्य विशेषणम्। एतादृशानि रूपाणि समस्तशक्ति तद्ब्रह्म करोतीत्यन्वयः। मनुष्याख्य इति पाठेपि तथैव। मनुष्याख्या इति पाठे तु पृथक्पदम्। आर्षः शेर्लोपः। ता ता पिण्डानामितिवत्। जगतामुपकाराय। न तु स्वकर्मफलभोगाय। व्यापिनी। सर्वावतारानुगुणा। अव्याहतात्मिका। केनाप्यप्रतिहता।

—१५–९ रूपेति। रूपं जातिः। वर्णो रूपम्। आदिशब्देन गन्धादिगुणानां क्रियायाश्च संग्रहः। निर्देशो रूपादिप्रतिपादकः शब्दः। रूपादिभिर्विशेषणैः कर्मणा संपादितैर्विवर्जितः। जायतेऽस्तीत्यवस्थाद्वयं जन्मशब्देन विवक्षितम्। षड्भावविकाररहित इत्यर्थः। सर्वत्रेति। सर्वत्र वसतीति वासुः। सर्वं वसत्यत्रेति वा। स चासौ देवश्च वासुदेवः।

६८-११-६ **क्षेत्रज्ञाख्या**। जीवाख्या। **अविद्येति**। कर्मनामिकाऽविद्याशक्तिस्तृतीया। अनयैव चतुर्मुखादिपिपीलिकान्तसर्वशरीरस्था जीवशक्तिर्वेष्टितेत्यर्थः। **तारतम्येनेति**। कर्मतारतम्यानुगुणज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः।

—१८-२० **प्रधानं चेति**। प्रधानमचित्। पुमांश्चित्। एतौ संश्रयधर्मिणौ भगवदपृथक्स्थितिधर्मकौ सर्वभूतव्यापिकया विष्णोर्नियमनशक्त्या व्याप्तावित्यर्थः। महाबुद्धे इति संबोधनम्। **तयोरिति**। तयोश्चिदचितोः संश्रयः संबन्धः संसारः। तयोः पृथग्भावो मोक्षः। सा विष्णुशक्तिरेव संसारमोक्षयोः कारणमित्यर्थः।

—२२ **यथेति**। असक्त इति पदच्छेदः। प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः। यथा वायुः कणिकाशतं तत्स्वभावास्पृष्टो बिभर्ति तद्वत्प्रधानमचित्पुरुषो बद्धो जीव आत्मा मुक्तात्मैतान्सा शक्तिर्बिभर्तीत्यन्वयः। असक्तमिति पाठे कणिकाशतस्य विशेषणम्। स्वेन मिथश्चासंकीर्णमित्यर्थः।

६९-३ एवंविधस्य जगतः परमार्थत्वमाह-**तदेतदिति**। मिथ्याभूतं हि वस्तु बाध्यं सदनित्यं भवति जगत्तु न तथेति भावः।

—६-११ **निरस्तेति**। इदं 'स सर्वभूत' इतिश्लोकप्रतिपाद्यम्। **समस्तेति**। इदं 'समस्तकल्याण' इतिश्लोकप्रतिपाद्यम्। **जगदुत्पत्तीति**। इदं भगवच्छब्दार्थेसिद्धम्। **नियमनादीति**। आदिशब्देनाध्यक्षत्वानुमन्तृत्वसंग्रहः। **चिदचिदिति**। अस्यैव 'सर्वावस्थावस्थितस्य' इति 'पारमार्थिकस्य' इति च विशेषणम्। बद्धमुक्तावस्थस्य चिद्वस्तुनः कार्यकारणावस्थस्याचिद्वस्तुन इत्यर्थः। तस्य पारमार्थिकत्वं चात्मनियम्यत्वेन सिद्धम्। तस्य परब्रह्मशरीरत्वं च द्वे रूपे इत्यादिश्लोकेषु शरीररूपशक्तिविभूत्यादिशब्दैः प्रतिपादितम्। किं च तत्र शरीरादिशब्दानां चिदचिद्वस्तुनः सामानाधिकरण्यं कृतम्। ततोऽपि तस्य परब्रह्मशरीरत्वं सिध्यतीति भावः। **क्षेत्रज्ञेति**। 'अविद्या कर्म' इतिश्लोकप्रतिपाद्यमिदम्।

—१६-७ अथ पूर्वपक्ष्युदाहृतवचनानि सविशेषपरत्वेन व्याचिख्यासुः प्रथमं प्रत्यस्तमितेति श्लोकं व्याचष्टे-**प्रत्यस्तेति**। देवमनुष्यादिशरीरं दुःखाज्ञानादयश्च प्रकृतिपरिणामविशेषास्तैः संसृष्टस्यापि तद्गतरूपवर्णादिभेदरहितत्वेनेत्यर्थः। अनेन प्रत्यस्तमितभेदमिति व्याख्यातम्। **तद्वदेति**। अनेन वचसामगोचरमिति व्याख्यातम्। **योगयुगिति**। योगयुक्प्रक्रान्तयोगः सिद्धदशानापन्नो योगी। तस्य यन्मनस्तदविषयमित्यर्थः। एतच्चानुपदमेव स्पष्टीभविष्यति।

—२०-७०-९ अस्मिन्। विष्णुपुराणे षष्ठांशे। **संसारैकेति**। तदुक्तम्-'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते' इति। **योगावयवानिति**। योगाङ्गानीत्यर्थः। तथा हि। 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' (यो. सू. २।२९)। 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः'

( यो. सू. २।३० ) । ' शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ' ( यो. सू. २।३२ ) । ' स्थिरसुखमासनम् ( यो. सू. २।४६ ) । आस्यतेऽनेनेत्यासनं पद्मासनादि । तद्यदा स्थिरं निष्कम्पं सुखमनुद्वेजनीयं च भवति तदा तद्योगाङ्गतां भजत इत्यर्थः। 'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' (यो. सू. २।४९) । तस्मिन्सत्यासनस्थैर्ये सतीत्यर्थः । ' स्वस्वविषयसंप्रयोगाभावे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' ( यो. सू. २।५४ ) । इन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याह्रियन्ते प्रतिकूलतया ह्रियन्ते यस्मिन्निति प्रत्याहारः। चक्षुरादीन्द्रियाणां रूपादिविषयप्रवृत्त्यभावे सतीन्द्रियाणि चित्तस्वरूपमात्रानुकारीणि यद्भवन्ति स प्रत्याहार इत्यर्थः । ' देशबन्धश्चित्तस्य धारणा' (यो. सू. ३।१)। देशे चित्तस्य बन्धो विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धारणेत्यर्थः। निराधारायाश्चित्तधारणाया असंभवात्तदाश्रयीभूतः कश्चन कल्याणकारको देशोऽवश्यं वाच्यः। अयमेव शुभाश्रय इत्युच्यते। ध्येयस्वरूपमिति यावत् । स च न चतुर्मुखादिः । तस्य जगदन्तःपातित्वेनाविद्यावेष्टितत्वेन शुभाश्रयत्वाभावात् । नापि सिद्धयोगी । तस्य पूर्वं बद्धत्वेन स्वाभाविकशुद्धत्वाभावात् । नापि विष्णोः शक्तिः । सा हि त्रिधा । मूर्तामूर्तकर्मभेदात् । तत्र न तृतीया । तस्या अविद्यास्वरूपत्वेन ध्येयत्वाभावात् । न च प्रथमा । देहविशिष्टोऽविद्यावेष्टितो यो जीवस्तत्स्वरूपा हि सा। तस्याश्च भावनात्रयसंबन्धवत्त्वेनाशुभत्वात् । त्रिविधा भावना च विष्णुपुराणे ( ६।७ ) उक्ता ।

त्रिविधा भावना विप्र विश्वमेतन्निबोधत ।
ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥

इति । नापि द्वितीया । अविद्यारहिता देहरहिता ज्ञानैकस्वरूपा हि सा। तस्याश्च भगवत्प्रसादैकलभ्यायाः सिद्धदशानापन्नयोगिना ध्यातुमशक्यत्वात् । किं तूक्तशक्तित्रयाश्रयं परमात्मनोऽसाधारणं रूपं यत् ' आदित्यवर्णम् ' (श्वे. ३।८) इत्यादिश्रुतिभिः प्रतिपाद्यते तदेव शुभाश्रयः । ' तत्र प्रत्ययैकतानता ध्यानम् ' ( यो. सू. ३।२ ) । तत्र शुभाश्रये प्रत्ययस्य ज्ञानस्यैकतानता तदालम्बनतयैव निरन्तरमुत्पत्तिर्ध्यानमित्यर्थः । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' ( यो. सू. ३।३ ) । सम्यगाधीयत एकाग्रीक्रियते यत्र मनः स समाधिरिति बोध्यम् । **निष्पन्नयोगिध्येयतयेति** । निष्पन्नयोगी । सिद्धयोगी । ध्येयमित्यत्र शक्यार्थे यत् । न त्वर्हार्थे । एतेनासिद्धयोगिनो ध्यातुमशक्यत्वं सूचितम् । तदेवाह–**योगयुगिति** । असिद्धयोगिमनस इत्यर्थः । **अनालम्बनतयेति** । तथा च तस्याश्रयत्वं नास्तीति शुभाश्रयत्वं न संभवतीति सिद्धम् । शुभत्वमपि नास्तीत्याह–**स्वतःशुद्धिविरहादिति** । अत्र न स्वाभाविकशुद्धिः स्वतःशुद्धिशब्देनोच्यते । किं त्वन्यानपेक्षत्वेन ध्यातृनिष्ठदोषनिरासनसामर्थ्यम् । तच्च परमा-

त्मन्येव । न तु तदीयायामप्युक्तशक्तौ । तस्या ज्ञानमात्रस्वरूपायाः केनाऽपि सह विरोधाभावेन दोषाविरोधित्वात् ।

७०-१० **परिशुद्धात्मस्वरूपस्य** । द्वितीयशक्तेः ।

७१-१ **स्तम्बः** । कर्मवश्यो जन्तुः ।

—१० **ज्ञानस्वरूपमित्यत्रापि** । ज्ञानस्वरूपमत्यन्तनिर्मलमिति प्रागुक्त- ( श्रीभाष्य-पृ. १४ प. १७ ) श्लोकेपि ।

—११ **ज्ञानस्वरूपस्येति** । ज्ञानस्यार्थाकारत्वेन योऽवभासः स भ्रमोऽस्तु नाम । परं त्वर्थस्य योर्थाकारत्वेन भासः स भ्रमो न भवतीत्यर्थः ।

—१४ शङ्कते-**जगद्ब्रह्मणोरिति** । दृष्टान्ते हि शुक्तिसामानाधिकरण्येन भासमानस्य रजतस्य मिथ्यात्वम् । तस्य शुक्त्या सह विरोधात् । तस्यैवाग्रे बाधितत्वाच्च । तस्माच्छुक्तिवैयधिकरण्येन भासमानस्य सत्यत्वम् । अत्र तु सर्वस्य जगतो ब्रह्मसामानाधिकरण्येन भासमानत्वात्सर्वस्य मिथ्यात्वं सिध्यतीत्याशयः ।

—१८ **महाविभूतेरिति** । अनेन जगन्मिथ्यात्वानुपपत्तिः सूचिता । तस्य । विभूत्यन्तर्गतस्य जगतः । कर्मपश्यन्तं दर्शनेन्वेति ।

—१९ **बाधासहमिति** । यथा शुक्तिरजतं बाधितं भवति तथेदं न भवतीत्यर्थः । **अविरुद्धमिति** । जगद्ब्रह्मणोः शरीरशरीरिभावसंबन्धसत्त्वादविरोधः ।

—२१ एवं पूर्वपक्षिमतानुसारेण ज्ञानस्वरूपमत्यन्तेतिश्लोकतात्पर्यं न संभवतीत्युक्तम् । अथ स्वमतानुसारेण स श्लोको व्याख्येयः । व्याख्या च प्रकरणानुरोधेन कर्तव्या । प्रकरणं चात्र विचारितानां प्रश्नानां विस्तरेण प्रतिवचनरूपम् । द्वितीयाध्याये तथैव प्रकरणात् । प्रश्नश्च श्रुतवेदान्तस्य मैत्रेयस्य विशेषबुभुत्सयैव । अन्यथा यन्मयं चेत्यादिविशेषप्रश्नायोगात् । विशेषप्रश्नश्च ज्ञातवेदार्थोपबृंहणार्थ एव । तथा च प्राग्वेदार्थज्ञानम् । तत उपबृंहणेच्छा । ततस्तदनुसारेण प्रश्नाः । प्रश्नानुरोधेन संक्षेपतो विस्तरतश्च प्रतिवचनानि । विस्तरेण प्रतिवचनारम्भे चायं श्लोक इति क्रमेण दर्शयति-**तथा हीत्यादिना नमस्करोति** (पृ. ७३ प. २१ ) इत्यन्तेन ।

७२-२ **वेदम्** । वेदस्योत्तरभागं वेदान्तरूपम् । पूर्वभागस्य कर्मप्रतिपादकस्य तु धर्मशास्त्रेणोपबृंहणमिति बोध्यम् ।

—५-६ **विदितेति** । विदितः सकलवेदस्तदर्थश्च यैस्तेषां परोक्षज्ञानवतामित्यर्थः । तावन्मात्रेणानुभवजनकवाक्यप्रयोक्तृत्वं नियमेन न संभवतीत्यतः प्रत्यक्षज्ञानवत्त्वमाह-**स्वयोगेति** । स्वयोगमहिम्ना साक्षात्कृतो वेदतत्त्वभूतोऽर्थो यैस्तेषामित्यर्थः । विवेकजज्ञानवतामिति यावत् । **व्यक्तीकरणम्** । अज्ञातविशेषैः सह स्वावगतार्थनिष्कर्षः ।

७२-८ पुलस्त्येति। पराशरस्य परदेवतातत्त्वज्ञानं पुलस्त्यवसिष्ठकृतवरदान-लब्धमित्यर्थः। तदुक्तम्—

अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः।

प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः॥ ( लि. पु. ६४।१२० ) इति।

—१३ यतश्चैतदिति। उद्भूतमिति शेषः।

—१५ ब्रह्मस्वरूपेति। स्वरूपशब्दो विभूत्यादिव्यावर्तकः। विभूतिभेदानां प्रकारो विभूतिभेदप्रकारः। ब्रह्मस्वरूपविशेषो विभूतिभेदप्रकारस्तदाराधनस्वरूपं फलविशेषश्चैतद्विषयकप्रश्ना इत्यर्थः।

—१७ यतश्चैतदिति। तथा च यन्मयमिति प्रश्नो न निमित्तोपादानविषयकः। पुनरुक्त्यापत्तेरिति भावः। स्थितिलयेति। स्थितिलयपदाभ्यां रक्षणसंहार-योर्ग्रहणम्। यथाश्रुतार्थत्वे स्थितिलययोरकर्मकत्वेन जगतस्तत्कर्मत्वासंभवात्।

—१९-२० इदं च तादात्म्यमिति। 'जगच्च स' इत्यत्र जगद्ब्रह्मणोः सामानाधिकरण्येन सिद्धमित्यर्थः। आत्मतयेति। अन्तः प्रविश्य नियन्तृत्वमे-वात्मत्वमिति भावः। व्याप्यव्यापकयोः। जगद्ब्रह्मणोः।

—२१ यन्मयमिति प्रश्नस्येति। मयट्प्रत्ययो ह्यत्र प्राचुर्यार्थ इत्यग्रे वक्ष्य-ते। तथा च जगति प्राचुर्येण किं प्रस्तुतमिति प्रश्नार्थः। तस्य चोत्तरं जगच्च स इति वस्त्वैक्यतात्पर्यकं न संभवतीत्यर्थः।

—२२ पृथक्प्रश्नेति। विकारार्थत्वे ह्युपादानमेव पृष्टं स्यात्। तच्च यतश्चै-तदित्यत्र पृष्टमेव। गोबलीवर्दन्यायेनोपपत्तिस्तु सत्यां गतावयुक्तेति भावः।

७३-१ उत्तरानुपपत्तेरिति। मयटः स्वार्थिकत्वे हि यदिदं जगत्तत्कि-मिति प्रश्नार्थो भवति। तस्य च जगत्किं सत्यमुत मिथ्येत्ययमेवाभिप्रायो वाच्यः। अन्यस्यासंभवात्। तथा च तदनुसारेण जगन्मिथ्येत्याशयेन 'विष्णुरेव' इत्ये-वोत्तरं वक्तव्यम्। न तु जगद्ब्रह्मतदाकारद्वयोपस्थापकं सामानाधिकरण्यमि-त्याशयः।

—१० 'जगच्च स' इति सामानाधिकरण्यं वस्त्वैक्यकृतमित्यत्र दूषणान्तर-माह-जगद्ब्रह्मणोरिति।

—१४ स्थाप्यत इति। अनन्तरमेव स्थापयिष्यत इत्यर्थः।

—१४-२० अत इति। उक्तरीत्या शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वाव-गमात्सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्चेत्यर्थः। अविकारायेतीति।

अविकाराय शुद्धाय नित्याय परमात्मने।

सदेकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ( वि. पु. १।२।१ )
इति श्लोकेनेत्यर्थः । सदेकरूपरूपायेत्यस्य सदेकरूपमेकस्वभावं रूपं यस्ये-त्यर्थः । **स्वावतारः** । विष्णुः । परमात्मैव तत्तच्छरीरकः सृष्ट्यादिकं करोति । ब्रह्मविष्णुमहेश इति मूर्तित्रयम्, प्रधानम्, कालः, क्षेत्रज्ञसमष्टिः, क्षेत्रज्ञव्यष्टि-श्चेत्येतद्रूपेणावस्थितमित्यर्थः ।

७४–३–१० अन्योपि प्रश्नप्रतिवचनविशेषः पूर्वपक्षिमते नोपपद्यत इत्याह–यदीति । **भावशक्तयः** । वस्तुशक्तयः । **न घटत इति** । निर्विशेषब्रह्मपक्षेऽयं परिहारो न संभवति । सर्गाद्या भावशक्तय इति शक्तिसंबन्धप्रतिपादना-दिति भावः ।

—१२ अथ स्वमतेन प्रश्नोत्तरयोस्तात्पर्यमाह—**उत्पत्त्यादीति** । सत्त्वादिगु-णयुक्ता अपरिपूर्णाः कर्मवश्याश्च ये चतुर्मुखादयो जीवविशेषास्तेष्वेवोत्पत्त्यादि कार्यं दृश्यत इत्यर्थः ।

—१६ **जलादीति** । यथा जलादिविसदृशस्याग्नेरौष्ण्यादिशक्तियोगस्तथा चतुर्मुखादिविसदृशस्य ब्रह्मणः सर्वशक्तियोगः संभवतीत्यर्थः । तथा च ब्रह्म नोत्पत्त्यादिकर्तृ सत्त्वादगुणरहितत्वात्परिपूर्णत्वादकर्मवश्यत्वात्कर्मसंबन्धानर्ह-त्वाद्वा । यन्नैवं तन्नैवं यथा चतुर्मुखादिरित्यनुमानमग्निरनुष्णो द्रव्यत्वाज्जलव-दित्यनुमानवदप्रयोजकमिति भावः ।

७५–३ **उपपादयतीति** । उत्तरार्धेनेति शेषः ।

—५ **येन** । यतः ।

—८ **अन्यथेति** । व्याप्यस्य जगतो व्याप्तेश्च मिथ्यात्वे सर्वव्याप्तिस्तव महि-मेति न वक्तव्यमित्यर्थः ।

कृत्स्नस्य मिथ्याभूतत्वे दूषणान्तरमाह–**जगत इति** । जगतो मिथ्याभूतत्वे तदुत्पत्तित्वासंभवान्मिथ्याभूतार्थवाचकपदानां तदधिष्ठाने लक्षणा स्वीकार्या स्यात् । तथा त्वंशब्दस्य स्वाभिमुखाहमर्थे लक्षणा स्वीकार्या स्यादिति भावः ।

—१० **विरोधश्चेति** । मिथ्याभूतार्थस्यान्यत उद्धरणासंभवेनेदृशस्तुतेरसं-भवादित्याशयः ।

—१०–१२ यदेतद्दृश्यत इति प्रागुक्त–( श्रीभाष्य–पृ. १४ प. २० ) श्लोक-तात्पर्यमाह–**यत इति** । **आत्मतया** । अन्तर्यामिरूपेण । **तव मूर्तमिति** । मूर्तं मूर्तिः । दृश्यमानं जगत्तवैव मूर्तिरित्यर्थः । **केवलमिति** । एतत्परमात्मनः शरीरमित्यनुसंधानरहितं स्वतन्त्रमित्यर्थः । अत एवेयं भ्रान्तिः । परमात्मसंब-न्धस्य सत एवाज्ञानेन परतन्त्रस्यापि स्वतन्त्रत्वेनाभ्युपगमात् ।

७५–१३–४ ज्ञानस्वरूपमिति प्रागुक्त–(श्रीभाष्य–पृ.१४ प. २२) श्लोकतात्पर्यमाह–**न केवलमिति । देवमनुष्यादीति** । देवमनुष्यादयो येऽर्थाः शरीराणि स एवात्मेति ज्ञानं भ्रम इत्यर्थः ।

—१६–७ ये तु ज्ञानविद इति प्रागुक्त–( श्रीभाष्य–पृ. १५ प. १ ) श्लोकं व्याचष्टे–**ये पुनरिति । सर्वस्येति ।** सर्वस्य यद्भगवदात्मकत्वं तदनुभवसाधनीभूतो यो योगस्तेन योग्यं परिशुद्धं च मनो येषां तथाभूता इत्यर्थः ।

—२० **पौनरुक्त्यमिति ।** स्वातन्त्र्यभ्रमो देहात्मभ्रमश्चेति विभागाभावेन ' यदेतद्दृश्यते ' ' ज्ञानस्वरूपम् ' इति श्लोकयोः पौनरुक्त्यम् । लक्षणा चानुपदमेव प्रदर्शिता । अर्थविरोधः प्रमाणविरोधः । प्रत्यक्षादिप्रमाणैरबाध्यत्वेन सिध्यतो जगतो मिथ्यात्वाङ्गीकारात् । स्वरूपतिरोधानानुपपत्त्यादिरूपो वा । प्रकरणविरोधः स्तुतिप्रकरणविरोधः । रोमान्तरस्था मुनयः स्तुवन्तीति हि स्तुतिः प्रकृता । स्तोतृणामद्वैतज्ञानवत्त्वे स्तुतिर्न संभवतीति तद्विरोधः । तदभावे च नितरामुपक्रमोपसंहारादिवचनविरोधाच्छास्त्रतात्पर्यविरोध इति बोध्यम् ।

—२२–७६–२ पूर्वपक्षिणा प्रदर्शितं ( श्रीभाष्य–पृ. १५ प. ४ ) तस्यात्मपरदेहेष्विति श्लोकं व्याचष्टे–**तस्येति** । एकमयमित्यत्र स्वार्थे मयट् । जीवाः परस्परं भिन्ना एव । किं तु भिन्नानामपि तेषामेकजातीयत्वाज्जीवैक्यमिति व्यवहारः । ऐक्यं तुल्यत्वम् । एको व्रीहिरितिवदेकशब्दस्य तुल्यार्थत्वात् । जीवाद्वैतमिति व्यवहारस्याप्येतदेव तात्पर्यम् । प्रकारविशिष्टानां जीवानां द्वैतेऽपि तद्गतप्रकारस्यैक्यात् । प्रकाराद्वैतमिति यावत् । अत एव नित्यानामात्मनां बहुत्वश्रुतिर्बद्धमुक्तशिष्याचार्यादिव्यवस्था च संगच्छते । ब्रह्माद्वैतमिति व्यवहारस्य तु प्रकार्यद्वैतमित्यर्थः । ब्रह्मणः प्रकारीभूता ये जीवास्तेषु द्वैतेपि तद्विशिष्टस्य ( प्रकारिणः ) ब्रह्मण एकत्वात् । अत एवैकः सन्बहुधेति श्रुतिः संगच्छते । **अतथ्यमिति ।** द्वैतमिथ्यात्वदर्शिन इत्यस्य देवमनुष्यादिद्वैतमिथ्यात्वदर्शिन इत्यर्थः । जीवब्रह्मणोर्भेदस्य सत्यत्वात् । न च जीवद्वैतस्यापि सत्यत्वेन कथं तस्य मिथ्यात्वमिति वाच्यम् । तत्र वास्तविकद्वैतस्य सत्यत्वेपि देवमनुष्यादिशरीरसंबन्धकृतद्वैतस्य मिथ्यात्वात् । शरीरद्वैतस्य शरीरेष्वेव सत्त्वात् ।

७६–५–७ साम्ये प्रमाणमाह–**यथोक्तमिति । निर्दोषमिति ।** आत्मवस्तु प्रकृतिसंसर्गदोषवियुक्ततया सर्वत्र सममित्यर्थः ।

—८ ननूक्तश्लोकयोरात्मैक्यप्रतिपादन एव तात्पर्यमस्त्विति चेत्तत्राह–**तस्यात्मेति ।**

—१३ **अन्याकारत्वेति ।** देवमनुष्याद्याकारत्वेत्यर्थः । परशब्देन स्वव्यतिरिक्तं धर्मिणमनूद्य तस्य ज्ञानव्यतिरिक्ताकारसंबन्धो निषिध्यते । अन्यशब्दो ज्ञान-

व्यतिरिक्ताकारविशिष्टपरः। अस्य श्लोकस्य सर्वथाऽद्वैते तात्पर्यं चेदन्यपरशब्द-योर्मध्य एकस्य वैयर्थ्यं स्यात्।

७६–१८–९ **वेणुरन्ध्रेति** । स्वतस्तुल्याकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तः। सर्वथा साम्ये ह्यात्मनो जडत्वादिकमपि प्रसज्येतेत्याशयः। पिण्डः। शरीरम्।

—२० **न स्वरूपैक्यमिति** । यथाग्न्यवयवानामनेकस्फुलिङ्गानां स्वरूपसाम्येपि स्वरूपैक्यं न वक्तुं शक्यते तद्वदेवेति भावः।

७७–५ **भेदमोहमिति** । देहगतदेवत्वाद्याकारभेदो य आत्मन्यारोप्यते स भेदमोहः। तथा च नानेन श्लोकेन जीवब्रह्मद्वैतं निषिध्यते। नापि जीवबहुत्वं निषिध्यते। किं तु जीवात्मनां यो देहाद्याकारेण प्रकारभेदो भासते स देहात्मविवेकप्रतिपादनद्वारा निषिध्यत इति भावः।

—६ कृत्स्नभेदनिषेधपरत्वेऽनिष्टमाह–**अन्यथेति**।

—७ **अहमिति**। इत्यनेनेत्यस्योपलक्ष्येणेत्यत्रान्वयः। अहं त्वमित्यादिशब्दाः सर्वमेतदात्मस्वरूपमित्यर्थस्य लक्षका इति लक्षणयैकार्थप्रतिपादकत्वरूपसामानाधिकरण्योपपत्तिरित्यपि न संभवति। अहं त्वमित्यादिभेदनिर्देशायोगादिति भावः।

—१६ **देहात्मनोरिवेति**। यथा देहात्मनोर्जडत्वाजडत्वादिविरुद्धधर्मत्वानैक्यं तद्वदेव जीवपरयोर्नियम्यत्वनियन्तृत्वादिविरुद्धधर्मत्वान्नैक्यमित्यर्थः।

—१७–७८–१ **द्वेति**। द्वा द्वौ जीवेश्वरौ। सुपर्णा सुपर्णौ। शोभनपतनौ। पक्षिसामान्याद्वा। सयुजा सयुजौ। सहैव सर्वदा युक्तौ। सखाया सखायौ। समानं वृक्षं शरीरम्। पिप्पलम् कर्मफलम्। अभिचाकशीति। स्वयमनशनात्परस्याशयितृत्वाच्च भृशं शोभते। **ऋतमिति**। सुकृतस्य कर्मण ऋतं फलं पिबन्तौ। पिबन्तावित्यत्र शतृप्रत्ययः कर्तरि। कर्ता च प्रयोज्यो जीवः प्रयोजकः परमात्मा च। गुहां हृदयगुहाम्। परार्धे श्रेष्ठे। छायातपौ। अज्ञसर्वज्ञौ। त्रिनाचिकेताः। त्रिः कृत्वो नाचिकेतोऽग्निश्चितो यैस्ते। कर्मविशेषनिष्ठा इत्यर्थः। **शास्ता**। नियन्ता। तथा च नियम्यनियन्तृभावेन जीवेश्वरयोर्भेदः सिद्ध इत्यर्थः।

७८–२–८ **अस्मिन्नपि शास्त्रे**। विष्णुपुराणे। **स सर्वेति**। अत्र दोषातीतत्वसमस्तगुणवत्त्वादिभिः परब्रह्मणो जीवाद्भेदो व्यपदिश्यते। **अविद्येति**। अत्र जीवस्य हेयास्पदत्वेन तस्य परब्रह्मणः सकाशाद्भेदो व्यपदिश्यते।

—१०–१२ **उभयेऽपीति**। उभये माध्यंदिनाः काण्वाश्चैनं शारीरमप्यन्तर्यामिणः सकाशाद्भेदेन नियाम्यत्वेन विभज्याधीयत इति सूत्रार्थः। तथा च

श्रुतिर्य आत्मनि तिष्ठन् (श. ब्रा. १४।६।७।३०)। यो विज्ञाने तिष्ठन् (बृ. ३।७।२२) इति। भेदव्यपदेशादिति। 'य आदित्ये तिष्ठन्' (बृ. ३।७।९) इत्यादिश्रुतावादित्यादिजीवेभ्यः सकाशात्परमात्मनो भेदव्यपदेशात्परमात्मा जीवादन्य इति सूत्रार्थः। अधिकं त्विति। ब्रह्म जीवादधिकं भिन्नम्। करणाधिपाधिपः प्रधानक्षेत्रज्ञपतिः पृथगात्मानमित्यादिश्रुतिभिर्जीवाद्भेदेन ब्रह्मणो निर्देशादिति सूत्रार्थः।

७८–१३–६ य आत्मनीति। अत्रात्मशब्दा जीवात्मपराः। प्राज्ञेन। परेण। संपरिष्वक्तः। सम्यगालिङ्गितः। अन्वारूढः। अधिष्ठितः। प्रत्यनीकाकारेण। विरुद्धाकारेण।

—१८ तदनर्हत्वेति। तदनर्हमविद्यासंबन्धानर्हं ब्रह्म। तत्त्वस्य जीवेऽसंभवात्। न हि कारागृहान्निर्गतस्य तन्निग्राहकानुग्राहकनृपतेश्वैश्वर्यं संभवतीत्यर्थः।

—२०–१ परमात्मेति। परमात्मात्मनोः परजीवयोर्योग ऐक्यमेव परमार्थ इति यदिष्यत एतन्मिथ्या यतोऽन्यद्द्रव्यमन्यद्द्रव्यस्वरूपतां न प्राप्नोतीत्यर्थः।

७९–१ ननु ब्रह्म वेद ब्रह्मैव भवतीति श्रुतिस्तयोरैक्ये प्रमाणमिति चेत्तत्राह–मुक्तस्येति। एवशब्देनैक्यव्यावृत्तिः। उक्तश्रुत्यर्थस्त्वनुपदमेव मूले स्पष्टीभविष्यति।

—५–७ इहापीति। योगसंक्षेपकथनारम्भ इत्यर्थः। आत्मभावमिति। आकर्षको वन्हिः। सुवर्णादिगतदोषाकर्षणात्। स यथा विकार्यमवस्थान्तरप्राप्तियोग्यं लोहमात्मनः स्वस्य शक्त्यात्मभावं नयति स्वव्यापारं कारयति तथैतद्ब्रह्म विकार्यं ध्यायिनमुपासकमेनं स्वशक्त्यात्मभावमात्मनः स्वभावं निर्दोषत्वं नयतीत्यर्थः।

—९–११ जगदिति। जगद्व्यापारो निखिलचेतनाचेतनजगन्नियमनादिरूपस्तद्वर्जं मुक्तस्यैश्वर्यम्। कुतः। प्रकरणात्। परब्रह्मप्रकरणे यतो„वेत्यादिश्रुतौ निखिलजगन्नियमनमाम्नायते। यद्येतन्नियमनसामर्थ्यं मुक्तानामपि स्याच्चेत्तस्य ब्रह्मलक्षणत्वं न स्यात्। निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानाभावाच्चेति सूत्रार्थः। भोगेति। सोश्नुत इति श्रुतौ ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाल्लिङ्गान्मुक्तस्यैश्वर्यं जगद्व्यापारवर्जमेवेत्यर्थः। मुक्तेति। द्युपृथिव्याद्याश्रयभूतः पुरुषः परमात्मैव। यतो निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतावयं पुरुषो मुक्तैरपि प्राप्यतया व्यपदिश्यत इत्यर्थः।

—१२ ज्योतिषा। परब्रह्मणा।

—१३–४ अशरीरस्य। मुक्तस्य। तस्य कर्मप्राप्यशरीराभावात्। सिद्धिः। अनुभवः।

७९—१४–२० मुक्तौ जीवपरयोर्भेदोस्तीत्यत्र श्रुतीर्दर्शयति–**श्रुतय इति** । **कामान्नी** । कामतोऽन्नमस्येति कामान्नी । **कामरूपी** । कामतो रूपाण्यस्येति कामरूपी । इमाँल्लोकाननुसंचरन्नित्यन्वयः । **रसो वै स इति** । परमात्मा तृप्तिकरत्वाद्रसस्वरूप इत्यर्थः । **अयं** जीवात्मा ।

८०–३–५ नन्वेताः श्रुतयः सगुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्ति । निर्गुणविद्याप्रतिपादिकास्त्वन्या एव सदेव सोम्येत्यादयः श्रुतय इति चेत्तत्राह–**परविद्यास्विति** । परशब्देन ब्रह्मोच्यते । **आनन्दादयः प्रधानस्येति** । उपासनप्राप्त्योः सगुणविषयतैकरूप्यज्ञापनाय सूत्रद्वयोपन्यासः । सूत्रस्यायमर्थः । अभेदादिति पूर्वसूत्रादनुवर्तते । प्रधानस्य गुणिनो ब्रह्मणः सर्वेपूपासनेष्वभेदादानन्दादयो ब्रह्मस्वरूपनिरूपका गुणाः सर्वब्रह्मविद्यासु संग्राह्याः । तस्मात्सर्वासु ब्रह्मविद्यासु सगुणमेव ब्रह्मोपास्यमिति सिद्धम् । **विकल्पोऽविशिष्टफलत्वादिति** । सूत्रस्यायमर्थः । सर्वब्रह्मविद्यानां विकल्प एव । न तासु कयोरपि समुच्चयः । ब्रह्मप्राप्तिरूपफलस्य सर्वत्र तुल्यत्वादिति । तस्मात्सर्वत्र फलस्यैकरूप्याद्विद्याविकल्प इति सिद्धम् । एवं च निर्गुणविद्याप्रतिपादिकाः श्रुतयो नैव सन्ति । सदेव सोम्येत्यादिश्रुतिष्वपि सविशेषमेव ब्रह्माभिधीयत इति प्रागेवोक्तम् ( पृ. ५८ प. १७ ) ।

—७ **युक्तमिति** । गुणयुक्तमेव ब्रह्म प्राप्यम् । तद्गुणकोपासनादित्यर्थः ।

—८ **सच्चित्तः** । सद्विद्यानिष्ठः ।

—८–१३ नन्वेवं मुक्तावभेदप्रतिपादिका ब्रह्म वेदेति श्रुतिर्विरुद्धेति चेत्तत्राह–**ब्रह्मेति** । **नामरूपादिति** । प्राकृतनामरूपहानिरनेन सूच्यते । **निरञ्जन इति** । अनेन साम्यं सूच्यते । **परं ज्योतिः** । परं ब्रह्म । स्वेनेत्यनेन साम्यस्य स्वाभाविकत्वं सूच्यते । **ब्रह्मप्रकारता** । ब्रह्मधर्मत्वम् ।

—१३ ननु तर्हि ब्रह्म वेद ब्रह्मैव भवतीति श्रुतौ द्वितीयब्रह्मशब्दस्य ब्रह्मसदृशार्थकत्वेन गौणत्वं स्यादित्यत आह–**प्रकारैक्य इति** ।

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ( वि. पु. १।५।६४ )

इत्यत्रेवेति भावः ।

—१४–२१ विष्णुपुराण एव विभेदजनकेऽज्ञान इत्यस्मादव्यवहितपूर्वश्लोकत्रये भेदं दर्शयति–**अत्रापीति** । **विज्ञानमिति** । समाधिजन्यः स्वरूपसाक्षात्कारो विज्ञानम् । आत्मा शुद्धं स्वस्वरूपम् । यथा प्रक्षीणाशेषभावनं परब्रह्म प्राप्यं तथा प्रक्षीणाशेषभावन आत्मा शुद्धं स्वस्वरूपमपि प्राप्यमित्यर्थः । **कर्मभावनेति** । भावना नाम ज्ञानविशेषजा वासना । ‘ वयं कर्मैव कुर्मः ’ इति कर्मभा-

वना । यथा देवमनुष्यादीनाम् । 'वयं ब्रह्मैव चिन्तयामः' इति ब्रह्मभावना । यथा सनन्दनादीनाम् । 'वयं पुनरुभयमिदमनुसंदध्मः' इत्युभयभावना । यथा हिरण्यगर्भादीनामित्यात्मप्रकाशाभिधायां विष्णुपुराणसारविवृतौ स्पष्टम् । भावनात्रयरहित इति । ब्रह्मभावनापि साधकावस्थायामेव न सिद्धावस्थायामिति तद्रहितस्यैव प्रापणीयत्वं बोध्यम् । क्षेत्रज्ञ इति । यावत्क्षेत्रज्ञावस्थस्तावत्करणी उपासकः । तस्य करणीभूतं ज्ञानमुपासनादिरूपम् । तच्च मुक्तिरूपं कार्यं निष्पाद्य कृतकृत्यं यदा भवति तदैव निवर्तयेन्न तु मुक्तेः प्राक् । तावत्पर्यन्तमुपासनाया अवश्यानुष्ठेयत्वात् ।

८१-५ **पूर्वोक्तार्थेति** । मुक्तौ साम्यप्रतिपादकपूर्वोक्तश्रुतिविरोधाद्ब्रह्मण उभयलिङ्गत्वविरोधाच्चेत्यर्थः ।

—८ **भेदो देवादिरूप इति** । अयमेव भेदो ज्ञानेन निरसनीयः । घटस्य घटान्तरादिव मुक्तात्मनोऽपि ब्रह्मणः सकाशाद्भेदस्य प्रमाणसिद्धत्वात् ।

—११ **अभेदीभवतीति** । वस्तुतो भिन्नोऽपि ज्ञानाकारेणाभेदीभवति । जीवब्रह्मणोर्वस्तुतो भेदेऽपि ज्ञानाकारेण योऽभेदः स देहात्मैक्यभ्रमे न भासते । जीवात्मनां देवादिरूपेण भेदश्च देहात्मैक्यभ्रमे सत्येव । अतो ज्ञानाकारेण योऽभेदस्तद्विरुद्धो देवादिभेदः । तादृशदेवादिभेदमूलभूतदेहात्मैक्यप्रतीत्यभावे ज्ञानाकारेणाभेदो भासत इत्यर्थः ।

—१३ **अनावरणः** । कर्मावरणरहितः । नास्त्येवावरण इति पाठेऽप्ययमेवार्थः । अवरण इति पदच्छेदः । ज्ञानाकारैकस्वरूपाणामात्मनां मध्ये बुद्धिसुखादिभेदस्तु कर्ममूलकः । स च देवादिभेदनाशोत्तरं नास्ति । यतस्तदानीं स आत्मा कर्मावरणरहित इत्यर्थः । बाह्यकर्मवृतिप्रज इति पाठे कर्मरूपा या वृतिरावरणं तस्माज्जात इत्यर्थः ।

—१६ ब्रह्मण इति पञ्चमी । **असन्तम्** । अनित्यम् । देवादिरूपेण भेदो ह्यनित्यः । तेन स्वाभाविकनित्यभेदव्यावृत्तिः । नित्यभेदस्तु वर्तत एवेत्याशयः ।

—१९ **चतुर्विधः** । देवतिर्यङ्मनुष्यस्थावरभेदेन ।

८२-२ अज्ञानस्य कर्मरूपत्वे हेतुमाह—**अविद्येति** ।

—३ ननु क्षेत्रज्ञमित्यत्र जीवब्रह्मणोः सर्वथैक्यं भासत इति चेत्तत्राह—**क्षेत्रज्ञमिति** ।

—४ **अन्यथा** । क्षेत्रज्ञमित्यत्र सर्वथैक्यप्रतिपादने ।

—८ **ईश्वर इति** । न चात्र सर्वभूतानामित्युक्तत्वात्परमात्मनो भौतिकदेहान्तर्यामित्वेपि न जीवान्तर्यामित्वमिति वाच्यम् । भूतशब्दस्यात्मपर्यन्तदेहवाचित्वात् । अत एव भ्रामयन्सर्वभूतानीत्युत्तरार्धसंगतिः । न हिंस्याद्भूतानीति प्रयोगश्चोपपद्यते ।

८२—१३ तत एवेति । न त्वैक्यादित्यर्थः । न तदस्तीत्यत्राविनाभावप्रतिपादनात् । अविनाभावो हि संबन्धनियमः ।

—१५ भगवद्विभूतीति । न तदस्तीत्यस्य सर्वनिषेधपूर्वैकैक्यतात्पर्यकत्वे हि विभूत्युपसंहारत्वं न स्यात् । विभूत्युपसंहारे विभूतेर्निषेधायोगात् ।

—१६–८ न तदस्तीत्यस्य विभूत्युपसंहारत्वं चोत्तरश्लोकेनावगम्यत इत्याह—तत इति । यद्यदिति । यद्यद्विभूतिमदैश्वर्यसंपन्नं भूतजातं श्रीमत्कान्तिमद्धनधान्यसमृद्धं वोर्जितं कल्याणारम्भेषूद्युक्तं तत्तन्मम तेजोंशसंभवमित्यवगच्छ । तेजः पराभिभवसामर्थ्यं ममाचिन्त्यशक्तेर्नियमनशक्त्येकदेशसंभवमित्यर्थः ।

८३–१ अथाविद्यां दूषयितुमारभते—यदपीति । निर्विशेषस्य कथं भ्रमसंभव इत्यत्राह—दोषेति ।

—२–३ ब्रह्मव्यतिरिक्तस्य दोषस्य सत्त्वे द्वैतापत्तिरित्यत आह—दोषश्चेति । विक्षेपः । संसारः ।

—४–५ अविद्यायां श्रुतिप्रमाणमाह—अनृतेनेति । अर्थापत्तिप्रमाणमाह—ब्रह्मण इति ।

—६ भ्रान्तीति । भ्रान्तिबाधविषयत्वायोगादित्यर्थः । अविद्या हि ज्ञानिदृष्ट्या भ्रान्तिविषयत्वं बाधविषयत्वं च लभते ।

—७ ख्यातीति । ख्यातिः प्रसिद्धिः । न ह्यसतः शशशृङ्गादेः प्रसिद्धिरस्ति । न वा बाधः । प्रतियोगिप्रसिद्धिं विना तदयोगात् ।

—८ तदयुक्तमिति । आश्रयानुपपत्तितिरोधानानुपपत्तिस्वरूपानुपपत्त्यनिर्वचनीयत्वानुपपत्तिप्रमाणानुपपत्तिनिवर्तकानुपपत्तिनिवृत्त्यनुपपत्तिरूपसप्तविधानुपपत्तिदोषसत्त्वादित्याशयः ।

तत्रादावाश्रयानुपपत्तिमाह—सा हीति ।

—९ न तावदिति । जीवे सिद्धेऽविद्यासिद्धिरविद्यासिद्धौ च जीवसिद्धिरित्यन्योन्याश्रयान्न तस्या जीव आश्रय इत्यर्थः ।

—११ विरोधित्वमुपपादयति—सा हि ज्ञानेति । ब्रह्मविषयस्याज्ञानस्य तत्प्रकाशबाध्यत्वाद्विरोध इति भावः ।

—१२–७ज्ञानाबाध्यत्वे दोषमाह—ज्ञानरूपमिति । मृषात्मकमत एव तन्निवर्त्यं ज्ञाननिवर्त्यत्वेनाभिमतं यदज्ञानं तस्य ज्ञानाबाध्यत्वेन ब्रह्माश्रितत्वे स्वीकृतेऽर्थादेव तेनाज्ञानेन ज्ञानरूपं स्वप्रकाशमपि परं ब्रह्म तिरस्कृतं स्यात् । ततश्चैतस्याज्ञानस्य निवर्तने कः प्रभुः समर्थः स्यान्न कोपीत्यर्थः । अज्ञानाश्रयब्रह्मनिष्ठस्याज्ञानविरोधिनः कस्याप्यभावात् । न हि शुक्तिरेव स्वाज्ञानं निवर्तयति

किं तु शुक्तिज्ञानम् । नन्वत्रापि ‘ ज्ञानस्वरूपं ब्रह्म ’ इत्याकारकं यज्ज्ञानं तदेवाज्ञानस्य निवर्तकमस्त्विति चेन्न । यथा ब्रह्म नाज्ञानस्य निवर्तकं तथा तादृशब्रह्मस्वरूपानतिरिक्तस्य तत्प्रकाशस्याप्यज्ञानानिवर्तकत्वात् । किं च ‘ ज्ञानस्वरूपं ब्रह्म ’ इत्याकारकं यदि ज्ञानमस्ति तर्हि तस्य प्रमेयत्वापत्त्याऽननुभूतित्वं प्रसज्येत । तथा च प्रयोगः । ब्रह्मानुभूतिभिन्नं प्रमेयत्वाद्घटवदिति ।

८३—१८ द्वितीयश्लोकार्थमाह–ज्ञानस्वरूपमिति । ब्रह्मस्वरूपभूतस्य ज्ञानस्याज्ञानाश्रयत्वेनाज्ञानबाधकत्वाभावेऽपि ‘ ज्ञानस्वरूपं ब्रह्म ’ इत्याकारकज्ञानस्याज्ञानबाधकत्वस्वीकारे बाधकाभाव इत्याशयः ।

—२० विशेषानवगमादिति । ननु ब्रह्मणः स्वरूपभूतं ज्ञानं प्रथमम् । ज्ञानस्वरूपं ब्रह्मेत्याकारकं ज्ञानं द्वितीयम् । तत्राज्ञानबाधको यो ब्रह्मस्वभावः सत्यत्वज्ञानत्वादिः स द्वितीयज्ञानेनैव गृह्यत इति तदेवाज्ञानस्य बाधकं न प्रथममिति चेन्न । ब्रह्मणः स्वप्रकाशत्वेन तत्स्वरूपभूते प्रथमज्ञानेऽपि तादृशस्वभावस्य गृहीतत्वात् ।

८४–१ स्वयमेव प्रकाशत इति । विषयवैषम्येणैव हि ज्ञानयोः फले भेदः । ननु सोयं देवदत्त इति प्रत्यभिज्ञाया एव द्वित्वभ्रमविरोधित्वं न त्वयं देवदत्त इत्यभिज्ञाया इति कथं भेद इति चेन्न । एकस्य देशद्वयकालद्वयसंबन्धरूपो विषयः प्रत्यभिज्ञाया एव नाभिज्ञाया इति विषयवैषम्यात् ।

—९ अथोच्येतेति । उक्तरीत्या ब्रह्मविषयप्रमाणज्ञानस्य भ्रमनिवर्तकत्वासंभवेऽपि प्रपञ्चमिथ्यात्वविषयकं ज्ञानं भ्रमनिवर्तकमस्त्वित्याशयः ।

—१३ एकविषयत्वेन हीति । न हि रजतमिथ्यात्वविषयकं ज्ञानं घटयाथात्म्यज्ञानस्य निवर्तकं भवतीति भावः ।

—१५ शङ्कते–ब्रह्मस्वरूपाज्ञानं नामेति । एवं च प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञानस्य निवृत्तिः फलिता भवतीति भावः ।

८५–१ अद्वितीयत्वं धर्म इति । तथा च ब्रह्मणः स्वानुभवसिद्धत्वेऽपि तद्धर्मस्याद्वितीयत्वस्य स्वानुभवसिद्धत्वाभावेन प्रपञ्चमिथ्यात्वज्ञानेनैव स धर्मः प्रतीयत इति ततः प्राक्सद्वितीयत्वरूपाज्ञानं तद्बाधश्च संभवतीत्याशयः ।

—४ अथ द्वितीयां तिरोधानानुपपत्तिमाह–किं चेति ।

—६ प्रकाशस्येति । नित्यस्य प्रकाशस्योत्पत्त्यभावेनोत्पत्तिप्रतिबन्धरूपस्याद्यस्य प्रकाशतिरोधानस्यासंभवेन विद्यमानप्रकाशविनाशरूपस्य द्वितीयस्यैव प्रकाशतिरोधानस्य स्वीकर्तव्यतया प्रकाशरूपब्रह्मणः स्वरूपनाश एवोक्तः स्यादित्यर्थः ।

—८ अथ तृतीयां स्वरूपानुपपत्तिमाह–अपि चेति । स्वाश्रयेति । स्वमाश्रयो यस्येति बहुव्रीहिः । स्वनिष्ठाविद्यारूपदोषवशादित्यर्थः । वस्तुतो निराश्र-

याप्यनुभूतिरविद्यारूपदोषेणानन्ताश्रयं स्वस्वरूपमनुभवति । तथा वस्तुतो निर्विषयाऽप्यनन्तविषयं स्वस्वरूपमनुभवतीत्यर्थः ।

८५—११ **अनभ्युपगमादिति** । परमार्थत्वस्वीकारे द्वैतापत्तेः ।

—१२ **अभ्युपगमनीय इति** । पूर्वपक्षिमतेनापरमार्थं हि सर्वं जगद्द्रष्टा दृश्यं दृशिश्चेति त्रिविधमुपलभ्यते तथाऽयमनुभूतिनिष्ठो दोषोऽपरमार्थश्चेत्तेषु केनाऽपि रूपेणाभ्युपगमनीय एवेत्यर्थः ।

—१३ दृशिर्द्विविधा ' निरवच्छिन्ना सावच्छिन्ना ' च । तत्रादौ निरवच्छिन्नदृशित्वं निराकरोति-**न तावदिति** ।

**दृशिस्वरूपेति** । अनुभूतिः स्वयं दृशिस्वरूपा, तन्निष्ठदोषोऽपि दृशिस्वरूपश्चेद्दोषभूता दृशिराश्रयदृश्यपेक्षया भिन्नाऽभिन्ना वा । आद्ये दृशिद्वयापत्तेः । देवदत्तादिद्रष्टृभेदेन घटादिदृश्यभेदेन च दृशिभेदेऽपि निरवच्छिन्नदृशेरेकरूपत्वमेवेष्टमिति भावः । अन्त्ये दृशेः परमार्थत्वेन तत्स्वरूपदोषस्यापरमार्थत्वानापत्तिः । दृशेरप्यपरमार्थत्वे तु शून्यवादप्रसङ्गः ।

—१४ **माध्यमिकाः** । शून्यवादिनो बौद्धैकदेशिनः ।

—१६ **अनवस्था स्यादिति** । प्रपञ्चदर्शनमूलभूतस्याविद्यारूपदोषस्य द्रष्टृत्वादिरूपत्वस्वीकारे द्रष्टृत्वादीनां दृशावेव कल्पितत्वादपरमार्थत्वेन दोषजन्यत्वाद्दोषान्तरं कल्पनीयम् । तादृशदोषान्तरस्याप्यपरमार्थत्वे तत्साधनतया पुनरन्यद्दोषान्तरं कल्पनीयमित्यनवस्थेति भावः ।

—१७ अथाविद्योत्पादकदोषान्तरस्य परमार्थत्वमेवेति नानवस्थेति चेत्तस्य ब्रह्मणः सकाशाद्भिन्नत्वे द्वैतापत्तिः । अभिन्नत्व आह—**ब्रह्मैवेति** । यदि दोषान्तरं ब्रह्मस्वरूपमेव तर्हि तादृशदोषात्मकं ब्रह्म प्रपञ्चदर्शनस्यैव कारणं भवेन्न त्वविद्यायाः । ब्रह्मस्वरूपदोषान्तरं ह्यविद्यारूपदोषद्वारा प्रपञ्चदर्शनस्य मूलमित्येवं परंपरापेक्षया तादृशं ब्रह्म साक्षात्प्रपञ्चदर्शनस्यैव मूलं भवेत् । मध्ये गड्डुभूताया अविद्याया न किमपि प्रयोजनम् । मृषात्वेन दोषसापेक्षतया अविद्याया अपि प्रपञ्चतुल्यत्वात् ।

८६—४ अथ चतुर्थीमनिर्वचनीयत्वानुपपत्तिमाह—**अनिर्वचनीयत्वमिति** ।

—५ **अनिर्वचनीयतैव स्यादिति** । विद्वत्संनिधाववाच्यतैव स्यादित्यर्थः । ' अनिर्वचनीयतैव न स्यात् ' इति पाठेऽनिर्वचनीयशब्दप्रतिपाद्यं न स्यादित्यर्थः । व्यवहारस्य प्रतीतिपूर्वकत्वात्सदसद्विलक्षणशब्देनानिर्वचनीयशब्देन चाज्ञानं न व्यवह्रियेत । प्रतीतिर्हि द्विविधैव । काचित्सदाकारा घटादिसद्वस्तुविषया । काचिदसदाकारा शशशृङ्गादितुच्छविषया । सदसद्विलक्षणत्वेन भवतोऽभिप्रेतमज्ञानं तूभयविधाया अपि प्रतीतेरविषयः । विरुद्धत्वात् । प्रतीतिविरुद्धस्यापि प्रती-

तिविषयत्वे तु सर्वं सर्वप्रतीतेर्विषयः स्यात् । सतोऽपि घटादेरसत्प्रतीतिविषयत्वं स्यात् । असतोऽपि शशशृङ्गादेः सत्प्रतीतिविषयत्वं स्यादिति भावः ।

८६—१० पूर्वपक्षमुद्घाटयति—अथ **स्यादित्यादिना निरवद्यमिति** (८८–८) इत्यन्तेन । अहंकाराध्यासो घटादिविषयकज्ञानाध्यासश्चान्तरः । ज्ञेयाध्यासो बाह्यः ।

—१३–४ **तदुपहितेति** । तेनाज्ञानेनोपहितं यद्ब्रह्म तदुपादानं कारणं यस्येत्यध्यासस्य विशेषणम् । **अविकार इति** । एतेनाज्ञानानुपहितस्य ब्रह्मणोऽध्यासकारणत्वं नास्तीति सूचितम् । ननु स्वप्रकाशस्य कथमध्याससंभव इत्यत्राह—**तेनैवेति** । अज्ञानेनैव तिरोहितस्वरूप इत्यर्थः ।

—१५ **तस्यैवेति** । तस्य दोषस्यैव कादाचित्कावस्थाविशेषेण व्यवहारदशायां रज्ज्वादौ सर्पाद्यध्यास आत्मनि तादृशसर्पादिज्ञानाध्यासश्च भवतीत्यर्थः । **अध्यासरूपे** । अध्यासशब्दः कर्मसाधनः । अध्यस्तरूप इत्यर्थः ।

—१७ **तदुपादानत्वम्** । अज्ञानोपादानकत्वम् ।

—१८ अज्ञाने प्रत्यक्षप्रमाणं दर्शयति—**कारणेति** । कारणशब्देन कार्यभूताऽज्ञानस्य निवृत्तिः । अहमज्ञ इत्यज्ञानस्वरूपकीर्तनम् । तस्य मामन्यं च न जानामीत्याच्छादनरूपकार्यकथनम् ।

—२० ननु ज्ञानप्रागभावेनैव सिद्धे किमर्थं भावरूपमज्ञानमन्यत्स्वीक्रियत इति चेत्तत्राह—**अयं त्विति** । अयमवभास इत्यर्थः ।

**स हीति** । ज्ञानप्रागभावो हि षष्ठेनानुपलब्धिप्रमाणेन गृह्यत इति भावः ।

—२१ **अपरोक्षः** । प्रत्यक्षः ।

—२२ **अनुभववेलायामिति** । ज्ञानाभावो यदानुभूयते तदानीं ज्ञानं विद्यते न वा । आद्ये ज्ञानाभावरूपविषयासत्त्वान्न तदनुभवः । अन्त्ये ज्ञानाभावस्यापि ज्ञानं न स्यात् ।

८७—३ **विरोधादेवेति** । प्रतियोग्यधिकरणयोर्यज्ज्ञानं तस्य सत्त्वे प्रतियोगिनः सत्त्वेन ज्ञानाभावस्य न सत्त्वम् । ज्ञानाभावस्य ज्ञानरूपप्रतियोगिना सह विरोधात् । अतस्तदनुभवो न संभवति ।

—४ **धर्मीति** । यथा भूतले घटाभावस्य ज्ञानं भूतलघटयोर्धर्मिप्रतियोगिनोर्ज्ञाने सत्येव जायते तद्वदिति भावः ।

—५–६ अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तं दूषणमतिदिशति—**ज्ञानाभावस्येति** । **अभावाख्यप्रमाणम्** । अनुपलब्धिप्रमाणम् । **समानेति** । तथा च नेदमज्ञानमभावरूपं किं तु भावरूपमेव स्वीकर्तव्यम् । भावरूपस्य चाज्ञानस्य ज्ञानेन सह विरोधाभावान्नोक्तदूषणावसरः । तदाह—**अस्येति** ।

८७—९-१० सिद्धान्ती चोदयति–**ननु चेति**। **साक्षिचैतन्येन**। साक्षिभूतेन ज्ञानेन। 'अहमज्ञः' इत्याकारकमज्ञानविषयकं यज्ज्ञानं तेनेति यावत्। **विरुध्यत इति**। भावरूपस्याऽज्ञानस्य वस्तुयाथात्म्यज्ञाननिवर्त्यत्वाङ्गीकाराद्विरोधः। सति च विरोधेऽज्ञानस्यावभासो न स्यादिति भावः।

—११ साक्षिचैतन्यस्याज्ञानविषयत्वमस्तु, ततः किमित्यत आह–**न हीति**।

—१२-३ सिद्धान्ती पुनश्चोदयति–**ननु चेदमिति**। अयं भावः–अहमज्ञ इत्यवभासेऽज्ञानावच्छेदकतयात्मनः स्फुरणं भवति। तथा चाज्ञानं नास्मदर्थस्यात्मन इत्यस्मदर्थव्यावृत्तमेव तदज्ञानम्। तस्य चास्मदर्थावच्छिन्नाज्ञानस्य साक्षिचैतन्यविषयत्वं वक्तव्यम्। तच्च न संभवति। अस्मदर्थस्यात्मनः साक्षिचैतन्यविषयत्वासंभवात्। यथा दण्डस्याप्रत्यक्षत्वे दण्डीति विशिष्टप्रत्यक्षं न संभवति तद्वदिति। **विषयविशेषः**। अवच्छेदकविशेषोऽस्मदर्थः।

—१४-५ **प्रमाणाधीनेति**। प्रमाणेन सिध्यत एव वस्तुनो विषयत्वादात्मनश्च प्रमातुः प्रमाणेन सिद्ध्यभावान्न तस्य विषयत्वमित्याशयः। प्रमाणानधीनसिद्धिरितिपाठे तु स आत्मरूपो विषयः प्रमाणानधीनसिद्धिरित्यर्थः। **अस्मदर्थव्यावृत्तम्**। अज्ञानव्यावर्तकास्मदर्थावच्छिन्नम्।

८८–२-४ **प्रमाणज्ञानमिति**। अयं पक्षनिर्देशः। ज्ञानमित्युक्ते ब्रह्मस्वरूपज्ञानस्य वस्त्वन्तरपूर्वकत्वाभावात्तद्व्यावृत्त्यर्थं प्रमाणज्ञानमित्युक्तम्। **स्वप्रागभावेति**। साध्यनिर्देशः। स्वप्रागभावव्यतिरिक्तं, स्वविषयावरणभूतं, स्वनिवर्त्यं, स्वदेशगतं यद्वस्त्वन्तरं तत्पूर्वकमित्यर्थः। स्वविषयावरणभूतम्। स्वस्य प्रमाणज्ञानस्य विषयभूतं यद्ब्रह्मादि तत्स्वरूपतिरस्कारकम्। स्वदेशगतम्। स्वस्य प्रमाणज्ञानस्य देश आश्रय आत्मा तन्निष्ठम्। स्वस्य प्रमाणज्ञानस्य यः प्रागभावस्तद्व्यावृत्त्यर्थं स्वप्रागभावव्यतिरिक्तेति। भयादिव्यावृत्त्यर्थं स्वविषयावरणेति। धर्माधर्मव्यावृत्त्यर्थं स्वनिवर्त्येति। तयोर्ज्ञानविषयावरणत्वं तु कुत्रचिद्योजनीयम्। घटगतो यो विषयाभिव्यक्तिप्रागभावस्तद्व्यावृत्त्यर्थं स्वदेशगतेति। व्यवधानभूतभित्त्यादि तु न स्वनिवर्त्यं नापि स्वदेशगतम्। एतादृशं च भावरूपमज्ञानमेवेत्यर्थः। **अप्रकाशितेति**। हेतुनिर्देशः। प्रकाशकत्वादित्येतावन्मात्रोक्तौ धारावाहिकज्ञानस्थल उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि साध्यधर्माभावाद्व्यभिचारः। अतोऽप्रकाशितार्थेति। प्रकाशकत्वं च साक्षात्परंपरया वा बोध्यम्। दृष्टान्ते दीपप्रभाया ज्ञानद्वारा वस्तुप्रकाशकत्वात्। द्वितीयदीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्प्रथमोत्पन्नेत्युक्तम्। प्रथमोत्पन्नाया अपि दीपप्रभाया दिवाऽप्रकाशितार्थप्रकाशकत्वाभावादन्धकार इत्युक्तम्। अन्धकार एव तथाविधं वस्त्वन्तरमिति न दृष्टान्ते साध्यविकलता।

—५ अन्धकारस्य भावरूपत्वमसहमानो नैयायिकः शङ्कते–**आलोकेति**। आलोकाभाव एव तमः। न तु द्रव्यान्तरम्। नीलं तमश्चलतीति प्रत्ययस्तु भ्रम

एवेति तदाशयः । ननु तमस आलोकाभावस्वरूपत्वेऽन्धस्योलूकादीनां चालोकसत्त्व एव कथमन्धकारप्रतीतिरत आह—**रूपेति** । रूपदर्शनाभाव एव तम इत्यर्थः।

८८—७ **बहुलत्वविरलत्वेति** । अत्र गाढान्धकारोऽत्र विरल इत्याद्यवस्थायोगस्तमसोऽभावरूपत्वे न संभवतीत्यर्थः। तमः ससर्ज भगवान्, यस्य तमः शरीरमित्यादिश्रुतयोऽपि तमसो द्रव्यत्वे प्रमाणतयाऽनुसंधेयाः।

—९ अथ सिद्धान्तं वक्तुं पञ्चमीं प्रमाणानुपपत्तिं प्रदर्शयितुं चोपक्रमते—**अत्रोच्यत इति** ।

—१२ तुल्यत्वमुपपादयति—**विषयत्वेनेति** । आत्मस्वरूपं यज्ज्ञानं स एवाज्ञानस्य विषयः । अज्ञानाश्रयश्चात्मैव । स एव चाज्ञानस्य व्यावर्तकः । तस्य ज्ञानस्वरूपस्यात्मनोऽहमज्ञ इत्याद्यज्ञानप्रतीतिकाले प्रतीतिरस्ति न वा । आद्येऽज्ञानव्यावर्तकात्मसत्त्वेनात्मस्वरूपज्ञाननिवर्त्यस्याज्ञानस्यासंभवः । द्वितीयेऽज्ञानविषयस्याज्ञानाश्रयस्य च ज्ञानाभावेनाज्ञानस्यापि प्रतीतिर्न स्यात् । व्यावर्तकस्यैवात्राज्ञानविषयत्वादज्ञानाश्रयत्वाच्च ।

—१५ शङ्कते—**अथेति** । आत्मप्रतीतिर्हि द्विधा स्फुटाऽस्फुटा च । तत्र स्फुटाया एवाज्ञानव्यावर्तकत्वम् । अहमज्ञ इत्याद्यज्ञानप्रतीतिकाले त्वज्ञानस्य विषयतयाऽऽश्रयतया च याऽऽत्मप्रतीतिरस्ति सा न स्फुटेति नाज्ञानं व्यावर्तयतीति नोक्तदोष इत्याशयः ।

—१९ **अन्यत्राभिनिवेशादिति** । अभिनिवेशं विनेत्यर्थः । अभिनिवेश आग्रहो भावरूपाज्ञानविषये पक्षपातः स एव विशेषो नान्य इत्याशयः ।

—१९–२० नन्वात्मनोऽप्रतीतौ व्यावर्तकाश्रयविषयशून्यमज्ञानं कथमनुभूयेतेति यदुक्तं (श्रीभाष्य–पृ. ८८ प. १५) तन्न सम्यक् । यथा ज्ञानाभावस्य ज्ञानसापेक्षत्वं न तथा भावरूपस्याज्ञानस्येत्यात्मरूपज्ञानस्याप्रतीतावपि भावरूपमज्ञानमनुभूयेतैवेति चेत्तत्राह—**भावरूपस्येति** ।

—२१–२ **तदन्यः** । ज्ञानादन्यः । **तद्विरोधि** । ज्ञानविरोधि ।

८९–३ **समानमिति** । तथा चाज्ञानस्याभावरूपत्वमेवास्तु न तु भावरूपत्वमिति भावः ।

—३–४ ननु समानत्वे ज्ञानाभावरूपत्वमेवाज्ञानस्येति कोऽभिनिवेश इत्यत्राह—**ज्ञानप्रागभाव इति** । **भवतापि** । अज्ञानस्य भावरूपत्वं वदतापि । तथा च लाघवात्स एवास्तु न तु तदतिरिक्तं भावस्वरूपमज्ञानमिति भावः ।

—७ अथाज्ञानवादिनो मतं प्रतिकूलतर्कपराहतमित्याशयेनाह—**नित्येति** । नित्यमुक्तत्वं परमार्थदोषासंस्पृष्टत्वम् । अतः परमार्थदोषो न संभवति । स्वानुभवस्वरूपत्वाच्चापरमार्थपरानुभवो न संभवतीत्यर्थः ।

८९-१३ **स्वरूपनाश एवेति** । अप्रकाशितस्वरूपत्वं नाम स्वरूपप्रकाशस्याभावः । नाश इति यावत् । तथा च प्रकाशनाशं वदता त्वया पर्यायेण स्वरूपनाश एवोक्तः स्यात् । प्रकाशश्च न ब्रह्मणो धर्मः किं तु ब्रह्मणः स्वरूपमेवेति त्वयैवोक्तत्वात् ।

—१५ **अनुभूतं सदिति** । न चाज्ञानं स्वरूपसदेव ब्रह्मस्वरूपतिरस्कारकमस्तु न तु ज्ञातमिति वाच्यम् । तथा सत्यज्ञानस्य परमार्थत्वापत्तेः । न ह्यपरमार्थस्य स्वरूपसत्त्वं वक्तुं शक्यते ।

—१६-७ **अनुभूतमेवेति** । एवकारेण 'तिरोहितस्वरूपस्य ब्रह्मणोऽज्ञानानुभवः' इति प्रागुक्तपक्षनिरासः ।

—१८ **निष्प्रयोजनेति** । तिरोधानकल्पना ह्यज्ञानानुभवार्थैवेति भावः ।

**अज्ञानस्वरूपकल्पना चेति** । निष्प्रयोजना स्यादिति संबध्यते । यथा स्वरूपतिरोधानं विनाऽपि ब्रह्मणोऽज्ञानानुभवस्तथाऽज्ञानं विनापि प्रपञ्चानुभवः स्यादित्याशयः ।

—२० अनुभवपूर्वकतिरस्कारपक्ष एव दूषणमाह-**किं चेति** । स्वतःपक्षे दूषणद्वयमनिर्मोक्षो ब्रह्मस्वरूपनिवृत्तिश्चेति ।

९०-५ **तथा सतीति** । तिरस्कारपूर्वकानुभवपक्षे ह्यज्ञानं स्वरूपसदेव ब्रह्मस्वरूपतिरस्कारकं न तु ज्ञातमित्युक्तं स्यात् । स्वरूपसतश्चाज्ञानस्यापरमार्थत्वाभावेन ज्ञानबाध्यत्वं न स्यादिति भावः । काचो नेत्ररोगविशेषः । स ह्यज्ञातोऽपि स्वरूपतः सन्नेव दृष्टिं तिरस्करोतीति बोध्यम् ।

—८ अथ तिरस्कारानुभवयोर्यौगपद्यं शङ्कते-**अथेदमिति** । **स्वयमनादीति** । अनेनानवस्था परिहृता ।

—११ **साक्षित्वापादनायोगात्** । अज्ञानानुभवायोगात् ।

—१२ **अपास्तमिति** । अन्येन हेतुना पूर्वं ब्रह्मस्वरूपे तिरोहिते पश्चादज्ञानमनुभूयत इत्युच्यमानेऽज्ञानस्यापरमार्थत्वेनानुभवात्पूर्वं स्वरूपेण सत्त्वं कथमपि वक्तुं न शक्यत इत्यनादित्वं दुर्वचम् ।

—१३ **न स्यादिति** । स्वरूपतिरस्कारं विनैव ब्रह्मणोऽज्ञानसाक्षित्वं चेत्तादृशसाक्षित्वस्य स्वरूपत एव वक्तव्यतया स्वानुभवैकतानता न संभवतीति भावः ।

—१८ **निर्विशेष इति** । एतेन 'ब्रह्मणः स्वतो निरंशत्वेऽपि तन्निष्ठः कश्चिद्विशेषः प्रकाशते कश्चिन्न' इति 'किंचित्प्रकाशते' इत्यस्य तात्पर्यमित्यपास्तम् । **प्रकाशमात्रे** । कस्याप्यविषयभूते ।

९०-२० शङ्कते-अथेति । अविशदमिवालक्ष्यत इति । अविशदमिवेत्यनेन तिरस्कारः सूचितः । आलक्ष्यत इत्यनेन प्रकाशश्च सूचितः । एवं च तिरस्कारप्रकाशयोर्युगपत्संभवोस्तीति भावः ।

—२१ परिहरति-प्रकाशमात्रेति ।

९१-१ यः सांश इति । सांशः सविशेषश्च यो घटादिः पदार्थः प्रकाशविषयो भवति तस्यांशविशेषसहितस्य योऽवभासः स विशदावभासः । कतिपयांशरहितस्य कतिपयविशेषरहितस्य वा योऽवभासः सोऽविशदावभास इत्येवंरीत्यैव सांशसविशेषपदार्थविषये विशदावभासाविशदावभासयोः संभवः । न त्ववभासस्य वैशद्यमवैशद्यं वा । अवभासो हि प्रकाशः । लोकेऽपि घटादिप्रकाशस्य नावैशद्यं संभवति । घटादिषु योंऽशोऽज्ञातस्तत्र प्रकाशस्यावैशद्यं वक्तव्यम् । तच्च व्याहतम् । अज्ञाते प्रकाशस्यासत्त्वात् । धर्मिणः प्रकाशस्यासत्त्वे तद्धर्मभूतमवैशद्यं दुर्वचमेव । एवं च प्रकाशमात्रस्वरूपे परमात्मनि न कथमप्यवैशद्यमिति तात्पर्यम् ।

—४ प्रकाशेति । प्रकाशावैशद्यं न विद्यत इति पाठः ।

—१३ न स्यातामिति । विशदस्वरूपस्याविद्याविरोधित्वादिति भावः ।

—१४-५ अथाज्ञानविषये परोक्तस्य प्रत्यक्षप्रमाणस्य प्रतिकूलतर्कमाह-अस्येति । पूर्वमेवोक्त इति । तथा चाहमज्ञ इत्याकारकमज्ञानस्य प्रत्यक्षं न संभवतीत्यर्थः ।

—१५ प्रतिकूलतर्कान्तरमाह—अपि चेति । निर्विशेषब्रह्मवादी पूर्वपक्षी निरधिष्ठानभ्रमासंभवं मन्यमानो भ्रमाधिष्ठानत्वेन ब्रह्मणः सिद्धिं प्रतिपादयति । परं तु तद्दुरुपपादम् । यथा भ्रमस्य मूलभूतोऽज्ञानरूपो दोषोऽपरमार्थो यथा च तादृशदोषाश्रयत्वेनाभ्युपगतो जीवो जीवस्वरूपेणापरमार्थ इति तयोरपरमार्थत्वेऽपि भवता भ्रमोऽभ्युपगतस्तथैव भ्रमाधिष्ठानभूतस्य ब्रह्मणोऽपरमार्थत्वेऽपि भ्रमाभ्युपगमे बाधकाभावात् । ब्रह्मणश्चापरमार्थत्वे शून्यवादप्रसङ्गः । तथा चाश्रयाभावेन 'अहमज्ञः' इत्याकारकमज्ञानस्य प्रत्यक्षं न संभवतीत्याशयः ।

९२-२ अनभिमतेति । यथाऽप्रकाशितार्थप्रकाशकत्वेन हेतुना प्रमाणज्ञानस्य वस्त्वन्तरपूर्वकत्वं साध्यते तथा तादृशवस्त्वन्तरस्याज्ञानस्याप्यप्रकाशितप्रपञ्चरूपार्थप्रकाशकत्वेन वस्त्वन्तरपूर्वकत्वापत्तावज्ञानान्तरं सिध्येत् । तच्च तवानभिमतमिति भावः ।

—३ अनैकान्त्यम् । व्यभिचारः ।

—४ तदज्ञानम् । प्रथमाज्ञानेन साधितं द्वितीयाज्ञानम् । अज्ञानसाक्षित्वम् । ब्रह्मणः प्रथमाज्ञानानुभवितृत्वम् । निवारयतीति । पूर्वपक्ष्युक्तानुमाने

साध्यकोटौ वस्त्वन्तरस्य स्वविषयावरणेति विशेषणोपादानात्। स्वं प्रथमाज्ञानम्। तद्विषयः प्रपञ्चः। स यदि द्वितीयाज्ञानेनावृतस्तर्ह्यर्थादेव ब्रह्मणा तादृशं प्रथमाज्ञानं नानुभूयेत। निर्विषयस्याज्ञानस्यानुभवायोगात्। अननुभूतेन च तेन ब्रह्मस्वरूपं नाच्छाद्येत। अपरमार्थस्याप्रतीयमानस्य कार्यकारित्वायोगात्। तथा च प्रथमाज्ञानकल्पना व्यर्था स्यादिति भावः।

९२–६ **अप्रकाशितार्थप्रकाशकत्वाभावादिति**। परंपरया प्रकाशकत्वे गृहीते तु परंपरया प्रकाशकेष्विन्द्रियेषु व्यभिचारः। तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्।

—९ वस्तुतो दीपप्रभायाः परंपरयापि प्रकाशकत्वं नास्तीत्याह–**प्रदीपप्रभायास्त्विति**।

—१२ शङ्कते–**नास्माभिरिति**। स्वविषयावरणनिरासकत्वमेव प्रकाशकत्वमिति भावः।

—१३ **अपि त्विति**। ज्ञानस्येवेति पाठः। **निरसनपूर्वकप्रकाशकत्वमिति**। निरसनद्वारा प्रकाशकत्वमित्यर्थः।

९३–१–२ अथ विरुद्धानुमानान्याह–**प्रतिप्रयोगाश्चेति**। तत्रादावनुमानत्रयेऽज्ञानं पक्षः। ततोऽनुमानत्रये ब्रह्म पक्षः। पूर्वपक्ष्युक्तानुमाने साध्यकोटौ वस्त्वन्तरस्य 'स्वदेशगत' इति यद्विशेषणं तस्य प्रथमं चतुर्थं चानुमानं प्रतिकूलम्। द्वितीयं पञ्चमं च 'स्वविषयावरण' इति विशेषणस्य प्रतिकूलम्। तृतीयं षष्ठमष्टमं नवमं च 'स्वनिवर्त्य' इति विशेषणस्य प्रतिकूलम्। सप्तमं च 'स्वप्रागभावव्यतिरिक्त' इति विशेषणस्य प्रतिकूलम्। **ज्ञानमात्रब्रह्मेति**। यद्यपि स्वमते ब्रह्मणो ज्ञानमात्रत्वं नास्ति तथापि पूर्वपक्षिमतं तन्मतेनैव दूषणीयमिति ज्ञानमात्रब्रह्मेत्युक्तम्। **तत्**। शुक्तिकाद्यज्ञानम्।

—३ **न ज्ञानावरणमिति**। यद्यपि पूर्वपक्षिणाऽज्ञानं ज्ञानविषयब्रह्मावरणमित्युक्तं तथापि तन्मते ब्रह्मणो ज्ञानस्वरूपत्वाज्ज्ञानविषयत्वाभावादज्ञानं ज्ञानावरणमेव भवति न तु ज्ञानविषयावरणमित्याशयः।

—७ **ब्रह्म नाज्ञानावरणमिति**। कर्मणि ल्युट्। अज्ञानेन ब्रह्म नाव्रियत इत्यर्थः। **ज्ञानाविषयत्वादिति**। पूर्वपक्षिणा ब्रह्मणि ज्ञानाविषयत्वस्य स्वीकृतत्वात्।

—९ **ज्ञाननिवर्त्याज्ञानमिति**। ज्ञानेन निवर्त्यमज्ञानं यस्येति बहुव्रीहिः। विषयत्वं षष्ठ्यर्थः।

—१२ **भवदभिमतेति**। भवता भावरूपमज्ञानं येनानुमानरूपप्रमाणज्ञानेन साध्यते तस्य स्वप्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावात्। ननु तस्यापि

तथाविधाज्ञानपूर्वकत्वं कल्प्यत इति चेत्तत्र प्रमाणमस्ति न वा। अन्त्ये भवदुक्तासिद्धिः। आद्ये कल्पितस्य प्रमाणज्ञानस्यापि तथाविधाज्ञानपूर्वकत्वं कल्प्यमित्यनवस्थेति भावः।

**वस्तुनः**। भावरूपस्याज्ञानस्य। भावरूपस्य वस्तुनो विनाशकं हि द्विधा। विशेषसामर्थ्ययुक्तं ज्ञानं, ज्ञानभिन्नं च। आद्यमीश्वरादीनाम्। तेन हि प्रलये सर्वनाशो भवति। द्वितीयं दण्डादि। तेन हि घटादिनाशो भवति।

**९३-१९ क्षणिकत्वेनेति**। भयादेश्चिरोपलम्भस्तु कारणानुवृत्त्या बोध्यः।

**९४-२ अनेकभयोपलब्धीति**। स्थायिनां घटादीनां यदा प्रतिक्षणमुत्पत्तिर्भवति तदा ते बहवो युगपदुपलभ्यन्ते तद्वत्।

**—३ व्यर्थेति**। भाववाचिवस्तुशब्देनैव सिद्धौ 'स्वप्रागभावातिरिक्त, अन्तर' एतच्छब्दवैयर्थ्यमित्याशयः।

**—७ न विलक्षणत्वादिति**। यथा माक्षिकादेः सकाशात्तद्विलक्षणस्य कृम्यादेरुत्पत्तिस्तथा ब्रह्मणः सकाशादचेतनत्वादिविशिष्टस्य विलक्षणस्यापि जगत उत्पत्तिर्भवितुमर्हतीति तदधिकरणतात्पर्यम्।

**—९ प्रतीतिभ्रान्तीति**। प्रतीतिश्च भ्रान्त्यभ्रान्तिसाधारणरूपा। भ्रान्तिस्तु विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषयान्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता। बाधस्त्वारोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः। तत्र जगत्स्वरूपं यद्भावरूपाज्ञानं तस्य प्रतीतिः सर्वेषां प्राणिनां प्रायोऽस्त्येव। भ्रान्तिश्च तत्राज्ञानिनां भवत्येव। बाधोऽपि तस्य तत्त्वदृष्ट्याऽस्त्येव। यदि तद्भावरूपाज्ञानं वस्तुतः सत्स्यात्तर्हि तस्य बाधो न स्यात्। यद्यसत्स्यात्तर्हि तस्य प्रतीतिर्भ्रान्तिश्च न स्यात्। सत एव रजतस्यान्यत्र भ्रमदर्शनात्। अतस्तद्भावरूपाज्ञानं न सन्नाप्यसदिति तस्यानिर्वचनीयत्वसिद्धिरिति पूर्वपक्ष्याशयः। **तथा**। अनिर्वचनीयत्वेन।

**—१० प्रतीयमानमेव हीति**। यदि भावरूपाज्ञानस्य प्रतीत्यादिविषयत्वं तर्हि तस्य प्रतीयमानत्वमेव स्यान्न त्वनिर्वचनीयत्वम्। अथ यद्यनिर्वचनीयत्वं तर्हि तस्य केनापि प्रमाणेनोपलम्भाभावेन प्रतीत्यादिविषयत्वं न स्यादित्यर्थः।

**—१३ शङ्कते-शुक्त्यादिष्विति**। भ्रान्तदृष्ट्या रजतं प्रतीयत इति न तदसत्। तदानीमेवेतरदृष्ट्या बाध्यत इति न सत्। अरजतं रजतरूपेण प्रकाशत इत्यपि न वक्तुं शक्यम्। अन्यस्यान्यरूपेणावभासायोगात्। तदुक्तम्—

परस्मिन्भासमाने तु न परं भासते यतः।
तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम्॥

इति । अतोऽगत्याऽनिर्वचनीयमेव रजतं तत्र कल्पनीयम् । तद्वदेव भावरूपाज्ञानविषयेऽपीति शङ्काशयः ।

९४–१५ तत्कल्पनायामपीति । अनिर्वचनीयकल्पनायामपि तस्यानिर्वचनीयस्य निर्वचनीयत्वेनावभासोऽवश्याश्रयणीय एव । इतरथा हि कथमपि तस्य निर्वक्तुमशक्यत्वेन॰ प्रतीतिविषयत्वं, प्रवृत्तिविषयत्वं बाधविषयत्वं भ्रमविषयत्वं च तस्य न स्यात् ।

—१७ नन्वत्र प्रतीत्यादयः कारणं विनैव कल्प्यन्तामिति चेत्तत्राह–अत्यन्तेति ।

—१८ उक्तमेव विशदयति–कल्प्यमानं हीति ।

९५–२ तस्यापरिहार्यत्वाच्चेति । अन्यत्रान्यावभासस्यावश्यकत्वाच्चेत्यर्थः ।

—४ ख्यात्यन्तरेति । तत्र सत्ख्यातिः सर्वैरङ्गीकृतेव । सर्वैरपि स्वस्वमतानुसारेण यत्सद्वस्तु स्वीक्रियते तदुपलम्भरूपत्वात्तस्याः । सतः ख्यातिः प्रतीतिरित्यर्थः। असद्विषये तु चत्वारः पक्षाः । अन्यथाख्यातिः, असत्ख्यातिः, आत्मख्यातिः, अख्यातिश्चेति । अन्यस्यान्यरूपेण या प्रतीतिः सान्यथाख्यातिः । सा च नैयायिकैः स्वीकृता । तत्रान्यथावभासो वर्तत एव। ख्यात्यन्तरेष्वप्ययं तुल्यः । तत्रासत्ख्यातिः-शून्यवादिभिर्बौद्धैर्मायावेदान्तिभिर्माध्वैश्चाङ्गीकृता । असतः ख्यातिः प्रतीतिरित्यर्थः । तत्रासतो या प्रतीतिः साऽसत्त्वेन भवति सत्त्वेन वा । असत्त्वेन चेत्तत्र भ्रमः प्रवृत्तिश्च न संभवति । सत्त्वेन चेदन्यथाऽवभास एव । आत्मख्यातिस्तु विज्ञानवादिभिर्योगाचारैरङ्गीकृता । आत्मनो विज्ञानस्य ख्यातिः प्रतीतिरित्यर्थः । तत्र विज्ञानस्य या प्रतीतिः सा विज्ञानत्वेन भवत्यर्थत्वेन वा । विज्ञानत्वेन चेद्भ्रमादि न संभवति । अर्थत्वेन चेदन्यथाऽवभास एव । अख्यातिस्तु मीमांसकैरङ्गीकृता । न ख्यातिरख्यातिरप्रतीतिरित्यर्थः । इदं रजतमित्यत्रेदमंश एव चक्षुषा प्रतीयते । रजतमिति तु सत्यरजतस्यैव स्मृत्याकारदर्शनम् । तत्तु केवलं स्मर्यत इति तन्मतम् । तत्रेदं रजतमिति वस्तुत एकं ज्ञानं ज्ञानद्वयं वा । एकज्ञानपक्षेऽविशेषणमपि रजतमिदमंशविशेषणत्वेन प्रतीयत इत्यन्यथावभासः । ज्ञानद्वयपक्षे तज्ज्ञानद्वयं ज्ञानद्वयत्वेन प्रतीयत एकज्ञानत्वेन वा । आद्ये भ्रमप्रवृत्त्यादि न संभवति । अन्त्येऽन्यथावभासः ।

—७ विषयेति । अविद्यमान एव विषयो भासत इति मतेऽप्यविद्यमानस्य विद्यमानत्वेन भासनादन्यथावभासो वर्तत एवेत्यर्थः ।

—९ तस्याः । प्रत्यक्षप्रतीतेः । तद्विषयत्वेन । विद्यमानविषयजन्यत्वेन ।

—१० महतामिति । परिहासोक्तिः ।

—११ दोष इति । अनिर्वचनीयरजतकारणमिति संबध्यते ।

९५–१२ **अर्थगतकार्यस्य** । शुक्तावनिर्वचनीयरजतस्य । अथ विषयगतो दोषः कारणमिति चेत्स दोषः किं विषयमात्रनिष्ठो विषयपुरुषोभयनिष्ठो वा । आद्ये पुरुषस्य सर्वथा निर्दोषत्वेन भ्रमासंभवः । अन्त्य उभयनिष्ठदोषस्य केवलविषये कार्योत्पादकत्वं न संभवतीति बोध्यम् ।

—१७ **न घटादीति** । शुक्तिरजतस्थले रजतस्यानिर्वचनीयत्वे तत्रेदं रजतमित्येव बुद्धिर्न त्वयं घट इत्येवं नियमो न संभवति । तथा तत्र रजतशब्देनैव व्यवहारो न घटशब्देनेति च नियमो न संभवतीति भावः ।

—१८ शङ्कते–**रजतादिसादृश्यादिति** ।

—१९ पुनः शङ्कते–**रजतादिजातीति** । **सा किमिति** । परमार्थापरमार्थैतदुभयविधरजतनिष्ठा जातिः स्वयं किं परमार्थभूतोतापरमार्थभूतेत्यर्थः ।

—२० **अपरमार्थेति** । अपरमार्थभूतव्यक्त्या सह संबन्धासंभवादित्यर्थः ।

९६–१ **निर्वाहकत्वायोगात्** । प्रयोजकत्वायोगात् । न ह्यपरमार्थं परमार्थस्य कारणं भवति ।

—३–५ अथ सर्वत्र सत्ख्यातिरेवेति स्वसिद्धान्तं दर्शयति–**अथ वेति** । **वेदविदाम्** । वृत्तिकारादीनाम् । **सर्वस्येति** । सर्वस्य पृथिव्यादेः सर्वात्मत्वं पृथिव्यादित्वं त्रिवृत्करणेन बोध्यम् । त्रिवृत्करणं च पृथिव्यादित्रयाणां परस्परं मिश्रणम् ।

—६–७ **सृष्ट्यादीति** । आदिशब्देन स्थितिप्रलययोर्नामरूपव्याकरणस्य च संग्रहः । सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन्नित्यर्थः । **तासाम्** । पृथिव्यप्तेजोदेवतानाम् ।

—९–११ **यदग्नेरिति** । अग्नेर्यद्रोहितं रूपं तत्तेजसः । अग्नेर्यच्छुक्लं रूपं तदपाम् । तथाग्नेर्यत्कृष्णं रूपं तत्पृथिव्याः । **संगता इति** । तथा चास्य प्रमाणसिद्धस्य रूपस्यापरमार्थता वक्तुमशक्येति भावः ।

—१३ **ते** । आकाशादयः । अयं पञ्चीकरणप्रकारः ।

—१५–६ **परस्परेति** । सर्वेषां सर्वत्र मिश्रणेपि घटादिषु पृथिव्यंशस्याधिक्यात्तत्र पृथिव्याश्रयः । इतर आश्रिताः । आधिक्यादेव च पृथिवीशब्देन व्यवहारः । एवमन्येष्वपि । **विशेषान्ता इति** । शान्तत्वं घोरत्वं मूढत्वं च विशेषः । **अण्डमिति** । उत्पादयन्तीति संबन्धः ।

—१८ **त्र्यात्मकत्वादिति** । केवलाभिरद्भिर्न देहारम्भः । अपां त्र्यात्मकत्वात् । पृथिव्यप्तेजःस्वरूपत्वात् । ‘ आपः पुरुषवचसः ’ ( छा. ५ । ३ । ३ ) इति श्रुतावपामेव श्रवणं तु भूयस्त्वात्तदंशबाहुल्यादिति सूत्रार्थः । **अभिधाभिदा** । नामभेदः । पृथिव्यादिनामभेदस्तत्तदंशबाहुल्यादित्यर्थः । नन्वेवमाका-

शादीनां सत्त्वेन तत्र सत्ख्यातिसिद्धावपि शुक्तिरजतादेरसत्त्वेन तत्र कथं सत्ख्या-तिरिति चेन्न । शुक्तावपि रजतांशस्य सत्त्वेन तस्य तत्रासत्त्वायोगात् । स्वसदृशे वस्तुनि स्वांशस्य सत्त्वात् ।

९६–१९ एतदेव दृष्टान्तेन विशदयति–**सोमाभाव इति । पूतीकग्रह-णम्** । वल्लीविशेषग्रहणम् ।

—२३ **श्रुत्यैवेति** । सोमाद्यभावे तत्सदृशवस्तुग्रहणं बोधयन्ती श्रुतिरेव सदृशयोर्वस्तुनोः परस्परांशसत्त्वं बोधयतीत्यर्थः । यद्वा त्रिवृत्करणश्रुतिरेव शुक्ति-कादौ तेजसो रूप्यस्यांशतः सत्त्वं बोधयतीत्यर्थः ।

९७–१ ननु शुक्तिरूप्ययोः प्रत्येकं 'शुक्ति रूप्य' एतच्छब्दद्वयव्यवहारः स्यादित्यत आह–**रूप्येति** ।

—८ ननु शुक्तिज्ञानेन रजतज्ञानस्य बाधो न स्यादित्यत आह–**बाध्येति** । ज्ञानस्य मिथ्यार्थविषयत्वं न बाध्यत्वे प्रयोजकम् । किं तु भूयस्त्ववैकल्येन ग्रह एव । तथा सत्यार्थविषयत्वं न बाधकत्वे प्रयोजकम् । किं तु भूयस्त्वसाकल्येन ग्रह इति भावः ।

—१२–३ अथ स्वप्ने सत्ख्यातिसिद्धये स्वाप्नपदार्थानां सत्यत्वमुपपादयति–**स्वप्ने चेति । तत्तत्पुरुषेति** । अत एवान्येषां पुरुषाणां तत्पदार्थानुपलब्धिः । **तत्तत्कालेति** । अत एव सदा नोपलब्धिः ।

—१४–८ **रथयोगाः** । रथे युज्यन्त इति रथयोगा अश्वाः । **आनन्दा इति** । साधारणभोग्यदर्शनजा प्रीतिर्मुत् । असाधारणभोग्यदर्शनजा प्रीतिः प्रमुत् । विनियोगजा प्रीतिरानन्दः । अथ वा स्वकीयत्वबुद्धिजा प्रीतिर्मुत् । विनियोगजा प्रीतिः प्रमुत् । अनुकूलदर्शनजा प्रीतिरानन्दः । आनन्दादिशब्दैः तद्विषया लक्ष्यन्ते । वेशान्ता गृहा अल्पसरांसि वा । पुष्करिण्यस्तडागाः । स्रवन्त्यो नद्यः ।

९८–१–२ स्वप्नार्थसृष्टेरीश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरमाह–**य एष इति । सुप्तेषु** । प्राणेषु सुप्तेषु सत्सु । **शुक्रम्** । शुद्धम् ।

—४–७ **संध्य इति** । संध्ये स्वप्ने सृष्टिर्जीवेनैव क्रियते । हि यतः 'स हि कर्ता' ( बृ. ४ । ३ । १० ) इति श्रुतिस्तथैवाह । तत्र हि जीव एव प्रतीयत इति सूत्रार्थः । **निर्मातारमिति** । किं चैनं जीवं स्वप्ने कामानां निर्मातारं के शाखिनोऽधीयते ' य एष सुप्तेषु ' ( का. ५ । ८ ) इति । एतच्छ्रुतिप्रामाण्यादेव जीवस्य स्वाभाविकगुणाविर्भावेण सृष्टिसामर्थ्यं कल्पनीयम् । एतत्सूत्रद्वयं पूर्वपक्षिणः । **मायामात्रमिति** । एतत्सिद्धान्तसूत्रम् । तुशब्दः पूर्वपक्षं व्यावर्तयति । स्वप्नसृष्टिर्मायामात्रमाश्चर्यमात्रं परमपुरुषसृष्टमिति यावत् । एवं-

विधाश्चर्यभूतसृष्टेर्जीवकर्तृकत्वं न संभवति । जीवस्य संसारदशायां कार्त्स्न्येन साकल्येनाभिव्यक्तस्वरूपत्वाभावादिति सूत्रार्थः । उक्तश्रुत्योस्तु तच्छब्देन य एष इत्यनेन च परमात्मैव ग्राह्यः । प्रकरणात् । एवं श्रुतेरुपपत्तौ जीवस्य स्वाभाविकगुणाविर्भावकल्पनमप्रामाणिकमिति भावः । **इत्यादिनेति** । अस्य परिहरतीत्यत्रान्वयः ।

९८–१३–४ ननु गृहे शयानः स्वप्ने यदन्यत्र गच्छति तत्र कथं परमार्थत्वमित्यत्राह–**अपवरकादिष्विति** । गृहादिष्वित्यर्थः । **शयानेति** । शयानो यो देहस्तेन सरूपं संस्थानं यस्य तादृशस्य देहान्तरस्य सृष्टेरित्यर्थः । संस्थानमवयवरचना । स्वाप्नरथादिवत्स्वाप्नदेहोऽप्यन्य एवेश्वरेण क्रियते । तत्र शयानदेहव्यवहारस्तु सादृश्याद्बोध्यः ।

—१६ अथ पीतशङ्खादौ सत्ख्यातिं दर्शयति–**पीतेति** । **संभिन्नाः** । मिश्रिताः ।

९९–२ ननु दूरस्थशङ्खस्यातिसामीप्याभावात्तत्रस्थं पित्तद्रव्यं पित्तोपहतेनापि पुरुषेण न गृह्येतेत्यत आह–**तद्ग्रहणेति** । पित्तोपहतेन पुरुषेण स्वनयननिष्क्रान्तपित्तद्रव्यज्ञानजनितसंस्कारसहायेन शङ्खस्थं पित्तद्रव्यं दूरस्थमपि स्वचाक्षुषरश्मिभिर्ज्ञायते । यथाकाशेऽतिदूरगतः पक्षी न द्रष्टुं शक्यते । परं तु स्वसमीपदेशोत्पतनकालादारभ्य सततं दृश्यमानस्तत्संस्कारसहायेन चक्षुषा दूरगतोऽपि ज्ञायते तद्वदिति भावः ।

—७–८ **मरीचिका** । मृगतृष्णा । **तेज इति** । त्रिवृत्करणेन तेजसि पृथिव्यां च जलांशस्य विद्यमानत्वादित्यर्थः । **अदृष्टवशादिति** । ख्यात्यन्तरवादिभिरपि कदाचिदेव क्वचिदेव च भ्रमस्य स्वीकृततया तन्नियामकत्वमदृष्टस्याङ्गीकर्तव्यमेव ।

—९ **अलातेति** । अलातमुल्मुकम् । तद्यदा चक्रवद्भ्राम्यते तदा वस्तुतस्तत्प्रतिक्षणमेकैकदिक्संयुक्तमपि सर्वदिक्संयुक्तमिव वर्तुलाकारं दृश्यते । तत्र पूर्वोत्तरकालभाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोरन्तरालं क्रमस्तदग्रहणाच्चक्रवत्प्रतीतिर्भवतीत्यर्थः ।

—१० **चक्रप्रतीतावपि** । वस्तुतश्चक्रप्रतीतावपि । वास्तविकचक्रेऽपि या वर्तुलाकारा प्रतीतिर्भवति साऽन्तरालाग्रहणादेव । इयांस्तु विशेषः-वास्तविकचक्रे चक्रस्य वस्तुतः सर्वदिक्संयुक्तत्वेनान्तरालाभावादेव तदग्रहणम् । अलातचक्रे त्वन्तरालसत्त्वेऽपि शैघ्र्यात्तदग्रहणमिति ।

—१५ **तथा प्रतीतिरिति** । दर्पणमुखयोर्यदन्तरालं तदग्रहणात्स्वमुखस्यैवाभिमुख्येन प्रतीतिरित्यर्थः ।

९९–१६–७ अस्यां दिशीति । पूर्वदिशः पश्चिमदिक्त्वेन ज्ञानमपि यथार्थमेव । पूर्वदिशि पश्चिमदिगंशस्य वस्तुतः सत्त्वात् । वस्तुतो दिश एकत्वात् । दिग्भेदस्यौपाधिकत्वात् । यो ग्रामस्तत्पश्चिमदिक्स्थैः पूर्वदिक्स्थ इति व्यवह्रियते स एव तत्पूर्वदिक्स्थैः पश्चिमदिक्स्थ इति व्यवह्रियते । एवं सर्वदिक्षु बोध्यम् । गृह्यत इति । अत्र पूर्वदिशः पश्चिमदिगुपाधिदूरत्वाज्ञानं कारणं बोध्यम् ।

—१९ अङ्गुल्यवष्टम्भः । अङ्गुल्या नेत्रनिरोधः । तिमिरः । नेत्ररोगः । तेजोगतीति । तेजोगतिरेव चन्द्रग्रहणसामग्री । सा च द्विधा । एका स्वाभाविकी ऋजुः । द्वितीया त्वङ्गुलीनिरोधादिमूलिका वक्रभूता ।

१००–३–४ ननु तथापि कथं चन्द्रद्वयप्रतीतिरत आह–अत इति । ग्रहणभेदेन ग्राह्याकारभेदात् । ज्ञानभेदेन ज्ञेयाकारभेदात् ।

—५–६ देशान्तरस्येति । यत्र देशे चन्द्रस्तिष्ठति स प्रथमः । तत्समीपो देशो द्वितीयः । तत्र द्वितीयस्य यद्यपि चन्द्रानधिकरणतया चन्द्रविशेषणत्वं न युज्यते तथापि तयोर्देशयोरन्तराग्रहणेन तत्सुलभम् । विशेषणत्वं हि निरन्तरभातत्वमेव । देशान्तरस्य । द्वितीयदेशस्य । अगृहीतस्वदेशचन्द्रस्य । चन्द्राधिकरणत्वेनाज्ञातस्य प्रथमदेशस्य । द्वितीयसामग्र्या चन्द्रस्य प्रथमदेशस्थत्वेनाग्रहणात् । अत एव तया द्वितीयसामग्र्या चन्द्रस्य द्वितीयदेशस्थत्वेन ग्रहणम् ।

—८ ग्राह्याकारद्वित्वम् । निरन्तरभातदेशद्वित्वम् ।

—९ तत्र विशेषणेति । 'यद्देशद्वयसंबन्धिचन्द्रज्ञानद्वयं तदेकचन्द्रज्ञानमेव' इति निश्चयः केवलचक्षुषा कर्तुं न शक्यते किं त्वङ्गुलीनिरोधादिरहितेनैव । यथा 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञा केवलचक्षुषा न जायते किं तु पूर्वानुभवजन्यसंस्कारसहितेनैव तद्वदिति भावः ।

—११ नन्वेकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत आह–द्वयोरिति । स्वतो निर्दोषस्येन्द्रियस्य यथा कार्यानुरोधेन सदोषत्वं कल्प्यते तथा तदनुरोधेन सामग्रीद्वित्वमपि कल्प्यत इति भावः ।

१०१–२–४ क्षेत्रज्ञेति । क्षेत्रज्ञो जीवस्तस्य पुण्यपापयोरनुरूपमित्यर्थः । अखिलमिति । तथा च श्रुतिः 'इदं सर्वमसृजत, यदिदं किं च' (तै. २।६।१) इति । सुखेति । सुखदुःखोपेक्षारूपफलत्रयस्य योऽनुभवस्तद्विषया इत्यर्थः । केचनेति । उत्तरान्वयि । स्वप्नस्थाः पदार्था इत्यर्थः । क्वचित्केचन केचनेति पाठः । तत्राद्यं पूर्वान्वयि ।

—६ सर्वेति । सर्वानुभवविषयभूतं बाधकं तद्रहितत्वाच्छुक्तिरजतादि स्वप्नस्थरथादि च बाध्यम् । न ह्येकपुरुषानुभवविषयत्वेन तत्तत्कालावसायित्वेन वा

वस्तु मिथ्या भवति । तत्तत्पुरुषानुभाव्यानां सुखादीनां विद्युत्पातादीनां क्षणिकानां च मिथ्यात्वादर्शनादिति भावः ।

१०१—११ **कर्मवाचि** । पुण्यकर्मवाचि । ऋतं पिबन्ताविति श्रुतौ सुकृतस्य लोक इत्युक्तत्वात् । न तु सत्यवाचि ।

—१२ **परमेति** । परमपुरुषाराधनमेव वेषः स्वरूपं यस्येत्यर्थः । परमपुरुषाराधनविषयमिति वा पाठः ।

—१५ **नासदिति** । तदानीं प्रलयकाले सच्चिद्यष्टिर्नासीत् । तथाऽसद्चिद्यष्टिर्नासीत्किं तु तत्सर्वं तमस्यचित्समष्टौ लीनमित्यर्थः । 'सच्च त्यच्चाभवत' (तै. २।६।१) इत्युत्पत्तिप्रतिपादकवाक्ये सच्छब्देन चिद्यष्टेस्त्यच्छब्देन चाचिद्यष्टेरुत्पत्तिप्रतिपादनादत्र तस्यैव लयो बोध्यत इति नात्र सदसदनिर्वचनीयमज्ञानं प्रतीयत इति भावः ।

—२० **सदसतोरिति** । नासदासीदिति श्रुत्या प्रलयकाले सदसतोरसद्भाव एवोच्यत इत्यर्थः ।

—२३ शङ्कते—**सत्यमिति** ।

१०२—३ पुनः शङ्कते—**मायाशब्दस्य मिथ्येति** । ऐन्द्रजालिकादिषु मायाविशब्दप्रयोगदर्शनान्मायामिथ्याशब्दयोः पर्यायत्वादनिर्वाच्यस्य मिथ्यात्वाच्च मायाशब्दवाच्यत्वमित्यभिप्रायः ।

—४ **सर्वत्र** । क्वापि ।

—६ **तेनेति** । बालस्य प्रह्लादस्य देहं रक्षताशुगामिना तेन विष्णुचक्रेण शम्बरस्य प्रह्लादनाशार्थं हिरण्यकशिपुप्रेषितस्य शम्बरनामकदैत्यस्य तन्मायामहस्रमेकैकांशेन स्वीयैकैकावयवेन सूदितं नाशितमित्यर्थः । अत्र न मायाशब्दस्यानिर्वचनीयार्थकत्वम् । तस्य ज्ञानबाध्यस्य शस्त्रच्छेद्यत्वासंभवात् । न हि रज्जुसर्पः शस्त्रच्छेद्यः ।

—११ **अस्मात्** । प्रकृताक्षरात् । **मायी** । ईश्वरः । **अन्यः** । जीवः ।

—१३ ननूक्तश्रुतौ 'मायी' इति शब्देन भगवतोऽपि मायावश्यत्वं प्राप्तमिति चेत्तत्राह—**परमपुरुषस्य चेति** । **तद्वत्तामात्रेण** । केवलेन मायासंबन्धेन । न तु मायया तिरोभाव्यत्वेन ।

—१८ **अभिधीयन्त इति** । मायाभिरिति बहुवचनं चास्मिन्नर्थे स्वरसतः संगच्छते ।

१०३—१ अथानिर्वचनीयाज्ञानसाधकार्थापत्तिप्रमाणं दूषयति—**नापीति** । जीवपरयोर्वस्तुतो भेदे तत्त्वमसीति तयोरैक्योपदेशो न संभवतीत्यतो भेदस्य काल्पनिकत्वमेव वाच्यम् । तदन्यथानुपपत्त्या तादृशभेदज्ञानजनकत्वेनानिर्वच-

नीयाज्ञानं सिध्यतीति पूर्वपक्ष्याशयः । ऐक्योपदेशानुपपत्त्याप्यनिर्वचनीयाज्ञानं न सिध्यतीत्यर्थः ।

१०३—५ **उपपन्नतरः** । युक्ततरः ।

—७ **परमात्मपर्यन्तस्यैवेति** । न तु परमात्मसंबन्धरहितस्येत्यर्थः ।

—१०-२२ **ज्योतींषि विष्णुरिति** ।

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।

नद्यः समुद्राश्च स एव सर्वो यदस्ति यन्नास्ति च विप्रवर्य ॥

यदस्ति यन्नास्ति, भावरूपेणाभावरूपेण च यत्प्रतीतमित्यर्थः । **ज्ञानैकेति** । ज्ञानैकस्वरूपस्य ब्रह्मणो यदज्ञानं तद्विजृम्भितत्वमित्यर्थः । ज्ञानस्वरूप इति श्लोके विज्ञानशब्दः करणसाधनः । विविधं विपरीतं वा ज्ञायतेऽनेनेति विज्ञानमविद्येत्यर्थः । **वस्त्वस्ति किमिति** ।

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।

यच्चान्यथात्वं द्विज याति भूयो न तत्तथा कुत्र कुतो हि तत्त्वम् ॥

अनेन श्लोकेनार्थस्वभाव उक्तः ।

मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणवः ।

जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥

अनेन श्लोकेन पूर्वश्लोकोक्तस्वभावस्योदाहरणं दर्शितम् । अवशिष्टाः श्लोकाः प्राक् ( श्रीभाष्य-पृ. १६ ) द्रश्याः । तस्मान्न विज्ञानमिति श्लोके पूर्वार्धेन विजातीयभेदाभाव उत्तरार्धेन च सजातीयभेदाभावः सूचितः । ज्ञानं विशुद्धमिति श्लोके पूर्वार्धेन स्वगतभेदाभावः सूचितः । उत्तरार्धेन च त्रिविधभेदाभावोऽनूद्यते ।

१०४—५—६ **अत्र** । विष्णुपुराणे द्वितीयांशे । **विस्तीर्णमिति** । उत्तरत्र मिथ्यात्वं विवक्षितं चेत्पूर्वं विस्तरेण कथनं नोपपद्यते । न हि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कर्तुं युज्यते । **स्वरूपम्** । स्थूलं परस्परसंसृष्टं च । **रूपान्तरम्** । सूक्ष्मं परस्परवियुक्तं च ।

—९ **परिणामभेद इति** । परिणामित्वमेव नास्तिशब्दवाच्यम् । असत्यादिशब्दानामप्ययमेवार्थो न तु ज्ञानबाध्य इति ।

—१० **उभयमिति** । चिद्रूपमचिद्रूपं च स्थूलं सूक्ष्मं च परस्परसंसृष्टमसंसृष्टं चेत्यर्थः । असंसृष्टस्यापि भगवच्छरीरत्वेन मुक्तावस्थायामपि जीवस्य भगवच्छरीरत्वसिद्धिः ।

—१२-७ **यदिति** । विष्णोर्यज्जलरूपं शरीरं तस्मात्सर्वा पृथ्वी समुत्पन्नेत्यर्थः । तथा च प्रकृतिभूतजलस्य विष्णुशरीरत्वे तद्विकारभूतपृथिव्या अपि विष्णुशरीरत्वमेवोचितं न तु तत्स्वरूपैक्यम् । न हि बाल्ये चेतनशरीरभूतस्य

वस्तुनोऽवस्थान्तरे चेतनेन स्वरूपैक्यं भवतीति भावः। उपबृंहणरूपस्येति। उपबृंहणं नाम सर्वश्रुतिषु प्रतिपादितस्य तादात्म्यस्य शरीरशरीरिभाव एव तात्पर्यमिति ज्ञापनम्। ज्योतींषि विष्णुरिति। अयं श्लोकः प्राक् (विवृति-पृ. ९१) दृश्यः। अत्र पादत्रयेण व्यष्ट्यवस्थयोः परस्परसंसृष्टयोश्चिदचितोर्भगवदात्मकत्वमुक्तम्। चतुर्थपादेन तु परस्परासंसृष्टयोरपि तयोस्तदात्मकत्वमुक्तम्। तदात्मकत्वं तु तच्छरीरत्वेनैव। यदम्बु वैष्णवः काय इत्युक्तत्वात्।

१०५-६ ज्ञानस्वरूप इति। अयं श्लोकः प्राक् (श्रीभाष्य-पृ. १६. प. १३) दृश्यः।

—७ अशेषक्षेत्रज्ञेति। श्लोकेऽशेषशब्देन चिदंशो जीव एव गृह्यते न त्वचिदंशः। अशेषमूर्तिर्ज्ञानस्वरूप इत्युक्तत्वात्। अचिदंशस्य ज्ञानस्वरूपत्वाभावात्। न चाशेषशब्देन जीवस्य विवक्षितत्वेऽप्यशेषमूर्तिरिति बहुव्रीह्यर्थस्य चिदचिदुभयशरीरकस्य ज्ञानस्वरूपत्वाभावः। चिदंशस्य तथात्वेऽप्यचिदंशस्यातथात्वादिति वाच्यम्। ज्ञानस्वरूपत्वस्य जीवविशिष्टे विशेष्येऽसंभवेन विशेषणीभूते जीव एव पर्यवसानात्। 'विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे' इति न्यायात्। लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवत्।

—८ न तु वस्तुभूत इत्यस्यार्थमाह-न देवेति।

—१४ यदा त्विति। अयं श्लोकः प्राक् (श्रीभाष्य-पृ. १६ प. १५) दृश्यः।

—१६-७ निर्दोषम्। शरीरसंबन्धरहितम्। परिशुद्धम्। तत्कृतरागद्वेषसुखदुःखादिरहितम्। निजरूपि। आविर्भूतस्वरूपम्। संकल्पतरोरिति व्याचष्टे-देवादीति। एकीकृत्य कल्पनं हि संकल्पः। समित्यस्यैकीकरणमर्थः। देवाद्याकारेण। अचिदंशेन।

१०६-६ वस्त्वस्ति किमिति। अयं श्लोकः प्राक् (विवृति-पृ. ९१) दृश्यः।

—९ तथाभूतम्। नास्तिबुद्ध्यनर्हम्। श्लोकस्थस्य कुत्र कुतो हि तत्त्वमित्यस्य 'अचिद्रूपे कस्मिन्वस्तुनि कस्मात्पूर्वावस्था दृश्यते, किं तु क्वापि नास्ति' इत्यर्थः।

—१४ मही घटत्वमिति। अयं श्लोकः प्राक् (विवृति-पृ. ९१) दृश्यः।

—१५ देवमनुष्यादिभावेन। देवादिदेहसंसर्गेण।

—१९-२० यस्मादेवं तस्मादिति। परिणामित्वादेव न तु ज्ञानबाध्यत्वादित्यर्थः। केवलेति। अचिद्वस्तुनि योऽस्तिशब्दः स सोपाधिकः। इदानीमस्मिन्देशे घटोऽस्तीत्यादि। निरुपाधिकास्तिशब्दस्तु भगवत्येवेत्यर्थः। तस्माज्ज्ञेति। अयं श्लोकः प्राक् (श्रीभाष्य-पृ. १६ प. १८) दृश्यः।

-२१-१०७-१ श्लोकस्थैकशब्दं व्याचष्टे-ज्ञानैकेति । एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते जनमितिवदेकशब्द आकारैक्यपरः । बहुधाभ्युपेतमिति प्रकारार्थधाप्रत्ययान्तबहुधाशब्दोपादानेन वस्तुत एकाकारत्वस्यैव प्रतीतेः । स चाकारोत्र ज्ञानमेव । भेदेति । एकस्वरूपत्वाद्भेदप्रत्यनीकत्वम् ।

१०७-५ ज्ञानं विशुद्धमिति प्रागुक्त-( श्रीभाष्य-पृ. १६ प. २० ) श्लोकं व्याचष्टे-आत्मस्वरूपमिति ।

विमलपदार्थमाह--मलरूपेति । मलरूपो यः प्रकृतिस्पर्शस्तद्रहितमित्यर्थः ।

—६ उपचयेति । उपचयो वृद्धिः । अपचयः क्षयः । तदनर्हत्वं च निरवयवत्वात् । निरवयवत्वमेव चैकत्वमित्याशयः । एषु ज्ञानस्वरूपमित्यादिषट्श्लोकेष्वाद्यं श्लोकद्वयं चिदचित्साधारणम् । वस्त्वित्यादि सार्धश्लोकद्वयमचित्साधारणम् । विज्ञानमित्यादिसार्धश्लोकश्चित्साधारण इति बोध्यम् ।

—१० सद्भाव इति प्रागुक्त-( श्रीभाष्य-पृ. १७ प. १ ) श्लोकं व्याचष्टे-त्रिदश इति । श्लोकस्थयथाशब्दस्य येन प्रकारेण परिणामित्वापरिणामित्वरूपेणेत्यर्थः । न तु ज्ञानबाध्यत्वाबाध्यत्वरूपेणेति ।

—१५-६ ज्ञानैकाकारतया सममिति । प्रत्यस्तमितभेदमित्युक्तत्वात् । अशब्दगोचरस्वरूपभेदमिति । वचसामगोचरमित्युक्तत्वात् । एवशब्दो विरोधद्योतकः । वस्तुत एवंरूपमपि कर्मणा विपरीतं भवतीत्यर्थः । भुवनाश्रितम् । अण्डान्तर्गतम् । भोगस्थानगतमित्यर्थः ।

—१९ यज्ञः पशुरिति ।

यज्ञः पशुर्वह्निरशेषऋत्विक्संवत्सराः स्वर्गमयश्च कामः ।
इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभोगाश्च फलानि तेषाम् ॥

स्वर्गमयः कामः । स्वर्गविषयकेच्छा । आश्रितमार्गदृष्टम् । तैस्तैराश्रिता मार्गा वर्णाश्रमास्तेषु दृष्टमिति कर्मविशेषणम् ।

—२० जगदिति । मोक्षोपायविषयको यत्न एव जगद्याथार्थ्यज्ञानस्य प्रयोजनमित्यर्थः । यच्चैतदिति ।

यच्चैतद्भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि कर्मवश्य एकः ।
ज्ञात्वैकं ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवम् ॥

सदैकरूपम् । स्वरूपतो गुणतो रूपतश्चैकरूपम् ।

१०८-१ अथैषां श्लोकानां परोक्तार्थाननुगुणत्वमुपपादयति-अत्रेति । तदाश्रय इति । बहुव्रीहिः ।

—३ नन्वस्तिनास्त्यादिशब्दाः सामानाधिकरण्यं चानुगुणमिति चेत्तत्राह-अस्तिनास्तिशब्देति ।

१०८–६–८ अस्तिनास्तिसत्येति । प्रथमश्चशब्दो हेतौ । द्वितीयः समुच्चये। अस्तिसत्यशब्दयोरुपादानं दृष्टान्तार्थम् । यथास्तिसत्यशब्दौ न सद्विलक्षणपरौ तथा नास्त्यसत्यशब्दावपि नासद्विलक्षणपरावित्यर्थः ।

—१३ ननु विनाशित्वमेव मिथ्यात्वमिति चेत्तत्राह–एकेनेति ।

—१९ अतो नेति । घटादेः प्रमाणसंबन्धार्हत्वेन तुच्छत्वाभावादस्तीत्युपलब्धिविषयस्य च तस्य घटादेस्तद्देशतत्कालसंबन्धित्वेन नास्तीत्युपलब्धेरभावाच्च न मिथ्यात्वमिति भावः ।

एतदुक्तमिति । सदैकरूपत्वमस्तिशब्दप्रवृत्तिनिमित्तम् । अस्तिशब्दो ह्यवधारणगर्भः । अब्भक्ष इतिवत् । विनाशगर्भत्वं च नास्तिशब्दप्रवृत्तिनिमित्तम् । घटावस्थायां पिण्डो नास्ति कपालावस्थायां घटो नास्ति चूर्णावस्थायां न कपालस्य घटस्य च सत्तेति सदा नाशगर्भत्वम् ।

१०९–७ तत्त्विति । समिदाज्यकुशादिभिर्विनाशिद्रव्यैरुपपादितं तत्स्वर्गादिकं विनाश्येव, तत्र न संदेह इत्यर्थः ।

—९–१० कर्मविशेषेति । पालनादिकर्मकृद्राजास्तीति व्यवह्रियते । स एव तेन कर्मणा रहितो नास्तीति व्यवह्रियत इत्याशयः । केवलास्तिबुद्धिः । देशकालाद्युपाधिरहितास्तिबुद्धिः ।

—१४–६ परमार्थश्चेति । प्रधानत इति सार्वविभक्तिकस्तसिः । प्रधानमित्यर्थः । ज्ञानमेव प्रधानमिति परमार्थो मम प्रोक्त इत्यर्थः । ज्ञानस्य कर्मनिमित्तकत्वाभावेन स्वाभाविकस्वरूपत्वात्प्राधान्यम् । अनुभाषणम् । अनुवादः ।

११०–१ अथ पूर्वोक्तसप्तविधानुपपत्तिमध्ये षष्ठीं निवर्तकानुपपत्तिं प्रदर्शयति–यदुक्तमिति ।

—२–६ ज्ञानस्य निर्विशेषविषयत्वं खण्डयितुं सविशेषवाक्यानि दर्शयति–वेदाहमिति । एवम् । उक्तगुणविशिष्टम् । सर्वे इति । निमेषः सूक्ष्मकालः । विद्युतो विद्युद्वर्णात्पुरुषात्सर्वे निमेषा अधिजज्ञिरे समुत्पन्ना इत्यर्थः । न तस्येति । कश्चन पुरुषस्तस्य परमात्मनो नेशे नियन्तुं न समर्थः । अत एव तस्य परमात्मनो महद्यश इति नाम संपन्नम् । अत्यन्तस्वतन्त्रत्वेन तदीययशसोऽभ्यधिकत्वादित्यर्थः ।

—८ सर्वाण्यपि । सदेव सोम्य, एकमेवाद्वितीयमित्यादीनि कारणवाक्यानि ।

—९ शोधकेति । यत्तदद्रेश्यं, तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यादीनि ।

—९–१० ननु तत्त्वमसीति वाक्यप्रतिपादितसामानाधिकरण्यान्यथानुपपत्त्या निर्विशेषवस्तुसिद्धिरिति चेत्तत्राह–तत्त्वमसीति ।

११० — १३ ननु सर्वज्ञत्वाज्ञत्वादिविरोधात्तत्त्वंपदयोः स्वरूपमात्रपरत्वमिति चेत्तत्राह – तत्समानेति । सद्वारकत्वादविरोध इति भावः ।

— १५ प्रकारद्वयावस्थितेति । यथा नीलो घट इति । अत्र ह्येकमेव घटरूपं वस्तु नीलगुणविशिष्टत्वेन घटत्वजातिविशिष्टत्वेन चावस्थितम् ।

— १७ लक्षणा चेति । सर्वज्ञत्वादिविशिष्टार्थवाचकतत्पदस्य किंचिज्ज्ञत्वादिविशिष्टार्थवाचकत्वंपदस्य च केवलचिद्रूपेर्थे लक्षणेति परैरुक्तत्वात्तेषां लक्षणारूपो दोषो नास्माकमित्याशयः ।

ननु सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञावाक्ये लक्षणा स्वीकृतैवेति चेत्तत्राह – सोऽयमिति ।

— १८ भूतेति । यथा शूरोऽस्माकं राजेत्यादौ राज्ञ्येव शूरत्वं प्रतीयते न तद्विशेषणीभूतास्मदादिष्विति केवलराज्ञ एव शूर इति विशेषणं न विशेषणविशिष्टस्य तथात्र न वर्तमानकालविशिष्टे देवदत्ते भूतकालविशिष्टत्वविशेषणं किं तु केवले देवदत्त एवेति न विरोध इति भावः ।

देशभेदेति । न हि किंचित्कालविशिष्टे भिन्नदेशद्वयान्वयः । येनैकस्यैकदा भिन्नदेशद्वयासंभवेन विरोधः स्यात् । किं तु केवले देवदत्त एव । तथा च कालभेदेन भिन्नदेशसंबन्धः संभवत्येवेति देशभेदविरोधः परिहृत इत्याशयः ।

— १९ तदैक्षतेति । अस्मिन्नुपक्रमवाक्ये ( छा. ६।२।३ ) बहु स्यामिति सर्वज्ञत्वसर्वशक्तित्वादिप्रकारनानात्वं प्रतिपाद्यते । तथा च 'तत्त्वमसि' ( छा. ६।८।७ ) इति वाक्यस्य निर्विशेषवस्त्वैक्यप्रतिपादकत्व उपक्रमविरोधः स्पष्ट एव ।

— २०-१ न घटत इति । सूक्ष्मावस्थचिदचिद्विशिष्टं कारणं तदेव स्थूलावस्थचिदचिद्विशिष्टं कार्यमिति कारणज्ञानेन कार्यज्ञानात्प्रतिज्ञा सिध्यति । मृषावादिनस्तु सर्वस्य जगतो मिथ्यात्वेन ज्ञानविषयत्वायोगात्प्रतिज्ञा न सिध्यतीत्याशयः ।

— २१ श्रुत्यन्तरविरोधमाह – ज्ञानस्वरूपस्येति ।

१११ – १–२ ननु यथा रज्जुः सर्प इत्यत्र सर्पत्वस्य बाधार्थं तयोः सामानाधिकरण्यं तथा तत्त्वमसीत्यत्रापि जीवत्वस्य बाधार्थमेव सामानाधिकरण्यमिति चेत्तत्राह – बाधार्थत्वे चेति । बाधार्थत्वे हि तत्पदस्याधिष्ठानमात्रे लक्षणा त्वंपदस्य च जीवत्वनिवृत्तौ लक्षणा कल्पनीया स्यादिति भावः । लक्षणादय इति । आदिशब्देन प्रागुक्तसामानाधिकरण्यस्वरूपस्य त्यागो बहु स्यामित्युपक्रमविरोध इत्यादिप्रागुक्तदूषणसंग्रहः ।

— २–४ अथ तत्त्वमसीति सामानाधिकरण्यस्य रज्जुः सर्प इत्यत्रेव बाधार्थत्वे

रज्जुः सर्प इत्यपेक्षयाऽधिकं दोषान्तरमाह–इयानिति । शुक्तिरजतस्थले नेदं रजतमिति बाधस्य प्रमाणान्तरेण ज्ञातत्वाद्बाधककल्पनम् । तत्त्वमसीत्यत्र तु नायं जीव इति बाधस्य प्रमाणान्तरेणाज्ञातत्वेऽपि स्वमतसिद्धये तत्कल्पनमित्येको दोषः । किं च यथा शुक्तिरजतस्थले रजतत्वबाधप्रयोजकीभूतस्य रजतत्वविरुद्धस्य शुक्तित्वधर्मस्य शुक्तिशब्दादुपस्थितिस्तथा तत्त्वमसीत्यत्र तच्छब्दस्य केवलाधिष्ठानमात्रलक्षकत्वेन ततो जीवत्वविरुद्धस्य कस्यापि धर्मस्य नोपस्थितिरिति जीवत्वस्य बाधो न स्यादित्यपरो दोषः ।

१११–५ शङ्कते–अधिष्ठानं त्विति । अतिरोहितस्वरूपम् । अनाच्छादितस्वरूपम् । एतदेव जीवत्वविरुद्धं जीवत्वबाधस्य प्रयोजकमित्याशयः ।

—७ पुनः शङ्कते—भ्रमाश्रयमिति ।

—८ भ्रमविरोधीति । तस्य भ्रमविरोधित्वे तु कदापि भ्रमोच्छेदो न स्यात् ।

—९ पारमार्थिकधर्मेति । यथा रज्जुत्वरूपेण पारमार्थिकेन धर्मेण सर्पबाधः । तादृशधर्मस्य तिरोधाने सर्पभ्रान्तिः । पारमार्थिकधर्मश्च पारमार्थिकत्वेन ज्ञातो धर्मः । कदाचिदपारमार्थिकेनापि पारमार्थिकतया ज्ञातेन मृदङ्गस्लनादिना सर्पबाधदर्शनात् । न चैवं ब्रह्मण्यपि पारमार्थिकतया ज्ञातेन केनचिदपारमार्थिकेन कल्पितेन धर्मेण प्रपञ्चबाधः स्यादिति वाच्यम् । तादृशकल्पितधर्मस्य बाधार्थमन्यस्य कल्पनायामनवस्थानात् । बाधकधर्मस्य पारमार्थिकत्वे तु ब्रह्मणः सविशेषत्वं दुर्वारम् ।

—१० दुरुपपादाविति । पारमार्थिको धर्म एव प्रकाशितः सन्बाधं प्रयोजयत्यप्रकाशितश्च भ्रान्तिं प्रयोजयतीति भावः ।

एतदेव दृष्टान्तेन विशदयति–अधिष्ठाने हीति ।

—१५ अथ स्वपक्ष इमानि दूषणानि न सन्तीत्याह-जीवशरीरकेति ।

—२३ श्रुत्यन्तराविरोध इति । निर्विशेषब्रह्मवादिनस्तु स्यादेव विरोध इत्याशयः ।

११२–१ ननु सिद्धान्ते तत्त्वमसीत्यत्रोद्देश्यविधेयभावो न संभवति । तथा हि । तत्पदं नोद्देश्यार्थप्रतिपादकम् । तच्छब्दस्य सर्वज्ञत्वादिगुणविशिष्टब्रह्मवाचकत्वेन तादृशब्रह्मणः प्रत्यक्षत्वाभावात् । एवं त्वंपदमपि नोद्देश्यार्थप्रतिपादकम् । तदर्थस्याप्यचिद्विशिष्टजीवशरीरकब्रह्मणः प्रत्यक्षत्वाभावात् । मिथ्यावादिनो मम मते तु प्रत्यक्षसिद्धं जीवमात्रं त्वंशब्देनोद्दिश्य तत्पदेन तस्य ब्रह्मभावो विधीयत इत्युद्देश्यविधेयभावः संभवति । तथा चागत्या निर्विशेषवस्तु स्वीकार्यमेवेत्याशयेनाशङ्कते–तत्त्वमसीति । उपादेयं विधेयम् ।

११२-२ ऐतदात्म्यम् । एतद्ब्रह्मात्मा शरीरी यस्य तदेतदात्म तदेवैतदात्म्यम् । स्वार्थे ष्यञ् ।

—४ सजीवमिति । सर्वशब्दश्चिदचित्परः । विना प्रमाणं संकोचे मानाभावात्सर्वाः प्रजा इति पूर्ववाक्यानुगुण्याच्च ।

—६ सन्मूला इति । अनेन सर्वप्रजानां ब्रह्मजत्वमुक्तम् । सदायतना इति । अनेनाधाराधेयभाव उक्तः । तेन शरीरशरीरिभावः सिद्धः । एतेनैतदात्म्यमित्यस्य मृदात्मको घट इतिवत्तात्पर्यमित्यपास्तम् । सत्प्रतिष्ठा इति । अनेन सर्वप्रजानां ब्रह्मण्येव लय इत्युक्तम् ।

—७ तज्जलानिति । तस्माद्ब्रह्मणो जायते तत्रैव लीयते तत्रैवानिति चेष्टते इत्यर्थः । अत्रानितीत्यनेन सदायतनत्वं फलितम् ।

—१०-१६ अन्तः प्रविष्ट इति । अनेन शरीरशरीरिभावः फलितः । अन्तः प्रविश्य नियाम्यत्वमेव हि शरीरत्वम् । य आत्मनीति । अनेन परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते । अचित्संसृष्टजीवस्य भगवच्छरीरत्वं तु य आदित्ये तिष्ठन्नित्यादिश्रुतित एव सिध्यति । मृत्युः । तमःशब्दवाच्या प्रकृतिः । एवं श्रुत्यन्तरानुरोधेनैतदात्म्यशब्दार्थो निश्चितः ।

—१८-२० छान्दोग्य एव पूर्वश्रुत्यनुसारेणायमर्थो निश्चीयत इत्याह—अत्रापीति । जीवेनात्मना । जीवशरीरकेण मया । ब्रह्मात्मकेति । ब्रह्मात्मान्तर्यामी यस्य तादृशजीवानुप्रवेशेनेत्यर्थः । नामरूपे इति पदं व्याचष्टे—वस्तुत्वं शब्दवाच्यत्वं चेति । तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वं चेत्यर्थः । देवादिशब्दानां देवादिशरीरकब्रह्मवाचकत्वात् । एतेन नामरूपयोर्निर्वहितेति श्रुतिप्रतिपादितं ब्रह्मणो नामनिर्वाहकत्वं व्याख्यातम् ।

११३-२ तत्पर्यन्तमेवेति । यथा गुणवाचकोऽपि शुक्लादिशब्दो गुणिपर्यन्तमर्थमभिदधाति तथेत्यर्थः ।

—५ उपसंहार इति । तथा च तत्त्वमसीत्यत्र न किंचिदुद्दिश्य किमपि विधीयते । किं त्वैतदात्म्यमिति श्रुतौ वैयधिकरण्येन प्राक्प्रतिपादितस्य जगद्ब्रह्मणोः शरीरशरीरिभावस्य सामानाधिकरण्यप्रतिपादनद्वारोपसंहारः क्रियते । आत्मोपदेशो हि द्विधा । क्वचिद्वैयधिकरण्येन । यथा—अस्येष आत्मा, ऐतदात्म्यमिदं सर्वमित्यादि । क्वचित्सामानाधिकरण्येन । यथेदं सर्वं यदयमात्मा, तत्त्वमसीत्यादि । द्विविधोऽप्ययमुपदेशः शरीरशरीरिभावे स्वीकृते संगच्छते । लोके तथाविधस्थले देवदत्तो गौरो देवदत्तस्य शरीरमिति द्विविधव्यवहारस्य दृष्टत्वात् ।

—६ भेदाभेदवादिनः । औपाधिको भेदो वास्तविकस्त्वभेद इतिवादिनो भेदश्चाभेदश्चेति द्वयमपि वास्तविकमेवेतिवादिनश्चेत्यर्थः ।

११३–९ तत्रादौ निर्विशेषवस्त्वैक्यवादिनः सर्वमिथ्यात्ववादिनो मत उपदेशा. संगतिं दर्शयति–**एकस्मिन्निति**।

—९–१० शङ्कते–**तस्यैवेति**। **स्ववाक्येन**। सत्यं ज्ञानमित्यादिना स्वरूप. प्रतिपादकवाक्येन। तत्त्वमसीत्याद्युपदेशेन स्वरूपवाक्यादधिकं किंचिदुच्यते न वा। आद्ये वस्तुनः सविशेषत्वापत्तिः। अन्त्य उपदेशवैयर्थ्यमित्याशयः।

—११ पुनः शङ्कते- **कल्पितेति**। **तत्तु नेति**। सामानाधिकरण्येन तादा. त्म्योपदेशावसेयं नेत्यर्थः। सामानाधिकरण्यस्य प्रकारद्वयोपस्थापकत्वादिति भावः।

—१२ प्रत्युतानिष्टमाह–**सामानाधिकरण्यमिति**।

—१३ अथौपाधिकभेदाभेदवादिनो मत उपदेशासंगतिं दर्शयति–**भेदाभे. देति**। सर्वज्ञत्वादिगुणविशिष्टस्येश्वरस्य तद्विरुद्धजीवतादात्म्यं न संभवति। अथ कथंचित्तत्स्वीकारे तु ब्रह्मणः सदोषत्वमापद्येतेत्याशयः।

—१७ **गुणवदिति**। यथा ब्रह्मण ईश्वरांशेन सर्वज्ञत्वादिगुणाः स्वाभावि. कास्तथा जीवांशेन दोषा अपि स्वाभाविकाः स्युरित्याशयः।

—२१–११४–१ अथ स्वमत उपदेशसंगतिं दर्शयति–**निखिलेति**। **सम्यक्**। मुख्यत्वेन। यथा गो इति जातिशब्दस्य जातिविशिष्टव्यक्तिपर्यन्तमपि शक्तिसत्त्वान्मत्वर्थीयप्रत्ययं विनाप्ययं गौरिति सामानाधिकरण्यं, यथा वा शुक्ल इति गुणशब्दस्य गुणविशिष्टव्यक्तिपर्यन्तमपि शक्तिसत्त्वादयं शुक्ल इति सामाना. धिकरण्यं तथा सर्वं खल्विदं ब्रह्मेत्यादौ जगद्वाचिसर्वादिशब्दानां शरीरभूतजग. द्विशिष्टब्रह्मपर्यन्तमपि शक्तिसत्त्वादेव सामानाधिकरण्यम्। एवं च यथा गोशुक्ला. दिशब्दाज्जातिगुणयोर्विशेषणत्वेनैव बोधस्तथा द्रव्यादिवाचकेभ्यो घटपटादिसर्व. शब्देभ्यस्तत्तद्द्रव्यादेर्विशेषणतयैव बोधो विशेष्यतया त्वात्मन एवेति बोध्यम्।

११४–४ **द्रव्यप्रकारत्वमेवेति**। द्रव्यनिरूपितविशेषणत्वमेव। विशेषण. त्वमेव तादृशसामानाधिकरण्यस्य बीजं न तु जात्यादि।

—६ **प्रकारतयैव पदार्थत्वादिति**। यथा गोत्वजातेर्गोपदवाच्यत्वं व्यक्तिविशेषणतयैव तथेत्यर्थः।

—९ **परस्परव्यावृत्ता इति**। जातेः सामानाधिकरण्यप्रयोजकत्वेऽयं शुक्ल इत्यादौ सामानाधिकरण्यं न स्यात्। गुणस्य तथात्वेऽयं गौरित्यादौ सामा. नाधिकरण्यं न स्यादित्याशयः।

ननु प्रकारभूतद्रव्यवाचकशब्दानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभि. धायित्वं न स्वीकर्तुं शक्यम्। दण्डी पुरुष इत्यादौ मत्वर्थीयप्रत्ययं विना सामाना. धिकरण्यस्यादृष्टत्वादिति चेत्तत्राह–**स्वनिष्ठानामेवेति**। न तु प्रकारतयैव

पदार्थभूतानाम् । तथा चापृथक्सिद्धप्रकारवाचकत्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति सिद्धम् ।

११४-१३ शङ्कते-यदीति ।

—१८ पश्यन्तीति । तथा च घटादिशब्दा नापृथक्सिद्धप्रकारवाचकाः सहोपलम्भप्रयोजकत्वाभावादिति तेषां केवलद्रव्यादिवाचकत्वमेव नात्मपर्यन्तार्थवाचकत्वमिति सर्वं खल्विदमिति सामानाधिकरण्यं सिद्धान्तिनोऽपि न मुख्यं संभवतीत्याशयः ।

—२१ जात्यादितुल्यमिति । तथा च जात्यादिवच्छरीराण्यप्यात्मनोऽपृथक्सिद्धप्रकारभूतान्येवेति बोध्यम् ।

११५-७ ननु तर्ह्यात्मशरीरयोर्जातिव्यक्त्योरिव कुतो न सहोपलम्भ इत्याशङ्क्य जातिव्यक्तिवैलक्षण्यं दर्शयति-जातिव्यक्त्योरिति । चाक्षुषत्वादिति प्रदर्शनार्थमुक्तम् । एकसामग्रीवेद्यत्वादित्यर्थः ।

—८-९ शङ्कते-पृथग्ग्रहणेति । जातेर्व्यक्त्या सहैव ग्रहणेन तस्या व्यक्तिविशेषणत्वैकस्वरूपतास्तु शरीरस्य तु पृथग्ग्रहणयोग्यस्यात्मना सहैव ग्रहणाभावेन कथमात्मविशेषणत्वैकस्वरूपतेत्याशयः । मा वोच इति । विशेषणैकस्वभावत्वे न पृथग्ग्रहणायोग्यत्वं प्रयोजकमिति भावः ।

—१० किं तर्हि तत्प्रयोजकमित्याह-तदेकाश्रयत्वेति ।

—११ ननु यदि तदेकाश्रयत्वाद्येवापृथग्विशेषणत्वे प्रयोजकं तर्हि कथं जात्यादावेव सहोपलम्भनियमो न शरीरादाविति चेत्तत्राह-सहोपलम्भेति ।

—१२ यथेति । न ह्यचाक्षुषस्यापि गन्धस्य पृथिवीप्रकारैकस्वभावत्वं हीयत इति भावः ।

—१८ यद्यपि शरीरग्रहणवेलायां नात्मनश्चक्षुषा ग्रहणमसामर्थ्यात्तथापि शब्दप्रमाणेनोभयोर्युगपद्ग्रहणं भवत्येवेत्याशयेनाह-आत्मप्रकारतयेति । शब्दः । देवमनुष्यादिशब्दः ।

—२० नात्मपर्यन्तता । नात्मपर्यन्तार्थवाचकत्वम् । यथा श्रुतौ यस्य पृथिवी शरीरमित्यादि । लोके च देवदत्तस्येदं शरीरमित्यादि । तथा च शरीरशब्दाच्छरीरस्यात्मप्रकारत्वेन बोधो न भवतीति शरीरस्य प्रकारैकस्वभावत्वं न सिध्यतीति शङ्काशयः ।

—२१ पदार्थविवेकेति । यथा व्यक्तेः सकाशाज्जातेः पृथक्त्वेन निरूपणप्रसङ्गे निरूपकैः पुरुषैर्गोत्वादिशब्दैः सा व्यवह्रियते तथात्मनः सकाशाच्छरीरस्य पृथक्त्वेन निरूपणप्रसङ्गे शरीरशब्देन व्यवहार इति नैतावता शरीरस्य प्रकारैकस्वभावत्वहानिरिति भावः ।

११६-६ **प्रयोग इति** । एवं च तत्त्वमसीत्यत्र चिदचिच्छरीरकस्य कारणावस्थस्य तत्पदवाच्यस्य ब्रह्मणः कार्यावस्थस्य च चिदचिच्छरीरकस्य त्वंपदवाच्यस्य ब्रह्मण एकत्वं प्रतिपादितं भवतीति बोध्यम् ।

—६-७ पूर्वपक्षिणा स्वमतसाधकत्वेन प्राग्दर्शितं (श्रीभाष्य-पृ. १८ प. १) सूत्रं वाक्यकारवचनं च स्वमतानुगुण्येन योजयति-**इदमेवेति** । न तु निर्विशेषवस्त्वैक्यरूपम् । प्रागुक्तश्रुतियुक्त्यादिविरोधादिति भावः । **आत्मेति त्विति** । तुशब्दोऽवधारणे । उपासकेन ब्रह्मात्मत्वेनैवोपास्यं नान्यत्वेन । यतः पूर्वे उपासकास्तथैवाभ्युपगच्छन्ति । तथा च श्रुतिः 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' ( ऐ. आ. २।२।४।६ ) इति । किं च 'य आत्मनि तिष्ठन्' इत्यादिशास्त्राणीममर्थमुपासकानविरुद्धत्वेन ग्राहयन्तीति सूत्रार्थः ।

—१०-११७-१० **अचिदिति** । अचिद्वस्तुनो घटादेर्भोग्यत्वेन चिद्वस्तुनो जीवस्य तद्भोक्तृत्वेन परस्य ब्रह्मणश्च तयोरीशितृत्वेन तेषां स्वरूपतो भेदमाहुरित्यर्थः । **क्षरमिति** । क्षरं विनाशि प्रधानं त्रिगुणात्मकमचिद्रूपं भोग्यम् । हरो जीवात्माऽमृताक्षरस्वरूपो भोक्ता तौ क्षरात्मानावेको देवः परमेश्वर ईशते नियच्छतीत्यर्थः । **स इति** । आभिः श्रुतिभिरीशत्वेशितव्यत्वपतित्वशेषत्वज्ञत्वाज्ञत्वकर्मवश्यत्वाकर्मवश्यत्वादिभिर्भेदः प्रदर्श्यते । स परमेश्वरः सर्वस्य कारणं करणानामिन्द्रियाणामधिपस्य जीवस्याधिप इत्यर्थः । **प्रधानेति** । प्रधानक्षेत्रज्ञयोर्भोग्यभोक्त्रोः पतिरित्यर्थः । **ज्ञाज्ञाविति** । ज्ञ ईश्वरः । अज्ञो जीवः । ईशो नियन्ता । तद्भिन्नोऽनीशः । **भोक्तेति** । जीवो भोक्ताऽचिद्वस्तु भोग्यमिति मत्वा तथा तयोः प्रेरितारं परमेश्वरं च मत्वेत्यर्थः । **पृथगिति** । अनेन भेदज्ञानस्य मोक्षहेतुत्वं सूचितम् । पृथगात्मानं प्रेरितारं च मत्वेत्यस्य 'भ्राम्यते ब्रह्मचक्रे' इत्यनेन पूर्वेणान्वय इति परेषां व्याख्यानमस्वरसग्रस्तम् । **अजाम्** । मूलप्रकृतिम् । **लोहितशुक्लकृष्णाम्** । त्रिगुणात्मिकाम् । अत्र श्रुतौ मुक्तावपि जीवेश्वरयोर्भेदः सूच्यते । **वृक्षे** । शरीरे । असामर्थ्येन मुह्यमानो जीवः शोचति । यदा सोऽन्यमीशं पश्यत्यस्येशस्य महिमानं च पश्यति तदा वीतशोको भवतीत्यर्थः । अनेन जीवेश्वरयोः स्वतो भेदः सिध्यति ।

११७-१३ **अहंकार इति** । भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव चेति पूर्वार्धोपात्तसप्तकमहंकारश्चेत्यष्टधा प्रकृतिरित्यर्थः । अनेन श्लोकेन 'सर्वभूतानि' इत्युत्तरश्लोकैश्च कारणावस्थायामपि भेदः सिद्धो भवति । मयाध्यक्षेणेत्यनेन स्वभावासंकरश्च सूच्यते ।

११८-३ **भूतसूक्ष्मम्** । कारणावस्थम् ।

—७ नन्वेवमस्मान्मायीत्यादिभिर्भेदश्रुतिभिश्चिदचिदीश्वराणां भेदश्चेत्कथमैक्यमिति शङ्कायां घटकश्रुतीः प्रदर्शयति-**एवमिति** । **सर्वावस्थावस्थितयोः** । स्थूलसूक्ष्मरूपसर्वावस्थावस्थितयोः ।

११८–१९ **इति वचनादिति** । अत्राक्षरस्य तमसि सूक्ष्मावस्थाचिद्वस्तुनि लयबोधनेन तमसोऽक्षरात्परत्वं प्रतीयते । तदनुरोधेन योऽक्षरमन्तर इत्यक्षरात्परत्र यो मृत्युमन्तर इति श्रुतौ तम एव प्रत्येतव्यमिति तम एव मृत्युशब्देनाभिधीयत इति बोध्यम् ।

११९–१ एवं भेदश्रुतीर्घटकश्रुतीश्च प्रदर्श्य तदविरोधेनैक्यश्रुत्यर्थमाह–**एवं सर्वेति** ।

—११–३ **अत्रापीति** । छान्दोग्ये तैत्तिरीयके चेत्यर्थः । **तिस्रो देवताः** । पृथिव्यप्तेजोरूपाः ।

—१५ **सच्च त्यच्चेति** । मूर्तं चामूर्तं चेत्यर्थः । **विज्ञानं चाविज्ञानं चेति** । चिद्रूपमचिद्रूपं चेत्यर्थः । अत्र परमात्मैवानुप्रवेशेन चिदचिद्रूपोऽभवदित्युक्त्या परमात्मनश्चिदचिद्रूपं शरीरमिति प्रतीयते । यद्यपि ‘ अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ’ इति पूर्वोक्तच्छान्दोग्यश्रुतौ चिदचिद्रूपशरीरस्यानुल्लेखस्तथापि तैत्तिरीयकश्रुत्यनुरोधात्तत्र तत्स्वीकार्यम् । अतस्तत्र जीवेनात्मनेति पदद्वयप्रतिपादितं जीवस्य ब्रह्मात्मकत्वं शरीरशरीरिभावमूलकमेव न तु सर्वथैक्यमूलकमिति बोध्यम् ।

—१६ तदेवाह–**अनेन जीवेनेति** ।

—१९ **एवंभूतमेव** । अनुप्रवेशपूर्वकमेव । बृहदारण्यके सामान्येनोक्तमपि नामरूपव्याकरणमुक्तश्रुत्यनुरोधादनुप्रवेशपूर्वकमेव स्वीकार्यमिति भावः । एतेन जीवानामुत्पत्तिर्न स्वरूपनिष्पत्तिः किं तु नामरूपव्याकरणमेव । तथा जीवानां प्रलयो न स्वरूपनाशः किं तु नामरूपव्याकरणाभाव इति ध्वनितम् ।

—२२ अथ सर्वश्रुतीनामस्मिन्नर्थे मुख्यत्वं दर्शयन्नेकविज्ञानेन सर्वविज्ञानप्रतिज्ञामुपपादयति–**अत इति** । विशिष्टं ब्रह्म ह्युभयावस्थमिति भावः ।

१२०–२–७ तत्त्वमसीत्यादिसामानाधिकरण्यमुपपादयति–**हन्ताहमिति** । **स्वात्मकेति** । स्वमात्मा यस्येति बहुव्रीहिः । स्वशरीरभूतजीवानुप्रवेशेनेत्यर्थः । **सर्वे वाचका इति** । अचिद्वस्तुवाचका घटादयः शब्दा अचिद्वस्तुविशिष्टपरमात्मवाचकाः । चिद्वस्तुवाचका जीवादयः शब्दाश्चिद्वस्तुविशिष्टपरमात्मवाचकाः । अत एव श्रुतौ नामरूपव्याकरणात्पूर्वमनुप्रवेशकथनम् । घटादिशब्दानां परमात्मपर्यन्तार्थवाचकत्वाभावे तु नामरूपव्याकरणहेतुत्वेन परमात्मानुप्रवेशकथनमसंगतं स्यादिति बोध्यम् । **मुख्यवृत्तमिति** । तथा च निर्विशेषवस्त्वैक्यं न कार्यकारणयोरैक्यप्रतिपादनेन सिध्यति, न चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञया, नापि सामानाधिकरण्येन । ऐक्यप्रतिज्ञासामानाधिकरण्यानामन्यथोपपत्तेः । एवं च कार्यकारणैक्यपराणां श्रुतीनां तयोरेकद्रव्यत्वमेव प्रतिपाद्यं न तु विशिष्टत्वनिषेध इति बोध्यम् ।

१२०–९–१० उपादानत्वेऽपि स्वभावासंकरमाह–**सूक्ष्मेति । संघातस्य ।** सूक्ष्मचिद्वस्तुसूक्ष्माचिद्वस्तुब्रह्मैतत्त्रितयसंघातस्य ।

—११ एतदेव दृष्टान्तेन विशदयति–**यथा शुक्लेति ।** ननु संघातस्य कारणत्वे यथा पटादेः कारणप्रदर्शनवेलायां पुरुषात्पृथक्तन्त्वादीनामुल्लेखस्तथा जगतः कारणप्रदर्शनवेलायां सूक्ष्मचिदचितोः कुतो नोल्लेख इति चेन्न । चिदचितोः पुरुषात्पृथक्स्थितियोग्यत्वाभावेन तदुल्लेखस्यानावश्यकत्वात् ।

—१४ तदाह–**तन्तूनामिति ।**

—१७ **तत्प्रकारतयैव ।** परमात्मविशेषणतयैव । यथा गोत्वजातेर्गोपदवाच्यत्वं व्यक्तिविशेषणतयैव तथेत्यर्थः ।

१२१–२ **कार्यतेति** । कार्यावस्थचिदचिन्नियमनरूपावस्थान्तरापत्तिरेव ब्रह्मणः कार्यत्वमिति कार्यत्ववादिनीनां श्रुतीनामर्थो बोध्यः ।

—४ **अविजिघत्सः ।** अशनेच्छारहितः ।

—९–१० **ज्ञानैकेति ।** यथा गन्धवत्याः पृथिव्या गन्धेन निरूपणं भवति तथा ज्ञातुरात्मनो ज्ञानेनैव निरूपणं भवतीत्यर्थः । **उपपन्नतर इति ।** यद्यपि ज्ञानमात्रस्वरूपब्रह्मवादिनः परस्याप्ययं वाद उपपन्नस्तथापि तस्य ज्ञातृत्वप्रतिपादकश्रुतिविरोधः । अस्माकं तु ज्ञातृत्वप्रतिपादिकाभिर्ज्ञानस्वरूपताप्रतिपादिकाभिश्च श्रुतिभिरविरोध इत्युपपन्नतर इत्युक्तम् ।

ता उभयविधाः श्रुतीर्दर्शयति–**यः सर्वज्ञ इति ।**

—१६ **ज्ञानस्वरूपतामिति ।** आवेदयन्तीति संबन्धः ।

—१८–२१ अथ भेदनिषेधप्रतिपादकश्रुत्युपपत्तिं दर्शयति–**सोऽकामयतेति । तत्प्रत्यनीकेति** । तादृशब्रह्मविरुद्धेत्यर्थः । यत्रान्तर्यामित्वेन ब्रह्मणः संबन्धो नास्ति तादृशं ब्रह्मभिन्नं वस्तु नास्त्येव । अतस्तमेव तदिति तदेव श्रुतिषु प्रतिषिध्यते । ऐक्यश्रुतीनां प्रकार्यैक्यपरत्वादैक्यश्रुतिशेषभूतभेदनिषेधोऽपि तदैक्यानुरोधेन प्रकारिभेदनिषेध एव भवितुमर्हतीति भावः ।

१२२–६–९ उक्तमर्थमुपक्रमेणैवोपपादयति–**यत्र त्वस्येति** । अत्र सर्वशब्देन ऋग्वेदादिशब्देन च प्रकारभेदस्य स्पष्टमेव प्रतिपादनात्प्रकारिभेदविषयव एव निषेध इत्यवश्यं स्वीकार्यम् । **सर्वं तमिति ।** यो ब्रह्मभिन्नं वस्तु ब्रह्मसंबन्धरहितं यथा स्यात्तथा वेत्ति तं पुरुषं तत्सर्वं पराकुर्यादित्यर्थः ।

—११–६ **एवमिति ।** स्वभावभेदं वदन्तीनां श्रुतीनां कार्यकारणभावं वदन्तीभिः श्रुतिभिः सह यो विरोधो भासते, यश्च स्वरूपभेदं वदन्तीनां कार्यकारणयोरनन्यत्वं वदन्तीभिः सह विरोधो भासते स वस्तुतो नास्तीति श्रुतिभिरेव ज्ञायत इत्यर्थः ।

१२२-२१-१२३-१६ **षड्यागानिति** । आग्नेय एकोऽग्नीषोमीयोपांशुयाजौ द्वावैन्द्रौ द्वावैन्द्राग्न एकश्चेति षड्यागाः । **उत्पत्तिवाक्यैः** । अज्ञातार्थबोधकैर्विधिवाक्यैः । **उत्पन्नान्** । प्रतिपादितान् । **वाक्यद्वयेन** । य एवं विद्वान्पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत इत्यनेन । **अधिकारवाक्यम्** । उक्तदर्शपूर्णमासनामकयागाधिकारः स्वर्गकामस्य मनुष्यस्येत्यधिकारबोधकवाक्यम् । **कामिनः** । स्वर्गकामिनः । **पृथक्प्रतिपन्नमिति** । पृथक्प्रतिपन्नं यद्वस्तुत्रयं तत्परमात्मैक एवेति सदेवेत्यादिवाक्यं सद्ब्रह्मात्मादिशब्दैः प्रतिपादयतीत्यर्थः ।

१२३-२० अथ सप्तमीं निवृत्त्यनुपपत्तिं दर्शयति-**यत्पुनरिति** ।

—२२ **कर्मनिमित्तेति** । तथा च सुखदुःखानुभवहेतुभूतस्य पुण्यपापरूपस्य कर्मणः सत्यत्वमेवेष्टव्यम् । असत्यस्य निमित्तत्वं न संभवतीति प्राक् ( श्रीभाष्य-पृ. ५३ प. ३ ) उपपादितत्वात् । ततश्च बन्धस्य पारमार्थिकत्वं सिध्यतीति भावः ।

—२३ **एवंरूपेति** । परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते, अपि त्वदृष्टद्वारा । यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिर्न तु मिथ्येति ज्ञानात्तथेत्यर्थः ।

१२४-२ **यथावस्थितेति** । यथावस्थितं परमात्मनः सकाशाद्भिन्नत्वेनानुभूयमानं चिदचिद्रूपं वस्तु तद्विपरीतविषयकस्याद्वैतज्ञानस्यानुभवविरुद्धत्वेन मिथ्यारूपत्वात्तेन ज्ञानेन बन्धस्य वृद्धिरेव स्यान्न तु निवृत्तिरिति भावः ।

—४ अद्वैतस्य मिथ्यात्वे प्रमाणमाह-**मिथ्यैतदिति** । प्राक् ( विवृति-पृ. ७२ प. १३ ) व्याख्यातम् ।

—५-७ अथ भेदज्ञानस्यैव मोक्षसाधनत्वमाह-**उत्तम इति** । अस्याः स्मृतेः श्रुत्यपेक्षया प्रागुक्तिस्तु मिथ्यैतदिति स्मृतिप्रसङ्गेन कृता गुरुपान्यत्वस्य स्पष्टतयोक्त्या वा । **जीवात्मविसजातीयस्य** । न तु जीवात्मरूपस्य ।

—९ अथाविद्यानिवृत्तिस्तर्कविरुद्धेत्याह-**अपि चेति** । **मिथ्यारूपत्वादिति** । ऐक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयत्वेन मिथ्यारूपत्वमनुपदमेवोक्तम् । अथ चैक्यविषयकज्ञानं ह्यविद्यानिवर्तकत्वेन तवाभिमतम् । तस्य च मिथ्यात्वं निर्विषयकज्ञानसत्यत्ववादिनस्तव गले पतितमित्याशयः ।

—१० शङ्कते-**निवर्तकज्ञानमिति** । यथा विषनाशकं विषं स्वयमेव नश्यति तथेत्यर्थः ।

—१२ निवर्तकज्ञानस्वरूपं तस्योत्पत्तिर्विनाशश्चासद्रूपः सद्रूपो वा । आद्य आह-**तत्स्वरूपेति** । एषां काल्पनिकत्वं स्वाप्नपदार्थवत् । **विनाशेति** । विनाशस्य या कल्पना विनाशविषयकभ्रमबुद्धिस्तत्कल्पकाविद्याया इत्यर्थः ।

१२४–१३ अन्त्य आह–तद्विनाश इति।

—१५ तिष्ठतीति। निवर्तकज्ञानविनाशस्वरूपे ब्रह्मणि तिष्ठति सति निवर्तकज्ञानस्योत्पत्तिरेव न स्यादित्यर्थः।

—१६–७ अथ निवर्तकज्ञानस्यानुपपत्तिं ज्ञात्रभावेन दर्शयति–अपि चेति। निषेधविषयेति। निर्विषयस्य स्वरूपभूतज्ञानस्य ज्ञात्रपेक्षाऽभावादिदमुक्तम्। कोऽयमिति। प्रमाणजन्यज्ञानस्य ज्ञातृसापेक्षत्वादित्याशयः।

—१७ ज्ञाता चायं ब्रह्मणोऽन्योनन्यो वा। आद्य आह–अध्यासेति। कर्मणि घञ्। अध्यस्तरूप इत्यर्थः।

—१८ अन्त्य आह–ब्रह्मेति।

—१९ स्वरूपम्। स्वाभाविकम्।

—२१ तिष्ठत्येवेति। निवर्तकज्ञानकर्तृत्वस्य ब्रह्मण्यध्यस्तत्वे तादृशाध्यासस्य तदध्यासप्रयोजकीभूताविद्यान्तरस्य च तेनैव निवर्तकज्ञानेन निवृत्त्यसंभवादिति भावः।

—२२ ब्रह्मस्वरूपस्यैव ज्ञातृत्वे। ज्ञातृत्वस्य ब्रह्मणि स्वाभाविकत्वे।

—२३ निवर्तकेति। 'निवर्तकज्ञानस्य तज्ज्ञातुश्च तेनैव निवर्तकज्ञानेन निवृत्तिस्तयोर्ब्रह्मव्यतिरिक्तत्वात्' इति तु व्याहतमित्याशयः।

१२५–४ अध्यस्त इति। ज्ञातुरपि निवर्तकज्ञानेन निवृत्तौ स्वीकृतायां तस्य निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिर्न स्यात्।

—७ दिष्टेति। दैवेनैवादौ यो हतस्तस्य पुनर्मुद्गरेणाभिहननं व्यर्थमेवेति भावः।

—८ एवं मृषावादिमते निराकृते बन्धस्य सत्यत्वं सिध्यतीति तादृशबन्धनिवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेत्यतः कर्मविचारस्य ब्रह्मजिज्ञासापेक्षया पूर्ववृत्तत्वं युक्तमित्याशयेनोपसंहरति—तस्मादिति। कर्मप्रवाहरूपाज्ञानेति। न त्वज्ञानमनिर्वचनीयस्वरूपमित्याशयः। उक्तलक्षणज्ञानात्। उपासनात्मकज्ञानात्।

—९ आराधनवेपेति। आराधनस्वरूपमित्यर्थः।

—१३–४ केवलाकारेति। केवलाकार आत्मयाथात्म्यबुद्धिसंस्कारशून्यः फलाभिसंधिसहित आकारः। तादृशकर्मणः परित्यागोऽहरहरित्याद्युक्तविशेषणविशिष्टस्य फलाभिसंधिरहितस्य कर्मणः स्वीकारश्च कर्मस्वरूपज्ञानं विना न संभवतीत्यर्थः।

—१७ अस्मिन्नधिकरणे श्रीशंकराचार्यैः प्रपञ्चस्य सत्यत्वेन ज्ञाननिवर्त्यत्वाभावाज्ज्ञानाय ब्रह्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा प्रपञ्चस्य मिथ्यात्वेन

ज्ञाननिवर्त्यत्वाज्ज्ञानाय स आरम्भणीय इति सिद्धान्तितम् । तच्छ्रुत्यादिविरुद्ध-मिति न सूत्रकृतोऽभिप्रेतम् । अतः सूत्रकृदभिप्रेतमेतत्सूत्रनिरसनीयं पूर्वपक्षं प्रदर्शयति–**अत्रेति । वृद्धव्यवहारेति** । प्रयोजकवृद्धस्य वाचिको व्यवहारः । प्रयोज्यवृद्धस्य कायिकः । वृद्धव्यवहारं विना प्रथमतः शक्तिग्रहो न भवत्येव । न हि प्रथमत एव 'अस्य शब्दस्यायमर्थ' इत्युक्ते 'अस्य शब्दस्यायमर्थ' इत्येतद्वाक्यस्थपदानामप्यर्थो ज्ञायते । अत एव वृद्धव्यवहारस्य शक्तिग्राहकशिरोमणित्वमुक्तमभियुक्तैः । तादृशव्यवहारेण च शब्दस्य कार्यरूपार्थ एव शक्तिः । गामानयेत्यादिप्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा तादृशप्रवृत्तेः कार्यबुद्धिपूर्वकत्वं जानन्व्युत्पित्सुर्बालः 'अयं शब्दः कार्यरूपार्थबोधकः' इति निश्चिनोति । तथा च शब्दस्य कार्यरूपार्थ एव शक्तत्वेन परब्रह्मरूपसिद्धवस्तुप्रतिपादनपराणां शब्दसमुदायात्मकवेदान्तवाक्यानां प्रामाण्यं न संभवतीति भावः । ननु भाट्टेन सिद्धवाक्यादपि शक्तिग्रहः प्रतिपादितः । तथा हि । पुत्रस्ते जात इति सिद्धवस्तुप्रतिपादकं देवदत्तोच्चारितं वाक्यं श्रुत्वा यज्ञदत्तस्य मुखं प्रसन्नं भवति । तेन च लिङ्गेन पुत्रस्ते जात इति वाक्यस्यार्थं पुत्रजन्मरूपं चैत्रो निश्चिनोतीति चेन्न । मुखप्रसादस्य द्रव्यप्राप्त्यादेरपि संभवेन तेन लिङ्गेन पुत्रजन्मन एव निश्चयासंभवात् । न चासन्नप्रसवां यज्ञदत्तभार्यां ज्ञातवतश्चैत्रस्य तथा निश्चयः स्यादेवेति वाच्यम् । तावतापि पुत्रजन्मनिश्चयासंभवात् । कन्यायामपि जातायां सुलग्नप्रसवसुखप्रसवादेरपि मुखप्रसाददर्शनात् ।

१२५–२१ तदेवाह–**न चेति** । मुखविकाशादिलिङ्गेनार्थनिश्चयो न भवति । हर्षहेतूनामानन्त्यादर्थान्तरोपनिपातसंभावनया चेत्यर्थः ।

१२६–३ ननु नैयायिकैः सिद्धवाक्यादपि शक्तिग्रहः प्रतिपादितः । यथा पिकः कूजतीति वाक्यं श्रुत्वा कूजतिशब्दार्थज्ञानवतः पुरुषस्य पिकपदार्थनिश्चयो भवति । यथा वा तृतीयायाः करणरूपमर्थं ज्ञातवतः पुरुषस्य काष्ठैः पचतीति वाक्यं श्रुत्वा काष्ठशब्दार्थनिश्चयो भवतीति चेत्तत्राह–**नापीति । व्युत्पन्नेति** । व्युत्पन्नो ज्ञात इतरपदस्य विभक्तेश्चार्थो येन तस्येत्यर्थः ।

–५–६ **ज्ञानेति** । इदानीं श्रुतेऽस्मिन्वाक्ये पूर्वं कार्यपरतया व्युत्पन्नवाक्यस्थकतिपयपददर्शनादयमपि पदसमुदायः कार्याभिधायीति ज्ञायत इति भावः । **तदंशविशेषः** । कार्यांशविशेषः ।

–६ मृषावाद्युक्तं निरस्यति–**न चेति** । सर्पाद्भीतस्य यज्ञदत्तस्य नायं सर्प इति देवदत्तवाक्यश्रवणेन भयनिवृत्तिं दृष्ट्वा नायं सर्प इतिवाक्यार्थं सर्पाभावरूपं चैत्रो निश्चिनोतीत्यर्थः ।

–९ **इत्यादीति** । आदिनायं डुण्डुभ इति । डुण्डुभो हि सर्पाकारा निर्विषजातिः । तज्ज्ञानेनापि भयनिवृत्तिर्दृश्यते । ननु गामानयेत्यादावानयेत्यादीनां

पदानां कार्यरूपार्थे शक्तत्वेपि गामित्यादीनां पदानां कथं कार्यार्थबोधकत्वमिति चेन्न । तेषामप्यन्विताभिधानवादिनये कार्यान्वितस्वार्थबोधकत्वात् । युक्तं चैतत् । प्रवृत्तिर्हि न केवलमानयेति पदात् । किं तु पदसमुदायात् । अतः सर्वेषां पदानां प्रवर्तकार्थावबोधित्वमवगम्यते । प्रवृत्तिश्च कार्यबुद्धिं विना न संभवतीति सर्वत्र कार्यबुद्धिरेष्टव्या ।

१२६–१० तदेवाह–**कार्येति** । यत्र प्रवृत्तिस्तत्र कार्यबुद्धिरिति व्याप्तिः । **व्याप्तिबलेनेति** । अस्य 'सर्वपदानां कार्यपरत्वेन' इत्यत्रान्वयः । एतेन कार्यरूप एव कारकान्वित एव वार्थश्चेत्कारकपदेष्वननुगमः । कार्यान्वित एवार्थश्चेत्कार्यपदेष्वननुगमः । अत इतरान्वितमात्रे शक्तिरिनीतरान्वितस्य सिद्धस्यापि पदवाच्यत्वमिति सिद्धब्रह्मपराणां वेदान्तवाक्यानां प्रामाण्यमिति वाचस्पत्युक्तमपास्तम् । उक्तरीत्या सर्वेषां पदानां कार्यपरत्वात् ।

—१३ नन्विष्टसाधनताबुद्धेरेव प्रवृत्तिप्रयोजकत्वं न तु कार्यबुद्धेरिति चेत्तत्राह–**इष्टेति** ।

—१४ **वर्तमानेति** । वर्तमानकालिकेऽपि वृक्षाग्रस्थफलादावशक्तस्य प्रवृत्त्यदर्शनात् । तथा च कार्यबुद्धिरेव प्रवृत्तिप्रयोजिका । कार्यबुद्धिर्हीदं मयाद्य साधयितुं शक्यमिति बुद्धिः ।

—१८ **परिनिष्पन्नम्** । सिद्धम् । **आपाताप्रतिपत्तेरिति** । 'अधीतात्स्वाध्यायाद्ब्रह्मप्राप्तिलक्षणानन्तस्थिरफलस्यापाततः प्रतीतिर्भवतीति तन्निर्णयाय ब्रह्मविचारारम्भः' इति हि प्रागुक्तम् (श्रीभाष्य–पृ. ३ प. २२)। परं तु ब्रह्मणः सिद्धरूपत्वेन तत्र चोक्तरीत्या शब्दस्य शक्त्यभावेन स्वाध्यायादापाततोऽपि तत्प्रतीतिर्नैव भवतीति ब्रह्ममीमांसारम्भो न युक्त इति भावः ।

१२७–४ **अलौकिककार्थः** । कार्यरूपः ।

—६–११ व्युत्पित्सोर्बालस्य व्युत्पत्तिर्द्विधा भवति । बुद्धिपूर्विका यादृच्छिकी च । तत्रान्त्यायां शब्दस्य कार्यरूपार्थकत्वं पूर्वपक्षिणा प्रदर्शितम् । परं त्वाद्यायां सिद्धवस्तुपरत्वमेवेत्याशयेनाह–**अम्बेति** । अम्बादिशब्दाः ससंबन्धिकार्थप्रतिपादकाः । शय्यादिशब्दाः केवलार्थप्रतिपादकाः । मात्रादिर्हि पुरोवर्तिनं पशुं निर्दिश्य 'अयं गौः' इति वाक्यं प्रयुङ्क्ते । एवं बहुशः शिक्षितो व्युत्पित्सुर्बालो यदा गोशब्दं शृणोति तदा स गोशब्द एव स्वस्वरूपेण श्रोतुस्तस्य तादृशपशुबुद्धिमुत्पादयति । ततोऽस्य पशोर्गोशब्दस्य च कश्चन संबन्धोऽस्तीति सोऽवधारयति । तत्र च जन्यजनकभावादीनामितरसंबन्धानामसंभवात्स्वाभाविको बोध्यबोधकभाव एव संबन्ध इति शब्दार्थसंबन्धग्रहणप्रकारो लोकप्रसिद्धः । ननु न गोशब्दस्तादृशपशुरूपार्थस्य बोधकः । किं तु तत्र तस्य केवलं संकेत इति चेत् । अयं संकेतः केन कृतः । किं मात्रादिनैवाधुना कृतः किंवा पूर्वमेव

केनापि कृतः । नाद्यः । सर्वेषामेव तादृशपशुरूपार्थे गोशब्दप्रयोगदर्शनात् । नान्त्यः । संकेतयितुः पुरुषस्याज्ञानेन तस्य वक्तुमशक्यत्वादित्युक्तरीतिरेव साधीयसी । किं च वृद्धव्यवहारेण बोधकत्वशक्त्यवधारणं ससंबन्धिकाम्बादिशब्देषु दुर्वचम् । प्रयोजकवृद्धेन यज्ञदत्तं प्रति 'अम्बां वन्दस्व' इत्युक्ते तेन कृतं स्वमातृवन्दनं दृष्ट्वा व्युत्पित्सोश्चैत्रस्य स्वमातृरूपार्थेऽम्बाशब्दस्य बोधकत्वशक्त्यवधारणासंभवादिति बोध्यम् ।

१२७–१२ बुद्धिपूर्वकव्युत्पत्तावेव प्रकारान्तरेण सिद्धवस्तुपरत्वं दर्शयति–**पुनश्चेति** । वाक्ये श्रुते तद्घटकस्य कस्यचित्पदस्यार्थाज्ञानेऽस्यायमर्थ इति वृद्धास्तं शिक्षयन्तीति प्रसिद्धम् । तथा च बुद्धिपूर्वकव्युत्पत्तौ शब्दस्य सिद्धवस्तुपरत्वं सिद्ध्यतीति भावः ।

—१५ अथ यादृच्छिकव्युत्पत्तावपि शब्दस्य सिद्धवस्तुपरत्वं दर्शयति–**प्रकारान्तरेणेति** । यादृच्छिकव्युत्पत्तिजनकेन वृद्धव्यवहाररूपप्रकारेणापीत्यर्थः ।

**केनचिदिति** । अत्र प्रयोजकवृद्धस्य कायिको व्यवहारः प्रयोज्यवृद्धस्य वाचिक इति पूर्वपक्ष्यभिमतवृद्धव्यवहारोदाहरणाद्विशेषः ।

—१८–१२८–१ **मूकवदिति** । अनेन चेष्टाज्ञानस्य शब्दानपेक्षत्वं सूचितम् । **अनुगतः** । तज्ज्ञापने प्रवृत्तं पुरुषमनुगतः । **इमं शब्दम्** । 'पिता ते सुखमास्ते' इमं शब्दम् । अयं हि शब्दो न कार्यार्थप्रतिपादकः । किं तु सिद्धार्थप्रतिपादकः । **निर्बन्धः** । आग्रहः । **निर्निबन्धनः** । निर्मूलः ।

१२८–४ अथ तुष्यतु दुर्जनन्यायेन शब्दस्य कार्यार्थपरत्वं स्वीकृत्यापि ब्रह्मविचारस्य कर्तव्यतां प्रतिपादयति–**कार्यार्थत्वेऽपीति** ।

—५–१४ **आत्मा वार इति** । यद्यपि ब्रह्म सिद्धरूपं तथाप्युपासनायाः कार्यत्वेन तस्याश्चात्मा वार इत्यादिवेदान्तवाक्येषु प्रतिपादितत्वेन तेषां प्रामाण्यमक्षतमेव । तादृशोपासनायाश्च ब्रह्मप्राप्तिफलकत्वेन ब्रह्मप्राप्तिकाम एवाधिकारीत्युपासनारूपकार्यार्थे एव ब्रह्मविचारः कर्तव्यः । **दहर इति** । अस्याः श्रुतेरर्थो मूल एव ( श्रीभाष्य–पृ. २९८ प. ६ ) स्पष्टः । **प्रतिपन्नेति** । उक्तश्रुतिभिः प्रतिपन्नं ज्ञातं यदुपासनं तद्विषयकार्यं तदवच्छिन्नकृतिसाध्यमपूर्वं तत्राधिकृतस्य फलत्वेन ब्रह्मप्राप्तिः श्रूयत इत्यर्थः । **ब्रह्मेति** । ब्रह्मणः स्वरूपस्य, तस्य ब्रह्मणो विशेषणानां गुणानां विभूतीनां चेत्यर्थः । ननूक्तरीत्यात्मा वार इत्यादिवाक्यानामुपासनारूपकार्यार्थबोधकतया प्रामाण्येन ब्रह्मविचारस्य कर्तव्यत्वे प्राप्तेऽपि ब्रह्मणः सिद्धत्वेन तत्स्वरूपप्रतिपादकानामिदं सर्वं यदयमात्मेत्यादिवाक्यानामप्रामाण्यमेवेति कथं तादृशवाक्यैर्ब्रह्मविचारः कर्तव्य इति चेन्मैवम् । आत्मा वार इत्यादिविधिवाक्यानां ब्रह्मप्राप्तिरूपफलपर्यन्तं तात्पर्यसत्त्वात्फलबोधकत्वेन विध्यङ्गभूतानामिदं सर्वं यदयमात्मेत्यादिवाक्यानामपि प्रामाण्यसत्त्वेनादोषात् ।

न चैवमपि ब्रह्मणो विशेषणीभूता ये सत्यत्वज्ञानत्वादयो गुणास्तत्प्रतिपादकानां सत्यं ज्ञानमित्यादिवाक्यानामप्रामाण्यमेवेति वाच्यम् । फलविशेषणपर्यन्तमपि विधिवाक्यतात्पर्यसत्त्वात् । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिवाक्यस्य यस्मिन्नोष्णं न शीतं नार्तिरिति श्रुत्युक्तस्वर्गविशेषणपर्यन्तमपि तात्पर्यं कल्प्यते तद्वत् । न च ज्योतिष्टोमेनेति विधौ स्वर्गरूपफलस्य निर्देशात्तद्विशेषणपर्यन्तं तात्पर्यकल्पनेऽपि 'आत्मा वारे' इत्यादिविधौ फलस्यानिर्देशात्फलपर्यन्तमपि तात्पर्यं नास्ति किमुत तद्विशेषणपर्यन्तमपीति वाच्यम् । विधिवाक्ये फलस्यानिर्देशेऽपि तावत्पर्यन्तं तात्पर्यसत्त्वात् । यथा रात्रिसत्रे रात्रीरुपेयादिति विधौ प्रतिष्ठारूपफलस्यानिर्देशेऽपि 'प्रतितिष्ठन्तीह वा एते य एता रात्रीरुपयन्ति' इत्यर्थवादोक्तप्रतिष्ठारूपफलपर्यन्तं तात्पर्यं कल्प्यते तद्वत् । न च तथाप्युपासनाविरुद्धसंसाररूपफलपर्यन्तमात्मा वार इत्यादिविधिवाक्यानां तात्पर्याभावेन तद्बोधकानां 'यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥' (का. ३।७) इत्यादिश्रुतीनामप्रामाण्यं स्यादिति वाच्यम् । यत्र विरुद्धमपि फलं विधेयोपकारकं भवति तत्र तत्फलपर्यन्तमपि विधिवाक्यतात्पर्यसत्त्वात् । यथा 'ब्राह्मणाय नापगुरेत' (तै. सं. २।६।१०।२) इत्यपगोरणनिषेधविधायकवाक्यस्य 'योऽपगुरते शतेन यातयात्' इत्यपगोरणनिषेधविरुद्धशतयातनारूपफलपर्यन्तमपि तात्पर्यम् । अपगोरणं ताडनोद्योग इति सायणाचार्याः । स च शस्त्रोद्यमनरूपः । एतच्च शतयातनारूपं फलमपगोरणनिषेधविरुद्धमपि निषेधविधेरुपकारकम् । मनुष्यो हि शतयातनासंभावनयाऽपगोरणान्निवर्तते । तद्वदत्रोपासनाविरुद्धमपि संसाररूपं फलमुपासनामुपकरोति । उपासनाया अभावे संसारप्रवृत्तिं दृष्ट्वोपासनायां मनुष्यस्य प्रवृत्तेरित्यवधेयम् ।

१२८-१५ अथ पूर्वपक्ष्यभिमतवृद्धव्यवहारेणापि न कार्यार्थ एव व्युत्पत्तिरित्याह–**गामानयेति** । **कार्यार्थे** । भवदभिमतकार्यरूपेऽर्थे ।

—१६ **कृतीति** । कृतिश्चान्तरः प्रयत्नः । तद्भावानन्तरभावीत्यर्थः । तावन्मात्रोक्तौ स्वेदश्रमादेरपि कार्यत्वापत्तिरतः कृत्युद्देश्यमिति कृत्युद्देश्यमिति वदतः पूर्वपक्षिणोऽभिप्रायः । परं त्वेतादृशं कार्यं निरूपयितुमशक्यम् । कार्ये कृत्युद्देश्यत्वस्यासंभवात् । कृत्युद्देश्यत्वं हीष्टतमत्वरूपम् । तच्च सुखादौ फल एव संभवति न तु कार्यभूते शब्दार्थे ।

—१७-८ कर्तुरीप्सिततमं कर्म (पा. सू. १।४।४९) इति पाणिनिसूत्रानुसारेण कर्मत्वं दर्शयति–**कृतिकर्मत्वं चेति** । **कृत्या प्राप्तुम्** । क्रियाजन्यफलेन संबन्धुम् । ननु कृतिकर्मत्वं न कृत्या प्राप्तुमिष्टतमत्वम् । किं तु प्रवर्तकत्वम् । तच्च कार्यभूते शब्दार्थे संभवति । शब्दार्थं बुद्ध्वैव प्रवृत्तेरिति चेन्न ।

एतादृशकृतिकर्मत्वस्य कृतिसाध्येच्छाविषयत्वस्वरूपत्वात् । कृत्यधीनसिद्धित्व-मिष्टत्वं चानालोच्य प्रवृत्त्यदर्शनात् । तथा च कृतिसाध्यत्वेच्छाविषयत्वव्यतिरि-क्तकृत्युद्देश्यत्ववादिनस्तवैव विरोधः ।

१२८-१९ तदेवाह-तत्रेष्टेति ।

—२२ नन्विष्टवस्तुन एवेच्छाविषयत्वं प्रेरकत्वं चेति रूपद्वयम् । तत्र प्रेरकत्वमेव कृतिकर्मत्वं न त्विच्छाविषयत्वमिति चेत्तत्राह-इच्छाविषयस्येति।

१२९-१ न चेति । यतः सुखमेव पुरुषानुकूलमतः पुरुषानुकूलत्वं कृत्युद्दे-श्यत्वं नेत्यर्थः ।

—२ न च दुःखेति । यद्यपि दुःखनिवृत्तेः पुरुषानुकूलत्वेऽपि पूर्वपक्षिणो न किंचित्सिध्यति तथापि वस्तुस्थितिकथनमेतत् ।

—६ क्रियादेरिति । तथा च गामानयेत्यादौ धातुवाच्यक्रियादेः कृत्युद्दे-श्यत्वाभावेन कार्यत्वाभावादशब्दार्थत्वप्रसङ्ग इत्याशयः ।

—७ दुःखात्मकत्वादिति । दुःखं हि नात्मनः स्वतन्त्रो गुणः । किं तु प्रतिकूलतया भासमानं वस्त्वेव दुःखमिति मत इदम् । स्वतन्त्रगुणपक्षेऽपि क्रियादेः श्रमजनकत्वेन प्रतिकूलतया भासमानत्वादनुकूलत्वं नास्त्येवेति बोध्यम् ।

—८ इच्छामात्रमेव । न त्वनुकूलवेदनीयत्वम् ।

—९ शेषित्वमिति । प्रधानत्वमित्यर्थः । तथा च कृतिसाध्यस्यानयनादेः कृतिनिरूपितप्रधानत्वेन तत्र कृत्युद्देश्यत्वरूपकार्यत्वसत्त्वात्तस्य शब्दार्थत्वमक्षत-मिति शङ्काशयः ।

उत्तरयति-भवदिति ।

—१०-११ परोद्देशेति । परस्यानयनादेरुद्देशेन प्रवृत्तोत्पन्ना या कृतिस्त-त्संबन्धयोग्यत्वं शेषत्वमित्यर्थः । तत्प्रतिसंबन्धी । तस्य शेषस्य प्रतिसंबन्धी परपदग्राह्य आनयनादिः ।

—११-१२ अशेषत्वेनेति । कृतिसंबन्धयोग्यत्वस्य कृतावभावात् । तथा च कृतिसाध्यस्यानयनादेः कृतिनिरूपितप्रधानत्वाभाव इति भावः । तत्साध्य-त्वस्येति । तत्साध्यत्वस्य शेषित्वरूपत्वाभावादित्यर्थः । तत्साध्यस्येति पाठस्तु सुगम एव ।

—१२ न च परेति । परस्यानयनादेरुद्देशेन या प्रवृत्तिरुत्पत्तिस्तदर्हत्वं कृतेरिति तस्याः शेषत्वम् । तन्निरूपितशेषित्वं च परपदग्राह्यस्यानयनादेरित्या-शयः ।

—१२ उद्देश्यत्वस्यैवेति । तथा चोद्देश्यनिरूपणस्योद्देश्यसापेक्षत्वादात्मा-श्रयः ।

१२९-१४ **दर्शनाच्चेति**। तथा च परोद्देशप्रवृत्त्यर्हस्वरूपलक्षणेऽतिव्याप्तिः। परोद्देशमात्रप्रवृत्त्यर्हत्वं शेषत्वमित्युक्तौ तु भृत्येऽव्याप्तिः।

—१६ **कार्यस्वरूपस्यैवेति**। कार्यत्वं कृत्युद्देश्यत्वम्, उद्देश्यत्वं शेषित्वम्, शेषित्वं शेषप्रतिसंबन्धित्वम्, शेषत्वं च कार्यप्रतिसंबन्धित्वमित्यात्माश्रय इति भावः।

१८ **पुरुषस्येति**। कृतिमत्पुरुषप्रयोजनमेव कृतिप्रयोजनमित्यर्थः।

१३०-२-३ **कृतिसाध्यतेति**। कृतिसाध्यत्वकृतिप्रधानत्वरूपकार्यमित्यर्थः। आत्मन्यतिव्याप्तिवारणाय कृतिसाध्यत्वेति। स्वेदादावतिव्याप्तिवारणाय कृतिप्रधानत्वमिति। **दुर्निरूपमिति**। विशेष्यस्य कार्यत्वस्योक्तरीत्या दुर्निरूपत्वाद्विशेषणविशिष्टस्यापि दुर्निरूपत्वं बोध्यम्।

—४ नन्वपूर्वरूपं कार्यमेव शब्दार्थः। तस्य चेच्छाविषयत्वं स्वत एव न तु स्वर्गादिसाधनत्वेनेति तत्र कृतिप्रयोजनत्वरूपं कृत्युद्देश्यत्वं वर्तत एवेति चेत्तत्राह—**नियोगस्येति**। अपूर्वरूपकार्यस्येत्यर्थः। तस्य न स्वत एवेच्छाविषयत्वं किं तु सुखसाधनत्वेन दुःखनिवृत्तिसाधनत्वेन वेति तस्येच्छाविषयत्वाभावान्न कृतिप्रयोजनत्वमिति भावः।

—५ **अत एव**। कार्यस्य सुखादिसाधनत्वेनैवेच्छाविषयत्वादेव। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ लिङ्वाच्यं कार्यं किं क्रियारूपं क्रियासाध्यापूर्वरूपं वा। आद्ये स्वर्गकामपदानन्वयः। क्रियायाः क्षणभङ्गित्वेन तस्याः स्वर्गसाधनत्वायोगात्। अतः स्थाय्यपूर्वमेव कार्यं स्वीकृतम्। तस्यापूर्वस्यापि यदि सुखादिसाधनत्वेन प्रतीतिर्न स्याच्चेत्तादृशापूर्वकल्पने मानाभावेन क्रियैव कार्यं स्यादिति भावः।

—९ **अपूर्वव्युत्पत्तिः**। अपूर्वं पुण्यविशेषः। तत्र व्युत्पत्तिर्नाम तस्यापूर्वरूपार्थस्य लिङादिवाच्यत्वम्।

—९-११ **प्रथममिति**। पूर्वपक्षिणोऽयमभिप्रायः। स्वर्गकामपदान्वयात्पूर्वं लिङादिवाच्यकार्यस्य प्राधान्येनैव प्रतिपत्तिः। प्राधान्यं चानन्यार्थत्वम्। न हि तदानीमिदं कार्यं स्वर्गाद्यर्थमिति प्रतीयते। तादृशप्राधान्यं च स्वर्गकामपदान्वयोत्तरमपि रक्षणीयमेवेति तदानीमपि न तस्य स्वर्गादिसाधनत्वेन प्रतीतिः। किं तु तदपूर्वं स्वप्राधान्यसंरक्षणाय स्वयमेव यागकर्तुः स्वर्गं ददानीति तस्यापूर्वस्य स्वत एवेष्टत्वं न तु सुखसाधनत्वेनेति। परं त्वेतदुपहास्यम्। स्वर्गसाधनतोद्देशेनैव ह्यपूर्वस्वीकारात्।

—११ **स्वर्गकामेति**। अन्विताभिधानवादिमतेनेदम्।

—१२ ननु व्युत्पत्तिदशायामपूर्वस्य साधनतया व्युत्पत्तिः। अभिधानदशायां त्वनन्यार्थं स्थायिकार्यमित्येव प्रतीयत इत्युच्यत इति चेत्तत्राह—**सुखदुः**

खेति । यद्यत्साध्यं तत्तत्सुख-दुःखनिवृत्ति-तत्साधनान्यतममेव । निर्विशेषं न सामान्यमिति न्यायादिति भावः ।

१३०-१४ **नियोगम्य** । अपूर्वरूपकार्यस्य ।

शङ्कते-**सुखवदिति** ।

—१५ **किं नियोग इति** । सुखव्यतिरिक्तस्यानुकूलत्वं न संभवतीत्याशयः ।

—१६ पुनः शङ्कते-**सुखविशेषवदिति** । यथा स्वर्गादिसुखमितरसुखाद्विलक्षणं तथैवेदमपि नियोगपदवाच्यं सुखमितरसुखाद्विलक्षणमित्याशयः ।

१३१-१ **विषयविशेषः** । चन्दनस्पर्शादिः ।

—२ शङ्कते-**शास्त्रेणेति** । **पश्चादिति** । यद्यपीदानीं नानुभवस्तथापि मरणानन्तरमस्त्येवेत्यर्थः ।

—४ **लौकिकं वाक्यम्** । आमोत्तं याग कुर्वित्यादि ।

—५ **कृतिसाध्यतामात्रेणेति** । न तु नियोगस्य सुखरूपत्वं प्रतिपाद्यत इति भावः ।

—६ **वैदिकम्** । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि ।

—७ **नित्येति** । अहरहः संध्यामुपासीतेत्यादि नित्यम् । प्रायश्चित्तबोधकं वाक्यं नैमित्तिकम् ।

—९ **नियतेति** । पचनरूपस्य कर्मणोऽन्नरूपं फलं नियतम् । इह लोक एवोपभोगार्हं च । एवमेवौषधसेवनरूपकर्मणो नीरोगत्वं फलं बोध्यम् ।

—१२ **अर्थवादेति** । अर्थवादवाक्यैर्यथा स्वर्गादिसुखप्रकाराः कथ्यन्ते तथाऽपूर्वरूपसुखप्रकारा न कथ्यन्ते । तथा चापूर्वस्य सुखस्वरूपत्वे प्रमाणाभावात्तस्य प्रयोजनत्वं न संभवतीति स्थितम् ।

१३२-५ **इति स्थितमिति** । अस्मिन्नधिकरणे ब्रह्ममीमांसा १ विषयः । सा किमारम्भणीया न वेति २ संशयः । सिद्धवस्तुनि शब्दव्युत्पत्तिर्नास्तीति ३ पूर्वपक्षः । अस्तीति ४ सिद्धान्तः । ब्रह्ममीमांसारम्भः ५ फलम् । एवमग्रेऽप्यङ्गपञ्चकं यथायथमूहनीयम् ॥ १ ॥

—६ **जिज्ञास्यम्** । विचार्यम् ।

—८ **जन्मादीतीति** । जन्म सृष्टिः । आदिशब्देनाद्यावयवमुच्यते । जन्मादि यस्येति बहुव्रीहिः । इतिशब्द एकवचनतात्पर्यद्योतनाय । सूत्रे जन्मादीत्येकवचनं समुदायस्य लक्षणत्वद्योतनाय । **सृष्टिस्थितिप्रलयमिति** । समाहारद्वंद्वः ।

१३२–८ तद्गुणेति । तेषां गुणानां बहुव्रीहिघटकपदार्थानां कार्यान्वयितया संविज्ञानं यत्रेत्यर्थः । यथा लम्बकर्णमानयेति । अत्र लम्बकर्णयोरप्यानयनक्रियासंबन्धः । अथ वा तच्छब्देन विशेष्यमुच्यते । गुणशब्देन च विशेषणमुच्यते । समित्यस्यैकीकरणमर्थः । तथा च विशेष्यं विशेषणं चैककार्यान्वितत्वेन यो बहुव्रीहिर्ज्ञापयति स तद्गुणसंविज्ञानः । लम्बकर्णौ विशेषणम् । तद्विशिष्टः पशुर्विशेष्यः । चित्रगुमानयेत्यत्र तु चित्राणां गवामानयनक्रियया सहासंबन्धान्न तद्गुणसंविज्ञानो बहुव्रीहिरिति बोध्यम् ।

—९–११ अचिन्त्येति । अचिन्त्या जीवकर्तृकत्वाभावेन चिन्तयितुमशक्या काशवाय्वादिभेदेन विविधा तत्तदवान्तरभेदेन विचित्रा च रचना संस्थानं यस्येत्यर्थः । अनेनाचिदंशवैचित्र्यमुक्तम् । चिदंशवैचित्र्यमाह–नियमेनेति । अस्मिन्देशेऽस्मिन्काल इदं फलमनेन भोक्तव्यमिति नियमो हिरण्यगर्भादारभ्य पिपीलिकापर्यन्तं सर्वजीवेषु साधारण एवेत्यर्थः । निखिलेति । निखिला ये हेयास्त्याज्याश्छिद्रताः क्लेशादयोऽचिद्गताः षड्भावविकाराश्च तत्प्रत्यनीकं स्वरूपं यस्य तस्मादित्यर्थः । ज्ञानानन्देति । भावप्रधानो निर्देशः । ज्ञानत्वमानन्दत्वं चेत्यर्थः । आनन्दत्वं स्वानुकूलत्वम् । आदिशब्देन सत्यत्वादिसंग्रहः । अनन्तत्वं देशतः कालतश्चापरिच्छिन्नत्वम् । कल्याणत्वमन्येषामनुभवितॄणामप्यनुकूलत्वम् ।

—१४–६ वारुणिः । वरुणपुत्रः । भगवः । हे भगवन् । प्रयन्ति । प्रगच्छन्ति । प्रलयावस्थास्थानीत्यर्थः ।

—१९ जन्मादीनां ब्रह्मलक्षणत्वं किं विशेषणत्वेनोपलक्षणत्वेन वा, प्रथमेऽपि किं प्रत्येकं विशेषणत्वेन संभूय विशेषणत्वेन वेति विकल्प्य प्रत्येकपक्षे दूषणमाह–न तावदिति । विशेषणत्वेनेति । ज्ञाप्यान्तर्भूतो ज्ञाप्यप्रतीत्युपायो विशेषणम् । ज्ञाप्यबहिर्भूतो ज्ञाप्यप्रतीत्युपाय उपलक्षणमिति विशेषणोपलक्षणयोर्भेदः ।

—२० प्रसक्तेरिति । यथा नीलं शुक्लं पीतं वस्त्रमित्यत्र वस्त्रानेकत्वं प्रतीयते यथा वाऽजो गजो महिषः प्राणीत्यत्र प्राण्यनेकत्वं प्रतीयते तद्वदेवात्र जगज्जन्मसाधनं ब्रह्म भिन्नं स्थितिसाधनं भिन्नं प्रलयसाधनं च भिन्नमिति प्रतीतिः स्यात् । जगज्जन्मकृद्ब्रह्मेत्युक्ते विशेषणस्य व्यावर्तकत्वेन तत्र स्थितिकृल्लयकृतोर्न प्रतीतेः । विरुद्धधर्म एव व्यावर्त्यत इति सिद्धान्तिहृदयं पूर्वपक्षी न जानाति ।

—२१ व्यावर्तकत्वमिति । विशेष्यत इतरस्माद्भिद्यतेऽनेनेति विशेषणशब्दस्य निरुक्तेः ।

१३३–१–२ प्रमाणान्तरेणेति । देवदत्ते युवत्वस्य प्रमाणान्तरसिद्धत्वेन न तस्य श्याम इति विशेषणेन बाधः । किं तु नीलत्वादेरेवेति भावः । उपसंहारः । पर्यवसानम् ।

१३३-४ अनवगतमिति। सत्यं ज्ञानमित्यत्राप्येवमेव ब्रह्मबहुत्वप्रतीतेः। एकमेवाद्वितीयमित्यत्रैकशब्दस्तु ब्रह्मबहुत्वेऽप्येको व्रीहिरितिवदुपपद्यत इत्याशयः।

—५ शङ्कते—ब्रह्मशब्देति।

—८ बहवः स्युरिति। विशेष्यैकवचनेन विशेषणभेदमूलकविशेष्यभेदप्रतीतेर्न बाधः। ब्रह्मेत्येकवचनं तु ग्रहं संमार्ष्टीतिवज्जातिपक्षाश्रयेणोपपादनीयम्।

संभूयेति पक्षे दूषणमाह—अत एवेति। असति प्रत्यक्षविरोधे विशेषणभेदस्य विशेष्यभेदापादकत्वस्वभावादेवेत्यर्थः।

—१० उपलक्षणपक्षं दूषयति—नापीति।

—१२ यत्रायमिति। अत्र सारससंबन्ध उपलक्षणम्। देवदत्तसंबन्धित्वमुपलक्ष्यम्। केदारत्वं च पूर्वप्रतिपन्नाकारः। तथात्र पूर्वप्रतिपन्नाकाराभावेनोपलक्षणं न संभवतीत्यर्थः।

—१९ आकारान्तरेति। अन्तरशब्दो विशेषवाची। तेन व्यतिरिक्तशब्देन न पौनरुक्त्यम्। ब्रह्मणः पूर्वप्रतिपन्नाकाराभावादप्रतिपत्तिरिति न वक्तुं शक्यत इत्यर्थः।

तत्र पूर्वप्रतिपन्नाकारमुपलक्ष्याकारादुपलक्षणाकाराच्च पृथक्त्वेन दर्शयितुं प्रथममुपलक्ष्याकारं दर्शयति—उपलक्ष्यमिति।

१३४—२ पूर्वप्रतिपन्नाकारं दर्शयितुमाह—यत इति। यतो वेत्यत्र यत इति निर्देशः। येन जातानीत्यत्र येनेति निर्देशः। यत्प्रयन्तीत्यत्र यदिति निर्देशः।

—६ तदपीति। निमित्तोपादानत्वरूपकारणत्वमपीत्यर्थः।

—१२ प्रतिपन्नं ब्रह्मेति। तथा च सामान्यतो बृहत्त्वं पूर्वप्रतिपन्नाकारः। गुणतो विभूतितश्चानवधिकं यद्बृहत्त्वं तद्रूपो बृहत्त्वविशेषस्तूपलक्ष्याकार इति बोध्यम्। इति चेति। अतश्चेत्यर्थः।

—१४ अथ विशेषणतया लक्षणत्वमुपपादयति—जगदिति।

—१५ लक्षणभूतान्यपि। व्यावर्तकस्वरूपाण्यपि। स्वविरोधिव्यावृत्तमिति। न तु स्वेतरयावद्धर्मव्यावृत्तमित्यर्थः। यथा नीलं वस्त्रमित्युक्ते नीलपदेन स्वविरोधिशुक्लत्वादेरेव व्यावृत्तिः। न तु स्वाविरोधिमार्दवादेरिति भावः।

१३५—३ अथ सत्यज्ञानादीनां लक्षणत्वमुपपादयति—यतो वेति। यतो वेति लक्षणवाक्येन कारणत्वमेव लक्षणत्वेनोच्यत इत्यस्य कारणवाक्यत्वम्।

—६ निरुपाधिकसत्ता। निर्विकारत्वम्। विकारात्मना परिणामविशेषेण तत्तदवस्थस्य या सत्ता तस्याः सोपाधिकसत्तात्वात्। ब्रह्माहेति। निरुपपदस्य

सत्यशब्दस्य शक्तिसंकोचे प्रमाणाभावेन स्वरूपतो धर्मतश्चैकरूपत्वमेव सत्यत्वमित्यर्थः। स्वरूपत इत्यनेनाचेतनव्यावृत्तिः। धर्मत इत्यनेन जीवव्यावृत्तिः।

१३५-७ नामान्तरभजनार्हम्। नामान्तरप्राप्त्यर्हम्।

—१० देशकालेति। इह ब्रह्म नान्यत्रेत्याकारकपरिच्छेदशून्यत्वं देशपरिच्छेदरहितत्वम्। न तु देशाभावः। तथेदानीं ब्रह्म नान्यदेत्याकारकपरिच्छेदशून्यत्वं कालपरिच्छेदरहितत्वम्। न तु कालाभावः। तथेदं वस्तु ब्रह्म न भवतीत्याकारकपरिच्छेदशून्यत्वं सर्ववस्तुसामानाधिकरण्यार्हत्वं वा वस्तुपरिच्छेदरहितत्वम्। न तु वस्तुनोऽभावः। ब्रह्मव्यतिरिक्तयोश्चिदचितोः सत्त्वेऽपि तयोर्ब्रह्मशरीरत्वेन ब्रह्मसामानाधिकरण्येन प्रतीयमानत्वात् 'इदं वस्तु ब्रह्म न भवति' इत्याकारकवस्तुपरिच्छेदो न जायते।

—११-२ पूर्वपदद्वयम्। सत्यं ज्ञानमिति पदद्वयम्। सातिशयेति। नित्यानां जीवानां स्वरूपमणुत्वात्परमात्मस्वरूपापेक्षया सातिशयम्। तथा नित्यानां जीवानां ज्ञानव्यतिरिक्ता य ऐश्वर्यादयो गुणास्तेषां जगद्व्यापारानर्हत्वात्परमात्मगुणापेक्षया सातिशयत्वम्।

—१९ ये तु। मायावादिनस्तु।

—२१ इति निर्वचनादिति। न तु निर्विशेषं ब्रह्मेति निर्वचनं कृतमित्याशयः।

इति वचनाच्चेति। न तु 'जगतोऽध्यासो यतः' इति सूत्रितमित्याशयः।

१३६-१ ईक्षणेति। 'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) इत्यत्र ब्रह्मणीक्षणसंबन्धो दर्शितः। ब्रह्मणो निर्विशेषत्वे तु स न संभवतीत्यर्थः।

—३ तर्कश्च। अनुमानं च। साध्येति। साध्यभूतो यो धर्मस्तदव्यभिचारी तदनधिकरणावृत्तिर्यः साधनभूतो धर्मस्तेन युक्तमेव वस्त्वनुमानस्य विषयो न तु निर्विशेषमिति भावः।

—५ स्वोत्प्रेक्षापक्षेपि। जन्मादिसूत्रस्य स्वोत्प्रेक्षितार्थाङ्गीकारेऽपि। किंचायं मायावाद्यभिमतो विवर्तवादो न श्रुत्यारूढः। यतो यथा सोम्येति श्रुतौ परिणामिघटादिरेव दृष्टान्तत्वेनोक्तो न तु रज्जुसर्पादिः। तथाग्रे सूत्रकृतापि 'आत्मकृतेः परिणामात्' (ब्र. सू. १।४।२६) इत्युक्तं न तु विवर्तादित्यवधेयम्॥ २

—११ सिद्धेरिति। अप्राप्ते हि शास्त्रमर्थवदिति न्यायेन प्रत्यक्षादिप्रमाणान्तराविषयवस्तुप्रतिपादकत्व एव शास्त्रस्य प्रमाणत्वात्प्रमाणभूतवाक्यप्रतिपाद्यत्वं ब्रह्मणो न संभवतीत्याशयः।

—१३ शास्त्रं यस्येति। यथाऽब्भक्ष इत्यत्राप एव भक्षयतीत्यर्थो गम्यते तथाऽत्र शास्त्रमेव यस्य योनिरित्यर्थो बोध्यः। कारणम्। ज्ञप्तिकारणम्। न तूत्पत्तिकारणम्।

१३६–१५ अत्यन्तेति । स्वरूपस्य लिङ्गस्य चेन्द्रियसंबन्धाभावोऽत्यन्तातीन्द्रियत्वम् ।

—१९ अस्मिन्नधिकरणे मुख्यपूर्वपक्षमुत्थापयति–नन्विति ।

१३७–१ सिद्धान्त्येकदेशी मीमांसकः शङ्कते–किं तर्हीति ।

—३–४ विद्यमानेति । विद्यमानो यः संनिकर्षो देशतः कालतश्च विषयेन्द्रिययोः संबन्धस्तद्योग्यो यः स्वविषयस्तद्बोधजनकानीत्यर्थः । योग्यपदेन धर्माधर्मादिव्यावृत्तिः । सर्वार्थेति । सर्वार्थसाक्षात्कारः सर्वपदार्थप्रत्यक्षज्ञानं तन्निर्माणं सर्वपदार्थोत्पत्तिस्तदुभयसमर्थो यः परमपुरुषरूपो विशेषविषयस्तद्बोधजनकानि न भवन्तीत्यर्थः ।

—५ नाप्यान्तरमिति । मनोऽपि न परमपुरुषबोधजनकमित्यर्थः ।

—६ सुखादीति । आन्तरसुखदुःखादीति पाठ आन्तरमित्यस्य विवरणं सुखदुःखादीति बोध्यम् ।

—७ योगजन्यमित्यत्र योगिप्रत्यक्षं किं पूर्वानुभूतापेक्षयाधिकविषयमस्ति न वा । अन्त्य आह–भावनेति । संकुचितं स्वधर्मभूतज्ञानं विकाशदशापन्नतया भाव्यत उत्पद्यतेनयेति भावना । तस्याः प्रकर्षः सकलसंकोचापायः । भावनाप्रकर्षपर्यन्तं जन्म यस्येत्यर्थः । अनुभूतानतिरिक्तविषयस्येति यावत् । तथा च यावदेव भावना तावदेव योगिप्रत्यक्षमुत्पद्यते। भावना चानुभूतसंबन्धिन्येवेति । अनधिकविषयस्य योगिप्रत्यक्षस्य भावनाजन्यत्वेन स्मृतिरूपत्वान्न प्रमाणत्वमिति प्रमाणविशेषप्रत्यक्षत्वं दूरोत्सारितं स्यात् ।

—९ आद्य आह–तदतिरिक्तेति । इन्द्रियसंबन्धरूपकारणाभावान्नाधिकविषयस्य योगिप्रत्यक्षस्य प्रामाण्यम् ।

तथा सतीति । कारणाभावेप्यतिरिक्तविषयत्वाङ्गीकारे सति तस्य दोषमूलकत्वेन भ्रान्तितैवेत्यर्थः ।

—१० विशेषतो दृष्टम् । कार्यकारणभावरूपविशेषसंबन्धमूलकम् । यथा कार्येण धूमेन कारणस्य वह्नेरनुमानम् । यथा च कारणेन मेघागमनेन कार्यस्य वृष्ट्यादेरनुमानम् । सामान्यतो दृष्टम् । कार्यकारणभावसंबन्धराहित्येऽपि सामान्यतः सहचारदर्शनजन्यम् । यथा गन्धेन पृथिवीत्वानुमानम् ।

—११ संबन्धावधारणविरहात् । कार्यकारणभावसंबन्धज्ञानाभावात् ।

—१२ नियतम् । व्याप्तम् ।

—१६–४ अथ पूर्वपक्ष्येकदेशी परमात्मन्यनुमानं दर्शयति–ननु चेति ।

तदुपादानेति । उपादानं समवायिकारणम् । उपकरणं निमित्तकारणम् ।

संप्रदानं क्रियोद्देश्यं भोक्ता । प्रयोजनं विनियोगः । एतदभिज्ञः कर्ता यस्य तत्त्वमित्यर्थः । यत्र यत्र कार्यत्वं तत्र तत्रैतादृशकर्तृकत्वमिति व्याप्त्या कर्ता सिध्यति । स चार्थात्परमात्मैवेत्याशयः ।

१३७–१५ एककर्तृकत्वसिद्ध्यर्थमनुमानान्तरमाह–**अचेतनेति** ।

उक्तानुमानद्वये क्रमेण दृष्टान्तमाह–**सर्वं हीत्यादिना** ।

—१७ **एकचेतनाधीनं चेति** । दृष्टमित्यनुषज्यते ।

उक्तानुमानस्य कार्यत्वसिद्ध्यधीनत्वात्कार्यत्वं जगतः साधयति–**सावयवत्वेनेति** ।

—१९ सिद्धान्त्येकदेशी दूषयति–**उच्यत इति** ।

आदौ द्वितीयमनुमानं संनिहितत्वाद्दूषयति–**किमिदमिति** ।

**न तावदिति** । तदायत्तोत्पत्तिस्थितित्वं हि तदिच्छाधीनोत्पत्तिस्थितित्वम् । तच्च दृष्टान्ते शरीरे न संभवति । शरीरस्योत्पत्तेः स्थितेर्वा जीवेच्छाधीनत्वाभावात् ।

१३८–१ ननु तददृष्टाधीनोत्पत्तिस्थितित्वमेव तदायत्तोत्पत्तिस्थितित्वमिति चेत्तत्राप्याह–**दृष्टान्तो हीति** ।

—४ **अवयवसंश्लेषविशेषः** । अवयवानां सम्यक्संबन्धः । स एवावयविनः स्थितौ प्रयोजको न तु जीव इत्यर्थः ।

—६ **पक्षेति** । सर्वं जगत्पक्षः । शरीरं सपक्षः ।

—७ **तदायत्तेति** । एकचेतनाधीनप्रवृत्तिकत्वमेवैकचेतनाधीनत्वम् । अस्ति चेदं सपक्षे शरीरे । शरीरप्रवृत्तेर्जीवाधीनत्वात् ।

—९ साध्यकोटावेकत्वस्याविवक्षायां दोषमाह–**चेतनमात्रेति** ।

—१० आद्यमनुमानं दूषयति–**किं चेति** ।

—१३ **यथेदानीमिति** । एवमेव पूर्वकालेपीति भावः ।

—१४ ननु तथापि धर्माधर्मयोः साक्षात्कारासंभवाज्जीवस्य कर्तृत्वं न संभवतीति चेत्तत्राह–**उपकरणेति** । उपकरणीभूतयागादिजन्या स्वात्मातिशयरूपा या शक्तिस्तद्रूपमपूर्वादिपदवाच्यं यददृष्टं तस्य साक्षात्काराभावेपीत्यर्थः ।

—१६ **शक्तिमत्** । शक्तिविशिष्टं दण्डादि, शक्तिजनकं यागादि च । तस्य साक्षात्कारः शक्तिमत्त्वेनैव रूपेणेति नाग्रहः ।

—१९ **मणिकः** । कमण्डलुः ।

—२२ अथ कार्यत्वसाधकस्य सावयवत्वहेतोः सोपाधिकत्वं दर्शयति–**किं चेति** । शक्या क्रिया यस्य कार्यस्य तच्छक्यक्रियम् । शक्यमुपादानादिवि-

ज्ञानं यस्य कार्यस्य तच्छक्योपादानादिविज्ञानम् । शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चेत्युपाधिद्वयम् । यत्र कार्यत्वं तत्र शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चेति घटादौ साध्यव्यापकत्वम् । यत्र सावयवत्वं तत्र शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं च नियमेन नास्ति । महीधरादौ व्यभिचारादिति साधनाव्यापकत्वम् । अनया रीत्याभिज्ञचेतनकर्तृकत्वसाधकस्य कार्यत्वहेतोरपि सोपाधिकत्वं बोध्यम् ।

१३९–५–७ अथ कार्यत्वहेतुः परमात्मनि विरुद्धधर्मसाधक इत्याह–किं चेति । अनीश्वरेण । कर्मवश्येन । परिग्रहवता । दण्डचक्रादिसाधनसहितेन । चेतनं कर्तारम् । परमात्मानम् ।

—९ उच्छेदप्रसङ्ग इति । पर्वतो वह्निमानित्यत्रापि वह्नौ सपक्षमहानसदृष्टान्तेन गृहावयवसंबन्धित्वचुल्लीस्थत्वपाकसाधनत्वादिधर्मप्रसङ्गादित्याशयः ।

लिङ्गिनि । साध्ये ।

—११–२ अन्वयेति । अन्वयव्यतिरेकाभ्यामवगतोऽविनाभावनियमो व्याप्तिनियमो येषां तथाभूता इत्यर्थः ।

—१३ सिद्धान्त्येकदेशिमतमुपसंहरति–अत इति ।

—१५ अथ मुख्यपूर्वपक्षमुपपादयति–अत्राहुरिति ।

आदौ कार्यत्वहेतुं स्वरूपासिद्धिनिरसनेन दृढयति–सावयवत्वादेवेति ।

—१८ महत्त्वे सतीति । अनेन परमाणुव्यावृत्तिः । क्रियावत्त्वादिति । अनेनाकाशव्यावृत्तिः ।

—१९ तनुः । शरीरम् । यद्यप्यस्मदादिशरीरे कार्यत्वं सिद्धमेव तथापीश्वरशरीरे कार्यत्वज्ञापनार्थं तनूपन्यासः । मूर्तत्वात् । अपकृष्टपरिमाणवत्त्वात् । अनेनाकाशव्यावृत्तिः ।

१४०–१ शङ्कते–कार्यत्वेति ।

—३–४ कार्यत्वेनेति । अयं भावः–त्वदभिमतकार्ये घटादावपि शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं च न प्रत्यक्षेणोपलभ्यते । तयोः पुरुषतन्त्रत्वात् । किं तूत्पन्नं घटादिरूपं कार्यं दृष्ट्वा कार्यत्वहेतुकानुमानेनैव तद्धर्मद्वयमनुमीयत इति त्वयाप्यास्थेयम् । तच्चानुमानं महीधरादावपि तुल्यमिति । ज्ञानशक्ती । ज्ञानं कर्तुस्तत्कार्योपादानादिविज्ञानम् । शक्तिश्च कर्तुस्तत्कार्यकरणसामर्थ्यम् । अन्यत्रापि । महीधरादावपि । ते । ज्ञानशक्ती । प्रतिपन्ने । ज्ञाते ।

१४०–११–३ परमात्मन्यनुमानान्तरं दर्शयति–किं चेति । तयोः । धर्माधर्मयोः । आस्थेय इति । तथा च प्रयोगः–धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठितावेव कार्यकरावचेतनत्वाद्वासिवदिति ।

—१३–४ वर्धकिना । तक्ष्णा । वास्यादेरिति । वासिस्तक्षणसाधनं 'वाकस' इति प्रसिद्धम् । अनेकपरिकरसंनिधानेऽपि । अनेकसाधनसंनिधानेऽपि । यूपः । यज्ञस्तम्भः ।

—१५–६ ननु कथं चेतनानधिष्ठितमपि बीजमङ्कुरमुत्पादयतीति चेत्तत्राह–बीजाङ्कुरादेरिति । तत्राप्युक्तदृष्टान्तेन चेतनाधिष्ठितत्वमनुमेयमेवेति भावः । श्रोत्रियवेतालानामिति । परिहासोक्तिः ।

—१७ तथैवेति । सुखादिकमपि चेतनाधिष्ठितमेव पुलकाद्युत्पादयतीत्यर्थः । अथ वा चेतनाधिष्ठितमेव मनः सुखाद्युत्पादकमित्यर्थः ।

—१८ क्षेत्रज्ञानामेवेति । जीवा एव धर्माधर्माद्यधिष्ठाय सुखाद्युपभोगं जनयन्तीत्याशयः ।

—१९ सूक्ष्मेति । सूक्ष्मं परमाण्वादि जीवेन न दृश्यते । स्थूलमपि भित्त्याद्यन्तरितं वस्तु न दृश्यते । स्थूलमनन्तरितमपि दूरं पर्वतादिस्थं वस्तु न दृश्यते । तथा च जीवस्यात्यल्पशक्तित्वेन धर्माधर्मदर्शनायोगात्तद्द्रष्टृत्वेन परमात्मैवास्थेयो न तु लाघवादशक्तस्य जीवस्य कार्यकरत्वकल्पनं युक्तम् । अन्यथैकेन्द्रियवादप्रसङ्गः स्यादिति भावः ।

१४१–२ अत इति । अनुमानादिप्रमाणान्तरेण परमात्मा सिध्यत्येवेत्यर्थः ।

समर्थेति । यत्र यत्र कार्यत्वं तत्र तत्र समर्थकर्तृपूर्वकत्वमस्त्येवेति व्याप्तिः । तथा च कार्यत्वेन हेतुना सिध्यन्परमात्मरूपः कर्ता सर्वकार्यकरणसमर्थ एव सिध्यतीति न जीववत्परमात्मनो ज्ञानशक्ती संकुचिते इति भावः ।

—५ अथ कार्यत्वहेतोर्विरुद्धधर्मसाधकत्वं प्रागुक्तं (श्रीभाष्य–पृ. १३९प.५) निरस्यति–यत्त्विति ।

—७ लिङ्गिनि । साध्ये । महानसे सपक्षे दृष्टानामपि गृहावयवसंबन्धित्वादिधर्माणां पर्वतो वह्निमानित्यत्र वह्नावप्राप्तेः । न च वह्नेः प्रमाणान्तरप्रतिपन्नत्वान्न तद्धर्मप्राप्तिरिति सिद्धान्त्येकदेश्युक्तं युक्तमिति वाच्यम् । धर्मप्राप्तौ प्रमाणान्तरप्रतिपन्नत्वस्याप्रयोजकत्वात् । किं तु धूमरूपकार्यस्य वह्निरेव हेतुर्न तु तत्र गृहावयवसंबन्धित्वादिधर्माः । अतो धूमः स्वहेतुभूतं वह्निमेवानुमापयति नान्यधर्मान्तरम् । एवमत्रापि कार्यं स्वहेतुभूतं परमात्मानं तत्र स्वनिर्माणसामर्थ्यं स्वकारणज्ञानं चानुमापयति । कार्यनिर्माणसामर्थ्यं कार्यकरण-

ज्ञानं चान्तरेण कार्योत्पत्त्यदर्शनात् । न तु कार्यं स्वाहेतुभूताननीश्वरत्वार्थान्तराज्ञानादिधर्मान्परमात्मन्यनुमापयति । अनीश्वरत्वस्यार्थान्तराज्ञानस्यान्येषां चैवंविधानां धर्माणामन्वयव्यतिरेकाभ्यां कार्यनिरूपितकारणत्वासंभवात् । न हि घटः कुलाल इतरकार्यकरणासामर्थ्यमपेक्षते । न वा स्वव्यतिरिक्तपटादिपदार्थाज्ञानं तत्रापेक्षते ।

१४१–१२ अथापेक्षत इति वैयात्येन ब्रूषे चेत्तत्राह–किं चेति ।

—१६ **सर्वेषु कर्तृष्विति** । घटव्यतिरिक्तं कतिपयं वस्तु पटो वा भित्तिर्वा गौर्वा कुसूलं वा यद्गृह्यते तदज्ञानमेव तत्करणासामर्थ्यमेव च घटकर्तुः कुलालस्य वर्तेत इति नियमे मानाभावात्, तज्ज्ञानवतोऽपि तत्करणसमर्थस्यापि च कुलालस्य घटहेतुत्वदर्शनाद्व्यभिचार इति भावः ।

—१९ शङ्कते–**कुलालादीनामिति** ।

१४२–२ **भूतेति** । भूतवेतालानामपगमो गरलस्य विषस्य विनाश इत्यन्वयः ।

—३ पुनः शङ्कते–**कथमिति** ।

—५ **कार्यत्वेनेति** । यथा कार्यत्वेन हेतुनोपादानज्ञानं कार्यकरणसामर्थ्यं चेश्वरस्यास्तीत्युक्तं तथा तेनैव हेतुनेश्वरस्य मनोऽप्यस्ति । अङ्गीकृतश्च नैयायिकैकदेशिभिः परमात्मन्यपि मनःसंबन्ध इति बोध्यम् ।

—६ पुनः शङ्कते–**मानस इति** ।

—८ **अनैकान्तिकत्वात्** । यत्र मनस्तत्र सशरीरत्वमस्त्येवेति नियमस्य व्यभिचरितत्वात् ।

—१० **क्षेत्रज्ञो न प्रभवति** । जीवः समर्थो न भवति ।

—१५–७ ननूक्तरीत्या परमात्मनोऽनुमानगम्यत्वेऽप्यनुमानागम्यकतिपयार्थबोधकत्वेन ब्रह्मप्रतिपादकस्य शास्त्रस्य प्रामाण्यमस्त्येव । ब्रह्मैकमेव जगतो निमित्तकारणमुपादानकारणं चेत्यनुमानेन न ज्ञायते । लोके तयोरैक्यस्यादर्शनात् । तथाकाशाद्युत्पादकं ब्रह्मेति शास्त्रेण न ज्ञायते । लोके निरवयवपदार्थस्योत्पत्तेरदर्शनादिति चेत्तत्राह—**किं चेति** । **नैकमेवेति** । एकमेव ब्रह्माकाशादेः कृत्स्नस्य जगतो निमित्तकारणमुपादानकारणं च तदेवेत्याकारकं लोकविरुद्धमर्थं प्रतिपादयितुं शास्त्रमपि न शक्नोतीत्यर्थः ।

—१८ अथ मुख्यसिद्धान्तं दर्शयति–**एवमिति** ।

१४३–४ **प्रमाणाभावादिति** । यद्यपि कार्यत्वहेतुकानुमानेन जगतः कर्ता सिध्यति तथापि स एक एवैकदैव च तेनेदं सर्वं निर्मितमिति न सिध्यति । एवं च जगतोऽनेकजीवकर्तृकत्वे स्वीकृतेप्यनुमानं न विरुद्धमिति नानुमानेनेश्वरसिद्धिरिति भावः ।

१४३-७-८ विचित्रेति । महदादिजगतोऽस्मदादिजीवैः कर्तुमशक्यत्वेनातिविपुलत्वेनातिसूक्ष्मत्वेन च विचित्रत्वं बोध्यम् । तदतिरिक्तेति । जीवातिरिक्तैकेश्वरकल्पनायामनेककल्पनारूपदोषाभावादित्यर्थः । अर्हतीति । इति न वाच्यमित्यर्थः ।

—९ तत्र हेतुमाह–क्षेत्रज्ञानामिति । शक्तिवैचित्र्येति । योगिनां हि योगबलेन सूक्ष्ममपि दूरस्थमपि वस्तु दृश्यते । इन्द्रादीनां चास्मदाद्यपेक्षयाऽधिकसामर्थ्यं प्रसिद्धमेव ।

—११ तदतिरिक्तेति । सिद्धेष्वेव जीवेष्वदृष्टातिशयकल्पने लाघवम् । अत्यन्तादृष्टस्य पुरुषस्यैव कल्पनं तु गौरवग्रस्तत्वान्नोपपद्यते । धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादिति भावः ।

—११-२ न चेति । सर्वस्य जगतो युगपन्नाशो युगपदुत्पत्तिश्च न प्रमाणसिद्धेत्यर्थः । यदि स्यात्तर्हि तन्नाशायाशरीर ईश्वरः कल्प्यः स्यात् । जीवस्य शरीरसापेक्षकर्तृत्वेन युगपत्सर्वनाशस्य जीवकर्तृकत्वासंभवात् । शरीरस्य सर्वान्तर्गतत्वात् । एवं युगपत्सर्वोत्पत्तावपि ।

—१४ विरोधाभावाच्चेति । जगतः क्रमिकोत्पत्तौ क्रमिकनाशे च कल्प्यमाने कश्चन विरोधो नास्तीत्यर्थः ।

—१६-७ अथ फलितं दूषणं दर्शयति–अत इति । अनैकान्त्यम् । व्यभिचारः । अनेककर्तृकप्रासादादिषु बुद्धिमदेककर्तृकत्वाभावेपि कार्यत्वदर्शनेन कार्यत्वहेतोर्व्यभिचरितत्वान्न तेन बुद्धिमदेककर्तृकत्वं सिध्यतीत्यर्थः । ननु बुद्धिमदेककर्तृकत्वं नाम सर्वज्ञः सर्वशक्तिश्च यः परमात्मा तदेककर्तृकत्वम् । तच्च प्रासादादिष्वप्यन्ततोऽस्तीत्यनुमेयमेवेति न व्यभिचार इति चेत्तत्राह–पक्षस्येति । महानसादौ प्रसिद्धस्य वह्निमत्त्वस्य पर्वतो वह्निमानित्यत्र पर्वतविशेषणत्वं युक्तम् । जगत्सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकमिति त्वदुक्तानुमाने तु सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकत्वस्यान्यत्राप्रसिद्धस्य जगद्विशेषणत्वं न संभवति । सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकत्वस्याप्रसिद्धत्वादेव च घटादिदृष्टान्तस्य साध्यरहितत्वमिति भावः ।

तदेवोपपादयति–सर्वनिर्माणेति ।

—१८ सकर्तृकत्वमात्रं साध्यमिति पक्षे दूषणमाह–बुद्धिमदिति । सिद्धसाध्यतेति । वेदान्तिभिरस्माभिरपि जगतो बुद्धिमत्कर्तृकत्वस्याङ्गीकारात् ।

—१९-१४४-१ सार्वज्ञ्येति । यथा घटरूपविशेषकार्यनिष्ठकार्यत्वेन कर्तृविशेषः कुलालः साध्यते न तु सामान्यतः कार्यत्वेन, तथा सर्वज्ञसर्वशक्तियुक्तपरमात्मनः कर्तृविशेषस्य साधकमिदं कार्यत्वं किंचिद्विशेषकार्यनिष्ठमित्यवश्यं

वाच्यम् । तत्किं युगपदुत्पद्यमानसर्ववस्तुगतमुत क्रमेणोत्पद्यमानसर्ववस्तुगतम् । नाद्यः । सर्वस्य युगपदुत्पत्तेरसंभवेन तन्निष्ठकार्यत्वस्यासिद्धत्वात् । नान्त्यः । क्रमेणोत्पद्यमानघटपटरथादिसर्ववस्तूनामेकस्मादुत्पत्तेर्लोकेऽदर्शनेन तादृशसर्ववस्तुनिष्ठकार्यत्वस्य त्वदुक्तसाध्यविरुद्धत्वात् ।

१४४–२ अत्रापीति । क्रमेणोत्पद्यमानघटपटरथादिसर्ववस्तूनामेकस्मादेवोत्पत्तिरित्यङ्गीकारे तेषां कुम्भकारकुविन्दरथकाराद्यनेककर्तृकत्वं प्रत्यक्षत उपलभ्यमानं विरुद्धं स्यात् । कार्यमनेककर्तृकं विचित्रत्वादित्याद्यनुमानानि च विरुद्धानि स्युः ।

—२ कुम्भकार इति । कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तेः पृथग्वक्तुमशक्यत्वात् ।

—५–६ प्रकारान्तरेण विरोधं दर्शयति–अपि चेति । सत्त्वादीति । आदिना रजस्तमसोः संग्रहः । सत्त्वादिगुणानां कार्यं यत्सुखादि तत्संबन्धः शरीरादिषु सर्वत्र दृश्यते । सुखादीत्यादिशब्देन दुःखमोहग्रहणम् । यथैकस्मिन्नेव कान्ताशरीरे सुखदुःखमोहसंबन्धः । तत्पत्युस्तच्छरीरात्सुखोत्पत्तेः । तां चिन्तयतस्तामप्राप्तवतश्च दुःखोत्पत्तेः । तामचिन्तयतोऽन्यस्य मोहोत्पत्तेश्च । मोह औदासीन्यम् । एवं सर्वत्र गुणत्रयसंबन्धो बोध्यः । सत्त्वादिमूलत्वम् । सत्त्वादिगुणविशिष्टद्रव्यकारणकत्वम् ।

—७ ननु सत्त्वादिगुणविशिष्टद्रव्यस्य शरीरं प्रति कारणत्वेपि तत्रत्यानां गुणानां कथं कारणत्वम् । न हि तन्तुरूपं पटं प्रति कारणं भवतीति चेत्तत्राह–तेषामिति । शरीरादीनामित्यर्थः । शरीरसंसृष्टमनसि विकारोत्पादकत्वेन गुणानां शरीरकारणत्वमुपचर्यत इत्याशयः ।

—९ तद्योगः । शरीरयोगः । ज्ञानशक्तिवदिति । यथा पूर्वपक्षिणा कर्तृसाधकेन कार्यत्वेन हेतुना कर्तुः कार्योपादानज्ञानं कार्यकरणसामर्थ्यं चानुमीयते तथा तेनैव हेतुना कर्तरि कर्मसंबन्धोऽवश्यमनुमेयः । अन्तरेण कर्म ज्ञानशक्तिवैचित्र्यासंभवात् । तथा चानुमानेन सिध्यन्कर्ता कर्मवश्य एवेति जीव एव स भवितुमर्हति । अतो नानुमानेनेश्वरसिद्धिरित्याशयः ।

—११ नन्वीश्वर इच्छामात्रादेव जगत्सृजतीति तत्र कर्ममूलकस्य ज्ञानशक्तिवैचित्र्यस्यानपेक्षितत्वान्न तस्य कर्मवश्यत्वमिति चेत्तत्राह–इच्छाया इति ।

—१४ प्रतिकूलानुमानानि दर्शयति–भवन्ति चेति ।

—१६ तद्वदेव । मुक्तवदेव ।

—१७ न चेति । जीवस्य स्वशरीरकर्तृत्वावस्थायामकर्तृत्वाभावेप्यशरीरत्वस्य सत्त्वेनाशरीरत्वहेतुर्व्यभिचरित इत्याशयः ।

१४५-१ **सद्भावादिति** । यथा बालशरीरविशिष्टो जीवो युवशरीरं परिगृह्णाति तद्वदेवेदं बोध्यम् ।

प्रतिकूलानुमानान्तरमाह-**विमतीति** । **न लोकशून्य इति** । तथा च जीवविशिष्टलोकस्य सर्वदा सद्भावेन जगन्निष्ठकार्यत्वस्य जीवैरेव सिद्धत्वेन नेश्वरानुमानावसर इति भावः ।

—३ पूर्वपक्ष्युक्तानुमानं प्रकारान्तरेण दूषयति-**अपि चेति** ।

—५ **नित्यत्वेपीति** । अपिशब्देन स्वमते मनसो नित्यत्वानभ्युपगमं सूचयति ।

—७ **सावयवस्येति** । ईश्वरशरीरस्य सावयवस्यापि सतो नित्यत्वेऽङ्गीक्रियमाणे सावयवस्य जगतोऽपि नित्यत्वप्रसङ्गः । नित्यत्वे च तस्य जगज्जन्मादिकर्तृत्वाभावेनेश्वरत्वं न सिध्यतीत्यर्थः ।

—९ **तद्व्यतिरिक्तस्येति** । शरीरस्यानित्यत्वे तदुत्पत्तिवेलायां तच्छरीरहेतुभूतस्य तच्छरीरव्यतिरिक्तस्यान्यस्य शरीरस्याभावादनित्यत्वपक्षो न संभवतीत्यर्थः ।

**स्वयमेव** । केवलपरमात्मैव ।

—११ **अनवस्थानादिति** । यदि बीजाङ्कुरन्यायेन नानवस्थादोष इत्युच्यते तदापि सशरीरत्वेनेश्वरस्य कर्मवश्यत्वं स्यादेवेति दोषो बोध्यः ।

—१२ पुनः प्रकारान्तरेण पूर्वपक्ष्युक्तानुमानं दूषयति-**स किमिति** । स ईश्वरः ।

—१४-५ **इच्छामात्रेति** । मात्रशब्देन सत्त्वादिगुणसंबन्धस्य तन्मूलकर्मसंबन्धस्य च व्यावृत्तिः । **अप्रसिद्धविशेषणत्वम्** । अप्रसिद्धसाध्यकत्वम् । **साध्यहीनतेति** । घटादौ दृष्टान्ते निर्व्यापारकर्तृकत्वस्यादर्शनात् ।

—१६ **शास्त्रैकप्रमाणक इति** । नन्वेवमप्यव्यापारस्याशरीरस्य च परमात्मनो जगत्कर्तृत्वासंभवस्तदवस्थ एव । लोके तथाऽदर्शनादिति चेन्न । शब्दानपेक्षतया केवलानुमानेनेश्वरं साधयतस्तवैव दृष्टान्तापेक्षा न तु ममेति भावः ।

—१७ तदेव ध्वनयन्नाह-**शास्त्रं त्विति** ।

१४६-४-६ **प्रकृतिश्चेति** । प्रकृतिरुपादानकारणम् । ईश्वरो न केवलं जगतो निमित्तकारणं किं तूपादानकारणमपि । यतस्तथा सत्येव श्रुत्युक्तौ प्रतिज्ञादृष्टान्तौ नोपरुध्येते । 'येनाश्रुतं श्रुतं भवति' (छा. ६।१।३) इति प्रतिज्ञा । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छा ६। १।४) इति दृष्टान्तः । **न वियदिति** । वियन्नोत्पद्यते श्रुतौ तदुत्पत्तेरप्रतिपाद-

नादिति पूर्वपक्षं कृत्वा सूत्रकारैरग्रे ' आत्मन आकाशः संभूतः' ( तै. २।१।१ ) इति श्रुतेराकाशोत्पत्तिः साधितेति बोध्यम् ॥ ३ ॥

१४६–१० **न शास्त्रमिति** । सिद्धब्रह्मप्रतिपादकत्वे स्वीकृते तु शास्त्रं न कस्यचित्प्रवर्तकं निवर्तकं वा स्यात् । तथात्वे तु तस्य सुखपर्यवसायित्वं दुःखनिवृत्तिपर्यवसायित्वं वा नास्तीति शास्त्रमपि ब्रह्मण्यप्रमाणं स्यादित्याशयः ।

—१४ **अभिधेयतया** । वाच्यतया । ब्रह्मणि शास्त्रस्य वाचकत्वेन संबन्धाद्ब्रह्मणः शास्त्रप्रमाणकत्वं भवत्येवेति फलितोऽर्थः ।

१४७–५ **व्युत्पत्तिसिद्धेति** । ब्रह्मणि समन्वितानां श्रुतीनां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहेणान्यपरत्वमप्रमाणत्वरूपं कर्तृस्तावकत्वादिरूप वा न कल्पयितुं शक्यम् । सिद्धे वस्तुन्यपि शब्दानां व्युत्पत्तेरुपपादनादिति भावः ।

—८ ननु प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनविरहे कथं प्रामाण्यमित्यत्राह–**स्वविषयेति** । प्रमाणानां विषयावबोधे तात्पर्यं न तु प्रयोजनपर्यन्तम् । अत एव निष्प्रयोजनस्यापि लोष्टादिप्रत्यक्षस्य प्रामाण्यमङ्गीकृतमभियुक्तैः ।

—९ तदेवाह–**न च प्रयोजनेति** ।

—१० अथ ब्रह्मप्रतिपादकश्रुतीनां प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनविरहेऽपि तद्व्यतिरिक्तं प्रयोजनमप्यस्तीत्याह–**न च प्रवृत्तीति** ।

—११ **स्वरूपपरेषु** । सिद्धार्थप्रतिपादकेषु । पुत्रस्ते जात इत्यस्य हर्षः प्रयोजनम् । नायं सर्प इत्यत्र भयनिवृत्तिः प्रयोजनमिति बोध्यम् ।

—१४ अथास्मिन्नधिकरणे पूर्वपक्षं विस्तरेण प्रतिपादयति–**अत्राहेत्यादिना न संभवतीति प्राप्तम्** (श्रीभाष्य–पृ. १६८–प. ३) इत्यन्तेन । मीमांसकमतमेतत् ।

—१४–५ **प्रवृत्तीति** । अत एवोक्तं वार्तिककृता–

यावत्खलु प्रमातॄणां प्रवर्तननिवर्तने ।
शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनम् ॥

इति । **शास्त्रस्येति** । शासनाद्धि शास्त्रम् । शासनं च प्रवर्तननिवर्तनात्मकमेवेत्याशयः ।

—१७ **प्रयोजनरहितस्येति** । अत एव पुनरुक्तेर्दोषत्वमुक्तं साहित्यशास्त्रे । तत्र हि दोषत्वबीजं प्रयोजनशून्यत्वमेव ।

२०–१ **अर्थार्थी** । द्रव्यार्थी । **मन्दाग्निः** । मन्दो जाठराग्निर्यस्य । **अम्बु** । उदकम् ।

१४८–४ **अर्थपरत्वाभावेनेति** । यद्यपि वेदान्तशास्त्रं मोक्षरूपप्रयोजनपर्यवसायि तथापि स मोक्षो ब्रह्मज्ञानादेव न तु ब्रह्मस्वरूपादित्यतो मोक्षे

ब्रह्मस्वरूपस्यानुपयोगेन शास्त्रस्य ब्रह्मस्वरूपसिद्धवस्तुप्रतिपादकत्वतात्पर्या-भावेन न शास्त्रं ब्रह्मसद्भावे प्रमाणमित्याशयः।

१४८-१० **निष्प्रपञ्चमिति**। तथा च सिद्धस्यापि ब्रह्मणः प्रपञ्चराहित्यस्वरू-पेणाकारान्तरेण साध्यत्वमिति भावः।

—१२ **कोसाविति** । कतिपयनाशेप्यशक्तस्य सकलप्रपञ्चनाशनविधिर-शक्य इत्याशयः।

—१४ **न दृष्टेरिति** । प्रपञ्चस्याविद्यापरिणामरूपत्वाद्बुद्धिनिवृत्तिमात्ररूपः प्रपञ्चलयः शक्य एवेत्याशयः।

—१५ **दृशिमात्रमिति**। मात्रशब्देनाविद्यानिवृत्तिः।

—१८ मीमांसकः पूर्वपक्षयेतद्दूषयति—**तद्युक्तमिति**।

—१८-९ **नियोगेति**। नियोगो विधिः। स एव वाक्यार्थ इति वादिने-त्यर्थः। **नियोज्येति**। नियोज्यस्य नियोक्तुं शक्यस्य विशेषणम्। यथा ज्योति-ष्टोमेन स्वर्गकामो यजेतेत्यत्र नियोक्तुं शक्यस्य कर्तुर्विशेषणं स्वर्गकाम इति। **विषयः**। विधिविषयो विधेय इति यावत्। स च यागादिः क्रियारूपः। **करणम्**। यागादिरेव भावनारूपकार्यनिष्पत्तौ करणं साधनम्। वक्तव्या **इति**। न दृष्टेरिति निष्प्रपञ्चीकरणविधाविति शेषः।

—२० आदौ नियोज्यविशेषणं दूषयति—**तत्रेति**। **अनुपादेयम्**। विधेय-भिन्नम्। अथवात्र वक्तुमशक्यमित्यर्थः।

**निमित्तमिति**। यथा यावज्जीवमग्निहोत्रं जुहुयादित्यत्र नियोज्यस्य कर्तु-र्जीवनं विशेषणम्। यथा वा मलिनवपुः स्नायादित्यत्र नियोज्यस्य स्नानकर्तुर्म-लिनवपुष्ट्वं विशेषणं निमित्तभूतम्। तस्य सिद्धत्वात्। **फलमिति**। यथा स्वर्गकामो यजेतेत्यत्र स्वर्गरूपं विशेषणं फलभूतम्। तस्यासिद्धत्वात्।

१४९-१ **ब्रह्मस्वरूपयाथात्म्यानुभव इति**। तथा चैतादृशानुभव वान्निष्प्रपञ्चीकरणविधौ नियोज्य इत्यर्थः।

—३ **नित्यत्वेन**। कदाप्यविनाशित्वेन। सिद्धत्वेनेति यावत्। अस्य निमि-त्तत्व इत्यत्रान्वयः। अपिरेवार्थे। शरीरेन्द्रियाभावेऽपि विषयानुष्ठानयोग्यता तु निमित्तत्वाङ्गीकारबलात्स्वीकर्तव्या स्यात्।

—४ **नैयोगिकम्**। विधिसंबन्धि।

—५ विषयं दूषयति—**कश्चेति**।

—६ **अभव्यरूपत्वात्**। असाध्यरूपत्वात्। **अभावार्थत्वात्**। क्रियारू-पत्वाभावात्।

१४९-६ शङ्कते-**निष्प्रपञ्चमिति**। तथा च ब्रह्मणो **निष्प्रपञ्चत्वस्वरूपेण** साध्यत्वमित्याशयः ।

—७ **साध्यत्वेऽपीति** । त्वदुक्तरीत्या ब्रह्मणः साध्यत्वेऽपि फलत्वं स्यान्न तु विधिविषयत्वम् । क्रियारूपत्वाभावात् । विषयस्य फलव्यतिरिक्तत्वनियमाच्चेति भावः ।

—१० **न तर्हीति** । तथा च ब्रह्मणः साध्यत्वाभावहेतुकोऽपि विधिविषयत्वाभावः सिद्ध इत्यर्थः ।

शङ्कते-**प्रपञ्चेति** ।

—१२ **स च फलमिति** । तथा च मोक्षरूपायाः प्रपञ्चनिवृत्तेः फलत्वात्फलभूतायास्तस्या न विषयत्वमित्यर्थः ।

**अस्य चेति** । प्रपञ्चनिवृत्तेर्विधिविषयत्वेन प्रपञ्चनिवृत्त्या विधिसिद्धिः । प्रपञ्चनिवृत्तेः फलत्वेन च विधिसिद्ध्युत्तरं प्रपञ्चनिवृत्तिसिद्धिरित्यन्योन्याश्रय इति भावः । एतेन निष्प्रपञ्चीकरणनियोगो दूषित इति बोध्यम् ।

—१५ अथ निष्प्रपञ्चीकरणविधिं प्रकारान्तरेण दूषयति-**अपि चेति** ।

—१६ **न किंचिदिति** । रज्जुज्ञानेनैव सर्पनिवृत्तिसिद्धौ सर्पनिवृत्तिविधिरप्रयोजक इति भावः ।

—१७ शङ्कते-**नियोगस्त्विति** ।

—१८ **स्ववाक्यात्** । प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वप्रतिपादकवाक्यात् ।

१५०-१ ननु प्रपञ्चस्य सत्यत्वमेवेति द्वितीयपक्ष एवाश्रीयते । तथा च तस्य ज्ञाननिवर्त्यत्वाभावेन तदर्थं विधिरावश्यक इति चेत्तत्राह-**प्रपञ्चस्येति** ।

—२ **नित्यतया** । प्रपञ्चनिवर्तकस्य ब्रह्मस्वरूपस्य नित्यतया ।

—४-६ **ब्रह्मस्वरूपव्यतिरिक्तः** । कृत्स्नप्रपञ्चनिवृत्तिविषयको विधिर्ब्रह्मस्वरूपव्यतिरिक्तश्चेदित्यर्थः । **आश्रयाभावादिति** । एतेन वक्तव्यतया प्राक् ( श्रीभाष्य-पृ. १४८-प. १८ ) निर्दिष्टेषु नियोगादिषु मध्ये प्रयोक्ता दूषितो भवति ।

—९ अथ करणमितिकर्तव्यतां च दूषयति-**किं चेति** । प्रपञ्चनिवृत्तिरूपं यद्भावनाकरणं तत्किंचित्कृत्वैव भावनां जनयेत् । अन्यथा करणत्वायोगात् । करणस्य व्यापारवत्त्वनियमात् । तथा च करणस्येतिकर्तव्यताऽवश्यं वाच्या । सा चात्र करणस्य प्रपञ्चनिवृत्तिरूपत्वेन न संभवतीत्यर्थः ।

—११ **अस्य** । प्रपञ्चनिवृत्तिरूपस्य करणस्य ।

—१२ **कार्यभेदभिन्नेति** । भावरूपेतिकर्तव्यता च क्वचित्करणशरीरं निष्पादयति । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागीययेतिकर्तव्यतया यागस्वरूपं निष्पाद्यते । क्वचिच्च करणात्कार्यनिष्पत्तिवेलायां प्राक्सिद्धस्वरूप एव

करणेऽनुग्रहं करोति । यथा चक्षुषा पश्यतीत्यत्र विषयेन्द्रियसंबन्धरूपा चक्षुष इतिकर्तव्यता दर्शनवेलायां चक्षुष्यनुग्रहं करोति । एवं कार्यभेदेन द्विविधापि भावरूपेतिकर्तव्यताऽत्र न संभवतीत्यर्थः ।

१५०–१४ **दृष्टार्थेति** । कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरस्य निष्पादिका भावरूपेतिकर्तव्यता दृष्टार्था नैवोपलभ्यत इत्यर्थः ।

—१६ **अनुग्राहकांशेति** । अनुग्राहकं यत्तत्कृत्स्नप्रपञ्चान्तर्गतमेवेत्यनुग्राहकांशसत्त्वे कृत्स्नप्रपञ्चनिवृत्तेर्वक्तुमशक्यत्वात् ।

—१७ शङ्कते–**ब्रह्मण इति** ।

—१९ अथाभावरूपेतिकर्तव्यतां दूषयति–**अभावरूपत्व इति** । अभावत्वात् । अप्रामाणिकत्वात् । अभावादिति पाठेऽप्ययमेवार्थः । एवं निष्प्रपञ्चीकरणविधिवादिनो मृषावादिनो मतं निरस्तम् ।

१५१–३ अथ ध्यानविधिवादिनो मृषावादिनो मतं खण्डयितुमादौ तद्दर्शयति–**अन्योऽप्याहे**त्यादिना **प्रामाण्यमुपपन्नमिति** (श्रीभाष्य-पृ. १६७ प. २) इत्यन्तेन ।

—५ **नियोगः** । विधिः ।

—१५ **ध्यानशरीरेति** । ध्यानस्य हि सशरीरत्वं ध्यानविषयद्वारैव । विषयीभूतं ब्रह्म च श्रुतावद्वितीयत्वेनोक्तम् । अद्वितीयत्वमेव च भेदमिथ्यात्वम् । अतो ध्यानशरीरानुप्रविष्टभेदनिषेधपर्यन्तं ध्यानविधेस्तात्पर्यमित्याशयः ।

—१९ **प्रत्यक्षादिभिरिति** । अस्य यद्यपीत्यादिः ।

—२० **भेदाभेदयोरिति** । अस्य तथापीत्यादिः । भेदप्रतीतेर्न सत्यत्वम् । अन्यथापि तस्याः सिद्धत्वात् । अतोऽनन्यथासिद्धशास्त्रावगतोऽभेद एव परमार्थ इति भावः ।

—२२ **तत्साक्षात्कारफलेनेति** । ब्रह्मध्यानविधिर्हि स्वफलीभूतब्रह्मज्ञानद्वाराऽविद्यानिवृत्तिं जनयति । तथा च ध्यानविधिवादिनो मते नियोगो ध्यानविधिः, नियोज्यस्याधिकारिणो विशेषणमविद्यानिवृत्तिरूपं फलम्, विषयो ध्यानमेव, तदेव कार्यनिष्पत्तौ करणम्, इतिकर्तव्यता शमादिः, प्रयोक्ता च ध्यातेति सर्वे नियोगादयो वक्तुं शक्यन्त इति भावः ।

१५२–२ **अनुपलब्धेरिति** । एतेन वाक्यार्थज्ञानमात्रान्मोक्ष इति परास्तम् ।

—४ अथ शाङ्करमतमाशङ्कते–**अथोच्येते**त्यादिना **समुदायेन सिध्यतीति** ( श्रीभाष्य. पृ. १५५ प. १५ ) इत्यन्तेन ।

—८–१० विपरीतफलदत्वमाह–**किं चेति** । **अवर्जनीयमिति** । ध्यानस्य धर्मरूपत्वादिति भावः ।

१५२-१२ **अपहृतिः** । संबन्धाभावः ।

—१४ **न च नियोगेति** । यथा प्रायश्चित्तविधेः पापनिवृत्तिरूपं फलं तथा ब्रह्मध्यानविधेः शरीरनिवृत्तिरूपं फलमित्याशयः ।

१५३-१ **अन्यत्र धर्मादिति** । कृताकृतं प्रारब्धापरिसमाप्तं वर्तमानमित्यर्थः । अत्र पुरुषार्थस्य धर्माधर्मसंबन्धराहित्यमुक्तम् । संबन्धश्च साध्यसाधनभाव इति मोक्षस्य तदसाध्यत्वं सिद्धमिति भावः ।

—४ आत्मस्वरूपस्य मोक्षस्य विधिसाध्यत्वं प्रकारान्तरेण दूषयति-**अपि चेति** ।

—१० अथ क्रियाविषयत्वाभावात्संस्कारविषयत्वाभाव इति दर्शयति-**नित्यनिर्विकारेति** । यत्क्रियाविषयं तत्सविकारमिति व्याप्तेर्निर्विकारत्वेन क्रियाऽविषयत्वम् । यदा दर्पणो हस्ततलादिषु निर्घृष्यते तदा दर्पणाश्रया क्रिया । यदा दर्पणे हस्ततलं निर्घृष्यते तदा हस्ततलाश्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पण उदाहरणम् ।

—१२ नन्वात्मनोऽविकारत्वेपि देहगतस्नानक्रियया तस्य संस्कारो दृश्यत इति चेत्तत्राह-**न चेति** ।

—१३ **अविद्यागृहीतः** । अविद्यया कल्पितः । **तत्संगतः** । देहसंगतः ।

—१४ नन्वात्मनः फलभोक्तृत्वात्स एव संस्कार्य इति चेत्तत्राह-**तत्फलेति** । **तस्यैव** । अविद्यागृहीतस्यैव ।

**तत्साक्षित्वात्** । अहंकारसाक्षित्वात् । न हि यो यस्य साक्षी स तद्रूपो भवति ।

—१८ **आत्मेन्द्रियेति** । आत्मा शरीरम् ।

—२० **साक्षी** । अहंकारे व्याप्रियमाणे स्वयं साक्षिमात्रतयावस्थानान्न भोक्तेति भावः । **केवलः** । फलसंबन्धरहितः । **निर्गुणः** । अगुणवश्यः । अत एव न तस्य भोक्तृत्वमित्याशयः ।

—२२ **पर्यगात्** । अमन्यत । **शुक्रम्** । अविद्यारहितम् । **अकायम्** । अशरीरम् । **अस्नाविरम्** । स्नावा शिरा यस्मिन्न विद्यत इत्यस्नाविरम् ।

१५४-७ **मृदितकषायाय** । नष्टरागद्वेषादिदोषाय ।

—१० ननु प्रतिबन्धनिवृत्तेः साध्यत्वे तस्या उत्पन्नत्वेन कदाचिन्नाशः स्यादित्यत आह-**तन्निवृत्तिरिति** । नाशस्योत्पत्तिव्यापकत्वं भावविषयकमेवेत्याशयः ।

—१३ **प्रतिरुणद्धीति** । श्रुतिस्वारस्येन बिलम्बासहत्वाद्ब्रह्मज्ञानसमकालमेव मोक्षो न तु ज्ञानानन्तरभाविध्यानोत्तरमिति भावः ।

१५४-१३ ननु विधिशेषतया ब्रह्मणः सिद्धिरिति विधेरावश्यकत्वमिति चेत्तत्राह-न च विदीति । वेदनं सामान्यज्ञानम् । ध्यानं तु ज्ञानविशेषः ।

—१५ अन्यदेव तद्विदितादिति । विदितात् । ज्ञेयात् । अविदितात् । ज्ञातुः । अनेन तत्केन विजानीयादित्यनेन च विदिक्रियाकर्मत्वं निषिद्धम् ।

—१६ नेदं यदिदमुपासत इति । अनेन ध्यानक्रियाकर्मत्वं निषिद्धम् ।

१५५-५ न शरीरपातादूर्ध्वमेवेति । किं तु जीवतोऽपि ज्ञानसमकालमेव मुक्तिः । यथा दग्धः पटः पटत्वेनावभासमानोपि निवृत्त एव तद्वदेवायं बन्ध इत्याशयः ।

—१४ तत्परेण । सिद्धरूपाद्वितीयब्रह्मपरेण ।

—१६ अथैतच्छांकरमतं ध्यानविधिवादी दूषयति-तदयुक्तमिति ।

—१७ अपरोक्षत्वात् । प्रत्यक्षत्वात् ।

—२१ वस्तुयाथात्म्येति । वस्तुयाथात्म्यस्य यथार्थवस्तुनो यदपरोक्षं प्रत्यक्षज्ञानं तज्जनकीभूता या प्रवृत्तिः साप्तोपदेशाद्भवति । भयनिवृत्तिस्तु प्रत्यक्षज्ञानादेवेत्याशयः ।

१५६-३ अनिन्द्रियत्वात् । इन्द्रियभिन्नत्वात् । अनिन्द्रियस्याप्यालोकस्य प्रत्यक्षज्ञानजनकत्वं त्विन्द्रियानुग्रहद्वारेवेति भावः ।

—४ अनभिसंहितेति । फलानिच्छया कृतेन कर्मणा नष्टा रागादिदोषा यस्य तस्येत्यर्थः । *यथाऽव्यवहितवस्तुग्राहकमपीन्द्रियं योगबलेन व्यवहितस्यापि वस्तुनो ग्राहकं तथा* प्रत्यक्षज्ञानाजनकमपि वाक्यमुक्तविशेषणविशिष्टपुरुषस्य प्रत्यक्षज्ञानजनकं भवतीति न मन्तव्यमित्यर्थः ।

—६-८ तत्र हेतुमाह-निवृत्तेति । स्वविषयेति । स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः । शब्दसाध्यं ज्ञानमप्रत्यक्षमेवेति शब्दः स्वसाध्यमप्रत्यक्षज्ञानं नातिक्रामतीति फलितम् । तदयोगात् । वाक्यस्य प्रत्यक्षज्ञानजनकत्वायोगात् ।

—९ अथ 'वाक्यार्थावगतिहेतुत्वात्तेषाम्' इति प्रागुक्तं ( श्रीभाष्य-पृ.१५५ प. २ ) खण्डयति-न च ध्यानस्येति ।

—११ भिन्नविषयत्वमिति । वाक्यार्थज्ञानं हि द्विविधम् । ध्यानात्पूर्वभावि, ध्यानानन्तरभावि च । तयोश्च नैकविषयत्वम् । ध्यानस्य प्राथमिकज्ञानस्य चैकविषयत्वम् । तथा च ध्यानजन्यस्य द्वितीयज्ञानस्य न ध्यानकरणत्वमिति नान्योन्याश्रय इत्याशयः ।

तथा सतीति । भिन्नविषयत्वे हि ध्यानानन्तरभाविवाक्यार्थज्ञाननिरूपितकारणत्वं ध्यानस्य न स्यादिति भावः ।

—१३ ननु ध्यानस्य वाक्यार्थज्ञानहेतुत्वेऽपि न वाक्यार्थज्ञानजन्यत्वमिति वाक्यार्थज्ञानानपेक्षणान्नान्योन्याश्रय इति चेत्तत्राह-ज्ञातार्थेति ।

१५६—१४ हेत्वन्तरेति । ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादित्याशयः ।

—१५ न चेति । ध्यानात्पूर्वभावि ज्ञानं भेदस्यानिवर्तकं सत्यज्ञानादिवाक्यजन्यम्, ध्यानानन्तरभावि ज्ञानं तु भेदनिवर्तकं तत्त्वमस्यादिवाक्यजन्यमिति नान्योन्याश्रय इति न युक्तमित्यर्थः ।

—१८ तदेवेति । उभयोर्ज्ञानयोरेकविषयत्वे तयोरेकस्य भेदनिवर्तकत्वमपरस्य नेति वक्तुमशक्यमिति बोध्यम् ।

१५७–२ ध्यात्रादीति । आदिना शमादिसंग्रहः ।

—५ अथ 'न शरीरपातात्' इत्यादिना प्रागुक्तां ( श्रीभाष्य-पृ. १५५ प.५) जीवन्मुक्तिं खण्डयति–यत इति ।

—९ अथेति । सशरीरत्वप्रतिभासनिवृत्तिर्जीवन्मुक्तिरित्याशयः । सशरीरत्वं सशरीरत्वप्रतिभासः ।

—१४ अथेति । शरीरसत्यत्वप्रतिभासनिवृत्तिर्जीवन्मुक्तिरित्याशयः । द्विचन्द्रज्ञानवदिति । यथा द्विचन्द्रज्ञानबाधक एकश्चन्द्र इति सत्यज्ञाने सत्यपि द्विचन्द्रज्ञानं चक्षुर्दोषसंबन्धाद्भवति तथा सशरीरत्वज्ञानबाधकेऽशरीर आत्मेति सत्यज्ञाने सत्यप्यविद्याकर्मादिदोषसंबन्धात्सशरीरत्वप्रतिभासो यस्य भवति स जीवन्मुक्तः । स प्रतिभासोऽपि न यस्य भवति स विदेहमुक्त इत्याशयः ।

—१५ सकलेति । सशरीरत्वप्रतिभासस्तत्कारणीभूतोऽविद्याकर्मादिदोषश्च सकलवस्त्वन्तर्गत एवेति तस्याप्यात्मैक्यज्ञानेन बाधितत्वात्तदनुवृत्तिर्न युज्यत इति भावः ।

—१६ कर्मादीति । आदिशब्देन वासनासंग्रहः । तेनैव । बाधकीभूतेनात्मैक्यज्ञानेनैव ।

१५८–४–७ वेदानिति । वेदबोधितत्रिवर्गसाधनीभूतकर्माणि । इमं लोकममुं च लोकं परित्यज्यात्मानमन्विच्छेदुपासीत । 'आत्मनि बुद्धे ज्ञाते सति तदेव ज्ञानं क्षेमं मोक्षं प्रापयति' इति यदौडुलोमिनोक्तं तच्छास्त्रैर्विप्रतिषिद्धं विशेषतः प्रतिषिद्धम् । शास्त्रेषु हि वाक्यार्थज्ञानोत्तरं ध्यानविधिर्बोध्यते । यावदायुषमिति मरणपर्यन्तं ध्यानानुवृत्तिश्च प्रतिपाद्यते । यावन्न विमोक्ष्य इति शरीरपातावधिश्च मोक्षस्य क्रियते । तयोर्ध्वमायन्नमृतत्वमेतीति नाडीविशेषनिष्क्रमणं च मोक्षाङ्गत्वेन कथ्यते । अर्चिरादिमार्गेण गतिश्च मोक्षात्पूर्वं श्रूयते । औडुलोमिमते दोषान्तरमाह–बुद्धे चेदिति । न दुःखमिति । न हि ज्ञानिनां मूर्धाभिषिक्तोऽपि क्षुधादुःखमेव तावत्क्षणमात्रं सोढुं प्रभवतीत्याशयः । तथा च प्रत्यक्षविरोधः । एतेन परमौडुलोम्युक्तमन्यदपि व्याख्यातं निरस्तमित्यर्थः ।

१५८–१० तस्मादिति । ब्रह्मणो यत्प्रत्यक्षज्ञानं तदेव फलं यस्य तादृशेन ध्यानविधिनैव बन्धो निवर्तेत इत्यर्थः ।

—११ प्रतिबन्धेति । ज्ञानान्मोक्ष इति वदतस्तवापि मोक्षस्य नित्यत्वमिष्टमेवेति यथा प्रतिबन्धनिवृत्तिरेव ज्ञानसाध्या तथैव ममापि प्रतिबन्धनिवृत्तिरेव ध्यानसाध्येति भावः ।

—१५ कथं वेति । प्रतिबन्द्या परिहारोऽयम् ।

—१६ शङ्कते–मन इति ।

—१७ पुनः शङ्कते–मम त्विति ।

—१९ केनावगम्यत इति । कथमेतज्ज्ञायत इत्यर्थः ।

१५९–१ पुनः शङ्कते–विविदिषन्तीति ।

—१० पुनः शङ्कते–नेदमिति ।

—११ अत्र । नेदं यदिदमिति श्रुतौ ।

—१३ वाचानभ्युदितम् । वागविषयम् । अभ्युद्यते । प्रयुज्यते ।

—१८ भेदाभेदवादिभास्करमतं दर्शयति–यदपीति ।

—२१ भास्करमतमुपपादयति–अथोच्येतेत्यादिनोत्पद्यन्त इति (श्रीभाष्य–पृ. १६३ प.१६) इत्यन्तेन ।

—२२ कारणात्मनेति । यथा मृद्रूपेणाभेदो घटादिरूपेण भेदः । यथा च घटघटत्वयोर्व्यक्तिजात्योर्मध्ये जातिरूपेणाभेदो व्यक्तिरूपेण भेद इति भेदाभेदावुभावपि प्रतीयेते इत्यर्थः । भेदाभेदयोर्विरोधस्तु न । यथा छायातपयोर्न युगपदेकत्र स्थितिस्तथात्र भेदाभेदयोर्युगपदेकत्र न स्थितिरिति वक्तुमशक्यत्वात् ।

१६०–२–३ अविरोधेनोपलब्धिमाह–प्रत्युतेति । द्विरूपम् । कारणरूपं कार्यरूपं च । तथा जातिरूपं व्यक्तिरूपं च । खण्डादयो गोव्यक्तिविशेषाः ।

—४ भेदाभेदयोर्मध्ये नाश्यनाशकरूपो वस्तुविरोधोऽपि नास्तीत्याह–न च तृणादेरिति । यथाग्निना तृणस्य नाशो भवति तथात्राभेदेन यदि भेदस्य नाशः स्यात्तर्हि वस्तुविरोधः स्यात् । तथा चात्र भेदस्य नाशादर्शनेन न वस्तुविरोध इति भावः ।

—५ मृत्सुवर्णेति । यदा वस्तु घटरूपेणावस्थितं तदापि तन्मृद्रूपेणावस्थितमेव । एवमेव च यदा वस्तु मुकुटरूपेणावस्थितं तदा तत्सुवर्णरूपेणावस्थितमेवेति न भेदोपमर्द इत्याशयः ।

१६०–७–८ अभिन्नस्य । जातेः । भिन्नस्य । व्यक्तेः । जातेरभेद एवाकारो व्यक्तेश्च भेद एवाकारः । तथा च जातिव्यक्त्योरभेदो न संभवतीति सर्वत्र भेदाभेदो दुर्वच इति शङ्काशयः । ईश्वराज्ञेति । तथा च तयोर्जातिव्यक्त्योस्त्वदुक्तैकैकाकारत्वे प्रमाणं नास्तीति भावः ।

—८–९ शङ्कते–प्रतीतत्वादिति । द्वैरूप्यमपि । तवानिष्टं द्वैरूप्यमपि ।

—११ विवेक्तुम् । भेदेन प्रतिपत्तुम् ।

—१२ अपि त्विति । एकमेव वस्तु जात्यात्मनाऽभिन्नं व्यक्त्यात्मना च भिन्नं प्रतीयत इत्यर्थः ।

शङ्कते–अनुवृत्तीति । अनुवृत्तिव्यावृत्तिभ्यां कारणकार्ययोर्जातिव्यक्त्योश्च भेद इत्याशयः ।

—१४ विविक्ताकारः । भिन्नाकारः ।

—१६ आकारभेदः । अंशभेदः ।

—१६–१६१–१ यथेति । कार्ये विशेषे चेति पाठः । विशेषो व्यक्तिः । संप्रतिपन्नं ज्ञातमैक्यं यस्यैवंभूते कार्ये एवंभूतायां व्यक्तौ चैकत्वबुद्धिर्यथा भवति तथैव कारणविशिष्टेपि कार्ये जातिविशिष्टायामपि व्यक्तावेकत्वबुद्धिर्भवतीत्यर्थः । अविशिष्टा । तुल्या ।

१६१–५–६ शङ्कते–अथेति । आत्मशरीरयोरिति । आत्मशरीरयोः सद्‌द्रव्यात्मनैकत्वेऽप्यात्मरूपेण शरीररूपेण वा तयोरैक्यस्याप्रामाणिकत्वात्तयोर्भिन्नाभिन्नत्वं नेष्टमित्याशयः ।

—१४ अत एव । भेदाभेदयोरविरुद्धत्वादेव ।

—१६ तत्रेति । जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकाविति यादवमतमनेन निरस्तम् । अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकाविति तु भास्करयादवयोरुभयोरपि संमतम् ।

—१७ तत्त्वमसीति । तत्त्वमसीत्यादिश्रुतिभिर्ब्रह्म दाशा इत्यादिब्रह्मसूक्तेऽभेदश्रवणाच्च नित्य इत्यादिश्रुतिभिर्भेदश्रवणाच्च जीवब्रह्मणोर्भेदाभेदाववश्याश्रयणीयावित्यन्वयः ।

—२० ब्रह्मेति । दाशाः कैवर्ताः । दासा भृत्याः । कितवा द्यूतकृतः । एते सर्वे ब्रह्मैवेत्यर्थः ।

१६२–२ क्रियेति । क्रियागुणाः संसारहेतुभूता गुणाः । आत्मगुणा मोक्षहेतुभूता गुणाः ।

—१५ तदानीम् । मुक्तिदशायाम् ।

—१७ सह ब्रह्मणेति । सहशब्दो भोक्तृसाहित्यं दर्शयतीति शङ्काभिप्रायः ।

१६२-१९-२० **जगदिति**। मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिव्यापारवर्जम्। परमात्मप्रकरणे 'यतो वा' ( तै. ३।१।१ ) इत्यादिश्रुतौ जगद्व्यापारप्रतिपादनात्। यदि स व्यापारो मुक्तस्यापि स्यात्तर्हि प्रकरणविरोधः । ब्रह्मलक्षणस्य मुक्तेऽतिव्याप्तिश्च। किं च जगद्व्यापारप्रसङ्गे मुक्तस्य संनिधानमपि नास्तीति सूत्रार्थः। **भोगेति**। 'सोऽश्नुते' ( तै. २।१।१ ) इति श्रुतौ ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाल्लिङ्गान्मुक्तस्यैश्वर्यं जगद्व्यापारवर्जमेवेति सूत्रार्थः।

—२३ **सह ब्रह्मेति**। सहशब्दो भोग्यसाहित्यं दर्शयति न तु भोक्तृसाहित्यमिति भावः।

—२४ **अन्यथा**। ब्रह्मणा सह जीवः सर्वान्कामानश्नुत इति व्याख्याने। भोग्यसाहित्यं गृहीत्वा सर्वैः कामैः सह ब्रह्माश्नुत इति व्याख्याने ब्रह्मणः प्राधान्यमेव। ब्रह्मणा सह सर्वान्कामानिति व्याख्याने यद्यप्यप्राधान्यं ब्रह्मणस्तथापि तस्य भोग्यभूतस्वगुणापेक्षत्वेन तादृशाप्राधान्यं न दोषायेति बोध्यम्।

१६३-१ जगद्व्यापारमिति सूत्रस्य स्वाभिमतमर्थमाह—**जगदिति**। 'जीवेश्वरयोर्भेदे मुक्तस्यैश्वर्यं जगद्व्यापारवर्जं स्यात्प्रकरणादसंनिहितत्वाच्च। अतस्तयोरभेद एव स्वीकार्यः' इति सूत्रार्थ इति भावः।

—२ **संपद्येति**। अयं प्रत्यगात्मार्चिरादिमार्गेण परं ज्योतिरुपसंपद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावरूपो नापूर्वाकारोत्पत्तिरूपः। स्वेनशब्दात्। 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा. ८।३।४ ) इति श्रुतौ स्वेन रूपेणेति विशेषणोपादानात्। आगन्तुकदेहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यादिति सूत्रार्थः। जीवब्रह्मणोर्भेदे ह्येतत्सूत्रविरोधः स्पष्ट एव।

—५ **परस्परं च**। जीवानां परस्परभेदश्च।

—१० **स्वसंबद्ध इति**। कर्मसंबद्धे जीवे बुद्ध्याद्युपाधिरुत्पद्यते। तादृशोपाधियुक्ताज्जीवात्कर्मोत्पद्यत इत्यर्थः।

—१३ एतद्भास्करमतस्य मायावादिमतापेक्षया विशेषमाह—**उपाधीनामिति**।

—१५ **अनवस्थानादिति**। उपाधिभूतेऽचिदंशे भेदस्यौपाधिकत्व उपाधेरुपाधिः कल्पनीयः। पुनस्तस्याप्यपर इत्यनवस्था स्फुटैव। अतोऽचिदंशे भेदाभेदौ द्वावपि स्वाभाविकावेवाश्रयणीयौ।

—१७ एतद्भेदाभेदवादिभास्करमतं ध्याननियोगवादी दूषयति—**अत्रोच्यत इति**।

१६४-१ **विलक्षणत्वम्** । अन्यत्वम् ।

—२-३ **तथाभावेति** । तथा च प्रसिद्धयोर्भेदाभेदयोरेकत्र विरोध एवेति सर्वत्र भेदाभेदयोः संभवं वदन्नुन्मत्त एवेत्यर्थः ।

—४ शङ्कते-**कारणात्मनेति** ।

—६ **एकस्मिन्नाकारे** । एकस्मिन्पदार्थे ।

—८ **पूर्वस्मिन्कल्प इति** । तत्रापि किं जातिव्यक्त्योर्भेद उताभेदोथ वोभयम् । प्रथम आह-**व्यक्तिगत इति** । **नैकस्येति** । एकस्य पदार्थस्य भेदाभेदरूपता नेत्यर्थः ।

—९-१० द्वितीयं शङ्कते-**जातिरिति** । **आकारभेदात्** । वस्तुभेदात् ।

—१०-११ तृतीय आह-**एकस्मिन्निति** । **विलक्षणत्वम्** । अन्यत्वम् । **तद्विपर्ययः** । अनन्यत्वम् ।

—११ **द्वितीये त्विति** । आकारद्वयविशिष्टैकवस्तुनिष्ठौ भेदाभेदाविति पक्षेऽन्योन्यभिन्नं जातिव्यक्तिरूपमाकारद्वयं तस्माद्भिन्नत्वेनानुपलब्धं तदाश्रयभूतं च तृतीयं वस्त्वेतद्वस्तुत्रितयाभ्युपगमेऽपि भेद एवोपपादितः स्यान्नाभेदः । अप्रतिपन्नमित्यनेन तृतीयस्य वस्तुनोऽनुपलब्धिरिति दोषः सूचितः ।

—१४-५ शङ्कते-**आकारेति** । **भिन्नाभिन्नत्वम्** । भेदाभेदौ । यद्यप्येकस्मिन्वस्तुनि भेदाभेदौ विरुद्धौ तथापि तादृशवस्तुनिष्ठाकारद्वयेन तयोरविरोध उपपादनीय इत्यर्थः ।

—१५-६ तत्राकारद्वयमाश्रयापेक्षया भिन्नमभिन्नं भिन्नाभिन्नं वेति विकल्प्याद्य आह-**स्वस्मादिति** । स्वशब्दश्रयमाश्रयभूतवस्तुप्रतिपादकम् । **कथं भवेदिति** । न ह्यग्न्यपेक्षया भिन्नमग्निनिष्ठं पैङ्गल्यमौज्वल्यं चेत्याकारद्वयमग्नौ शीतोष्णत्वरूपविरुद्धधर्मोपपादकं दृश्यत इति भावः ।

—१६ द्वितीय आह-**अविलक्षणमिति** । आश्रयाद्भिन्नमप्याकारद्वयमाश्रयगतभेदाभेदरूपविरुद्धधर्मद्वयोपपादकं न भवति, किमुताश्रयादभिन्नम् । एकस्मादाश्रयादभिन्न आकारे द्वित्वस्यैव वक्तुमशक्यत्वादिति भावः ।

—१७ तृतीय आह-**आकारद्वयेति** । आकारद्वयं तदाश्रयश्चेत्यनयोर्मध्ये यदि भेदाभेदौ तदा तयोर्विरुद्धयोरेकत्रासंभवात्तदुपपादकमन्यदाकारद्वयं वाच्यम् । तस्याप्युक्तरीत्या स्वाश्रयाद्भेदाभेदाविति तादृशभेदाभेदोपपादकमपरमाकारद्वयमित्यनवस्थेति भावः ।

—१८ ननु विरुद्धावपि भेदाभेदावुपपादकाभावेऽप्येकत्र स्वीकार्यौ । जातिव्यक्त्योरैक्यस्य दृष्टत्वात् । न हि दृष्टेऽनुपपन्नं नामेति न्यायादिति चेत्तत्राह **-न चेति** । संप्रतिपन्नं ज्ञातमैक्यं यस्या एवंभूताया व्यक्तेः प्रतीतिर्यथैकाकारा भवति तथा जातिविशिष्टव्यक्तेर्न भवतीत्याशयः ।

१६५–१ अत एव। विरुद्धयोर्भेदाभेदयोरेकत्रासंभवादेव।

—४ एवम्। जीवब्रह्मणोः स्वाभाविकाभेदस्वीकारे।

—८ उपाधिब्रह्मव्यतिरिक्तम्। चिदचिद्विशिष्टब्रह्मव्यतिरिक्तम्।

—११–२ छित्त्वा। खण्डयित्वा। भित्त्वा। प्रदेशभेदेन।

—१४ सः। जीवः।

—१६ अनादिरिति। अनादित्वानङ्गीकारे ह्युपाधिसंबन्धाज्जीवत्वं जीवत्वाच्चोपाधिसंबन्ध इत्यन्योन्याश्रयः स्यात्।

—१८ दूषयति–इहायमिति।

१६६–२ उतोपाधिसंयुक्तमिति। न चास्मिंस्तृतीये पक्षे चतुर्थपञ्चमयोश्च जीवस्याणुत्वाभावात्कथमेषां पक्षाणामुत्थानम्। शङ्काकृता 'स चाणुपरिमाणः' इत्युक्तत्वादिति वाच्यम्। अणुपरिमाण इत्यस्य सूक्ष्म इत्यर्थाभिप्रायेणैतत्पक्षोत्थानात्।

—८ प्रदेशविशेषभेदादिति। यथा घटे चलति तत्स्थाकाशो न चलति किं तु प्रतिक्षणमन्य एवाकाशस्तत्र प्रविशति तद्वत्।

—९–११ शङ्कते–निरंशस्येति। पूर्वोक्त एव दोषः। क्षणे क्षणे बन्धमोक्षरूपः।

—१६ एक एव जीवः स्यादिति। तथा च देवदत्तेन कृतस्य कर्मणोनुसंधानं यज्ञदत्तस्य स्यात्।

—१६–७ तुरीये। चतुर्थे। परित्यक्तं स्यादिति। तथा चोपाध्युपहितं ब्रह्म जीव इति स्वोक्तिविरोधः।

—१८ चरमे। पञ्चमे पक्षे। चार्वाकपक्षः। जडस्यात्मत्वमिति तत्पक्षः।

१६७–३ एतद्ध्याननियोगवादिमतं मीमांसकः पूर्वपक्षी दूषयति–तदपीति।

ध्यानेति। अपिर्निष्प्रपञ्चीकरणविधिशेषत्वसमुच्चायकः। अर्थसत्यत्व इति। तथा च प्रतिपाद्यार्थस्य सिद्धत्वेनापूर्वार्थबोधकत्वाभावात्प्रामाण्यं न स्यादित्याशयः।

—५ एकवाक्यताम्। महावाक्यैकत्वम्।

—८ अनवबोधकत्वमेवेति। दुःखसाध्ये श्रवणादौ हि प्रवृत्तिरनेन भाव्या। तदप्रयोजकत्वादनवबोधकत्वमेवेत्याशयः।

—१२ स्वरूपेति। ब्रह्मस्वरूपतद्विशेषप्रतिपादकानीदं सर्वमित्यादिवाक्यानि ध्यानविधिनैकवाक्यतामापन्नानि ध्यानविषयीभूतब्रह्मरूपार्थसद्भावे प्रमाणमिति न वाच्यमिति संबन्धः।

१६७–१५ **असत्येनापीति**। तथा च ध्यानविषयीभूतार्थप्रतिपादकवाक्यानां ध्यानविधिना सहैकवाक्यत्वेऽपि नावश्यं सत्यार्थबोधकत्वमिति न प्रामाण्यम्। फलीभूतार्थप्रतिपादकवाक्यानां तु विध्येकवाक्यत्वेन प्रामाण्यमेव। फलस्यासत्यत्वे विधेरसंभवात्। तथा च प्रथमसूत्रे (विवृति–पृ. १०७ प. ३२) इदं सर्वमित्यादिवाक्यानां फलबोधकत्वेन प्रामाण्यमुक्तम्।

—१७–८ **विधुरत्वात्**। रहितत्वात्। **स्वरूपसमर्पणमात्रेति**। मात्रशब्देन स्वरूपसत्यत्वव्यावृत्तिः। **बालातुराद्युपच्छन्दनेति**। उपच्छन्दनं सान्त्वनम्। यथा बालस्य केनचिदपराधे कृते येनापराधः कृतस्तस्य गृहमातपे बध्नामीत्युक्त्या बालः संतोषितो भवति न तु तदर्थसत्यत्वमपेक्षते तद्वदिति भावः।

१६८–४ सिद्धान्ती परिहरति–**तत्रेति**।

—५ **परमेति**। परमात्मन आनन्दस्वरूपत्वेन पुरुषैरर्थ्यमानत्वात्पुरुषार्थत्वम्। अनवधिकातिशयत्वाच्च तस्य परमत्वमित्याशयः।

—१० **कौलेयकः**। श्वा तदुपजीवी वा।

—१५ **स्वस्य चेति**। ब्रह्म स्वेन परेण वाप्यनुभूयमानं निरतिशयानन्दस्वरूपमेवेति तत्प्रतिपादनपरवाक्यस्यैव साक्षात्पुरुषार्थान्वयः। प्रवृत्तिनिवृत्तिपरवाक्यस्य तु तत्साध्यफलसंबन्धात्पुरुषार्थान्वय इति भावः।

१६९–६ **वात्सल्येति**। दोषेपि गुणत्वबुद्धिर्वात्सल्यम्। यथा मातुर्बालकविषये। सौशील्यं सुस्वभावत्वम्। स्वगृह इव सङ्ग्रामे प्रवेशनसामर्थ्यं शौर्यम्। अभीरुत्वमिति यावत्। वीर्यमश्रान्तिः॥ ४॥

१७०–८ **समस्तेति**। समस्ताः सकला हेयास्त्याज्या ये जरामरणादयो धर्मास्तत्प्रत्यनीकास्तद्विरुद्धा येऽपहतपाप्मत्वादयः कल्याणकारका गुणास्तदाश्रयभूतम्।

—१० **आनुमानिकेति**। विचित्रसंनिवेशं सुखदुःखमोहरूपं त्रिगुणात्मकं जगत्स्वसदृशकारणविशेषारब्धं कार्यत्वाद्घटवदित्यनुमानसिद्धं त्रिगुणात्मकं प्रधानं जगत्कारणप्रतिपादकसदेवेत्यादिवाक्यप्रतिपाद्यं न भवतीत्यर्थः। अस्मिन्नधिकरणे जगत्कारणप्रतिपादकसदेवेत्यादिवाक्यप्रतिपाद्यं विषयः। तत्किं प्रधानं ब्रह्म वेति संशयः। प्रधानमिति पूर्वपक्षः। ब्रह्मेति सिद्धान्तः।

—१८ **इदंशब्दवाच्यस्येति**। इदंशब्दस्य हि परागर्थ एव स्वरसतः प्रवृत्तिर्न तु प्रत्यग्रूपे चेतने। परस्मै भासमानत्वं पराक्त्वम्। स्वस्मै भासमानत्वं प्रत्यक्त्वम्। **चेतनभोग्यभूतस्येति**। सदेव सोम्येति श्रुताविदंशब्देन कार्यभूतं वस्तूद्दिश्य तस्य कारणावस्था प्रतिपाद्यते। कार्यत्वं च भोग्यस्यैवाचेतनस्य न तु भोक्तुश्चेतनस्य। तस्य नित्यत्वात्।

१७१-३ **गुणसाम्यावस्थमिति** । न च कार्ये जगति गुणवैषम्यदर्शनात्कारणेपि गुणवैषम्यं स्यादिति वाच्यम् । यद्यद्विषमावस्थं तत्तत्कार्यमिति नियमदर्शनेन जगत्कारणस्य विषमावस्थत्वे तस्य कार्यत्वप्रसङ्गेन तस्य कारणान्तरापेक्षयाऽनवस्थानात्प्रधाने गुणसाम्यस्यैवाभ्युपेयत्वात् । एकमेवाद्वितीयमिति श्रुतावद्वितीयशब्देन गुणवैषम्यव्यावृत्तिः । एकमेवेत्यनेन नामरूपविभागव्यावृत्तिरिति पूर्वपक्षी मन्यते ।

—५ **तत एवेति** । अचेतनस्य प्रधानस्य जगत्कारणत्वादेवेत्यर्थः । चेतनस्य तथात्वे तु चेतनाचेतनयोः कारणकार्ययोर्विजातीयत्वेनानन्यत्वं न स्यात् ।

—६ **तथा सति** । कार्यकारणयोरनन्यत्वे सति ।

—८ **वैरूप्यमिति** । चेतनस्य कारणत्वे दृष्टान्ते कारणस्याचेतनत्वं दार्ष्टान्तिके तु चेतनत्वमिति वैरूप्यम् । यद्वा दृष्टान्ते कार्यकारणयोः सालक्षण्यं दार्ष्टान्तिके तु वैलक्षण्यमिति वैरूप्यम् ।

—१० **अनुमानवेषम्** । अनुमानाकारम् । तथा च प्रयोगः । इदं जगत्स्वकारणैकज्ञानेन ज्ञातं भवितुमर्हति । कार्यत्वात् । एकमृत्पिण्डाद्यारब्धघटादिवदिति । यद्यपि श्रुतौ कार्यत्वहेतुर्नोक्तस्तथाप्याक्षेपाल्लभ्यत इत्याशयः ।

—१३-४ **सच्छब्देति** । सच्छब्दवाच्यं यज्जगत्कारणं तत्संबन्धी य ईक्षणरूपो व्यापारविशेषस्तत्प्रतिपादकस्येत्यर्थः ।

१७२-१० **अत्र सृष्टीति** । अनेन ग्रन्थेनेक्षत्यधिकरणस्य नविलक्षणत्वादित्यधिकरणाद्भेदः प्रदर्श्यते । अत्र केवलमीक्षत्यादिहेतुभिर्वाक्यार्थनिश्चयः क्रियते । कारणस्य स्वविलक्षणकार्योत्पादनसामर्थ्यं नास्तीत्येवंरूपो यो वस्तुविरोधस्तत्परिहारस्तत्र क्रियत इति भावः । वस्तुविरोधोऽर्थसामर्थ्यविरोधः ।

—१३ **हेत्वनुपादानादिति** । हेतुराक्षेपलब्ध इत्युक्तिस्तु न युक्तिसहा । अवयववाक्यमध्ये हेतुवाक्यस्य मुख्यत्वात् । अमुख्येन निराकाङ्क्षेण मुख्याक्षेपस्यासंभवात् । यथा राजा गच्छतीत्युक्ते सपरिकर इति लभ्यते । न तु भृत्यो गच्छतीत्युक्ते सराजक इति तद्वत् ।

—१३-५ **येनाश्रुतमिति** । अनन्यथासिद्धेन हि स्वोपपादकमन्यदाक्षिप्यते । यथा धूमेन वह्निः । न तु वह्निना धूमः । वह्नेर्धूमं विनापि सिद्ध्येनान्यथासिद्धत्वात् । अत्र च दृष्टान्तवाक्यमन्यथासिद्धमिति न तेन हेतुवाक्यमाक्षिप्यते । न हि व्याप्तिप्रदर्शनायैव दृष्टान्तोपन्यास इत्यस्ति नियमः । हेतुवाक्यं विनापि संभवप्रदर्शनार्थत्वेन दृष्टान्तवाक्योपादानस्योचितत्वात् । **सर्वात्मना** । सर्वप्रकारेण । यथैकस्मिन्गवि ज्ञाते तदितरेषां गवां ज्ञानं सर्वेषां गवामाकारस्यैक्याद्गोत्वरूपधर्मस्यैकस्य सर्वत्र सत्त्वाच्च गवितरभेदस्य सर्वत्र

सत्त्वाच्च भवति तद्वदत्र केनापि प्रकारेण वक्तुं न शक्यते । सर्वेषां घटपटादीनामाकारैक्यस्याभावादेकधर्मान्वयस्याभावाद्घटेतरभेदादेरेकैकस्य सर्वत्रासत्त्वाच्च ॥ ५ ॥

१७२-१७ **चेतनगतम्** । चेतनानुगुणम् ।

—१७-८ **प्रधानगतम्** । अचेतनप्रधानानुगुणम् । **गौणमीक्षणमिति** । तदैक्षतेति श्रुतेस्तत्प्रधानं सृष्टिनियतपूर्वावस्थायुक्तं बभूवेत्यर्थ इत्याशयः ।

१७३-१ **वर्षणेति** । वृष्ट्या बीजमानन्दितं बभूवेत्यर्थः । कार्योन्मुखं बभूवेति तात्पर्यम् ।

—८ **चेतनाचेतनेति** । ऐतदात्म्यमिति श्रुतौ सर्वशब्दार्थस्य विना प्रमाणं संकोचे मानाभावेन सर्वशब्देन चेतनाचेतनात्मकं सर्वं जगदुद्दिश्य तस्यैतदात्म्यमित्यनेन सदात्मकत्वं विधीयते । यदि सच्छब्देन प्रधानं गृह्येत तदा चेतनस्य जीववर्गस्य सदात्मकत्वं न संभवति ।

—१०-११ **अतस्तेज इति** । अनेन तत्तेज ऐक्षतेत्यादिगौणेक्षणसाहचर्यात्प्रधानगतं गौणमीक्षणमिति शङ्कानिरासः। सूत्रस्थात्मशब्दादित्यनेनैतदपि सूचितं यदैतदात्म्यमिति श्रुत्या तेजआदीनामपि सदात्मकत्वेन तेजआदिशब्दानां तदन्तर्यामी परमात्मेत्यर्थान्मुख्यमेवेक्षणमिति। **परमात्मन एवेति** । इदं प्रागुक्तम् ( श्रीभाष्य-पृ. ११३ प. २ ) ॥ ६ ॥

—२१ **तन्निष्ठस्य** । सदात्मकतया प्रत्यगात्मानुसंधानं कुर्वतः । एतादृशस्य शरीरमेव मोक्षप्रतिबन्धकम् । तत्पाते तु सद्य एव मोक्ष इति तस्य तावदेवेति श्रुतेरर्थः ।

१७४-३ **यथाक्रतुः** । यथाकामः । उपासनानुरूपं फलमिति भावः ।

—६ **प्रधानेति** । तथा च प्रधानकारणवादिमतेप्यचित्संपत्तेस्तापत्रयाभिहतिहेतुत्वात्प्रधानस्य ज्ञानमात्रं व्याधेरिव विवक्षितं न तूपासनमिति बोध्यम्॥७॥८॥

—१५ **प्रतिज्ञाविरोधात्** । पूर्वपक्षिणा हि प्रतिज्ञावाक्यं स्वसाधकत्वेन प्रागुपन्यस्तम् ( श्रीभाष्य-पृ. १७१ प. ६ ) । तथा च यत्पूर्वपक्षिणोनुकूलत्वेनाभिमतं तदेव तस्य वस्तुतः प्रतिकूलमित्येतत्सूत्रस्वरसः ।

—१८ **तत्कार्यभूतेति** । सूक्ष्मचिदचिच्छरीरकस्य परमात्मनः कारणत्वं तस्यैव च स्थूलचिदचिच्छरीरकस्य कार्यत्वमिति चेतनाचेतनप्रपञ्चस्य तत्कार्यभूतत्वोक्तिः ॥ ९ ॥

१७५-४ **स्वाप्ययादिति** । स्वकारणेऽप्ययो लयः स्वाप्ययः । स च सता सोम्येति श्रुतौ प्रतिपादितः प्रधानकारणवादे न संगच्छते । जीवं प्रति प्रधानस्याकारणत्वात् । तथा च स्वाप्ययान्न सच्छब्दवाच्यं प्रधानमिति सूत्रार्थः ।

१७५-११ चिद्वस्तुशरीरकमिति। स्वमपीत इत्यत्र स्वशब्देन जीवशरीरकः परमात्मोच्यते। न तु केवलः। तस्योपादानत्वाभावेन प्रलयस्थानत्वासंभवात्। तत्राप्ययो जीवस्य नाम न शुक्तौ रजतस्येव लयः। जीवस्य स्वरूपनिवृत्तिप्रसङ्गात्। नापि महाकाशे घटाकाशस्येव लयः। देहाद्युपाधेरवस्थितत्वात्। अत एव च नापि क्षितितले घटस्येव लयः। जीवनित्यत्वश्रुतिविरोधाच्च। किं तु प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति सुषुप्तौ सर्वज्ञत्वाज्ञत्वाभ्यां भेदव्यपदेशाज्जीवत्वे स्थित एवायमप्ययः स्वात्मन्यवस्थानं बहिर्मुखज्ञानप्रसरराहित्यमिति यावत्। तथा च जीवो नाम मनुष्यादिनामरूपरागलोभाद्यनुगुणबहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा। स च सुषुप्तौ देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीवशरीरकः सन्नात्मन्यन्तर्भूतो भवतीति स्वमपीत इति श्रुतेरर्थः।

—१८ प्राज्ञेनात्मनेति। तथा चैतच्छ्रुत्यनुरोधेन सता सोम्येति श्रुतौ सच्छब्दवाच्यः परमात्मैव ग्राह्यः।

१७६-१० संपत्त्यसंपत्तिभ्यामिति। सूत्रे स्वाप्ययशब्देन संपत्त्यसंपत्तिद्वयमप्यभिप्रेतमिति वृत्तिकाराशयः। तत्र संपत्तिः सुषुप्तौ। सा च सति संपद्य न विदुः सति संपद्यामह इत्युक्ता। असंपत्तिश्च जागृतौ। सा च सत आगम्य न विदुः सत आगच्छामह इत्युक्ता। आभ्यां संपत्त्यसंपत्तिभ्यामेतत्परब्रह्मणो जगत्कारणत्वमध्यवसीयत इत्यर्थः॥ १०॥

—१९ प्रवृत्तिः। बोधनव्यापारः॥ ११॥

१७७-७-१२ अनेन जीवेनेति। अत्र श्रुतावात्मत्वेन नामरूपव्याकर्तृत्वमुच्यते। सन्मूला इत्यनेन सर्वज्ञत्वं सर्वशक्तित्वं च सूच्यते। सदायतना इत्यनेन सर्वाधारत्वमुच्यते। तच्च सर्वाधारत्वं न केवलं कारणत्वेन किं त्वात्मत्वेनेत्यैतदात्म्यमित्यादिना प्रतिपाद्यते। एष आत्मेत्यनेनापहतपाप्मत्वादिकं चोच्यते।

१७८-७ गुणगणौघमहार्णव इति। ओघशब्देन गुणानामन्यत्रापर्यवसायित्वं महार्णवशब्देन गुणेभ्योपि तदाश्रयस्य महत्त्वं च दर्शितम्।

—११ पारमार्थिकेति। निर्विशेषब्रह्मवादे हीक्षणरूपविशेषोप्यपारमार्थिक इति ब्रह्मप्रधानयोरुभयोरपि गौणमेवेक्षणमिति सांख्यमतनिरासो न स्यात्।

—१२ साक्षित्वमपीति। तदैक्षतेति श्रुत्या ब्रह्मणि न कश्चिद्विशेषः प्रतिपाद्यते किं तु साक्षित्वमात्रम्। तेनैव च प्रधानव्यावृत्तिरित्याशङ्कानेन ग्रन्थेन निरस्ता।

—१३ जिज्ञास्यतयेति। ब्रह्मण आरोपिताकारत्वे तस्य तत्त्वावेदकप्रमाणविषयत्वं न संभवतीति जिज्ञास्यत्वं नोपपद्यते।

१७९–२ **तदुभयरूपत्वाभावात्** । स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावात् ।

—१२ **प्रत्यक्षानुमानेति** । निर्विशेषब्रह्मणि स्वानुभव एव प्रमाणमिति परैरुक्तत्वेनात्र प्रत्यक्षान्तर्भूतस्यापि स्वानुभवस्य पृथङ्निर्देशः ॥ १२ ॥ (५)

—१७ **अशुद्धाच्छुद्धाच्चेति** । बद्धो जीवोऽशुद्धः । मुक्तो जीवः शुद्धः ।

—२० **आनन्दमयोभ्यासात्** । आनन्दमयः परमात्मा। आनन्दस्य शतगुणितोत्तरक्रमेण गुणितत्वादिति सूत्रार्थः । अस्मिन्नधिकरण आनन्दमयशब्दार्थो विषयः । स किं प्रत्यगात्मा परमात्मा वेति संशयः । प्रत्यगात्मेति पूर्वपक्षः । परमात्मेति सिद्धान्तः ।

१८०–८ **सुखप्रतिपत्त्यर्थम्** । अनायासेन बोधार्थम् ।

—११ **सत्यमित्यर्धाङ्गीकारे** । अङ्गीकारश्चायं चैतन्यांश एव न तु सर्वज्ञत्वसर्वेश्वरत्वांशे । पूर्वपक्षिणा जीवस्यैव जगत्कारणत्वाभ्युपगमात् ।

**तत्तु जीवादिति** । पूर्वपक्षिणोत्र जीवब्रह्मैक्यवादोभिप्रेतः । शुद्धावस्थजीवस्वरूपमेव ब्रह्मेत्याशयः । ईक्षणेन हेतुना साध्यमानं जगत्कारणं जीव एव न तु तदतिरिक्तम् । तथा चानन्दमयस्य जीवत्वे कथ्यमाने न किंचिद्बाधकमित्याशयः ।

—१६ **ईक्षापूर्विकेति** । पूर्वाधिकरणे प्रधानस्य जगत्कारणत्वे विरुद्धत्वेन प्रदर्शिता तदैक्षतेति श्रुतिर्जीवस्य जगत्कारणत्वेङ्गीक्रियमाणे न विरुध्यत इति भावः ।

—१७ **अतो ब्रह्मेति** । उपक्रमे ब्रह्मविदाप्नोति परमित्यत्र प्राप्यतया ब्रह्मणः प्रतिपादनात्तदेवानन्दमयशब्दवाच्यं न तु जीव इत्याशङ्कानेन ग्रन्थेन निरस्यते । उपक्रमेपि जीवस्वरूपमेव प्राप्यतयोपदिश्यते । यद्यपि जीवस्य स्वस्वरूपं प्राप्तमेव तथाप्यचित्संसर्गवियुक्तं प्राप्यमेव । तदेव ब्रह्मशब्देनाभिधीयत इत्याशयः ।

—१९ **सत्यं ज्ञानमिति** । उपक्रमानन्तरं कथ्यमानं सत्यं ज्ञानमिति लक्षणमप्यचित्संसर्गवियुक्तजीवस्यैव ।

१८१–४–७ **शाखाचन्द्रेति** । अभ्रादिना विस्पष्टमदृश्यमानश्चन्द्रो यदा केनचिद्बालादीन्प्रति प्रदर्श्यते तदा पूर्वं पुरःस्थितां शाखां प्रदर्श्य ततस्तदन्तस्थितश्चन्द्रः प्रदर्श्यते । तदा च प्रथमं शाखायां बुद्धिरवतरति पश्चात्तदन्तस्थे चन्द्र इति चन्द्रः सुगृहीतो भवति । अयं शाखाचन्द्रन्यायः । **बुद्धिमिति** । विज्ञानमय इत्यत्र विज्ञानशब्दस्य बुद्धिरूपोर्थः । विज्ञायतेनेनेति व्युत्पत्तेः । मयट्प्रत्ययस्तु स्वार्थिकः प्राणमयादिवत् ।

—१३ **ननु च ब्रह्मेति** । आनन्दमयस्येदं शिरोयं दक्षिणः पक्षोयमुत्तरः पक्ष इदं पुच्छमित्युक्तत्वात्पुच्छस्य च ब्रह्म पुच्छमिति ब्रह्मत्वाभिधानात्तादृशं ब्रह्मरूपं पुच्छं यस्य स आनन्दमयोर्थादेव ब्रह्मणोन्य इति प्रतीयते ।

१८१–१४ **पुरुषविधत्वरूपितम्** । पुरुषरूपेण प्रकल्पितम् ।

—१५ **यथान्नमय इति** । अस्मिन्प्रकरणे रीतिरेवेयं यत्स्वस्मादनतिरिक्तै-रेव स्वावयवैः पुच्छप्रतिष्ठात्वरूपणम् । तथा च पुच्छरूपं ब्रह्माप्यानन्दमयादन-तिरिक्तमेवेत्यर्थः ।

१८२–४ **न चैवमिति** । श्रुतौ ह्यन्नमयादारभ्य ततोन्तरस्ततोन्तर इत्येव-मानन्दमयपर्यन्तमेव कथितं न तदुत्तरं किंचित् ।

—१३ **ननु च ब्रह्मेति** । यदि पुच्छरूपस्य ब्रह्मण आनन्दमयादनतिरिक्त-त्वं तर्ह्यानन्दमयस्यैव प्रधानत्वेनासन्नेवेत्यग्रिमश्लोक आनन्दमयपरामर्शिनस्त-च्छब्दस्यैव निर्देश उचितो न तु ब्रह्मशब्दस्य । अन्नमयादिपु तच्छब्देनैव निर्देशदर्श-नात् । आनन्दमयस्यैव पार्यन्तिकात्मत्वादात्मशब्देन वा निर्देश उचितः । तथाऽकृत्वा ब्रह्मशब्देन निर्देशकरणादानन्दमयादन्यद्ब्रह्मेति श्रुत्याशयो गम्यते ।

—२० **नैवमिति** । ब्रह्मात्मानन्दमयशब्दानामेकार्थत्वेन तेपु केनापि शब्देन निर्देशो न बाधक इति गूढाशयः ।

१८३–८ शङ्कते–**शिरःप्रभृतीति** । ब्रह्मणः शिरःप्रभृत्यवयवा न सन्ति । आनन्दमयस्य त्वत्र शिरःप्रभृत्यवयवाः प्रियमोदादयः कथिताः । अतो नानन्द-मयं ब्रह्मेति भावः ।

—११–२ **रूपणमात्रमिति** । कल्पनामात्रं न तु वास्तविकम् । असुखा-दिति । असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन कल्पिता इत्यर्थः ।

—१३ **सत्यं ज्ञानमिति** । यथा ब्रह्मणो विकारास्पदाद्व्यावृत्तिः सत्यशब्देनोक्ता ज्ञानशब्देन जडाद्व्यावृत्तिरनन्तशब्देन च परिच्छिन्नात्तथानन्दमयशब्देनासुखा-द्व्यावृतिरुच्यत इत्याशयः ।

—१६ **स्वार्थिक इति** । विकारार्थत्वे त्वानन्दमयस्य ब्रह्मत्वं न स्यात् । ब्रह्मणः कस्यचिद्विकारत्वाभावात् ।

१८४–१० **विज्ञानमयो हीति** । हीति प्रसिद्धौ । योयं विज्ञानमयः प्राणे-ष्वित्यादिश्रुतिषु जीवस्यैव विज्ञानमयशब्दार्थत्वात् ।

—१४ **ज्ञातैवेति** । जीवो विज्ञानस्वरूपो न तु विज्ञानवान् । तथा च तद्गतो जीवस्य संभवादित्युक्तिर्न संभवतीत्याशङ्कानिरसनार्थमेतदुक्तम् ।

**प्राणमयादौ त्विति** । तुशब्दो भिन्नक्रमः । मयडर्थस्य विकारार्थस्यासंभव-स्त्वनन्तरं ( श्रीभाष्य–पृ. २०४ प. १ ) वक्ष्यत इत्यर्थः । अथ वा मयडर्थसंभव इति पाठः । तुशब्दश्चार्थे । मयडर्थस्य प्राचुर्यस्य संभवः । पूर्वं प्राणमयादे स्वार्थिकत्वमङ्गीकृतम् । इदानीं तत्रापि स्वार्थिकत्वं नास्तीत्यनन्तरं ( श्रीभाष्य-पृ. २०४ प. ४ ) वक्ष्यत इत्यर्थः ।

१८४-१६ कथं तर्हीति । यदि विज्ञानमयशब्दे मयण्न स्वार्थिकस्तर्हि तत्संबन्धिनि विज्ञानं यज्ञमिति श्लोकेपि विज्ञानमयशब्दनिर्देशोपेक्षितः। न हि विज्ञानमयस्य जीवस्य विज्ञानत्वम्। तस्य विज्ञानाश्रयत्वात्।

—१७ ज्ञातुरेवेति । ज्ञातृस्वरूपमेव स्वप्रकाशतया विज्ञानशब्देनोच्यते।

१८५-१ स्वरूपनिरूपणधर्मशब्दः। अयुतसिद्धगोत्वादिधर्मवाचिगवादिशब्दः।

—४ कर्तरीति। विजानातीति विज्ञानम्। विज्ञातेत्यर्थः।

नन्द्यादित्वमिति। यथा नन्दयतीति नन्दन इत्यत्र नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा. सू. ३।१।१३४) इति पाणिनिसूत्रेण कर्तरि ल्युप्रत्ययस्तद्वत्।

—५ अत एव। कर्तरि प्रत्ययं स्वीकृत्य विज्ञानशब्दस्य चेतनपरत्वाङ्गीकारादेव। मयट्प्रत्ययस्य स्वार्थिकत्वं मन्यमानस्यापीयमनुपपत्तिः समानैव।

—९ न चेतनेति । यदि तत्र कर्तृत्वं श्रूयेत तर्हि तस्यौपचारिकत्वावश्यंभावेन तदनुरोधेन विज्ञानस्य बुद्धेर्यज्ञकर्तृत्वमौपचारिकमिति कदाचिद्वक्तुं शक्येत।

चेतनमचेतनं चेति । विश्वनिलयनत्वस्यान्तःकरणेऽसंभवेन नायमन्तःकरणानन्तःकरणविभागः । किं तु चेतनाचेतनविभाग एवेति विज्ञानशब्दस्य चेतनार्थकत्वमवश्यं स्वीकार्यम्।

—१२ तद्गुणम्। विज्ञानगुणकम्। विज्ञानशब्दस्य चेतनपरत्वे प्रयोगान्तरदर्शनमेतत्।

—१६ विज्ञानमिति चेति। विज्ञानशब्दस्य चेतनार्थकत्वे नपुंसकलिङ्गानुपपत्तिस्तु न। विजानातीति विज्ञानं विज्ञातृवस्तु। तच्चार्थाज्जीव एव । अयं पदार्थ इयं व्यक्तिरिदं वस्त्विति सर्वस्यैव लिङ्गत्रयवैशिष्ट्येन प्रतिपादनसंभवान्न काचिदनुपपत्तिः।

—१७ यद्यपीति। ज्ञानं विना ज्ञानाश्रयस्य यज्ञकर्तृत्वासंभवादाश्रयनिष्ठं कर्तृत्वं ज्ञान आरोप्य विज्ञानं यज्ञमिति श्लोके विज्ञानशब्दस्य कदाचिज्ज्ञानमात्रपरत्वेङ्गीकृतेपि विज्ञानमयशब्दस्य जीव एवार्थो ग्राह्य इति भावः।

१८६-३ एतत्सर्वमिति। तस्माद्वा एतस्माद्विज्ञानमयादिति वाक्यं जीवपरयोर्भेदप्रतिपादकमिति वदतः सूत्रकारस्यैतत्सर्वमभिप्रेतमित्यर्थः।

—१३ जगदिति। अनयोः सूत्रयोरर्थः प्रागुक्तः (विवृति-पृ. ७२ प. २२)।

—२० नानाविधेति । नानाविधान्यनन्तान्यमर्यादितानि यानि दुःखानि तेषामाकरः कर्माधीना चिन्तितनिमिषितादिसकलप्रवृत्तिर्यस्यैवंभूतो यो जीवस्त-

स्वरूपत्वम् । तथा चात्यन्तविरुद्धयोस्तत्त्वंपदार्थयोर्ब्रह्मजीवयोरैक्यं न संभवतीति भावः ।

१८६–२१ अन्यतरस्य । तत्र तत्पदार्थस्य ब्रह्मणो हेयप्रत्यनीककल्याणैकतानस्वभावत्यागे तस्य जीववैलक्षण्याभावाज्जीवेन सहैक्यं संभवेत् । अथ वा त्वंपदार्थस्य जीवस्य दुःखादिहेयसंबन्धत्यागे तस्य ब्रह्मवैलक्षण्याभावाद्ब्रह्मणा सहैक्यं संभवेदित्यर्थः ।

१८७–२ शङ्कते–हेयेति ।

—७ पुनः शङ्कते—तथापि तस्येति । अविद्याश्रयत्वरूपहेयसंबन्धस्येत्यर्थः ।

—८ दूषयति—मिथ्याभूतमपीति । मिथ्याभूतमप्यपुरुषार्थ एवेति यतस्त्वमेव बूषेऽतो विरोधो दुर्वार इति भावः । मिथ्यात्वं किमत्यन्ताभाव उत ज्ञानबाध्यत्वम् । प्रथमे निरसनीयाभावात्तन्निरासाय शास्त्रारम्भो न स्यात् । द्वितीये मिथ्याभूतस्यापुरुषार्थत्वमस्ति वा न वा । अस्ति चेद्धेयप्रत्यनीकत्वव्याघातः । नास्ति चेच्छास्त्रारम्भवैयर्थ्यम् ( श्रु. ) ।

—११ शङ्कते–किं कुर्म इति ।

—१९ परिहरति–श्रुतोपपत्तय इति । तत्त्वमसीति श्रुतस्य जीवब्रह्मैक्यस्योपपत्तयेऽप्यनुकूलतर्करहितं प्रमाणविरुद्धं च न कल्पनीयम् । यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्र पीनत्वोपपत्तये केवलमन्नास्वादनं न कल्प्यते तद्वत् । अत्र हेयसंबन्धस्यापहतपाप्मा विशोकोऽविजिघत्सोऽपिपास इत्यादिश्रुतिविरुद्धत्वं बोध्यम् ।

शङ्कते–अथ हेयेति ।

—२१ परिहरति–हन्तैवमिति । तथा च शास्त्रस्याप्रामाण्यं प्रसज्येत ।

१८८–३ शङ्कते–अथैतदिति । अयमेव पूर्वपक्षिणः सिद्धान्तः ।

—९ तदन्तर्गतं चेति । सर्वं जगत्परमार्थमिति शेषः । यदि जगतो मिथ्यात्वं सत्यत्वेपि परमात्मानन्तर्गतत्वं वा तदा प्रतिज्ञाविरोध इति जगतः सत्यत्वं परमात्मान्तर्गतत्वं चावश्यमङ्गीकार्यमेव ।

—१३ न तर्हीति । एवमाकारा श्रुतिर्न स्यात् । किं तु सर्वं मिथ्यात्वेन ज्ञातं भवतीत्येवमाकारा स्यात् । यतश्चेदृशाकारा नास्त्यतो जगत्सत्यमेवेति भावः ।

—१५ दूषणान्तरमाह–कारणतयेति ।

१८९–१ ज्ञातता निदर्शितेति । न तु मृत्पिण्डज्ञानेन घटादिनिवृत्तिर्निदर्शिता ।

शङ्कते–तत्रापीति ।

१८९——२ **असिद्धमितीति** । इतिर्हेतौ । स च न युज्यत इत्यत्रान्वेति ।
—४ **न च तत्त्वमिति** । मृद्विकारस्यासत्यत्वमनुमानेन प्रसिद्धमिति चेत्तद्नुमानं प्रमाणं तर्कानुगृहीतं नास्त्येव परं तु तर्काननुगृहीतमपि नास्तीत्यर्थः ।

—८-१९०-१ ब्रह्मणः सविशेषत्वे श्रुतीर्दर्शयति-**तथा सदेवेति** । किं च 'ब्रह्मणो निर्विशेषत्वमिति धर्मोस्ति वा न वा । द्विधापि सविशेषत्वं तद्योगतदयोगजम्' ( न्या. सि. ) इति सविशेषत्वं दुर्वारमेवेति बोध्यम् । **स्थिरत्रसरूपेण** । स्थिरचररूपेण । **शास्त्रैकेति** । एतेन निर्गुणस्यापि ब्रह्मणो गुणानुकीर्तनं निषेधायेति परास्तम् । न ह्यन्यतोऽसिद्धं किंचिद्वस्तु तन्निषेधाय क्वचिदपि विधीयते ।

१९०-१३-५ शङ्कते-**अथोच्येते**त्यादिना **न कश्चिद्दोष** इति ( पृ. १९१ प. ९ ) इत्यन्तेन । **तात्पर्यासंभवादिति** । अन्यथा विशेषणभेदादेकार्थत्वासिद्धेः । **न लक्षणेति** । अवाच्यार्थस्याप्रतिपादनादिति भावः ।

—२० **अन्योन्यसमवायेति** । उत्पलत्वविशिष्टे नीलत्वविशिष्टैक्यविवक्षया यथोत्पलं द्रव्यं नीलत्वविशिष्टं तथोत्पलत्वजातिरपीति नीलत्वगुण उत्पलत्वरूपजातिसमवेतः स्यात् । नीलत्वविशिष्ट उत्पलत्वविशिष्टैक्यविवक्षया च यथा नीलं द्रव्यमुत्पलत्वविशिष्टं तथा नीलत्वगुणोपीत्युत्पलत्वजातिर्नीलत्वगुणसमवेता स्यात् ।

१९१-७ **न लक्षणेति** । यथा किंचिदवयवविकलेपि पुरुषे प्रवृत्तः पुरुषादिशब्दो न लाक्षणिकस्तद्वत् ।

—११ **संसर्गविशेषमात्रमिति** । न तु लक्षणां विना व्युत्पत्तिसिद्धार्थे किंचित्क्वचिदपि परित्यज्यते ।

—१७ **न च विशेषणेति** । अनेनान्योन्यसमवायप्रसङ्गरूपो दोषः परिहृतः ।

—१९ **स्वरूपमेव विशेष्यम्** । न तु विशेषणान्तरविशिष्टं विशेष्यम् ।
**भिन्नप्रवृत्तीति** । एतदेव सामानाधिकरण्यं न तु विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनम् ।

—२०-१ **अन्वयेन निवृत्त्या वेति** । यद्वस्तु केनचित्पदेनान्वयेन व्यतिरेकेण वा यदाकारविशिष्टं प्रतिपादितं तदेव वस्तु पदान्तरेणान्वयेन व्यतिरेकेण वाऽऽकारान्तरविशिष्टं प्रतिपाद्यते । न तु विशेषणविशिष्टयोरैक्यं प्रतिपाद्यते । श्यामो युवा लोहिताक्ष इत्यन्वयोदाहरणम् । अदीनोऽकृपणोऽनवद्य इति व्यतिरेकोदाहरणम् ।

१९२–६ **अन्वयाविरोधादिति** । यद्यपि किंचिद्विशेषणविशिष्टे विशेषणान्तरविशिष्टस्यैक्यं न संभवति तथापि केवले विशेष्ये विशेषणद्वयान्वयसंभवान्न विरोध इति भावः ।

—७ विशेषणभेदेन विशेष्यभेदं शङ्कते–**अथेति** । **एकविशेषणेति** । एकविशेषणविशिष्टतया निरूप्यमाणं वस्तु विशेषणान्तरविशिष्टत्वाद्धेतोस्तस्माद्विशेषणान्तरविशेष्यात्पदार्थाद्विलक्षणमित्यर्थः ।

—११ परिहरति–**स्यादेतदेवमिति** । विशेषणद्वयविशिष्टत्वमात्रं नैकत्वप्रतिबन्धकं किं त्वेकस्मिन्धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेवेत्यर्थः ।

—१६ **न केवलमिति** । नीलमुत्पलमित्यत्र विशेषणांशयोर्विरोधात्त्याग इति पूर्वपक्षिमतम् । तत्र तयोर्विरोधाभाव उक्तः । न चाविरोधेप्यविवक्षया विशेषणांशयोस्त्याग इति वाच्यम् । सामानाधिकरण्यानुरोधेन विशेषणांशयोरवश्यं विवक्षणीयत्वात् । तथा च धर्मद्वयविशिष्टता कथमपि त्यक्तुं न शक्यत इति भावः ।

—१८–९ **अन्यथा** । विशेषणयोरविवक्षया धर्मद्वयविशिष्टत्वाभावे । **न स्यादिति** । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिरेव सामानाधिकरण्यमित्याशयः ।

१९३–१ **स्वसंबन्धानादरेण** । स्वसंबन्धे तात्पर्याभावेन ।

—६ **अत एव** । कालद्वयसंबन्धाविरोधादेव । क्षणिकवादनिरासकस्य स्वयं कालद्वयसंबन्धविरोधाभ्युपगमो विरुद्ध इत्यर्थः ।

—९ **परिह्रियत इति** । इदं प्रागुक्तम् ( श्रीभाष्य–पृ. ११० प. १९ )

—१०–१२ **यत इति** । विशिष्टवाचकशब्दानां विशेषणांशत्यागेन विशेष्यवस्तुमात्रवाचकत्वेऽरुणाधिकरणविरोधोऽनेन ग्रन्थेन प्रतिपाद्यते । **एकहायन्या** । एकं हायनं वर्षं यस्यास्तया । अनेन वाक्येनोक्तगुणविशिष्टया गवा सोमक्रयो विधीयते ।

—१३ **अर्थैकत्व इति** । यस्मिन्वाक्ये द्रव्यगुणयोरेकक्रियान्वयित्वरूपार्थैकत्वं संभवति तत्र तयोः श्रूयमाणयोर्द्रव्यगुणयोः परिच्छेद्यपरिच्छेदकभावनियमः स्यात् । कुतः । ऐककर्म्यात् । एकार्थप्रतिपादकत्वरूपैकवाक्यतासत्त्वादिति सूत्रार्थः ।

—१५ **तत्र** । तस्मिन्नधिकरणे । अत्रायं पूर्वपक्षाशयः—यद्यप्यरुणापदमारुण्यगुणविशिष्टद्रव्यवाचकं तथापि तद्द्रव्यमेकहायनीरूपमेवेत्येवमन्वयनियमो न संभवति । एकस्मिन्वाक्य एकमेव विधानमित्यतोऽत्रैकहायनीकरणकक्रयविधाने जाते तस्यां चैकहायन्यामरुणगुणेन भवितव्यमित्यस्य विधानान्तरस्यासंभ-

त्वात् । अथ क्रीणातीत्यस्यावृत्त्यारुणया क्रीणात्येकहायन्या क्रीणातीति वाक्यभेदे त्वरुणयेत्यत्रारुण्यविशिष्टं द्रव्यमेकहायनीरूपमेव ग्राह्यमिति नियमो न संभवति । किं तु प्रकरणानुरोधेनैकहायनीत्वकदाचिद्वासोयजमानाद्यपि गृह्येत । अरुणयेति स्त्रीलिङ्गनिर्देशस्य चोपलक्षणार्थतयाप्युपपत्तिर्भविष्यतीति ।

१९४–७ अरुणयेति । अयं सिद्धान्ताशयः—क्रयान्वयबोधकमेवैतद्वाक्यम् । आरुण्यगुणान्वयस्य तु प्रातिपदिकसिद्धत्वान्न वाक्यविधेयत्वमिति न वाक्यभेदापेक्षा । अत्र द्रव्यगुणयोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः । विशेष्यैक्यं सामानाधिकरण्यावसेयम् । क्रयान्वयो वाक्यावसेय इति ।

—१४ एकहायनीत्वमात्रम् । अरुणिमविशिष्टद्रव्यस्यैकहायनीत्वाश्रयत्वं विशेष्यैक्यमित्यर्थः ( श्रु. ) ।

—१५ विशिष्टद्रव्यैक्यम् । विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं माभूदिति विशिष्टद्रव्यैक्यमित्युक्तम् । द्रव्यशब्देन विशेष्यांशो विवक्षितः ।

१९५–८ अग्नय इति । पन्थानं करोत्यपथात्पन्थानं नयतीति पथिकृत् । एतादृशायाग्नय इत्यर्थः ।

—१५ खादिरैरिति । अत्र खादिरत्वशुष्कत्वविशिष्टकाष्ठानां करणतया पचनक्रियान्वयः । समपरिमाणत्वविशिष्टभाण्डस्याधिकरणत्वेन । पायसत्वविशिष्टशाल्योदनस्य कर्मत्वेन । समर्थत्वविशिष्टपाचकस्य कर्तृत्वेनेति बोध्यम् ।

—१७ उपात्तद्रव्यकेति । उपात्तं शब्देन निर्दिष्टं द्रव्यं यस्मिन्नेतादृशे वाक्ये विद्यमानो गुणवाचकः शब्दः केवलं गुणमेवाभिधत्ते न गुणिनम् । यथा पटस्य शुक्ल इत्यत्र पटपदेन द्रव्यस्याभिधानाच्छुक्लशब्दस्य शुक्लगुण एवार्थः । कृष्णो गच्छति श्वेतमालभेतेत्यादौ पदान्तरेण द्रव्यस्याभिधानाभावाद्गुणविशिष्टार्थप्रतिपादकत्वम् । प्रकृते त्वेकहायन्येति पदेन द्रव्योपादानमित्यरुणापदस्यारुण्यगुण एवार्थ इत्याशयः ।

१९६–२, पटः शुक्ल इति । यदुक्तनियमस्य सामानाधिकरण्यमपवाद इति पटः शुक्ल इत्यत्र द्रव्योपादानेपि शुक्लशब्दस्य गुणविशिष्टार्थप्रतिपादकत्वमुच्यते तर्हि प्रकृतेप्यरुणयेत्यत्र तथैव स्यात् ।

—७–९ यत्पुनरिति । क्रीणातीत्यत्र करणाकाङ्क्षायाः एकहायनीसंबन्धेन निवृत्तत्वेन क्रयस्य निराकाङ्क्षत्वात्तत्रारुण्यान्वयो न संभवतीत्यर्थः । तदपीति । नीलं शुक्लं कृष्णमित्यादिव्यावृत्त्यर्थं विरोधिगुणरहितेति । तदाश्रयेति । तद्द्रव्यमाश्रयो यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । गुणविशिष्टगुण्यभिधानेनेति यावत् । तथा च गुणविशिष्टमेकं करणमिति क्रीणातीत्यत्र प्रथमतः करणाकाङ्क्षायां तदानीमेवारुण्यस्य द्रव्यद्वारा क्रयान्वय इति पुनराकाङ्क्षाया अभावेपि न कश्चिद्दोष इत्यरुणाधिकरणे तथा पूर्वपक्षो न युक्त इति भावः ।

१९६-१० अथ तत्रत्यसिद्धान्तमपि दूषयति-**राद्धान्ते चेति**। अरुणयेत्यस्य केवलगुणवाचकत्वेपि गुणद्रव्ययोः परस्पराकाङ्क्षासत्त्वेन नष्टाश्वदग्धरथन्यायेन गुणस्य द्रव्य आर्थिकोन्वय इति तदधिकरणे परैः सिद्धान्तः कृतः । स तु न युक्तः । पूर्वोक्तरीत्यारुणयेत्यस्य गुणविशिष्टगुणिवाचकत्वेन शाब्दान्वयसिद्धेः। अत एव चारुणयेति स्त्रीलिङ्गनिर्देश उपपद्यते । गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्युक्तत्वात् ।

—१२ **तस्मात्** । सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात् । परपक्षे त्वीदृशं सामानाधिकरण्यं न संभवति । पदद्वयावगतगुणहानात् ( श्रु. ) ।

—१७ शङ्कते-**अभ्युपगच्छतोपीति** ।

१९७-३-६ **सच्छब्देति** । जीववाचकत्वेन प्रसिद्धस्य त्वंपदस्य तदन्तर्यामिपरत्वे लक्षणैव स्यादित्याशङ्कानेन ग्रन्थेन निरस्यते । **बहु स्यामिति** । बहुनामरूपभाग्भवेयमित्यर्थः ।

—११ **जीवेनात्मनेति** । अस्यैव व्याख्यानं जीवेन मयेति । आत्मशब्दस्यास्मद्वाचित्वात् ।

—१३ **जीवान्तरात्मतयेति** । ब्रह्मणो जीवान्तर्यामितया जीवस्य ब्रह्मात्मकत्वं न तु तयोः स्वरूपैक्यम् ।

१९८-२ **अत इति** । तथा च सर्वशब्दानां परमात्मपर्यन्तार्थवाचकत्वेनुप्रवेशपूर्वकं नामरूपव्याकरणं कारणमिति सिद्धम् ।

—४ सर्वशब्दानां परमात्मपर्यन्तार्थकत्वे कारणान्तरं दर्शयति—**किं चेति**। शरीरवाचकपदानां शरीरिपर्यन्ताभिधायित्वदर्शनादपि सर्वशब्दानां परमात्मपर्यन्तार्थवाचकत्वं सिद्ध्यतीत्यर्थः ।

१९९-३ शरीरिपर्यन्तार्थकत्वे वैदिकप्रयोगं दर्शयति-**चत्वार इति** । अत्र देवत्वं गच्छन्तीत्यत्र देवशब्दस्य शरीरमात्रवाचकत्वे शरीरत्वं गच्छन्तीत्युक्ते शरीरस्वरूपा भवन्तीति पर्यवसानेन देहात्मनोरैक्यं प्रसज्येत । अतो देवशब्दस्य शरीरिवाचकत्वं स्वीकार्यम् ।

—७ **तस्येति** । प्रकारस्य प्रकार्यपेक्षस्थितिकत्वेन प्रकारस्य यथावस्थितस्वरूपप्रतीतेः प्रकारिसापेक्षत्वात्तादृशप्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति प्रकारस्य प्रतिपादकोपि शब्दः प्रकारिण्येव पर्यवस्यतीत्यर्थः ।

—११ **पर्यवस्यन्त इति** । पर्यवसानं चेह न सर्वथा व्यापारोपरमः । तथा सति पुनर्व्यापारेण परमात्मप्रतिपादनासंभवात् । किं तु पूर्वं क्वचित् (आकाररूपेर्थे ) व्यापृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र ( पिण्डरूपेर्थे ) व्यापारः पर्यवसानम् । सर्वथा व्यापारोपरम इत्यर्थे त्वपर्यवस्यन्त इति पदच्छेदः ।

१९९–१७ **यथा दण्डीति** । तथा तत्त्वमसीत्यत्र जीवरूपद्रव्यवाचकत्वंपदे मत्वर्थीयः प्रत्यय आवश्यकः । तदभावात्सामानाधिकरण्यं न संभवतीति शङ्काशयः ।

—१८ **एकमेवेति** । यदि जातेरेव सामानाधिकरण्यप्रयोजकत्वं तर्हि शुक्लो घट इत्यत्र गुणवाचकशुक्लशब्दस्यापि घटेन सह सामानाधिकरण्यदर्शनात्तत्र व्यभिचारः । शरीररूपद्रव्यवाचकशब्दानां च जीवेन सह सामानाधिकरण्यदर्शनात्तत्रापि व्यभिचारः । एवमेव गुणस्य प्रयोजकत्वे बोध्यम् ।

—१९–२००–३ अथ स्वाभिमतं सामानाधिकरण्यप्रयोजकं दर्शयति—**यस्येति** । यस्य गोत्वादेः खण्डादिद्रव्यप्रकारतयैव सद्भावस्तस्य गोत्वादेस्तादृशखण्डादिद्रव्यापेक्षया पृथक्सिद्धेः पृथक्स्थितेः पृथक्प्रतीतेश्चाभावेन तादृशगोत्वादिवाचकगवादिशब्दानां स्ववाच्यगोत्वादिविशिष्टद्रव्यवाचकत्वात्खण्डत्वादिधर्मान्तरविशिष्टतद्द्रव्यवाचिना खण्डादिशब्देन सामानाधिकरण्यं युक्तमेवेत्यर्थः ।

२००–४ **स्वनिष्ठस्यैव** । न तु किंचिन्निरूपितप्रकारतयैव पदार्थभूतस्य । ईदृशस्य पृथक्सिद्धस्य दण्डादिद्रव्यस्य यदि मनुष्यादिद्रव्यान्तरप्रकारत्वं तदा तत्र मत्वर्थीयप्रत्ययावश्यकत्वम् । दण्डी मनुष्य इति यथा । प्रागप्येतत्प्रतिपादितम् ( श्रीभाष्य–पृ. ११४ ) ।

—६ **परमात्मन इति** । जीवस्य परमात्मशरीरत्वेन परमात्मप्रकारत्वादित्यर्थः ।

—१०–११ **यथेति** । जीवसंबन्धिशरीरगता बाल्यादयो धर्मा यथा शरीरिणं जीवं न स्पृशन्ति तथा जीवरूपशरीरगता अविद्यादयो हेया धर्माः शरीरिणं परमात्मानं न स्पृशन्तीत्यर्थः ।

—१४–५ **सशरीरेति** । शरीरसहितो यो जीवस्तद्रूपं शरीरं यस्यतादृशपरमात्मानमाचष्ट इत्यर्थः । **प्रकरणाविरोधः** । तदैक्षततदात्म्यमिदं सर्वमनुप्रविश्य नामरूपे व्याकरवाणीत्यादिवाक्याविरोधः । तत्त्वंपदयोर्निर्विशेषार्थकत्वं स्वीकृत्य सामानाधिकरण्योपपादने तु सविशेषत्वप्रतिपादकश्रुतिविरोधः प्रागुक्तः (श्रीभाष्य–पृ. १८९) । **सर्वश्रुत्यविरोधः** । भेदप्रतिपादकसर्वश्रुत्यविरोधः ।

२०१–९ **आकाशादीति** । यतश्चायमात्माकाशादीनां परमकारणीभूतोतस्तेनैव हेतुना प्रतिज्ञातो जीवव्यतिरेको यस्यैतादृशस्य परस्यात्मन इत्यर्थः । आत्मन आकाशः संभूत इत्यत्रात्मशब्देन न जीवात्मनो ग्रहणम् । आकाशाद्युत्पत्तिकाले जीवात्मनः सशरीरत्वाभावेन कार्योत्पादनासामर्थ्यात् । आत्मशब्दस्य च पुत्रादिशब्दवत्ससंबन्धिकार्थप्रतिपादकत्वेन कस्यात्मेत्याकाङ्क्षायामर्थात्स्वव्यतिरिक्तानामाकाशादीनामात्मेति गम्यत इत्याकाशादीनामात्मशरीरत्वं सिध्यतीति परमात्मन एव शारीरत्वम् ।

२०१–१९ श्रुत्यन्तरसिद्धः । यस्य पृथिवी शरीरमित्यादिश्रुत्यन्तरसिद्धः इदमुपलक्षणम् । एतत्प्रकरण एवात्मन आकाश इति ससंबन्धिकात्मशब्देन निर्देशात्परमात्मनः शारीरत्वस्य सिद्धत्वात् ।

२०२–३ अनन्यात्मकत्वमिति । यद्यपि यः पूर्वस्य विज्ञानमयस्य शारीर आत्मा स एवानन्दमयस्येत्युक्ते सत्यानन्दमयशारीरात्मनोरापाततो भेदो भासते तथाप्यन्नमयादिषु शारीरात्मनः पूर्वोक्तरीत्या परमात्मत्वादानन्दमयस्यापि च निरतिशयानन्दवर्णनेन परमात्मत्वात्स्वस्य स्वयमेवात्मेत्युक्तं भवतीत्यनन्यात्मकत्वं सिध्यतीत्याशयः ।

—६ अभ्यासेति । अभ्यासेनानन्दस्य शतगुणितोत्तरक्रमेण गुणनेनावगतः परमात्मभावो यस्येत्यर्थः ।

—८ निरुपाधिक इति । जीवात्मनो हि कचित्कदाचित्किंचित्प्रति कर्मानुगुणं शारीरत्वमिति तत्सोपाधिकम् । परमात्मनस्तु सर्वेषां सर्वदा सर्वत्राकर्मवश्यं शारीरत्वमिति तन्निरुपाधिकम् ।

—९ अभियुक्तैः । वृत्तिकारादिभिः । संहितमेतच्छारीरकं जैमिनीयेनेति तैरुक्तम् ॥ १३ ॥

—११ विकारशब्दस्य । विकारार्थकशब्दस्य ।

—१२–४ मयड्वैतयोरिति । एतयोरित्यस्य विकारावयवयोरर्थयोरित्यर्थः । अनेन सूत्रेण विकारावयवयोर्द्वयोरर्थयोर्मयट्प्रत्ययो विकल्पेन विधीयते । तदुत्तरं तदपवादभूतं नित्यं वृद्ध इति सूत्रम् । तेन च वृद्धसंज्ञकेभ्यः शरादिगणपठितेभ्यश्च शब्देभ्यस्तयोरेवार्थयोर्नित्यं मयड्विधीयते । यस्मिञ्छब्दे प्राथमिकः स्वर आकार ऐकार औकारो वास्ति स शब्दो वृद्धसंज्ञकः । यथाम्रमयमित्यत्राम्रशब्दः । तथानन्दशब्दोपि वृद्धसंज्ञक इत्यानन्दमयशब्दे विकारार्थकस्य मयट्प्रत्ययस्य संभवः ।

—१५ तत्प्रकृतेति । प्राचुर्येण प्रस्तुतं प्रकृतम् । तस्मिन्नर्थे मयट्प्रत्ययोनेन सूत्रेण विधीयते ।

—१८ जीवादन्यत्वम् । आनन्दमयस्य जीवादन्यत्वम् ।

२०३–२ आनन्दस्येति । अस्मिन्प्रयोगे प्राचुर्यं कर्तृ । अल्पत्वं कर्म । आनन्दस्य प्राचुर्यमित्युक्ते कस्मात्प्राचुर्यमित्यपेक्षायामानन्दविरोधित्वेन प्रसिद्धाद्दुःखादेवेति गम्यत इति भावः ।

—३ अत इति । यद्यानन्दमयशब्देन परमात्मनो ग्रहणं संभवेत्तदा तत्सिद्धय औचित्यप्राप्तस्यापि विकारार्थत्वस्य परित्यागः स्यात् । परं तु विकारार्थत्वं परित्यज्य प्राचुर्यार्थकत्वाङ्गीकारेपि परमात्मनो ग्रहणासंभवेन न विकारार्थत्वस्यौचित्यप्राप्तस्य परित्यागो युक्त इति भावः ।

२०३–८ **तद्विकार इति**। घटादिवज्जीवः परिणामभूत इत्यभिमानः शङ्काकृतः।

—१६ **औचित्यादिति**। औचित्यात्प्रयोगप्रसिद्ध्या च यन्मयट्प्रत्ययस्य विकारार्थकत्वं शङ्काकृता प्रदर्शितं तन्न संभवति। अर्थविरोधात्। आनन्दमये जीवत्वविकारत्वयोरसंभवादित्यर्थः।

२०४–१ **विकारार्थत्वासंभवादिति**। वायोः प्राणविकारत्वाभावादिति भावः।

—२ **पञ्चवृत्तेः**। प्राणापानादिव्यापारपञ्चकविशिष्टस्य।

—३–४ **न चेति**। प्राचुर्यार्थे मयट्प्रत्ययस्य प्रसिद्धिर्नाम्नि नेत्यर्थः।

—७ **तच्चेतरस्येति**। आनन्दप्रचुर इत्युक्ते तत्रानन्देतरस्य दुःखस्य सत्ता न बोध्यते। किं तु केवलमानन्दस्याल्पत्वं निवर्त्यते। यद्यप्यानन्दप्राचुर्यमित्युक्ते कस्मादित्यपेक्षायामर्थाद्दुःखादेवेति गम्यते तथापि तद्दुःखमानन्दाश्रयाश्रितमेवेति न सिध्यति। न च प्रमाणान्तरेणानन्दाश्रये दुःखसद्भावोऽवगम्यत इति वाच्यम्। तथाविधप्रमाणाभावात्। प्रत्युत तत्र दुःखाभावस्यैव प्रमाणान्तरसिद्धत्वात्।

—११ **अन्यानन्दस्य स्वल्पत्वमिति**। यद्यप्यानन्दस्य प्राचुर्यमित्युक्ते कस्मादित्यपेक्षा नियमेन जायते तथापि सा स्वव्यधिकरणेनापि स्वसजातीयेनैव निवर्त्यते। न तु स्वसमानाधिकरणेनापि विजातीयेन। यथा तेजःप्रचुरः सूर्य इत्युक्ते तत्तेजःप्राचुर्यं चन्द्रादिगततेजोपेक्षयेति गम्यते। न तु सूर्यगतान्धकारापेक्षया। तथानन्दप्रचुरः परमात्मेत्युक्ते तदानन्दस्य प्राचुर्यं मनुष्यादिगतानन्दापेक्षयेति गम्यते न तु परमात्मगतदुःखापेक्षयेति बोध्यम्।

—१५ **आनन्दैकस्वरूपस्येति**। तथा चानन्दस्वरूपस्यानन्दविकारत्वं न संभवति। न च जीवस्यानन्दस्वरूपत्वे संसारदशायां तथोपलब्धिः कुतो नेति वाच्यम्। कर्मणा तत्संकोचात्॥ १४॥

२०५–५ **अन्यात्कः प्राण्यात्**। सांसारिकमापवर्गिकं च सुखं प्राप्तुं कः शक्नुयात् ( वि. दी. )।

—८ **अयमन्य इति**। कर्मकर्त्रोरैक्यस्यासंभवादिति भावः।

—९ **आनन्दमय एवेति**। यदेष आकाश इति श्रुतावानन्दशब्दसद्भावेन तस्यानन्दशब्दस्य परमात्मवाचकत्वेप्यानन्दमयशब्देन कथं परमात्मनो ग्रहणमित्याशङ्कानेन ग्रन्थेन निरस्यते॥ १५॥

—१४ **गीयत इति**। मन्त्रब्राह्मणयोरेकार्थत्वादिति भावः।

२०६–१ **वैशद्यमिति**। यद्यपि संक्षिप्तार्थबोधको मन्त्रस्तदर्थवैशद्यं च ब्राह्मणेन क्रियत इति ब्राह्मणानुरोधेन मन्त्रार्थनिश्चयो युक्तो न तु मन्त्रानुरोधेन

ब्राह्मणार्थनिश्चयस्तथापि विस्तरेण ब्राह्मणोक्तस्यार्थस्य मन्त्रेण संक्षेपेण कथनमपि प्रतिपत्तिसौकर्याय भवतीत्येतादृशं वैशद्यं मन्त्रेण क्रियत इति मन्त्रानुरोधेन ब्राह्मणवाक्यार्थनिश्चयोपि नायुक्त इति बोध्यम् ॥ १६ ॥

२०६–६ अत्राहेति । निर्विशेषब्रह्मवादिनश्चोद्यमेतत् ।

—८ **शुद्धस्वरूपमिति** । कर्मतत्फलसंबन्धरहितमित्यर्थः । उपासकप्राप्य-भेदस्त्ववस्थाभेदादप्युपपद्यत इत्याशयः ।

—१४ **नेतर इति** । इदं सूत्रं मान्त्रवर्णिकसूत्रोक्तो हेतुर्न संभवतीत्येवं समागतायाः शङ्काया निवर्तकं पूर्वसूत्रशेषभूतम् । न त्वानन्दमयस्य जीवादन्यत्वे स्वतन्त्रो हेतुरनेन प्रतिपाद्यते । अतोस्मिन्सूत्रे सूत्रकारेण चशब्दो न प्रयुक्तः ।

—१७ **निरुपाधिकमिति** । कर्मविशेषेन्द्रियानपेक्षत्वं निरुपाधिकत्वम् । केवलो विपश्चिच्छब्दो निरुपाधिकमेव विपश्चित्त्वमाह ।

—१९ **विविधं पश्यच्चित्त्वम्** । विविधार्थद्रष्टृत्वे सति चेतनत्वम् ।

—२० **पृषोदरादीति** । पृषोदरादीनि यथोपदिष्टम् ( पा. सू. ६।३।१०९) इति पाणिनिसूत्रम् । पृषोदरादीनि शब्दस्वरूपाणि यथोच्चारितानि तथैव साधूनीति तदर्थः । यथा पृषत उदरमिति षष्ठीतत्पुरुषे पृषच्छब्दान्त्यस्य तकारस्य लोपे पृषोदरशब्दः सिद्धस्तथैव यच्छब्दस्य लोपेन विपश्चिच्छब्दः सिध्यति ।

२०७–६ यतो वाच इति श्रुतेर्निर्विशेषपरत्वं खण्डयति—**यत इति** । वाङ्मनसे आनन्दस्येयत्तालक्षणं पारं गन्तुं प्रवृत्ते तमप्राप्यैव निवृत्ते भवतः । तथा च तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयादत्यन्तनिवृत्तिर्भवतीत्यस्याः श्रुतेरर्थः (वि. दी.)। अस्याः श्रुतेर्यदि ब्रह्मणः सकाशाद्वाङ्मनसयोः सर्वथा निवृत्तिरित्यर्थस्तर्हि ब्रह्मरूपवस्तुनो निर्विशेषत्वं न सिध्यति । यत्र वस्तुनि वाङ्मनसनिवृत्तिस्तत्र निर्विशेषत्वमित्यत्र दृष्टान्ताभावेन तथाविधनियमे प्रमाणाभावात् । न केवलमिष्टं निर्विशेषत्वं न सिध्यति । प्रत्युत तुच्छत्वमनिष्टं सिध्येत् । यत्र वाङ्मनसनिवृत्तिस्तत्र तुच्छत्वमिति नियमस्य खपुष्पादिदृष्टान्तेन सिद्धत्वात् । न च तुच्छत्व इष्टापत्तिः । ब्रह्मविदाप्नोतीत्याद्यनेकश्रुतिविरोधात् । न हि तुच्छे विपश्चित्त्वादिधर्माणां प्रतिपादनं श्रुतिभिः कर्तुं युक्तम् । विपश्चित्त्वादयो धर्माश्च ब्रह्मणा विपश्चिता । आकाशः संभूतः । रसो वै सः । एष ह्येवानन्दयाति । सोकामयत बहु स्यां प्रजायेय । तदनु प्रविश्य । अथ सोऽभयं गतो भवति । भीषास्माद्वातः पवते । स एको मानुष आनन्द इत्यादिश्रुतिभिः प्रतिपादिताः ।

—१३–४ **शतगुणितेति** । शतगुणितोत्तरक्रमेण निर्विशेषत्वमेव विवक्षितमिति तु न युक्तम् । तथा सत्यानन्दस्यापकर्ष एवोक्तः स्यान्न तु प्रकर्षः । प्रत्युतानन्दप्रकर्षमुक्त्वा तदुत्तरं वाङ्मनसनिवृत्त्यभिधानेनानन्दस्येयत्ताराहित्यमेव विवक्षितं भवति । इयत्तारहितस्य वस्तुनो वाचा मनसा वैतावदित्यवगन्तुमशक्य-

त्वात् । अन्यश्च । य एषोन्तरादित्य इत्यादिश्रुतिप्रतिपादितमादित्यमण्डलान्तर्गतत्वादिकम् ।

२०७–१५ **यत इति** । ब्रह्मणो वाग्विषयत्वाभावे यच्छब्देनानन्दनिर्देश आनन्दशब्देन प्रतिनिर्देशो ब्रह्मसंबन्धित्वनिर्देशश्च न संभवति । तथा ब्रह्मणो मनोविषयत्वाभावे विद्वानिति तद्वेदनाभिधानं न संभवति । तथा चैतच्छ्रुतिवाक्यमनर्थकं स्यात् । समुद्रस्वनादिवद्वाक्यमेव वा न स्यात् । यथा जरद्गवो यथेच्छं किमपि रौरवीति । तत्र नार्थवत्त्वं नापि वाक्यत्वं तद्वत् । तत्र यतो वाच इत्यस्य वाक्यत्वाङ्गीकारेनर्थकत्वं दोषः । तदनङ्गीकारे वाक्यत्वाभाव एव दोषः ।

२०८–८ **सुस्पष्टमेवेति** । मुक्तस्याप्यात्मनः सर्वशक्तित्वाभावादिति भावः ॥ १७ ॥

—९ **उभयावस्थादिति** । शुद्धाशुद्धोभयावस्थाजीवादानन्दमयो भिन्न इत्यर्थः ।

—१५ **अन्य एवेति** । शुद्धाशुद्धोभयावस्थाजीवात्तादृशावस्थाद्वयान्तर्गतैकावस्थाविशिष्टस्य भेदो न संभवतीत्यानन्दमयशब्दवाच्यं ब्रह्म न तु शुद्धावस्थजीवस्वरूपमित्यर्थः । विज्ञानमयशब्देन बुद्धेस्तु न ग्रहणम् । मयट्प्रत्ययेन व्यतिरेकप्रतीतेः ॥ १८ ॥

—१८ **अवर्जनीयेति** । अचिद्वस्तुसंसर्गापेक्षाऽवश्याश्रयणीयेत्यर्थः । कस्यापि जीवस्य देहाद्यचिद्वस्तुसंबन्धं विना कार्योत्पादनासामर्थ्यात् ॥ १९ ॥

२०९–६ **अस्मिन्निति** । रसो वै स इत्यादिशास्त्रमस्मिन्रसशब्दनिर्दिष्टानन्दमयविषयेऽस्यायंशब्दनिर्दिष्टस्य जीवस्यानन्दमयलाभादानन्दयोगं शास्तीत्यर्थः ।

—१४ **यथा विज्ञानशब्देनेति** । इदं प्रागुक्तम् (श्रीभाष्य–पृ.१८४प.१७)।

—१५ **अत एवेति** । आनन्दशब्देन कचिद्धर्मिग्रहणेपि गुणरूपानन्दस्य ब्रह्मव्यतिरिक्तत्वादेवेत्यर्थः ।

२१०–५ **अतः प्रधानेति** । पूर्वस्मिन्नीक्षत्यधिकरणेऽचेतनात्प्रधानात्परस्य ब्रह्मणोऽर्थान्तरत्वं सिद्धम् । अस्मिन्नधिकरणे तु चेतनाजीवादर्थान्तरत्वं सिद्धमिति भावः ॥ २० ॥ ( ६ )

—८–९ **कामादिति** । सोकामयत ( तै. २।६ ) इति श्रुतौ कामाज्जगत्सृष्टिरुच्यते । स एको ब्रह्मण आनन्दः (तै. २।८।१) इति श्रुतावतिशयितानन्दयोगः प्रतिपाद्यते । एतस्मिन्...प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । ( तै. २।७।१ ) इति श्रुतौ भयाभयहेतुत्वमुच्यते ।

२१०–१२ अन्तरिति। उत्तरसूत्रादन्यशब्दोपकृष्यते। सूर्यमध्ये नेत्रमध्ये च श्रूयमाणः पुरुषो जीवादन्यः परं ब्रह्मैव। तदसाधारणापहतपाप्मत्वादिधर्मोपदेशादिति सूत्रार्थः।

—१३–२० य एष इति। हिरण्मय इति हिरण्यरूपसादृश्यान्निर्देशः कपिना सूर्येणास्यते विकास्यत इति कप्यासम्। पुण्डरीकं रक्ताम्भोजम्। पाप्मा पातकम्। गेष्णो गानविशेषः। श्रुत्यर्थस्तु य एष सूर्यमण्डलस्य मध्य उज्ज्वलो रमणीयश्मश्रुकेशो रमणीयसर्वावयवः पुरुषो दृश्यते तस्य सूर्यविकासिकमलवन्नेत्रे। तस्य पुरुषस्योदिति नाम। यतः स पुरुषः सर्वपातकेभ्य उद्गतः। एतादृशं तं पुरुषं यो वेत्ति सोपि पातकादुद्गच्छति। ऋक्सामैतद्वयं तद्गानरूपम्। इति देवतासंबन्धेनोपदिष्टम्। अथाध्यात्मसंबन्धेनोपदिश्यते। य एष नेत्रमध्ये पुरुषो दृश्यते स एवर्ग्यजुःसामात्मोक्थादिशब्दात्मा ब्रह्म च। सूर्यमण्डलमध्यस्थपुरुषस्य यद्रूपं यन्नाम यच्च गानं तदेव सर्वमस्य नेत्रमध्यस्थपुरुषस्येति। अत्रोक्थस्वर्गादित्रय्यपेक्षया पृथक्परिगणनं गोबलीवर्दन्यायेन (वि. दी.)।

२११–२ पुण्योपचयेति। पुण्याधिक्येन प्राप्तमैश्वर्यं यस्य तादृश इत्यर्थः।

—४ सशरीरत्वेति। हिरण्यश्मश्रुरित्यादिश्रुत्या तस्य पुरुषस्य सशरीरत्वं बोध्यते।

—६ अत एवेति। शरीरसंबन्धस्य कर्ममूलप्रियाप्रिययोगार्थत्वादेव हि कर्मसंबन्धरहितो मोक्षोऽशरीरतया प्राप्य इत्युच्यत इत्यर्थः।

—१० लोककामेशत्वादीनि। स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च (छा. १।६।८) इति श्रुतौ सूर्यमण्डलोर्ध्ववर्तिलोकानां देवभोग्यभोगोपकरणभोगस्थानानां च नियन्तृत्वं सूर्यमण्डलमध्यस्थपुरुषस्योक्तम्। तथा स एष एवंतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च (छा. १।७।६) इति श्रुतावक्षिस्थानादधोवर्तिनां लोकानां मनुष्यभोग्यादीनां च नियन्तृत्वमक्षिमण्डलमध्यस्थपुरुषस्योक्तम्।

—१७ न जीवातिरिक्त इति। अपहतपाप्मत्वादिश्रुतयश्च नाकर्मवश्यतां वदन्ति किं तु केवलपुण्यहेतुकशरीरवतः पापराहित्यं वदन्तीति पूर्वपक्ष्याशयः।

२१२–८ अपहतपाप्मत्वमिति। यद्यपि पाप्मशब्दः पातकपरस्तथाप्यत्र पुण्यपापरूपोभयविधकर्मपरः। न सुकृतं न दुष्कृतं सर्वे पाप्मानोतो निवर्तन्ते (छा. ८।४।१) इति श्रुत्यन्तरानुरोधात्। किं च लौकिकत्वे सत्यनिष्टफलसाधनत्वं पाप्मशब्दस्य प्रवृत्तिनिमित्तम्। तच्च पुण्येप्यस्ति। पुण्यफलस्य स्वर्गादेरपि मुमुक्षुदृष्ट्याऽनिष्टत्वात्।

—११ स्वरूपोपाधिकम्। स्वाभाविकम्।

२१३-८ **स तु स्वाभिमत इति** । यथा परस्य ब्रह्मणो धर्मिस्वरूपं स्वाभाविका गुणाश्च प्रामाणिकत्वादङ्गीक्रियन्ते तथा विलक्षणशरीरमप्यभ्युपगन्तव्यम् ।

—१४ **यौवनादीति** । आदिशब्देन पराक्रमादयो विवक्षिताः ।

—१६ **तत्तत्प्रतिपत्तीति** । तेषामुपासकानां प्रतिपत्तिर्ज्ञानं यथा स्यात्तथा तदनुरूपं संस्थानमाकारो यस्य तादृशं शरीरं करोतीत्यर्थः ।

—१६-७ **अपारकारुण्येति** । कारुण्यं परदुःखासहिष्णुत्वम् । महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं सौशील्यम् । दोषेपि गुणत्वबुद्धिर्वात्सल्यं दोषादर्शित्वं वा । यथा मातुः पुत्रे । दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वमौदार्यं प्रभूतं दत्वाप्यतृप्तत्वं वा । एते गुणा उपासकानुग्रहोपयुक्ताः ।

२१४-२१ **विद्युतः** । विद्युद्वर्णात् ।

२१५-२ **अजायमान इति** । अनेन कर्महेतुकसुखाद्यर्थप्राकृतदेहसंगतिरूपजन्मनो निषेधः क्रियते । विजायत इत्यनेन चेच्छाहेतुको जगद्रक्षणार्थो योऽप्राकृतदेहस्तदधिष्ठानरूपजन्मनो विधिः प्रतिपाद्यते । अजोपीति स्मृतावप्यज इत्यस्य संभवामीत्यस्य चैतदेव तात्पर्यम् ।

—९ **आनुषङ्गिक इति** । उद्देश्यान्तरप्रवृत्तस्य प्रसङ्गात्प्राप्तस्तदितरः कार्यविशेषः । यथा भो बटो भिक्षामट यदि गां पश्येस्तां चानयेति । अत्र भिक्षार्थं प्रवृत्तस्य दैवाद्गोदर्शनात्तस्या आनयनमानुषङ्गिकम् । अत्र च साधुपरित्राणोद्देशेन संभूतस्य प्रसङ्गात्प्राप्तो दुष्कृतां विनाश आनुषङ्गिकः ।

—१३ **मायेति** । अत्र मायाशब्दस्य वयुनशब्दस्य च ज्ञानार्थकत्वं प्रतिपाद्यते ॥ २१ ॥

२१६-९-१२ **य आत्मनीति** । बृहदारण्यके माध्यंदिनशाखास्थोयं पाठः । काण्वशाखायां तु यो विज्ञाने तिष्ठन्निति पाठः । तत्र विज्ञानशब्दो जीवात्मपरः । समानप्रकरणे, शाखान्तरे विज्ञानशब्दस्थान आत्मशब्देन निर्देशदर्शनात् । **यस्याक्षरमिति** । अनेन कारणावस्थायामपि भेदो बोध्यते । अक्षरमचित्समष्टिर्मसृष्टा पुरुषसंसृष्टिः । मृत्युश्चित्समष्टिसंसृष्टाऽचित्समष्टिः ( श्रु. ) ॥ २२ ॥ ( ७ )

२१७-४ **इदानीमिति** । पूर्वं सद्ब्रह्मात्मादिसाधारणशब्दानां परमात्मार्थकत्वं प्रदर्श्य संशयनिरासः कृतः । इदानीमाकाशादिशब्दानां भूताकाशाद्यर्थकतयाऽसाधारणत्वेन प्रसिद्धानां परमात्मार्थकत्वं प्रदर्श्य विपर्ययनिरासः क्रियत इति भावः ।

—१० **अस्य लोकस्येति** । अस्य पृथिवीलोकस्य का गतिरिति शालावत्पुत्रेण शिलकेन पृष्टो जिवलपुत्रः प्रवाहण आकाश इत्युक्तवान् । सर्वाणि भूता-

न्याकाशादेवोत्पद्यन्ते तत्रैव लीयन्ते। एभ्यो भूतेभ्यः सकाशादाकाशो ज्यायान्। ज्यायस्त्वं नाम सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः। तथैतेषामाकाश एव परायणं परमगतिः परमप्राप्य इति श्रुत्यर्थः।

२१७-१३ **संदेह इति**। आकाशशब्दस्य भूताकाशरूपेऽर्थे प्रसिद्ध्यतिशयात्किं भूताकाशोऽर्थ उत परायणत्वादिधर्मोपदेशात्परमात्मार्थ इति संदेहबीजम्।

—१६ **व्युत्पत्तिसिद्ध इति**। यद्यप्याकाशत आसमन्तात्प्रकाशत इत्याकाशयति परान्प्रकाशयतीति वा व्युत्पत्तिराकाशशब्दस्य परमात्मन्यपि संभवति तथापि योगाद्रूढिर्बलीयसीति न्यायाद्रूढ्यर्थो भूताकाश एव ग्राह्य इत्याशयः।

२१८-५ **साधारणाकाराः**। साधारणरूपाः। अनिश्चितार्थविशेषाः।

—७ **तस्यापीति**। आत्मशब्दस्य चेतनमात्रार्थकत्वं न संभवति। अचेतनमृदादिष्वात्मशब्दप्रयोगदर्शनात्।

—८ **आप्नोतीति**। व्याप्नोतीत्यर्थः। सर्वमिदं जगदाकाशेन व्याप्तं दृश्यते। तथा चावयवशक्त्याप्यात्मशब्दस्याकाशार्थकत्वं सिद्धमिति भावः।

—१० **गौणा इति**। गौणत्वं च प्रागुक्तम् ( श्रीभाष्य-पृ. १७२ प. १८ )।

—११ **साधारणशब्दैरेवेति**। न त्वसाधारणैर्निश्चितार्थविशेषैराकाशादिशब्दैः। यदि परमात्मभूताकाशेतदुभयार्थवाचकैः सदादिभिश्चेतनाचेतनसाधारणशब्दैरेव जगत्कारणं प्रतिपादितं स्यात्तदेक्षणं किं चेतननिष्ठतया मुख्यमुताचेतननिष्ठतया गौणमित्याशङ्का युक्ता। मुख्यार्थपरिग्रहेण समाधानं च युक्तं स्यात्। परं त्वचेतनमात्रार्थकतया प्रसिद्धैरसाधारणैराकाशादिशब्दैरपि जगत्कारणस्य प्रतिपादनात्तत्र च मुख्येक्षणस्यासंभवाद्गौणस्यैव ग्राह्यत्वावश्यंभावाच्छङ्कैव नोदेतीति भावः।

—१३ **अर्थस्वाभाव्यात्**। ईक्षणरूपार्थस्य स्वभावतश्चेतननिष्ठत्वाज्जगत्कारणं चेतनः परमात्मैवेति यो निश्चयः कृतः स न युक्तः। आकाशशब्देनाचेतनरूपविशेषार्थस्य निश्चयादित्यर्थः।

—१५ **कार्यत्वमिति**। तथा च कार्यभूतस्य परमकारणत्वं न युक्तमित्यर्थः।

२१९-६ **उपपन्नतर इति**। परमात्मन आकाशादनतिरिक्तत्वेन तस्याकाशशब्देन निर्देशो युक्त एवेत्यर्थः।

—८ **आकाश इति**। आकाशशब्दनिर्दिष्टः परमात्मैव। सर्वाणि ह वेत्यादिश्रुतौ प्रसिद्धवन्निर्दिश्यमानाज्जगत्कारणत्वादिलिङ्गादिति सूत्रार्थः।

—१४ **हेयस्येति**। भूताकाशस्याचेतनत्वेन स्वरूपानन्तर्भूतत्वाद्धेयत्वम्। तथा भूताकाशस्य बन्धहेतुत्वेन सकलपुरुषार्थविरोधित्वम्। सकलानां जीवानां यः पुरुषार्थो मोक्षस्तद्विरोधित्वमित्यर्थः।

२१९–२० **प्रसिद्धवन्निर्देशो हीति** । इह सूत्रे तद्धर्मोपदेशादित्यनुक्त्वा तल्लिङ्गादित्युक्तवतः सूत्रकारस्यात्र प्रसिद्धवन्निर्देशो हेतुतया विवक्षित इति गम्यते। प्रसिद्धवन्निर्देशश्च वाक्यान्तरप्रसिद्धार्थस्यानूद्य निर्देशः । अनुवादस्य च प्रमाणान्तरप्राप्त्यपेक्षेति पुरोवादसापेक्षत्वेन पुरोवादानुसारेणार्थनिश्चयो युक्तो न त्वनुवादनिरपेक्षस्य पुरोवादस्यानुवादानुसारेण । तथा चाकाशशब्दस्य भूताकाशरूपप्रसिद्धार्थवत्त्वेपि तस्यानुवादवाक्यगतत्वेन न तदनुसारेण पुरोवादस्थानां सद्ब्रह्मात्मादिशब्दानामचेतनार्थकत्वनिश्चयः पूर्वपक्षिकृतो युक्तः । किं त्वनुवादवाक्यमलक्ष्यीकृत्य पुरोवादस्थसदादिशब्दानामर्थस्वाभाव्येन निश्चितं चेतनार्थकत्वमेव युक्तम् । अनुवादस्य पुरोवादवाक्याविरुद्धार्थप्रतिपादनमेव च युक्तमिति बोध्यम् ।

२२०–६–११ **चेतनांशं प्रतीति** । चेतनांशो जीवः । तन्निरूपितकारणत्वमचेतनविशेषस्य भूताकाशस्य न संभवतीत्यर्थः । एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि परामर्शदशायामयोग्यतया निश्चितोर्थो न प्रतिपादयितुं शक्यत इत्यभिप्रायः ( श्रु. ) । **तदैक्षतेति** । सद्विद्यावाक्यशेषः । **सोकामयतेति** । ब्रह्मविदाप्नोतीत्यनुवाकवाक्यशेषः । अपूर्वार्थप्रतिपादनसमर्थं वाक्यं सदेव सोम्येत्यादि पुरोवादरूपम् । असंभावितार्थकेनानुवादरूपवाक्येन संभावितार्थकवाक्यानामन्यथाकरणं न युक्तमिति भावः ।

—१२ **गतिसामान्यम्** । अनेकवाक्यानां सामान्यतः प्रवृत्तिः । एकेन वाक्येनानेकवाक्यानि बाधितुं न शक्यन्ते ।

—२० **अर्थान्तरेति** । यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दात्तीररूपार्थान्तरप्रतीतिर्घोषाधिकरणत्वेन कृतं तन्निर्देशमपेक्षते तद्वत् ॥ २३ ॥ ( ८ )

२२१–९ **अत एवेति** । अत एव प्रसिद्धवन्निर्देशादेव प्राणशब्दनिर्दिष्टः परमात्मैव न तु प्रसिद्धप्राण इति सूत्रार्थः ।

—१०–१४ **प्रस्तोतरिति** । प्रस्तोता नामोद्गातुरङ्गभूतः सामवेत्ता ऋत्विग्विशेषः । स कस्यचिद्राज्ञो यज्ञे चक्रपुत्रेणोपस्तिनाऽैवमुक्तः–हे प्रस्तोतस्त्वत्कृतं प्रस्तावं या देवतानुगता । प्रस्तावभक्तावध्यस्य या देवतोपास्येति यावत् । तामविदित्वा यदि विदुषो मम समीपे प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । ततो भीतेन प्रस्तोत्रा स उपस्तिरेवं पृष्टः–यद्देवतासंबन्धेन त्वयैवमुक्तं तां देवतां त्वमेव ब्रूहीति । ततस्तेनोषस्तिना प्राण इत्युक्त्वेमानि भूतानि प्राण एव लीयन्ते प्राणादेव चोद्गच्छन्ति । सैषा प्राणस्वरूपा देवता प्रस्तावमनुगता । इमामजानानस्त्वं यदि स्वीयं कर्माकरिष्यस्ततस्ते मूर्धपातोभविष्यदित्युक्तम् । साम्नः प्रथमो भागः प्रस्तावः ।

१७–८ **अधिकाशङ्का त्विति** । अधिकाशङ्कापरिहार एवातिदेशसूत्रकरणस्य प्रयोजनम् । अधिकाशङ्काया अभावे त्वतिदेशसूत्रं विनाप्याकाशशब्दस्येव प्राण-

शब्दस्यापि परमात्मैवार्थ इति निश्चयसंभवात् । **प्रवृत्त्यादीति** । आदिशब्देन निवृत्तिरुच्यते ।

२२१-१९-२० **शिलाकाष्ठादिष्विति** । आदिशब्देनाकाशादिसंग्रहः । **तदभावात्** । प्राणाधीनस्थित्याद्यभावात् ॥ २४ ॥ ( ९ )

२२२-६ **जगदिति** । यतो जगत्कारणत्वस्य व्याप्यभूतेन येन केनापि धर्मेण युक्तमतोर्थान्तरवाचकतया प्रसिद्धैर्ज्योतिरादिशब्दैरभिधीयमानमपि परं ब्रह्मैवेत्यर्थः । अत्रायमेव गुणः कारणत्वाक्षेपक इति नियमो नास्तीति येन केनापीत्यनेन सूच्यते न तु लिङ्गाल्पत्वम् ( श्रु. ) ।

—९ **ज्योतिरिति** । ज्योतिःशब्दनिर्दिष्टः परमात्मैव । अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानादिति सूत्रार्थः ।

१०-२ **अथ यदत इति** । विश्वशब्दो व्यष्टिपरः । सर्वशब्दः समष्टिपरः । अनुत्तमेषु । नोत्तमो यस्मात्तथाविधेषु । दिवोऽप्राकृतस्थानविशेषस्योपरिष्टात्समष्टिव्यष्टिबहिर्भूतेषु स्वावधिकोत्तमरहितेपूत्तमस्थानविशेषेषु यज्ज्योतिर्दीप्यते तदिदमेव यत्पुरुपस्यान्तर्जाठराग्निरूपं दीप्यत इति श्रुत्यर्थः ।

—१७-२२३-१ **परमात्मव्याप्तेति** । न ह्यत्र वाक्ये परमात्मस्वव्याप्यं सर्वजगत्कारणत्वादि किंचिच्चिह्नं दृश्यते । **कौक्षेयज्योतिषा** । जाठराग्निना । अन्तः पुरुषे ज्योतिरित्यत्रायमैक्योपदेशः कृतः । **प्रसिद्धमेवेति** । न त्वादित्यादिप्रसिद्धज्योतिरपेक्षया जगत्कारणं ब्रह्म भिन्नमस्तीति पूर्वपक्ष्याशयः ।

२२३-३ **द्युसंबन्धितयेति** । श्रुतौ दिवः पर इत्युक्तत्वादस्य ज्योतिषो द्युसंबन्धितया निर्देशो बोध्यः ।

—५ **पादोस्येति** । सर्वा इति प्रथमाबहुवचनम् । छान्दसो विभक्तिलुक् । सर्वाणीत्यर्थः । सर्वाणि भूतानि कार्यजगदन्तर्गताचित्संसृष्टाश्चेतना अस्य परमात्मन एकः पादः । दिवि समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषेस्य परमात्मनोमृतं पादत्रयमित्यर्थः ( वि. दी. ) । अस्यां श्रुतौ दिवीत्यनेनैतदुत्तरश्रुतौ चाथ यदत इत्यत्र दिव इत्यनेन वाक्यद्वये द्युसंबन्धस्य प्रतिपाद्यमानत्वादुभयत्राप्येकमेव निर्दिष्टमिति प्रत्यभिज्ञायते । पादोस्येत्यत्र प्रतिपादितस्य सर्वभूतपादत्वस्य परमात्मन्येव संभवेन तत्र परमात्मैव निर्दिष्ट इति निश्चयादुत्तरत्र ज्योतिःशब्दघटितश्रुतावपि परमात्मैवेति निश्चयो भवतीति भावः ।

—११ **तदात्मकत्वेति** । तद्ब्रह्मात्मा यस्य कौक्षेयज्योतिष इति बहुव्रीहेस्त्वप्रत्ययः । ब्रह्मशरीरभूतस्य कौक्षेयज्योतिषो जाठराग्नेर्ब्रह्मात्मकत्वानुसंधानं कर्तव्यम् । तत्पूर्विका तस्योपासना च द्विविधा दर्शनं श्रवणं च । दर्शनं साक्षात्कारः । यदस्मिञ्छरीरे हस्तस्पर्शेनोष्णिमा ज्ञायते स एव साक्षात्कारः । तथा

कर्णावङ्गुलिभ्यां पिधाय यच्छब्दज्ञानं भवति तदेव श्रवणम्। द्विविधोपासनायाः फलं चोपासकस्य क्रमेण चक्षुष्यत्वं श्रुतत्वं च । तत्र चक्षुष्यत्वमाभिरूप्यम्। श्रुतत्वं कीर्तिमत्त्वम्। तथा च यदस्मिन्नन्तः पुरुषे ज्योतिस्तदिदमेवेत्यत्रेदमेवेत्यनेन न कौक्षेयज्योतिषो जाठराग्नेर्ब्रह्मणा सह सर्वथैक्यं बोध्यते। किं तु ब्रह्मात्मकत्वम्। ब्रह्मशरीरत्वमिति यावदिति न कश्चिद्विरोधः॥ २५॥

२२३–१५ छन्द इति। पादोस्येति पूर्वश्रुतौ न ब्रह्मणोभिधानम्। कुतः। गायत्री वा इदं सर्वमिति गायत्र्याख्यच्छन्दसः प्रकृतत्वेन तत्र गायत्रीछन्दस एवाभिधानादिति चेन्न। तथा चेतोर्पणनिगमात्। ब्रह्म यथा गायत्रीसादृश्याद्गायत्रीरूपतया दृश्येत तथा ब्रह्मणि चेतसोनुसंधानोपदेशात्। अन्यत्राप्येवं दर्शनं भवति यच्छन्दोवाचकस्य शब्दस्य सादृश्यादर्थान्तरे प्रयोग इति सूत्रार्थः।

२२४–१ तावानस्येति। अस्या एवर्च उत्तरार्धे पादोस्येति। तथा च पादोस्येत्यत्र न ब्रह्मणोभिधानमित्याशयः।

—४ छन्दोमात्रस्येति। गायत्री वा इदं सर्वमिति प्रतिपादितं यद्गायत्र्या एतत्सर्वात्मकत्वं तद्गायत्रीछन्दसो नोपपद्यत इत्यर्थः।

—६ फलायेति। पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद (छा. ३।१२।९) इति श्रुतौ ब्रह्मणि गायत्रीसादृश्यानुसंधानं कुर्वतो मोक्षरूपं फलं प्रतिपाद्यते। पूर्णाम्। अनन्ताम्। अप्रवर्तिनीम्। स्थिराम्। अनन्तस्थिरा श्रीर्मुक्तैश्वर्यमेवेति भावः।

—९ क्वचिदिति। गायत्रीछन्दसः प्रायः पादत्रयात्मकत्वेन क्वचिदित्युक्तम्।

—१०–१ इन्द्र इति। इन्द्रः शचीपतिरित्येकः पादः। बलेन पीडित इति द्वितीयः। दुश्च्यवनो वृषेति तृतीयः। समित्सु सासहिरिति चतुर्थः।

—१३ ते वा एत इति। वाय्वग्निसूर्यचन्द्रोदकरूपा आधिदैविकाः पञ्च पदार्थाः। तथा प्राणवाक्चक्षुःश्रोत्रमनोरूपा आध्यात्मिकाः पञ्च पदार्थाः। मिलित्वा दश संपद्यन्ते। विराट्छन्दसश्च प्रतिपादं दशाक्षराणीति दशसंख्यासाम्याद्वाय्वादिषु दशसु च्छन्दोवाचकस्य विराट्शब्दस्य प्रयोग इति भावः॥ २६॥

—१७ भूतादीति। भूतपृथिवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदा (छा. ३।१२।५) इति भूतादीनां पादत्वव्यपदेशो ब्रह्मण्येवोपपद्यत इति च ब्रह्मैव गायत्रीशब्दनिर्दिष्टमिति गम्यत इति सूत्रार्थः (वे. दी.)। तत्र भूतमात्रवर्गः। पृथिव्ययं लोकः कर्मार्जनभोगस्थानरूपः। शरीरं भोगोपकरणम्। हृदयमात्मनः स्थित्यनुगुणः प्रदेशविशेषः (श्रु.)॥ २७॥

२२५–७–८ अर्थस्वभावैक्येन। उपरिस्थितिरूपार्थैक्येन।

२२५-१२-८ परमात्मन एव ज्योतिःशब्दाभिधेयत्वे हेत्वन्तरमाह—तावानस्येति। अथ यदतः परो दिवो ज्योतिः (छा. ३।१३।७) इति श्रुतौ ज्योतिःशब्दाभिधेयस्याप्राकृतं तेजः प्रतिपाद्यते। तच्चैतावानस्येति श्रुतिप्रतिपादितस्य ब्रह्मण एव संभवति। वेदाहमेतम् (तै. आ. ३।१३) इति श्रुतौ ब्रह्मणोप्राकृतरूपाभिधानात्। यस्य रूपमप्राकृतं तस्य तेजसाप्यप्राकृतेनैव भवितव्यमिति ॥ २८ ॥

(१०)

—२१ इदानीमिति। इन्द्रादिशब्दैः प्रतिपादितोपि परमात्मैव। जगत्कारणत्वस्य व्याप्यभूतं यदमृतत्वं तत्प्राप्तिसाधनीभूतोपासनाकर्मत्वेन श्रुतत्वात्। न हि परमात्मनोन्यस्योपासनयामृतत्वं प्राप्यते।

२२६-३ प्राण इति। तथेति शब्दः प्रकारवचनः। उपास्यतयोपदिष्टं प्राणशब्दाभिधेयं परं ब्रह्म। परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्य प्राणशब्दाभिधेयस्यानुगमनादिति सूत्रार्थः। अनुगमः पूर्ववाक्यप्रतीतस्योत्तरवाक्यसंबन्धः। दृश्यते चास्योत्तरत्रानन्दादिशब्दैः सामानाधिकरण्यम्। प्राकरणिकस्य प्राणशब्दाभिधेयस्यैव चेन्द्रशब्दाभिधेयत्वादिन्द्रशब्दाभिधेयमपि परं ब्रह्मैवेत्यर्थात्सिध्यतीति सूत्रकाराशयः।

—४-८ प्रतर्दन इति। युद्धेनेति पौरुषेणेति चोपलक्षणे तृतीया। युद्धं युद्धसाधनबलम्। पौरुषं शौर्यम्। ताभ्यां युक्तो दिवोदासपुत्रः प्रतर्दननामेन्द्रस्य प्रियं धाम स्वर्गरूपं स्थानमुपगतः। ततो वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः स्वयमज्ञत्वाद्धिततमं वरमजानानः सन्निन्द्रं प्रत्युवाच। हे इन्द्र सर्वज्ञस्त्वं मनुष्याय मादृशाय हिततमं यं वरं मन्यसे तादृशं वरं त्वमेव वृणीष्वेति। वृणीष्वेत्यस्य देहीत्यर्थः। तत इन्द्र उवाच। प्रज्ञात्मा जीवो जीवशरीरकोहं प्राणोस्मि प्राणशरीरकोस्मि तादृशं मामायुरमृतमिति प्रकारद्वयेन त्वमुपास्स्वेति श्रुत्यर्थः।

—१० इन्द्रप्राणेति। इन्द्रस्य प्रियं धामेत्युपक्रम इन्द्रशब्दनिर्दिष्टत्वादग्रे च प्राणोस्मि प्रज्ञात्मेत्यादौ प्राणशब्दनिर्दिष्टत्वाच्चेन्द्रप्राणशब्दनिर्दिष्ट इत्युक्तम्।

१६-७ जगत्कारणोपासनस्यैवेति। यत्र मुमुक्षूपास्यत्वं तत्र जगत्कारणत्वमिति व्याप्तेरिति भावः। तस्य तावदेवेति। जगत्कारणोपासकस्य शरीरपातमात्रमपेक्षते मोक्ष इति श्रुत्यर्थः ॥ २९ ॥

२२७-६ न वक्तुरिति। अध्यात्ममिति विभक्त्यर्थेव्ययीभावः। आत्मनीत्यर्थः। न प्राणशब्दनिर्दिष्टः परमात्मा। मामेव विजानीहि (कौ. ३।२) इत्यत्र प्रज्ञातजीवभावस्येन्द्रस्य वक्तुः स्वात्मन उपास्यत्वोपदेशादिति चेन्न। यतोस्मिन्प्रकरणे परमात्मनि संबध्यमानवस्तूनां बहुत्वमुपलभ्यते। अथ वा परमात्मासाधारणधर्मसंबन्धबहुत्वमुपलभ्यत इति सूत्रार्थः।

२२७–१०–२ **वक्ता हीन्द्र इति** । अयं हि पूर्वपक्षिसंमतः श्रुत्यभिप्रायः । **त्रिशीर्षाणमिति** । अहमिन्द्रस्त्रिशीर्षाणं त्रिशिरस्कं त्वाष्ट्रं वृत्रासुरं हतवानस्मीति श्रुत्यर्थः । **त्वाष्ट्रवधादिभिरिति** । अत्रादिशब्देन शालावृकयतिप्रदानादिसंग्रहः । त्वाष्ट्रमहनमित्युत्तरमरुन्मुखान्यतीञ्छालावृकेभ्यः प्रायच्छम् (कौ. ३।१) इति श्रुतिः । रौतीति रुद्वेदः । स मुखे न विद्यते येषां तेऽरुन्मुखा वेदबाह्याः । तादृशान्यतीञ्छालावृकेभ्यो भक्षणाय प्रायच्छं दत्तवानस्मीति तदर्थः ।

—१९–२१ **रथस्येति** । यथा रथस्य नाभौ रथचक्रमध्यवर्तिसरन्ध्रकाष्ठविशेषेऽरशब्दिताः काष्ठविशेषाः परितोर्पिताः । तत्र च नेमिशब्दितं वलयाकारं काष्ठं यथार्पितमेवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतना अर्पिताः । तेषु च भूतमात्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः ( वि. दी. ) । नन्वत्र प्रज्ञामात्राशब्देन जीवग्रहणं न युक्तम् । यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः ( कौ. ३।८) इति पूर्ववाक्ये प्रज्ञामात्राशब्देन वागादीनां ग्रहणेनात्रापि तथैवौचित्यादिति चेन्न । जीवस्य प्रज्ञाशब्दमुख्यार्थत्वात् । यो वै प्राणः सा प्रज्ञा ( कौ. ३।३ ) इति पूर्वतरवाक्ये प्रज्ञाशब्देन जीवस्य निर्दिष्टत्वाच्च । यद्धि भूतमात्रा ( कौ. ३।८ ) इत्यत्र भूतमात्राप्रज्ञामात्राणामन्योन्याधाराधेयभावप्रतिपादनेन जीवे च भूतमात्रानिरूपिताधेयत्वस्यासंभवेन पूर्वनिर्दिष्टस्य जीवस्य त्यागेप्यत्र तत्त्यागे मानाभावात् ॥ ३० ॥

२२९–३ **प्रज्ञातजीवभावस्येति** । त्वाष्ट्रवधादिभिरत्र वक्तुर्जीवभावो ज्ञायते । तथा च जीवत्वादनुपास्यत्वेन मामुपास्स्वेति कथमुक्तवानित्यर्थः ।

—५ **शास्त्रेति** । परमात्मा जीवानामप्यात्मेत्यन्तः प्रविष्टेत्यादीनि शास्त्राणि प्रतिपादयन्ति । तथा च शास्त्रेण जाता या स्वस्यात्मभूते परमात्मनि स्वस्यात्मेति दृष्टिस्तयेन्द्रस्य जीवस्यैव सतः स्वात्मत्वेनोपास्यभूतपरमात्मोपदेशोयं वामदेववदिति सूत्रार्थः । जीवात्मवाचिनः शब्दा जीवात्मशरीरकं परमात्मानमेव वदन्तीति विदितशास्त्रार्थस्य मामेव विजानीहि मामुपास्स्वेति स्वात्मवाचिशब्देन परमात्मोपदेशोयं न विरुध्यते ( वे. दी. ) ।

—७ **प्रमाणान्तरेति** । शास्त्रदृष्टिशब्दस्य व्यवच्छेद्यमेतत् ( श्रु. ) ।

२३०–७–८ **सर्वगत्वादिति** । अनन्तस्य परमात्मनः सर्वव्यापित्वात्स परमात्मैवाहं मच्छरीरकत्वेन स्थितः । मत्तो मच्छरीरकात्परमात्मनः सर्वं जायते । अहं मच्छरीरकः परमात्मैव सर्वम् । सनातने मयि मच्छरीरके परमात्मनि सर्वमित्यर्थः ॥ ३१ ॥

—१२ **जीवेति** । मुख्यः प्राणः पञ्चवृत्तिः । मुख्यशब्द इन्द्रियादिव्यावृत्त्यर्थः ( श्रु. ) ।

२३०–१४ **न वाचमिति** । न केवलं मद्वचनमेव विजानीहि वक्तारं मां च विजानीहीत्येवमिन्द्रेण प्रतर्दनायोक्तम् ।

२३१–२ **स्वरूपेणानुसंधानम्** । अद्वारकगुणविशिष्टानुसंधानम् ।

—१० **भोक्तृशरीरतयेति** । अत्र भोग्यभोगोपकरणशरीरतयेत्यत्र च बहुव्रीहेस्तल् । भोक्ता भोग्यं प्रेरितारं च मत्वा ( श्वे. १।१२ ) । सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ( श्वे. १।१२ ) इत्यादावपि त्रिविधोपासनं दृश्यते ।

—११ **इहापीति** । आनन्दोजरोमृतः ( कौ. ३।८ ) इति स्वेन रूपेणानुसंधानम् । प्राणोस्मि ( कौ. ३।३ ) इत्यचिद्विशिष्टानुसंधानम् । मामुपास्स्व ( कौ. ३।२ ) इति चिदचिद्विशिष्टानुसंधानमिति बोध्यम् ॥ ३२ ॥ ( ११ )

## अथ प्रथमाध्यायस्य द्वितीयः पादः प्रारभ्यते ॥

२३२–३ **प्रथमे पाद इति** । प्रथमपादस्योत्तरपादेन संगतिं दर्शयितुं प्रथमपादस्थैकादशाधिकरणानां संक्षेपेणार्थः क्रमशः प्रतिपाद्यते ।

—१२ **प्रत्यपादीति** । प्रत्यपादि, अभ्यधायि, अब्रूम, उपापीपदाम, समादधीमहि, उदैरिराम, समगरिष्महि, आतिष्ठामहि, अब्रूमहीति क्रियापदानि नव समानार्थकानि ।

२३३–४ **स्वाभाविकेति** । स्वाभाविकेत्यस्यानवधिकातिशयेत्यस्य चानन्दादिषु सर्वत्रान्वयः । नावधिर्यस्य तादृशोतिशयो यस्येति बहुव्रीहिगर्भो बहुव्रीहिः ।

—१४ **परमकारणेति** । परमकारणस्यासाधारणधर्मभूतं यदमृतत्वं तत्प्राप्तिः परमकारणसाम्यापत्तिस्तद्धेतुभूत इत्यर्थः ।

—१७ **अतिपतितेति** । आगमव्यतिरिक्तसकलेतरप्रमाणाविषय इत्यर्थः ।

—२१ **प्रधानेति** । अथ परा ( मु. १।१।५ ) इत्यादीनि वाक्यानि प्रधानस्वरूपप्रतिपादकानि । अथ खलु क्रतुमयः (छा. ३।१४।१) इत्यादीनि वाक्यानि क्षेत्रज्ञस्वरूपप्रतिपादकानि । य एषोक्षिणि (छा. ४।१५।१) इत्यादीनि वाक्यान्यन्तर्भूतवस्तुविशेषस्वरूपप्रतिपादकानि । अन्तर्भूतवस्तुविशेषश्च प्रतिबिम्बादिः ।

२३४–६–८ **अथ खल्विति** । क्रतुशब्दस्योपासनमर्थः । अयं पुरुषः क्रतुमयः क्रतुप्रधान उपासनप्रधानः । यस्मादिह लोके पुरुषो यथोपासनस्तथैतेन प्रेत्यामुष्मिँल्लोके भवति । तं यथा यथोपासते तथैव भवति (मुद्र० ख. ३) इति श्रुत्यन्तरात् । तस्मात्स पुरुषः क्रतुं ब्रह्मोपासनं कुर्वीत । उपास्यश्च मनोमयो निर्मलीकृतमनोमात्रग्राह्यः । श्रुतौ हि ग्राह्यग्राहकत्वरूपसंबन्धविशेषाभिप्रायेण मनोमय इत्युक्तम् । प्राणः शरीरं यस्य स प्राणशरीरः । जगति सर्वेषां प्राणानां धारकः । भारूप आदित्यादिवद्भास्वररूप इत्यर्थः ।

२३४-१३-४ **न च सर्वमिति** । सर्वं खल्विदं ब्रह्मेति पूर्ववाक्येन ब्रह्मणि प्रतिपादिते तादृशब्रह्मणः किं कर्तव्यमित्याकाङ्क्षायां तस्य प्रकृतस्य ब्रह्मण एव स क्रतुं कुर्वीतेति वाक्य उपास्यत्वेन संबन्धं कृत्वाग्रे तदेव मनोमयत्वादिगुणानां विशेष्यं स्यादिति शङ्काशयः ।

—१५ परिहरति-**शान्त इति** । श्रुतौ हि सर्वं खल्वित्यादिवाक्योत्तरं शान्त उपासीतेति पठ्यते । शान्तिविशिष्टः सन्नुपासनां कुर्यादिति तदर्थः । सा च शान्तिः सर्वस्य ब्रह्मात्मकत्वदृष्टिं विना दुर्लभेति शान्त्युत्पत्तये ब्रह्मात्मकत्वोपदेशः पूर्वं प्रतिपादितः । तथा च तस्यान्यार्थतया निराकाङ्क्षत्वेन न तस्य ब्रह्मणः स क्रतुमित्यत्रोपास्यत्वेन संबन्धो नापि मनोमय इत्यादौ विशेष्यत्वेन संबन्ध इति भावः ।

—१९ परिहरति-**स्ववाक्योपात्तेनेति** ।

२३५-१ **मनोमय इति** । एतच्च स क्रतुं कुर्वीतेत्यत्रोपास्यप्रदर्शनार्थमेव निर्दिष्टं न त्वन्यार्थम् । संनिहितत्वात् । स क्रतुमित्यत्र कस्योपासनं कार्यमित्याकाङ्क्षा । मनोमय इत्यत्र च तादृशमनोमयेन किं कर्तव्यमित्याकाङ्क्षा । मनोमयादिपदानां षष्ठ्यन्तत्वेन विपरिणामे चैतदाकाङ्क्षाद्वयमपि निवर्तत इति तथैव संबन्धो युक्तो न तु निराकाङ्क्षस्य वाक्यान्तरस्थस्य ब्रह्मणः क्रतुं कुर्वीतेत्यत्र संबन्धः । तथा च मनोमयस्य भारूपस्य प्राणशरीरस्य क्रतुमुपासनां कुर्वीतेत्येवार्थो न तु पूर्ववाक्यनिर्दिष्टस्य ब्रह्मण उपासनां कुर्वीतेति ।

—४ **पूजार्थमिति** । जीवस्य महत्त्वप्रदर्शनार्थमित्यर्थः ।

—१२ **हृदेति** । हृदिति भक्तिरुच्यते । मनीषेति धृतिः । अभिक्लृप्तो ग्राह्यः ।

२३६-१ **अप्राण इति** । प्राणशरीर इत्यत्र परमात्मनः प्राणेन सहाधाराधेयभावसंबन्धो नियन्तृनियाम्यत्वरूपसंबन्धश्च विधीयते । अप्राण इत्यत्र परमात्मनः प्राणेन सहोपकरणोपकरणित्वरूपसंबन्धो निषिध्यते । तथा मनोमय इत्यत्र परमात्मनो मनसा सह ग्राह्यग्राहकभावसंबन्धो विधीयते । अमना इत्यत्रोपकरणोपकरणित्वरूपसंबन्धो निषिध्यते । यथा जीवस्य प्राणमनसी साधनभूते न तथा परमात्मन इत्यर्थः ।

—३ **अथ वा सर्वं खल्विति** । इदमेव सूत्रकृतोभिप्रेतम् । पूर्वव्याख्याने तु सूत्रस्थसर्वशब्दस्य प्रसिद्धोपदेशादिति हेतुघटकप्रसिद्धपदार्थेन्वयेन सूत्रे प्रतिज्ञार्थप्रतिपादकपदाभाव इत्यरुचिः । अस्मिन्व्याख्याने तु सूत्रस्थं सर्वत्रेति पदमेव प्रतिज्ञापरमिति बोध्यम् । जायत इति जम् । लीयत इति लम् । अनितीत्यन् । जनधातोर्लीधातोश्च डप्रत्ययः । अन्धातोः क्विप् । इदं सर्वं जगत्तस्माद्ब्रह्मणो जायते तत्रैव लीयते तेनैवानितीत्यतः सर्वात्मकं ब्रह्मेति शान्तः सन्नुपासीतेति श्रुत्यर्थः ।

२३६-६ **गुणोपादानार्थः** । गुणविधानार्थः ।

उपादेयाः । विधेयाः । यथाग्निहोत्रं जुहोतीति होमे विहिते दध्ना जुहोतीत्यत्र दध्नो होमसाधनत्वमात्रं विधेयं जुहोतीत्यनुवादस्तद्वत् ।

—११ **ब्रह्मादीति** । ब्रह्मशब्देनात्र चतुर्मुखस्य जीवविशेषस्य ग्रहणम् ।

—१४ **समस्तहेयेति** । समस्ताः सकला ये हेयास्त्याज्या जरामरणादयो धर्मास्तेषामाश्रयभूतं यच्चतुर्मुखादि सर्वं जगत्तत्स्वरूपत्वं परब्रह्मणो न संभवति । तस्य सर्वज्ञत्वेनेदं हेयमिति ज्ञानसत्त्वात् । सर्वशक्तित्वेन तन्निवारणे शक्तत्वाच्च ।

—१६ **सविशेषण इति** । यथा परमात्मेत्यत्र जीवव्यावृत्त्यर्थमात्मशब्दस्य परमेति विशेषणं तथा परं ब्रह्मेत्यत्रापि जीवव्यावृत्त्यर्थं ब्रह्मशब्दस्य परमिति विशेषणं दृश्यते । तथा च ब्रह्मशब्दस्य जीववाचित्वमप्यस्तीति सिद्धम् ।

—१७ **बृहत्त्वं चेति** । बृंहणाद्ब्रह्मेति ब्रह्मशब्दस्यावयवार्थोऽपि जीवे संभवतीत्याशयः ।

—१८ **अविदुष इति** । अज्ञानिनो जीवस्य यत्कर्म तन्निमित्तका एव जगज्जन्मस्थितिलयाः । जीवकृतकर्मानुरोधेनैव हीश्वरेण जगतो जन्मस्थितिलयाः क्रियन्ते । तथा च सर्वं खल्विदं ब्रह्मेत्यत्र तज्जलानिति हेतुर्निर्दिष्टो न विरुध्यते । तथा च जन्मादिहेतुत्वं बद्धस्य ब्रह्मत्वं तु शुद्धस्येति पूर्वपक्ष्याशयः ।

२३७-१ **तदात्मतयेति** । तस्य जगतो य आत्मा तत्स्वरूपेणेत्यर्थः ।

२३८-११-२ **जगज्जन्मेति** । जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तमिति पाठे जगज्जन्मस्थितिप्रलयकारणत्वं निमित्तं यस्येति जगत्तादात्म्यविशेषणम् । जीवस्य यज्जगज्जन्मस्थितिप्रलयकारणत्वं तन्मूलकं जीवस्य जगत्तादात्म्यं न संभवति । जीवस्य जगत्कारणत्वाभावादित्यर्थः । जगद्व्यापारेति सूत्रार्थः प्रागुक्तः ( विवृति-पृ. ७२ प. २२ ) ।

—१३ **जीवकर्मेति** । जीवकर्म निमित्तं येषां तत्त्वादित्यर्थः । जगज्जन्मस्थितिलयानां जीवकर्ममूलकत्वादिति यावत् ।

—१४ **तत्कर्मेति** । यद्यपि जीवकृतं कर्म जगतः कारणं तथापि न तत्कर्तृ नाप्युपादानम् । किं तु जगद्वैषम्यमात्रहेतुः । कर्ता त्वीश्वर एव । उपादानमपि स एव । किं च जगद्वैषम्यमात्रहेतुत्वमपि जीवकृतकर्मणो न जीवस्य । यथा देवदत्तकृतं चक्रं गृहीत्वा तत्सहायेन यज्ञदत्तेन घटे कृतेपि न तादृशघटकारणत्वं देवदत्तस्य तद्वत् । तथा च न जीवस्य जगत्कारणत्वकृतं तादात्म्यमस्तीति भावः ॥१॥

२३९-४ **मनसैकेनेति** । मनोमात्रग्राह्य इत्यर्थः । मनोमय इत्यवधारणगर्भम् । यथाऽब्भक्षो वायुभक्ष इत्यत्राप एव भक्षयति वायुमेव भक्षयतीति गम्यते तद्वत् ।

२३९-५ साधनसप्तकेति। इदं प्रागुक्तम् (श्रीभाष्य-पृ. ११ प. १४)।

—७ मलिनेति। यत्र हेयार्हत्वं तत्र मलिनमनोग्राह्यत्वमिति हि व्याप्तिः। परमात्मनि च मनोमय इत्यनेन परिशुद्धमनोग्राह्यत्वस्य बोधनेन मलिनमनोग्राह्यत्वाभावात्तद्व्याप्यभूतस्य हेयार्हत्वस्याप्यभावः सिध्यतीति बोध्यम्।

—९ आधेयमिति। आधेयमाश्रितम्। विधेयं नियाम्यम्। शेषभूतमङ्गम्।

—११ भास्वररूप इति। रूपशब्दो हि धर्मवाची। भाशब्दो दीप्तिपरः। दीप्तिधर्मकत्वं विग्रहद्वारकम् (श्रु.)।

—१३ सूक्ष्मेति। सूक्ष्मत्वं व्याप्त्यर्हत्वम्। स्वच्छत्वं निर्मलत्वम्।

—१८ परिशुद्धा इति। न तु जीवस्येव प्राकृताः। सत्यकामत्वानुगुण्यादिति भावः।

२४०-३ भुक्ता ब्राह्मणा इति। भुक्ता इत्यत्र व्यत्ययेन कर्तरि क्तप्रत्ययः। भुक्तमस्ति येषामिति भावार्थकक्तप्रत्ययान्तादर्शआदिभ्योच् (पा. सू. ५।२। १२७) इति पाणिनिसूत्रेणाच्प्रत्यये तु भुक्तशब्दस्यार्शआदिगणे पाठकल्पने गौरवम्।

—४ अवाकीति। वचेर्भावे घञ्। उक्तिरित्यर्थः। ततो नञा समासे मत्वर्थीय इन्प्रत्ययः। इन्प्रत्ययान्तेन नञ्तत्पुरुषो वा ॥ २ ॥

—११ बद्धमुक्तेति। यथा बद्धस्य निग्राह्यस्य निग्राहकेण परमात्मना सह स्वरूपैक्यं न संभवति तथानुग्राह्यस्य मुक्तस्याप्यनुग्राहकेण परमात्मना सह स्वरूपैक्यं न संभवतीति भावः ॥ ३ ॥

—१५ एतमिति। इतोस्माच्छरीरात्प्रेत्यैतं परमात्मानमभिसंभवितास्मि प्राप्तास्मीत्युपासकेनानुसंधानं कर्तव्यमिति श्रुत्यर्थः। तथा चोपास्यस्य ब्रह्मणः प्राप्तिकर्मत्वेन व्यपदेशादुपासकस्य जीवस्य प्राप्तिकर्तृत्वेन व्यपदेशाच्च जीवादन्यदेवेदं परं ब्रह्मेति सूत्रार्थः ॥ ४ ॥

—२० एष म इति। मदीये हृदय एव आत्मोपासनार्थमवस्थित इत्यनुसंधानं कर्तव्यमिति भावः। अत्रोपासकः शारीरो म इति षष्ठ्या निर्दिष्टः। उपास्यस्त्वात्मेति प्रथमया निर्दिष्टः। अयमेव शब्दविशेषः। विशेषत्वं चासमानविभक्त्यन्तत्वेन बोध्यम्।

२४१-२ व्रीहिर्वेति। अन्तरात्मन्निति सप्तम्यन्तं लुप्तविभक्तिकम्। व्रीह्यादिवत्सूक्ष्मोन्तरात्मनि जीवे विद्यमानः शुष्केन्धनानलवत्प्रकाशमानो हिरण्मयः पुरुष इत्यर्थः ॥ ५ ॥

—९-१३ सर्वस्येति। सर्वस्य भूतजातस्य हृदये सर्वं मत्संकल्पेन नियच्छन्नहमात्मतया संनिविष्टः। मत्तो मत्सकाशादेव सर्वेषां स्मृतिर्ज्ञानमपोहनं

च वर्तेते । पूर्वानुभूतविषयकमनुभवसंस्कारमात्रजं ज्ञानं स्मृतिः । इन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयो ज्ञानम् । ज्ञाननिवृत्तिर्वितर्को वापोहनम् । **यो मामिति** । असंमूढो मोहरहितः । **ईश्वर इति** । देहेन्द्रियावस्थप्रकृत्याख्यं यन्त्रमारूढानि सर्वभूतानि स्वकीयया सत्त्वादिगुणमय्या मायया भ्रामयन्गुणानुगुणं प्रवर्तयन्नीश्वरः सर्वनियमनशीलो वासुदेवः सर्वभूतानां हृद्देशे तिष्ठतीत्यर्थः ॥ ६ ॥

२४१–१६ **अर्भकौकस्त्वादिति** । अर्भकशब्दोल्पवाची । ओकःशब्दः स्थानवाची । व्यपदेशो व्यवहारः । निचाय्यो द्रष्टव्यः । सर्वं खल्विदमित्यत्र निर्दिष्टो न परमात्मा । अपि तु जीव एव । तस्य हृदयरूपाल्पस्थानकथनादणीयानित्यणीयःशब्देनाणीयस्त्वव्यवहाराच्चेति चेन्न । एवंरूपेण परमात्मन एवात्रोपास्यत्वात् । यथा महतोपि व्योम्नः सूच्यादिष्वल्पत्वानुसंधानं तद्वदिति सूत्रार्थः ।

२४२–२ **सर्वगतमिति** । सर्वेष्वन्तः प्रविश्यावस्थितम् । धीराः प्रज्ञाशालिनो भूतोपादानतया यत्पश्यन्तीति श्रुत्यर्थः ।

—७ **स्वाभाविकं महत्त्वमिति** । एतच्च महत्त्वं जीवे न संभवतीति जीवग्रहणं न युक्तम् । यद्यपि परमात्मग्रहणे तस्याल्पत्वं न संभवति तथाप्यल्पत्वप्रतिपादकश्रुतौ हृदयशब्दसंनिधानेनाल्पत्वस्यौपाधिकत्वसूचनान्न दोष इत्याशयः ।

२४३–९ **यस्य स्यादिति** । उक्तप्रकारेण यस्योपासकस्याद्धा निश्चयोस्ति तस्य प्राप्तौ विचिकित्सा संशयो नास्तीत्यर्थः ( वि. दी. ) ॥ ७ ॥

—१२ **संभोगेति** । वैशेष्यं विशेषः । स्वार्थे ष्यञ् ।

—१८ **तयोरिति** । तयोर्जीवेश्वरयोर्मध्येन्यतरो जीवः स्वादु परिपक्वं पिप्पलं कर्मफलं भुङ्क्ते । अन्यः परमात्मा त्वभुञ्जान एव प्रकाशत इत्यर्थः ॥ ८ ॥ (१)

२४४–१ **अत्तेति** । ब्रह्मक्षत्रौदनस्यात्ता परमात्मा । ब्रह्मक्षत्रशब्देन चराचरस्य कृत्स्नस्य जगतो ग्रहणात् । मृत्यूपसेचनो ह्योदनो न ब्रह्मक्षत्रमात्रम् । अपि तु चराचरात्मकं कृत्स्नं जगदेव ( वे. दी. ) ।

—३ **यस्य ब्रह्मेति** । ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगद्यस्यौदनो भवति विनाश्यं भवति यस्य मृत्युरुपसेचनं विनाशसाधनं भवति स निखिलचराचरसंहर्ता परमात्मा यत्र यस्मिन्प्रकारे स्थितो यत्प्रकारविशिष्टस्तत्प्रकारमित्थमिति को वेदेति सिद्धान्ते श्रुत्यर्थः । उपसेचनत्वं नाम स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वम् । यथा लवणादि ।

—७ **तत्संभवादिति** । ब्रह्मक्षत्रादिप्राणिनां स्त्रीपुरुषोभयरूपाणां परस्परभोग्यत्वम् । जीवस्य च न मृत्युवश्यत्वम् । तस्य नित्यत्वात् । किं तु शरीरस्य । तदपि जीवानुरोधेनैवेति मृत्युर्जीवस्य विधेयः । अबाधक इति यावत् । तथा च

लक्षणयौदनशब्दस्य भोग्यपरत्वं न तु विनाश्यपरत्वमुपसेचनपदस्य च विधेयपरत्वं न तु विनाशसाधनपरत्वमिति पूर्वपक्ष्याशयः ।

२४४–१२ **सोऽध्वन इति** । स समीचीनविज्ञानमनःशाली संसाराध्वपारभूतं परमात्मस्वरूपं प्राप्नोतीत्यर्थः । तथा चैतत्प्रकरणानुरोधात्पूर्वनिर्दिष्टोत्ता परमात्मैवेत्यत्तृत्वं संहर्तृत्वमेव न तु भोक्तृत्वमिति भावः ।

—१३ **तथा च मृत्युरिति** । मृत्यूपसेचनानुरोधेनाप्यत्तृत्वं संहर्तृत्वमेव ग्राह्यं न तु भोक्तृत्वम् । स्त्रीपुरुषयोः परस्परभोग्यत्वे मृत्योः सहायत्वाभावात् । तथा च यस्य ब्रह्म, मृत्युर्यस्येति वाक्यद्वयस्य परस्परानुगुण्येनैवार्थयोजना युक्तेति भावः । यद्यप्युपसेचनपदस्य विनाशसाधनपरत्वे विधेयपरत्वे वा लक्षणारूपो दोषस्तुल्य एव तथापि विशेषाकारेण लक्षणासंभवे साधारणाकारेण लक्षणा न युक्ता । न ह्यग्निर्माणवक इत्युक्तेग्निशब्दो द्रव्यत्वाभिप्रायेण वर्ण्यते किं तु द्रव्यत्वव्याप्यतेजस्त्वाभिप्रायेण । तद्वदत्र मृत्योरुपसेचनत्वं विनाशसाधनत्वरूपविशेषाकारेणैव न त्वबाधकत्वरूपसामान्याकारेणेति बोध्यम् ।

२४५–१ **तस्मादिति** । सोऽध्वन इत्यादिवाक्ये विष्णोः श्रूयमाणत्वान्मृत्यूपसेचनसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तम् । अतः परमात्मैवात्तेत्यर्थः ( श्रु. ) ॥ ९ ॥

—५–७ **महान्तं विभुम्** । महावैभवशालिनम् । **प्रवचनेन** । मननेन । **मेधया** । तीक्ष्णबुद्ध्या । तत्कृतनिदिध्यासनेनेति यावत् । **श्रुतेन** । श्रवणेन । एष परमात्मा यं साधकं प्रार्थयते तेन लभ्यः । प्रार्थनीयपुंसा लभ्यः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्य पुंसः । तत्प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिण्युपासकस्य प्रीतिर्भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवति । तस्योपासकस्यैष आत्मा परमात्मा स्वरूपं प्रकाशयति स्वात्मानुभवं प्रयच्छतीत्यर्थः ।

—९ **क इत्थेति** । तथा च नायमात्मेत्यादिना पूर्वनिर्दिष्टस्य परमात्मनो दुरवबोधत्वस्यैव यस्य ब्रह्म च क्षत्रं चेति प्रकृतविषयवाक्ये क इत्थेत्यनेन प्रत्यभिज्ञानात्सर्वमिदमेकमेव प्रकरणमिति प्रकरणभेदो न शङ्कनीय इति भावः ॥ १० ॥

—१३ **ऋतमिति** । ऋतमवश्यंभावि कर्मफलमनुभवन्तौ सुकृतस्य लोके सुकृतसाध्यलोकवर्तिनौ गुहां प्रविष्टौ हृदयगुहावर्तिनौ परार्धे उत्कृष्टे परमाकाशे वर्तमानावज्ञसर्वज्ञरूपतया छायातपशब्दनिर्दिष्टौ जीवेश्वरौ त्रिणाचिकेतास्त्रिःकृत्वो नाचिकेतोऽग्निश्चितो यैस्तादृशाः पञ्चाग्नयः पञ्चाग्निपरिशुश्रूषापरिशुद्धान्तःकरणा ब्रह्मविदश्च वदन्तीति सिद्धान्तेऽर्थः । शङ्काकृता त्वस्यां श्रुतौ प्राणो जीवश्चेत्येतद्द्वयं बुद्धिर्जीवश्चेत्येतद्द्वयं वा निर्दिष्टमिति गृहीतम् ।

—१९ **यथाकथंचिदिति** । उपकरणत्वेनान्वय इत्यर्थः । असिश्छिनत्तीतिवत्करणे कर्तृत्वारोपात्पिबन्तावित्युक्तिः ।

२४६-८ तं दुर्दर्शमिति। दुर्दर्शं द्रष्टुमशक्यं गूढं कर्मरूपाविद्यातिरोहितं सर्वभूतानुप्रविष्टं गुहाहितं हृदयगुहावर्तिनं गह्वरेष्ठमात्मान्तर्यामिणं पुराणमनादिमध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तेन योयमधिगमो जीवात्मज्ञानं जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वात्तेन हेतुना देवं परमात्मानं मत्वा ध्यात्वा विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः ( वि. दी. )।

—१३ भूतेभिरिति। छान्दस ऐसादेशाभावः।

—१८ छत्रिण इति। छत्रिष्वच्छत्रिषु च गच्छत्सु तत्र केषांचिदच्छत्रित्वेपि समुदाये लक्षणया छत्रिशब्दः प्रयुज्यते तद्वदत्र परमेश्वरस्य कर्मफलभोक्तृत्वाभावेपि लक्षणया जीवेश्वरयोरुभयोः पिबन्ताविति प्रयुक्तमिति भावः।

—१९ यद्वेति। जीवः कर्मफलं पिबति परमात्मा तु तं पाययति। भोक्ता जीवः प्रयोज्यः। भोजयिता परमात्मा प्रयोजकः। अस्मिन्पक्षे छत्रिण इतिवल्लक्षणा नाश्रयणीयेति लाघवम्। किं च जीवेश्वरग्रहण एव तयोरुभयोश्चेतनत्वेन पिबन्ताविति निर्देशः स्वरसतः संगच्छते न तु प्राणजीवग्रहणे बुद्धिजीवग्रहणे वेति बोध्यम् ॥ ११ ॥

—२१ विशेषणाच्चेति। अस्मिन्प्रकरणे परमात्मोपास्यत्वेन प्राप्यत्वेन च विशिष्यते तथा जीव उपासकत्वेन प्रापकत्वेन च विशिष्यत इति तयोरेव जीवपरमात्मनोर्ऋतं पिबन्तावित्यत्र ग्रहणं युक्तमिति सूत्रार्थः।

२४७-४ ब्रह्मात्मकत्वेनेति। ब्रह्मात्मा यस्य तत्त्वेनावगम्य निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्येमां संसाररूपानर्थशान्तिमेतीत्यर्थः।

—५ यः सेतुरिति। यः परमात्मेजानानां यज्वनां सेतुराधारभूतः कर्मफलप्रदो यदक्षरं निर्विकारं परं ब्रह्म यत्संसारसागरं तितीर्षतां निर्भयं दृढतरं तीरं तं नाचिकेतं नाचिकेतस्य कर्मणः प्राप्यं परमात्मानमुपासितुं शकेमहि शक्ताः स्मेत्यर्थः ( वि. दी. )।

—११ विज्ञानेति। मनःप्रग्रहवान्मनोरूपरशनावान्विज्ञानसारथिः समीचीनविज्ञानशाल्यध्वनः पारं संसाराध्वपारभूतं विष्णोः परमं पदं परमात्मस्वरूपं प्राप्नोतीत्यर्थः।

—१३ इहापि। ऋतं पिबन्तावित्यत्रापि। तथा च सूत्रे विशेषणशब्देन च्छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः।

—१६ येयमिति। मनुष्ये प्रेते मृते सति तदुत्तरं सोस्तीत्येके वदन्ति नास्तीत्येके वदन्तीत्येवं या विचिकित्सा संशयो भवत्यतस्तज्ज्ञानं भाव्यमिति नचिकेतसा मृत्युं प्रति तृतीयवरः प्रार्थितः। तथा चोपक्रमस्य जीवपरत्वादस्मिन्प्रकरणे जीवपरमात्मनोरुभयोर्विशेष्यत्वमयुक्तमिति शङ्काशयः।

२४७–२१ सर्ववेदसदक्षिणेति। सर्वस्वदक्षिणेत्यर्थः। नचिकेतसः पिता वाजश्रवसनामर्षिर्यज्ञे सर्वस्वं ददौ। तत्र चायोग्यगोप्रदानेन क्रतुवैगुण्यं स्यादिति तन्निवृत्तये मत्प्रदानेनापि साद्गुण्यं स्याच्चेद्भवत्वित्याशयेन कस्मै मां दास्यसीति पुत्रेणासकृत्पिता पृष्टः। असकृत्प्रश्नेन क्रुद्धः पिता मृत्यवे ददामीत्युक्तवान्। तद्वचनसत्यत्वाय यमसदनं प्रति गतः पुत्रस्तत्र यमस्य स्थित्यभावेन तत्प्रत्यागमनपर्यन्तं त्रिरात्रमुपवासं कृतवान्। प्रत्यागतो यमोतिथेस्त्रिरात्रोपोषणं श्रुत्वा तन्मनःप्रसन्नतायै तस्मै त्रीन्वरान्ददौ। तत्र प्रथमेन वरेण पितुः प्रसादो वृतः। एतत्सर्वं देहस्यैवात्मत्वे न संभवतीति भावः।

२४८–१५ न प्रेत्येति। प्रेत्य चरमदेहवियोगं प्राप्य मोक्षदशायां संज्ञा देहात्मैक्यज्ञानं नास्ति। तदानीं स्वाभाविकापरिच्छिन्नज्ञानस्य संकोचाभावात्। समित्येकीकारे। ज्ञाधातोर्ज्ञानमर्थः। ततश्च भूतसंघातेनैकीकृत्य ज्ञानं संज्ञाशब्दार्थः। मोक्षपर्यन्तं देहात्मभ्रमोनुवर्तत इति तात्पर्यम्।

२४९–४ त्रय्यन्तनिष्णाताः। वेदान्तनिष्णाताः (रामानुजीयाः)।

—१६ विशेषान्। प्रणवाग्निविद्यादीन्॥ १२॥ (२)

—१९ अन्तर इति। अक्ष्यन्तरः पुरुषः परमात्मा संयद्वामत्वादीनां गुणानामत्रैवोपपत्तेरिति सूत्रार्थः (वे. दी.)।

—२०–१ य एष इति। योगिभिर्योन्तर्वर्तिपुरुषो दृश्यतेऽयमेवात्मा नियन्तेति यावत्। अमृतत्वं निरतिशयभोग्यत्वम्। अभयत्वं दुःखासंभिन्नत्वम्। ब्रह्मत्वं निरतिशयबृहत्त्वम् (वि. दी.)। इत्युपकोशलं प्रत्याचार्य उक्तवानिति सिद्धान्ते श्रुत्यर्थः।

२५०–३ प्रसिद्धवदिति। श्रुतौ य एष इति पदाभ्यां प्रसिद्धवन्निर्देशः क्रियते। अमृतादिशब्दाश्च प्रशंसापरतया कथंचिन्नेया इति पूर्वपक्ष्याशयः।

—५ संनिधानादिति। जीवस्य देहसंनिधेश्चक्षुष्यवगमादित्यर्थः।

—७ रश्मिभिरिति। एष आदित्यपुरुषो रश्मिद्वारा चक्षुषि प्रतिष्ठित इत्यर्थः।

—११ एतं संयद्वाम इति। संयन्ति संगतानि वामानि वरणीयानि प्रार्थनीयानि यस्मिन्स संयद्वामः। सर्वकल्याणगुणाश्रयत्वं सत्यसंकल्पत्वं वा संयद्वामत्वम्। स्वाश्रितेषु शोभनप्रापकत्वं वामनीत्वम्। सर्वलोकव्याप्तदीप्तिमद्ग्रिहयुक्तत्वं भामनीत्वम्। तथा चैतादृशानेकगुणविरोधेन नास्य वाक्यस्य केवलप्रसिद्ध्यनुरोधाज्जीवपरता वक्तुं शक्या। संयद्वामत्वाद्यनेकगुणविरोधात्। अमृतादिशब्दानां प्रशंसार्थकत्वे लक्षणारूपदोषप्रसङ्गश्च। प्रशंसार्थकत्वे चैकेनैव शब्देन निर्वाह इतरशब्दवैयर्थ्योपत्तिश्च॥ १३॥

२५०-१६ **स्थानादीति**। स्थानं स्थितिः। आदिशब्देन नियमनधारकत्वादिसंग्रहः। परमात्मन एव चक्षुषि स्थानादीनां व्यपदेशादयं परमात्मेति सूत्रार्थः।

—१७ **यश्चक्षुषीति**। यश्चक्षुषि तिष्ठंश्चक्षुषोन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।१८ ) इति श्रुतौ तिष्ठन्नित्यनेन स्थितिर्यमयतीत्यनेन नियमनं शरीरशब्देन धारणं च प्रतिपाद्यते ॥ १४ ॥

—२३ **कं ब्रह्मेति**। कमित्यनेन सुखमभिधीयते। खमित्यनेनाकाशवाचिनाऽपरिच्छिन्नत्वमभिधीयते। तयोरन्योन्यविशेष्यविशेषणभावेनापरिच्छिन्नसुखं ब्रह्मेति श्रुत्यर्थः।

२५१-३ **एवकारादिति**। अन्तर उपपत्तेरिति सूत्रोक्त उपपत्तेरिति हेतुर्यथान्यत्रासंभवरूपव्यतिरेकोक्तिसापेक्षः। अन्यथान्यत्रासंभवस्यासंदिग्धत्वाभावेनोपपत्तेर्हेतुत्वायोगात्। यथा च स्थानादिव्यपदेशाच्चेति सूत्रोक्तो हेतुः प्रतिबिम्बाद्यनवस्थितिरूपव्यतिरेकोक्तिसापेक्षः। चक्षुषि प्रतिबिम्बाद्यवस्थितौ स्थानादिव्यपदेशस्याहेतुत्वात्। अत एवानवस्थितेरसंभवाच्च नेतर इत्यग्रे सूत्रकारैरुक्तम्। तथायं सुखविशिष्टाभिधानरूपो हेतुर्न व्यतिरेकोक्तिसापेक्षः। ब्रह्मणोन्यस्य सुखविशिष्टत्वेनाप्रकृतत्वात्।

—९ **सर्वायुरिति**। सर्वमायुरेति नास्यापरपुरुषाः क्षीयन्त इति श्रुतौ सर्वायुःप्राप्तिः संतत्यविच्छेदश्चाग्निविद्यायाः फलत्वेन कथ्यते।

—११ **उभयत्रेति**। प्राणो ब्रह्मेत्युपक्रम एतद्ब्रह्मेत्युपसंहारे च ब्रह्मशब्देन मध्यपठिताग्निविद्याया ब्रह्मविद्याङ्गत्वं निश्चीयते।

—१४ **अथ हैनमिति**। अथशब्दः प्रकृतविषयत्वद्योतनार्थः। एनमित्यत्र च द्वितीयाटौस्स्वेनः ( पा. सू. २।४।३४ ) इति पाणिनिसूत्रेणनादेशः। स चान्वादेश एव विधीयते। अन्वादेशश्च प्रकृतस्यैव पुनः परामर्शः। तथा चैनमित्यस्य प्रकृतं श्रुतब्रह्मविद्यमुपकोसलमित्यर्थाद्ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेश इत्यग्निविद्याया ब्रह्मविद्याङ्गत्वं सिध्यतीति भावः।

—२५२-१ **फलानुकीर्तनमिति**। सर्वायुःप्राप्तिसंतत्यविच्छेदरूपफलकथनं प्रशंसापरमित्याशयः।

—७ **ब्रह्मलोकं प्राप्नोतीति**। यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तेर्ब्रह्मणेश्च प्रधानभूतब्रह्मविद्याफलत्वमेव तथाप्यङ्गिफलेनाङ्गं स्तूयत इति द्रष्टव्यम्। यद्वा पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरः। लोकशब्दश्च ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरो द्रष्टव्यः ( चि. दी. )।

२५२—८ यावदायुरिति । तथा च न सर्वायुःप्राप्तेर्मोक्षविरोधित्वमिति बोध्यम् ।

२५३–२ अनाश्वासम् । आश्वासरहितम् । विषादयुक्तमिति यावत् ॥१५॥

—१७ यस्येहेति । यस्येह य एषोऽक्षिणीति श्रुतावक्ष्याधारतयाभिधानं ब्रूपे तद्ब्रह्म कं ब्रह्मेत्यत्राभिहितमिति कथमवगम्यत इत्यन्वयः ।

—१८ यावता । प्रत्युत ॥ १६ ॥

२५४–९ श्रुतेति । श्रुतोपनिषत्कैरधिगतब्रह्मयाथात्म्यैर्ब्रह्मप्राप्तये या गतिरर्चिरादिकाधिगन्तव्यतयावगता श्रुत्यन्तरे तस्याश्चेहाक्षिपुरुषं श्रुतवतोऽधिगन्तव्यतयाभिधानादक्षिपुरुषः परमात्मेति सूत्रार्थः ( वे. दी. ) ।

—१०–१६ श्रुत्यन्तरेति । तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति (छा. ५।१०।१) । य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसंभवन्ति ( बृ. ६।२।१५ ) । अग्निलोकमागच्छति ( कौ. १।३ ) इत्यादिश्रुतयो द्रष्टव्याः । तेऽर्चिषमिति । अयमेवार्चिमार्गः । आपूर्यमाणपक्षः शुक्लपक्षः । एतानक्षिपुरुषोपासकान् । देवैर्मार्गदर्शकैर्नीयमानः पन्था देवपथः । ब्रह्मप्रापकः पन्था ब्रह्मपथः । एतेन मार्गेण प्रतिपद्यमाना इमं घोरं घटीयन्त्रवज्जननमरणाद्यावर्तकं मनुष्यादिशरीरोपलक्षितं संसारं पुनर्न प्रतिपद्यन्त इत्यर्थः ॥ १७ ॥

२५६–२ सर्वेन्द्रियकन्दभूते । हृदये ।

—३ रश्मिभिरिति । एष आदित्यो रश्मिद्वारास्मिन्नेत्रे स्थित इत्यर्थः । आदित्यो रश्मिद्वारा चाक्षुषोपकारक इति यावत् ।

—५ निरुपाधिकेति । अहेतुकेत्यर्थः । जीवस्यापि परमात्मोपासनेनामृतत्वादिधर्मदर्शनात्तद्व्यावृत्तय इदम् ॥ १८ ॥ ( ३ )

—१४–६ यः पृथिव्यामिति । यः परमात्मा पृथिव्यां स्थितः पृथिव्या अन्तरगतः पृथिव्यवेद्यः पृथिवीशरीरकः सन्यः परमात्मान्तः प्रविश्य प्रवृत्तिनिवृत्तिलक्षणनियमनं करोत्येषोऽन्तर्यामी तेऽमृत आत्मा निरुपाधिकामृतत्वशाल्यास्तीति सिद्धान्तेऽर्थः । यः पृथिव्यां तिष्ठन्योऽप्सु तिष्ठन्नित्यादिपर्यायोपदेशबाहुल्यं तु पृथिव्याद्येकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थम् (वि.) ।

—२२ सर्वेषु वेदेष्विति । ननु यस्य वेदाः शरीरमिति नोपपद्यते । वेदस्य शब्दरूपस्य गुणत्वेन द्रव्यत्वाभावात् । शरीरत्वस्य द्रव्यत्वव्याप्यत्वात् । एवं यज्ञस्यापि क्रियारूपस्य शरीरत्वं नोपपद्यत इति चेन्न । वेदयज्ञशब्दयोस्तदभिमानिदेवताविशेषपरत्वात् ।

२५७-१ **यो विज्ञान इति** । काण्वशाखायां यो विज्ञाने तिष्ठन्निति पाठः। माध्यंदिनशाखायां तु तत्स्थान एव य आत्मनि तिष्ठन्निति पाठः ।

—१३ **तद्धर्मेति** । तस्य परमात्मनो धर्माः सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियन्तृत्वसर्वात्मत्वामृतत्वादयो बोध्याः ।

२५८-३ **सच्च त्यच्चेति** । सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते। त्यच्छब्देन पूर्वपूर्वावस्थात्यागविकारास्पदमचेतनमुच्यते । ब्रह्मैव चेतनाचेतननामरूपभाग्भवनीत्यर्थः ( वि. ) ।

—१५ **स्वभावत इति** । श्रुतो द्रष्टेत्यत्र न चक्षुर्जन्यज्ञानवत्त्वं प्रतिपाद्यते। पश्यत्यचक्षुरिति श्रुतिविरोधात् । किं तु रूपसाक्षात्कारवत्त्वमेव द्रष्टृत्वम् । तथा श्रोतृत्वं शब्दसाक्षात्कारवत्त्वम् । मन्तृत्वं मन्तव्यविषयसाक्षात्कर्तृत्वम् । विज्ञातृत्वं निदिध्यासनविषयसाक्षात्कर्तृत्वम् ।

—२१ **नान्योतोस्तीति** । ननु जीवस्यान्यस्य द्रष्टुः सत्त्वेन कथमयं निषेध उपपद्यत इति चेन्न । अतो निरुपाधिकरूपादिसाक्षात्कारादिमतः परमात्मनः सकाशान्निरुपाधिकरूपादिसाक्षात्कारादिमानन्यो द्रष्टा नास्तीति तदर्थात् । अन्यशब्दस्य पूर्वनिर्दिष्टसमानान्यपरत्वात् ॥ १९ ॥

२५९-१४ यथा **स्मार्तेमिति** । तथा च सूत्रे दृष्टान्तार्थमेव स्मार्तशब्दोपादानमिति बोध्यम् । एतेन प्रधानस्यान्तर्यामित्वनिरसनमप्राप्रासङ्गिकमित्यपास्तम् ॥ २० ॥

२६०-३ **यो विज्ञान इति** । अत्र विज्ञानशब्द आत्मपरः । समानप्रकरणे माध्यंदिनशाखायां विज्ञानशब्दस्थान आत्मशब्देन निर्देशदर्शनात् ( वि. ) ॥ २१ ॥ ( ४ )

—९-११ **अथ परेति** । अत्र तच्छब्द इति ह स्म यद्ब्रह्मविद इति पूर्ववाक्योदितयच्छब्दप्रतिनिर्देशकः । अथ परा विद्या कथ्यते यया परविद्यया तदक्षरं ब्रह्माधिगम्यत आधिक्येन गम्यतेऽपरोक्षीक्रियते । अपरोक्षीकरणं च विवेकादिसाधनसप्तकजन्यं श्रवणजन्यज्ञानानन्तरभावि दर्शनसमानाकारं परज्ञानम् । अद्रेश्यमदृश्यम् । ज्ञानेन्द्रियाविषयम् । अग्राह्यं पाण्यादिकार्यहानोपादानाविषयम् । अगोत्रं कुलरहितम् । अवर्णमपेतब्रह्मक्षत्रादिकम् । अचक्षुःश्रोत्रं ज्ञानेन्द्रियरहितम् । तत्प्रसिद्धम् । अपाणिपादं कर्मेन्द्रियरहितम् । नित्यं कालापरिच्छिन्नम् । विभुं देशापरिच्छिन्नम् । सर्वगतं सर्वेष्वन्तः प्रविश्यावस्थितम् । तत्र हेतुः सुसूक्ष्ममिति । उक्तविशेषणविशिष्टं यत्तदव्ययं धीराः प्रज्ञाशालिनो भूतयोनिं सर्वभूतोपादानतया पश्यन्तीति सिद्धान्ते श्रुत्यर्थः ।

२६०–१२ **अक्षरादिति**। अक्षरादव्याकृतात्परः समष्टिरूपः पुरुषस्तस्मादपि कारणत्वेन परः। प्रधानपुरुषयोस्तज्जन्यत्वात्। अत्राक्षरशब्दोऽश्नुत इति न क्षरतीति वा व्युत्पत्त्या स्वविकारव्यापके नामान्तराभिलापयोग्यक्षरणाभाववत्यव्याकृते वर्तते। न तु भूतयोन्यक्षरे। स्वस्य स्वस्मादेव परत्वासंभवादिति सिद्धान्ते श्रुत्यर्थः।

—१३ **किमिहेति**। अदृश्यत्वादिगुणकमक्षरं प्रकृतिः परस्मादक्षरात्परश्च पुरुषो जीवसमष्टिरूप इति भावः।

—१८ **परभूतादिति**। पूर्वपक्षी ह्यक्षरात्परत इति श्रुतौ परत इत्यक्षरादित्यस्य समानाधिकरणं विशेषणं न त्वक्षरादित्यस्य व्यधिकरणं विशेष्यमित्यभिप्रैति।

२६१–३ **यथोर्णनाभिरिति**। अयं चेतनाधिष्ठिताचेतनदृष्टान्तः। ऊर्णनाभिर्लूताख्यकीटविशेषः। यथा पृथिव्यामिति चेतनानधिष्ठिताचेतनदृष्टान्तः। यथा सत इति चेतनसंनिधिमात्रापेक्षाचेतनदृष्टान्तः। तथाक्षरादव्याकृतान्निखिलं जगत्संभवतीत्यर्थं पूर्वपक्षी मन्यते। सिद्धान्तिसंमतश्चतुर्थचरणार्थस्तु तथाक्षरान्निर्विकारात्परमात्मनः परस्परविलक्षणचेतनाचेतनात्मकं निखिलं जगत्संभवतीति।

—१५ **यः सर्वज्ञ इति**। सर्वज्ञः सर्वविषयकज्ञानवान्। सर्ववित्तद्वस्तुगतसर्वप्रकारज्ञानवान्। यस्य ब्रह्मणो ज्ञानमयं तपः। संकल्परूपज्ञानव्यतिरेकेण जगत्सृष्ट्युपयुक्तं कर्मान्तरं नास्ति। तस्मात्संकल्पेन सृष्ट्युन्मुखाद्ब्रह्मण एतदव्याकृताख्यं ब्रह्म साक्षाज्जायते। तद्द्वारा नामरूपमन्नं च जायत इत्यर्थः।

—१९ **परत्वेनेति**। पर इति प्रथमान्तपरशब्देनेत्यादिः॥ २२॥

२६२–२१ **यमेवेति**। एष परमात्मा यं साधकं प्रार्थयते तेन लभ्यः। भगवद्विषयिण्युपासकस्य प्रीतिर्भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः।

२६३–१ **विवेकाच्चेति**। उत्थितमिति शेषः।

—१८ **अन्नात्प्राण इति**। प्राणो मुख्यप्राणः। मनोन्तःकरणम्। सत्यं भोक्तृवर्गः। लोकाः स्वर्गादयः। कर्मसु कर्ममध्ये। अमृतममृतत्वसाधनम्। कर्ममध्ये मोक्षार्थं कर्मेति यावत्। एतत्सर्वमन्नादभिजायत इत्यर्थः।

२६४–२ **यः सर्वज्ञ इति**। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति श्रुत्येति भावः।

—९ **मन्त्रेष्विति**। कवयोतीन्द्रियार्थसाक्षात्कारसमर्था मन्त्रेषु वेदेषु यानि कर्माण्यग्निहोत्रादीन्यपश्यन्दृष्टवन्तस्तानि कर्माणि त्रेतायां गार्हपत्यादिवैतानिकाग्निषु बहुधा संततानि विहितानि। तानि कर्माणि हे सत्यकामाः स्वतः सत्यं परं ब्रह्मैव कामयमानाः फलाभिसंधिरहिताः सन्त आचरतेत्यर्थः।

२६४–१७–२६५–१० एकतरकर्मवैधुर्यैपीति । एकस्यापि कर्मणो वैधुर्य इत्यर्थः । अपिरहितः पाठः साधुः । यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमतिथिवर्जितं चाहुतमवैश्वदेवमश्रद्धयाऽविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ( मु. १। २।३ ) इति तत्र श्रुतिः । दर्शाख्यपौर्णमासाख्येष्ट्यननुष्ठाने नवान्नस्वीकारार्थं शरत्कालकर्तव्याग्रयणाख्येष्टिविशेषाननुष्ठानेतिथिसत्कारोपासनहोमवैश्वदेवाननुष्ठाने श्रद्धावैधुर्येण यथाशास्त्रमननुष्ठाने वानुष्ठितमप्यग्निहोत्रकर्म तस्य सुकृतफलं सर्वं सप्तपुरुषपर्यन्तं नाशयतीति तदर्थः । प्लवा इति । षोडशर्त्विक्पत्नीयजमानरूपाष्टादशकर्त्राश्रितत्वेनोक्तमवरं फलाभिसंधिमत्त्वेनाश्रेष्ठं कर्म येषु यजमानेषु वर्तते ते यज्ञरूपा यज्ञप्रधानाः पुरुषा अदृढाः प्लवा जीर्णनौका इव संसारार्णवसंतरणासमर्थाः । एतत्कर्म श्रेयःसाधनमिति मत्वा ये हृष्यन्ति ते मूढा जरां मृत्युं च भूयो भूयो गच्छन्तीत्यर्थः । तपःश्रद्धे इति । तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्ति । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मेति श्रुतिः । ये संन्यासिनः कृतश्रवणमनना वन स्थित्वोपरतकरणग्रामास्तपःशब्दितं ब्रह्म तदादरातिशयरूपां श्रद्धां च सेवन्ते तेवधूतपापाः सूर्यमण्डलं भित्त्वा यत्र परमात्मास्ते तत्र यान्तीत्यर्थः । परीक्ष्येति । परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिः । कर्मचितान्कर्मसंपाद्याँल्लोकान्परीक्ष्य मीमांसान्यायैर्निरूप्य ब्राह्मणोधीतसाङ्गसशिरस्कवेदः । य इत्यध्याहार्यम् । स इत्युत्तरत्र श्रवणात् । अकृतो नित्यः पुरुषः कृतेन कर्मणा नास्ति न लभ्यत इति यो निर्वेदमायात्स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् । समित्पाणिः । न रिक्तपाणिः । श्रोत्रियं श्रुतवेदान्तम् । ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तम् । तदेतदिति । तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति । दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर इत्यादिश्रुतिर्द्रष्टव्या ॥ २३ ॥

२६६–८ रूपेति । अग्निर्मूर्धेत्यादिना समस्तस्य चिदचिदात्मकप्रपञ्चस्य भूतयोन्यक्षररूपत्वेनोपन्यासाच्चायमदृश्यत्वादिगुणकः परमात्मेति सूत्रार्थः (वे) । सर्वभूतान्तरात्मसंबन्धितयोच्यमानमीदृशं रूपं परमात्मन एव संभवतीत्याशयः ॥ २४ ॥ ( ५ )

—१६–८ आत्मानमिति । उपमन्युसुतः प्राचीनशालनामा पुलुषसुतः सत्ययज्ञनामा भाल्लविसुत इन्द्रद्युम्ननामा शार्कराक्षिसुतो जननामाश्वतराश्वसुतो बुडिलनामा चैते पञ्चोद्दालकेन सहिताः केकयमश्वपतिमभ्येत्य प्रोचुर्हेश्वपते त्वमिमं वैश्वानरमात्मानं संप्रत्यधुनाध्येष्युपास्से तमेव नो ब्रूह्युपदिश नास्माकमग्राम

मनेन्यत्प्रयोजनमित्यर्थः । यस्त्वेतमिति । अभिविमानं सर्वात्माभिव्याप्ततया विगतमानं विश्वेषां नराणां नेतारमेतमात्मानं प्रादेशमात्रम् । द्युलोकादिप्रदेशसंबन्धिनी प्रादेशी । प्रादेशी मात्रा परिमाणं यस्य तं प्रादेशमात्रं द्युप्रभृतिप्रदेशपरिच्छिन्नं य उपास्त इति सिद्धान्तेर्थः ।

२६६–२२ **अयमग्निरिति** । यदिदमद्यते तदिदमन्नं येनाग्निना पच्यते सोयमग्निर्वैश्वानरः । तस्याग्नेरेष घोषः शब्दो भवति यं घोषं जीवः कर्णावपिधाय शृणोति । तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते स जीवो यदोत्क्रमिष्यन्भवति तदा नैनं घोषं शृणोतीत्यर्थः ।

२६७–२ **विश्वस्मा इति** । विश्वस्मै भुवनाय विश्वभुवनोपकारार्थं वैश्वानरं महाभूततृतीयमह्नां केतुं दिवससूचकमग्निमादित्यमकृण्वन्नित्यर्थः ।

—५ **वैश्वानरस्येति** । वैश्वानरस्य देवताविशेषस्य सुमतौ शोभनायां बुद्धौ वयं स्याम तद्बुद्धिविषयीभूता भवेम । अस्मद्विषये तस्य शोभना बुद्धिरस्त्विति यावत् । स देवताविशेषोभितः श्रीर्यस्यैतादृशो भुवनानां राजास्तीत्यर्थः ।

—७ **वैश्वानर इति** । विश्वे च ते नराश्च विश्वानराः । स एव वैश्वानरः । सर्वेषामात्मेत्यर्थः ।

—९ **वाक्योपक्रमेति** । हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीय इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयरूपत्वं काल्पनिकं चतुर्ष्वपि संभवति। अन्नादनरूपं फलमपि सर्वत्रोपपद्यते। किं ब्रह्मेत्युपक्रमस्थब्रह्मशब्दोपि न विशेषासाधकः । अग्निशब्देन विरोधात् ।

—२३–२६८–३ **न मे स्तेन इति** । न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः । यक्ष्यमाणो ह वै भगवन्तोहमस्मीति श्रुतिः । हे भगवन्तो मे जनपदे मदीये देशे स्तेनश्चोरः कदर्यो दानशून्यो मद्यपः सत्यां योग्यतायामनाहिताग्निरविद्वान्स्वैरी परदारगन्ता चैते न सन्ति । स्वैरिणी पुंश्चली तु कुतः स्यात् । यतश्चोरादयो दुष्टा मदीये देशे न सन्त्यतो न तद्दत्तं धनमुपजीवामीत्यतो मत्सकाशात्प्रतिग्रहो योग्य एव । अचिरेणैव कालेन यागं करिष्यामि तत्र च धनं दास्यामीति तावत्कालपर्यन्तमत्रैव वसन्त्वित्यश्वपतिनोक्तमित्यर्थः । अत्र ब्रह्मविदाप्यश्वपतिना स्तेनादिद्रव्यं प्रतिषिद्धमिति परिहृतम् । विहितं कर्म यज्ञादि च कृतमिति सूचितम् । **वृत्तस्थतया** । वृत्तं सद्वर्तनम् । तच्छीलतया । व्रतस्थतयेति क्वचित्पाठो दृश्यते ।

२६८–१२ **स सर्वेष्विति** । यो वैश्वानरमुपास्ते स सर्वलोकसर्वभूतसर्वात्मवर्ति ब्रह्मरूपमनुभवति । मूल एवाग्रे ( श्रीभाष्य–पृ. २७३ प. ८ ) एतत्स्पष्टम् । यथेषीकायास्तृणविशेषस्य तूलमग्नौ प्रोतं प्रक्षिप्तं प्रदूयते सद्यो दह्यत

एवमस्य वैश्वानरोपासकस्य सर्वे पाप्मानः सर्वाणि पापानि प्रदूयन्ते दग्धानि भवन्तीत्यर्थः ॥ २५ ॥

२६८–१८ **द्युप्रभृतीति** । द्युलोको वैश्वानरस्य मूर्धा । आदित्यश्चक्षुः । वायुः प्राणः । आकाशो मध्यकायः । आपो मूत्रस्थानम् । पृथिवी पादाविति तत्र श्रुतौ वर्णितम् ।

२६९–७ **पङ्क्त्यामिति** । व्यत्ययेन प्रथमार्थे तृतीया । प्रकृत्या चारुरिति-वत्प्रकृत्यादित्वाद्भेदे वा ।

—१३ **यस्याग्निरिति** । इहाग्निशब्देन प्रसिद्धोऽग्निर्ग्राह्यः । न त्वग्निर्मूर्धेत्यत्रेव द्युलोकः । द्यौर्मूर्धेति पृथङ्निर्देशात् ।

—१९ **विशेषप्रश्नेति** । यतश्चैनं वैश्वानरात्मविषयको विशेषप्रश्नः कृतोऽत एतेषां वैश्वानरविषयकं कियज्ज्ञानं वर्तत इति परीक्षार्थं तानेकैकं पप्रच्छेत्यर्थः ।

—२३–२७०–५ **पूर्णवैश्वानरेति** । त्वया वैश्वानरबुद्ध्योपास्यमान एष द्युलोकपरिच्छिन्न आत्मा वैश्वानरस्यात्मनो मूर्धरूपावयवभूतः । न तु स एव वैश्वानर आत्मा । एतदर्थनिर्णयार्थं मत्समीपानागमने वैश्वानरमूर्धावयवभूते कृत्स्नवैश्वानरबुद्धिं कुर्वतस्तव विपरीतविद्यावशादनर्थः स्यादतः साध्वकार्षीस्त्वं यतो मामागतोऽसीत्येवं तस्यौपमन्यवस्य दिवि पूर्णवैश्वानरबुद्धिर्निवर्तिता । द्युलोकस्य सुतेजस्त्वगुणयोगेन सुतेजा इति नाम च तत्रोक्तम् । शोभनं तेजो यस्य स सुतेजा द्युलोकः । एवमादित्यस्य विश्वरूप इति नाम । विश्वं सर्वं जगद्रूपं प्रकाश्यं यस्येत्यर्थात् । वायोः पृथग्वर्त्मेति नाम । पृथग्वर्त्मा पृथङ्मार्गः । विविध-गतिस्वभाव इति यावत् । आकाशस्य बहुल इति नाम । बहुलत्वं च महत्त्वम् । भूतान्तरेभ्य आकाशस्य महत्त्वात् । अपां वेगवत्त्वाद्रयिरिति नाम । रयो वेगो-स्यास्तीति रयिः । पृथिव्याः प्राण्याधारत्वात्प्रतिष्ठेति नाम कृतमिति बोध्यम् । सत्ययज्ञादिभिरित्यादिपदेनेन्द्रद्युम्नजनबुडिलोद्दालकसंग्रहः । **वस्तीति** । वस्ति-शब्देन मूत्रस्थानमुच्यते ॥ २६ ॥

२७०–९ **शब्दादिभ्य इति** । आदिशब्देनाग्नित्रयकल्पनं प्राणाहुत्याधारत्वं च संगृह्यते ।

—१५ **हृदयमिति** । एतत्तात्पर्यमग्रे ( विवृति–पृ. १७५ प. १८ ) उर-प्रभृतीनामित्यत्र वक्ष्यते ।

२७१–४ **तथा दर्शनेति** । दृष्टिरुपासनम् । तथोपासनोपदेशादित्यर्थः । जाठराग्निशरीरकतया वैश्वानरस्य परमात्मन उपासनं ह्यत्रोपदिश्यत इत्याशयः ।

—१७ **निरुपाधिकमिति** । जीवस्य पुरुषशब्दवाच्यत्वं प्रधानपुरुषावेतौ । द्वाविमौ पुरुषौ लोक इत्यादिषु प्रधानादिपदान्तरसमभिव्याहाराक्षरत्वाद्युपाधि-

धीयते न तु स्वतः । अतः पुरुषशब्दवाच्यत्वं परमात्मन एव निरुपाधिकम् । अतो जाठरस्य पुरुषत्वं दूरतो निरस्तमिति भावः ॥ २७ ॥

२७१–२१ उक्तेभ्य इति । त्रैलोक्यशरीरत्वनिरुपाधिकपुरुषशब्दनिर्दिष्टत्वादिभ्य इत्यर्थः ॥ २८ ॥

२७२–१ साक्षादिति । अग्निशरीरकतया वैश्वानरस्योपासनार्थमग्निशब्दनिर्देश इति पूर्वसूत्र उक्तम् । इदानीमग्निशब्दस्य साक्षादेव परमात्मवाचकत्वमुच्यते ।

—४ आचार्य इति । पूजाद्योतनार्थमाचार्यशब्दप्रयोगः ।

—६–१० यथा वैश्वानर इति । विश्वान्नरान्नयतीति विश्वानरः । स एव वैश्वानरः । स्वार्थेण । राक्षसवायसादिशब्दवत् । काष्ठागतस्येति । निरवधिकातिशययुक्तस्येत्यर्थः ॥ २९ ॥

—१७ उपासकाभिव्यक्त्यर्थमिति । उपासकस्य सौलभ्येनात्मज्ञानायेत्यर्थः ।

—२० कृत्स्नमिति । श्रुतावभिविमानशब्दस्थाभिशब्दस्य कृत्स्नमिदमभिव्याप्यवत इत्यर्थः । विमानशब्दस्य विगतमानस्येत्यर्थ इत्याशयः ॥ ३० ॥

२७३–३ अनुस्मृतेरिति । अनुस्मृतिरुपासनम् । उपासनार्थं पुरुषविधत्वमित्यर्थः ( श्रु. ) ॥ ३१ ॥

—१३ उरःप्रभृतीनामिति । श्रुतौ ह्युपासकावयवीभूतस्योरसो वेदित्वं लोम्नां बर्हिष्ट्वं हृदयस्य गार्हपत्यत्वं मनसोऽन्वाहार्यपचनत्वमास्यस्याहवनीयत्वं च कल्पितम् । तच्च वैश्वानरपदस्याग्निवाचकत्व एवोपपद्यते न तु परमात्मवाचकत्व इति भावः । यावतेत्यस्य प्रत्युतेत्यर्थः । हृदयस्य गार्हपत्यत्वमित्यस्य हृदयकमलावच्छिन्नजाठराग्नेर्गार्हपत्यत्वमिति तात्पर्यम् । एवं मनइन्द्रियावच्छिन्नजाठराग्नेर्दक्षिणाग्नित्वम् । आस्यावच्छिन्नजाठराग्नेराहवनीयत्वम् । गार्हपत्यादीनामग्निविशेषत्वेन तत्कल्पनायाः सजातीये जाठराग्नावेवोचितत्वात् । अत एव प्राक् (श्रीभाष्य-पृ. २७० प. १६ ) भाष्ये वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियत इत्युक्तम् ।

—१५ संपत्तेरिति । संपत्तिः संपादनमतस्मिंस्तत्कल्पनमिति यावत् । वैश्वानरविद्याङ्गभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय वेदित्वादिकल्पनमिति जैमिनिर्मन्यते । तथा हि श्रुतिरेवाग्निहोत्रसंपत्तिं दर्शयतीति सूत्रार्थः ।

—२० स य इति । इदमुरःप्रभृतीनां वेदित्वादिरूपेणाग्निहोत्रसाधनत्वमविद्वानजानन्योऽग्निहोत्रं जुहोति प्राणाहुतिमनुतिष्ठति तस्य तद्धवनमङ्गारांस्त्यक्त्वा भस्मनि कृतं हवनमिव निष्फलं भवतीत्यर्थः ॥ ३२ ॥

२७४-५ आमनन्तीति । परस्यात्मनो द्युप्रभृतिशरीरकत्वमयुक्तम् । उपासकस्य मूर्धाद्यवयवानामेव द्युप्रभृतित्वेनोपासनविधानादिति शङ्कानिरसनार्थमेतत्सूत्रम् । उपासकशरीरे द्युमूर्धताद्यनुसंधानं परमात्मनो द्युमूर्धत्वादेर्न विरोधि । उभयस्यापि विहितत्वात् । अत उपासकशरीर एव द्युमूर्धत्वाद्यवयवत्वमित्यवधारणं न युक्तम् ( श्रु. ) ।

—७ तस्य ह वेति । अत्र तस्यैतस्येति च षष्ठ्यौ न समानाधिकरणे । किं तु तस्येति वैश्वानरस्येत्यस्य विशेषणम् । एतस्येत्यनेन च प्रकृतोपासकस्य परामर्शः । एतस्योपासकस्यात्मनो मूर्धैव तस्य वैश्वानरस्य सुतेजोनामको मूर्धेत्यर्थः ॥ ३२ ॥ ( ६ )

## अथ प्रथमाध्यायस्य तृतीयः पादः प्रारभ्यते ॥

२७६-३ द्युभ्वादीति । द्युपृथिव्यादीनामायतनं परमात्मा स्वासाधारणात्मादिशब्दादिति सूत्रार्थः ।

—५ यस्मिन्द्यौरिति । यस्मिन्नक्षरे द्युपृथिव्यन्तरिक्षमनःप्राणादिकं समवेतं तमेव स्वेतरसमस्तनियन्तृत्वेन व्यापकतयात्मानं जानीत । अनात्मविषया वाचस्त्यजत । अमृतस्यैष सेतुः । नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः । तद्वत्संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इति सिद्धान्ते श्रुत्यर्थः (वि. दी )।

—१० अरा इवेति । रथनाभावरा इव यत्र प्रकृते द्युभ्वाद्यायतने (जीवे) नाड्यः संगतास्तत्रान्तर्मध्ये स एष ( जीवो ) बहुधा देवादिरूपेण जायमानः संचरते वर्तत इत्यर्थः ।

—१९ यथाकथंचिदिति । द्युपृथिव्याद्युत्पत्तौ जीवकृतकर्मणः सहकारिकारणत्वात्कर्मद्वारा द्युपृथिव्याद्यायतनत्वं जीवस्य संभवति । मुक्तावस्थायां जीवस्य ज्ञानविकासेन तद्द्वारा वा द्युभ्वाद्यायतनत्वं बोध्यम् ।

२७७-११ नियन्तृत्वेन व्याप्तिरिति । आत्मशब्दस्य हि नियन्तृत्वेन व्याप्तिरेव प्रवृत्तिनिमित्तम् । न तु सामान्यतो व्याप्तिः । तथासत्याकाशेऽप्यात्मशब्दप्रयोगप्रसङ्गात् ।

—१४-६ संततमिति । आकोशः पद्मस्य मुकुलम् । तत्संनिभं तत्सदृशं हृदयकमलं लम्बति शरीरमध्येऽधोमुखत्वेनावलम्बते । तच्च शिराभिर्नाडीभिः संततं परितः सम्यग्व्याप्तमित्यर्थः । ततस्तत्समीपे किंचित्सुषिरं तद्गतमग्निं च वर्णयित्वा तस्याग्नेः शिखाया मध्ये परमात्मा व्यवस्थित इत्युक्तम् ।

२७८-३ **अजोपीति** । प्रकृतिः स्वभावः । मायाशब्दो ज्ञानवाची । आत्मज्ञानेनात्मसंकल्पेनेत्यर्थः । अजत्वाव्ययत्वसर्वेश्वरत्वादिपारमैश्वर्यप्रकारमत्यजन्नेव स्वमेव स्वभावमधिष्ठाय स्वेनैव रूपेणात्मसंकल्पेन संभवामि । अपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैश्वरं स्वभावमत्यजन्नेव स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसंकल्पेन देवादिरूपः संभवामीति तात्पर्यम् ॥ १ ॥

—११-५ **यदेति** । पश्यतीति पश्य उपासकः । रुक्मवर्णं देदीप्यमानदिव्यमङ्गलविग्रहयुक्तम् । ब्रह्मयोनिं तस्मादेतद्ब्रह्मेति निर्दिष्टाव्याकृतब्रह्मोपादानम् । अथ वा ब्रह्मयोनिशब्दयोः सामानाधिकरण्येन जगदुपादानभूतं ब्रह्मेत्यर्थः । **निरञ्जनः** प्रकृतिसंसर्गरहितः । अपहतपाप्मत्वादिगुणाष्टकलक्षणेन ब्राह्मेण रूपेण परमं साम्यमुपैतीत्यर्थः । येन गुणेन साम्यं तस्यापरिच्छिन्नत्वमेव परमसाम्यम् । यथेति । यथा नदीसमुद्रजलयोर्भेदकाकारप्रहाणमेव न स्वरूपैक्यमेवं मुक्तस्यापि परमात्मना सह भेदकाकारप्रहाणकृतमादश्यमेव न त्वैक्यमिति श्रुतितात्पर्यम् ॥ २ ॥

२७९-३ **नानुमानमिति** । अनुमानशब्दश्चात्र सूत्रे दृष्टान्तार्थमुपन्यस्तः । अनुमीयत इत्यनुमानं प्रधानम् । बाहुलकात्कर्मणि ल्युट् । आनुमानमिति वा पदच्छेदः । अनुमानेन प्रमितमानुमानम् । शेषे ( पा. सु. ४।२।९२ ) इति सूत्रेणाण्प्रत्यय आदिवृद्धिः ।

—७ **अर्थाभाव इति** । अर्थस्य पदार्थस्याभावः । तद्वाचिनो नाजेत्यव्ययस्य तच्छब्द इति शब्देन सहाव्ययं विभक्ति ( पा. सू. २।१।६ ) इत्यादिसूत्रेणाव्ययीभावः । नाव्ययीभावादतोम्त्वपञ्चम्याः ( पा. सू. २।४।८३ ) इति निषेधात्पञ्चम्या न लुक् । अपञ्चम्या इत्युक्तेश्च नामादेशः । तच्छब्दः प्रधानजीवप्रतिपादकशब्दः । तत्पुरुषस्तु नात्र कृतः । तथासति तच्छब्दभिन्नादित्यर्थः स्यात् । प्रधानजीवप्रतिपादकशब्दभिन्नः शब्दश्चार्थादेवात्र परमात्मप्रतिपादकशब्दः । स तु प्रथमसूत्रे स्वशब्दादित्युक्त एवेत्यत्र पुनरुक्तिः स्यादिति बोध्यम् ॥ ३ ॥

--११ **समान इति** । वृक्षे वृक्ष इव च्छेदनार्हे एकस्मिञ्छरीरे स्थूलोहं कृशोहमित्यादितादात्म्यबुद्ध्या पांसूदकवत्तदेकतामापन्नः संस्तत्संसर्गकृतानि दुःखान्यनुभवतीत्यर्थः । जुष्टं प्रीयमाणम् । जुषी प्रीतिसेवनयोरिति धातोरादिकर्मणि क्तः । श्रुतौ महिमानमित्युत्तरं चशब्दाध्याहारः । इतिशब्दो बुद्धिस्थप्रकारवचनः । बुद्धिस्थप्रकारश्चात्र निखिलजगन्नियमनरूप एव । ईशशब्दसंनिधानात् ॥ ४ ॥

२७९–१८ प्रकरणात् । अथ परा यया तदक्षरमधिगम्यत इत्यादिना परमात्मन एव प्रकृतत्वादयं परमात्मैवेति सूत्रार्थः ।

२८०–१ प्रतिपादितमिति । अदृश्यत्वादिगुणकाधिकरणे विशेषणभेदव्यपदेशाभ्यां च नेतरौ ( ब्र. सू. १।२।२३ ) इति सूत्रे तथा हि (श्रीभाष्य-पृ.२६२ प. ७) इत्यारभ्योपसंहृतम् ( श्रीभाष्य–पृ. २६५ प. १९ ) इत्यन्तेन ग्रन्थेन प्रागेतद्दर्शितमेव । तथापि प्रकरणापेक्षया लिङ्गस्य प्राबल्यान्नाडीसंबन्धादिभिर्जीवलिङ्गैरिदं भिन्नमेव प्रकरणमित्याशङ्का स्यात्तन्निरसनार्थमेतत्सूत्रम् । नाडीसंबन्धादिलिङ्गानां च परमात्मन्यपि संभवाद्विरोधाभावेन न परमात्मप्रकरणस्य लिङ्गेन बाध इति बोध्यम् ॥ ५ ॥

—५ द्वा सुपर्णेति । युज्यत इति युक्शब्दो गुणपरः । सयुजा समानगुणकौ । सखाया अपहतपाप्मत्वादिगुणैर्मिथः समानौ द्वौ सुपर्णौ पक्षिसदृशौ समानमेकं वृक्षं वृक्षवच्छेदनार्हं शरीरं समाश्रितौ । तयोर्मध्येऽन्यतरो जीवः स्वादु परिपक्कं पिप्पलं कर्मफलं भुङ्क्ते । अन्यस्तु परमात्माऽभुञ्जान एव प्रकाशत इत्यर्थः ॥ ६ ॥ ( १ )

—१४–६ यत्रेति । अनुभूयमान इत्यध्याहारः । यत्र यस्मिन्वस्तुन्यनुभूयमाने सत्यन्यन्न पश्यति न शृणोति न विजानाति स भूमा यस्मिन्ननुभूयमानेऽप्यन्यत्पश्यति शृणोति विजानाति तदल्पमित्यर्थः ।

—१८ पृथ्वादिभ्य इति । पृथ्वादिगणपठितेभ्यः शब्देभ्यस्तस्य भाव इत्यर्थ इमनिच्प्रत्ययो विकल्पेन भवतीति सूत्रार्थः । अनेन सूत्रेण बहुशब्दाद्बहोर्भाव इत्यर्थ इमनिच्प्रत्यये बहोर्लोप इति सूत्रेण प्रकृतिभूतस्य बहुशब्दस्य भू इत्यादेश इमनिच्प्रत्ययावयवस्येकारस्य च लोपे भूमेति भवति ।

२८१–३ वैपुल्येति । वैपुल्यं विशालता । बहुश्रुतोयं ब्राह्मण इत्यत्रेवात्रापि बहुशब्दो वैपुल्यवाच्येव गृह्यते न तु बहवः पुरुषा इत्यत्रेव संख्यावाचीति भावः ।

—५ अल्पशब्देति । यद्यपि प्रत्ययार्थप्राधान्यस्यौत्सर्गिकत्वेन भूमशब्दस्य बहुत्वरूपधर्मार्थकत्वं तथाप्यत्र प्रकृत्यर्थप्राधान्येन धर्मिवाचकत्वमेव ग्राह्यम् । अनुयोगिनिर्देशस्याल्पमित्यस्य धर्मिवाचकत्वेन तत्प्रतियोगिनिर्देशस्य भूमेत्यस्यापि धर्मिवाचकत्वस्यैवोचितत्वात् । न चाल्पमित्यस्यैव धर्मवाचकत्वं किं न कल्प्यत इति वाच्यम् । तथासति स भूमा तदल्पमिति प्रथमान्ततच्छब्दस्यासंगतेः । तथासति हि तस्येत्येवोचितम् ।

—११–८ भगवद्दृशेभ्य इति । भवादृशेभ्य इत्यर्थः । सनत्कुमारेण नारदाय नामब्रह्मोपासनायां कथितायां नाम्नो ब्रह्मत्व आत्मत्वे च श्रद्धामलभमानस्य ब्रह्मज्ञानेच्छोर्नारदस्यास्ति भगवो नाम्नो भूय इति प्रश्नः । भगव इति

संबोधनम्। हे भगवन्नित्यर्थः। ततो वाग्वाव नाम्नो भूयसीति सनत्कुमारस्योत्तरम्। पुनर्नारदस्यास्ति भगवो वाचो भूय इति प्रश्नः। पुनः सनत्कुमारस्य मनो वाव वाचो भूय इत्युत्तरम्। एवं प्रश्नप्रतिवचनरूपेण वाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नजलतेजआकाशस्मराशापर्यन्तमुपन्यस्यान्ते प्राणो वावाशाया भूयानित्युक्तम्। तत्र चात्मोपदेशेन प्राणशब्दस्य न वायुमात्रमर्थः। वायोरात्मत्वासंभवात्। प्राणो ह पितेत्यादिनोच्यमानस्य प्राणस्य पितृत्वादेर्वायावसंभवाच्च। किं तु लक्षणया प्राणसहचारी जीव एवार्थः। तदनन्तरं चास्ति भगवः प्राणाद्भूय इति प्रश्नस्तदुत्तरं च न दृश्यते। तथा च श्रुतौ जीवापेक्षया भूयांसं पदार्थमनिर्दिश्यैव वर्ण्यमानोयं भूमा जीव एव न परमात्मा। अन्यथा प्रकरणविच्छेदापत्तेरिति पूर्वपक्ष्याशयः।

२८१–२० अन्यत्रापि प्राणशब्दस्य जीववाचित्वं दृश्यत इत्याह–**प्राणो हेति**। **प्राणस्य चेतनताम्**। प्राणशब्दस्य जीववाचित्वम्।

—२२ **सप्राणेषु**। सजीवेषु। जीवोपमर्द एव हिंसा न तु पञ्चवृत्तिवायूपमर्दः। वृक्षादिषु पञ्चवृत्तिवायुमन्तरेणापि केवलजीवोपमर्देनैव हिंसादर्शनात्।

२८२–३ **अप्राणेषु**। पञ्चवृत्तिवायुरहितेषु। ननु न तु दृष्टान्तभावादिति सूत्रे भाष्ये (श्रीभाष्य–पृ. ४१३ प. ११) स्थावरेषु हि प्राणसद्भावेपि तस्य पञ्चधावस्थाय शरीरधारकतयावस्थानं नास्तीत्युक्तत्वादत्राप्राणेष्वित्युक्तिर्न संभवति। किं च नायं हन्ति न हन्यते (भ. गी. २।१९) इति निर्दिष्टस्य जीवस्य स्वतो हिंसायोग्यत्वाभावेन देहादिसाहित्यप्रयुक्तहिंस्यत्ववन्मुख्यप्राणस्यापि हिंस्यत्वं सुवचम्। प्राणो ह पितेत्यादौ पित्रादिशब्दास्तु गौणार्थका भवन्त्विति चेदुच्यते। प्राणो ह पितेत्यादिवाक्यनिर्दिष्टानां बहूनां जीववाचितया लोके प्रसिद्धानां पित्रादिशब्दानां गौणत्वकल्पनापेक्षयैकस्य प्राणशब्दस्यैव जीववाचित्वमाश्रयणीयमित्येव भाष्यकृतामाशय इति (वि.)।

—५ **अरनाभीति**। यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितमिति श्रुतावरनाभिदृष्टान्तपूर्वकसर्वाधारत्वोपन्यासेन प्राणशब्दवाच्यः परमात्मैवेति न भ्रमितव्यमित्यर्थः। रथचक्रमध्यं नाभिः। तस्मान्नेमिपर्यन्तं तिर्यग्दलानि काष्ठान्यरा इत्युच्यन्ते।

—१२–७ **अतिवादित्वमुक्त्वेति**। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवतीति श्रुतिः। एष प्राणशब्दनिर्दिष्टो जीवः स्वात्मानमुक्तेन प्रकारेण मन्वानोनेन प्रकारेण विजानन्नुपासीनस्तेन प्रकारेण पश्यन्साक्षात्कुर्वन्नतिवादी भवति। स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवति। पश्यन्नित्यत्र लक्षणहेत्वोः क्रियायाः (पा. सू. ३।२।१२६) इति सूत्रेण हेत्वर्थे शतृप्रत्ययः। ततश्च स्वोपास्यदेवतासाक्षात्कारोतिवादित्वे हेतुः। साक्षात्कारप्रीतस्वो-

पास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीति तात्पर्यम् । अत्र प्राणवेदिनोतिवादित्वोक्तिपर्यन्तमेव जीवप्रकरणम् । तदुत्तरमेष तु वेत्यारभ्य परमात्मप्रकरणम् । विशेषद्योतनार्थकतुशब्दस्वारस्यादिति सिद्धान्तः । परं तु पूर्वपक्षी तन्न मनुते । एष इत्येतच्छब्देन पूर्वप्रक्रान्तस्य प्राणवेदिन एव प्रत्यभिज्ञानात् । सत्यशब्दश्च नात्र ब्रह्मपरः । किं त्वेष नु वा अग्निहोत्री यः सत्यं वदतीत्यत्राग्निहोत्रिण इवात्र प्राणातिवादिनः सत्यभाषणमङ्गतया विधीयते । मननेति । यदा वै मनुते यदा वै श्रद्धधाति यदा वै निस्तिष्ठति यदा वै करोतीत्यादिश्रुतिप्रतिपादितानि मननश्रद्धानिष्ठाप्रयत्नानि प्राणोपासनोपायभूतानि न तु ब्रह्मोपासनोपायभूतानीति पूर्वपक्ष्याशयः ।

२८३–५ अहमेवेति । अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोहमुत्तरतोहमेवेदं सर्वमिति श्रुतौ हि जीवस्य वैभवमुपदिश्यते । जीवस्यैवाहमर्थत्वात् । एतच्च परमात्मपरिग्रहे न संगच्छते । परमात्मनोहमर्थत्वाभावात् । यद्यप्येतादृशं वैभवं जीवस्य नोपलभ्यते तथापि मुक्तस्य तत्संभवोस्त्येवेति पूर्वपक्ष्याशयः ।

—८ वाक्यशेष इति । श्रुतौ भूमवर्णनोत्तरं स भगवः कस्मिन्प्रतिष्ठित इति नारदस्य प्रश्नः । स्वे महिम्नीति सनत्कुमारस्योत्तरम् । अनाधार एवायमित्यभिप्रायः । अत्र यत्स्वमहिमप्रतिष्ठितत्वमुच्यते तज्जीव एवाविद्यावियुक्ते संगमनीयमिति भावः ।

—११ एष संप्रसाद इति । संप्रसादशब्दः सुषुप्तिस्थानवचनस्तत्संबन्धादत्र जीवं लक्षयति । एष जीवोस्माद्धेयतया परिदृश्यमानाच्छरीरादुत्क्रम्य देशविशेषनिष्ठं परमात्मानं प्राप्य स्वेन रूपेणाभिनिष्पद्यत इत्यर्थः ।

२८४–७ तुशब्देनेति । तुशब्दस्वारस्येनैष तु वेत्यारभ्य प्रकरणान्तरमेवेदं ब्रह्मविषयकमारब्धमिति गम्यते । तदनुसारेणैष इत्येतच्छब्दोपि न प्रकृतजीवपरामर्शकः । किं त्वग्रिमयच्छब्दस्य प्रतिनिर्देशरूप एवेति बोध्यम् । ..

—९ अतोस्येति । स्वोपास्यवस्त्वाधिक्यं ह्यतिवादनिमित्तम् । तुशब्देन पूर्वातिवाद्यपेक्षयायमतिवाद्यतिशयितोपास्यान्तरविशिष्टत्वेन भिन्न इति गम्यते अतः प्राणातिवादिनोतिवदननिमित्तात्तदुपास्यात्प्राणादपि तदुत्तरवाक्यनिर्दिष्टं सत्यातिवादिनोतिवदननिमित्तं तदुपास्यं सत्यमधिकमित्यर्थः ( श्रु. ) ।

—२० वस्त्वन्तरादिति । वस्त्वन्तरापेक्षया पुरुषार्थभूतत्वेनातिशयितं यद्वस्तु तद्वादित्वमित्यर्थः ।

२८५–४ इत्थंभूतेति । इत्थंभूतलक्षणे ( पा. सू. २।३।२१ ) इति सूत्रम् । इत्थंभूतः कंचित्प्रकारं प्राप्तः । लक्षणं कंचिद्धर्मम् । चित्प्रकारं प्राप्तस्य लक्षण

गम्यमाने तृतीया भवतीति तदर्थः। यथा जटाभिस्तापस इति। जटोपलक्षित इत्यर्थः। पूर्वपक्षिमते तु सत्यं वदनीत्येव वक्तव्यमिति तृतीयाया आनर्थक्यमतिवदनीत्यत्रातीत्युपसर्गवैयर्थ्यं च बोध्यम्।

२८५–५ अत एवेति। सत्यशब्दस्योपास्यान्तरपरत्वादेव सत्येनातिवदानीति प्रार्थितं न तु प्राणेनातिवदानीति।

—८ आत्मन इति। आत्मनः सकाशात्प्राणशब्दनिर्दिष्टस्योत्पत्तिरित्यर्थः। नामवागादिक्रमेणोत्तरोत्तराधिक्यविशिष्टान्सत्यशब्दनिर्दिष्टात्मपर्यन्तान्पदार्थानुक्त्वा पार्यन्तिकाधिक्यविशिष्टादात्मनः सकाशात्प्राणशब्दनिर्दिष्टजीवपर्यन्ताः सर्वे पदार्था उत्पद्यन्त इत्यात्मनः प्राण आत्मन आशात्मनः स्मर आत्मन आकाश इत्यादिश्रुतावुक्तम्। प्राणशब्दनिर्दिष्टजीवस्यैव पार्यन्तिकाधिक्यविशिष्टत्वे त्वात्मनः प्राण इति न वक्तव्यं स्यादिति जीवापेक्षया परमात्मन आधिक्यं सिध्यतीत्यर्थः।

—१५ उक्तं चेति। तुशब्दश्रुतिरात्मनः प्राणोत्पत्तिश्चार्थान्तरत्वे लिङ्गमिति प्रमाणान्तरमुक्तमित्यर्थः।

२८६–१ स्वयमेवेति। यथा भगवद्गीतायां तस्माद्योगी भवार्जुन (भ. गी. ६।४६) इति जीवात्मयोगं परिसमाप्य योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान्भजते यो मां स मे युक्ततमो मतः (भ. गी. ६।४७) इति परमात्मोपासनं भगवान्स्वयमेवोक्तवांस्तद्वत (श्रु.)।

—९–१४ अर्थसिद्धं मत्वेति। अत एवात्र श्रुतौ मननोपायभूतस्यापि श्रवणस्य पृथगुपदेशो न कृत इति भावः। तदुपायभूतामिति। श्रद्धा त्वरा। तदुपायभूता निष्ठा। सा च ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायरूपा। श्रोतव्यनिश्चये सत्येव श्रोतुं त्वरा भवतीति प्रसिद्धमिति निष्ठायाः श्रद्धोपायत्वम्। उद्योगप्रयत्नरूपामिति। उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसंधानेन मनसो नियमनरूपा कृतिः। कृतिसिद्धय इति। ब्रह्मणः सुखरूपताज्ञानं विना कृतिर्न सिध्यतीति भावः।

–२२ ब्रह्मस्वरूपेति। स्वरूपान्तर्गता ज्ञानादिगुणाः। विभूत्यन्तर्गतं जगदखिलमित्यभिप्रायः (श्रु.)।

२८७–६ कथमिवेति। एकस्यैव दुःखात्मकत्वं सुखात्मकत्वं च विरुद्धम्। न हि निम्बपत्रं कस्यचिन्मधुरं भवतीति भावः।

—७ उच्यत इति। स्वतोऽपरिच्छिन्नसुखरूपस्यापि कर्माद्युपाधितोऽन्यथारूपसंभवाद्दुःखरूपत्वं भासत इति न विरोधः।

२८८–६ आत्मरतिरिति । आत्मन्येव रतिर्यस्येत्येवं व्यधिकरणबहुव्रीहिः । तत्र रतिः स्रक्चन्दनादिजन्या प्रीतिः । क्रीडा तूद्यानादिजन्या प्रीतिः । मिथुनं स्त्रीसंभवा प्रीतिः । आनन्दो विभूतिजन्या प्रीतिः । सर्वविधसुखानुभवोऽप्यात्मसुखान्तर्गत एवेति भावः ।

—९ अकर्मवश्य इति । विधिनिषेधकिंकरो न भवतीत्यर्थः ।

—११ न पश्य इति । पश्यो ब्रह्मदर्शी मृत्युं मरणं रोगं दुःखसाधनं दुःखतां जगति प्रतिकूलतां च न पश्यति । सर्वसाक्षात्कर्ता सन्संकल्पमात्रेण संकल्पितानर्थान्सर्वस्मिन्काले प्राप्नोतीत्यर्थः ॥ ७ ॥

२८९–५ अथात इति । अथातोहंकारादेश इति श्रुतावहंकारोहंबुद्धिः । अथशब्दः प्रकृतब्रह्मविषयत्वद्योतनार्थः । अहंग्रहेण भूम्न उपासनप्रकारोतः परमुपदिश्यत इत्यर्थः । न तु जीवस्वरूपोपदेश इति मन्तव्यम् । तथासत्यहमादेश इति निर्देशस्यैव युक्ततयाकारपदवैयर्थ्यात् ( वि. ) ।

—७ परमात्मपर्यवसायीति । तथा च नेयमतस्मिन्तद्बुद्धिरिति भावः ॥८॥

२९०–२ स होवाचेति । स याज्ञवल्क्यः । गार्गीति संबोधनम् ।

—८ शङ्कते-यद्यपीति ।

—९ प्रमाणान्तरेति । यद्यपि प्रधाने परस्मिंश्चाक्षरशब्दप्रयोगदर्शनं सममेव तथापि प्रधानमनुमानेन ज्ञायते । परमात्मा तु श्रुत्या ज्ञायते । तत्रानुमानस्य केवलं प्रत्यक्षापेक्षा । लिङ्गस्य प्रत्यक्षज्ञानं विनानुमानासंभवात । श्रुतेस्तु शब्दार्थसंबन्धग्रहणापेक्षा । तादृशसंबन्धग्रहणं चोभयापेक्षम् । तत्र पुरोवर्तिपदार्थं प्रत्यक्षतो निर्दिश्य तत्रास्य शब्दस्य संबन्ध इति ज्ञापयतीति संबन्धग्रहणस्य प्रत्यक्षापेक्षा प्रसिद्धैव । गोशब्दज्ञाने सास्नादिमत्पदार्थज्ञानमन्यथानेत्याकारकतर्कापेक्षं च संबन्धग्रहणम् । तथा च श्रौतेश्वरापेक्षयानुमानिकं प्रधानं प्रथमं बुद्धिमारोहतीति पूर्वपक्ष्याशयः ।

—११–५ यदूर्ध्वमिति । स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति श्रुतिः । अत्राकाशशब्देन भूताकाशस्य ग्रहणमिति पूर्वपक्ष्याशयः । प्रत्युच्यमानमिति । अस्थूलमनण्वित्यादिना प्रत्युच्यमानमित्यर्थः ।

—१९ अन्तः पारभूतमिति । अन्तःशब्दोवधिवाची । अव्याकृतस्याकाशकारणत्वात्कारणस्य च कार्यं प्रत्यावरकतया बहिर्विद्यमानत्वादव्याकृतस्याकाशावधित्वम् ।

२९१–८ विकारान्तर्गतत्वादिति । न हि स्वयं विकारान्तर्भूतः कृत्स्नविकारजातस्याधारो भवितुमर्हतीति भावः ( श्रु. ) ।

**२९.१–१४ संबन्धग्रहणेति** । पुरोवर्तिनं सास्नादिमन्तं पशुं निर्दिश्यायं गोशब्दार्थ इति यदा संबन्धो ज्ञाप्यते तदा प्रत्यक्षप्रमाणापेक्षास्ति । परं तु गामानयेत्यादिवाक्येषु गोशब्देन सास्नादिमत्पदार्थप्रतिपादनं यदा क्रियते तदा न प्रत्यक्षप्रमाणापेक्षा दृश्यते । न हि कस्यचिच्छब्दस्य प्रथमतः कोशादर्थो ज्ञात इत्येतावता यदा यदा तच्छब्दं शृणोति तदा तदा तस्माच्छब्दाज्जायमानार्थप्रतिपत्तिस्तादृशकोशस्मरणपूर्विकैवेति नियमो दृश्यत इति भावः ॥ ९ ॥

**२९.२–७ प्रकृष्टमिति** । शासनस्य क्वचिदप्यप्रतिहतत्वमत्र प्रकृष्टत्वम् ।

—८ **सर्ववस्त्विति** । श्रुतौ सर्वस्य वशी सर्वस्येशान इति सर्वशब्दप्रयोगदर्शनात्तदनुसारेणात्र सर्ववस्त्वित्युक्तम् ॥ १० ॥

—१३ **व्यावर्त्यत इति** । निवर्त्यत इत्यर्थः । प्रधाननिवर्तको जीवनिवर्तकश्च धर्मः प्रतिपाद्यत इति यावत् ।

**अदृष्टं द्रष्ट्रिति** । परमात्मा यदा रूपादिविषयान्पश्यति शृणोति मनुते विजानाति च तदाप्ययं द्रष्टा श्रोतेत्यादिप्रकारेण लोकैर्न ज्ञायत इत्यर्थः । एतेनाश्रुतमिति श्रवणविषयत्वप्रतिषेधः परमात्मनि न संगच्छते । शब्दस्यैव श्रवणविषयत्वेन तद्भिन्नस्य रूपस्येव परमात्मनः श्रवणविषयत्वप्रसक्त्यैवाभावादित्यपास्तम् । अश्रुत इत्यस्य श्रोतृत्वेनाज्ञात इत्यर्थात् ।

**२९.३–६ प्रतिषेधतीति** । यद्यक्षरशब्देन प्रधानं जीवो वा गृह्येत तदा तद्व्यतिरिक्तस्य द्रष्टुः परमात्मनः सत्त्वान्नान्यदतोऽस्ति द्रष्ट्रित्यादिवाक्यशेषोऽसंगतः स्यादिति बोध्यम् ।

—७ **एतस्येति** । अक्षरं परं ब्रह्म । प्रशासनमाज्ञा । अन्वायत्ता अनुवशाः । दृत इति द्वितीयाबहुवचनम् । दर्वी घृतादिहवनसाधनीभूतः पात्रविशेषः । तत्साध्यो होमश्चात्र दर्वीशब्देनोच्यते । परब्रह्माज्ञाकैंकर्यबुद्ध्या दानं कुर्वतो दातानितरे मनुष्या अनुवशाः सन्तः प्रशंसन्ति । तथा तदाज्ञाकैंकर्यबुद्ध्या यज्ञं कुर्वाणं देवा अनुवशाः सन्तः प्रशंसन्ति । तथा तयैव बुद्ध्या कृतं दर्वीहोमं पितरोऽनुवशाः सन्तः प्रशंसन्तीत्यर्थः ।

—११ **यो वेति** । ब्रह्मज्ञानमन्तरेण क्रियमाणं होमयज्ञतपआदिकं बहुकालसाध्यमपि सर्वं नश्वरफलसाधनं भवति । तज्ज्ञानमन्तरेण परलोकगतस्यापि शोच्यता भवति । तदज्ञानात्संसारो भवतीति यावत् । ज्ञानी तु यो म्रियते स ब्राह्मणो ब्रह्मविन्मुक्त एव भवतीत्यर्थः ॥ ११ ॥ ( ३ )

—१८ **यः पुनरिति** । एकमात्रत्वद्विमात्रत्वदशायामर्वाचीनफलसाधनेनैवोमित्यक्षरेण त्रिमात्रेण यः परं पुरुषमभिध्यायीताभिमुख्येन ध्यायति स उपासकस्तेजोमण्डले सूर्ये संगतः सन्यथा पादोदरः सर्पस्त्वचा जीर्णत्वचा निर्मोकेन

विनिर्मुक्तो भवत्येवं पातकेन विनिर्मुक्तः सन्ब्रह्मलोकं वैकुण्ठं सामभिर्गीतप्रधानैर्मन्त्रैः सामगानसहितैः पुरुषैर्वा सान्त्ववचनसहितैः पुरुषैर्वोन्नीयते । एतस्माज्जीवघनात्कठिनजीवात् । घनशब्दः कठिनवाची । जीवस्य काठिन्यं च देहद्वारकमेवेति देहविशिष्टाज्जीवादित्यर्थः । तस्मात्परो यः शुद्धात्मा तस्मादपि परभूतं पुरिशयं सर्वेषु प्राणिष्वन्तरात्मतया शयानं पुरुषमीक्षत इति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षे तु परपुरुषशब्देन चतुर्मुखो ब्रह्मलोकशब्देन च तस्यैव चतुर्मुखस्य लोको गृह्यते । परादिति तु जीवघनादित्यस्य विशेषणम् । इन्द्रियादिभ्यः परो यो जीवघनो व्यष्टिजीवस्तस्मात्परं पुरुषं चतुर्मुखमीक्षत इत्यर्थः ।

२९४-३ **यथाक्रतुरिति** । क्रतुशब्द इच्छावाची । अस्मिँल्लोके पुरुषो जीवः यथेच्छति तथेतः प्रेत्य भवतीति न्यायः ।

—५ **प्रत्यभिज्ञानादिति** । ध्यानकर्मण ईक्षणकर्मणश्च परपुरुषशब्देनैवाभिधानादुभयत्राप्येकमेव कर्मेति निश्चीयत इत्यर्थः ।

—९-१३ **प्रायणान्तम्** । मरणपर्यन्तम् । **विज्ञाप्यत इति** । अन्यथान्तरिक्षलोकप्राप्तिमभिधाय तादृशान्तरिक्षलोकात्परं चतुर्मुखलोकं त्यक्त्वा व्यवहितवैकुण्ठलोकस्य ब्रह्मलोकशब्देनाभिधाने लोकक्रमप्रत्यभिज्ञानभङ्गः स्यादित्याशयः ।

—१४ **तद्गतेनेति** । तादृशचतुर्मुखलोकस्थेन जीवेनेत्यर्थः ।

—१९ **यथाकथंचिदिति** । अजरममृतमभयं परं चेति श्रुतावुक्ताः परपुरुषस्याजरत्वादयो धर्माश्चतुर्मुखेपि संभवन्ति । इतरप्राण्यपेक्षया तस्याजरत्वाद्युपपत्तेः ।

२९५-३ **तमोंकारेणेति** । अयनं मार्गः । सूरयो यं लोकं पश्यन्ति तमोंकारेणैव मार्गेणायमुपासकोन्वेति । गत्वा च शान्तमूर्मिषट्करहितं जरामरणशून्यमकुतोभयं सर्वकारणत्वेन सर्वोत्कृष्टं ब्रह्म च प्राप्नोतीत्यर्थः ।

—१० **यो ब्रह्माणमिति** । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा इति श्रुतिः । यः परमात्मा प्रथमतश्चतुर्मुखमुत्पादयति तस्मै चतुर्मुखाय वेदांश्च ददातीत्यर्थः । अत्र चतुर्मुखस्योत्पाद्यत्वश्रवणाच्चतुर्मुखोपि कर्मवश्य एवेति निश्चीयते । किं च यो वै वेदांश्च प्रहिणोति तस्मा इति द्वितीयपादेन चतुर्मुखज्ञानप्रसरस्य परमात्मकृतोपदेशसापेक्षत्वबोधनादुपदेशात्प्राग्ज्ञानसंकोचः सिद्धः । ज्ञानसंकोचश्च कर्ममूलक एव । किं च मुखचतुष्टयेन शरीरसंबन्धः सिध्यति । स च कर्ममूलक एवेति बोध्यम् ।

२९६-२ **न चेति** । तथा च चतुर्मुखलोकस्याप्यन्तरिक्षलोकादव्यवहितपरत्वाभावेन लोकक्रमप्रत्यभिज्ञानभङ्गस्तुल्य एवेति भावः ।

—३ **अत इति** । उदाहृतबहुवाक्यस्वारस्यानुगुण्यादित्यर्थः । एतद्वा इति श्रुतेरयमर्थः । ओंकार एव परं ब्रह्मापरं च ब्रह्म । वाच्यवाचकभावमूलकं

ब्रह्मोंकारयोः सामानाधिकरण्यम् । उभयविधब्रह्मवाचक ओंकार इति तात्पर्यम् । तस्माद्विद्वानोंकारोपासक एतेनैवोंकाररूपेण मार्गेणैकतरं परमपरं वा ब्रह्मान्वेतीत्यर्थः । अत्रेत्थं व्यवस्था । ब्रह्म परापरभेदेन द्विविधम् । अपरं चैहिकामुष्मिकभेदेन द्विविधमिति संकलनया त्रिविधम् । ओंकारश्चैकमात्रद्विमात्रत्रिमात्रभेदेन त्रिविधः क्रमेण त्रिविधब्रह्मवाचकः । एकमात्र ऐहिकापरब्रह्मवाचकः । द्विमात्र आमुष्मिकापरब्रह्मवाचकः । त्रिमात्रश्च परब्रह्मवाचकः । तत्र त्रिमात्रपरब्रह्मवाचकोंकारेण परब्रह्मलोकप्राप्तिरेव भवितुमर्हतीति भावः । परब्रह्मलोको वैकुण्ठः ॥ १२ ॥ ( ४ )

२९.६—१३ **अथ यदिदमिति** । उपास्यतया संनिहितस्य परब्रह्मणः स्थानतया नवद्वारवत्त्वादिना च पुरशब्दित उपासकशरीरे पुण्डरीकाकारं दहरमल्पं वेश्म स्थानम् । अस्मिन्स्थाने दहरः सूक्ष्मो य आकाशः परमात्मा स तस्मिन्परमात्मनि यदन्तर्वर्ति गुणजातं तच्चेति चशब्दाध्याहारः । एतदुभयं श्रवणमननाभ्यामवगन्तव्यमेतदेव विजिज्ञासितव्यमिति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षी त्वन्वेष्टव्यगुणाधारत्वं परमात्मनो न जानाति । अतस्तन्मत आकाशशब्देन भूताकाशो जीवो वा गृह्यते । तदन्तर्वर्ती तु परमात्मा गृह्यते । चशब्दाध्याहारश्च नास्ति ।

२९.७—८ **निरुपाधिकात्मत्वमिति** । देवादिकतिपयशरीरविशेषानवच्छिन्नत्वं निरुपाधिकत्वम् । तच्च जीवे न संभवति । अतति स्वकार्यं व्याप्नोतीत्यात्मेति योगार्थाश्रयणेन यद्भूताकाशस्यात्मत्वं तदपि सोपाधिकमेव । योगाद्रूढिर्बलीयसीति न्यायविरोधश्च ।

—८ **अथ य इति** । य उपासका आत्मानमेतान्सत्यान्कामांश्चानुविद्योपास्य परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारो भवति । सत्यान्नित्यान् । आत्मान्काम्यमानानपहतपाप्मत्वादीन्परमात्मगुणान् । कामचारः स्वातन्त्र्यम् । संपन्नः सहितः । महीयते पूज्यते ।

—१३ **यावानिति** । यथायं भूताकाशो द्यावापृथिव्याद्याश्रयस्तथैषोन्तर्हृदय आकाशः परमात्मेति परमात्मनो भूताकाशेनोपमा प्रतिपाद्यते । यदि हृदय आकाश इत्यत्राप्याकाशशब्देन भूताकाश एव गृह्यते तर्ह्युपमानोपमेययोर्भेदाभावेनोपमा न संभवति ।

—१५ **हृदयेति** । यदि भूताकाशस्योपमानत्वं तस्यैव च हृदयावच्छिन्नस्योपमेयत्वमित्यौपाधिकभेदेनोपमानोपमेयभावः कल्प्यते तर्हि हृदयावच्छिन्नाकाशस्य द्यावापृथिव्याद्याश्रयत्वाभावेन साधारणधर्माभावादुपमा न संभवति ।

२९७-१९ श्रवणादिति। तथा च भूताकाशस्य सर्वस्माज्ज्यायस्त्वाभावेनोपमा न संभवतीत्याशयः।

२९८-४ युक्तत्वादिति। तथा चापहतपाप्मत्वादिगुणानां दहराकाशान्तर्वर्तिपरमात्मनिष्ठत्वेनोपपत्तौ दहराकाशस्य भूताकाशत्वेपि न विरोध इति शङ्काशयः।

—६ व्यभाङ्क्षीदिति। अयं दहराकाशोयं च तदन्तर्वर्तीति विभागः श्रुत्यैव प्रदर्शित इति भावः।

२९९-२२ यथा हीति। यथेह लोके प्रजा अन्वाविशन्ति राजानमनुसरन्ति राजशासनानुरोधेन राजदत्तं क्षेत्रादिकं फलं भुञ्जन्ति न तु स्वातन्त्र्येण तथा तेषां परमात्मानं तद्गुणांश्चानुपास्यैव परलोकं गतानां सर्वेषु लोकेष्वकामचारः पारतन्त्र्यमेव भवतीत्यर्थः॥ १३॥

३००-१४-३०१-२ तद्यथेति। तथा भूमेरन्तर्निक्षिप्तं हिरण्यनिधिं निधिमत्क्षेत्रस्वभावविज्ञानहीना निधेरुपर्युपरि सञ्चरन्तोपि न लभन्त एवमेवेमाः सर्वाः प्रजाः सुषुप्तिकालेहरहर्गच्छन्त्यः सुषुप्तौ सति संपद्य न विदुरित्युक्तरीत्याऽविभागं गच्छन्त्य एतं दहराकाशाख्यं ब्रह्मरूपं लोकं न विन्दन्ति। अनृतेन सांसारिकफलकेन कर्मणा प्रजाः प्रत्यूढाः प्रतीपं नीताः स्वभावान्तरं नीता इत्यर्थः। गमयत इति। सुषुप्तौ सर्वेषां जीवानां भूताकाशे जीवे च गमनस्यासंभवाद्भूताकाशजीवयोर्ब्रह्मलोकशब्देन निर्देशस्यासंभवाच्च।

३०१-९ मा भूदिति। दहराकाशस्य ब्रह्मत्वे यद्गतिशब्दयोर्हेतुत्वं तदन्यत्र श्रुतौ तथाविधार्थदर्शनसापेक्षमिति तथा हि दृष्टमिति सूत्रावयवस्यार्थः। अन्यत्र दर्शनाभावेपि गतिशब्दयोर्हेतुत्वमिति लिङ्गं चेति सूत्रावयवस्यार्थ इति भावः।

—१३ समानाधिकरणवृत्त्येति। ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयसमासो हि समानाधिकरणवृत्तिः। ब्रह्मशब्दस्य लोकशब्देन सह सामानाधिकरण्यात्। ब्रह्मणो लोक इति षष्ठीतत्पुरुषो हि व्यधिकरणवृत्तिः। सा च गौरवात्परित्यज्यते। तत्पुरुषे हि पूर्वोत्तरपदार्थयोर्भेदेन प्रतीतेर्गौरवं स्पष्टमेव। अत एव निषादस्थपतिं याजयेदित्यत्र निषादरूपः स्थपतिरिति कर्मधारयः स्वीकृतः, न तु षष्ठीतत्पुरुषो बहुव्रीहिश्च। बहुव्रीहावप्यन्यपदार्थकल्पनया गौरवं स्पष्टमेव। स्थपतेर्निषादत्वे तस्य याज्ञे कर्मण्यधिकाराभावेप्येतद्वाक्यसामर्थ्येनात्राधिकारकल्पनमिति बोध्यम्॥ १४॥

३०२-१२ धृतेश्चेति। अस्य परमात्मनो धृतिरूपमहिम्नोस्मिन्दहराकाश उपलब्धेर्दहराकाशः परमात्मेति सूत्रार्थः।

३०२–१४ **स सेतुरिति** । संभेदः संकरः । एषां लोकानामसंकराय स दहराकाशशब्दवाच्य आत्मा सेतुरिव विधारक इत्यर्थः । यद्ययं परमात्मा स्वशासनेन जगन्न धारयेत्तर्हि सर्वधर्माणां सांकर्यमेव स्यात् । पृथिव्या गन्धवत्त्वं जलस्य शैत्यं तेजस औष्ण्यमित्यादयो धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति ॥१५॥१६॥

३०३–११ **साक्षादिति** । न तु परमात्मवद्धर्मद्वारा परामर्श इति भावः ।

—११–३ **अथ य इति** । संप्रसादशब्दः सुषुप्तिस्थानवचनः संस्तत्संबन्धाज्जीवं लक्षयति । एष जीवोस्माद्धेयतया परिदृश्यमानाच्छरीरादुत्क्रम्य देशविशेषनिष्ठं परमात्मानं प्राप्य स्वेन रूपेणाभिनिष्पद्यते । एष आत्मैतदमृतमित्यत्राप्येतच्छब्देन न य एष इति निर्दिष्टस्य जीवस्य परामर्शः । किं तु परं ज्योतिरिति निर्दिष्टस्य परमात्मन एव । तस्यैव प्राप्यतया प्राधान्यादव्यवहितत्वाच्च ॥ १७ ॥

३०४–१ **उत्तराच्चेदिति** । उत्तरात्प्रजापतिवाक्यादपहतपाप्मत्वादिगुणको जीवो गम्यत इति चेन्न । कर्मणा तिरोहितगुणकः परब्रह्मोपासनयाविर्भूतस्वरूपो जीवस्तत्र प्रजापतिवाक्येपहतपाप्मत्वादिगुणकः कथितः । दहराकाशस्त्वतिरोहितस्वरूपापहतपाप्मत्वादिगुणक इति दहराकाशे न जीवाशङ्केति सूत्रार्थः ।

—६–१२ **यस्तमिति** । य उपासकस्तमात्मानमुक्तविशेषणविशिष्टं जीवात्मानमनुविद्य वाक्यार्थज्ञानविषयीकृत्य विजानाति ध्यायतीति प्रजापतिरुवाचेत्यर्थः । **मघवन्निति** । हे मघवन्निदं शरीरमेव हि मरणधर्मि । न केवलं मरणधर्मित्वमात्रमपि तु मृत्युनात्तं व्याप्तं च । सततविनाशशीलमिति यावत् । इदं च शरीरं हेयत्वानुसंधानार्थमुक्तम् । एवंभूतं कर्मकृतमिदं शरीरं कर्मकृतशरीरराहित्यलक्षणामृतत्वस्वरूपस्यात्मनो भोगाधिष्ठानमित्यर्थः ( वि. दी. ) ।

३०५–३ **स उत्तम इति** । स प्राप्य उत्तमः पुरुषस्तत्रोत्तमपुरुषे स प्राप्तो जीवः पर्येत्युत्तमपुरुषं परितोनुभवति । जक्षन्नित्यादेर्यथेष्टं भोगानवाप्नोतीति तात्पर्यम् । तत्र चेदमुपजनं स्त्रीपुंसयोरन्योन्योपगमेन जातमत एवापुरुषार्थभूतं शरीरं बद्धावस्थायामिव स्वीयत्वेन न स्मरन्नित्यर्थः । यद्यपि मुक्तस्य सर्वज्ञत्वात्तेन त्यक्तस्य शरीरस्येतरबद्धजीवशरीराणां च तस्यानुसंधानमस्त्येव तथापि यथा तस्य प्राग्बद्धावस्थायां शरीरस्याब्रह्मात्मकतया दुःखरूपत्वेनानुसंधानं न तथा मुक्तावस्थायामित्यर्थः । **स यथेति** । आचरणं शकटम् । प्रयोग्यो युग्यः । यथा शकटे युगं वहन्नश्वो बलीवर्दो वा पाशेन युक्तो भवत्येवमेवायं प्राणः प्राणसञ्चारी जीवः शरीरे संसारदशायां कर्मपाशेन युक्तो भवतीत्यर्थः ।

—११ **अथ यत्रेति** । यत्र यस्मिञ्जीवेनुविषण्णमुपकरणत्वेन निबद्धमेतच्चक्षुराकाशं प्रकाशं रूपं वा प्रकाशयति स चाक्षुषश्चक्षूरूपकरणकः पुरुष

आत्मा । चक्षुस्तु दर्शनसाधनमात्रम् । तथा घ्राणं गन्धग्रहणसाधनमात्रम् । ज्ञाना त्वात्मा । अभिव्याहार उक्तिः ।

३०६-३ तं वा एतमिति । एतादृशात्मस्वरूपस्य मघवत उपदिष्टत्वाद्देवाः सर्वे मघवतः सकाशादेतमात्मानमुपश्रुत्य तमेवोपासत इत्यर्थः ।

—६ यस्तमिति । इदानीमपि तमात्मानमुपासीनानां मनुष्याणामपि सर्व- लोकसर्वकामावाप्तिर्भवतीत्यर्थः ।

—१३ आविर्भूतेति । आविर्भूतस्वरूपस्य प्रजापतिवाक्योक्तत्वाद्दहराका- शस्य च स्वत एवापहतपाप्मत्वादिप्रतिपादनात्तच्छरीरान्तस्थितस्यैव गुणाष्टक- प्रतिपादनान्मुक्तेष्वसंभावितसर्वलोकविधरणादिश्रुतेश्च दहराकाशः परं ब्रह्मे- त्यर्थः ( श्रु. ) ॥ १८ ॥

३०७-५ अन्यार्थ इति । अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति परज्योतिःस्वरूपदहराकाशोपसंपत्त्यास्य जीवस्य कर्मति- रोहितस्वरूपस्य स्वरूपाविर्भावो भवति । तथा च यथा जगद्विधरणत्वादयः परमात्मनो गुणास्तथा जीवस्य या स्वाभाविकरूपप्राप्तिस्तद्धेतुत्वं परमात्मनो गुणः । यत उपासकस्य स्वाभाविकरूपप्राप्तिः परमात्मनः सकाशादेव जायते । तथा च तादृशगुणकथनाय जीवपरामर्शः । तस्य गुणस्य जीवनिरूपकत्वात् ।

—१० दहरविद्योपयोगितयेति । तथा च प्रजापतिवाक्योक्तं जीवात्म- विज्ञानं दहरविद्याशेषभूतमेव । दहरविद्यायां हि ब्रह्मणः प्राप्यत्वम् । प्राप्यत्वं च प्राप्तिविशिष्टत्वम् । सा च प्राप्तिः कल्याणगुणविशिष्टजीवकर्तृकेवेति तादृश- जीवस्यापि प्राप्यान्तर्भावात्तस्यापि ज्ञातव्यत्वात् ।

—१४ ननु जीवात्मविज्ञानस्य दहरविद्याशेषत्वे तस्य सर्वलोकावाप्त्यादिपृथ- क्फलकथनानुपपत्तिः । फलवत्संनिधावफलं तदङ्गमिति न्यायादिति चेत्तत्राह- सर्वांश्चेति । अङ्गिनः फलमेवाङ्गे कथितमिति भावः ॥ १९ ॥

३०८-६ घ्नन्तीति । एनं स्वप्नावस्थं जीवमितरे घ्नन्ति तथा विच्छादयन्ति द्रावयन्ति । एवमादिभिरित्यादिशब्देनाप्रियवेत्तेव भवति रोदितीवेत्यस्य परि ग्रहः ॥ २० ॥

—१५ यदा पश्य इति । एतच्छ्रुत्यर्थः प्राक् ( विवृति-पृ. १७७ प. ९ ) उक्तः । तस्य परमात्मनोनुकाराद्धि जीवस्याविर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणक- त्वम् । तथा चानुकर्तुर्जीवादनुकार्यः परब्रह्मभूतो दहराकाशो भिन्न एवेति सिद्धमिति भावः ॥ २१ ॥

३०९-१ अपीति । अपिशब्दः समुच्चयार्थः । स्मर्यते चेत्यर्थ इति वेदान्त- दीपकाराशयः ।

३०९–७–१५ **केचिदिति** । शांकरमतानुयायिनः । तथा च तन्मत इत्थं सूत्रार्थः—**अनुकृतेस्तस्य च** । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ( मु. २।२।१० ) इति श्रुतौ तस्य सूर्यचन्द्रादिप्रपञ्चस्यानुकृतेः परमात्मानमनुसृत्य भानात्तस्य भासेत्यत्र तच्छब्देन परमात्मैवोच्यते । सूर्यचन्द्रादिव्यतिरिक्तमलौकिकं तेज इत्यर्थः । **अपि च स्मर्यते** । न तद्भासयते सूर्यः (भ. गी. १५।६ ) इति स्मृतौ च सूर्यचन्द्राद्यप्रकाश्यत्वं परमात्मनः प्रतिपाद्यत इति । **भारूपत्वावगतेरिति** । एकेनाधिकरणेन प्रतिपादितोर्थोऽधिकाशङ्कायां सत्यामन्येनाधिकरणेन पुनः प्रतिपाद्यत इति वक्तुं युक्तं न त्वन्यथेत्याशयः । **सूत्राक्षरेति** । तन्मते ह्यनुकृतिशब्दस्यानुभानमर्थः । स च न संभवति । कृधातोर्भानार्थत्वाभावात् । धातूनामनेकार्थत्वेन तत्कल्पनेपि सूत्राक्षराननुगुण्यं स्पष्टमेवेति बोध्यम् ॥ २२ ॥ ( ५ )

—१८–३१०–५ **अङ्गुष्ठेति** । आत्मशब्दो देहवाची । भूतभव्यस्य कालत्रयवर्तिनिखिलचेतनाचेतनात्मकप्रपञ्चस्येशान ईश्वर उपासकशरीरमध्येङ्गुष्ठपरिमाणः सन्नास्ते । ततः कष्टभूतदेहान्तरावस्थानान्न विजुगुप्सते । वात्सल्यातिशयेन भोग्यमेव पश्यति । **एतद्वै तत्** । एतन्मन्त्रप्रतिपाद्यमपि पूर्वोक्तपरमात्मस्वरूपमेव । **ज्योतिरिवाधूमकः** । शुष्केन्धनानलवत्प्रकाशमानः । अद्याद्यतनपदार्थजातम् । श्वः श्वस्तनपदार्थजातम् । कालत्रयपदार्थजातं स एवेत्यर्थः । **तं स्वादिति** । यथा मुञ्जात्तृणविशेषादन्तर्भूतशलाका पृथक्क्रियते तथा तमन्तर्यामिणं परमात्मानं स्वाच्छरीरात्परमात्मशरीरभूताज्जीवात्प्रवृहेत्पृथक्कुर्यात् । धारकत्वनियन्तृत्वशेषित्वधर्मैर्विलक्षणधैर्येण प्रज्ञाकौशलेन जानीयात् । शुक्रं तेजिष्ठम् । अयं सिद्धान्तिसंमतोर्थो दर्शितः । पूर्वपक्षी तु भूतभव्यशब्दस्य संकुचितार्थकत्वं गृह्णाति । तन्मते भूतभव्यस्य जीवाधीनशरीरेन्द्रियादिवस्तुन इत्यर्थः ।

३१०–१७ **शब्दादेवेति** । भूतभव्यशब्दस्य संकुचितार्थकत्वे प्रमाणाभावात् । न हि प्राणाधिप इति श्रुतौ स्वकर्मभिरिति जीवलिङ्गं यथा दृश्यते तथात्र किंचिद्दृश्यते ॥ २३ ॥

३११–७ **स्थितमिति** । अस्मिन्नधिकरणे किंचिदधिकं यद्वक्तव्यमवशिष्टमस्ति तत्सूत्रकृद्भिः कम्पनात् ( १।३।४० ) ज्योतिर्दर्शनात् ( १।३।४१) इति सूत्रद्वयेन वक्ष्यते । मध्ये तु प्रासङ्गिको ब्रह्मविद्याधिकारविचारः क्रियत इति भावः ॥ २४ ॥ ( ६ )

—१४ **विवेकविमोकादीति** । तत्स्वरूपं प्राक् (श्रीभाष्य–पृ. ११ प. १६) प्रतिपादितम् । उपसंहारसामर्थ्यम् । अनुष्ठानसामर्थ्यम् ।

३११-१६ यद्यपीति । प्रयोजनपर्यवसायितयैव हि शब्दस्य प्रामाण्यम् । तत्र पूर्वभागवचसां प्रवृत्तिनिवृत्तिरूपप्रयोजनपर्यवसानात्तत्र तात्पर्यम् । ब्रह्मणः पुरुषार्थरूपतया तत्र वेदान्तानां तात्पर्यम् । देवादीनां विग्रहेषु तथात्वाभावान्न तात्पर्यमिति भावः ( श्रु. ) । परिनिष्पन्नेऽपीति । इदं प्राक् ( श्रीभाष्य-पृ. १२७ प. ३ ) उक्तम् ।

—१९ मन्त्रार्थवादा इति । तत्र मन्त्राणामनुष्ठेयार्थप्रकाशकत्वेनार्थवादानां च स्तावकत्वेन कर्मविधिशेषत्वं बोध्यम् ।

—२० उद्देश्येति । उद्देश्यकारकं संप्रदानकारकम् । यज्ञादिकर्मणि हविःप्रदान उद्देश्यभूता देवतेत्येतावन्मात्रमेव कर्मविधिभ्योऽवगम्यते न तु तासां शरीरादि । न च शरीराभावे कथं तासां यज्ञादिकर्मफलभूतस्वर्गादिसुखप्रदातृत्वमिति वाच्यम् । अपूर्वस्यैव तत्प्रदातृत्वाभ्युपगमादिति पूर्वपक्ष्याशयः ।

३१२-२ अर्थित्वमपीति । अर्थित्वं हि दुःखजिहासा । देवतानां शरीराभावे दुःखं तज्जिहासा च न संभवतीति भावः ।

३१३-१-४ देवादीनां विग्रहवत्त्वे उपासनप्रकरणस्थश्रुतीर्दर्शयति—तद्धोभय इति । उभये देवा असुराश्च तत्सोऽन्वेष्टव्य इत्यादिप्रजापतिवचनमैतिह्यरूपेण श्रुतवन्तः । ते देवा असुराश्चात्मानमन्विच्छाम इत्यूचुः । ततो देवानां मध्य इन्द्रोऽसुराणां मध्ये विरोचनश्चाभिप्रवव्राज । प्रजापतिसकाशं गन्तुं प्रस्थितः । असंविदानौ । परस्परासूयया परस्परमंमन्त्रणमकुर्वन्तौ । ब्रह्मचर्यमूषतुः । शुश्रूषापरौ भूत्वा ब्रह्मचर्यं चेरतुरित्यर्थः ।

—१७ न च निर्विशेषेति । यः पदार्थो बुद्धावनुसंधीयते स केनचिद्रूपेणैवेति नियमात्मन्त्रेर्जायमानमिन्द्राद्यनुसंधानमेतादृश इन्द्र इत्यादिप्रकारेण तद्गतशरीरादिविशेषानुसंधानपूर्वकमेव भवितुमर्हतीति भावः ।

३१४-१ तत्रेति । देवतादिगतशरीरादिविशेषमभिदधत एवार्थवादा गुणानां प्रमाणान्तराप्राप्तत्वे तान्स्वयमेव विधाय तैर्गुणैस्तत्कर्म प्ररोचयन्ति । तादृशा मन्त्राश्च गुणानां प्रमाणान्तराप्राप्तत्वे तान्स्वयमेव विधाय तादृशगुणविशिष्टमुपास्यादिकं प्रकाशयन्ति । गुणानां प्रमाणान्तरप्राप्तत्वे तुताननूद्य तैरर्थवादाः प्ररोचनं कुर्वन्ति मन्त्राश्च प्रकाशनं कुर्वन्ति । अर्थवादगतानां मन्त्रगतानां च गुणानां प्रमाणान्तरविरुद्धत्वे तु तादृशगुणवाचकशब्दैः प्रमाणान्तराविरुद्धान्गुणाँल्लक्षयित्वा तैरर्थवादाः प्ररोचनं कुर्वन्ति मन्त्राश्च प्रकाशनं कुर्वन्तीत्यर्थः ।

—५-६ ननु कर्मविधिशेषभूतानां मन्त्रार्थवादानां कर्मविध्यपेक्षितार्थ एव तात्पर्यम् । देवताविग्रहादेर्विध्यपेक्षितत्वं कथमित्यत्राह—कर्मविधेश्चेति ।

अपेक्षितमेवेति । स्वर्गादिकर्मफलसाधकतयेति शेषः । मन्त्रार्थवादप्रतिपादितैश्वर्यस्यैव फलसाधकत्वेन कल्पनमुचितं न तु तदप्रतिपादितापूर्वस्येत्याशयः ।

३१४–८ अपेक्षत इति । क्षणप्रध्वंसिनः कर्मणः कालान्तरभाविस्वर्गादिफलसाधकत्वासंभवेन स्वर्गकामो यजेतेत्यादिविधिरनुपपन्नः सन्किंचित्साधकमपेक्षते । तत्र प्रतीयमानैश्वर्यादेरेव साधकत्वेनान्वयो न त्वप्रतीयमानापूर्वस्य । एतेनापूर्वं कल्पयन्तस्तस्य चापूर्वस्य साधकत्वेनान्वयार्थं लिङादिप्रत्ययवाच्यत्वं च स्वीकुर्वन्तो मीमांसकाः प्रत्युक्ताः । अपूर्वकल्पनां विनाप्युपपत्तेरुक्तत्वात् ।

—८–११ वायुर्वा इति । भूतिकामो वायुदेवताकं पशुमालभेतेति पूर्वमुक्त्वा तत इदमुच्यते । वायुदेवता क्षेपिष्ठातिशयेन क्षिप्रगामिनी । भागधेयेनेति धेयप्रत्ययः स्वार्थे । स्वेन भागेन वायवीयेन पश्वंशेन यजमानो वायुमेवोपधावति । इतरदेवतानामस्मिन्पशावत्यन्तप्रियत्वाभावाद्वायुमेवेत्यवधार्यते । स वायुरेनं यजमानं भूतिं ददातीत्यर्थः । यदनेनेति । अनेन हविषा यजमानो यत्फलमाशास्ते तत्फलमश्याद्भुञ्जाम् । तच्च फलमृध्यात्समृद्धमस्य भवतु । तत्सर्वमस्मै यजमानायाग्न्यादयो राध्नन्तां साधयन्तामित्यर्थः ।

—१४ प्रतीयत इति । तथा च यजिधातुवाच्यदेवपूजायां पूज्यत्वेन प्रतीयमानस्य प्रधानीभूतस्य देवस्यैव फलसाधकत्वेनान्वय इत्याशयः ।

—१६ व्युत्पत्तिसमयेति । यस्माच्छब्दाद्योऽर्थः प्रतीयते स तस्य वाच्य इति व्युत्पत्तिसमयः । स्वर्गकामो यजेतेत्यत्रापूर्वकल्पनां विनाप्युक्तरीत्योपपत्तेस्तत्रापूर्वं न प्रतीयत इति तस्यापूर्वस्य वाच्यत्वं व्युत्पत्तिसमयविरुद्धम् । तथा च नापूर्वं वाच्यं नापि कल्प्यमिति भावः ।

—१७ संकीर्णेति । संकीर्णाः प्रसङ्गादन्यत्रानुप्रविष्टाः । ब्राह्मणशब्देन विध्युद्देशग्रहणम् । धर्मशास्त्रादीनि हि ब्राह्मणमन्त्रार्थवादरूपवेदमूलानि । यद्यपि क्वचिद्धर्मशास्त्राद्युक्तार्थविषये मूलभूतश्रुतिः स्वप्रकरणे नोपलभ्यते तथापि प्रकरणान्तरे प्रसङ्गादन्यत्रानुप्रविष्टोपलभ्यत एव । एतेन तादृशार्थानामनुमेयश्रुतिमूलत्वमुत्सन्नशाखामूलत्वं वा निरस्तम् ॥ २५ ॥

३१५–६–७ अग्निमिति । हे आहुत्याधारभूताग्ने प्रथमाज्यभागदेवतामग्निमावहेत्यर्थः । हरिव इति । हरिनामकावश्वौ विद्येते अस्य तत्संबोधनं हे हरिव इति ।

—११ श्वोभूत इति । परेद्युरित्यर्थः ॥ २६ ॥

—२० इन्द्रादीनि । इन्द्रादिशब्दानां योऽर्थो देवतारूपस्तदुत्पत्तेः प्राक्तद्विनाशादूर्ध्वं चेन्द्रादिशब्दाः सन्ति न वा । आद्ये तेषां शब्दानामनर्थकत्वम् । तदानीमर्थस्याविद्यमानत्वात् । अन्त्ये वेदस्यानित्यत्वं प्रसज्येतेत्याशयः ।

३१६-६ विपरिवर्तमानादिति । बुद्धिस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वमिति भावः ।

—१० सतासती इति । चिदचितो इत्यर्थः ॥ २७ ॥

३१७-६ मन्त्रकृत इति । अध्ययनाभावेप्यस्खलितक्रमस्वरवर्णतया यन्मन्त्राणां दर्शनं तदेव मन्त्रकृत्त्वम् । न तु मन्त्रोत्पादकत्वम् । अयं सो अग्निरिति सूक्तं विश्वामित्रस्येत्यर्थः ।

—९-१२ एभिरेवेति । वसिष्ठादीनां मन्त्रकृत्त्वेपि मन्त्रादिमयस्य वेदस्य नित्यत्वं तिष्ठत्येव । प्रजापतिर्हि नैमित्तिकप्रलयानन्तरं मन्त्रकृतो वृणीते विश्वामित्रस्य सूक्तं भवतीत्यादिवेदशब्देभ्योनधीतमन्त्रादिदर्शनशक्तवसिष्ठाद्याकृतिविशेषं स्मृत्वा वसिष्ठत्वादिपदप्राप्तयेनुष्ठितकर्मविशेषांश्चानुस्मृत्य तदाकारांस्तावद्वसिष्ठादीन्सृजति । ते चानधीत्यैव वेदैकदेशभूतमन्त्रादीन्स्वरतो वर्णतश्चास्खलितान्पठन्ति । तदेषां मन्त्रादिकृत्त्वेपि वेदस्य नित्यत्वमुपपद्यते (वे. दी.) । प्राकृतप्रलये त्वग्रे वक्ष्यते । नियुङ्क्ते इति । मन्त्रदर्शनानुगुणं तपश्चरतेति नियुङ्क्त इत्यर्थः ॥ २८ ॥

३१८-१ भूतादीति । तामसाहंकारस्य भूतादिरिति संज्ञा । तस्मादेव शब्दादयो जायन्ते । वेदश्च शब्दरूप एव । तथा च प्राकृतप्रलये प्रकृतिपरिणामभूतसर्वविकाराणां लयस्यावश्यकतया प्रजापतेः शब्दस्य च लयात्प्रजापतिकर्तृका शब्दपूर्विका सृष्टिर्नोपपद्यत इत्यर्थः । प्राकृतप्रलय एव महाप्रलयः ।

—४ प्रवाहानादितेति । सांप्रतं यो लोकव्यवहारो दृश्यते स प्रवाहरूपेणानादिरेव न तु मध्ये सृष्टिप्रलयाविति शङ्काशयः ।

—८ कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपीति । मध्ये सृष्टिप्रलयसत्त्वेपीत्यर्थः ।

—११ शक्तिमात्रावशेषमिति । विद्यमानस्यैव भोग्यवर्गादेर्भोग्यत्वाद्यनुगुणा शक्तिरस्ति न तु तत्कार्यमिति भावः ।

३१९-१ इदमिति । ईश्वरेण कृता हिरण्यगर्भोत्पत्तिस्तस्मै वेदोपदेशश्चेत्यर्थः ।

—७ सोभिध्यायेति । यद्यप्यस्यां स्मृतौ वेदोपदेशो नोक्तस्तथापि प्रागुक्तश्रुत्यनुरोधाद्ग्राह्यः । अनुक्तमन्यतो ग्राह्यमिति नियमात् । तथा च वेदनित्यत्वं नाम प्रत्युच्चारणपूर्वपूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम् । अर्थनित्यत्वं नाम प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वार्थाकारसुसदृशसंस्थानविशिष्टत्वम् । तथाविधार्थप्रतिपादकत्वमेव वेदस्य नित्यार्थसंयोग इति सिद्धम् ॥ २९ ॥ ( ७ )

३२०-१ मध्वादिष्विति । अमधुनः सूर्यस्य मधुत्वकल्पनयोपासनं मधुविद्या । तत्प्रभृतिविद्यासु वस्वादीनां देवानामनधिकारं जैमिनिर्मन्यते । अथ-

त्वसामर्थ्ययोरसंभवात् । वस्वादीनामेवोपास्यानामुपासकत्वासंभवात्सामर्थ्याभावः । कर्तृकर्मविरोधात् । वसुत्वादेः प्राप्तत्वादेव प्राप्यत्वासंभवाच्चार्थित्वाभावः । प्राप्तफलत्वादिति सूत्रार्थः । यद्यपि यस्यां विद्यायां यस्या देवताया उपास्यत्वं तस्यां विद्यायां तद्देवताव्यतिरिक्तदेवताया उपासकत्वं संभवति तथाप्युपास्याया न संभवतीत्येव पूर्वपक्ष्याशयो बोध्यः ।

३२०–५ आदित्यवस्वादिभिरिति । आदिशब्देन मरुद्रुद्रसाध्यसंग्रहः ।

—७ मधुविद्यायामिति । कर्मनिष्पाद्यस्य रश्मिद्वारेणेति पाठः । आदित्यस्य मधुत्वकल्पनं हीत्थम्—अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत इत्युक्तरीत्या यज्ञकर्मण्यग्नौ प्रक्षिप्ता सोमाज्यपयःप्रभृतिद्रव्याहुती रश्मिद्वारा रसरूपेणादित्यमुपतिष्ठते । तत्र च यथा मधुकराः पुष्पेभ्यो रसमानीय मधु संचिन्वन्ति तथा मन्त्ररूपमधुकरा वेदोक्तकर्मरूपपुष्पेभ्यः सकाशात्सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजोवीर्याद्यात्मकानि लोहितशुक्लकृष्णादीनि पञ्चामृतानि प्राग्दक्षिणपश्चिमोत्तरोर्ध्वदेशस्थितसूर्यरश्मिद्वारा सूर्यमण्डलमानयन्ति । तानि च वस्वादिदेवा अग्न्यादिमुखेनोपभुञ्जन्ति । उपभोगश्चात्र तादृशामृतदर्शनजा तृप्तिरेव । अस्यां विद्यायां लोहिताद्यमृतरूपाणामादित्यांशानां यदुपास्यत्वं तत्तद्भोक्तृभिर्वस्वादिभिः सहैव । आदित्यांशानां वस्वादिभिर्भुज्यमानाकारेणैवोपास्यत्वोपदेशात् । तथा चोपासकत्वमर्थादितरेषामेव न वस्वादीनामिति भावः ।

—११–२ तदादिति । अग्निमुखेन वसवो रोहितरूपलक्षणममृतमुपजीवन्तीत्यर्थः । स य इति । तत्क्रतुन्यायेन तदुपासीनोपि वसुत्वं प्राप्य तथैव भवतीत्यर्थः ॥ ३० ॥

—१६ तं देवा इति । ज्योतिषां ज्योतिः प्रकाशकानां प्रकाशकम् । अमृतं कालापरिच्छिन्नम् । आयुः सर्वप्राणिप्राणनहेतुभूतम् । तं परमात्मानं देवा उपासते । अत्र देवानामुपासकत्वस्य सिद्धत्वेनेयं श्रुतिर्व्यर्था सती नियमार्था । नियमश्च द्विविधः किं परं ब्रह्म देवानामेवोपास्यमुत देवानां परं ब्रह्मैवोपास्यमिति । तत्राद्ये मनुष्याणामनधिकारप्रसङ्गादन्त्य एव युक्त इति मध्वादिविद्यायां देवानामधिकाराभावः सिद्ध इत्याशयः ॥ ३१ ॥

३२१–३ अस्ति हीति । अत्र हीत्यादिनानुपदमेव वक्ष्यमाणप्रकारेण मधुविद्यादौ न वस्वादिदेवतामात्रमुपास्यं किं तु तदन्तस्थं ब्रह्म । तथा च वस्वादीनां स्वोपासकत्वासंभवेपि स्वान्तस्थब्रह्मोपासकत्वसंभवेन कर्तृकर्मविरोधाभावात्सामर्थ्यमस्त्येवेति बोध्यम् ।

—५ अपेक्षिता भवतीति । तथा चार्थित्वमप्यस्त्येवेति भावः ।

—१२–७ न ह वा इति । य एतां मधुविद्यारूपां ब्रह्मोपनिषदं ब्रह्मविद्यां

वेदास्मै ब्रह्मविद आदित्यो नोदेति न निम्लोचति नास्तमेति । आदित्योदयास्त-मयाभ्यां न किंचित्तस्य प्रयोजनम् । अस्मै ब्रह्मविदे सकृदुदितमहरेव भवति। सततं सर्वविषयकसाक्षात्कारोस्य भवतीत्यर्थः । **तदवस्थस्यैव ब्रह्मण इति** । तदवस्थस्य ब्रह्मण एवेत्यर्थः ।

३२२–१ **निचाय्यत्वादिति** । द्रष्टव्यत्वादित्यर्थः ॥ ३२ ॥ ( ८ )

—७ **अग्निविद्येति** । अग्न्याधानादिकर्मप्रतिपादकवेदाध्ययनसाध्येत्यि-त्यर्थः ।

—९ **शास्त्रीयक्रियापेक्षत्वेपीति** । उपासनस्य कर्माङ्गकत्वेन शास्त्रप्रति-पादितकर्मापेक्षत्वेपीत्यर्थः ।

—११ **तस्मादिति** । यतः परमपुरुषेण स्वपादतो न काचिद्देवता सृष्टा तत एव तत्पादोत्पन्नस्य शूद्रस्य देवतामनुसृज्यत्वाभावः । तस्मादेव कारणाच्छूद्रो यज्ञे प्रवर्तितुं न योग्य इत्यर्थः ( सा. ) ।

—२१ **संवर्गेति** । संवर्गः संवर्जनविशिष्टः । संवर्जनं सम्यग्ग्रहणम् । एकीकृत्य ग्रहणमिति यावत् । एतादृशगुणविशिष्टो यो वायुर्वायुशरीरकः परमात्मा तदुपासनं संवर्गविद्योच्यते ।

३२३–१ **आजहारेति** । मुखमुपायः । हे शूद्र त्वमिमा दक्षिणा आजहर्था-नीतवानसि । अनेनैवोपायेन मां ब्रह्मोपदेशरूपं वाक्यमालापयिष्यसे । ब्रह्म-विद्योपदेष्टारं करिष्यसीत्यर्थः । थासः से ( पा. सू. ३।४।८० ) इत्येतदभाव-श्छान्दसः । आजहर्थेति वक्तव्ये आजहारेति पुरुषव्यत्ययोपि छान्दस एव । भवानित्यध्याहारो वा । शूद्रेति जानश्रुतेः संबोधनम् ।

—८ **यथैव हीति** । अपरानित्यस्य त्रैवर्णिकेतराञ्छूद्रानित्यर्थः । यथा शूद्रस्य याज्ञे कर्मणि नाधिकारस्तथैव ब्रह्मविद्यायामपि । याज्ञे कर्मणि कुतो नाधिकार इति चेदित्थम्–कर्मविधिर्हि देवताहविरादिपदार्थज्ञानसापेक्षः ज्ञानपूर्वकत्वात्कर्मणः । तथा ज्ञानहेतुभूताध्ययनसापेक्षश्च । अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एवार्थावबोधित्वदर्शनादध्ययनस्य ज्ञानहेतुत्वम् । तथा व्रतोपनयनादिसापेक्षश्च कर्मविधिः । ते च कर्मविध्यपेक्षिता ज्ञानादयस्त्रैवर्णिकेषु लभ्यन्त एव । एतेन कर्मविधिसार्थक्याय शूद्राणामप्यधिकारकल्पनमित्यपा-स्तम् । कर्मविधेस्त्रैवर्णिकेषु चारितार्थ्यात् । कर्मविधिवदुपासनविधयोपि त्रैवर्णि-कविषयाध्ययनगृहीतस्वाध्यायोत्पन्नज्ञानमेवोपासनोपायतया स्वीकुर्वत इति बोध्यम् ।

—१२ **कुर्वती एवेति** । तदुक्तम् ' इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ' इति ।

**३२४–१८ शुगस्येति**। शुक्छब्देन शोक उच्यते। आद्रवणमागमनम्। हिशब्दो हेतौ। ब्रह्मविद्यावैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदेवाचार्यं प्रत्याद्रवणाच्चाचार्येणास्य शुश्रूषोर्विद्याऽलाभकृता शुगत्र शूद्रशब्देन सूच्यते। यस्मादस्य शुक्सूच्यतेतः शोचनाच्छूद्र इति कृत्वाचार्यो रैक्वो जानश्रुतिं शूद्र इत्यामन्त्रयते न तु शूद्रत्वजातियोगेनेति सूत्रार्थः।"

**जानश्रुतेरिति**। जनश्रुतस्यापत्यं जानश्रुतिः। पुत्रसंज्ञकस्य राज्ञो गोत्रापत्यं पौत्रायणः।

**३२४–९ भल्लाक्ष भल्लाक्षेति**। भल्लाक्षशब्दस्य तीक्ष्णनेत्र इति वाच्यार्थः। अत्र च विपरीतलक्षणया मन्दलोचनेत्यर्थः। संभ्रमेण द्विरुक्तिः। हे मन्दलोचनास्य जानश्रुतेस्तेजः स्वर्गेण दिवसेन वा समं सृतम्। तस्मिंस्तेजसि मा सक्तो भूः। तत्तेजस्त्वां मा दहेदित्यर्थः।

**१२ कं वर इति**। कम् उ अरे इति च्छेदः। उ इत्यनर्थको निपातः। अरे कं सन्तं केन माहात्म्येन युक्तमेनं जानश्रुतिं सयुक्वानं गुणश्रेष्ठं सशकटं ना रैक्वमिवात्थ। रैक्वस्येवैतस्य प्रशंसावचनं कुतो ब्रवीषीत्यर्थः।

**—१९–२२ आत्मनिन्दति**। आत्मशब्देन जानश्रुतिः परामृश्यते। **क्षत्तारमिति**। सारथिमित्यर्थः। निष्कं कण्ठाभरणम्। अश्वतरीयुक्तं रथं च रैक्वाय दत्त्वेत्यर्थः। गर्दभादश्वायामुत्पन्नोऽश्वतरः। अयमश्वापेक्षयातिशयेन बलवान्।

**३२५–९ अपाहरेति**। दक्षिणात्वेन दातुमानीतमेतत्त्व नय तत्तवैवास्त्विति रैक्वो जानश्रुतिमाहेत्यर्थः। जानश्रुतिना स्वजनत्वपक्षयाल्पमानीतं तेनास्य ब्रह्मविद्योपदेशयोग्यता कथं स्यादिति रैक्वस्याभिप्रायः।

**—१८ उपदेशयोग्यताख्यापनेति**। शोचनेति शूद्र इति शूद्रशब्देन शोकाविष्टत्वसूचनादुपदेशयोग्यता ख्याप्यते॥ ३३॥

**३२६–२–४ बहुदायीति**। अर्थिभ्यो बहु दातुं शीलमस्य स बहुदायी। बहूस्य गेहेऽन्नं पक्तव्यं स बहुपाक्यः। अस्य जानश्रुतेर्दानपतित्वेन बहुतरपक्वान्नप्रदायित्वेन क्षत्तृप्रेषणेन बहुग्रामप्रदानेन च क्षत्रियत्वं प्रतीयत इति भावः। **संजिहान इति**। आसनमुज्झन्नुत्तिष्ठन्नेवेत्यर्थः॥ ३४॥

**—१२ अथ हेति**। संवर्गविद्यास्तुत्यर्थमाख्यायिकेयमारभ्यते। कपिगोत्रं शौनकसुतं कक्षसेनसुतमभिप्रतारिनामानं चैतौ द्वौ सूपकारैः परिविष्यमाणौ भोजनायोपविष्टौ कश्चित्संवर्गोपासको ब्रह्मचारी भिक्षितवानित्यर्थः। अत्र ब्रह्मचारिणो भिक्षणेन कापेयाभिप्रतारिणोस्त्रैवर्णिकत्वमर्थादेव सिद्धम्।

३२७-४ **कापेयसाहचर्यादिति** । कापेयेन सह पाठादित्यर्थः । कापेयसह-पाठबलेन कापेयसंबन्धः सिद्धः । तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धम् । तेन च क्षत्रियत्वमवगतम् ( श्रु. ) । तथा चास्यामाख्यायिकायां ब्राह्मणस्य क्षत्रियेणैव संबन्धात्तदनुसारेणास्यां विद्यायामपि रैक्वस्य ब्राह्मणस्य जानश्रुतिना क्षत्रियेणैव संबन्ध इत्यवगम्यत इति भावः ॥ ३५ ॥

—१४ **उप त्वेति** । ब्रह्मविद्याधिकारसिद्ध्यर्थमाचार्येण शिष्यस्योपनयनसंस्कारः कृत इत्यस्यां श्रुतौ प्रतिपादितम् ।

—१७ **न शूद्रे पातकमिति** । शूद्रस्य संध्यावन्दनादावधिकाराभावेन संध्यावन्दनाद्यभावनिमित्तं पातकं तस्य नास्तीत्यर्थः ( श्रु. ) ॥ ३६ ॥ ३७ ॥

३२८-५ **पद्यु हेति** । पादयुक्तं जङ्गममित्यर्थः । समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्रतिषेधोऽर्थसिद्धः ॥ ३८ ॥

—१० **अथ हास्येति** । अस्य शूद्रस्य द्विजैः पठ्यमानं वेदं शृण्वतः सीसलाक्षाभ्यां तप्ताभ्यां श्रोत्रद्वयपूरणं प्रायश्चित्तं कार्यमित्यादिरर्थः । उदाहरणं कथनम् । धारणं मनसा धारणम् ।

—१८ **अनुपनीतस्येति** । यथा नायं सर्पो रज्जुरेषेति वाक्याज्जायमानो भ्रमनिवृत्तिरुपनयनादिसंस्कारं नापेक्षते तद्वदिति भावः ।

३२९-११ **वेदविदिति** । वेदविदां यः संप्रदायस्तादृशसंप्रदायावगतं यौक्तिविशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति पौरुषेयवाक्यं तस्मादित्यर्थः ।

—१४ **वेदशिरसीति** । वेदान्तनिष्ठतया दग्धोऽखिलविधिनिषेधाधिकारो येषाम् । तथा च तेषां न चास्योपदिशेद्धर्ममिति निषेधकिंकरत्वं नास्तीति भावः । तदुक्तं नैष्कर्म्यसिद्धौ—दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिंकर इति ।

—१६ **अतिक्रान्तेति** । उल्लङ्घितनिषेधैरित्यर्थः । यद्यपि निषेधोल्लङ्घनं वक्तुर्दोषस्तथापि श्रोतुर्ज्ञानमुत्पद्यत एवेत्याशयः ।

—१९ **उत्तरयति**–तत्त्वमसीति ।

—२०-३३०-१ पुनः शङ्कते–**निदिध्यासनेनेति** । **तथैवेति** । निदिध्यासनेन द्वैतवासनायां निरस्तायामेव निवर्तकज्ञानोत्पादकमित्यर्थः ।

३३०-३ **तदर्थभावेनेति** । सा च श्रुतिवाक्याद्भवतु पौरुषेयवाक्याद्वा न कश्चिद्विशेषः । यदि निदिध्यासनमदृष्टद्वारा किंचित्कार्यकरं स्यात्तर्हि तस्यादृष्टोत्पादनाय श्रुतिवाक्यजन्यत्वापेक्षा स्यात् । तत्तु त्वयैव न स्वीकृतम् । यतस्त्वमेव निदिध्यासनविधेर्दृष्टार्थत्व ब्रूष इत्यर्थः ।

३३०-५ **विविदिषायां जातायामिति** । जन्मान्तरानुष्ठितयज्ञादिकर्मभिरिति शेषः । तथा चास्मिञ्छूद्रजन्मनि यज्ञादिकर्माधिकाराभावेपि न क्षतिरिति भावः ।

—१५ **सुशोभन इति** । इतः पूर्वमविद्यमानमीश्वरेशितव्यादिभेदज्ञानं जनयद्वेदान्तवाक्यं हित्वा केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याधिकारः सुलभ इत्यर्थः ( श्रु. )।

—१६ **तपस्विनी**। शोचनीया देशकालव्रताद्यनेकनियमवर्तीति भावः(श्रु.)।

—२० उत्तरयति-यत इति ।

३३१-४ **नाभ्युपगम्यत इति** । एतेन तर्कागोचरा य आत्मनिष्ठविशेषास्तत्सद्भावार्थं श्रुत्यपेक्षेति परास्तम् ।

—७ **तद्रूपत्वादिति** । आनन्दरूपत्वादित्यर्थः । आनन्दत्वं ह्यसुखव्यावृत्तिः। सा च सकलेतराचिद्रूपव्यावृत्तचिद्रूपतापेक्षया नातिरिक्तेति भावः ।

एवं परपक्षं दूषयित्वेदानीं स्वपक्षं साधयति-**यस्य त्विति** ॥ ३९ ॥ ( ९ )

३३२-१-४ **वाक्ययोर्मध्य इति** । प्रमिताधिकरणविषयीभूतयोर्वाक्ययोर्मध्य इत्यर्थः । अनेनास्य सूत्रस्य प्रमिताधिकरण-( अ. १ पा. ३ सू. २३ अधि. ६ ) शेषत्वं सूच्यते । **यदिदमिति** । प्राण इत्युत्तरं स्थितमिति शेषः । प्राणो ब्रह्म । एजति कम्पते । महादिति भयमिति वज्रमित्युद्यतमिति चत्वारि पदानि पञ्चम्यर्थे प्रथमान्तानि । वज्रशब्देन वज्रसदृशं ब्रह्म गृह्यते । यदिदं किं च जगत्सर्वं प्रलयदशायां ब्रह्मणि स्थितं सृष्टिदशायां ततो निःसृतं सदुद्यतवज्रादिवद्ब्रह्मणः सकाशात्संजातेन महता भयेन कम्पते । कम्पनं च प्रत्यवायभयात्स्वस्वकार्यप्रवृत्तिः । भयं चागाम्यनिष्टापत्तिज्ञानरूपं दुःखम् । कम्पनं च तत्कार्यम् ।

—१२ **अयं चेति** । कृत्स्नजगद्भयावहत्वरूपो ब्रह्मण एव स्वभाव इत्युक्तेः प्राणशब्दितः परमात्मैवेति सिद्धम् ॥ ४० ॥

३३३-१ **न तत्रेति** । अत्र पूर्वार्धेन ब्रह्मणः सर्वतेजसां बाधकत्वं सूच्यते । तृतीयपादेन सर्वतेजसां कारणभूतत्वं सूच्यते । चतुर्थपादेन चानुग्राहकत्वं सूच्यते ।

—११ **इत्यादिष्विति** । आदिशब्देन तच्छुभ्रं ज्योतिषां ज्योतिः । नारायणपरो ज्योतिः ( म. ना. १३ । १ ) इत्यादिसंग्रहः ॥ ४१ ॥ ( ६ )

—१४ **आकाश इति** । आकाशः परमात्मा । स च नामरूपयोर्निर्वहिता नामरूपकर्ता । यतः स परमात्मा ते नामरूपे अन्तरा ताभ्यामस्पृष्टोर्थान्तरभूतः। तद्ब्रह्म तदमृतं स आत्मेति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षिमते तु वहधातोर्वहनमर्थो न तूत्पत्तिः । तथा चाकाशो मुक्तात्मा स च पूर्वं बद्धावस्थायां नामरूपयो-

निर्वहिता नामरूपभाक्। पश्चान्मुक्तावस्थायां ते अन्तरा ताभ्यां नामरूपाभ्यां मुक्तस्तद्ब्रह्मेत्यादिरर्थः ।

३३४–१० अर्थान्तरत्वादीति । भेदकधर्मव्यपदेशादित्यर्थः । यत आकाशशब्दवाच्यस्य नामरूपयोर्निर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वव्यपदेशो दृश्यते । प्रत्यगात्मनो ह्यर्थान्तरभूत एव नामरूपयोर्निर्वोढा । बद्धावस्थस्तावन्नामरूपाभ्यां स्पृष्टस्तत्परवशश्चेति न निर्वोढा । मुक्तस्यापि जगद्व्यापाररहितत्वान्न निर्वोढृत्वम् । आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि गृह्यन्ते। तानि निरुपाधिकानि मुक्तस्यापि न संभवन्ति ( वे. दी. )। यद्यपि वहधातोर्वहनमर्थस्तथापि योगाद्रूढिर्बलीयसीति न्यायान्निर्वहितेत्यस्य कर्तेत्यर्थो ग्राह्य इत्याशयः ।

—१४ निर्वोढुमिति । उत्पादयितुमित्यर्थः ।

३३५–११ ब्रह्मलोकमिति । ब्रह्मरूपं लोकमिति समानाधिकरणसमासः ।

—१२–४ यद्यपीति । मुक्तस्य हि कर्तृत्वेन निर्देशः । ब्रह्मणश्च कर्मत्वेन । तयोर्मध्ये कर्तुः प्राधान्यात्तस्यैवाग्रे प्राकरणिकत्वेन निर्देश उचित इति शङ्काशयः । तथापीति । नामरूपनिर्वोढृत्वं हि परब्रह्मणो लिङ्गम् । लिङ्गस्य च प्रकरणापेक्षया बलीयस्त्वमिति पूर्वमीमांसायां श्रुतिलिङ्ग ( जै. सू. ३।३।१४ ) इति सूत्रे सिद्धान्तितमेवेत्युत्तराशयः ।

—१६ प्रजापतिवाक्यस्येति । इदं प्रागुक्तम् ( श्रीभाष्य—पृ. ३०० प. ९ ) ॥ ४२ ॥

३३६–३ ऐक्येति । तत्त्वमसि ( छा. ६।८।७ ) इत्यैक्योपदेशः । नेह नानास्ति ( बृ. ४।४।१९ ) इति द्वैतप्रतिषेधः ।

—१० वर्तत इति । ननु पूर्वसूत्रेऽर्थान्तरत्वादिव्यपदेशादिति समस्तपदघटकस्य व्यपदेशादित्यस्य कथमनुवृत्तिरिति चेन्न । यथा पातञ्जले महाभाष्ये पस्पशाह्निकेथ शब्दानुशासनं केषां शब्दानामित्यत्र केषां शब्दानामित्युत्तरवाक्ये पूर्ववाक्यस्थशब्दानुशासनमितिसमस्तपदघटकानुशासनपदस्यानुवृत्तिः स्वीक्रियते तद्वदत्रापीत्यदोषात् ।

सुषुप्त्युत्क्रान्त्योरिति । सप्तम्यन्तं पदम् । सुषुप्त्यवस्थायामुत्क्रमणावस्थायां चेत्यर्थः ।

—१६ प्राज्ञेनात्मनान्वारूढ इति । यथा शकटं सुतरां समाहितं यात्रोपकरणसंभाराक्रान्तं सत्पूर्वदेशमुत्सृज्य यात्येवमेव शकटस्थानीयो जीवः प्राज्ञेन परमात्मना सारथिस्थानीयेन संबन्धविशेषं प्राप्तः शरीरमुत्सृज्य यातीत्यर्थः॥४३॥

३३७–६–११ सर्वस्येति । सर्वस्य ब्रह्मरुद्रादेर्वशी । सर्वो यस्य वशे वर्तते । अधिपतिवशीशानशब्दैः क्रमेण शेषित्वधारकत्वनियन्तृत्वलक्षणमात्मत्वमुच्यते ।

स च परमात्मा साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्यः । सर्वेश्वरो नियन्ता। अधिपतिः शेषी । भूतपालो रक्षकः । एषां सर्वेषां लोकानामसांकर्याय धारकः सेतुरप्ययमेवेत्यर्थः । ईदृशं परमात्मानं वेदाध्ययनेन यज्ञेन दानेनानशनलक्षणेन तपसा च ज्ञातुमिच्छन्ति । अत्रानशनं कामानशनम् । न तु सर्वात्मनानशनम् । देहपातप्रसङ्गात् । यद्वाऽनाशकेनाशारहितेन फलाभिसंधिरहितेनेत्यर्थः । तच्च यज्ञेनेत्यादेर्विशेषणम् । विविदिषन्तीत्यत्र वेदनसाधनत्वमेव प्रतिपाद्यते । न तु विविदिषासाधनत्वम् । अश्वेन जिगमिषत्यसिना जिघांसतीत्यादावश्वादेः सन्प्रत्ययप्रकृत्यर्थभूतगमनादिसाधनत्वप्रतिपादनदर्शनात् । एवमेवात्मानं विदित्वा मुनिर्मननशीलो योगी भवति नान्यम् । लोक्यत इति लोकः । एतमेव लोकं परमात्मानमिच्छन्तः संन्यासिनः संन्यस्यन्ति । अन्नादोन्नद इत्यर्थः ।

३३७–१६ तदात्मकत्वेति । कार्यकारणैक्यनिबन्धन ऐक्योपदेशो न तु जीवेश्वरैक्यनिबन्धन इत्यर्थः ( श्रु. ) ॥ ४४ ॥ ( १० )

---

अथ प्रथमाध्यायस्य चतुर्थः पादः प्रारभ्यते ॥

३३८–७ निरस्तेति । समस्तशब्देन चिद्गतमचिद्गतं च हेयं विवक्षितम् । गन्धशब्देन मुक्तव्यावृत्तिः । एतादृशं ब्रह्मोक्तमित्यन्वयः ।

—११ ब्रह्मैकेति । ब्रह्मैकमेव जगतः कारणमेतन्मतस्थिरीकरणायेत्यर्थः ।

—१४ इन्द्रियेभ्य इति । अर्थाः शब्दादयो विषयाः । महानात्मा महत्तत्त्वम् । अव्यक्तं प्रधानमिति पूर्वपक्षिसंमतोर्थः । सिद्धान्तिसंमतोर्थस्तु भाष्यकृद्भिरेवाग्रे प्रतिपादितः । कार्यकारणभावेनात्र परत्वं विवक्षितमिति पूर्वपक्षाशयः । अर्थज्ञानार्थमिन्द्रियोत्पादनेनार्थानामिन्द्रियकारणत्वं कथंचिद्योज्यम् । वशीकार्यतया परत्वं विवक्षितमिति तु सिद्धान्ताशयः ( श्रु. ) ।

३३९–९ कारणमाम्नायत इति । इन्द्रियेभ्य इति श्रुतावव्यक्तशब्दवाच्यस्य प्रधानत्वं महदादिभ्यः परत्वप्रतिपादनात्परत्वस्य च कारणत्वमूलकत्वात्प्रधानं महदादिकारणत्वेनाम्नातं भवतीति भावः ।

—११ शरीरेति । रूप्यतेनेनेति रूपकं दृष्टान्तः । रूपकत्वेन विन्यस्तं कल्पितमित्यर्थः । शरीरसंज्ञकं यद्रथत्वेन पूर्वस्मिन्मन्त्रे कल्पितं तस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः ।

—१३ रथिरथादिभावेनेति । आदिशब्देन सारथिरशनाहयमार्गाणां संग्रहः ।

—१५ एतदिति । पूर्वत्र हीत्यादिना रूपकविन्यस्तानामेवेह ग्रहणम् ( श्रीभाष्य–पृ. ३४२ प. ८ ) इत्यन्तेन ग्रन्थेन वक्ष्यमाणमित्यर्थः ।

३३९–१६--३४०–३ **आत्मानं रथिनमिति** । बुद्धिशब्दोऽध्यवसायरूपज्ञानविशेषपरः । तदधीनत्वाद्देहप्रवृत्तेस्तस्याः सारथित्वम् । प्रग्रहो रशना । तेषु हयत्वेन रूपितेष्विन्द्रियेषु गोचरान्मार्गाञ्छब्दादिविषयान्विद्धि । रथसारथिहयरशनात्वेन कल्पितानां शरीरबुद्धीन्द्रियमनसामभावे रथित्वेन कल्पितस्योदासीनस्यात्मनो लौकिकवैदिकक्रियाकर्तृत्वमेव नास्तीत्याशयः । **वशीकार्यतयेति** । नन्वत्र वशीकार्यतायां प्राधान्यमेव परशब्देन विवक्षितमिति कथं गम्यत इति चेदुच्यते । परशब्दः प्रकर्षवाची । प्रकर्षश्चात्र न कारणत्वनिबन्धनः । अर्थानामिन्द्रियकारणत्वाभावात् । नाप्यन्तरङ्गत्वलक्षणः । इन्द्रियापेक्षया बाह्यार्थानां परत्वायोगात् । अतः पारिशेष्याद्वशीकार्यत्वमूलको गृह्यते । यस्त्वविज्ञानवान्भवति तस्येन्द्रियाण्यवश्यानि । न स तत्पदमाप्नोति संसारं चाधिगच्छति । यस्तु विज्ञानवान्भवति तस्येन्द्रियाणि वश्यानि । स तु तत्पदमाप्नोति यस्माद्भूयो न जायत इतीन्द्रियादिवशीकारावशीकारयोरर्थानर्थप्रतिपादनात् । यच्छेद्वाङ्मनसीत्यत्र यच्छेदित्यनेन वशीकारकथनाच्च वशीकार्यतायामेव प्राधान्यं परशब्देन विवक्षितमिति गम्यते । अत्रेन्द्रियाणां वशीकरणं विषयान्निवर्तनम् । अर्थानां वशीकरणं चासंनिधापनं हेयतया ज्ञापनं च । मनसो वशीकरणं मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्तनम् । बुद्धेर्वशीकरणं च विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम् । आत्मनो वशीकरणं चात्मरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनम् । शरीरस्य वशीकरणं च रजस्तमोऽभिभवसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्ततापादनम् । परमपुरुषस्य वशीकरणं च तच्छरणागतिरिति बोध्यम् ।

३४०–१५ **उपासनस्यापि निर्वर्तक इति** । उपासननिर्वाहकत्वात्परमात्मनो वशीकार्यत्वम् ( श्रु. ) ।

**परादिति** । तज्जीवस्य कर्तृत्वं परात्परमात्माधीनम् । अन्तः प्रविष्टः शास्ता जनानाम् । य आत्मानमन्तरो यमयतीत्यादिश्रुतेरिति सूत्रार्थः । - -

—१७ **वशीकार्येति** । वशीकार्येषूपासनानिर्वृत्त्युपायेषु काष्ठाभूत इत्यर्थः

३४१–६ **अधिष्ठानमिति** । कायिके वाचिके मानसे च विहिते प्रतिषिद्धे च सर्वस्मिन्कर्मणि पञ्चैते हेतवः । अधिष्ठानं शरीरम् । तद्धि जीवेनाधिष्ठीयत इति कर्मणि ल्युट् । कर्ता जीवः । करणं समनस्कं वागादिपञ्चकम् । पृथग्विधं कर्मनिष्पत्तौ पृथग्व्यापारम् । विविधा चेष्टा प्राणापानादिभेदभिन्नस्य पञ्चात्मनो वायोर्विविधा वृत्तिः । अत्र कर्महेतुकलापे दैवं पञ्चमं परमात्मान्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । न दैवं केशवात्परमित्यादिषु दैवशब्दः परमात्मनि प्रसिद्धः ।

३४१–९ सर्वस्येति । स्मृतिः पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम् । ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः । अपोहनं ज्ञाननिवृत्तिः । अत्र कर्मादिकारणीभूतज्ञानादेरपि कारणमीश्वर एवेत्युक्तत्वात्तदनुसारेणाधिष्ठानमिति श्लोकोक्तकारणकलापे दैवशब्देन परमात्मैव ग्राह्य इति भावः ।

३४२–१ कारणत्वमूलकपरत्वाभिप्रायकं पूर्वपक्षिसंमतमर्थं खण्डयति–न त्वात्रेति ।

—३ तद्दर्शने । सांख्यमते ।

—६ न हि महत इति । बुद्धिर्व्यष्टिबुद्धिः । महानात्मा समष्टिबुद्धिः । तथा च व्यष्टिबुद्ध्यपेक्षया समष्टिबुद्धेः परत्वमित्यर्थस्त्वस्वरसग्रस्तः ।

—९ सूत्रस्थं दर्शयतिपदं व्याचष्टे–दर्शयति चेति । तदेव । वशीकार्यत्वे परत्वमेव ।

—१० गूढोत्मेति । अस्य पृषोदरादि–( पा. सू. ६।३।१०९ ) गणपठितत्वात्साधुत्वम् । इतरथा समासे गूढात्मेत्यसमासे गूढ आत्मेति स्यात् ।

—१७ वाचं मनसीति । वाचो मनसि नियमनं मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसो बुद्धौ नियमनं व्यवसायानुगुणप्रवृत्त्यापादनम् । बुद्धिरर्थेषु हेयताध्यवसायरूपा । तस्या बुद्धेरात्मनि नियमनं स एवोपायतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । जीवस्य परमात्मनि नियमनं तच्छेपतया प्रतिपत्तिः । अत्रानुक्तमपि विषयाणां शरीरस्य च नियमनं ग्राह्यम् । तदन्तरेणेन्द्रियादिनियमनासंभवेन तस्यार्थसिद्धत्वात्तन्नोक्तम् । विषयाणां नियमनं दूरतस्त्यागः । शरीरस्य नियमनं सात्त्विकाहारेण परिशोधनम् ।

३४३–३ आत्मनि वर्तमान इति । आत्मनीति विषयसप्तमी । आत्मविषयके ज्ञान इत्यर्थः । तच्चात्मोपादेयस्तदतिरिक्ता अर्था हेया इत्येवंरूपम् । अनात्मविषयके ज्ञाने मनोनियमनासंभवादात्मनीत्युपात्तम् ।

—५ तद्यच्छेदिति । तं यच्छेदित्यर्थः । शान्ते । ऊर्मिषट्करहिते । ऊर्मिषट्कं तु बुभुक्षापिपासाशोकमोहजरामृत्युरूपम् । तत्र बुभुक्षापिपासे प्राणस्य शोकमोहौ मनसो जरामृत्यू शरीरस्येति बोध्यम् । तदुक्तम्—बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ शरीरस्य जरामृत्यू षडूर्मय इति ॥ १ ॥

—१० सूक्ष्मं त्विति । तुशब्दोवधारणे । पूर्वं भूतसूक्ष्ममव्याकृतमेव सपश्चादवस्थान्तरप्राप्तं शरीरं भवति । तथा च भूतसूक्ष्मरूपकारणवाचिनाव्यक्तशब्देन तत्कार्यभूतं शरीरं लक्षणयोपस्थाप्यते । तस्यैव पुरुषार्थसाधनप्रवृत्तियोग्यत्वात् । कारणावस्थायां नियमनवशीकार्यत्वादसंभवादिति सूत्रार्थः ।

३४३—१३ **अचिद्वस्तुन एवेति** । एवशब्दो भिन्नक्रमो विकारमापन्नस्येत्युत्तरं योज्यः ॥ २ ॥

—१८ **तदधीनत्वादिति** । परमपुरुषशरीरतया तदधीनत्वाद्भूतसूक्ष्ममव्याकृतमर्थवदिति तदिहाव्यक्तशब्देन गृह्यते नाब्रह्मात्मकं स्वतन्त्रं कापिलतन्त्रसिद्धमित्यर्थः ।

३४४—१ **तदात्मकत्वविरहेणेति** । नाभ्युपगच्छाम इत्यत्रानुषज्यते । परमपुरुषशरीरतयेति त्वभ्युपगमाभावे हेतुनिर्देशः ।

—२ **स्वप्रयोजनम्** । महदादिरूपकार्यं पुरुषस्य भोगापवर्गरूपं वा ।

—३ **अन्यथेति** । प्रकृत्यादीनां ब्रह्मात्मकत्वविरह इत्यर्थः । न तदस्ति विना यत्स्यात् ( गी. १०।३९ ) इत्यनेन स्वरूपे, मयि सर्वमिदं प्रोतम् ( गी. ७।७ ) इत्यनेन स्थितौ, मत्तः सर्वं प्रवर्तते ( गी. १०।८ ) इत्यनेन प्रवृत्तौ च प्रकृत्यादीनां परमात्माधीनत्वोक्तेरित्याशयः ।

—५ **जगदुत्पत्तीति** । तस्मात्तमः संजायत इत्यादिरुत्पत्तिवादः । पृथिव्यप्सु प्रलीयते (भार. शा. प. ३३९।२९) इत्यादिः प्रलयवादः । यस्य पृथिवी शरीरम् ( बृ. ३।७।३ ) इत्यादिर्महिमवादः ।

—७ **भूतादाविति** । तामसाहंकारस्य भूतादिरिति संज्ञा ।

—१२ **मृत्युः शरीरमिति** । अत्र मृत्युशब्देन तमःशब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयत इति गीताभाष्ये ( १३।२ ) उक्तम् ।

—१५-९ **भूमिराप इति** । भूम्यादिः प्रकृतिरपरा । इतश्चेतनभोग्यभूतायाः प्रकृतेरन्यां विसजातीयाकारां जीवभूतां परां भोक्तृत्वेन प्रधानभूतां प्रकृतिं विद्धि । एतद्योनीन्येतत्प्रकृतिद्वयमूलकानि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानीत्यर्थः ॥ ३ ॥ ४ ॥

३४५—१५ **अशब्दमिति** । अत्र यत्तच्छब्देन प्रसिद्धवन्निर्देशेऽपि तन्त्रसिद्धमव्यक्तमेवेह प्रतीयते । शब्दादीनां व्यक्तानां धर्माणां निषेधेनाव्यक्ते पर्यवसानात् । महतः परत्वोक्तेश्चेति पूर्वपक्ष्याशयः ।

३४६—३ **पुरुषान्न परं किंचिदिति** पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्चाव्यक्तशब्देन प्रधानमेव तन्त्रसिद्धं प्रतीयत इति यत्पूर्वपक्षिणोक्तं ( श्रीभाष्य-पृ. ३३९ प. ६ ) तत्खण्डयति-**अत एवेति** । यतः परमात्मन एवैतत्प्रकरणं न तन्त्रसिद्धतत्त्वानामत एवेत्यर्थः ।

—६ ननु महतः परत्वोक्तेस्तान्त्रिकमव्यक्तं प्रतीयत इति चेत्तत्राह-**महत इति** । महच्छब्देन जीवात्मन एव ग्रहणं न तु तान्त्रिकस्य महत्तत्त्वस्य । तत्रा-

त्मनः परमव्यक्तमित्यात्मशब्दमनिर्दिश्य महच्छब्देनैव निर्देशस्तु तस्यात्मन इन्द्रियादिपरिकरवत्त्वलक्षणप्राधान्यविवक्षातिशयाद्बोध्यः ॥ ५ ॥

३४६—९ त्रयाणामिति । एवंशब्देन ज्ञेयत्वावचनाच्चेति सूत्रस्थज्ञेयत्वस्य परामर्शः ।

—१० उपायोपेयोपेतॄणामिति । उपासनोपास्योपासकानामित्यर्थः ।

—१४-७ प्रतिलभ्येति । विस्तरेण चैतत्प्राक् (श्रीभाष्य–पृ. २४७ प.२१) उपपादितम् । स त्वमिति । स्वर्गशब्दात्तदस्य प्रयोजनमित्यर्थे स्वर्गादिभ्यो यद्वक्तव्य इति यत्प्रत्ययः । हे मृत्यो सर्वज्ञस्त्वं स्वर्गप्रयोजनकमग्निं जानासि तमग्निं मोक्षश्रद्धावते मह्यं प्रब्रूहि । स्वर्गो लोको येषां ते स्वर्गलोकाः परमपदं प्राप्ता अमृतत्वं भजन्त इत्यर्थः ।

—१९ मोक्ष इति । मोक्षस्थानमित्यर्थः ।

—२० उत्तरत्रेति । तृतीयवरवरणप्रश्ने श्वो भावा मर्त्यस्य ( क. १।२६ ) इत्यादौ ।

३४७–१ हेत्वन्तरमाह त्रिणाचिकेत इति । अयं वाव यः पवन इत्याद्यनुवाकत्रयाध्यायी यजनाध्ययनदानरूपत्रिकर्मकृत्पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा । त्रिभिरनुष्ठितैरग्निभिः संधिं परमात्मोपासनेन संबन्धमेत्य प्राप्य जन्ममृत्यू तरतीत्यर्थः ।

—६ येयमिति । एतदर्थो भाष्य एव प्रागुक्तः ( श्रीभाष्य–पृ. २४८ प. १२ ) ।

—१० तं दुर्दर्शमिति । दुर्दर्शं द्रष्टुमशक्यं गूढं कर्मरूपाविद्यातिरोहितं शरीरमनुप्रविष्टं तत्रापि हृदयगुहागतं गह्वरेष्ठं हृदयगुहान्तर्गते गह्वरे जीवरूपवस्तुनि स्थितं पुराणमनादिम् । विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगः । तेन ज्ञात्वा हर्षशोकौ जहातीत्यर्थः ।

१५—८*वेदितव्यतयेति । अध्यात्मयोगशब्दः प्राप्तृस्वरूपविषयकयोगपर इत्यभिप्रायः ( श्रु. )। अध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्यं प्राप्यभूतं परिशुद्धस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य प्राप्तुरभिन्नत्वात्प्राप्तुः प्रत्यगात्मनश्चेत्यत्रत्यं साध्यमुपपद्यते ( वि. )। धीरशब्देन प्रतिपन्नस्य प्राप्तुः प्रत्यगात्मनश्चेति तु वक्तुं युक्तम् । अन्यत्रेति । धर्म उपायः । तदितरोऽधर्म उपेयः । ताभ्यामन्यत्र प्रसिद्धसाधनसाध्यविलक्षण इत्यर्थः । अस्मादिति बुद्धिस्थसाधको विवक्षितः । स एवोपेता । स हि प्रसिद्धोपेतृविलक्षणः । साधकावस्थायामितरफलविरक्तत्वात् । एवं फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । कृताकृतादित्यादि धर्मादेर्विशेषणम् ।

३४८–१ **प्रणवं प्रशस्येति** । प्रणव ओंकारः । तत्प्रशंसा च सर्वे वेदा इत्यादिश्रुतौ ब्रह्मप्रतिपादकतया कृता । तत्रैव श्रुतौ तत्ते पदमिति पदशब्देन प्राप्यस्वरूपं प्रतिपाद्यते । प्राप्तुर्जीवस्य स्वरूपं च प्राप्ये परमात्मनि प्रकारतयाऽन्तर्गतमेव । परिशुद्धजीवस्य प्राप्यान्तर्भावात् । ब्रह्मवाचको यः प्रणवस्तद्रूप उपाय ओमित्येतदित्यनेन प्रतिपादितः ।

—७ **पुनरपि प्रणवं प्रशस्येति** । एतद्ध्येवाक्षरं ब्रह्म ( क. २।१६ ) इति श्रुत्येति भावः ॥ ६ ॥ ७ ॥ ( १ )

३४९–९ अब्रह्मात्मकत्वेनाभिमतानां कापिलतन्त्रसिद्धानां प्रकृत्यादीनां निरासार्थं प्रथमतः प्रकृत्यादीनां ब्रह्मात्मकत्वं साधयति–**नाब्रह्मात्मकेति** ।

—१२–२० **विकारजननीमिति** । भूमिरापोनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (गी. ७।४) इत्युक्तप्रकारेणाष्टरूपाम् । अजामुत्पत्तिरहिताम् । ध्रुवां नाशरहिताम् । ध्यायते परमात्मना संकल्परूपज्ञानेन ज्ञायते । अध्यासिताधिष्ठिता । तन्यते विस्तार्यते स्थूलत्वावस्थं क्रियते समष्टिभूतरूपेण क्रियते । प्रेर्यते व्यष्टिसृष्ट्यर्थं प्रेर्यते । पुरुषार्थं पुरुषाणामर्थनीयं भोगोपकरणभोगस्थानरूपं जगत्सूयते । गौरित्यनेनास्यां प्रकृतौ गोत्वं कल्प्यते । जनित्री समष्टिसृष्टिकर्त्री । भूतभाविनी व्यष्टिसृष्टिकरी । सिताऽसिता च रक्ता च गौण्या वृत्त्या सत्त्वरजस्तमोमयी । यद्वा तेजोबन्नद्वारा सिताऽसिता रक्ता । विभोरीश्वरस्य सर्वकामदुघा लीलारसदोग्ध्री । अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम् । अविज्ञाताः स्वात्मभिर्देहेभ्यो विविच्यापरिज्ञाताः । एकस्त्विति । कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थमेकः स्वच्छन्द इत्युक्तम् । ध्यानक्रियाभ्यां संकल्पसर्गादिव्यापाराभ्याम् । ऐक्षतासृजतेति द्वयमपि हि श्रूयते । पीड्यमानां तु यज्वभिरिति । वत्सा हि मातरं क्षीरक्षरणार्थं पीडयित्वा भुञ्जते तद्वत्कर्मवश्यैरात्मभिर्भोक्तव्यफलानुरूपं परिणाम्यमानामित्यर्थः । अत्र प्रकृतिपुरुषमहदादीनां स्वरूपमभिहितम् । एषु वाक्येष्वीश्वरप्रतिपादनं प्रधानादीनामीश्वरतादधीन्यविशिष्टत्वपरमिति भावः (श्रु.) ।

३५०–३ **षड्विंशकमिति** । कालस्य विशेषणत्वेन प्रकृतितद्विकारेष्वन्तर्भावादिति भावः । कालस्य पृथग्विवक्षया तु सप्तविंशकत्वम् ( श्रु. ) ।

—५ **अष्टौ प्रकृतय इति** । अत्रापि वाक्यान्तरैकार्थ्याद्ब्रह्मात्मकत्वं सिद्धम् ( श्रु. ) ।

—८–१३ **संयुक्तमेतदिति** । ईशः परमात्मा व्यक्तरूपं क्षरमचिद्वर्गमव्यक्तमक्षरं चिद्वर्गं च परस्परसंयुक्तं बिभर्ति न तु बध्यते । अनीशो जीवस्तु बध्यते । नन्वविशिष्टे प्रकृतिसंबन्धे कुत एतद्वैलक्षण्यमित्यत्राह–**भोक्तृभावादिति** । भोक्तृत्वाभिसंधिलक्षणभावसत्त्वात् । परमात्मनस्तु न मां कर्माणि लिम्पन्ति न

मे कर्मफले स्पृहा ( गी. ४।१४ ) इति कर्मफलस्पृहाया अभावेन कर्मफललेपाभावात् । ईशश्चानीशश्चेशानीशौ । ईशनीशाविति पाठे शकंध्वादित्वात्पररूपं बोध्यम् । भोक्तुर्जीवस्य भोगप्रयोजनसाधिकेत्यर्थः । ननु परमात्मनोपि जीववत्फलाभिसंधिपूर्वककर्तृत्वं कुतो न भवतीत्याशङ्क्याह—अनन्त इति । विश्वशरीरकस्य परमात्मनो नान्तं गुणानां गच्छन्ति तेनानन्तोयमुच्यत इत्युक्तरीत्या सत्यकामत्वाद्यनन्तगुणाश्रयतया काम्यमानवस्त्वन्तराभावेन फलाभिसंध्यभावेन फलाभिसंधिपूर्वककर्तृत्वं नास्तीत्यर्थः । एतत्त्रयं परस्परवैलक्षण्येन दर्शनसमानाकारध्यानेन यदा विषयीकरोति तदा ब्रह्म भवति मुक्तो भवतीत्यर्थः । ब्रह्ममिति छान्दसं रूपम् । प्रधानशब्दिना प्रकृतिः क्षरमित्युच्यते । भोग्यमात्मनो भोगार्थं हरतीति हरो जीवः । अमृतत्वान्मरणधर्मशून्यत्वादक्षरमित्यर्थः । क्षरात्मानावीशते देव एकः । चेतनाचेतनयोरीशिता देव एको नारायणः । तस्याभिध्यानाद्योजनशब्दिताद्योगात्तत्त्वाविर्भावरूपात्तद्भावाच्च चरमशरीरवियोगकाले समस्तप्रकृतिसंबन्धनिवृत्तिर्भवतीत्यर्थः ।

३५०—१९ अवयवभूतैः । शरीरभूतैः ।

३५१–४–५ प्रकृतिमिति । प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादी इति विद्धि । विकारान्बन्धहेतुभूतानिच्छाद्वेषादीन्गुणान्मोक्षहेतुभूतानमानित्वादिकांश्च प्रकृतिसंभवान्विद्धि । पुरुषेण संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैरिच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति । सैवामानित्वादिभिः स्वविकारैः पुरुषस्यापवर्गहेतुर्भवति । कार्यं शरीरम् । कारणानि समनस्कानीन्द्रियाणि । तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः । प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः । स्वानुभवैकसुखः पुरुषः प्रकृतिस्थः प्रकृतिसंसृष्टः सन्प्रकृतिजान्प्रकृतिसंसर्गोपाधिकान्गुणान्सत्त्वादिगुणकार्यभूतान्सुखादीननुभवतीत्यर्थः ।

—१६ ९ प्रकृतिं स्वामिति । स्वकीयां विचित्रपरिणामिनीं प्रकृतिमवष्टभ्याष्टधा परिणमय्येमं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं भूतग्रामं मदीयाया मोहिन्या गुणमय्याः प्रकृतेर्वशादवशं पुनः पुनः कालेकाले विसृजामीत्यर्थः । मयाध्यक्षेणेति । मयाध्यक्षेणेक्षिता प्रकृतिः सचराचरं जगत्सूयते । अनेन क्षेत्रज्ञकर्मानुगुणमदीक्षणेन हेतुना जगद्विपरिवर्तत इत्यर्थः ।

३५२–६ अकार्यत्वेति । ब्रह्मात्मकत्वपक्षे ब्रह्मकार्यत्वाभ्युपगमेनाकार्यत्वासंभवः । तथा तस्याः प्रकृतेर्ब्रह्माधीनत्वेन स्वातन्त्र्यासंभवश्च । सृजमानामिति कर्तरि शानच्प्रत्ययः । कर्तृत्वं च स्वतन्त्रस्यैव । स्वतन्त्रः कर्ता ( पा. सु. १।४। ५४ ) इति पाणिनिना प्रतिपाद्यते ।

३५२—१० अजात्वमात्रेति। ब्रह्मात्मकत्वपक्षे ब्रह्मणः सकाशादुत्पन्नाया अप्यजात्वमवस्थाभेदेनास्त्येवेत्यग्रे कल्पनोपदेशात् (ब्र. सू. १।४।१०) इति सूत्रे वक्ष्यते।

—१३ चमसशब्देनेति। चम्यते भक्ष्यतेनेनेति चमसशब्दव्युत्पत्तेरिति भावः।

—१४ अर्थप्रकरणादिभिरिति। अर्थो वस्तुसामर्थ्यम्। आदिशब्देन स्ववाक्यस्थविशेषशब्दसंग्रहः।

—१५ इदं तच्छिर इति। अर्वाग्बिलश्चमस इति मन्त्रेणोच्यमानमिदं तदेव शिरः प्रसिद्धमेव शिरः। कण्ठादुपरिभाग इति यावत्। किं तदित्याह—एष इति। चम्यतेनेनेति चमसो भक्षणसाधनम्। एष मुखरूपश्चमसः। आस्यस्य बिलरूपत्वादर्वाग्बिलत्वं शिरसः। ऊर्ध्वस्थूलभागरूपबुध्नाकारत्वादूर्ध्वबुध्नत्वम्। लोके हि प्रसिद्धश्चमस ऊर्ध्वबिलस्तिर्यग्बुध्नः। अयं तु विलक्षणश्चमस इति भावः।

३५३–३ स्वप्रत्वमात्रेति। स्वतन्त्रः कर्तेत्यत्र स्वातन्त्र्यं च स्वव्यापाराश्रयत्वमेव न स्वपरप्रेर्यत्वरूपम्। रथो गच्छतीत्यादौ रथादेस्तदभावादित्याशयः॥ ८॥

—६ ज्योतिरुपक्रमेति। ज्योतिर्ब्रह्मोपक्रमः कारणं यस्या इत्यर्थः।

—१८ तत उत्पन्नाभिधीयत इति। यद्यप्यजामेकामिति श्रुतावुत्पत्तिर्नाभिहिता तथाप्युत्पत्तिप्रकरणादुत्पत्तिः सिद्धैवेति बोध्यम्।

३५४–१० इहापीति। श्वेताश्वतरोपनिषदीत्यर्थः।

—१८ योनिमिति। जगद्योनिभूतां प्रकृतिमित्यर्थः॥ ९॥

३५५–१ कथमिति। सकारणकत्वाकार्यत्वयोर्विरोध इति भावः।

—६ यथा सूर्येति। सूर्याचन्द्रमसाविति श्रुतौ यथा क्लृप्धातुः सृष्ट्यर्थको गृहीतस्तथात्र सूत्रेपि गृह्यते। तथा च कल्पनोपदेशादित्यस्य सृष्ट्युपदेशादित्यर्थः।

—९ स्वेनाविभक्तादिति। स्वशरीरभूतादित्यर्थः। शरीरशरीरिणोर्विभागेन परिज्ञानासंभवादविभक्तादित्युक्तम्।

—११ कल्पनोपदेशेनेति। सृष्ट्युपदेशेनेत्यर्थः।

—१२ ब्रह्मतापन्ना। कारणावस्थब्रह्मशरीरभूता।

—१७ यथेश्वरेणेति। यथादित्यस्यैकस्यावस्थाद्वयेनोदयास्तमयमध्रुवत्वकल्पनानि (श्रीभाष्य- पृ. ३२०) तदभावश्चोपपद्यते तथैकस्याः प्रकृतेरवस्थाद्वयेनाजात्वं ब्रह्मकारणकत्वं चोपपद्यत इत्यर्थः।

३५६–६ शंकराचार्यकृतं ज्योतिरुपक्रमेति सूत्रार्थं दूषयति—अन्ये त्विति। ज्योतिस्तेज उपक्रम आदौ यस्यास्तेजोबन्नलक्षणायाः सा ज्योतिरुपक्रमा। सैवेहाजा

निर्धारणीया न प्रधानम्। यत एके छन्दोगा यदग्ने रोहितं रूपम् (छा. ६।४।१) इत्यादिना तेजोबन्नात्मिकाया भौतिककार्यप्रकृतेस्तथा लोहितादिरूपतामधीयत इति तन्मते सूत्रार्थः।

३५६—७ **किं तेजोबन्नान्येवेति**। एकाजात्वेन परिकल्प्यमानं वस्तु किं तेजोबन्नान्येवेत्यर्थः।

—१४ **किं तेजोबन्नरूपेणेति**। ब्रह्मणो विकारास्तेजोबन्नरूपाः किमजाशब्देनोच्यन्तेथ वा प्रकृतिभूतं ब्रह्मस्वरूपमित्यर्थः।

—१८ **तृतीय इति**। यद्यप्यस्मिन्पक्षेजाशब्देन तेजोबन्नकारणभूतावस्थायाः परिग्रहेण लोहितशुक्लकृष्णत्वमजात्वमेकत्वं चोपपद्यते तथाप्यजाशब्देन कारणावस्थायाः परंपरया परिग्रहे बीजाभाव इत्याशयः।

३५७—३ शंकराचार्यकृतं कल्पनोपदेशादिति सूत्रार्थं खण्डयति—**यत्पुनरिति**। **छागात्वपरिकल्पनमिति**। यथा हि लोके यदृच्छया काचिदजा लोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा च। तां च कश्चिदजो जुषमाणोनुशयीत कश्चिच्चैनां भुक्तभोगां जह्यादेवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं विकारजातं चराचरलक्षणं जनयति। अविदुषा क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यते। तथा चाजासारूप्यादजात्वं कल्प्यत इति भावः।

—११ **अत्यल्पेति**। अत्यल्पप्रजासर्गकरत्वं चेतनविशेषरूपायाश्छागायाः स्वभावः। अयं च प्रकृतिनिष्ठस्य कृत्स्नजगत्कारणत्वस्य प्रत्यनीकभूतः। तथाजन्तुकः संगमः संबन्धो येषामेतादृशा ये चेतनविशेषा बालच्छागास्तेषां दुग्धैकरूपं यदत्यल्पं प्रयोजनं तत्साधनत्वरूपो द्वितीयः स्वभावः। अयं चानादिकालसंबद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनत्वस्य प्रत्यनीकभूतः। तथा स्वपरित्यागस्य हेतुभूतो यः स्वसंबन्धिपरित्यागस्तत्समर्थत्वरूपस्तृतीयः स्वभावः। अयं चाचेतनत्वस्य प्रत्यनीकभूतः। चेतनाया एव स्वसंबन्धिपरित्यागसमर्थत्वात्।

—१५ **विरूपार्थपरिकल्पनम्**। एकार्थाग्रहणम्॥ १०॥ (२)

३५८—१ **न संख्येति**। नानाभावः पृथग्भावो न बहुत्वम्। अतिरेकः संख्याधिक्यम्।

—१० **लिङ्गव्यत्ययश्छान्दस इति**। अन्यथा समाहारद्विगोरकारान्तस्य स्त्रीत्वेन पञ्चजनीति स्यात्।

—१६ **मूलप्रकृतिरिति**। जगतो मूलभूता प्रकृतिस्त्रिगुणात्मकं प्रधानमनादित्वादविकृतिः। कस्यचित्कार्यं न भवतीत्यर्थः। महदहंकारपञ्चतन्मात्रा-

र्णाति सप्त प्रकृतयो विकृतयश्च । भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रशब्देनोच्यते । तत्र महान्प्रधानस्य विकृतिरहंकारस्य प्रकृतिः । अहंकारस्तामसः पञ्चतन्मात्राणां शब्दादीनां प्रकृतिः । सात्त्विकस्त्वेकादशेन्द्रियाणां प्रकृतिः । पञ्चतन्मात्राणि पञ्चानां स्थूलभूतानां प्रकृतयः । पञ्च स्थूलभूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति षोडशसंख्याको गणो विकार एव न प्रकृतिः । तत्त्वान्तरोपादानत्वाभावात् । पुरुषस्तूदासीन इति तत्कारिकार्थः । न चैतत्कारिकोक्तपञ्चविंशतितत्त्वान्तर्गतयोरात्माकाशयोर्यस्मिन्पञ्च पञ्चजना इति मन्त्रे यस्मिन्नित्यनेनाकाशशब्देन चाभिधानादवशिष्टानां तत्त्वानां त्रयोविंशतित्वमेव न पञ्चविंशतित्वमिति वाच्यम् । त्रिगुणात्मकप्रकृतेरेकस्या अप्युद्भूतावयवभेदविवक्षया तत्त्वत्रयरूपत्वेन पञ्चविंशतिसंख्योपपत्तेः ।

३५९.-२ प्रतीयत इति । तथा च तत्रसिद्धानां पञ्चविंशतितत्त्वानामब्रह्मात्मकत्वान्नेह तेषां ग्रहणमिति भावः ।

—४ तमिति परामर्शेनेति । तमिति परामर्शं कृत्वाग्रे ब्रह्मामृतोऽमृतमिति निर्दिष्टत्वेनेत्यर्थः ।

—८ तं षड्विंशकमिति । प्राग्व्याख्यातम् ( श्रीभाष्य-पृ. ३५५ प. ३ ) ।

—१७ समूहासिद्धेरिति । किं च प्रकृतेरिव महदहंकारयोरपि सात्त्विकादिभेदेन प्रत्येकं त्रिविधत्वात्तत्त्वानामेकोनत्रिंशत्संख्या स्यान्न तु पञ्चविंशतिः । किं चाकाशस्य पृथगुक्तिरनुपपन्ना । न चाकाशस्य वैपुल्यगुणविशिष्टत्वेन तदादरार्थं ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिरिति वाच्यम् । आकाशादपि तत्कारणीभूतानां तत्त्वानां वैपुल्येन तदनादरेणाकाशस्य पृथगुक्त्यनुपपत्तेः ।

३६०-१ पञ्चसंख्यया विशेष्यन्त इति । ननु पञ्चजनशब्दावयवीभूतपञ्चन्निति शब्देन पञ्चत्वसंख्याप्रतिपत्तौ पुनः पञ्चेति विशेषणं किमर्थमिति चेत्सत्यम् । पञ्चजनशब्दस्य संज्ञात्वेन तदवयवीभूतपञ्चन्निति शब्देन पञ्चत्वसंख्याया उपलक्षणतयैव भानं संज्ञिप्रतिपत्त्यर्थं भवति न तु विशेषणतया । तथा च विशेषणतया भानार्थं पुनः पञ्चन्निति शब्दस्यावश्यकत्वान्न पुनरुक्तिः । यथा संज्ञाभूतगोशब्दावयवीभूतगम्धातुना गमनक्रियाया भानेऽपि तस्या उपलक्षणत्वेन भानाद्गौर्गच्छतीति पुनरुक्तिस्तद्वत् । अत एव गौस्तिष्ठतीत्यत्र न व्याघात इति बोध्यम् ॥ ११ ॥ १२ ॥

—१२ ज्योतिषेति । ज्योतिषां ज्योतिरिति पूर्ववाक्यस्थज्योतिषामिति षष्ठ्यन्तज्योतिःशब्देनेत्यर्थः । ज्योतिषां प्रकाशकानामिन्द्रियाणां ज्योतिः प्रकाशकं ब्रह्मेति तदर्थः । तथा च ज्योतिःशब्देनेन्द्रियाणामभिधानादुत्तरवाक्यस्थपञ्चजनशब्देन पञ्च ज्ञानेन्द्रियाणि गृह्यन्त इति पञ्चत्वसंख्यापूर्तिः सिध्यति । यद्यपि

प्राणस्य प्राणमिति वाक्यशेषे चत्वार्येवोक्तानि तथापि स वाक्यशेषः प्रदर्शनार्थत्वेन नेय इति भावः ।

३६०—१८ **ब्रह्माधीनेति** । अनेन प्राणस्य प्राणमित्यादेरर्थ उक्तः ( श्रु. ) ।

—२० **अनिर्धारितेति** । यस्मिन्पञ्चेति मन्त्रे प्रकाशकानि पञ्च प्रतिपादितानि । तानि च प्रसिद्धानि पञ्च ज्ञानेन्द्रियाण्येव । न तु सूर्यादीनां प्रकाशकानामत्र ग्रहणम् । तेषां विशेषतो निर्देशाभावात् । न चेन्द्रियाणां ग्रहणेऽपि प्राणस्य प्राणमित्यत्र प्राणान्नयोरनिन्द्रिययोः किमर्थमुपादानमिति वाच्यम् । तत्र प्राणशब्देनान्नशब्देन चेन्द्रियाणामेव ग्रहणात् ।

३६१–४ **अन्नस्येति** । सर्वशाखाप्रत्ययन्यायेन काण्वानां पाठेऽप्यन्नशब्दपाठो ग्राह्य एवेति बोध्यम् ।

—६ **घ्राणरसनयोरिति** । यद्यपीन्द्रियाणां मनसा सह षट्त्वं तथाप्यन्नशब्देन घ्राणरसनयोस्तन्त्रेणोपादानेन तयोरन्नत्वेनैक्यात्पञ्चत्वमपि वर्तत इति न पञ्च पञ्चजना इत्यनेन विरोध इति भावः ॥ १३ ॥ ( ३ )

३६२–२ **स्रष्टृव्यवस्थितेरिति** । सर्वेषु जगदुत्पत्तिप्रतिपादकवाक्येषूत्पादकस्यैकरूपेण प्रतिपादनाभावादित्यर्थः ।

—९ **स्वरूपनित्यत्वेनेति** । प्रधानस्य स्वरूपेण नित्यत्वात्सच्छब्दवाच्यत्वमिति न सदेव सोम्येति श्रुतिविरोधः । तथा परिणामाश्रयत्वेन विकारित्वादसच्छब्दवाच्यत्वमिति नासद्वा इदमिति श्रुतिविरोधः । ब्रह्मणस्त्वसच्छब्दवाच्यत्वाभावेन विरोधः स्यादेव । ब्रह्मणीवेति वैधर्म्यदृष्टान्तः । यथा ब्रह्मणि सदसच्छब्दौ विरुद्धौ न तथा प्रधान इत्यर्थः ।

—११ **ईक्षणादय इति** । आदिशब्देन पूर्वाकारपर्यालोचनाप्रयत्नयोर्ग्रहणम् । **सृष्ट्यौन्मुख्येति** । तदैक्षतेत्यस्य तत्प्रधानं सृष्ट्युन्मुखमभूदित्यर्थः । यथा कूलं पिपतिषतीत्यस्य कूलं पतनोन्मुखं भवतीत्यर्थस्तद्वत् ।

—१८ **आकाशादिषु कारणत्वेनेति** । आकाशादीनां कारणत्वेनेत्यर्थः । अथ वाकाशादिपदचिह्नितेषु तस्माद्वा एतस्मादात्मन आकाश इत्यादिवाक्येषु कारणत्वेनोक्तेरित्यर्थः ॥ १४ ॥

३६४–२ **अतोयमिति** । अतः पूर्वत्र परत्र च ब्रह्मणः प्रतिपादनादयं मध्यपठितोऽसद्वेति मन्त्रो ब्रह्मविषय एवेत्यर्थः ।

—१९ **स्वयमेवेति** । तन्नामरूपाभ्यामेव व्याक्रियतेति श्रुतौ व्याक्रियतेति कर्मकर्तरि प्रयोगः । कर्त्रन्तराक्षेपे गौरवात्तदात्मानं स्वयमकुरुतेत्यनेनैकार्थ्याच्च । एवकारश्च भिन्नक्रमः । तन्नामरूपाभ्यां स्वयमेव व्याक्रियतेत्यर्थः । नन्वव्याकृतमासीदिति क्तप्रत्ययः कर्मण्येव न तु कर्मकर्तरि । तत्र कर्मवत्कर्मणा

तुल्यक्रियः ( पा. सू. ३।१।८७ ) इति सूत्रेण विहितस्य कर्मवद्भावस्याप्राप्तेः। लकारवाच्य एव कर्ता कर्मवदिति तदर्थेन तिङन्त एव तत्प्रवृत्तेः। तथा चाव्याकृतमित्यनेनावैरूप्याय व्याक्रियतेत्यपि कर्मणि प्रयोग एवास्त्विति चेन्न। एवकारेण कर्त्रन्तरस्य व्यवच्छेदात्कर्मान्तराक्षेपे गौरवाच्च व्याक्रियतेति प्रयोगस्य कर्मकर्तर्येवाभ्युपगन्तव्यत्वाद्वैरूप्यस्यापि सोढव्यत्वात्।

३६४–२० ब्रह्मात्मशब्दावपीत्यादि पूर्वपक्ष्युक्तं (श्रीभाष्य–पृ. ३६२ प. १२) खण्डयति–**ब्रह्मात्मशब्दावपीति** ॥ १५ ॥ ( ४ )

३६५–८ **ब्रह्म त इति**। गार्ग्यगोत्रेण बलाकपुत्रेण ब्रह्माजानता बालाकिना काशीराजं ब्रह्मज्ञानिनमजातशत्रुनामानं प्रति ब्रह्म ते ब्रवाणीत्युक्त्वा तत आदित्याद्यन्तर्गताः पुरुषा ब्रह्मत्वेनोपदिष्टाः। ततोजातशत्रुरुक्तवान्–हे बालाके त्वया ब्रह्म ते ब्रवाणीति मृषोक्तम्। अब्रह्मवाद एव त्वया कृतः। त्वया ब्रह्मत्वेन ये पुरुषा उपदिष्टा एतेषां पुरुषाणां यः कर्ता। एते यत्कार्यभूताः। किं विशिष्याभिधीयते यस्यैतत्प्रत्यक्षादिसंनिधापितं जगत्कार्यम्। क्रियत इति व्युत्पत्त्या कर्मशब्दः कार्यवाची। स एव वेदितव्यो न तु त्वदुपन्यस्ता आदित्यादय इति सिद्धान्ते श्रुत्यर्थः। कर्मशब्देन पुण्यपापलक्षणं कर्म गृह्यते। तत्संबन्धादत्र वेदितव्यतयोपक्षिप्तो जीव एव गृह्यते। स एव ब्रह्म न तदतिरिक्त ईश्वरः। यष्टिघातोत्थापनश्रेष्ठिदृष्टान्तसुषुप्तिप्रबोधादियोगप्रदर्शनादिति तु पूर्वपक्षिमतम्।

—१८ पूर्वपक्षिमतेनोत्तरमाह–**यो वै बालाक इति**। पुरुषाणां जगदन्तर्गतत्वेन यस्य चैतत्कर्मेत्येतावतैव सिद्धे य एतेषां पुरुषाणां कर्तेति पृथङ्निर्देशस्य वैयर्थ्यमिति भावः।

३६६–१ **भोक्तुरेवेति**। जडस्येव पुरुषाणामपि पुरुषान्तरभोग्यभोगोपकरणत्वेन पुरुषान्तरस्य भोक्तुर्भोग्यभोगोपकरणभूतपुरुषकारणत्वमस्त्येवेत्याशयः।

—५ **तौ हेति**। ब्रह्मज्ञानार्थमुपसन्नं बालाकिं गृहीत्वाजातशत्रुर्ब्रह्मदिदर्शयिषया क्वचित्सुप्तपुरुषसकाशं गत्वा तं प्राणनामभिरामन्त्रयामास। आमन्त्रणेनानुत्थितं यष्टिघातेनोत्थापयामास। अत्र प्राणेभ्यः सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्यश्च यो व्यतिरेकः प्रदर्शितः स जीवस्यैवेति जीवब्रह्मवादः सिध्यति।

—८ **श्रेष्ठीति**। यथा श्रेष्ठी कश्चित्प्रभुः स्वैर्भोगोपकरणभूतैर्जनैर्यथा भोगान्भुङ्क्ते यथा वा स्वकीया जनास्तं प्रभुमैश्वर्यादिसंपन्नमनुभूय तद्दत्तवित्तादीनि चोपजीव्य हृष्यन्त्येवमेवायं परमात्मा स्वोपकरणभूतैर्जीवात्मभिर्लीलारसं भुङ्क्ते ते च जीवात्मानः परमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिविशिष्टमनुभूय हृष्टा भवन्तीति सिद्धान्तेर्थः। पूर्वपक्षिमते तु प्रज्ञात्मपदेन जीव एव गृह्यते। दृष्टान्तदार्ष्टान्तिकयोः साम्यात्। तथा च जीवात्मानः परस्परदत्तभोगोपकरणा भोगान्भुञ्जत इत्यर्थः।

३६६–१० **तथा कैष इति**। सुप्तं पुरुषं दर्शयित्वा ततोजातशत्रुरुवाच हे बालाक एष पुरुषः क्वाशयिष्टेति स्वप्नस्थानप्रश्नः। एतदेष जीवः सुषुप्तौ क्वाभूदिति सुषुप्तिस्थानप्रश्नः। तथैतदेष जीवः कुत आगादिति जागृतौ जीवोद्गमनापादानप्रश्नः। आत्मनो हितावहत्वाद्धिता इति प्रसिद्धा हृदयसंबन्धिन्यो नाड्यो हृदयात्पुरीततसाख्यं हृदयान्तर्वर्तिमांसपिण्डविशेषमभिप्रस्थितास्तासु स्वप्नकाल आश्रितो भवति। यदा सुप्तः सन्स्वप्नदर्शनोपरतो भवति तदा प्राणे प्राणशरीरके परमात्मन्येकधा भवति। एकधाभावो नाम रागद्वेषादिलक्षणकालुष्यराहित्येनावस्थानं न त्वैक्यम्। तत एनं परमात्मानमपियन्तं जीवं वागादीन्द्रियाणि स्वकार्येण सहापियन्ति। जागृतौ त्वग्नेर्विस्फुलिङ्गा इवैतस्मात्परमात्मनः प्राणशब्दिता जीवा यथास्थानं प्रस्थिता भवन्ति तेभ्यश्च देवशब्दितानीन्द्रियाणि तेभ्यश्च लोकशब्दितानि ज्ञानानि भवन्तीति सिद्धान्ते श्रुत्यर्थः। पूर्वपक्षिमते त्वस्मिन्प्राण एवैकधेत्यत्र प्राणशब्दस्य प्राणभृज्जीव एवार्थः। तस्मिन्नेकधाभावश्चेन्द्रियाणामेव। सुषुप्तिस्थानं तु नाड्य एव। एतस्मादात्मनः प्राणा इत्यत्र प्राणशब्दः पञ्चवृत्तिप्राणपरः।

३६७–१३ **प्रकृतिधर्माध्यासेनेति**। स्वस्मिन्प्रकृतिगतकर्तृत्वाध्यासेनेत्यर्थः।

—१७–८ **अर्थप्रकरणादिभिरिति**। अर्थशब्देन स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितम्। **असंकुचितवृत्तिरिति**। लिङ्गवचनविरोधात्पुरुषपरामर्शोनुपपन्नः। पुण्यपापरूपं कर्म त्वप्रकृतमेव।

३६८–७ **क्रियामात्रवाची वेति**। वाशब्द इवार्थे। यथाजातशत्रोर्बालाक्यविदितपुरुषज्ञापने प्रवृत्तत्वादत्र कर्मशब्दो न क्रियामात्रवाची तथा न पुण्यापुण्यमात्रवाचीत्यर्थः।

—९–१२ **पुरुषस्येति**। नन्वत्र वेदितव्यतया जीव एवोपन्यस्यते। यद्यपि जीवः प्रसिद्धत्वाद्विदित एव तथापि स कर्मसंबन्धवत्त्वेन प्रसिद्धः स्वाभाविकस्वरूपेणाप्रसिद्ध एवेति चेन्न। यस्य वैतत्कर्मेति कर्मसंबन्धबोधकवाक्यस्य कर्मरहितस्वाभाविकस्वरूपबोधकत्वाङ्गीकारे लक्षणापत्तेः। यस्य कर्मेत्येतावतैव लाक्षणिकार्थग्रहणे सिद्ध एतच्छब्दवैयर्थ्यं च स्यादिति भावः।

—१२ पृथङ्निर्देशवैयर्थ्यादिति पूर्वपक्ष्युक्तं (श्रीभाष्य–पृ. ३६५ प. १९) खण्डयति–**य एतेषामिति**। य एतेषां कर्तेत्युक्तावेतच्छब्देनादित्यादिपरामर्शात्कर्तृत्वसिद्धावपि तदधिकहिरण्यगर्भादिकर्तृत्वं न सिध्यतीत्यतो यस्य चैतत्कर्मेत्युक्तमिति भावः।

३६९–२ **न तस्येति**। न हि वटादिकर्तृत्वं विनियोगादृष्टवतः पुरुषस्यापि तु

कुलालस्येव । तथा चात्र जीवो वेदितव्यतयोपक्रान्त इति पूर्वपक्षिमते य एतेषां पुरुषाणां कर्तृत्वस्यासंगतिरिति बोध्यम् ॥ १६ ॥

३६९-५ जीवेति । एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्त इत्यादिभोक्तृत्वरूपजीवलिङ्गादथास्मिन्प्राण एवैकधा भवतीति मुख्यप्राणलिङ्गाच्च नायं परमात्मेति चेत्तद्व्याख्यातं तस्य परिहारः प्रतर्दनविद्यायामेव व्याख्यात इति सूत्रार्थः ।

—१४ सर्वान्पाप्मन इति । पाप्मनः पातकानि कालजरामृत्युशोकादीन्वा । स्वाराज्यं स्वाधीनत्वमकर्मवश्यत्वम् । आधिपत्यं सर्वभूतश्रैष्ठ्यम् । अधिपतिः परमात्मा तस्येदमाधिपत्यमपहतपाप्मत्वादिगुणाष्टकमिति वा । मुक्तो भवतीति फलितार्थः ॥ १७ ॥

३७०-४ तुशब्द इति । तुशब्दो न पूर्वसूत्रोक्तप्राणलिङ्गनिर्वाहव्यावृत्त्यर्थः । किं तु पूर्वपक्षव्यावृत्त्यर्थ इति भावः ।

—६ जैमिनिराचार्य इति । जैमिनिग्रहणमुक्तस्यार्थस्य पूज्यत्वायेत्याशयः ।

३७१-८ एकतापत्तीति । सुषुप्तावेकतापत्तिर्जागृतौ विभाग इति बोध्यम् ॥ १८ ॥ ( ५ )

—२२ वाक्यान्वयादिति । आत्मा वा अरे इत्यादिवाक्ये द्रष्टव्यतया निर्दिष्ट आत्मा परमात्मैव । वाक्यस्य कृत्स्नस्य परमात्मन्येवान्वयादिति सूत्रार्थः ।

३७२-३ न वा अरे इति । कामः संकल्पः । कामायेति क्रियार्थोपपदस्य च कर्मणि स्थानिनः ( पा. सू. २।३।१४ ) इति सूत्रेण चतुर्थी । अहमस्याः प्रियः स्यामित्याकारकं पत्युः संकल्पं सफलीकर्तुं न जायायाः पतिः प्रियो भवति किं तु परमात्मनः संकल्पं सफलीकर्तुमेव । पतिसंकल्पायत्तं न पतिप्रियत्वं किं तु परमात्मसंकल्पायत्तमिति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षिमते त्वात्मशब्देन जीवात्मनो ग्रहणम् । तथा च जायायाः स्वसंकल्पेनैव पतिः प्रियो भवतीत्यर्थः ।

—१० तन्त्रसिद्धपुरुष इति । भोक्ता जीवात्मेत्यर्थः । निरीश्वरसांख्या हीश्वरं नाङ्गीकुर्वन्ति ।

—१३ विज्ञानघन इति । विज्ञानघनो जीवः । भूतशब्देन पञ्चमहाभूतात्मकं शरीरमुच्यते । देहोत्पत्तिविनाशानुविधाय्युत्पादविनाशवाञ्जीवः । अत्र विनाशोत्यन्तज्ञानसंकोचः । उत्पत्तिर्नाम ज्ञानविकाशप्रादुर्भावः । तस्य मरणोत्तरं मनुष्यपश्वादिसंज्ञा नास्तीति पूर्वपक्षिमते श्रुत्यर्थः । सिद्धान्ते तु विज्ञानघनशब्देन जीवशरीरकः परमात्मोच्यते । तस्य देहान्तर्यामिजीवान्तर्यामित्वेन देहस्योत्पत्तिविनाशौ तत्रोपचरिताविति बोध्यम् ।

—२१ अत एव । अमृतत्वप्राप्त्युपायोपदेशपरत्वादेव ।

३७३–४ **एकरूपम्** । ज्ञानैकप्रकारकम् ।

—८ **सर्वं तमिति** । अस्यार्थः प्रागुक्तः (विवृति–पृ. १०२ प. २७)। सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदेत्यत्रात्मनोन्यत्वदर्शनं नाम निष्कृष्टस्वरूपव्यतिरिक्तदेवाद्याकारदर्शनमिति तस्यानर्थहेतुत्वमत्रोच्यत इत्याशयः।

—९ **यत्र हीति** । अनात्माकाराणां देवत्वादीनां बहुत्वादेकाकार आत्मनि देवत्वादीनि न सन्तीति निषिध्यत इत्यर्थः ।

—११ **तस्य ह वा इति** । यद्यपि सांख्यमते पुरुषस्योदासीनत्वेन तस्यर्ग्वेदादिकारणत्वं न संभवति तथापि पुरुषाधिष्ठितप्रधानादाकाशगुणशब्दोत्पत्तिरिति तस्यर्ग्वेदादिकारणत्वमुपपद्यते ।

३७४–८ ननु यदि जीवस्वरूपज्ञानं न मोक्षसाधनं तर्हि किमर्थं प्रजापतिवाक्ये जीवस्वरूपं प्रतिपाद्यत इति चेत्तत्राह–**परमपुरुषेति** । जीवस्य स्वस्वरूपयाथात्म्यविज्ञानवत एव परमात्मज्ञानेधिकार इति भावः ।

—१४ **कर्मपरवशस्येति** । तथा च तस्य सर्वज्ञत्वाद्ययोगान्न जगत्कारणत्वम् । मुक्तस्यापि न । तस्य जगद्व्यापारवर्जमित्युक्तत्वात् । सांख्यमते सर्वेषामेव जीवानामुदासीनत्वेन निर्व्यापारत्वाच्च ।

३७५–१ **एतदिति** । इदमिति निर्दिष्टं जगदित्यर्थः ।

—३ **पुरुषेण** । जीवेन । न हि जीवेन सह जगदैक्यमुपगच्छति । किं तु परमात्मनैव । तदपि सूक्ष्मचिदचिद्वस्तुशरीरकस्य परमात्मनः स्थूलचिदचिद्वस्तुशरीरकत्वेन परिणामाद्बोध्यम् ।

—४ **अत एवेति** । सर्वस्य परमात्मात्मकत्वादेवातदात्मकानुसंधाननिषेधः । न तु देवादिदृष्टिनिषेधः । देवादिशरीराणां सत्यत्वात् ।

—१३ **अनन्वयप्रसङ्गादिति** । न चेष्टापत्तिरिति वाच्यम् । वाक्यमहिम्नान्वयस्य प्रतीतेः । यत आत्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्य इत्युक्त आत्मनस्तु कामायेत्यस्यात्मनो द्रष्टव्यतोपयोगित्वं स्वरसतः प्रतीयते ।

–१८–९ **न त्विति** । यस्य प्रियं स शेषी । तस्य जीवस्य तादृशपत्यादिप्रियवियुक्तं स्वरूपमन्वेष्टव्यं न भवति । प्रियस्य प्रियसंयुक्तशेषिणो वान्वेष्टव्यत्वात् ।

३७६–१ **न पत्यादीति** । अनेन न पत्युः कामाय पतिः प्रियो भवतीत्यस्यार्थः संगृहीतः ।

—४ **परेण** । आत्मा वा अरे द्रष्टव्य इत्यादिवाक्येन । वाक्यस्वारस्येन प्रतीतस्याप्यन्वयस्य त्याग एकवाक्यताया अभावेन वाक्यभेदप्रसङ्ग इति भावः ।

—१६–७ **मत्प्रयोजनाय** । स्वसंकल्पसाफल्याय । **अपि त्वात्मनः कामायेति** । परमात्मसंकल्पानुसारेणेत्यर्थः ।

३७६–१९ **प्रतिनियतेति** । कस्यचिज्जीवस्य स्रक्चन्दनादिभोग्यमस्मिन्देश एव न सर्वत्रेति देशनियमः। तथास्मिन्नेव काले न सर्वदेति कालनियमः । अस्येदमेव भोग्यं नान्यदिति स्वरूपनियमः । किंचिद्वस्तु परिमाणविशेषविशिष्टमेव कस्यचिद्भोग्यं भवति न तदपेक्षया महदल्पं वा । यथा यावती स्रग्देवभोग्या न तावती मनुष्यभोग्येति परिमाणनियमः ।

३७७–१५ आत्मनस्तु कामायेत्यात्मशब्दस्य परमात्मवाचकत्वं जीवात्मवाचकत्वं च गृहीत्वा श्रुतेरर्थद्वयं यत्प्रतिपादितं तत्र प्रथमार्थ एव श्रेयानित्याह- **अस्मिंस्त्विति** । आत्मशब्दद्वयस्यैकार्थकत्वाच्छ्रेयस्त्वम् । जीवात्मवाचिशब्देन परमात्मनोभिधानं तु जीवात्मनः परमात्मशरीरत्वाद्बोध्यम् ॥ १९ ॥

—१९ **मतान्तरेणापीति** । ये जीवात्मनः परमात्मशरीरत्वं न मन्यन्ते तेषामपि मते जीवात्मवाचिशब्देन परमात्मनोभिधानं सुवचमिति सूत्रद्वयेन सूत्रकारः प्रदर्शयतीत्यर्थः ।

३७८–१ **प्रतिज्ञेति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य परमात्मकार्यत्वाङ्गीकारेण परमात्मनोनन्यो जीव इति जीवशब्देन परमात्मनोभिधानम् । प्रतिज्ञोपपादकं यत्कार्यकारणभावकृतमैक्यं तस्य लिङ्गं जीवात्मवाचिशब्देन परमात्माभिधानमित्याश्मरथ्यमतम् ॥ २० ॥

—१७ **तद्युक्तमिति** । अजत्वश्रुतिविरोधः १ अकृताभ्यागमकृतविप्रणाशप्रसङ्गः २ फलभोगार्थसृष्टिविरोधः ३ उपायानुष्ठानवैयर्थ्यम् ४ अपुरुषार्थता ५ चेति दूषणपञ्चकसत्त्वाज्जीवोत्पत्तिवादासंभवादाश्मरथ्यमतमयुक्तमिति भावः ॥ २१ ॥

३७९–१५ **अनेवंभावः** । ब्रह्मत्वाभावः । ब्रह्मप्रतियोगिकभेद इति यावत् । स्वाभाविकः स्वरूपप्रयुक्त उतौपाधिकः । औपाधिकपक्षेपि तस्यौपाधिकभेदस्य पारमार्थिकत्वमुतापारमार्थिकत्वमिति विकल्पः ।

—१७ **भेदस्येति** । ब्रह्मप्रतियोगिकभेदस्य स्वरूपप्रयुक्तत्वे जीवस्य यावत्स्वरूपस्थितिस्तावत्तत्र ब्रह्मप्रतियोगिकभेदस्यानपाय एव । भेदे च विद्यमाने ब्रह्मभावो जीवस्य सुतरां वक्तुमशक्यः ।

—१८ **विनष्टत्वादेवेति** । वस्तुनः स्वरूपस्य विनाशे वस्तुनो विनाशस्यावश्यंभावात् ।

—२० **पारमार्थिकेति** । औपाधिकस्य भेदस्य पारमार्थिकत्वे भेदस्योपाधिनिष्ठत्वेनोपाधिव्यतिरिक्तस्य ब्रह्मभेदो नास्तीत्युत्क्रान्तेः पूर्वमपि तस्य ब्रह्मत्वमेवेत्याशयः ।

३८०–१० अथ स्वमतेन श्रुतितात्पर्यमाह–**अस्माच्छरीरादिति** ।

३८०–१३ संपद्येति । परं ज्योतिरुपसंपद्य जीवस्य स्वस्वरूपाविर्भावो भवति। स्वेन रूपेणाभिनिष्पद्यत इति स्वेनेति शब्दादिति सूत्रार्थः।

—१४ सूत्रं व्याचष्टे-अतोनेनेति ।

३८१–६–७ सर्वज्ञत्वादीति। आदिशब्देन विरजस्त्वसर्वेशक्तित्वादिसंग्रहः। ब्रह्मोपासनान्मोक्षवादिन्य इति । ताश्च जीवब्रह्मभेदप्रतिपादिकाः । आत्मशरीरभावेन ब्रह्मजीवयोस्तादात्म्ये स्वीकृते द्विविधा अपि श्रुतयः प्रत्यक्षादिप्रमाणाविरोधेन परस्पराविरोधेन च सम्यगुपपादिता भवन्तीति तात्पर्यम् ।

—१३–३८२–१२ आत्मनि खल्वरे इति । आत्मनि खल्वरे दृष्टे मते विदित इदं सर्वं विदितं भवतीत्यात्मविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञोक्ता। तया च जगदुपादानत्वरूपं ब्रह्मलक्षणं सिध्यति । जगदुपादानत्वमन्तरेण सर्वविज्ञानासंभवात्। दुन्दुभ्यादीति। स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इति श्रुतिः। अत्र ग्रहधातुर्निरोधार्थकः। गृहीतश्चोर इति यथा। दुन्दुभेरित्यनादरे षष्ठी। यथा दुन्दुभौ हन्यमाने सति तदनादरं कृत्वा ततो बहिर्निःसरतः शब्दान्निरोद्धुं न शक्नुयात्किं तु दुन्दुभिनिरोधेन हन्तृपुरुषनिरोधेन वा शब्दो निरुद्धो भवति। तथेन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम्। किं त्विन्द्रियनिरोधेन तत्प्रवृत्तिमूलभूतस्य मनसो निरोधेन च परमात्मसाक्षात्कारविरोधि बाह्यार्थज्ञानं निरुध्यत इति तदर्थः। स यथार्द्रैधाग्नेरिति। स यथार्द्रैधाग्नेरित्यादिनोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वमुपदिश्य स यथा सर्वासामपां समुद्रमेकायनमित्यादिना सकलविषयप्रवृत्तिमूलकरणग्रामनियमनं चोपदिश्येत्यन्वयः। स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेद इत्यादिश्रुतिः। एधशब्दोकारान्त इन्धनवाची। आर्द्रैधाग्निग्रहणं निमित्तोपादनयोर्ज्ञापनार्थम्। अग्निर्हि धूमोत्पत्तौ निमित्तम्। इन्धनं तदुपादानम्। यथाभ्याहितादाध्मानवीजनादिना प्रवर्तितात्पृथग्विधा धूमा विनिर्गच्छन्ति तथास्य महतो भूतस्य परमात्मनो निःश्वसितमनायासेनोद्गतमेतदृग्वेदादीत्यर्थः । यद्यप्यत्र वाचकशब्दमात्रसृष्टिरुक्ता तथापि भोग्यभोगस्थानभोक्तृवर्गरूपवाच्यसृष्टिरप्यत्रोक्तेति द्रष्टव्यम्। अनुक्तस्यान्यतो ग्राह्यत्वात्। षष्ठे मैत्रेयीब्राह्मणे तथोक्तत्वात्। तेन च ब्रह्मणो निखिलजगदेककारणत्वं सिध्यति। तथाग्रे स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमित्यादिश्रुतिः । समुद्रस्यापामयनत्वं नाम तदुपादातृत्वमेव। एवं स्पर्शायतनत्वं नाम तदुपादातृत्वम्। यथा समुद्रो भूयसीरपो गृह्णात्येवं त्वगिन्द्रियमसंख्याकान्स्पर्शविशेषान्गृह्णाति। एवमितराण्यपीन्द्रियाणि। अत एतेषां सर्वेषामिन्द्रियाणामनन्ता वृत्तिविशेषा निरोद्धव्या

इत्याशयः । स यथा सैन्धवघन इति । यथा लवणशकल उदके निक्षिप्तस्तदनुप्रविश्य लीयते तस्य पृथग्ग्रहणाय न कोपि शक्तः स्यात्तदुदकं सर्वं लवणमेव भवत्येवमेतद्ब्रह्म विज्ञानघन एव । ज्ञानैकाकारो जीवो विज्ञानघनः । तदात्मभूतं ब्रह्म च तथैव । तच्च जीवशरीरकं सद्भूतेषूत्पद्यमानेषु स्वयमुत्पद्यते तेषु नश्यत्सु नश्यति । भूतपरिणाममनुवर्तते । विनाशो ज्ञानसंकोचः । उत्पत्तिश्च ज्ञानविकाशप्रादुर्भावः । न प्रेत्येति । समित्येकीकारे । ज्ञाधातोर्ज्ञानमर्थः । ततश्च संज्ञाशब्देन भूतसंघातेनैकीकृत्य ज्ञानमुच्यते देवोहं मनुष्योहमित्यादि । तच्च यथा संसारावस्थायां भवति तथा प्रेत्य चरमदेहवियोगं प्राप्य मोक्षदशायां न भवति । स्वाभाविकापरिच्छिन्नज्ञानसंकोचाभावादित्यर्थः । ब्रह्मव्यतिरिक्तेति । यस्य वस्तुन आत्मभूतं ब्रह्म नास्ति तथाविधं ब्रह्मव्यतिरिक्तं वस्त्वन्तरं नास्त्येव । तथाविधस्य वस्तुनो ब्रह्मणः सकाशाद्भेदेन दर्शनं निरस्यते । तथाविधवस्त्वभावात् । अप्रामाणिकज्ञानं हि दोषादुत्पद्यते । दोषाभावे तु वस्तुसद्भावं विना दर्शनं नोपपद्यत इत्यर्थः । अयं तमिति । अयं जीवात्मा । तं परमात्मानम् । स एष नेति नेतीति । स एष परमात्मा चिद्गतदेवत्वमनुष्यत्वादिप्रकारवान्न भवत्यचिद्गतपृथिवीत्वादिप्रकारवांश्च न भवतीत्यर्थः ॥ २२ ॥ ( ६ )

३८३–६ ईक्षणादीति । आदिशब्देनानन्दादिसंग्रहः । जगत्कारणत्वेनेत्यस्य जगन्निमित्तकारणत्वेनेत्यर्थः ।

—८ न हीति । वेदान्तवाक्येष्वीश्वरश्चेतनोऽपरिणाम्यधिष्ठाता चोच्यत इति तस्य निमित्तकारणत्वम् । तथा तेषु प्रधानमचेतनं परिणाम्यधिष्ठेयं चोच्यत इति तस्यैवोपादानकारणत्वमिति भावः ।

—१४ विकारजननीमिति । प्राग्व्याख्यातम् (विवृति–पृ. २०४प.१०)।

३८४–२ श्रुतिषु प्रधानप्रतिपादनाभावमभ्युपगम्य तस्योपादानत्वमर्थापत्तिप्रमाणेन समर्थयति–एवमश्रुतेपीति । ब्रह्मण इत्यस्य सत्यज्ञानादिलक्षणत्वादपरिणामिनो ब्रह्मण इत्यर्थः ( श्रु. )।

—५ अत्यन्तभेदः । शरीरतयात्मनिष्ठत्वमप्यसहमानो भेदः ( श्रु. ) ।

—७ अनेककारकेति । एतेन परमात्मनो यदि जगन्निमित्तकारणत्वं तर्हि तदस्तूपादानकारणत्वं च कस्यापि मास्त्विति परास्तम् ।

—१९ यथा सोम्यैकेन लोहमणिनेति । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्...यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यादिति श्रुतिः । लोहमणिः सुवर्णपिण्डविशेषः । नखनिकृन्तनशब्देन कार्ष्णायसपिण्डो लक्ष्यते ( वि. दी. ) ।

३८५–१० आदिश्यत इति । आङ्पूर्वस्य दिशधातोः प्रशासनमर्थः । ततः करणे घञ्प्रत्ययः । प्रशासनकरणं चात्र प्रशासनकर्ता परमात्मैव । विव-

ज्ञातः कारकाणि भवन्तीति न्यायेन कर्तुरेवात्र करणत्वेन विवक्षणात् । येनाश्रुतं श्रुतं भवत्येतादृशमादेशं प्रशासनकर्तारं परमात्मानं गुरुं प्रति त्वमप्राक्ष्यः पृष्टवानसि किमित्युद्दालकेन गुरुकुले सर्ववेदानधीत्य प्रत्यागतः स्वपुत्रः श्वेतकेतुः पृष्टः । अत्र प्रशासितुर्विज्ञानेन सर्वविज्ञानोक्त्या निमित्तकारणस्य परमात्मन एवोपादानत्वं सिध्यति । उपादानकारणज्ञानेनैव कार्यविज्ञानात् । न च परमात्मन उपादानकारणत्वमेवास्तु निमित्तकारणं त्वन्यदेव किमपि भवत्विति वाच्यम् । सदेव सोम्येति श्रुतौ सृष्टेः प्रागेकत्वावधारणेनान्यस्याभावात् । अद्वितीयपदेनाधिष्ठात्रन्तरनिषेधाच्च ।

३८६–१ एवं सति । ब्रह्मण एव जगदुपादानत्वे सति ।

—१३–९ योऽक्षरमिति । त्रिगुणात्मकं कार्योन्मुखं प्रधानम् । तदेव सूक्ष्मात्वमक्षरम् । क्वचिदक्षरशब्देन मुक्तात्माप्युच्यते । यथा गीतायां कूटस्थोऽक्षर उच्यते ( गी. १५।१६ ) इत्यत्र । कदाचिदिति । प्रथमस्य कदाचित्पदस्य मुमुक्षोत्तरकालमित्यर्थः । द्वितीयस्य कदाचित्पदस्य संजिहीर्षोत्तरकालमित्यर्थः ।

३८७–३ अभिधीयत इति । अत्राद्यन्तराहित्यमजत्वं च यदुच्यते न तत्कारणावस्थाया नित्यत्वविवक्षयोच्यते किं तु कारणावस्थोपलक्षितद्रव्यनित्यत्वमभिधीयते । अवस्थायास्त्वनित्यत्वमेव । एतदेव शङ्कासमाधानाभ्यां विशदयति–ननु चेत्यादिना ।

—१३ अत एव । प्रलयावस्थायामपि तमःशब्दवाच्यस्य ब्रह्मप्रकारस्याचित्त्वस्य सद्भावादेव ।

—२० आसीदिदमिति । प्रलय इदं तमोभूतं तमोवस्थमासीत् । तच्चालक्षणं शब्दस्पर्शविहीनं रूपादिभिरसंहितमित्युक्तप्रकारेण रूपादिलक्षणरहितमत एवाप्रज्ञातमपरोक्षज्ञानाविषयीभूतमप्रतर्क्यं बाह्यतर्कागोचरम् । अविज्ञेयम् । विभागेन ज्ञेयं विज्ञेयम् । परस्माद्ब्रह्मणः पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव सर्वतः प्रसुप्तमिव । यथा सुषुप्तौ जीवस्य परमात्मनः सकाशात्पृथग्व्यवहारानर्हावस्थापत्तिरेव न स्वरूपैक्यं तथा चिदचिदात्मकस्य जगतो ब्रह्मणि पृथग्व्यवहारानर्हसंसर्ग एव न स्वरूपैक्यमित्यर्थः ।

३८८–२ अपरिणामित्वश्रुतयश्चेति । उपपादयिष्यन्त इत्यनुषङ्गः ।

—४ निष्पाद्यत्वं चेति । न संभवतीत्यर्थः ॥ २३ ॥

—११ अभिध्येति । अभिध्या बहुभवनसंकल्पः ।

—१४ विचित्रेति । बहु स्यामिति श्रुतावुक्तं बहुत्वं चिदचिद्रूपेण विवक्षितम् । अग्रे तेजःप्रभृतिसृष्टेरुक्तत्वात् ॥ २४ ॥

—१९ किंस्विद्वनमिति । लोके हि गृहं चिकीर्षुः पुमान्वनं गत्वा कंचिद्वृक्षं छित्वा तदीयैः काष्ठैर्गृहं निर्मिमीते । तद्दृष्टान्तेनात्रापि यतो यस्माद्वनज-

न्याद्वृक्षाद्द्यावापृथिवी द्युलोकभूलोकौ निष्टतक्षुस्तक्षणेन निर्मितारो निर्मित वन्तः । तादृशं वनं किंस्विद्भवेत् । कश्च तादृशः स वृक्ष आसीत् । हे मनीषिणो बुद्धिमन्तो मनसा स्वकीयेन विचार्य तदिदमर्थद्वयमाचार्यसमीपे पृच्छत । किं च यत्कारणभूतं वस्तु भुवनानि सर्वांल्लोकान्स्वात्मनि धारयन्नध्यतिष्ठन्नियमनम करोत्तदिदु तदपि वस्तु पृच्छत । यदुक्तं मनीषिणां 'तस्याचार्य उत्तरं ब्रूते यस्माद्वनजन्याद्वृक्षाद्द्यावापृथिव्यौ निर्मिते तद्वनस्थानीयं तद्वृक्षस्थानीयं ब्रह्मैव तस्य सर्वशक्तित्वात् । यस्योत्पाद्यस्य या सामग्र्यपेक्षिता सा सर्वा तस्मिन्विद्यते तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन्धारयति नियमयति च । हे मनीषिण आचार्योऽहं मनसा निश्चित्य वो युष्मभ्यं विब्रवीमि विविधमुत्तरं ब्रवीमीत्यर्थः ( सा. ) ॥ २५ ॥

३८९-१२ अविभक्तेति । आकारभेदात्कर्तृत्वकर्मत्वयोर्न विरोधः । आकारिण एकत्वादेकस्यैव निमित्तत्वमुपादानत्वं चेति बोध्यम् ॥ २६ ॥

--१६ सत्यम् । विकाररहितम् ।

३९०-१६ प्रपञ्चशरीरमिति । तथा चायं परिणामः शरीरद्वारेति न निर्विकारे ब्रह्मणि काचिदनुपपत्तिः ।

३९१-९ विज्ञानम् । जीवात्मा ।

३९२-१ ज्ञानावरणेति । प्रकृतिभूतं त्रिगुणात्मकमचिद्वस्त्वव्यक्तशब्देनोच्यते । ततोपि सूक्ष्मं तदेव द्रव्यमक्षरशब्देनोच्यते । ततोपि सूक्ष्मतरं तदेवाति द्वस्तु तमःशब्देनोच्यते । तच्च परमसूक्ष्मतया दुर्निवारं सज्ज्ञानमावृणोतीति ज्ञानावरकत्वेन तमःसाम्यात् । मृत्युशब्देन च तदेवोच्यते । ज्ञानावरकं तदनर्थहेतुर्भवतीत्यनर्थहेतुत्वेन मृत्युसाम्यात् ।

—६ भूतादौ । सात्त्विकाहंकारे ।

—२०-२ सच्च त्यच्चेति । सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते । त्यच्छब्देन पूर्वपूर्वावस्थात्यागविकारास्पदमचेतनमुच्यते । ब्रह्मैव चेतनाचेतननामरूपभाग्भवतीत्यर्थः । ननु ब्रह्मण एव सर्वोपादानतया सर्वभावे विकारास्पदत्वं स्यादित्याशङ्क्याह-निरुक्तं चेति । जातिगुणक्रियावत्तया जाति गुणक्रियाभिधायिशब्दवाच्यमचेतनं निरुक्तम् । जातिगुणादिशून्यचेतनजातमनिरुक्तम् । एता भूतमात्राः प्रज्ञामात्रास्वर्पिता इत्युक्तरीत्याचेतनवर्गाधारभूत चेतनजातं निलयनम् । विज्ञानमजडस्वरूपम् । अविज्ञानं जडस्वरूपम् । निर्विकारतया सत्यत्वं चेतनस्य । इतरस्य त्वनृतत्वम् । ततश्च निरुक्तत्वानिरुक्तत्वनिलयनत्वानिलयनत्वविज्ञानत्वाविज्ञानत्वयुक्तसत्यानृतशब्दितचेतनाचेतननामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत् । अजहन्निर्विकारलक्षणस्वभावमेवाभवदित्यर्थः ।

३९४-१७ अस्मादिति । स्वशरीरभूतादित्यर्थः ॥ २७ ॥ २८ ॥ ( ७ ) ॥ २९ ॥ ( ८ )

## अथ द्वितीयाध्यायस्य प्रथमः पादः प्रारभ्यते ॥

३९७–५ प्रथमद्वितीयाध्याययोः संगतिं दर्शयति–प्रथम इति ।

—१२ **विरोध इति** । प्रत्यक्षश्रुतिविरोधे स्मृतिवचनमनपेक्षमनादरणीयम् । असति प्रत्यक्षश्रुतिविरोधे स्मृतिवचनेन मूलश्रुतिरनुमीयत इत्यर्थः ।

—१५ **तद्विरुद्धा स्मृतिः** । औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिः ।

३९८–१ **निश्चयायोगादिति** । न च प्रथमाध्यायोक्ततर्कैरर्थो निश्चित एवेति वाच्यम् । स्मृतिवचनविरोधे तर्काणां दुर्बलत्वात् ।

—३–७ **यथावदभ्युपगच्छन्तीति** । अनेन कपिलस्य लोकायतवन्न नास्तिकत्वमिति तन्मतस्य ग्राह्यत्वं सूचितम् । अल्पश्रुतैर्मन्दमतिभिरिति । अनेन स्मृतिसापेक्षत्वमुक्तम् । अनन्तशाखानुगतस्य वाक्यार्थस्यैकदेशज्ञैर्दुर्ज्ञेयत्वादिति भावः ।

—१६–२१ **आसीदिति** । अयं श्लोकः प्राग्व्याख्यातः (विवृति पृ. २१७ पं. २०) । **ततः स्वयंभूरिति** । व्यञ्जयन्निति लक्षणहेत्वोः (पा सू. ३।२।१२६) इति पाणिनिसूत्रेण हेतौ शतृप्रत्ययः । अर्जयन्वसतीतिवत् । ततः सर्गकाले संप्राप्ते भगवान्स्वयंभूः परमात्मेदं व्यष्टिरूपकार्यजातं व्यञ्जयन्व्यञ्जयितुम् । महाभूतादिषु प्रवृत्तमोजः संकल्पज्ञानरूपं तेजो यस्येत्यादर्शोऽव्यक्तोऽव्यक्तशरीरकः प्रादुरासीत् । महाभूतादिष्वित्यत्रादिशब्देन महदहंकारग्रहणम् । पूर्वमविभक्ततमःशरीरको भगवान्व्यष्टिसृष्टिहेतुभूततन्मात्राहंकारसृष्ट्यर्थं स्वसंकल्पाद्विभक्ततमःशरीरकोऽक्षरावस्थाप्राप्तिपूर्वकमव्यक्तावस्थप्रकृतिशरीरकोऽभूत । सोऽभिध्याय संकल्पं कृत्वा स्वाच्छरीरादव्यक्तावस्थचित्संसृष्टाचिद्वस्तुनः सकाशाद्विविधाः प्रजाः सिसृक्षुरादावप एव ससर्ज । अप्शब्देन समस्ततत्त्वग्रहणम् । तासु वीर्यं व्यूहकरणजनितामण्डोत्पादनशक्तिमजनयदित्यर्थः ।

३९९–१९–४००–१ **पूः प्राणिन इति** । पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्येत्यापस्तम्बधर्मसूत्रे पाठः । गुहा प्रकृतिस्तस्यां शेते तया सहाविभागापन्नस्तिष्ठतीति गुहाशय आत्मा तस्य । विकल्मषस्य निर्लेपस्य । **तस्मादिति** । तस्मात्परमात्मनः । कायाः देवादिशरीराणि । मूलप्रपञ्चसृष्टेर्भोक्तृतया मूलकरणम् । शाश्वतिक एकरूपोऽविकारः । नित्योऽविनाशी ( र व्या. ) ।

४००–६ **भूतार्थेति** । सिद्धार्थेत्यर्थः । साध्यार्थप्रतिपादनपराणां वाक्यानां विरोधे तु विकल्पाङ्गीकारेण विरोधपरिहारो भवति न तु सिद्धार्थप्रतिपादनपराणामिति तात्पर्यम् ।

—११ **विरुद्धार्थया** । न्यायानुगुणस्मृत्यनुगृहीतश्रुतिविरुद्धार्थया ।

४०१–५ **फलसाधनकर्मेति** । निष्कामकर्मणां भगवदाराधनरूपत्वेऽपि सकामकर्मणां तत्त्वाभावेन स्मृतीनां सावकाशत्वमस्त्येवेति शङ्काशयः ॥ १ ॥ ॥ २ ॥ ( १ )

४०३–१ **आत्मेश्वरयोरिति** । आत्मा जीवस्तस्य योगमते ब्रह्मात्मकत्वं ब्रह्मात्मा यस्य तादृशत्वं नास्ति । तथेश्वरस्य तन्मते जगदुपादानत्वादिकल्याणगुणात्मकत्वं नास्तीत्यर्थः ॥ ३ ॥ ( २ )

—११ **चिदचिदात्मकस्येति** । यद्यपि तत्र चिदंशस्य नाचेतनत्वेनोपलब्धिस्तथाप्यसर्वज्ञत्वेनोपलब्धिरस्ति । तथा चाचेतनत्वपदेनासर्वज्ञत्वमप्युपलक्ष्यते । अत एवाचेतनत्वेनेति विशेषणस्य प्रतियोगित्वेन सर्वज्ञादित्युक्तम् । एवमं दुःखात्मकत्वेनेति विशेषणस्य प्रतियोगित्वेनानन्दैकतानादित्युक्तम् । चिदंशस्य किंचित्सुखसत्त्वेऽप्यानन्दैकतानत्वाभावात् ।

—१४–७ **विज्ञानं चेति** । विज्ञानमजडस्वरूपम् । अविज्ञानं जडस्वरूपम् । **भूतमात्रा** ग्राह्यग्राहकजातं सर्वं जगद्विषयेन्द्रियरूपम् । **प्रज्ञामात्रासु** जीवेषु **प्राणे** परमात्मनि । **समान इति** । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानो जीवो वृक्ष इव च्छेदनार्हे एकस्मिञ्शरीरे स्थूलोऽहं कृशोऽहमित्यादिनादात्म्यबुद्ध्या पांसूदकवत्तदेकतामापन्नः संस्तत्संसर्गकृतानि दुःखान्यनुभवतीत्यर्थः ।

४०४–४ **कार्यसलक्षणमिति** । कार्येण जगताऽचेतनत्वादिगुणैः समानमित्यर्थः ।

—६ **अनन्यापेक्षस्येति** । प्रमाणान्तरानपेक्षस्येत्यर्थः । शास्त्रस्य प्रमाणान्तरनिरपेक्षयेऽपीतिकर्तव्यतापेक्षासत्त्वेन तेन प्रमाणाङ्गभूतस्तर्कोऽनुसरणीय एवेत्यर्थः ।

—७ **क्वचित्क्वचिद्विषयं** । स्वत एवास्पष्टार्थं ।

—८ **अर्थस्वभावेति** । यत्रभसो नीरूपत्वादचाक्षुषत्वमुच्यते तदर्थस्वभावविषयनिरूपणनार्थविशेषे प्रमाणव्यवस्थापनम् । वैधहिंसायाः श्रेयस्करत्वप्रमितिजनकवाक्यनिरूपणेन न हिंस्यादिति वाक्यस्य वैधहिंसाव्यतिरिक्तविषयत्वं यदुच्यते तत्सामग्रीविषयनिरूपणेनार्थविशेषे प्रमाणव्यवस्थापनम् ( श्रु. ) ।

—११ **आकाङ्क्षेति** । आकाङ्क्षादीनां लक्षणानि सोदाहरणानि यतीन्द्रमततदीपिकाप्रकाशेऽस्माभिर्निरूपितानि ( य. दी. प्र. पृ. ३२ ) । आकाङ्क्षायोग्यतासंनिधिसापेक्षत्वमितरप्रमाणापेक्षया शास्त्रस्य साधनवैषम्यम् । तच्चात्र भागकृद्भिर्विशेषेणेति शब्देन सूच्यते । तेन सर्वत्र तर्कसापेक्षत्वरूपं साध्यवैरूप्यं सिध्यतीत्यभिप्रायः ( श्रु. ) ।

—१७ **अथोच्येतेति** । अचेतनत्वेनाभिमतेषु पृथिव्यादिष्वप्यनुद्भूतं चैतन्यमस्तीति कार्यकारणयोश्चेतनत्वाचेतनत्वकृतं वैलक्षण्यं नास्तीति शङ्काशयः ।

४०४-२० अत एवेति । यत्रोद्भूतं चैतन्यं तच्चेतनशब्देन व्यवह्रियते यत्रानुद्भूतं चैतन्यं तदचेतनशब्देनेत्याशयः ।

—४०५-१ तेष्विति । घटादिषु चैतन्यस्यानुपलम्भनियमेन तेषु चैतन्यशक्तिरपि नास्तीत्यर्थः । तथा चाचेतनत्वाभिमतेषु पदार्थेष्वनुद्भूतमपि चैतन्यं नास्त्येव नापि चैतन्यशक्तिरिति बोध्यम् ।

—६ इतरेतराश्रयत्वमिति । तथा चेदानीं जगतो ब्रह्मकारणकत्वमेव न सिद्धमिति जगतश्चेतनत्वासिद्धौ कारणत्वेन कार्यत्वेन चाभिमतयोरात्मजगतोश्चेतनत्वाचेतनत्वकृतं वैलक्षण्यं सिद्धमिति भावः ।

—१३ सत्तादीति । आदिशब्देन द्रव्यत्वसंग्रहः ।

४०६-३ अचेतना श एवेति । अचेतनानां केशादीनां कारणं पुरुषशरीरमचेतनमेव । अचेतनस्य गोमयस्य कार्यं वृश्चिकशरीरमचेतनमेव । अचेतनस्य तन्तोः कारणमूर्णनाभिशरीरमचेतनमेव । ऊर्णनाभिः कीटविशेषः ( कोळी इति प्र. ) ॥ ४ ॥

—५ तं पृथिवीति । यद्यप्यत्र चैतन्ययोगो न साक्षाच्छ्रूयते तथापि चैतन्यव्याप्यानां संभाषणकामनासंविवादगमनानां श्रवणेन तद्व्यापकश्चैतन्ययोगोऽर्थात्सिध्यत्येवेत्यभिप्रायेण चैतन्ययोगः श्राव्यत इत्युक्तम् । तथा पुराणेषु नद्यादीनां संवाददर्शनेन चैतन्यं सिध्यतीति शङ्काशयः ।

—१० अभिमानीति । पूर्वसूत्रमेतत्सूत्रं च पूर्वपक्षिण एव । अत्र तुशब्दस्त्ववान्तरशङ्कानिरासार्थो न तु पूर्वपक्षनिरासार्थ इति बोध्यम् ।

—१४ देवताशब्देनेति । देवताशब्देन पृथिव्यादेर्विशेषणं दृश्यत इति तात्पर्यम् ॥ ५ ॥

४०७-१३ न दृश्यत इतीति । माक्षिकस्य वत्सरान्तराकाराद्व्यावर्तकाकारो माक्षिकत्वम् । तच्च कृमिशरीरे नास्तीति माक्षिकस्य कृमिशरीरस्य चाचेतनत्वेन साम्येऽपि व्यावर्तकाकारेण वैलक्षण्यात्कार्यकारणयोः सालक्षण्यनियमो नास्तीति भावः ॥ ६ ॥

—२० असत एवेति । तथा चासत्कार्यवादोऽभ्युपगतः स्यात् । सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यं च न संगच्छत इति शङ्काशयः ।

—२२ न त्विति । तथा च कार्यकारणयोरेकद्रव्यत्वं स्वीक्रियत एव । एकमेव कारणावस्थं द्रव्यं कार्यावस्थां भजमानं क्वचित्सलक्षणावस्थां भजते क्वचिद्विलक्षणावस्थामपीत्येव केवलमत्रोच्यत इति भावः ॥ ७ ॥

४०८-५ अपीताविति । अपीतिः प्रलयः । अपीताविति सृष्टिस्थित्योरप्युपलक्षणम् । तद्वदित्यस्य सुवर्णकुण्डलादिवदित्यर्थः । सुवर्णकुण्डलादिदृष्टान्तस्य

बुद्धिस्थत्वात् । यद्वा तच्छब्देन जगतः परामर्शेन जगतीव ब्रह्मण्यपुरुषार्थादि-प्रसङ्गादित्यर्थः । अथ वा तच्छब्दान्मतुप्प्रत्ययो न तु वतिः । तच्छब्देन जगन्निष्ठा अपुरुषार्थाः परामृश्यन्ते । तथा च ब्रह्मणस्तादृशापुरुषार्थाश्रयत्वप्रसङ्गादित्यर्थः ।

४०९-२ **परस्परं विरुद्धानामिति** । यः सर्वज्ञ इत्यादीनां वाक्यानाम-नीशश्चात्मेत्यादीनां च परस्परं विरुद्धार्थकत्वेन भिन्नविषयकत्वमेवोचितम् । कार्यकारणयोरैक्ये तु भिन्नविषयकत्वस्य वक्तुमशक्यत्वेन तत्प्रतिपाद्यार्थस्यासा-मञ्जस्यं स्यादेवेति भावः ।

—३ **अथोच्येतेति** । सिद्धान्त्येकदेशिनः शङ्कयम् ।

—१७ **न चाचेतनेति** । यन्निरूपितं शरीरत्वं वक्तव्यं स यादृशोपेक्षित-स्तादृश ईश्वरो न भवतीति न तन्निरूपितं शरीरत्वं जीवस्य जडस्य चेति पूर्वमुक्तम् । संप्रति तु यस्य वस्तुनः शरीरत्वं वक्तव्यं तद्यादृशमपेक्षितं तादृशं न तृणादि भवतीत्युच्यते ।

४१०-३ **तदेवेति** । एवकारेण वेश्मव्यावृत्तिः । न हि वेश्मनि वर्तमानस्यैव सुखाद्युपभोगसंभवः । वेश्मनोन्यत्र वर्तमानस्यापि तदुपभोगसत्त्वात् ।

—४ **प्रविष्टशरीरत्वासिद्धेरिति** । परकाये प्रविष्टो यो जीवस्तन्निरू-पितशरीरत्वं परकायस्य न स्यादित्यर्थः । न हि तस्य परकाय एव सुखाद्युपभो-गसंभवः । स्वकायेपि तत्सत्त्वात् ।

—६ **एतेनेति** । वेश्मादिषु शरीरत्वस्याप्रसिद्धत्वेनेत्यर्थः । भोगायतनत्वं भोगसाधनविशेषः । तथा च भोगायतनत्वं शरीरत्वमिति विशेषलक्षणमपि यदि वेश्मादिष्वतिव्याप्तिग्रस्तं तर्हि भोगसाधनत्वं शरीरत्वमिति सामान्यलक्षण-मवश्यमेवातिव्याप्तिग्रस्तं स्यादिति भावः ।

—८ **यदिच्छाधीनेति** । यस्य वस्तुनः स्वरूपं स्थितिः प्रवृत्तिश्च यदिच्छा-धीना भवति तन्निरूपितं तस्य वस्तुनः शरीरत्वमित्यर्थः ।

—१२ **सालभञ्जिकादिष्विति** । आदिशब्देन घटादिसंग्रहः । सालभञ्जि-कादीनां चेतननिरूपितशरीरत्वस्याभावात्तत्रोक्तलक्षणस्यातिव्याप्तिः स्यादिति भावः ।

—१५ **यद्यदेकेति** । नियाम्यं नियन्तुं शक्यम् । शेषभूतमङ्गभूतम् ॥ ८ ॥

४१२-१३ **सर्वभूतानि प्रतीति** । आत्मशरीरशब्दौ हि ससंबन्धिकार्थ प्रतिपादकौ । आत्मत्वं शरीरनिरूपितं शरीरत्वं चात्मनिरूपितमिति । तथा च श्रुत्या परमात्मनः सर्वभूतान्तरात्मत्वे प्रतिपादितेर्थादेव सर्वभूतानां परमा-त्मशरीरत्वं सिध्यतीति भावः ।

४१३-४ **यथोक्तेष्विति** । यस्य पृथिवी शरीरमित्यादिश्रुतिस्मृतिप्रतिपा-दितेष्वित्यर्थः ।

४१३-११-२ **स्थावरेष्विति** । अप्राणेषु स्थावरेष्विति यत्पूर्वमुक्तं तत्तात्पर्यं तत्रैव ( विवृति-पृ. १७९ प. १५ ) निरूपितम् । **पञ्चधेति** । न च शरीरलक्षणे पञ्चवृत्तीति पदं नोच्यते किंतु प्राणाधीनधारणत्वमित्येव । तथा च न स्थावरेष्वव्याप्तिरिति वाच्यम् । तथापीश्वरशरीरतयाभिमतेष्वव्यक्तादिष्वव्याप्तिसत्त्वात् ।

—१४ **इन्द्रियाश्रयत्वमिति** । यदि कर्मनिमित्तशिलाकाष्ठादिशरीराणामिन्द्रियाश्रयत्वमस्त्येव केवलं तत्रेन्द्रियाणां ज्ञानप्रवृत्तिजनकत्वं नास्तीत्युच्यते तर्हि पूर्ववदव्यक्तादिष्वव्याप्तिर्बाध्या ।

**अतो यस्येति** । लक्षणत्रयमेतत । तच्च यतीन्द्रमतदीपिकाप्रकाशे ( पृ. ४० ) स्फुटतरमुपपादितमस्माभिः ।

४१४-५ शरीरित्वप्रयुक्तदोषादिशङ्काव्यावृत्त्यर्थमाह-**उपरितनाधिकरणेष्विति** ( श्रु. ) ॥ ९ ॥ १० ॥

४१५-५ **तर्कस्येति** । केवलतर्कस्येत्यर्थः ।

—६ **शाक्येति** । शाक्यो बौद्धः । पितृशप्ताः केचिदिक्ष्वाकुवंश्याः कपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षे कृतवासा शाक्य इति प्रसिद्धिमापुः । तदुक्तं-शाकवृक्षप्रतिच्छन्नं वासं यस्मात्प्रचक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्याः प्रकीर्तिता इति । उलूकस्यापत्यमौलूक्यो वैशेषिकसूत्रकारः कणादः । अक्षपादो न्यायसूत्रकारो गौतमः । स हि स्वमतदूषकस्य व्यासस्य मुखदर्शनं चक्षुषा न कर्तव्यमिति प्रतिज्ञाय पश्चाद्व्यासेन प्रसादितः पादे नेत्रं प्रकाश्य तं दृष्टवान् । अतस्तस्याक्षपाद इति नाम प्रसिद्धम् । क्षपणको जिनः । कपिलः सांख्यसूत्रकर्ता । पतञ्जलिर्योगसूत्रकर्ता ॥ ११ ॥

—११ **अतिक्रान्ततदुपदर्शितदूषणत्वेति** । इतः पूर्वं विद्यमानैस्तर्कैरप्रतिहतत्वं यथा संभवति तथा प्रधानकारणवादमनुमास्यामह इत्यर्थः।

—१८ **वेदाख्येति** । वेदशास्त्राविरोधिनेत्यस्य वेदरूपं यच्छास्त्रं तदविरोधिनेत्यर्थः । अन्यथा वेदशास्त्रशब्दयोर्द्वंद्वे शास्त्रपदेन सांख्यशास्त्रस्यापि ग्रहणापत्तिरित्याशयः ॥ १२ ॥ ( ३ )

४१६-७ **परमाणिवति** । परमाणुकारणवादस्य कणभक्षादिसर्वसंमतत्वात्तत्र तर्कस्याप्रतिष्ठितत्वं वक्तुं न शक्यत इति याधिका शङ्का जायते तन्निरासार्थमेतदधिकरणारम्भ इति भावः ।

—१० **शून्यात्मकत्वेति** । परमाणूनां शून्यात्मकत्वं माध्यमिकानां मते । अशून्यात्मकत्वमन्येषां मते । तथा तेषां ज्ञानात्मकत्वं योगाचारमते । अर्थात्मकत्वमन्येषां मते । क्षणिकत्वं बौद्धमते । नित्यत्वं नैयायिकादिमते । एकान्तत्वं

जैनव्यतिरिक्तमते । अनेकान्तत्वं जैनमते । सत्यत्वं वैशेषिकादिमते । असत्यत्वं योगाचारमते । एकविधत्वमार्हतमते । चतुर्विधत्वं नैयायिकादिमते । तथा च परमाणूनां सर्वसंमतत्वेपि तत्स्वरूपे विरोधदर्शनादप्रतिष्ठितत्वमेवेत्यधिकरणतात्पर्यम् ॥ १३ ॥ ( ४ )

४१६–१४ **भोक्त्रापत्तेरिति** । भोक्तृपदं भोक्तृत्वपरम् । विभागो वैलक्षण्यम् । परमात्मनः सशरीरत्वे जीवस्येव तस्य भोक्तृत्वापत्तिः । ततश्च जीवपरमात्मनोरुभयोरपि भोक्तृत्वे तयोर्भोक्तृत्वाभोक्तृत्वरूपं वैलक्षण्य न स्यादिति चेन्नैष दोषः । यतो भोगनिमित्तं कर्म न शरीरमात्रम् । यथा लोके राजभृत्ययोरुभयोः सशरीरत्वेपि कर्ममूलकं न्यूनाधिकभोगवैलक्षण्यं तथा जीवब्रह्मणोर्भोक्तृत्वाभोक्तृत्वरूपं वैलक्षण्यं स्यात् । परमात्मनः सशरीरत्वेपि कर्माभावादित्यर्थः ।

—२१ **तत्र हीति** । यथा कार्यवशात्परगृहं प्रविष्टस्य गृहसंनिधिमात्रेण तद्गृहपतित्वप्रयुक्तसुखदुःखभाक्त्वं न भवति तथोपास्यत्वायोपासकहृदयं प्रविष्टस्य परमात्मनस्तच्छरीरसंनिधिमात्रेण सशरीरत्वप्रयुक्तभोक्तृत्वं नास्ति । परमात्मनः साक्षात्तच्छरीरस्वामित्वाभावादिति तत्रोक्तम् । अत्र तु शरीरस्वामित्वप्रयुक्तभोक्तृत्वं नास्तीत्युच्यत इति भेदः । तथा चोपास्यत्वायोपासकहृदयं प्रविष्टस्योपासकशरीरेण सशरीरत्वं जगद्रूपशरीरेण च सशरीरत्वमिति द्विधापि परमात्मनः सशरीरत्वे भोक्तृत्वं नास्तीति सिद्धम् ।

४१७–८ **मृत्सुवर्णादिवदिति** । यथा घटकुण्डलादिगतसर्वविशेषाश्रयत्वं मृत्सुवर्णादेरेव दृश्यते तथा जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्ग इति भावः ।

—१७ **आविर्भूतस्वरूपस्येति** । तथा च मुक्तावस्थस्य जीवस्यापि नापुरुषार्थगन्धः किमुत परमात्मनः ।

४१८–३–७ **प्रचुरदन्दशूके** । सर्पबहुले । **व्यजनादीति** । आदिशब्देन तत्तदनिष्टनिवारणसाधनानि विवक्षितानि । **भ्रमदिति** । भ्रमद्भ्रमणविशिष्टं स्वसामर्थ्यरूपं चामरं यस्य तादृशेन एव स दोषैर्न स्पृश्यते ।

—९ **नैवेति** । एतेन केवलब्रह्मकारणवादे पूर्वोक्तजगद्गतापुरुषार्थादिदोषप्रसङ्गः परिहृतः ( श्रु. ) ।

—११ **परैः** । शंकराचार्यैः ।

—१७ **न कर्मेति** । क्षेत्रज्ञानादित्वाभ्युपगम उपहितस्य ब्रह्मणः क्षेत्रज्ञत्वेनोपाधेश्च भोग्यत्वरूपेण नित्यत्वाभ्युपगमान्नित्यत्वेनाभ्युपगतयोस्तयोरविभागाभावः सिद्ध एवेत्यर्थः ( श्रु. ) ॥ १४ ॥ ( ५ )

४१९–१० **काणादाः** । वैशेषिकाः । एत एवास्मिन्नधिकरणे पूर्वपक्षिणः । एतदारभ्य तत्कार्योत्पत्तिसिद्धेः ( ४२०–१७ ) इत्यन्तं काणादमतम् । ततोत्राद्

( ४२०–१८ ) इत्यारभ्य तद्धेतुरन्वेषणीय इति ( ४२५–२ ) इत्यन्तं शंकराचार्यैकदेशिनां जीवाज्ञानवादिनां मतम्। ततस्तदेतत् ( ४२५–३ ) इत्यारभ्य तदनन्यत्वं जगत इति ( ४३२–७ ) इत्यन्तं शंकराचार्यानुयायिनां ब्रह्माज्ञानवादिनां मतम्। ततो निर्विशेष ( ४३२–८ ) इत्यारभ्य ब्रह्मणोन्यदेव ( ४३९–५ ) इत्यन्तं पुनः काणादमतम्। तदुत्तरं ( ४३९–६ ) सिद्धान्तिनां रामानुजानां मतमिति बोध्यम्।

४१९–१७ **सत्यामेवेति**। कार्यकारणयोरनन्यत्वे तु मृदः सत्त्वे तद्रूपघटस्यापि सत्त्वेन घटनाशव्यवहारो न स्यात्।

—१९ शङ्कते—**सत्यपीति**। उत्पत्तेः पूर्वं घटरूपकार्यस्य सत्त्वेपि तेन घटेन जलाहरणादि कार्यं न भवति तदर्थं चक्रभ्रमणादिरूपः कारकव्यापार आवश्यक इति चेद्धटनाशपर्यन्तं स व्यापार आवश्यकः स्यात्। तावत्कालपर्यन्तं घटेन जलाहरणादिकार्यनिष्पादनात्। यतश्च तावत्कालपर्यन्तं स व्यापारो लोके न दृश्यते ततः स व्यापारो जलाहरणादिकार्यार्थ इति वक्तुं न शक्यत इति कारकव्यापारवैयर्थ्यं दुर्निवारमिति भावः।

४२०–४ **विभागश्चोच्यत इति**। यत्सर्वदाभिव्यक्तं तन्नित्यं यन्न तथा तदनित्यमित्युच्यत इति नित्यानित्यविभागोपपत्तिरिति शङ्काशयः।

**अभिव्यक्तेरिति**। उत्पत्तेः पूर्वं सदेव घटादि कार्यं चक्रादिकारकव्यापारादभिव्यज्यत इत्युक्तम्। तत्र या घटादिकार्यस्याभिव्यक्तिः सा किं घटवत्पूर्वं सत्येव चक्रादिकारकव्यापारादभिव्यज्यत उतापूर्वोत्पद्यते। आद्येप्यभिव्यक्तिरभिव्यज्यत इत्यत्राभिव्यक्तिपदवाच्याभिव्यक्त्यपेक्षयाभिव्यज्यत इति क्रियापदवाच्याभिव्यक्तिर्भिन्नाथ वैकैव। आद्ये प्रथमाभिव्यक्तेर्यथा द्वितीयाभिव्यक्तिस्तथा तस्या अपि तृतीयाभिव्यक्तिस्तस्या अपि चतुर्थीत्येवमनवस्था। एकैवाभिव्यक्तिश्चेत्सा सर्वदा भाव्येव। अभिव्यक्तिरपूर्वोत्पद्यते चेदसत्कार्यवाद इति बोध्यम्।

—११ **न चेति**। घटार्थिभिर्मृदाद्येवोपादीयते न तन्त्वादि। पटार्थिभिश्च तन्त्वाद्येवोपादीयते न मृदादि। एष नियमो लोके दृश्यते। नह्येतत्पत्तेः पूर्वं घटस्य मृदि सत्त्वं पटस्य च तन्तुषु। असत्कार्यवादे तु घटस्योत्पत्तेः पूर्वं मृदि तन्तुषु चासत्त्वं समानमेवेत्युक्तनियमो न सिध्यति।

—१२ **कारणशक्तीति**। मृदि तन्तुषु च घटस्यासत्त्वे समानेपि घटोत्पादनशक्तेर्मृद्येव सत्त्वेन घटार्थिभिर्मृदादेरेवोपादानात्। अथ घटोत्पादनशक्तेर्मृद्येव सत्त्वमित्यत्र किं प्रमाणमिति चेत्सत्कार्यवादिनो भवतोप्युत्पत्तेः पूर्वं घटस्य मृद्येव सत्त्वं न तन्तुष्वित्यत्र किं प्रमाणम्। घटसद्भावयोग्यता मृद एवेति चेद्धटोत्पादनयोग्यतापि मृद एवेत्यङ्गीकारे बाधकाभावः।

४२०–१५ अन्यत्वाविशेषादिति । यदि घटभिन्नेषु मृदादिषु कारकव्यापारेण घट उत्पद्यते तर्हि घटभिन्नेषु तन्त्वादिष्वपि कारकव्यापारेण कुतो घटो नोत्पद्यत इत्याशयः ।

—१७ उत्पत्तिसिद्धेरिति । तथा चासत्कार्यवादसिद्धिः । अनन्यत्वप्रतिपादकश्रुतयस्तु गौणतया कथंचिन्नेया इति वैशेषिकाभिप्रायः ।

—१८ अस्मिन्वैशेषिकमते शंकराचार्यानुयायिनां जीवाज्ञानवादिनां मतेनोत्तरमाह–अत्राहुरित्यादिना तद्धेतुरन्वेषणीय इति ( ४२५–२ ) इत्यन्तेन ।

—२१–३ उपलभ्यमानादिति । अनुवर्तमानादित्यर्थः । अनेनानुवर्तमानस्य सत्यत्वं व्यावर्तमानस्यासत्यत्वं च सूचितम् । तच्च प्राक् ( श्रीभाष्य–पृ.२३ प. ८ ) उक्तम् । अहंकारादीति । आदिशब्देन ज्ञेयमुच्यते ( श्रु. ) ।

४२१–१२ अनिर्वचनीयमिति । यदि घटादि कार्यं सत्स्याच्चेत्तस्य विनाशो न स्यात् । असत्स्याच्चेत्तस्योपलब्धिर्न स्यात् । अतः सदसद्भ्यामनिर्वचनीयमिति गम्यत इति भावः ।

—१३ तस्य चेति । शुक्तिरजतस्येत्यर्थः । शुक्तिरजतं हि प्रतीयते बाधितं च भवतीत्यनिर्वचनीयत्वं तस्य सिद्धं भवतीत्यर्थः ।

—१५ किं चेति । अनेन ग्रन्थेन कार्यस्य दुर्निरूपतां प्रदर्श्य तस्य सत्यत्वाभावः प्रतिपाद्यते ।

—१७ नापीति । विशेषान्तरमापन्नं विकारयुक्तम् । तथा च मृदादि कारण द्रव्यं विकारयुक्तं सद्घटादि कार्यं जनयतीति फलितम् । तत्र च विकारः कार्यमेवेति तादृशविकारस्य कारणीभूतं मृदादि द्रव्यमविकृतमेव तं विकारं जनयेदित्युक्तौ सर्वदा तदुत्पादकत्वप्रसङ्गः । विशेषान्तरमापन्नस्यैव कारणस्य कार्योत्पादकत्वमित्युक्तौ तु पुनरन्येन विकारेण युक्तं सदेव तं विकारं जनयेत् । तादृशस्यान्यविकारस्यापि कारणं तदेव मृदादि द्रव्यमिति पुनस्तत्रापि पूर्ववद्विकल्पेनवस्था स्यादिति भावः ।

—१९ शङ्कते–अविकृतमेवेति ।

४२२–१ देशादीनि । अविकृतमेव मृदादि कारणद्रव्यं देशविशेषेण कालविशेषेण निमित्तविशेषेण च संबद्धं सद्घटादि कार्यमुत्पादयतीति चेत्स देशादिभिर्जायमानः संबन्धो मृदादिकारणद्रव्यस्याविकृतस्य भवति विकृतस्य वा । आद्ये सर्वदा देशादिसमवधानं स्यात् । विकृतस्य चेत्पूर्वोक्तानवस्थाप्रसङ्गस्तदवस्थ एव ।

—२ न च वाच्यमित्यादिरवद्याश्रयणीयेतीत्येतत्पर्यन्तः शङ्काग्रन्थः । यथा शुक्तिकायां प्रतीयमानमपि रजतमन्यस्मिन्काले नेदं रजतमिति बाध्यते

यथा वा तमोबहुले देशे प्रतीयमानमपि प्रकाशयुक्ते देशान्तरे बाध्यते तथा घटादि कार्यं मृदादिभ्यो नोत्पन्नमिति बाधो देशान्तरेऽपि कालान्तरेऽपि न दृश्यत इत्याशयः ।

४२२–६ **किं हेमादीति** । किं द्रव्यमात्रं कारणमुताकारमात्रमुताकारविशिष्टं द्रव्यमिति प्रकारत्रयं बोध्यम् ।

—१९ **काल्पनिकेति** । एतेन कृत्स्नस्य जगतो मिथ्यात्वे तदन्तर्गतस्य मृदादेरपि मिथ्यात्वान्मृत्तिकेत्येव सत्यमिति सत्यत्वप्रतिपादकश्रुतिविरोध इत्यपास्तम् । मृदादिसत्यत्वे तच्छ्रुतेस्तात्पर्याभावात् ।

४२३–१० **सन्मात्रेति** । प्रागुपपादितमेतत् ( श्रीभाष्य-पृ. २२ प. १) ।

—११ **असंभावितेति** । प्रत्यक्षापेक्षया शास्त्रस्य बलीयस्त्वे हेतुचतुष्टयमसंभावितदोषत्वं चरमभावित्वं निराकाङ्क्षत्वं निरवकाशत्वं चेति । तत्र भेदवासनामूलत्वं संभावितदोषत्वम् । तच्च द्वैतग्राहिणः प्रत्यक्षस्य संभवति । तस्याविद्यारूपदोषमूलत्वात् । तदभावोऽसंभावितदोषत्वं शास्त्रस्य । चरमभावित्वं चापच्छेदन्यायाभिप्रायेणोक्तम् । तन्न्यायस्वरूपं प्रागुक्तम् ( विवृति-पृ. २३ प. २६ ) । तथा यद्यपि शास्त्रं स्वघटकशब्दस्वरूपग्रहणे तदर्थग्रहणे च प्रत्यक्षाद्यपेक्षम् । प्रत्यक्षादिभिः शब्दज्ञाने तदर्थज्ञाने च सत्येव शास्त्रजन्यज्ञानोत्पत्तेः । तथापि प्रमितौ निराकाङ्क्षमेव शास्त्रम् । प्रमितिरर्थनिश्चायकत्वम् । यथा स्मृतिः प्रत्यक्षादिप्रमाणविषयीभूतमेवार्थं दर्शयतीति तस्याः प्रमाणान्तरसापेक्षत्वं तथा शास्त्रस्य तत्त्वाभावात् । शास्त्रं हि प्रमाणान्तरविषयीभूतमेवार्थं दर्शयतीति नियमे मानाभावादिति । निरवकाशत्वं च स्पष्टमेव ।

४२४–१० **पुनः शङ्कते–कस्येति** । कस्येत्यादिर्जीवाश्रया च कल्पनेतीत्यन्तः शङ्काग्रन्थः ।

—१४ **किं चेति** । निगरणं भक्षणम् । वेषः स्वरूपम् । अवस्तुभूताऽपरमार्थभूता । अनवक्लृप्तिरसिद्धिः । प्रासादभक्षणं केनापि कर्तुं न शक्यत इति यथा प्रासादभक्षणादेरनुपपन्नत्वं तथानुपपन्नत्वमेवैकं स्वरूपं यस्यास्तादृश्यपरमार्थभूता याऽविद्या तस्यामन्योन्याश्रयादिदोषाणां सत्त्वेऽपि न ते दोषास्तस्या असिद्धिं साधयन्ति । अविद्यातोऽन्यत्र ह्यनुपपद्यमानत्वमवस्तुभूतत्वं च पदार्थसिद्धेः प्रतिबन्धकम् । अविद्यायां तु न तथा । प्रत्युत साधकमेव । अविद्याया अनुपपद्यमानतैकस्वरूपत्वादवस्तुभूतत्वाच्च ।

—१८ **अशुद्धिसंभवादिति** । अत्र चाशुद्धिरविद्यासंबन्धयोग्यत्वम् । तेन चाविद्याश्रयत्वं जीवस्योपपद्यत इति जन्मजरामरणादेः काल्पनिकत्वोपपत्तिरित्यर्थः ।

४२५-३ इदं जीवाज्ञानवादिमतं ब्रह्माज्ञानवादिमतेन दूषयति—तदेतदितीत्यादिना जगत इति (४३२-७) इत्यन्तेन।

—४ जीवस्येति। किं जीवस्य यत्स्वाभाविकं रूपं सोऽविद्याश्रय उत तादृशे रूपे यः कल्पित आकारः सोऽविद्याश्रयोथ वा तादृशकल्पिताकारविशिष्टं यत्स्वाभाविकं रूपं सोऽविद्याश्रय इति प्रकारत्रयं क्रमेण दूषितमत्र ग्रन्थ इति बोध्यम्।

—६ जडस्येति। ब्रह्म चिद्रूपं तत्र कल्पितं तु जडमेवेति कल्पिताकारस्य जडत्वं बोध्यम्।

४२६-२ अनभ्युपगमादिति। अद्वैतहानिप्रसङ्गेनानभ्युपगमादित्यर्थः।

—४ मदीयं मार्गमिति। ब्रह्माज्ञानवादमित्यर्थः।

—६ विस्मरसीति। जीवभेदकल्पकाविद्या जीवकल्पनात्प्रागेव न जीवानाश्रयितुं क्षमा जीवासिद्धेरित्यर्थः (श्रु.)।

—९ बीजाङ्कुरेषु हीति। तत्र हि बीजं यद्यप्यङ्कुरादेवोत्पन्नं तथापि तत्स्वोत्पाद्याङ्कुरापेक्षयान्यस्मादङ्कुरात्समुत्पन्नम्। अङ्कुरोपि स्वोत्पाद्यबीजापेक्षयान्यस्माद्बीजात्समुत्पन्न इति न दोषः। अत्र तु जीवः स्वाश्रिताविद्ययैव कल्पितो न तदन्यया। तथाऽविद्यापि स्वकल्पितजीवमेवाश्रिता न तदन्यमिति दोष एवेत्याशयः।

—११ अशङ्कनीयतेति। बीजाङ्कुरन्यायस्येति शेषः। तेन न्यायेन समाधानं न शङ्कनीयमिति भावः। अशकनीयतेति पाठेऽविद्याया जीवभेदस्य च साधयितुमशक्यतेत्यर्थः।

—१२-४ पूर्वपूर्वेति। यथैकस्माद्बीजादुत्पन्नोङ्कुरोन्यद्बीजं समुत्पादयति तच्च बीजमन्यमङ्कुरं समुत्पादयति तथैवात्रैकं जीवमाश्रिताविद्याऽपरं जीवं कल्पयति स च जीवोन्यस्या अविद्याया आश्रयो भवतीति न दोष इत्याशयः। इयं धर्मिणो जीवस्य कल्पना। कृतप्रहाणादीति। आदिशब्देन जीवनित्यत्वप्रतिपादकश्रुतिविरोधसंग्रहः।

—१५ जीवकल्पनमिति। ब्रह्मण एव जीवत्वरूपधर्मकल्पनमित्यर्थः। जीवशब्दो भावप्रधानः। क्वचिज्जीवभावकल्पनमित्येव पाठः।

४२७-२ मुक्तानिति। मुक्तानां शुद्धानामशुद्धाविद्याश्रयत्वमनुपपन्नमिति नु न वाच्यम्। अविद्याया अनुपपन्नतैकस्वरूपत्वात्।

—४ उक्ताभिः। अन्योन्याश्रयादिमूलिकाभिः।

४२८-३ किं चेति। अयं जीव इत्यविद्याकल्पितो यो भ्रमस्तदाश्रयः क इत्यर्थः।

४२८-४ आत्माश्रयेति। स्वविषयभ्रमः स्वस्यैव भवितुं नार्हति। यतो जीवविषयभ्रमाश्रये सिद्धे हि जीवकल्पना न तु ततः प्रागित्याशयः।

—६ ब्रह्माज्ञानमेवेति। तच्च तव नेष्टम्। त्वन्मते जीवस्यैवाज्ञानाश्रयत्वात्। ब्रह्मविषयकं जीवनिष्ठं यदज्ञानं तज्जीवाज्ञानम्। ब्रह्मविषयकं ब्रह्मनिष्ठं यदज्ञानं तद्ब्रह्माज्ञानम्।

किं चेति। तवानिष्टमपि ब्रह्माज्ञानं तव गले पतितमेव स्यादित्याशयः।

—९ अनाद्यविद्यामिति। जीवभावस्यापरमार्थत्वेन तत्प्रतीतेरविद्यां विना दुर्लभत्वात्।

१०—अत एवेति। तवानिष्टस्यापि ब्रह्मण्यविद्यासंबन्धस्य तव गले पतितत्वादेवेत्यर्थः। परभ्रमहेतुर्माया स्वभ्रमहेतुरविद्येति हि मायाऽविद्ययोर्भेदः। तत्रेश्वरवृत्तिर्माया जीवानां भ्रमं जनयति। अविद्या तु जीववृत्तिर्जीवानामेव भ्रमं जनयति। अविद्यैव चाज्ञानशब्देनोच्यत इति हि त्वन्मतम्। परं तूक्तप्रकारेणापरमार्थजीवप्रतीतिरूपो यो ब्रह्मवृत्तिर्भ्रमस्तदुपपत्तये ब्रह्मणोऽप्यविद्यासंबन्धस्यावश्यकत्वेन मायाऽविद्याप्रविभागो निरर्थक एवेति भावः।

४२९-३ अविद्यात्वादिति। शङ्कोक्तरीत्या त्वस्या मायात्वापत्तिः। मिथ्याभूतस्य चन्द्रद्वयस्य मिथ्यात्वेन दर्शनात्।

—६ अपुरुषार्थेति। अपुरुषार्थभूतं यदपरमार्थदर्शनं तद्धेतुरित्यर्थः।

—९ प्रयस्यन्तीति। लोका इति शेषः। यतो लोकानां द्विचन्द्रज्ञानहेतुनिरासे प्रयासो दृश्यते ततः स हेतुरविद्यैव न माया। न हि मायानिरसनाय मायाविनां प्रयासो दृश्यते।

—११ द्वैतदर्शनमिति। ब्रह्म तन्माया चेति द्वैतं स्यादिति भावः।

—१६ तद्वत्तेति। मायासंबन्ध इत्यर्थः।

४३०-६ पूर्ववदेवेति। अन्योन्याश्रयादिभिर्दूषणैरित्यर्थः। तथा च मायाऽविद्ययोराश्रयविभागानुपपत्तिरित्याशयः।

४३१-३ द्वैतवादिनापीति। काणादपक्षेऽप्ययं दोष इत्याशयः।

—५ काणादः शङ्कते—अनन्तत्वादिति।

—८ पुनः शङ्कते—आत्मनामिति। विद्यमानस्य वस्तुनो ज्ञानाभाव एवासर्वज्ञत्वम्। न हि शशशृङ्गादेरज्ञानेन सर्वज्ञत्वहानिर्भवतीत्याशयः।

—१५ वस्त्वन्तरभाव इति। वस्त्वन्तरसत्तेत्यर्थः। यथा घटस्य वस्तुतः परिच्छेदो नाम घटाद्भिन्नस्य वस्तुनः पटादेः सत्त्वम्। तद्वदेवात्र ब्रह्मणः सकाशाद्भिन्नस्य जीवरूपवस्तुनः सत्त्वाद्ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं वक्तुं न शक्यत इति भावः।

४३१–१६ **वस्त्वन्तरादिति** । अत्रायं प्रयोगः । ब्रह्म देशतः कालतश्च परिच्छिन्नं वस्तुतः परिच्छिन्नत्वाद्धटादिवदिति ।

४३२–८ **अत्रोच्यत इति** । काणादेनेति शेषः ।

—९–११ **निरंशस्येति** । एतेन ब्रह्मणि यः प्रकाशांशस्तस्याविद्यया तिरोधानेपीतरांशस्य सत्त्वान्न स्वरूपनाशप्रसङ्ग इत्यपास्तम् । **स्ववचनविरुद्धमिति** । ब्रह्मणो निर्विशेषत्वं तैरुक्तम् । तच्च तदुक्तेनैव नित्यत्वादिसाधकवचनेन सह विरुद्धम् । विशेषरहिते ब्रह्मणि नित्यत्वरूपस्य विशेषस्य नित्यत्वसाधकधर्मरूपाणां च विशेषाणामसंभवात् ।

—१६ **पूर्वमेवेति** । अथातो ब्रह्मजिज्ञासेति प्रथमसूत्र एवेत्यर्थः ( श्रीभाष्य–पृ. ३३ प. ६ ) ।

—१८ **उपलब्धीति** । यस्य वस्तुन एकक्षणपर्यन्तमपि सत्ता नास्ति तन्मिथ्या । यस्य तु वस्तुनः सत्ता वर्तते परं तु सर्वदा नास्ति तदनित्यम् । तथा च यद्वस्तूपलभ्यते विनश्यति च तस्य सर्वदा सत्ताया अभावेनानित्यत्वेपि न मिथ्यात्वम् । उपलब्धिवेलायां सत्तायाः सत्वेनैकक्षणपर्यन्तमपि सत्ता नास्तीति वक्तुमशक्यत्वात् ।

४३३–१ **देशकालादीति** । यस्य घटादेर्योग्यो यो देशः कालो ज्ञाता च तस्य घटादेस्तस्मिन्देशे तस्मिन्काले तादृशज्ञातृदृष्ट्या बाधो नास्तीति भावः ।

४३४–७ **सौभरीति** । एतेनात्मैक्येपि शरीरभेदेन तत्तच्छरीरप्रयुक्तसुखाद्यनुसंधानं तत्तच्छरीर एवेत्यभ्युपगमान्न पूर्वोक्तदोष इति निरस्तम् । सौभरिप्रभृतिषु शरीरान्तरप्रयुक्तसुखाद्यनुसंधानस्य शरीरान्तरेपि दर्शनात् । अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः ( पा. यो. सू. २।३९ ) इति सूत्रोक्तरीत्या जन्मान्तरीयसुखाद्यनुसंधानवन्तो योगिनोत्र प्रभृतिशब्देन ग्राह्याः ।

—९ **न चाहमर्थस्येति** । अहमर्थोन्तःकरणम् । तस्यैव ज्ञातृत्वं प्रागुक्तं ( श्रीभाष्य—पृ. २६ ) महापूर्वपक्षे । तस्य च प्रतिशरीरं भिन्नत्वादात्मैक्येपि न शरीरान्तरे शरीरान्तरप्रयुक्तसुखाद्यनुसंधानम् । सौभरिप्रभृतिषु त्वन्तःकरणस्यैक्यात्तथानुसंधानं युक्तमेवेति शङ्काशयः ।

—१० **आत्मेति** । आत्मन एव ज्ञातृत्वं नान्तःकरणस्येत्युत्तराशयः । इदं प्रागुक्तम् ( श्रीभाष्य–पृ. ४० प. १३ ) ।

—१५ **सत्यत्वोपपादनादिति** । एतेन बन्धमोक्षव्यवस्था इति (श्रीभाष्य–पृ. ४३० प. १७ ) प्रागुक्तानुमानमपि निरस्तं भवति । अपारमार्थिकत्वहेतोरसिद्धेरिति द्रष्टव्यम् ।

४३४-१९ **अहंत्वमाद्यर्थविलक्षणमिति**। तथा च शरीरान्तराण्यपीत्याद्युक्तानुमानत्रये (श्रीभाष्य-पृ. ४३० प. १९) मयैवात्मवन्ति मदविद्याकल्पितान्यहमेवेत्येवमात्मनोस्मच्छब्दबोध्यत्वोक्तिर्न संभवति । आत्मनोहमर्थविलक्षणत्वादिति भावः ।

—२२ **निष्फल इति** । मोक्षार्थप्रयत्नस्याविद्याकार्यत्वेन मिथ्यात्वात्तस्मान्मोक्षरूपसत्यफलसिद्धेर्वक्तुमशक्यत्वात् ।

४३५-१९ **न चातादृशस्येति** । निर्विशेषत्वात्कर्तृकर्मरहितस्येत्यर्थः । तादृशस्येति पाठेयमर्थः—तादृशस्य कर्तृकर्मसहितो यः प्रकाशते तस्य निर्विशेषत्वेभिमते स्वप्रकाशता न सिध्यतीति (श्रु.) ।

४३६-२ **सोपि तानीति** । एकं ब्रह्मैव परमार्थसत् । तस्य च कार्यत्वमेव नास्ति । तद्व्यतिरिक्तं च सर्वं मिथ्यैव । तथा च तेषां (शंकराचार्यानुयायिनां) नये परमार्थसत्कार्यं किमपि न दृश्यत इत्यपरमार्थादपि परमार्थकार्यं दृश्यत इत्युद्घोषो न संभवतीत्याशयः ।

—१६ **परत्वादिति** । निषेधस्य विधिपूर्वकत्वेन विध्यपेक्षया निषेधस्य परत्वात्सर्वस्मात्परत्वमर्थसिद्धमिति भावः ।

४३७-१३ **संरम्भादिति** । संरम्भ आग्रहः । पक्षपात इति यावत् । स्वमतपक्षपात एव विशेषो नान्य इत्याशयः ।

—१७ **घटादीनामपीति** । सर्वस्यां पृथिव्यां वर्तमाना भूता भाविनश्च घटा अमुकसंख्याका इति ज्ञातुं न शक्यत इति घटादीनामपि संख्यावत्त्वाभावः । तथा च दृष्टान्ते घटे संख्यावत्त्वरूपं साध्यं नास्ति । या च दश घटा इत्येवं संख्या दृश्यते सा न सर्वदेशस्थितसार्वकालिकघटस्वरूपगता । अपि त्वेकदेशस्थितकिंचित्कालिकघटगता । तादृशी त्वात्मस्वस्माभिरपीष्यत एवेत्यन्यत् ।

—१९ **देशकालादीति** । आदिना कर्तृसंग्रहः । कर्तृरूपोपाधिनापि संख्या दृश्यते । यथानेन दश घटाः कृता इति ।

४३८-४ **तदयुक्तमिति** । यथात्मानो जडाः परस्परभिन्नत्वाद्घटवदित्युच्यते तथा पटा घटत्ववन्तः परस्परं भिन्नत्वाद्घटवदित्यपि वक्तुं शक्यते । तत्तु त्वयापि नेष्यते । तथा चानुकूलतर्कपराहतोयं हेतुर्न साध्यं साधयितुं क्षमत इत्यवश्यमङ्गीकर्तव्यमिति भावः ।

—८ **वस्तुतः परिच्छिन्नानामपीति** । ब्रह्म देशकालपरिच्छिन्नं वस्तुतः परिच्छिन्नत्वादित्यनुमानेन ब्रह्मणि देशकालपरिच्छेदमापादयतस्तव वस्तुतः परिच्छेदो देशपरिच्छेदस्य कालपरिच्छेदस्य च प्रयोजक इत्यभिमतम् । परं तु देश-

कालपरिच्छेदेयत्तायास्तु न वस्तुनः परिच्छेदः प्रयोजको भवति । अन्यथा वस्तुतः परिच्छिन्ने घटे या देशकालपरिच्छेदयोरियत्ता सैवान्यत्र वस्तुतः परिच्छिन्ने ग्रामादावपि दृश्येत । सा तु न दृश्यते । तथा च यदि देशकालपरिच्छेदेयत्तायाः प्रमाणान्तरेणैव निर्णयः कार्यस्तर्हि देशकालपरिच्छेदयोरपि प्रमाणान्तरेणैव निर्णयः कार्यो न वस्तुतः परिच्छेदेनेति वस्तुतः परिच्छिन्नेपि ब्रह्मणि श्रुत्यादिप्रमाणान्तरेण सिद्धो देशकालपरिच्छेदाभावो न विरुद्ध इति भावः ।

४३८–११–३ शङ्कते–**वस्तुतः परिच्छेदमात्रादपीति** । तथा च प्रयोगः। ब्रह्म नानन्तं त्रिविधपरिच्छेदरहितत्वाभावात् । काणादमते ब्रह्मणि देशकालपरिच्छेदरहितत्वेपि वस्तुतः परिच्छेदसत्त्वेन त्रिविधपरिच्छेदरहितत्वाभावः सिद्ध इति शङ्काशयः। **तद्भवत इति** । शंकराचार्यानुयायिमतेपि ब्रह्मण्यविद्याविलक्षणत्वेन वस्तुतः परिच्छेदसत्त्वादनन्तत्वाभावापादनं सममेवेति भावः ।

—१८ **भेदतत्त्वेति** । पुनदनभ्युपगमकारणं प्रागुक्तम् ( श्रीभाष्य–पृ. २२ प. ११ ) ।

—१९ **आनन्त्येति** । अनन्तत्वे हि देशकालपरिच्छेदरहितत्वमेव प्रयोजकं न तु त्रिविधपरिच्छेदरहितत्वम् । तस्यापि वस्तुनस्त्रिविधपरिच्छेदरहितत्वाभावात् । तथा च काणादमते ब्रह्मण्यानन्त्यं सिध्यतीति भावः ।

४३९–२ **भेदवादिन इति** । तथा च रामानुजमते त्रिविधपरिच्छेदरहितत्वमनन्तत्वप्रयोजकमिति भावः ।

—१७ **स्तब्धोसीति** । कृतविद्यं गुरुकुलात्प्रत्यागतं श्वेतकेतुं प्रति तत्पितुर्वचनम् । हे श्वेतकेतो त्वं स्तब्धोस्यप्रणतस्वभावोसि येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति तादृशमादेशं स्वगुरुं प्रति पृष्टवानसि किमित्यर्थः ।

—२३ **अन्यज्ञानासंभवमिति** । चोदित इत्यस्यैतन्मुख्यं कर्म । अन्यस्य ज्ञानेनान्यस्य ज्ञानं कथं संभवतीति प्रश्नः । गुरुरूपे गौणे कर्मणि चोदित इति निष्ठाप्रत्ययः ।

४४०–८ **स्पृश्यत इति** । प्राप्यत इति फलितोर्थः । घटरूपो विकारो घट इति नामधेयं च मृद्द्रव्येण प्राप्यते । अतो विकारनाम्नोरुभयोरप्यारम्भणत्वम् ।

—१२ **संस्थानविशेष इति** । अवयवरचनाविशेष इत्यर्थः ।

—१६ **अतस्तस्यैवेति** । एतेन काणादेन प्रागुक्ताः ( श्रीभाष्य–पृ. ४१९ प. १० ) कार्यकारणभेदहेतवो विलक्षणबुद्धिबोध्यत्वशब्दभेदकार्यभेदकालभेदाकारभेदा निरस्ताः ।

४४१-२ तदुत्पत्तीति । घटोत्पत्तिर्घटनाशश्च मृत्तिकाया एवावस्थाविशेष इति भावः ।

—५ तस्यार्थवत्त्वमिति । एतेन काणादोक्तं ( श्रीभाष्य-पृ. ४१९ प. १८ ) कारकव्यापारवैयर्थ्यं निरस्तम् ।

अभिव्यक्तीति । सत्कार्यवादिना हि कारकव्यापारेण घटस्य नोत्पत्तिः किं त्वभिव्यक्तिरित्यवश्यमङ्गीकर्तव्यमिति प्रकल्प्य काणादैरनवस्थादीनि चोद्यानि यानि प्रागुक्तानि ( श्रीभाष्य-पृ. ४२० प. ४ ) तानि सर्वाणि परिहृतान्येव । सत्कार्यवादेऽप्यभिव्यक्तेरनभ्युपगमात् ।

—११ द्रव्यस्य सत्त्वादिति । तथा च प्राक्सदेव द्रव्यं कारकव्यापारेणावस्थान्तरभाग्भवतीत्येतावन्मात्रेणैव सत्कार्यवादव्यवहारः । न तु यद्यत्कार्यं तत्तत्सदेवेति नियमः । पृथुबुध्नोदराकाररूपस्यावस्थान्तरस्य प्रागसत एव कारकव्यापारेणोत्पत्तेः ।

—१२ शङ्कते-संस्थानस्येति । संस्थानमाकारविशेषः । प्रतिबन्द्योत्तरयति-असत्कार्येति । तथा च जात्युत्तरत्वान्नेदं केनापि कस्यापि चोद्यम् । ननु स्वस्य स्वविषयकः प्रश्नः कुतश्चेज्जात्युत्तरत्वम् । यथोत्पत्तेरुत्पत्तिविषये । अवस्थाया उत्पत्तिविषयकः प्रश्नस्तु न तादृश इति चेन्न । सिद्धान्तिमतेऽवस्थाया उत्पत्तिरूपत्वात् । अवस्थैव वस्तुन उत्पत्तिर्न त्ववस्थाया उत्पत्तिर्नामास्ति ।

—१४ पृथक्प्रतिपत्तीति । यथा दण्ड्यपेक्षया दण्डस्य पृथक्प्रतिपत्तिर्भवति पृथक्कार्ययोगश्च भवति तद्वदपृथक्सिद्धधर्माणां धर्म्यपेक्षया पृथक्प्रतिपत्तिः पृथक्कार्ययोगश्च न भवति । अत एव च तेषां पृथगुत्पत्तिनिरपेक्षत्वम् । तथा च स्वाश्रयापेक्षयापृथक्सिद्धानामवस्थानां पृथक्प्रतिपत्तिकार्यानर्हत्वेन पृथगुत्पत्तिनिरपेक्षत्वान्न चोद्यस्यावकाश इत्याहुः ।

—१५-६ कपालत्वेति । एतेन काणादैः प्रागुक्तः ( श्रीभाष्य-पृ. ४१९ प. १७ ) संख्याभेदो निरस्तः ।

—२० अधिष्ठात्रन्तरेति । तथा च श्रुतिस्थमद्वितीयपदमधिष्ठात्रन्तरं वारयतीति भावः । एतेनाद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते ( श्रीभाष्य-पृ. २१ प. २ ) इत्यपास्तम् ।

४४२-१२ स्वात्मकेति । स्वं परमात्मात्मा यस्य स स्वात्मकः । एवंभूतो यो जीवस्तस्य तेजोबन्नरूपासु तिसृषु देवतास्वनुप्रवेशेनेत्यर्थः ।

४४३-३ पूर्वोक्ताशङ्केति । इदंशब्दसामानाधिकरण्येन ब्रह्मणि जगद्गतदोषाशङ्केत्यर्थः ( श्रु. ) ।

४४४-१५ ये त्विति । शंकराचार्यानुयायिनो ब्रह्माज्ञानवादिन इत्यर्थः ।

—१९ ये चेति । भास्करमतानुयायिन इत्यर्थः ।

४४५-४ व्याकुप्येयुरिति । ब्रह्मण एवोपाधिसंबन्धेन जीवत्वाङ्गीकारे जीवगतं कर्मवश्यत्वं ब्रह्मणि स्यात् । ब्रह्मगतापहतपाप्मत्वं च जीवे स्यात् । तथा च जीवस्यैव कर्मवश्यत्वं ब्रह्मण एवापहतपाप्मत्वमिति व्यवस्था न सिध्यति । एवमचितः परिणामो ब्रह्मणस्त्वपरिणाम इति व्यवस्था च न सिध्यति । अचिद्ब्रह्मणोरनन्यत्वस्यापि स्वाभाविकत्वेन ब्रह्मण एव हेयाकारपरिणामादित्याशयः ।

—६ ये पुनरिति । यादवप्रकाशमतानुयायिन इत्यर्थः । विप्लवो विकारः ।

४४६-१ सदैव सर्वज्ञमिति । यः सर्वज्ञः सर्वविदित्यादिश्रुतयो हि जगत्कारणस्य ब्रह्मणः कारणावस्थायामपि सर्वज्ञत्वादिगुणान्प्रतिपादयन्ति । तथा च सन्मात्रद्रव्यमेव कारणमित्याद्युक्तिर्विरुद्धेति भावः । ननु नेश्वरः कारणम् । किं तु यस्येश्वरोऽप्यंशभूतस्तादृशमीश्वरादपि यत्परं तत्त्वं सन्मात्ररूपं तत्कारणमिति चेन्न । सदेवेत्यादिश्रुतिभिः सोऽभिध्यायेति स्मृत्या नारायणो जगन्मूर्तिरित्यादीतिहासपुराणैश्च परमपुरुषस्यैव कारणत्वेन प्रतिपादनात् ।

४४७-११ न्यायविरोधमाह—न चेश्वर इति । यादवप्रकाशीयैरीश्वरस्य सन्मात्रद्रव्यांशभूतत्वाभ्युपगमान्नियन्तृत्वरूपविशेषवत्त्वाच्च कारणभूतेश्वरस्य सन्मात्रत्वं न्यायविरुद्धमिति भावः ।

—१३ कादाचित्क इति । तथा चोक्तगुणविशिष्टस्येश्वरस्यैव कदाचिद्गुणयोगाभावे निर्विशेषसन्मात्रत्वं स्यादिति शङ्काशयः ।

—१५ शङ्कते—परास्येति । ज्ञानबलक्रिया चेत्यत्र ज्ञानादिशब्दा लक्षणया तत्तच्छक्तिपरा इति परास्य शक्तिरित्यनेन ज्ञानबलक्रिया चेत्यनेन च ज्ञानादिशक्तेरेव स्वाभाविकत्वमुच्यते न तु ज्ञानादीनामिति ते कादाचित्का एवेति शङ्काशयः ।

—२० पाचकादिवदिति । यथा सांप्रतं पचनकर्तृत्वाभावेऽपि पचनशक्तिमत्त्वाभिप्रायेणायं पाचक इति प्रयुज्यते तत्र पाचक इत्यस्य पचनशक्तिमानित्यर्थो न तु पचनकर्तेति ण्वुल्प्रत्ययस्य शक्तयर्थत्वं तथा सर्वज्ञ इत्यत्रापि कप्रत्ययस्य शक्तयर्थत्वेन ज्ञानशक्तिमत्त्वमित्यर्थः स्यादिति लक्षणा नास्तीति शङ्काशयः ।

—२२ इत्यादिष्विति । आदिशब्देन शकि लिङ्च (पा. सू. ३।३।१७२) इत्यस्य संग्रहः ।

४४८-७ शङ्कते—स्वांशेष्विति ।

—१४ क्रियादिष्विति । काशस्य कुशत्वेन कुशस्थाने काशावलम्बनं काशकुशावलम्बनम् । तच्च न मुख्यम् । तद्वदत्र क्रियाया अमुख्यसत्त्वाभ्युपगमेऽपि सर्वत्रैकरूपं सत्त्वं नोपपद्यत इत्यर्थः ॥ १५ ॥

४४८–२० **मृद्धटादिष्विति** । तत्र घटादयः किं बालयुवादिवन्मृद एवावस्थाभेदा अथ वा मृदपेक्षया पटादिवद्द्रव्यान्तराण्येवेति संशय इति भावः ।

४४९–६ **द्रव्यान्तरेति** । घटोत्पत्तेः पूर्वमियं मृदिति तदुत्तरं चायं घट इति बुद्धिर्भिन्ना शब्दश्च भिन्नः । अस्य बुद्धिभेदस्य शब्दभेदस्य च हेतुर्मृदोवस्थान्तरयोग एव । लाघवात् । न तु तत्र घटस्य द्रव्यान्तरत्वं हेतुः । गौरवात् । घटस्य द्रव्यान्तरत्वस्वीकारेपि तादृशद्रव्यान्तरसिद्ध्यर्थं तदसमवायिकारणत्वेन मृदोवस्थान्तरयोगस्यावश्यं स्वीकार्यत्वाद्गौरवं स्पष्टमेव । तेनैवावस्थान्तरयोगेन बुद्ध्यन्तरस्य शब्दान्तरस्य चोपपत्तेस्तदर्थं द्रव्यान्तरकल्पनानुचितैव ।

—७ **न च जातीति** । भिन्नेष्वपि घटेषु घटोयमिति प्रत्यभिज्ञा घटत्वजातिनिबन्धना दृश्यते । तत्र घटव्यक्तिभेद उपलभ्यते । नैवं मृद्घटव्यक्तिभेद उपलभ्यत इतीयं मृदिति प्रत्यभिज्ञा न जातिनिबन्धनेत्यर्थः ।

—११ **द्रव्यान्तरत्वे सतीति** । घटस्याश्रयभूता या मृत्तिका तत्सामानाधिकरण्येन मृदयं घट इति घटप्रतीतिर्यथा त्वयोच्यते तथान्यत्रापि जलस्याश्रयभूतो यो घटस्तत्सामानाधिकरण्येन घट इदं जलमिति जलप्रतीतिर्भाव्या । परं त्वीदृशी क्वापि न दृश्यत इति भावः ।

—१२ शङ्कते- **गोमयादीति** । यथा सिद्धान्तिमते घटस्य मृदवस्थाविशेषत्वादियं मृदिति प्रत्यभिज्ञा तथा वृश्चिके गोमयप्रत्यभिज्ञा कुतो न भवतीति शङ्काशयः ।

—१३ **तत्राप्यादीति** । द्रव्यान्तरवादिनाप्यत्रेदमेव समाधानमवश्यं वक्तव्यम् ।

—१४ शङ्कते- **अग्निकार्य इति** ॥ १६ ॥ १७ ॥

४५०–१८ **सत्त्वासत्त्वे इति** । व्यवहारयोग्यता सत्त्वं विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वमित्युक्तमित्यर्थः ( श्रु. ) ।

४५१–३ **मनस्कारेति** । इदमित्थमिति मनसि कल्पना मनस्कारः । स तुच्छस्य न संभवतीत्यर्थः ।

—९ **तद्विरोधित्वेनेति** । घटोस्तीति व्यवहारविरोधित्वेनेत्यर्थः ।

१०—**न च तद्यतिरिक्त इति** । अभावस्य पदार्थान्तरत्वं मन्यमानेनाप्यनवस्थाभिया घटाभावाभावादेर्घटादिस्वरूपत्वमुक्तम् । तद्वद्घटाभावोपि विरोध्यवस्थास्वरूप एवाभ्युपगन्तव्यः किमतिरिक्ताभावकल्पनया । तथा च घटस्य प्रागभावः प्रध्वंसाभावश्च पिण्डत्वकपालत्वाद्यवस्थास्वरूपः । घटान्योन्याभावश्च पटत्वादिस्वरूपः । घटसंसर्गाभावश्च कालविशेषविशिष्टदेशविशेषत्वमिति बोध्यम् ॥१८॥

४५२–२ व्यतिषङ्गेति । व्यतिषङ्गो मिथः संसर्गः ॥ १९ ॥ २० ॥ ( ६ )

—१० तत्त्वमसीति । तत्त्वमस्ययमात्मा ब्रह्मेत्यादिश्रुतिभिर्यज्जीवब्रह्मणोस्तादात्म्यं प्रतिपाद्यते तन्मनुष्यो जीव इतिवच्छरीरशरीरिभावमूलकमिति सिद्धान्त्याशयः । पूर्वपक्षी त्वेतत्तादात्म्यं स्वरूपैक्यलक्षणं मन्यते ।

४५३–२ अहितकरणादीति । आदिशब्देन सुखदुःखभोक्तृत्वं विवक्षितम् ( श्रु. ) ।

–३–५ शङ्कते–जीवब्रह्मणोरिति । तथा च न मया भेदश्रुतिः परित्यक्तेति जीवब्रह्मणोर्भेदेन हिताकरणादिदोषानवकाश इति शङ्काशयः । तत्रापीति । जीवब्रह्मणोरज्ञानकृतो भेद इति शङ्काकृतोक्तम् । तत्राज्ञानं किं जीवनिष्ठं ब्रह्मनिष्ठं वा । आद्ये पूर्वोक्ता ( श्रीभाष्य–पृ. ४२६ ) विकल्पादिदोषास्तदवस्था एव । अन्त्य आह–ब्रह्माज्ञानपक्ष इति ॥ २१ ॥

४५४–८ सर्वभूतेति । अत्र भूतशब्देन चेतनाचेतनग्रहणात्परमात्मनो जीवान्तरात्मत्वेन जीवादर्थान्तरत्वं सिद्धम् ॥ २२ ॥

—२२ इत्यादिभिरिति । आदिशब्देन न तु दृष्टान्तभावात् (ब्र.सू.२।१।९) उभयेपि हि भेदेनैनमधीयते ( ब्र. सू. १।२।२१ ) इत्यादिसंग्रहः ।

४५५–४ स्वभावासंकर इति । अचिद्वस्तुनः परिणामित्वस्वभावो जीवस्य दुःखित्वस्वभावो ब्रह्मणः कल्याणगुणाकरत्वस्वभाव इत्येवं स्वभावासंकर इत्यर्थः । न च कारणावस्थायां चिदचिद्ब्रह्मणामेकत्वावधारणात्स्वभावसंकरो दुर्वार इति वाच्यम् । तदानीमप्यचिद्युक्तस्य जीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानाद्विभागोस्त्येवेति स्वभावासंकरोपपत्तेः । तदानीं चिदचिद्ब्रह्मणामविभाग इति व्यवहारस्तु नामरूपविभागाभावमात्रमूलक इति बोध्यम् ।

—१२ ये तु पुनरिति । मायावादिन इत्यर्थः । अविद्यावस्थाविशिष्टो जीवः । स एवाविद्यावियुक्तावस्थाविशिष्टो ब्रह्मेति तन्मतम् । इममेव भेदं गृहीत्वाधिकं तु भेदनिर्देशादश्मादिवच्च तदनुपपत्तिरिति सूत्रद्वयं तैर्योजितम् ।

—१३ न हीति । मायावाद्युक्तरीत्या जीवब्रह्मणोरविद्यावत्त्वतद्रहितत्वादिभिर्भेदसिद्धावप्युक्तश्रुतिप्रतिपादितः किंचिज्ज्ञत्वसर्वज्ञत्वादिभिर्भेदो न सिध्येत् । सर्वज्ञत्वसर्वेश्वरत्वादीनामविद्याकल्पितत्वेन ब्रह्मणि वस्तुतः सर्वज्ञत्वाद्यभावात् ।

—१७ न चाविद्येति । ब्रह्मण्यविद्याकल्पितमेव सर्वज्ञत्वादिगुणगणं गृहीत्वा जीवब्रह्मणोर्भेदोत्राधिकरणे प्रतिपाद्यत इति तु न युक्तम् । यतः प्रथमाध्याये जिज्ञास्यतया प्रक्रान्तं ब्रह्मणो रूपं नाविद्याकल्पितं किं तु वास्तविकम् । तदेवात्र द्वितीयाध्याये स्मृतिन्यायविरोधपरिहारेण प्रतिपाद्यते । सिद्धान्ति-

( रामानुज-)मते तु नायं दोषः । तन्मते सर्वज्ञत्वादिगुणानामविद्याकल्पितत्वाभावात् ।

—४५६-२ **अपीताविति** । अपीतावित्यधिकरणमेतदधिकरणशेषभूतम् । अपीतावित्यधिकरणे न जीवब्रह्मणोर्भेदः प्रतिपाद्यते । किं त्वस्मिन्नधिकरणे सिद्धान्तितं भेदं गृहीत्वैव केवलं विलक्षणयोः कार्यकारणभावसंभवः प्रतिपाद्यते । असदिति चेन्नेति तस्मात्पूर्वस्मिन्सूत्रे विलक्षणत्वस्यैव शङ्कासमाधानाभ्यां स्थापितत्वात् ॥ २३ ॥ ( ७ )

४५७-२ **एतावानेवेति** । अशक्तस्य कारककलापापेक्षा न शक्तस्येत्येवं यः शक्ताशक्तयोर्विशेषः सोऽत्रैवशब्देन व्यवच्छिद्यते । न तादृशः शक्ताशक्तयोर्विशेषः । किं तु शक्तः सामग्रीसहितश्चेत्कार्यं कर्तुं शक्नोति । अशक्तस्तु सामग्रीसहितोपि कार्यं कर्तुं न शक्नोतीति ।

—९ **यथा क्षीरेति** । जलं स्वयमेव हिमरूपेण परिणमते । रविकिरणास्तु तदुत्सर्गमात्रहेतवः ( श्रु. ) ।

—१२ **आतञ्चनादीति** । आदिशब्देन क्वाथसंग्रहः । तत्रातञ्चनेन शैत्यं क्वाथेन रसविशेषोत्पत्तिरिति बोध्यम् ॥ २४ ॥ २५ ॥ ( ८ )

४५८-२ **सदेवेति** । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिश्रुतिष्वेकशब्दो ब्रह्मण्यवयवतोपि विभागं न सहत इति ब्रह्मणो निरवयवत्वं सिद्धम् । इदं वा अग्र इति श्रुतौ च न द्यौरासीन्न पृथिवीत्यादिवाक्यशेषेण द्युपृथिव्यादिजगदवयवाभावकथनान्निरवयवत्वं सिद्धम् । आदिशब्दान्निष्कलं निष्क्रियमिति श्रुतिसंग्रहः । निष्कलमित्यस्य निरवयवमित्यर्थः ।

—४ **एकमेव निरवयवमिति** । एकमेवेत्यस्य व्याख्यानं निरवयवमिति ( श्रु. ) ।

—१४ **यद्यपीति** । सूक्ष्मचिदचिद्वस्तुरूपशरीरस्य स्थूलचिदचिद्वस्तुरूपेण परिणामेपि शरीरिणो ब्रह्मणोऽपरिणामान्न कृत्स्नप्रसक्तिरिति शङ्काशयः ॥ २६ ॥

४५९-३ **शब्दमूलत्वादिति** । अग्निना सिञ्चेदित्यादिषु सेचनसाधनतानर्हत्वं धर्मिणोऽग्नेः प्रत्यक्षसिद्धमिति न तद्विरुद्धं सेचनहेतुत्वं वाक्येन प्रतिपाद्यते । प्रमाणान्तरागोचरस्य ब्रह्मरूपधर्मिणस्तु विलक्षणत्वं शास्त्रेणैव प्रतिपाद्यत इति विलक्षणधर्मिणो विलक्षणधर्मयोगो न विरुध्यते ( श्रु. ) ॥ २७ ॥

—५ **तदप्रसक्तिश्चेति** । एतदध्याहारलब्धम् ॥ २८ ॥

४६०-८ **विसजातीयत्वाभावेनेति** । विसजातीयत्वाभावेन विजातीयत्वाभावेन साजात्येनेति यावत् । तथा च लौकिकपरमाण्वादिनिरवयवपदार्थेष्वकृत्स्नप्रधानपरिणामप्रसक्तिरित्यादयो दोषा बोध्याः । अथ वा विशेषतः साजा-

त्याभावेनेत्यर्थः । सामान्यतो द्रव्यत्वादिना साजात्यं च न कार्यकारणभावोपयोगि । तन्तुघटयोरपि तादृशसाजात्यात् । अतः कार्यकारणभावोपयोगि यद्विशेषतः साजात्यं तत्प्रधानस्य लौकिकवस्तुभिर्घटादिभिः सह नास्तीति भावः ।

४६०–१४ अनन्तरे कल्प इति । सत्त्वरजस्तमोभ्यः सकाशात्प्रधानमुत्पद्यत इति पक्ष इत्यर्थः । अस्मिन्पक्षे सत्त्वादीनां जगतो मूलकारणत्वान्मूलकारणं प्रधानमिति तैः स्वीकृतं विरुध्यते । किं च मूलकारणं प्रधानमेकं गृहीत्वा तत्त्वानां पञ्चविंशतिसंख्या तैः प्रतिपादिता ( श्रीभाष्य- पृ. ४६५ प. १५ ) । सत्त्वादीनां मूलकारणत्वे तत्त्वानां सप्तविंशतिसंख्या स्यात् ।

—१७ न स्थूलेति । एकदेशेन संयोगे हि ये सत्त्वादीनामेकदेशाः संयुक्तास्ततोन्य एकदेशाः संयोगेनाव्याप्ता इति स्थूलत्वं सिध्यति । निरवयवानां तु सत्त्वादीनां संयोगस्य व्याप्यवृत्तित्वेन तेष्वेकस्मिन्नितरद्वयमर्थात्संमात्येवेति स्थूलत्वासिद्धिरिति भावः ॥ २९ ॥ ३० ॥

४६१–१० विकरणत्वादिति । शरीरेन्द्रियरहितत्वादित्यर्थः । करणशब्देन शरीरमिन्द्रियं च गृह्यते ।

—११–२ न तस्येति । कार्यं शरीरम् । करणमिन्द्रियम् ॥ ३१॥(९)॥३२॥

४६२–१६ स्वसंकल्पमात्रेति । एतेन जगद्व्यापारस्य महायासरूपत्वेन लीलाकृतत्वाभाव इत्यपास्तम् ॥ ३३ ॥

—१८ वैषम्यनैर्घृण्ये इति । वैषम्यं पक्षपातः ।

४६३–१२ निमित्तमात्रमिति । निमित्तमात्रमप्रधानकारणं साधारणकारणमिति यावत् । यथा क्षेत्रसलिलादिकं धान्यमात्रस्य साधारणं कारणमित्यप्रधानकारणमेव । प्रधानकारणं तु तत्तद्बीजविशेष एव । तद्वदत्र प्रधानकारणं कर्मविशेष एवेति भावः ॥ ३४ ॥

४६४–२ तदनादित्वेपीति । उपपद्यते चापीति सूत्रखण्डस्यायमर्थः ॥ ३५ ॥ ३६ ॥ ( १० )

## ॥ अथ द्वितीयाध्यायस्य द्वितीयः पादः प्रारभ्यते ॥

४६५–१५ मूलप्रकृतिरिति । अयं भावः–त्रयाणां गुणानां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः । सा चैकैव । पुरुषास्तु परं भिद्यन्ते । ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः । ते च पङ्गवः । अपरिणामित्वात् । प्रकृतिस्त्वन्धा । जडत्वात् । यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात्परिणमते । तस्याश्चाद्यः परिणामो बुद्धिरन्तःकरणविशेषः । बुद्धिरेव महत्तत्त्वम् । सा च बुद्धिर्दर्पणवन्निर्मला । तस्याश्च बहिरिन्द्रि-

यप्रणाडिकया विषयाकारो यः परिणामविशेषो घट इति पट इत्याद्याकारस्त-ज्ज्ञानं वृत्तिरिति चाख्यायते । स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहादहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः । अत एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्वं एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च । पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धौ (क. सू. उप. ८।१।१) । तत्त्वानि तु पञ्चविंशतिः–१ मूलप्रकृतिः (प्रधानम्) । प्रकरोतीति प्रकृतिः । मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिः । विश्वस्य कार्यकलापस्य सा मूलम् । न त्वस्या मूलान्तरमस्ति । अनवस्थाप्रसङ्गात । इयं केवला प्रकृतिरेव । न तु कस्यचिद्विकृतिः । २ महत्तत्त्वम् (बुद्धिरन्तःकरणम्) । ३ अहंकारः (अहं सुखीत्याद्यभिमानः) । ४–८ पञ्च तन्मात्राणि (शब्दस्पर्शरूपरसगन्धाः) । एतानि महत्तत्त्वादीनि सप्त विकृतयः प्रकृतयश्च । तत्र महत्तत्त्वं मूलप्रकृतेर्विकृतिः । अहंकारस्य प्रकृतिः । बुद्धिमन्तरेणाहंतानुदयात । अहंकारो महत्तत्त्वस्य विकृतिः । तामसोऽहंकारस्तन्मात्राणां प्रकृतिः । अहंतामन्तरेणदंत्वावच्छिन्नानां तन्मात्राणामनुदयात् । सात्त्विकोऽहंकारः पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियमनसां प्रकृतिः । राजसाहंकारस्य त्वितरयोरहंकारयोः कार्योत्पादनेनुग्राहकत्वेन कारणत्वं बोध्यम् । तथा तन्मात्राण्यहंकारस्य विकृतयः । आकाशादिपञ्चमहाभूतानां क्रमेण पूर्वपूर्वभूतसहितानि प्रकृतयश्च । ९–१३ पञ्च ज्ञानेन्द्रियाणि १४–१८ पञ्च कर्मेन्द्रियाणि १९–२३ पञ्च महाभूतानि २४ मनश्चेत्येतानि षोडश तत्त्वानि केवलं विकृतय एव । न तु कस्यापि प्रकृतयः । श्लोके तुशब्द एवार्थको विकारपदोत्तरं योज्यः । यद्यपि पृथिव्यादीनामपि गोघटवृक्षादयो विकारा एवं तद्विकाराणां पयोबीजादीनां दध्यङ्कुरादयो विकाराः सन्त्येव तथापि गवादीनां बीजादीनां च न पृथिव्यादिभ्यस्तत्त्वान्तरत्वम् । इह तु प्रकृतिपदेन तत्त्वान्तरोपादानत्वमभिप्रेतमिति न दोषः । सर्वेषां गोघटादीनां स्थूलत्वमिन्द्रियग्राह्यत्वं च समसिति न तत्त्वान्तरत्वम् । तत्र पञ्च महाभूतानि तन्मात्राणां विकृतयः । अवशिष्टान्येकादश त्वहंकारस्य विकृतयः । २५ पुरुषरूपतत्त्वं तु न कस्यापि प्रकृतिर्नापि विकृतिः । पुरुषपदेनानन्तानां जीवानामीश्वरस्य च ग्रहणमिति ।

४६५–१८–४६६–१ **लाघवेति** । लाघवं प्रकाशश्च सत्त्वस्य कार्यम् । चलनमवष्टम्भनं च रजसः कार्यम् । अवष्टम्भनं धारणम् । गौरवमावरणं च तमसः कार्यम् । **कार्यैकेति** । विवेको भेदः । सत्त्वरजस्तमःसु परस्परं भेदो न प्रत्यक्षमुपलभ्यते । सत्त्वादीनामतीन्द्रियत्वात् । किं तु केवलं कार्येणानुमीयत इति भावः ।

४६६-१३ निर्धर्मक इति । ज्ञातृत्वरहितः । ज्ञातृत्वं त्वन्तःकरणस्येति तन्मतम् ( श्रु. ) ।

—२० नातीवेति । सत्कार्यवादसमवायानभ्युपगमादिभिर्न विवाद इत्यर्थः । अभिव्यक्त्यवस्थावैषम्यादिकमभिप्रेत्य नातीवेत्युक्तम् ( श्रु. ) ।

४६७-१२ भेदानामिति । भेदा विशेषाः । महदादीनां विशेषाणां मूलकारणमव्यक्तमस्ति । कुतः । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य । कार्यं चोत्पत्तेः प्राक्कारणेऽस्त्येव । तथा च यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते चेदं कूर्मशरीरमेतान्येव तस्याङ्गानीति । एवं निविशमानानि तस्मिन्नव्यक्तीभवन्ति । एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते । एवं सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते च । सन्त्येव च तन्मात्राण्यहंकाराद्विभज्यन्ते । सन्नेवाहंकारो महतो विभज्यते । सन्नेव च महानव्यक्ताद्विभज्यते । सोयं कारणात्परमाव्यक्तात्साक्षात्परंपरया च विश्वस्य कार्यस्य विभागः सर्गः । कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति । तत्र पृथिव्यादीनि लयकाले तन्मात्रेषु विशन्ति स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति । एवं तन्मात्राण्यहंकारे विशन्ति स्वापेक्षयाहंकारमव्यक्तयन्ति । एवमहंकारो महत्याविशन्स्वापेक्षया महान्तमव्यक्तयति । महान्प्रकृतौ विशन्स्वापेक्षया प्रकृतिमव्यक्तयति । प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्यस्य । विश्वरूपमेव वैश्वरूप्यम् । स्वार्थे ष्यञ् । तस्मात्कारणे सत एव कार्यस्य विभागाविभागाभ्यामव्यक्तं कारणमस्तीति सिद्धम् । शक्तितः प्रवृत्तेश्चाव्यक्तं कारणं सिध्यति । कारणशक्तितो हि कार्यं प्रवर्तते । अशक्तात्कारणात्कार्यस्यानुत्पत्तेः । कार्यस्योत्पत्तेः प्राक्कारणे यदव्यक्तत्वं सैव कारणशक्तिः । न त्वन्या । प्रमाणाभावात् । तस्मादव्यक्तं कारणमिति सिद्धम् । परिमाणाच्चाव्यक्तं कारणं सिध्यति । परिमाणं परिमितत्वमव्यापित्वमिति यावत् । अत्रायं प्रयोगः-विमता महदादिभेदा अव्यक्तकारणवन्तः । परिमितत्वाद्घटादिवत् । घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृश्यन्ते । समन्वयाच्चाव्यक्तं कारणं सिध्यति । भिन्नानां सरूपता समन्वयः । बुद्ध्यादयो हि सुखदुःखमोहसमन्विताः प्रतीयन्ते । यानि च यद्रूपमनुगतानि तानि तत्स्वरूपाव्यक्तकारणवन्ति । यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति महदादीनां विशेषाणामव्यक्तं कारणमस्तीति सिद्धम् ।

४६८-१६ चकारादिति । अनुपपत्तेश्चेति चकारादित्यर्थः । अन्वयः कार्यसंबन्धः । अनैकान्त्यं व्यभिचारः । यद्यत्कार्येन्वितं तत्तत्कारणं भवत्येवेति नियमो नास्ति । गुणादिषु व्यभिचारदर्शनात् । तन्तुनिष्ठानां शुक्लत्वादिगुणानां

पटेऽन्वितानामपि न पटकारणत्वं किं तु तन्तूनामेव तथा गवादिनिष्ठानां गोत्वादिजातीनां गवादिसंततावन्वितानामपि न तादृशसंततिकारणत्वं किं तु गवादीनामेव । तथा चान्वितमपि शौक्ल्यं गोत्वादि च कारणं न भवति । न च यद्यत्कार्येऽन्वितं द्रव्यं तत्तत्कारणं भवत्येवेति द्रव्यविषयको नियम इति सत्त्वादीनां कारणत्वं सिध्यतीति वाच्यम् । सत्त्वादीनां द्रव्यत्वासिद्धेः ।

४६९-१ कारणत्वव्यापारानीति । इति न वाच्यमित्यन्वयः ।

—९ अपरिमितत्वे हीति । यदि सत्त्वादीनां गुणानां प्रत्येकमपरिमितत्वं तर्हि तेषु न्यूनाधिकभावो न संभवति । परिमितानामेव न्यूनाधिकभावदर्शनात् । तथा च गुणेषु वैषम्याभावेन कार्यारम्भ एव न संभवति । गुणानां साम्यावस्था प्रलयः । वैषम्यावस्था सृष्टिरिति तैरेवाङ्गीकृतत्वात् । गुणानां परिमितत्वाङ्गीकारे तु प्रागुक्तरीत्या ( विवृति-पृ. २४० पं. २४ ) तेषामपि किंचिदन्यत्कारणमाश्रयणीयमित्यनवस्था तदवस्थैवेत्याशयः ॥ १ ॥

—१२ तद्व्यतिरिक्तमिति । पयोम्ब्वादीत्यर्थः । यथा पयआदीनां चेतनानधिष्ठितानामेव दध्याद्यारम्भकत्वं तथा तद्दृष्टान्तेन प्रधानस्य चेतनानधिष्ठितस्यैव जगदारम्भकत्वमिति वक्तुं न शक्यते । पयआदीनां पक्षीकरणात् । तत्रापि अनुमानेन चेतनाधिष्ठितत्वस्य साधनात् । यद्यपि पयआदीनां चेतनाधिष्ठितत्वं प्रत्यक्षतो नोपलभ्यते तथापि चेतनानधिष्ठितमेवेत्यपि निश्चयो न भवति । संदेहे च रथादिदृष्टान्तेन चेतनाधिष्ठितत्वमेवानुमीयत इति भावः ।

—१९-४७०-१ तिन्तिण्यादीति । तिन्तिणी चिञ्चा । आदिशब्देन बिल्वामलकादिसंग्रहः । प्रतिसर्गावस्थायामिति । प्रतिसर्गः प्रलयः ।

४७०-४ परिणामत इति । वस्तुषु प्रत्येकं गुणानामङ्गाङ्गिभावेनावस्थानरूपवैषम्यात्सलिलवत्स्वत एव परिणामाज्जगत्प्रवृत्तिश्चेतननिरपेक्षोपपद्यत इत्यर्थः ( श्रु० ) ॥ २ ॥

—१४ सर्गव्यतिरेकेणेति । प्रधानस्यान्यानपेक्षः स्वाभाविक एव परिणामश्चेत्सर्वदैव स्यादिति भावः ।

४७१-१ दोष इतीति । इति न वाच्यमिति पूर्वेणान्वयः । यथा प्रधानस्य जगत्कारणत्वे सर्वदैव सृष्टिः स्यादिति दोषस्तथेश्वरस्य जगत्कारणत्वे तस्य परिपूर्णस्य स्वतन्त्रत्वेन पारतन्त्र्याभावात्कदापि सृष्टिर्न स्यादिति दोष इति दोषसाम्यमिति शङ्काशयः ।

—२ लीलार्थप्रवृत्तीति । न हि लीलार्थं कदाचित्प्रवृत्तौ स्वातन्त्र्यहानिर्भवति । यथेच्छाचरणस्यैव स्वातन्त्र्यपदार्थत्वादिति भावः ।

—१६ इति वदतीति । तथा च कर्मसहितं प्रधानमीश्वरानपेक्षमेव विचित्रजगदारम्भकं भविष्यतीति वक्तुं न शक्यत इति भावः ।

परमात्मा सिध्यति । अधिष्ठानाच्च व्यतिरिक्त आत्मा सिध्यति । बुद्ध्यादयः परेणाधिष्ठिताः सुखाद्यात्मकत्वाद्यथा रथादि सारथ्यादिनाधिष्ठितं तद्वत् । तथा च येनाधिष्ठितः स व्यतिरिक्त आत्मा सिध्यति । भोक्तृभावाच्च व्यतिरिक्त आत्मा सिध्यति । न हि बुद्ध्यादीनां सुखादिभोक्तृत्वम् । तेषां सुखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । कैवल्यार्थं प्रवृत्तेश्च व्यतिरिक्त आत्मा सिध्यति । कैवल्यं मोक्षः । न हि बुद्ध्यादीनां मोक्षार्थं प्रवृत्तिः संभवति । आत्यन्तिकदुःखत्रयाभावरूपमोक्षस्य तत्रासंभवात् । दुःखाद्यात्मकानां बुद्ध्यादीनां दुःखाद्वियोजयितुमशक्यत्वात् । न ह्यग्निरौष्ण्यात्कदापि वियुज्यत इति कारिकार्थः ।

४७६–१३ तस्मादिति । द्रष्टृत्वमकर्तृभावश्चेति चतुर्थचरणे पाठः । तस्मात्त्रिगुणादेर्यो विपर्यासः पुरुषस्यात्रिगुणत्वचेतनत्वाप्रसवधर्मित्वादिरूपस्तस्माद्धेतोरस्य पुरुषस्य साक्षित्वं कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृत्वं च सिध्यति । तत्र चेतनत्वेन साक्षित्वं द्रष्टृत्वं च सिध्यति । यस्मै विषयः प्रदर्श्यते स साक्षी । न ह्यचेतनः शक्यो विषयं दर्शयितुम् । तथा चेतनत्वेन द्रष्टृत्वमपि सिध्यति । अचेतनस्य द्रष्टृत्वासंभवात् । अत्रिगुणत्वेन कैवल्यं सिध्यति । कैवल्यं मोक्षः । स चात्यन्तिकदुःखत्रयाभावः । पुरुषस्य च त्रिगुणरहितत्वेन सुखदुःखमोहरहितत्वात्स्वाभाविक एवात्यन्तिकदुःखत्रयाभावः । अत्रिगुणत्वेन माध्यस्थ्यमपि सिध्यति । माध्यस्थ्यमौदासीन्यम् । यः सुखेन तृप्यति दुःखं च द्वेष्टि स नोदासीनो भवति । पुरुषस्य तु त्रिगुणरहितत्वेन सुखाद्यभावादौदासीन्यं सिद्धम् । अप्रसवधर्मित्वेनाकर्तृत्वं सिध्यति । यस्मात्कार्यमुत्पद्यते तत्प्रसवधर्मि । यथा प्रधानम् । तस्यैव च कर्तृत्वं दृश्यत इत्यर्थः ।

—२० तस्मान्नेति । साक्षान्न कश्चित्पुरुषो बध्यते न कश्चित्संसरति न च कश्चिन्मुच्यते । किं तु प्रकृतिद्वारा । प्रकृतिरेव नानापुरुषाश्रया बध्यते संसरति मुच्यते चेति प्रकृतिगता बन्धमोक्षसंसाराः प्रकृतिपुरुषयोर्भेदाग्रहात्पुरुषेषूपचर्यन्ते । यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते तद्वत् ।

४७७–१ तस्मात्तदिति । यच्च लोके चेतनस्य कर्तृत्वं दृश्यते तन्न युक्तम् । तस्माच्चेति कारिकोक्तरीत्या पुरुषस्याकर्तृत्वसिद्धेः । तस्मादचेतनमपि प्रधानं चेतनसंयोगात्सचेतनमिव महदादि कार्यं करोतीति वक्तव्यम् । तथोदासीनोऽपि पुरुषो गुणस्य कर्तृत्वेन तत्संयोगात्कर्तेव भवति ।

—६ साक्षित्वेति । अनेन ग्रन्थेन सांख्यस्वीकृतार्थानां परस्परविरोधः प्रदर्श्यते ।

—१२ संनिधेरिति । पुरुषस्य यत्प्रकृतिसंनिधानं तद्यदि प्रकृतिसद्भावरूपं तर्हि मुक्तस्याप्यध्यासादिप्रसङ्गः । यदि प्रकृतिगतविकाररूपं संनिधानं तर्हि तस्या-

पटेऽन्वितानामपि न पटकारणत्वं किं तु तन्तूनामेव तथा गवादिनिष्ठानां गोत्वादिजातीनां गवादिसंततावन्वितानामपि न तादृशसंततिकारणत्वं किं तु गवादीनामेव । तथा चान्वितमपि शौक्ल्यं गोत्वादि च कारणं न भवति । न च यद्यत्कार्येऽन्वितं द्रव्यं तत्तत्कारणं भवत्येवेति द्रव्यविषयको नियम इति सत्त्वादीनां कारणत्वं सिध्यतीति वाच्यम् । सत्त्वादीनां द्रव्यत्वासिद्धेः ।

४६९–१ **कारणत्वव्याप्तानीति** । इति न वाच्यमित्यन्वयः ।

—९ **अपरिमितत्वं हीति** । यदि सत्त्वादीनां गुणानां प्रत्येकमपरिमितत्वं तर्हि तेषु न्यूनाधिकभावो न संभवति । परिमितानामेव न्यूनाधिकभावदर्शनात् । तथा च गुणेषु वैषम्याभावेन कार्यारम्भ एव न संभवति । गुणानां साम्यावस्था प्रलयः । वैषम्यावस्था सृष्टिरिति तैरेवाङ्गीकृतत्वात् । गुणानां परिमितत्वाङ्गीकारे तु प्रागुक्तरीत्या ( विवृति-पृ. २४० प. २४ ) तेषामपि किंचिदन्यत्कारणमाश्रयणीयमित्यनवस्था तदवस्थैवेत्याशयः ॥ १ ॥

—१२ **तद्व्यतिरिक्तमिति** । पयोम्ब्वादीत्यर्थः । यथा पयआदीनां चेतनानधिष्ठितानामेव दध्याद्यारम्भकत्वं तथा तद्दृष्टान्तेन प्रधानस्य चेतनानधिष्ठितस्यैव जगदारम्भकत्वमिति वक्तुं न शक्यते । पयआदीनां पक्षीकरणात् । तत्राप्यनुमानेन चेतनाधिष्ठितत्वस्य साधनात् । यद्यपि पयआदीनां चेतनाधिष्ठितत्वं प्रत्यक्षतो नोपलभ्यते तथापि चेतनानधिष्ठितमेवेत्यपि निश्चयो न भवति । संदेहे च रथादिदृष्टान्तेन चेतनाधिष्ठितत्वमेवानुमीयत इति भावः ।

—१९–४७०–१ **तिन्तिण्यादीति** । तिन्तिणी चिञ्चा । आदिशब्देन बिल्वामलकादिसंग्रहः । **प्रतिसर्गावस्थायामिति** । प्रतिसर्गः प्रलयः ।

४७०–४ **परिणामत इति** । वस्तुषु प्रत्येकं गुणानामङ्गाङ्गिभावेनावस्थास्वरूपवैषम्यात्सलिलवत्स्वत एव परिणामाज्जगत्प्रवृत्तिश्चेतननिरपेक्षोपपद्यत इत्यर्थः ( श्रु० ) ॥ २ ॥

—१४ **सर्गव्यतिरेकेणेति** । प्रधानस्यान्यानपेक्षः स्वाभाविक एव परिणामश्चेत्सर्वदैव स्यादिति भावः ।

४७१–१ **दोष इतीति** । इति न वाच्यमिति पूर्वेणान्वयः । यथा प्रधानस्य जगत्कारणत्वे सर्वदैव सृष्टिः स्यादिति दोषस्तथेश्वरस्य जगत्कारणत्वे तस्य परिपूर्णस्य स्वतन्त्रत्वेन पारतन्त्र्याभावात्कदापि सृष्टिर्न स्यादिति दोष इति दोषसाम्यमिति शङ्काशयः ।

—२ **लीलार्थप्रवृत्तीति** । न हि लीलार्थं कदाचित्प्रवृत्तौ स्वातन्त्र्यहानिर्भवति । यथेच्छाचरणस्यैव स्वातन्त्र्यपदार्थत्वादिति भावः ।

—१६ **इति वदन्तीति** । तथा च कर्मसहितं प्रधानमीश्वरानपेक्षमेव विचित्रजगदारम्भकं भविष्यतीति वक्तुं न शक्यत इति भावः ।

परमात्मा सिध्यति । अधिष्ठानाच्च व्यतिरिक्त आत्मा सिध्यति । बुद्ध्यादयः परेणाधिष्ठिताः सुखाद्यात्मकत्वाद्यथा रथादि सारथ्यादिनाधिष्ठितं तद्वत् । तथा च येनाधिष्ठितः स व्यतिरिक्त आत्मा सिध्यति । भोक्तृभावाच्च व्यतिरिक्त आत्मा सिध्यति । न हि बुद्ध्यादीनां सुखादिभोक्तृत्वम् । तेषां सुखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । कैवल्यार्थं प्रवृत्तेश्च व्यतिरिक्त आत्मा सिध्यति । कैवल्यं मोक्षः । न हि बुद्ध्यादीनां मोक्षार्थं प्रवृत्तिः संभवति । आत्यन्तिकदुःखत्रयाभावरूपमोक्षस्य तत्रासंभवात् । दुःखाद्यात्मकानां बुद्ध्यादीनां दुःखाद्वियोजयितुमशक्यत्वात् । न ह्यग्निरौष्ण्यात्कदापि वियुज्यत इति कारिकार्थः ।

४७६–१३ तस्मादिति । द्रष्टृत्वमकर्तृभावश्चेति चतुर्थचरणे पाठः । तस्मात्त्रिगुणादेर्यो विपर्यासः पुरुषस्यात्रिगुणत्वचेतनत्वाप्रसवधर्मित्वादिरूपस्तस्माद्धेतोरस्य पुरुषस्य साक्षित्वं कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृत्वं च सिध्यति । तत्र चेतनत्वेन साक्षित्वं द्रष्टृत्वं च सिध्यति । यस्मै विषयः प्रदर्श्यते स साक्षी । न ह्यचेतनः शक्यो विषयं दर्शयितुम् । तथा चेतनत्वेन द्रष्टृत्वमपि सिध्यति । अचेतनस्य द्रष्टृत्वासंभवात् । अत्रिगुणत्वेन कैवल्यं सिध्यति । कैवल्यं मोक्षः । स चात्यन्तिकदुःखत्रयाभावः । पुरुषस्य च त्रिगुणरहितत्वेन सुखदुःखमोहरहितत्वात्स्वाभाविक एवात्यन्तिकदुःखत्रयाभावः । अत्रिगुणत्वेन माध्यस्थ्यमपि सिध्यति । माध्यस्थ्यमौदासीन्यम् । यः सुखेन तृप्यति दुःखं च द्वेष्टि स नोदासीनो भवति । पुरुषस्य तु त्रिगुणरहितत्वेन सुखाद्यभावादौदासीन्यं सिद्धम् । अप्रसवधर्मित्वेनाकर्तृत्वं सिध्यति । यस्मात्कार्यमुत्पद्यते तत्प्रसवधर्मि । यथा प्रधानम् । तस्यैव च कर्तृत्वं दृश्यत इत्यर्थः ।

—२० तस्मान्नेति । साक्षान्न कश्चित्पुरुषो बध्यते न कश्चित्संसरति न च कश्चिन्मुच्यते । किं तु प्रकृतिद्वारा । प्रकृतिरेव नानापुरुषाश्रया बध्यते संसरति मुच्यते चेति प्रकृतिगता बन्धमोक्षसंसाराः प्रकृतिपुरुषयोर्भेदाग्रहात्पुरुषेषूपचर्यन्ते । यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते तद्वत् ।

४७७–१ तस्मात्तदिति । यच्च लोके चेतनस्य कर्तृत्वं दृश्यते तन्न युक्तम् । तस्माच्चेति कारिकोक्तरीत्या पुरुषस्याकर्तृत्वसिद्धेः । तस्मादचेतनमपि प्रधानं चेतनसंयोगात्सचेतनमिव महदादि कार्यं करोतीति वक्तव्यम् । तथोदासीनोऽपि पुरुषो गुणस्य कर्तृत्वेन तत्संयोगात्कर्तेव भवति ।

—६ साक्षित्वेति । अनेन ग्रन्थेन सांख्यस्वीकृतार्थानां परस्परविरोधः प्रदर्श्यते ।

—१३ संनिधेरिति । पुरुषस्य यत्प्रकृतिसंनिधानं तद्यदि प्रकृतिसद्भावरूपं तर्हि मुक्तस्याप्यध्यासादिप्रसङ्गः । यदि प्रकृतिगतविकाररूपं संनिधानं तर्हि तस्या-

ध्यासादिहेतुत्वं न संभवति । प्रकृतिगतविकारस्याध्यासकार्यत्वात् । पुरुषगतविकाररूपं प्रकृतिसंनिधानमिति तु वक्तुमशक्यम् । पुरुषगतविकारानभ्युपगमात् ।

४७७-१६ **नानाविधैरिति** । यथा गुणवानुपकार्यपि भृत्यः कदाचिन्निर्गुणमत एवानुपकारिणं स्वामिनं निष्फलमाराधयति तथेयं प्रकृतिस्तपस्विनी गुणवत्युपकारिणी निर्गुणेनुपकारिण्यात्मनि व्यर्थपरिश्रमा केवलं परार्थमेव यतते न स्वार्थमित्यर्थः ।

—२१ **रङ्गस्येति** । रङ्गशब्देन तत्रस्थाः प्रेक्षकाः पुरुषा लक्ष्यन्ते । आत्मानं प्रकाश्येत्यस्य शब्दाद्यात्मना पुरुषाद्भेदेन प्रकाश्येत्यर्थः ।

४७८-१ **प्रकृतेरिति** । सुकुमारतरत्वं परपुरुषदर्शनाद्यसहिष्णुत्वम् । यथा कुलवधूः प्रमादाद्गलितवस्त्रप्रान्ता परपुरुषेण दृष्टा चेल्लज्जया सद्यस्ततो निवृत्ता सत्यप्रमत्ता पुनस्तद्दृष्टिपथं कदाचिदपि नारोहति तथेयमतिसुकुमारतरा प्रकृतिरप्येकदा दृष्टा सती दृष्टास्मीति मत्वा पुनः परपुरुषदर्शनपथं प्रयत्नेन परिहरति। यः प्रकृतिपुरुषयोर्भेदं न पश्यति किं तु प्रकृतिमात्मत्वेनैव पश्यति स चार्थादेव न परपुरुषः । यश्च प्रकृतिमात्मत्वेन न पश्यति किं तु भिन्नत्वेन स परपुरुषो ज्ञानी । अत एव स्वाभाविक्यामपि प्रकृतेः प्रवृत्तौ ज्ञानी कदाचिदपि पुनः संसारं नाधिगच्छतीति सांख्याशयः ।

—४ **पुरुषो हीति** । प्रकृतिदर्शनमेव संसार इति हि सांख्यमतम् । तत्र प्रकृतिदर्शनं किं पुरुषकर्तृकं प्रकृतिकर्तृकमेव वा । नाद्यः । पुरुषस्य निर्विकारत्वात्तत्र दर्शनरूपविकारासंभवात् । नान्यः । अचेतनत्वात् ।

—६ **पुरुषस्य स्वात्मेति** । स्वात्मशब्देन प्रकृतिर्निर्दिश्यते । पुरुषकर्तृकं यत्प्रकृतिदर्शनं तत्स्वदर्शनमिति प्रकृतिर्नावगच्छति । अचेतनत्वात् । तथा च दृष्टास्मीति मत्वेति यत्पूर्वमुक्तं तन्न संभवति । अचेतनायास्तस्या दृष्टास्मीत्येवमनुसंधानाभावात् ।

—८ **अथ संनिधीति** । बन्धहेतुत्वेन मोक्षहेतुत्वेन चाभ्युपगतं यत्प्रकृतिदर्शनं तत्प्रकृतिपुरुषसंनिधिरूपमिति दर्शनस्यातिरिक्तत्वाभावेन विकारत्वाभावात्तस्य दर्शनस्य पुरुषे संभवोस्तु नाम । परं तु संनिधिः किं नित्य उतानित्यः । नित्यत्वे बन्धमोक्षयोर्नित्यत्वं स्यात् । अनित्यत्वे तु कोपि तस्य हेतुरवश्य वाच्यः । तस्य हेतोरप्यपर इत्यनवस्था । तथा स संनिधिः प्रकृतिपुरुषस्वरूप एवाथ वातिरिक्तः । अतिरिक्तत्वे तस्य विकारत्वेनात्मन्यसंभवः । प्रकृतिपुरुषरूपत्वे तु तस्य नित्यत्वमवश्यं वाच्यमिति बन्धमोक्षयोर्नित्यत्वं स्यादिति भावः ।

४७९-४ **स्वव्यतिरिक्तेति** । स्वं ज्ञानरूप आत्मा तद्व्यतिरिक्तभूताज्ञानरूपा याऽविद्या तादृशाविद्याविरोधिनः पुरुषस्याविद्यासाक्षित्वं न संभवतीत्याशयः ॥ ९ ॥ ( १ )

४८३-१६ सौगताश्चेति । सौगता बौद्धाः । ते चतुर्विधा वैभाषिकाः सौत्रान्तिका योगाचारा माध्यमिकाश्च । न चैतेषां मध्ये योगाचारा माध्यमिकाश्च बाह्यार्थास्तित्वं नेच्छन्ति माध्यमिकाश्चान्तरपदार्थास्तित्वमपि नेच्छन्तीत्यन्यत् । तथा च तयोर्मते बाह्यार्थाभावात्परमाणुकारणत्वं नास्तीति कथं तत्खण्डनमत्र संगतमिति वाच्यम् । नैयायिकमतखण्डनोत्तरं वैभाषिकसौत्रान्तिकमतयोः परमाणुकारणत्वस्वीकारेण नैयायिकमतसाम्यान्नैयायिकमतखण्डनोत्तरं वैभाषिकसौत्रान्तिकमतखण्डनम् । तदुत्तरं च योगाचारमाध्यमिकमतयोर्बौद्धत्वेन वैभाषिकसौत्रान्तिकमतसाम्याद्वैभाषिकसौत्रान्तिकमतखण्डनोत्तरं योगाचारमाध्यमिकमतखण्डनमिति संगतेः सत्त्वात् । तत्र वैभाषिकमते बाह्यार्थानां यथासंभवं प्रत्यक्षगम्यत्वमनुमानगम्यत्वं चास्ति । सौत्रान्तिकमते तु बाह्यार्थानामनुमानगम्यत्वमेव न तु प्रत्यक्षगम्यत्वम् । अयं घट इत्याद्याकारेण ज्ञानेन तादृशाकारसमर्पका घटादयोनुमीयन्ते । न तु कदाचिदपि ते प्रत्यक्षीभवन्ति ।

—१९ भूतेति । भूतानि पृथिव्यादीनि चत्वारि । तद्विकारभूता घटादयो भौतिकाः । एवं चित्तं ज्ञानसंतानः । तद्विकारभूता रागादयश्चैत्ता इति बोध्यम् ।

४८४-२ क्षणिकमिति । क्षणिकेष्वपि पदार्थेष्विमे स्थिरा इति बुद्धिरविद्याख्योत्पद्यते । तया च सर्वे लौकिका व्यवहारा भवन्तीति तन्मतम् ।

—१० तत्र चेति । अहं जानामीत्येतादृशो यो ग्राहकत्वेनाभिमानमस्तमारूढः शरीरान्तर्वर्ती यो विज्ञानसंतानः स एवात्मेत्यर्थः ।

—१८ संहतौ व्याप्रियन्त इति । संघातार्थं चलिता भवन्तीत्यर्थः ।

४८५-५ वस्त्वन्तरन्वेति । यथा नैयायिकास्तन्तुसमुदायव्यतिरिक्तं तत्कार्यभूतं पटमभ्युपगच्छन्ति तथा नैतेभ्युपगच्छन्ति । तथा च क्षणिकेभ्यः संतानिभ्यः सकाशात्तद्व्यतिरिक्तस्य स्थिरस्य कस्याप्यभावेन लोकव्यवहारः सर्वो नोपपद्यत इति भावः ॥ १७ ॥

—८ इतरेतरेति । प्रत्ययशब्दो हेतुवाची ।

—१० संघातभावादिकमिति । आदिशब्देन विज्ञानविषयत्वं व्यवहारास्पदत्वं च विवक्षितम् ( श्रु. ) ।

—१३-८ तयेति । अविद्यायाः सकाशाद्रागद्वेषादयः संस्कारा जायन्ते ततो विज्ञानमुत्पद्यते । जन्मान्तरीयाभ्यामविद्यासंस्काराभ्यां गर्भगते शुक्रशोणितसमुदायेहमित्यालयविज्ञानस्य वृत्तिलाभ एव विज्ञानम् । एतदेव चित्ताभिज्वलनशब्देनोच्यते । तदुत्तरोत्तरविषयविज्ञप्तिश्चित्तम् । तेन सह प्रतिक्षणमुत्पत्तिविनाशवन्तः स्पर्शादयस्तद्धर्माश्चैत्तम् । चित्तचैत्ता एव नामशब्देनाभिधीयन्ते । एते चित्तचैत्ता गर्भाशयगतकलिलबुद्बुदावस्थं पृथिव्यादिकं रूपि द्रव्यं

ध्यासादिहेतुत्वं न संभवति । प्रकृतिगतविकारस्याध्यासकार्यत्वात् । पुरुषगतविकाररूपं प्रकृतिसंनिधानमिति तु वक्तुमशक्यम् । पुरुषगतविकारानभ्युपगमात् ।

४७७–१६ **नानाविधैरिति**। यथा गुणवानुपकार्यपि भृत्यः कदाचिन्निर्गुणमत एवानुपकारिणं स्वामिनं निष्फलमाराधयति तथेयं प्रकृतिस्तपस्विनी गुणवत्युपकारिणी निर्गुणेनुपकारिण्यात्मनि व्यर्थपरिश्रमा केवलं पुरुषार्थमेव यतते न स्वार्थमित्यर्थः ।

—२१ **रङ्गस्येति**। रङ्गशब्देन तत्रस्थाः प्रेक्षकाः पुरुषा लक्ष्यन्ते । आत्मानं प्रकाश्येत्यस्य शब्दाद्यात्मना पुरुषाद्भेदेन प्रकाश्येत्यर्थः ।

४७८–१ **प्रकृतेरिति**। सुकुमारतरत्वं परपुरुषदर्शनासहिष्णुत्वम्। यथा कुलवधूः प्रमादाद्गलितवस्त्रप्रान्ता परपुरुषेण दृष्टा चेल्लज्जया सयत्नतो निवृत्ता सत्यप्रमत्ता पुनस्तद्दृष्टिपथं कदाचिदपि नारोहति तथेयमतिसुकुमारतरा प्रकृतिरप्येकदा दृष्टा सती दृष्टास्मीति मत्वा पुनः परपुरुषदर्शनपथं प्रयत्नेन परिहरति। यः प्रकृतिपुरुषयोर्भेदं न पश्यति किं तु प्रकृतिमात्मत्वेनैव पश्यति स चार्थादेव न परपुरुषः । यश्च प्रकृतिमात्मत्वेन न पश्यति किं तु भिन्नत्वेन स परपुरुषो ज्ञानी । अत एव स्वाभाविक्यामपि प्रकृतेः प्रवृत्तौ ज्ञानी कदाचिदपि पुनः संसारं नाधिगच्छतीति सांख्याशयः ।

—४ **पुरुषो हीति** । प्रकृतिदर्शनमेव संसार इति हि सांख्यमतम् । तत्र प्रकृतिदर्शनं किं पुरुषकर्तृकं प्रकृतिकर्तृकमेव वा । नाद्यः। पुरुषस्य निर्विकारत्वात्तत्र दर्शनरूपविकारासंभवात् । नान्त्यः । अचेतनत्वात् ।

—६ **पुरुषस्य स्वात्मेति** । स्वात्मशब्देन प्रकृतिर्निर्दिश्यते । पुरुषकर्तृकं यत्प्रकृतिदर्शनं तत्स्वदर्शनमिति प्रकृतिर्नावगच्छति । अचेतनत्वात् । तथा च दृष्टास्मीति मत्वेति यत्पूर्वमुक्तं तन्न संभवति । अचेतनायास्तस्या दृष्टास्मीत्येवमनुसंधानाभावात् ।

—८ **अथ संनिधीति** । बन्धहेतुत्वेन मोक्षहेतुत्वेन चाभ्युपगतं यत्प्रकृतिदर्शनं तत्प्रकृतिपुरुषसंनिधिरूपमिति दर्शनस्यातिरिक्तत्वाभावेन विकारत्वाभावात्तस्य दर्शनस्य पुरुषे संभवोस्तु नाम । परं तु संनिधिः किं नित्य उतानित्यः । नित्यत्वे बन्धमोक्षयोर्नित्यत्वं स्यात् । अनित्यत्वे तु कोपि तस्य हेतुरवश्यं वाच्यः । तस्य हेतोरप्यपर इत्यनवस्था । तथा स संनिधिः प्रकृतिपुरुषस्वरूप एवाथ वातिरिक्तः । अतिरिक्तत्वे तस्य विकारत्वेनात्मन्यसंभवः । प्रकृतिपुरुषरूपत्वे तु तस्य नित्यत्वमवश्यं वाच्यमिति बन्धमोक्षयोर्नित्यत्वं स्यादिति भावः ।

४७९–४ **स्वव्यतिरिक्तेति** । स्वं ज्ञानरूप आत्मा तद्व्यतिरिक्तभूताज्ञानरूपा याऽविद्या तादृशाविद्याविरोधिनः पुरुषस्य विद्यासाक्षित्वं न संभवतीत्याशयः ॥ ९ ॥ ( १ )

४८३-१६ सौगताश्चेति । सौगता बौद्धाः । ते चतुर्विधा वैभाषिकाः सौत्रान्तिका योगाचारा माध्यमिकाश्च । न चैतेषां मध्ये योगाचारा माध्यमिकाश्च बाह्यार्थास्तित्वं नेच्छन्ति माध्यमिकाश्चान्तरपदार्थास्तित्वमपि नेच्छन्तीत्यन्यत् । तथा च तयोर्मते बाह्यार्थाभावात्परमाणुकारणत्वं नास्तीति कथं तत्खण्डनमत्र संगतमिति वाच्यम् । नैयायिकमतखण्डनोत्तरं वैभाषिकसौत्रान्तिकमतयोः परमाणुकारणत्वस्वीकारेण नैयायिकमतसाम्यान्नैयायिकमतखण्डनोत्तरं वैभाषिकसौत्रान्तिकमतखण्डनम् । तदुत्तरं च योगाचारमाध्यमिकमतयोर्बौद्धत्वेन वैभाषिकसौत्रान्तिकमतसाम्याद्वैभाषिकसौत्रान्तिकमतखण्डनोत्तरं योगाचारमाध्यमिकमतखण्डनमिति संगतेः सत्त्वात् । तत्र वैभाषिकमते बाह्यार्थानां यथासंभवं प्रत्यक्षगम्यत्वमनुमानगम्यत्वं चास्ति । सौत्रान्तिकमते तु बाह्यार्थानामनुमानगम्यत्वमेव न तु प्रत्यक्षगम्यत्वम् । अयं घट इत्याद्याकारेण ज्ञानेन तादृशाकारसमर्पका घटादयोनुमीयन्ते । न तु कदाचिदपि ते प्रत्यक्षीभवन्ति ।

—१९ भूतेति । भूतानि पृथिव्यादीनि चत्वारि । तद्विकारभूता घटादयो भौतिकाः । एवं चित्तं ज्ञानसंतानः । तद्विकारभूता रागादयश्चैत्ता इति बोध्यम् ।

४८४-२ क्षणिकमिति । क्षणिकेष्वपि पदार्थेष्विमे स्थिरा इति बुद्धिरविद्याख्योत्पद्यते । तया च सर्वे लौकिका व्यवहारा भवन्तीति तन्मतम् ।

—१० तत्र चेति । अहं जानामीत्येतादृशो यो ग्राहकत्वेनाभिमानस्तमारूढः शरीरान्तर्वर्ती यो विज्ञानसंतानः स एवात्मेत्यर्थः ।

—१८ संहतौ व्याप्रियन्त इति । संघातार्थं चलिता भवन्तीत्यर्थः ।

४८५-५ वस्त्वन्तरन्चेति । यथा नैयायिकास्तन्तुसमुदायव्यतिरिक्तं तत्कार्यभूतं पटमभ्युपगच्छन्ति तथा नैतेभ्युपगच्छन्ति । तथा च क्षणिकेभ्यः संतानिभ्यः सकाशात्तद्व्यतिरिक्तस्य स्थिरस्य कस्याप्यभावेन लोकव्यवहारः सर्वो नोपपद्यत इति भावः ॥ १७ ॥

—८ इतरेतरेति । प्रत्ययशब्दो हेतुवाची ।

—१० संघातभावादिकमिति । आदिशब्देन विज्ञानविषयत्वं व्यवहारास्पदत्वं च विवक्षितम् ( श्रु. ) ।

—१३-८ तयेति । अविद्यायाः सकाशाद्रागद्वेषादयः संस्कारा जायन्ते । ततो विज्ञानमुत्पद्यते । जन्मान्तरीयाभ्यामविद्यासंस्काराभ्यां गर्भगते शुक्रशोणितसमुदायेहमित्यालयविज्ञानस्य वृत्तिलाभ एव विज्ञानम् । एतदेव चित्ताभिज्वलनशब्देनोच्यते । तदुत्तरोत्तरविषयविज्ञप्तिश्चित्तम् । तेन सह प्रतिक्षणमुत्पत्तिविनाशवन्तः स्पर्शादयस्तद्धर्माश्चैत्तम् । चित्तचैत्ता एव नामशब्देनाभिधीयन्ते । एते चित्तचैत्ता गर्भाशयगतकलिलबुद्बुदावस्थं पृथिव्यादिकं रूपि द्रव्यं

च विज्ञानाज्जायते । ततो नामरूपसमुदायात्षडायतनाख्यमिन्द्रियषट्कं जायते । षडिन्द्रियरूपेण तदायतनरूपशरीराकारेण च गर्भाशये नामरूपपरिणामो भवतीत्यर्थः । ततः स्पर्शोत्पत्तिः । अत्र स्पर्शशब्देन शरीरमुच्यते । ततो सुखदुःखानुभवरूपा वेदनोत्पद्यते । तस्याश्च वेदनायाः सकाशात्तृष्णा जायते । सुखप्रेप्सा दुःखजिहासा च तृष्णा । ततस्तदनुकूलो व्यापार उपादानम् । ततो गर्भान्निर्गमनं भवः । तथोत्पन्नस्य जनकगतजात्यनुसारेण मनुष्यत्वादिजातिः । ततो जरा । ततो मरणम् । अत्र मरणं मुमूर्षुत्वम् । तदवस्थस्येच्छोपहतिः शोकः । प्रतिहतेच्छस्य प्रलापः परिदेवनम् । ततो दुःखं दुर्मनस्ता च । बाह्येन्द्रियकृतविषयानुभवजनितं दुःखं दुःखशब्देनोच्यते । मानसविषयानुभवजनितं दुःखं दुर्मनस्ताशब्देनोच्यते । ततो मरणम् । ततो लोकान्तरगमनम् । ततः पुनरागमनम् । ततः पुनर्गर्भाशयप्रवेशे पूर्वजन्मस्थाविद्यातज्जन्यसंस्काराभ्यां च पुनर्विज्ञानोत्पत्तिरित्येतदविद्यादीनां चक्रं रथचक्रवत्परिवर्तेत इत्यर्थः ।

४८६–२ **न खल्विति** । यद्यप्यविद्याख्या विपरीतबुद्धिः क्षणिकं वस्तु स्थिरत्वेन विषयीकरोति तथापि वस्तुतस्तद्वस्तु न स्थिरं भवति । एवं चाविद्या वस्तुतः स्थिरकार्योत्पादिका न भवतीति भावः ॥ १८ ॥

—९ **उत्तरक्षणेनेति** । अस्मिन्प्रकरणे क्षणशब्देन क्षणिकपदार्थानां ग्रहणम् ।

—११ **पूर्वक्षणवर्तित्वमेवेति** । ननु पूर्वक्षणिकपदार्थस्योत्तरक्षणिकपदार्थोत्पत्तिप्रयोजकः पूर्वकालिकास्तित्वादन्यः कश्चिद्व्यापार आश्रीयते येनोत्तरक्षणिकपदार्थोत्पत्तिवेलायां पूर्वक्षणिकपदार्थस्यास्तित्वमवश्याश्रयितव्यं स्यादिति शङ्काशयः ।

—१८–९ **हेतुरितीति** । ब्रूपे चेदिति शेषः । यस्मिन्देशे यः पूर्वक्षणिकघटः स्थितः स तद्देशस्थस्यैवोत्तरक्षणिकघटस्य हेतुरिति ब्रूपे चेदित्यर्थः ॥ १९ ॥

४८७–२ **अधिपतीति** । अधिपतिरिन्द्रियम् । सहकारी प्रकाशादिः । आलम्बनं विषयो घटादिः । समनन्तरप्रत्ययः पूर्वक्षणिकविज्ञानम् । एतच्चतुष्टयस्योत्तरक्षणिकविज्ञानोत्पत्तिहेतुत्वमिति भावः ।

—४–८ **घटक्षण इति** । पूर्वक्षणिकघटे विद्यमान एवोत्तरक्षणिकघटस्योत्पत्तिरिष्यते चेत्तदा यद्यपि पूर्वक्षणिकघटस्यैव तद्विज्ञानस्यापि क्षणद्वयं स्थित्यङ्गीकारेणोक्तप्रतिज्ञा सिध्यति तथाप्युत्तरक्षणे द्वयोर्घटयोर्युगपदुपलम्भप्रसङ्गः । अधिपतीत्यादिप्रतिज्ञायाः सिद्धावपि क्षणिकाः सर्वे पदार्था इति प्रतिज्ञाया हानिश्च । ननु क्षणिकत्वं स्थितमेव । यतोऽस्माभिः पूर्वक्षणिकघटे विद्यमाने तस्मिन्पूर्वक्षण एवोत्तरघटस्योत्पत्तिरिष्यते । केवलं तज्ज्ञानमुत्तरक्षण इति चेन्न । तथासतीन्द्रियसंबन्धस्य ज्ञानकारणस्य तत्कार्यस्य ज्ञानस्य च यौगपद्यं प्रसज्येतेति तयोः कार्यकारणभाव एव भज्येत । ज्ञानात्पूर्वभावी हि घटान्तरोत्पत्तिक्षणः ।

न हि घटादिविषय उत्पत्तिकाल एवेन्द्रियेण संबध्यत इति वक्तुं शक्यते। पूर्वक्षणे घटद्वयोपलम्भप्रसङ्गश्च दुर्वार इत्यपि बोध्यम् ॥ २० ॥

४८७–९ प्रतिसंख्येति । सन्घट इति बुद्धिः संख्या। इममसन्तं करोमीति तद्विपरीता बुद्धिः प्रतिसंख्या। तत्पूर्वको यो दण्डादिप्रहारेण घटादिनाशः स प्रतिसंख्यानिरोधः। अयं च स्थूलः। दृष्टिगोचरत्वात् । प्रतिक्षणभावी घटादिनाशश्चाप्रतिसंख्यानिरोधः। बुद्धिपूर्वकत्वाभावात्। अयं च सूक्ष्मः। दृष्ट्यगोचरत्वात्।

—१६ निरन्वयेति। अन्वयः संबन्धः । घटनाशे कपालरूपेण स्थितस्य घटस्य संबन्धो दृश्यते । तन्नाशेपि मृत्तिकारूपेण स्थितस्य संबन्धो दृश्यत इत्येवंप्रकारेण नाशः सर्वत्र सान्वयः । यद्यपि दीपे विनष्टे न कथमपि तस्य संबन्धो दृश्यते तथापि तत्र घटनाशदृष्टान्तेन सूक्ष्मरूपेण स्थितस्य दीपस्य संबन्धोस्तीत्यनुमीयत इति न क्वापि निरन्वयविनाशोस्तीत्यभिप्रायः ॥ २१ ॥

४८८–६ क्षणिकत्वेति । उत्पन्नस्य घटादेः क्षणिकत्वेन तस्मिन्नेव क्षणे विनाशादसत्त्वम्। एतदेव तुच्छत्वमिनीयमुत्पन्नस्य तुच्छतापत्तिः। अत एव च तस्माज्जायमानोत्तरक्षणिकघटस्योत्पत्तिस्तुच्छादुत्पत्तिः ॥ २२ ॥

—२१ प्रतीयत इति । अत्र श्येन इति श्येनाधिकरणत्वेनाकाशस्यानुमानिकी प्रतीतिः। न तु चक्षुरादिजन्या। रूपाद्यभावेनाकाशे चाक्षुषत्वादेर्विरुद्धत्वादिति केचित्। वस्तुतस्तु चाक्षुषत्वाङ्गीकारेपि न विरोधः। पञ्चीकरणेन पृथिव्यादाविवाकाशेपि रूपसत्त्वात्। न च तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति त्रिवृत्करणश्रुतेः पृथिव्यप्तेजसामेव परस्परं मिश्रणं न तु वाय्वाकाशसहितानां पञ्चानामिति वाच्यम्। त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणार्थत्वात्।

४८९–६ इतरेतरेति। पृथिव्यां विद्यमानस्य जलादिभेदस्य जलादौ वा विद्यमानस्य पृथिव्यादिभेदस्याकाशरूपत्वे तादृशाकाशस्य पृथिव्यां जलादौ वा क्वचिदधिकरणे प्रतीतिः स्यात् । या त्वन्तराले जायत आकाशप्रतीतिः सा न स्यात्।

—८ अभावस्येति । आकाशस्य पृथिव्याद्यभावस्वरूपत्वाङ्गीकारेपि न तुच्छत्वम्। घटाद्यभावो घटादेरेवावस्थाविशेष इति सिद्धान्तात् ॥ २३ ॥

—१५ प्रत्यभिज्ञायत इति। प्रत्यभिज्ञा हि नामातीतवर्तमानकालवर्त्येकवस्तुविषयमेकं प्रत्यक्षज्ञानम्। तस्य कालद्वयसंबन्धविशिष्टमेकमेव वस्तु विषय इति वस्तुनः स्थिरत्वं सिध्यतीति भावः।

ज्वालादिष्विति। पूर्वोत्पन्नविनष्टवस्तुसदृशवस्तुदर्शने तयोर्वस्तुनोः सादृश्यादैक्यप्रतीतिर्भवति। यथा सेयं दीपज्वाला तदेवौषधमेतदित्यादि। तद्वदेवेदमिति वक्तुं न शक्यमिति भावः।

• ४८९-२० न च ज्ञेयेष्विति । घटादेः प्रतिक्षणभेदमङ्गीकृत्यानुसंधानं न संभवतीति पूर्वमुक्तम् । इदानीं तु स भेद एव न सिध्यतीत्युच्यते ।

४९०–३ नीलमिवेति । यथा नीलप्रत्यक्षं नेदं पीतमिति तस्य नीलस्य पीतभिन्नत्वं बोधयति । नीलपीतयोर्विरोधात् । तथा वर्तमानकालिकघटप्रत्यक्षं नायमवर्तमानकालिको घट इति तस्य वर्तमानकालिकघटस्यावर्तमानकालिकघट-भिन्नत्वं बोधयतीत्याशयः ।

—११ संभवादिति । तथा च वर्तमानकालिकघटप्रत्यक्षे नायमवर्तमा-नकालिको घट इति या बुद्धिर्भवति तद्बीजं वर्तमानावर्तमानकालयोर्विरोधो न तु वस्तुविरोध इति वर्तमानकालेऽवर्तमानकालभिन्नत्वमास्तां नाम न तु वस्तुनि भिन्नत्वमिति वस्त्वैक्यमेवेति भावः ।

४९१–१ हेतव इतीति । हेतव इति न वाच्यमित्यन्वयः ।

—३ कपालोत्पत्तीति । घटविनाशस्य कपालत्वावस्थापत्तिव्यतिरिक्तत्वाङ्गी-कारेपि मुद्गरादेर्घटविनाशं प्रत्येव हेतुत्वं युक्तं न तु तस्य कपालोत्पत्तिहेतुत्वम् । आनन्तर्यात् । न हि मुद्गराभिघातेपि घटेऽविनष्टे कपालोत्पत्तिर्भवति । किं तु मुद्गराभिघातेन घटनाशे सत्येव । तथा च मुद्गरस्य स्वव्यापाराव्यवहितोत्तर-कालभाविघटनाशं प्रत्येव हेतुत्वं न तु तद्व्यवहितोत्तरकालभाविकपालोत्पत्तिं प्रति हेतुत्वमिति बोध्यम् ।

—९ दुःशक इति । तथा च स्वार्थानुमानं न संभवतीति भावः ।

—१० नोपपद्यत इति । तथा च परार्थानुमानमपि न संभवतीति भावः ॥ २४ ॥

४९२–१ स्वाकारेति । स्वाकारसमर्पणद्वारा यो ज्ञानहेतुर्भवति तस्यैव ज्ञानविषयत्वं स्वीक्रियते । घटपटादिर्विषयो हि स्वस्वज्ञाने स्वाकारं समर्पयन्नेव हेतुर्भवति । समर्पिताकारभेदेनैव चेदं घटज्ञानमिदं पटज्ञानमिति ज्ञानभेद उपपद्यत इति भावः ।

—३ ज्ञानाकारसिद्धिरिति । एतद्योगाचारमतम् । एतन्मते बाह्यार्थस्या-स्तित्वमेव नास्ति कुतः पुनरनुमेयत्वम् । एतन्मतं सौत्रान्तिको दूषयति–नील-ज्ञानसंततावित्यादिना ।

—५ न धर्ममात्रस्येति । किं तु धर्मविशिष्टधर्मिणः संक्रमणं दृश्यते । तथा चात्र सौत्रान्तिकोक्तं केवलाकारसंक्रमणं सुतरां न संभवतीति भावः ॥२५॥

—१३ उदासीनानामिति । वैभाषिकसौत्रान्तिकयोर्द्वयोरपि साधारणमिदं दूषणम् ।

—१७ संस्कारादिक इति । स्वर्गादिहेतुभूतविशेषः संस्कारादिः । मोक्ष-हेतुर्विशेषो विद्यादिः ( श्रु. ) ॥ २६ ॥ ( ३ )

४९३-२ यदुक्तमिति । सौत्रान्तिकैरिति शेषः ।

—३ अर्थवदिति । यथेतरेषां मते घटादयः पदार्थाः साकारास्तथैतेषां योगाचाराणां मते ज्ञानान्येव स्वभावतः साकाराणि । घटादयः पदार्थाः पुनर्नैव सन्ति । अयं घट इत्यादयः प्रतिभासा ज्ञानस्यैव । सर्वत्र ज्ञानमेव बहिर्वदवभासते । ज्ञानाकाराश्च सर्वे न सजातीयाः किं तु विजातीया अपि । ज्ञानानि च प्रतिक्षणं भिद्यन्ते । तत्र यदा ज्ञानानां सजातीयः प्रवाहः प्रवर्तते तदा पूर्वक्षणिकं घटज्ञानमुत्तरक्षणिकघटज्ञानस्योत्पादकम् । तदपि तदुत्तरक्षणिकघटज्ञानस्योत्पादकम् । ततो यदा घटनाशात्कपालदर्शनेन विद्यमान एव घटेऽन्यकपालदर्शनेन पटादिदर्शनेन वेदं कपालमयं पट इत्येवं विजातीयप्रवाहप्रवृत्तिस्तदा सजातीयज्ञानप्रवाहस्थं चरमक्षणिकं घटज्ञानमेव विजातीयज्ञानप्रवाहस्थप्रथमक्षणिककपालादिज्ञानस्योत्पादकं भवति । यथा बाह्यपदार्थवादिसौत्रान्तिकवैभाषिकमतेष्यन्तिमक्षणिकघट एव विजातीयकपालाद्युत्पादकोऽवश्यमभ्युपेयते तथैतन्मते पूर्वज्ञानं स्वविजातीयज्ञानोत्पादकमपि भवतीत्यभ्युपेयते ।

—१० अर्थस्यापीति । घटादिपदार्थस्य यदा ज्ञानेन प्रकाशो भवति तदैवायं घट इति व्यवहारो भवति । अत एव यस्य यथा ज्ञानं जायते स एव तथैव व्यवहरति नान्यो नापि च स एवान्यप्रकारेणेति भावः ।

—१२ अवश्यमिति । बाह्यपदार्थवादिमतेपि ज्ञानं सूर्यादिवत्स्वयं प्रकाशमानमेवान्यं प्रकाशयेदिति ज्ञानस्य साकारत्वमवश्याश्रयणीयमेव । तत्रायं घट इत्यादौ घटतज्ज्ञानयोर्द्वयोः साकारयोराकारद्वयं नोपलभ्यते । किं त्वेक एव । स चोभयवादिसंमतो ज्ञानस्यैवाङ्गीकार्य इत्याशयः ।

—१४ ज्ञानार्थयोरिति । घटादिर्बाह्यः पदार्थो यदि ज्ञानाद्भिन्नश्चेज्ज्ञानोपलब्धिं विनापि पदार्थोपलब्धिः स्यात् । पदार्थोपलब्धिं विनापि ज्ञानोपलब्धिः स्यात् । तथा तु कदापि न भवतीत्यतो ज्ञानादव्यतिरिक्तोर्थ इति सिध्यति ।

—१६ तत्तदर्थेति । ज्ञानस्य घटादिसर्वविषयसाधारणत्वे यद्घटज्ञानं तदेव पटज्ञानमित्यपि व्यवह्रियेत । तथाव्यवहाराभावाच्च घटज्ञानपटज्ञानादीनां परस्परं भेदोऽवश्यं वाच्यः । स च ज्ञानानां स्वस्वविषयसमानाकाराङ्गीकारेणैव सिद्धो भवति नान्यथा । तथा च साकारज्ञानेनैव सर्वव्यवहारोपपत्तौ तदतिरिक्तबाह्यार्थसद्भावकल्पनायां न किंचित्प्रमाणमित्याशयः ।

४९४-६ वेदवादेति । वयं वेदं प्रमाणत्वेन स्वीकुर्म इति छद्मना यैर्गुप्तरीत्या बौद्धानां ज्ञानमात्रास्तित्ववादिनां योगाचाराणां मतं स्वीकृतं ते वेदवादच्छद्मप्रच्छन्नबौद्धा मायाविनः ।

—११ हास्यमिति । सहोपलम्भनियमो हि भेदहेतुः । यतः साहित्यं द्वयोरेव दृश्यते । तादृशश्च स नियमः स्वमूलभूतभेदविरुद्धमवैलक्षण्यमभेदं कथं साध-

येत् । तथा च तस्मादभेदसाधनं हास्यास्पदमेव । ज्ञानानामयं घटोयं पट इत्येवं स्वस्वविषयीभूतघटादिवस्तुव्यवहारानुगुण्यापादनैकस्वभावत्वेन ज्ञानविषययोः सहोपलम्भनियमो न तु तयोरभेदादित्याशयः ।

४९.४-११ निरन्वयेति । घटादीनां हि नाशोत्तरं कपालादिरूपेण संबन्धो दृश्यते । तथा च तत्र नाशस्य सान्वयत्वम् । ज्ञानस्य तु नाशोत्तरं न कथमपि संबन्धो दृश्यत इति तन्नाशस्य निरन्वयत्वम् ।

—१६ ज्ञानमपीति । एतेन ज्ञानस्य द्रव्यत्वाभावात्तस्य घटादिना विषयेण सह संबन्धः संयोगो न संभवति । द्रव्ययोरेव संयोग इति नियमादिति नैयायिकोक्तमपास्तम् ॥ २७ ॥

४९.५-३-५ सर्वेषां चेति । अयं घट इत्यादि ज्ञानं घटादिपदार्थशून्यं ज्ञानत्वात्स्वाप्नज्ञानवदिति हि बौद्धाभिमतमनुमानम् । एतदनुमानज्ञानमर्थशून्यत्वरूपस्वविषयशून्यमथ वा तत्सहितम् । आद्येऽनुमेयोर्थो न सिध्यति । अन्त्ये त्वस्यैवानुमानज्ञानस्यार्थसहितत्वेन यद्यज्ज्ञानं तत्तदर्थशून्यमिति व्याप्तेर्वक्तुमशक्यतया ज्ञानत्वरूपो हेतुर्व्यभिचरित इत्यसद्धेतुः स्यादिति भावः ॥ २८ ॥ २९ ॥ (४)

—१३ अर्थाभ्युपगमेति । बाह्याभ्यन्तरपदार्थान्स्वीकृत्य क्षणिकत्वादयस्तद्धर्मा उक्ताः । वस्तुतस्ते पदार्था एव न सन्तीत्यर्थः ।

—१६ अहेतुसाध्यतयेति । यदि सत्तत्वं स्यात्तर्हि तस्यावश्यं हेतुर्वक्तव्यः स्यात् । स तु वक्तुं न शक्यत इत्यर्थादेव शून्यं तत्त्वं सिध्यति ।

—१७ सत एवेति । न तु शून्यस्येत्याशयः । ननु सदेव तत्त्वं स्यात् । तस्य सहेतुकत्वाद्धेत्वपेक्षा चेत्स्यान्नाम कश्चित्तत्र हेतुरिति कथं शून्यसिद्धिरिति चेत्तत्राह-तच्च सदिति ।

४९.६-६ दोषेति । प्राग्दृश्यम् ( विवृति-पृ. ८२ प. १९ )

—११ अन्यथा वेति । अत्रान्यथाशब्देनोभयात्मकमनुभयात्मकं चेति पक्षद्वयं गृह्यते । तत्राद्यः सत्पक्षो माध्यमिकासंमत एवात्र दृष्टान्तार्थमुपन्यस्तः । यथा सत्पक्षे वस्तुनः सत्यत्वं तथाऽसत्पक्षेपि स्यात् । असच्छब्दो ह्यभाववाची । अभावश्च क्वचिद्विद्यमानस्यैव वस्तुनोन्यत्र भवतीति वस्तुनः सत्यत्वं गले पतितमेव । उभयात्मकत्वं तु विरुद्धमेव । अनुभयात्मकत्वे तु सदसदेतदुभयविलक्षणायां तृतीयावस्थायां स्वीकृतायामवस्थावतस्तुच्छत्वं न संभवति । सर्वथापि माध्यमिकानुमतं तुच्छत्वं न सिध्यतीत्याशयः ॥ ३० ॥ ( ५ )

४९.७-४ गतिहेतुभूत इति । मोक्षहेतुभूत इत्यर्थः ।

—११ अनेकेति । अस्तीति कायते शब्द्यत इत्यस्तिकायशब्दः पदार्थवाची । स चात्र योगरूढ्याणुव्यतिरिक्तेषु वर्तते ।

४९७-१४ सम्यग्ज्ञानेति । मोहरहितं ज्ञानं सम्यग्ज्ञानम् । तच्च श्रवणमननाद्यभ्यासपाटवेनेन्द्रियासंयमरूपाया अविरतेर्ज्ञानावरकस्य वस्तुतत्त्वानिश्चयरूपमिथ्यादर्शनस्य पुण्यकर्मानुत्साहरूपप्रमादस्य चोपशमे सति स्वयमेव समुदेति । शरदि मेघापाये भानुवत् । अत एव ज्ञानं स्वयंप्रकाशमिति व्यवह्रियते । आर्हतोपदिष्टेर्थे विश्वासः सम्यग्दर्शनम् । मुमुक्षोः पापकर्मभ्यो विरतिः सम्यक्चारित्रम् । एतानि समुदितानि मोक्षकारणं न प्रत्येकम् । सम्यग्ज्ञानादित्रयमस्मिन्छास्त्रे रत्नशब्देनोच्यते ।

—१७ घातिकर्मेति । ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमन्तरायमिति घातिकर्मचतुष्टयम् । तत्र सम्यग्ज्ञानं न मोक्षसाधनम् । न हि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते । इदं सम्यग्ज्ञानस्य प्रतिघातकरम् । आर्हतमताभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म । इदं सम्यग्दर्शनस्य प्रतिघातकरम् । बहुषु परस्परविरुद्धेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म । इदं वीर्यस्य प्रतिघातकरम् । मोहे जाते सदपि वीर्यमकिंचित्करं भवति । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं कर्म । इदं मोक्षसुखप्रतिघातकरम् । इमानि श्रेयोहन्तृत्वाद्घातिकर्माण्युच्यन्ते । वेदनीयं नामिकं गोत्रिकमायुष्कमित्यघातिकर्मचतुष्टयम् । सक्रियस्य शुक्रशोणितरूपबीजस्य पावकपवनवशादीषद्घनीभावः शरीराकारपरिणामहेतुर्वेदनीयम् । तच्छक्तिमति तस्मिन्बीजे द्रवीभावात्मककललावस्थाया बुद्बुदावस्थायाश्चारम्भकः क्रियाविशेषः शरीराभिमानहेतुर्नामिकम् । तत्त्वज्ञानानुकूलदेहपरिणामशक्तिरूपं शरीरस्थितिहेतुभूतं गोत्रिकम् । शुक्रशोणितमिश्रणे जाते मिलितं तदुभयरूपं सुखादिहेतुभूतमायुष्कम् ।

—२० तप इति । केशोलुञ्चनादीत्यर्थः ।

४९८-१ पृथिव्यादीति । पार्थिवाप्यतैजसवायवीयभेदेन परमाणूनां चातुर्विध्यं यद्वैशेषिका अभ्युपगच्छन्ति तदस्मिन्मते नास्तीत्यर्थः ।

—४ सत्त्वासत्त्वेति । अभिन्नत्वमेकत्वम् । तत्र द्रव्यस्वरूपस्य सद्बुद्धिबोध्यत्वात्स्थिरत्वादेकत्वाच्च तेन रूपेण सत्त्वं नित्यत्वमेकत्वं च युक्तम् । द्रव्यस्यावस्थाविशेषा ये घटपटादयस्तेषामसद्बुद्धिबोध्यत्वादस्थिरत्वादनेकत्वाच्च तेन रूपेणासत्त्वमनित्यत्वमनेकत्वं च युक्तम् । उभयाकारप्रतीतेश्चोभयमप्युपपन्नमित्यनैकान्तिकं सर्वम् । अनैकान्तिकमव्यवस्थितम् । यदि वस्तु सत्त्वादीनामेकतमेन व्यवस्थितं स्यात्तदा तस्य सर्वथा सर्वदा सर्वत्र सर्वात्मना नियमे तज्जिघृक्षाजिहासाभ्यां प्रवृत्तिनिवृत्त्ययोगात्प्रवृत्तिनिवृत्तिरहितमेव जगत्स्यात् । अस्थिरत्वे तु कस्यचित्कथंचित्केनचिद्रूपेणावस्थाने हानोपादाने संभवत इति प्रवृत्तिनिवृत्तिसंभवः । अत्रेदं बोध्यम्—पाटलिपुत्रदेशे शिशिरकर्तौ विद्यमानः पार्थिव

श्यामो घटादिर्द्रव्यतः पार्थिवत्वेनास्ति नाप्यत्वेन । क्षेत्रतः पाटलिपुत्रकत्वेनास्ति न कान्यकुब्जादित्वेन । कालतः शिशिरत्वेनास्ति न वासन्तिकत्वेन । भावतः श्यामत्वेनास्ति न रक्तादित्वेनेत्यवस्थाविशेषाणां घटादीनां भावाभावरूपत्वम् । तथा च स्वद्रव्यक्षेत्रकालभावरूपेणास्तीति विधिकल्पना । परद्रव्यक्षेत्रकालभावरूपेण नास्तीति निषेधकल्पनेति । तत्र स्यादस्त्येव सर्वमिति विधिकल्पनया स्यादस्तीति प्रथमो भङ्गः । स्यान्नास्त्येव सर्वमिति निषेधकल्पनया स्यान्नास्तीति द्वितीयो भङ्गः । स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया स्यादस्ति च नास्ति चेति तृतीयो भङ्गः । स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया स्यादवक्तव्यमिति चतुर्थो भङ्गः । स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च स्यादस्ति चावक्तव्यं चेति पञ्चमो भङ्गः । स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च स्यान्नास्ति चावक्तव्यं चेति षष्ठो भङ्गः । स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च स्यादस्ति च नास्ति चावक्तव्यं चेति सप्तमो भङ्गः । अयमेव सप्तभङ्गीनय इत्युच्यते । स्यादस्त्येवेत्याद्येवशब्दस्त्वनभिमतार्थव्यावृत्तिं दर्शयति न तु नियमम् । अत एव संभावनाद्योतकः स्याच्छब्दः प्रयुज्यते ।

५०१-१ कालस्येति । क्षणमयं निष्टनीत्यादिप्रकारेण तत्तदर्थविशेषणतया प्रतीतेरिति भावः । एतेन जैनाभ्युपगतं कालस्याणुत्वं परास्तम् ।

—६ कथं पुनरिति । स्वमतखण्डनमसहमानेन जैनेन ममैव भवतोपि मतमयुक्तमित्याशयेनेदमाशङ्क्यते । श्रोत्रियेत्युपहासोक्तिः । ततः सिद्धान्तिन उत्तरं सर्वचेतनेत्यादि ।

—८ अत्यन्तवैलक्षण्यमिति । तथा च शरीरभूतजीवगतानां दोषाणां शरीरिणि ब्रह्मणि स्पर्शलेशोपि नास्तीति न किंचिद्दूषणमिति भावः ।

—९ एकद्रव्यपर्यायत्वाभावादिति । न हि षडपि द्रव्याण्येकस्यैव द्रव्यस्यावस्थाविशेषभूतानीति भावः ।

—१३ अन्योन्येति । तथा च षण्णां द्रव्याणां मिलितानामेकत्वं केनापि रूपेण नास्तीति तत्रानेकत्वस्य व्यवस्थितत्वात्सर्वमव्यवस्थितमित्यभ्युपगमविरोध इति भावः ॥ ३१ ॥

—१८ असंख्यातप्रदेश इति । अनेकावयव इत्यर्थः ।

—२० प्रसज्यत इति । कृत्स्नस्यात्मनः पिपीलिका-( मुंगी इति प्र. ) शरीरे प्रवेशासंभवादिति भावः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ( ६ )

५०२-१-२ निमित्तेति । पशुपतिः केवलं जगतो निमित्तकारणम् ।

जगदुपादानकारणं तु पशुपतेः सकाशादन्यदेव । तच्च प्रधानम् । मुद्रिकाषट्क-धारणादिकं च मोक्षसाधनमित्याचक्षत इति भावः ।

५०१–२१ **मुद्रिकेति** । मुद्रिकाषट्कधारणादयो बहुषु तन्त्रेषूक्ताः क्रमेणात्र परिगणिताः । न त्वेकत्रोक्ताः (श्रु. ) । तथा चानेकत्रानेकसाधनोक्त्या युगपदे-तेषां सर्वेषां साधनानामनुष्ठानस्याशक्यतया च विरोध इत्याशयः ।

५०२–२ **नारायणमेवेति** । एवशब्देन प्रधानव्यावृत्तिः ।

—७ **परमपुरुषवेदनमेवेति** । एवशब्देन मुद्रिकाषट्कधारणादिव्यावृत्तिः ।

—१३ **एकतां गता इति** । मोक्षसाधनपराणां सर्वेषां वेदान्तवाक्यानां सर्वशाखाप्रत्ययन्यायेनैकवाक्यत्वादिति भावः । एतन्न्यायस्वरूपं प्रागुक्तम् ( विवृति–पृ. २५ प. २५ ) ।

—१३–४ **तदितिकर्तव्यताभूतमिति** । मोक्षसाधनभूतोपासनाङ्गभूत-मित्यर्थः । **यज्ञादिकमेवेति** । एवशब्देन कपालपात्रभोजनादिव्यावृत्तिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ( ७ )

५०४–९ **संकर्षणो नामेति** । संकर्षण इति विशेष्यम् । जीव इति तस्य विशेषणम् । जीवशब्दो जीवाधिष्ठातृपरः । जीवाधिष्ठाता यः संकर्षणः स वासुदेवाज्जायते । वासुदेव एव संकर्षणरूपेणाविर्भवतीति स्वेच्छावतार एवात्रा-भिधीयत इति तात्पर्यम् । तथा च नात्र जीवस्योत्पत्तिरुच्यत इति सिद्धान्तेर्थः । एवमेव तस्मात्संकर्षणान्मनोधिष्ठाता प्रद्युम्नो जायते । तस्माच्चाहंकाराधिष्ठाना-निरुद्धो जायत इति बोध्यम् । पूर्वपक्षी त्वेवं मन्यते–जीव इति विशेष्यं संकर्षण इति तस्य विशेषणम् । संकर्षणसंज्ञको यो जीवविशेषः स वासुदेवादुत्पद्यत इत्यर्थः । तथा चास्यां भागवतप्रक्रियायां जीवस्योत्पत्तिर्या प्रतिपादिता सा श्रुति-विरुद्धा भवतीति ॥ ३९ ॥ ४० ॥

—२४ **विज्ञानमिति** । विज्ञानं चेतनम् । आदि मूलकारणम् । विज्ञानं च तदादि चेति कर्मधारयः । परब्रह्मेत्यर्थः । तस्य भावो विज्ञानादिभावः परब्रह्म-भावः । संकर्षणादीनां परब्रह्मभावे सति भागवतप्रक्रियायां स्वेच्छावतार एवा-भिधीयत इत्यर्थादेव सिद्धं भवति । तथा च श्रुतिविरुद्धा या जीवस्योत्पत्तिः सात्र सुतरां न प्रतीयत इत्याशयः ।

५०५–७ **कर्तव्यत्वेनेति** । इदं वचनमागमशब्दनिर्वचनपरम् । स्वसंज्ञा-भिर्नमःशब्दाद्युपेतैस्तत्तद्व्यूहनामभिश्चातुरात्म्यं व्यूहप्रकारचतुष्टयं कर्तव्यमिति बुद्ध्या क्रमेणोपास्यतया यत्र प्रतिपाद्यते तदागमपदवाच्यमित्यर्थः ।

—१३ **संपूर्णेति** । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः । तत्र ज्ञानं नाम सर्वदा सर्वविषयप्रकाशकः स्वप्रकाशो गुणविशेषः । शक्तिर्जगत्प्रकृतिभावोऽघ-

टितघटनासामर्थ्यं वा। बलं जगत्कारणत्वप्रयुक्तश्रमाभावः समस्तवस्तुधारणसामर्थ्यं वा। ऐश्वर्यं कर्तृत्वलक्षणं स्वातन्त्र्यं समस्तवस्तुनियमनसामर्थ्यं वा। वीर्यं जगदुपादानत्वेपि स्वरूपविकाराभावः। तेजः सहकारिनैरपेक्ष्यं पराभिभवनसामर्थ्यं वा। एतैः षड्भिर्गुणैः पूर्णं वासुदेवाख्यं परं ब्रह्मेत्यर्थः।

५०५-१५ **परं ब्रह्मेति**। परं सूक्ष्ममित्येकार्थं पदद्वयम्।

—१८ **चतुर्व्यूह इति**। चतुर्विभाग इत्यर्थः॥ ४१॥

५०६-१७ **यथोपपद्यत इति**। नित्यस्यैव जीवस्य शरीरसंबन्धेन भोक्तृत्वानुगुणज्ञानप्रकाशो यदा जायते तदा जीव उत्पद्यत इति व्यवह्रियते। ज्ञानसंकोचकाले तु म्रियत इति व्यवह्रियत इति भावः।

५०७-७ **उदितहोमप्रशंसार्थेति**। यद्यपि प्रातः प्रातरित्यादिवाक्येन सूर्योदयात्प्राग्घोमकर्तॄणां निन्दा प्रतिपाद्यते तथापि न तद्वाक्यस्य स्वार्थे तात्पर्यं किं तु सूर्योदयोत्तरं होमकर्तॄणां प्रशंसायामेव तात्पर्यं तद्वदत्रापि न वेदनिन्दायां साङ्ख्येष्विति वाक्यतात्पर्यं किं तु पञ्चरात्रप्रशंसायामेव। न हि निन्दा निन्द्यं निन्दितुं प्रक्रमतेऽपि तु स्तुत्यं स्तोतुमिति न्यायात्।

—१२ **भूमविद्याप्रशंसार्थमिति**। न तु ऋग्वेदादिनिन्दायां तत्तात्पर्यमिति भावः।

—१४ **एवमेव शाण्डिल्यस्येति**। शाण्डिल्यस्य पञ्चरात्रशास्त्राभ्यासपर्यन्तं वेदवाक्यादर्थप्रतिपत्तिर्विशदा नाभूदिति तदभिप्रायः।

५०८-७-१२ **अपारकारुण्येति**। प्राणिमात्रेषु दुःखासहिष्णुत्वं कारुण्यम्। महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभावत्वं सौशील्यम्। दोषेपि गुणत्वबुद्धिर्दोषादर्शित्वं वा वात्सल्यम्। प्रभुत्वे दुरवाप्यतृप्तत्वमौदार्यम्। **स्वयमेवेति**। तदुक्तम्—पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयमिति। एतेन कर्तृदोषसंभावना नास्तीति सूचितम्। यत्तु पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम्। वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवानिति वचनं तत्र वेदभ्रष्टानित्यस्यासंदिग्धवेदार्थज्ञानाभाववत इत्यर्थो बोध्य इति न तद्वचनविरोधः शङ्कनीयः। अत एव

> अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि।
> आचारेण प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः॥
> ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते।
> शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति॥

इति वराहपुराणे भगवतोक्तम्। ननु पञ्चरात्रकर्तरि माभूद्विभ्रमः। विप्रलिप्सा तु स्यादेव। दृष्टा हि भगवतोपि विप्रलिप्सा त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारयेत्यादाविति चेन्न। द्विधा खलु भगवतः प्रवृत्तिरसुरमोहनार्थमाश्रितसंरक्षणार्थं च। पञ्चरात्रे सात्त्विकजनसंरक्षणार्थमेव प्रवृत्तिः। अत एव सत्त्वोत्तराः शाण्डिल्यादय एव तच्छास्त्रप्रवक्तारः। तथा च पञ्चरात्रं न विप्रलिप्सामूलकमिति बोध्यम्॥ ४२॥ (८)

## अथ द्वितीयाध्यायस्य तृतीयः पादः प्रारभ्यते ।

५१३-३ **न वियदिति** । सूत्रार्थः प्रागुक्तः ( विवृति-पृ. १२२ प. ३१ )। अस्मिन्नधिकरणे प्रथमं सूत्रं पूर्वपक्षिणः । द्वितीयं सिद्धान्तिनः । पुनस्तृतीयं चतुर्थं चेति सूत्रद्वयं पूर्वपक्षिणः । तदुत्तरं सूत्रपञ्चकं सिद्धान्तिन इति बोध्यम् ।

—४ **सांख्यादीति** । सांख्यादीनि यानि वेदबाह्यतन्त्राणि तेषामित्यर्थः ।

—६ **ब्रह्मकार्यतयेति** । न च चिच्छब्दवाच्यानां जीवानां नित्यत्वेन ब्रह्मकार्यत्वं न संभवतीति वाच्यम् । जीवनिष्ठज्ञानस्य भोक्तृत्वानुकूलः प्रकाशो ब्रह्मणः सकाशाज्जायत इति तद्द्वारा जीवानां ब्रह्मकार्यत्वव्यवहारात् ।

—१० **न खल्विति** । तथा चानुमानम्—वियन्नित्यं निरवयवत्वात्सर्वगतत्वादात्मवत् । एवं च सूत्रे श्रुतिपदं संभवनीयार्थप्रतिपादकश्रुतिपरं बोध्यमिति वियदुत्पत्तिप्रतिपादिकायास्तैत्तिरीयश्रुतेः सत्त्वेऽपि न क्षतिः । तथा चोक्तानुमानसिद्धार्थविरोधात्तैत्तिरीयश्रुतिर्बाध्यते । मुख्यार्थत्वेन न स्वीक्रियत इति बोध्यम् ॥ १ ॥ २ ॥ ३ ॥

५१४-१६ **कथमिति** । आत्मन आकाशः संभूत इति वाक्ये संभूतशब्दः पूर्वपक्षिमतेन गौणार्थप्रतिपादकः । स एव संभूतशब्दस्तदुत्तरवाक्ये वायोरग्निरित्यत्र संबद्धो मुख्यार्थप्रतिपादक इत्येकस्यैव संभूतशब्दस्य प्रकारद्वयेनार्थप्रतिपादकत्वं न संभवतीति शङ्काशयः । शङ्कश्चायं सिद्धान्त्यनुसारी ।

५१५-१-३ **तस्मादिति** । तच्छब्देन परब्रह्मणः परामर्शः । श्रुतिस्थब्रह्मशब्देनाव्याकृताख्यं ब्रह्म गृह्यते । प्रधानमिति यावत् । प्रधानं नाम रूपमन्नं च परब्रह्मणः सकाशादुत्पद्यत इति श्रुत्यर्थः । तपसेति । ब्रह्मशब्दोऽत्र परब्रह्मवाची । तच्च परं ब्रह्म तपसा ज्ञानेन चीयते । बहु स्यामिति संकल्परूपेण सृष्ट्युन्मुखं भवति । तस्मात्परब्रह्मणः सकाशादन्नमुत्पद्यते । अन्नशब्देनात्र भोक्तृभोग्यरूपचेतनाचेतनसंघातलक्षणमव्याकृतं गृह्यते ।

—४ **अनुषङ्गं चेति** । अनुषङ्गः संबन्धः । यथा पूर्ववाक्यस्थस्य कस्यचित्पदस्योत्तरवाक्ये संबन्धे तस्यैकस्यैव पदस्य पूर्ववाक्य उत्तरवाक्ये चोक्तं द्विवारं श्रवणं भवति तथा तेनैकेनैव शब्देनार्थप्रतिपादनमपि द्विवारं क्रियत इति प्रकारभेदेनाप्यर्थप्रतिपादकत्वं संभवत्येव । अभिधानावृत्तेरेव श्रवणावृत्तिरूपत्वात् । अभिधानं बोधनव्यापारः ॥ ४ ॥

—१२ **ब्रह्मकार्यत्वेनेति** । न च यथा जीवानां नित्यानां ब्रह्मकार्यत्वाभावेऽपि ब्रह्मशरीरत्वेन ब्रह्मणः सकाशादव्यतिरेकस्तथाकाशस्यापि स्यादिति वाच्यम् । यथा सोम्यैकेन मृत्पिण्डेनेत्यादिश्रुतिप्रतिपादितमृत्पिण्डकार्यादिदृष्टान्तानुसारेण ब्रह्मकार्यत्वेनैव ब्रह्माव्यतिरेकस्याकाशे विवक्षितत्वात् ॥ ५ ॥

• ५१५-१९ **वियदुत्पत्त्युपन्यसनमात्रेणेति** । मात्रपदेन प्रथमत इत्यादिशब्दव्यावृत्तिः । छान्दोग्ये आकाशोत्पत्तिमकथयित्वा तत्तेजोऽसृजतेति तेजउत्पत्तिः कथिता । एतावतैव तत्र तेजःसृष्टेः प्राथम्यं प्रती[illegible] । न हि तत्तेजोऽसृजतेत्यत्र प्रथमत इत्यादिः प्राथम्यबोधकः शब्दः कश्चन [illegible] ॥ ६ ॥ ७ ॥

५१६-८ **पृथग्योगेनेति** । योगः सूत्रम् । ननु [illegible] गः प्रत्युक्तः ( ब्र.सू. २।१।३ ) इति सूत्रेऽधिकाशङ्कानिरासार्थं [illegible] नं तथात्राधिकाशङ्कास्ति चेदुच्यताम् । नास्ति चेत्किमर्थं पृथक्सूत्रकरणम् । एकेन सूत्रेणाकाशवाय्वोरुभयोरुत्पत्तिर्वक्तव्येति चेत्सत्यम् । तथा सति तेजोऽतः ( ब्र. सू. २।३।१०) इत्युत्तरसूत्रस्थातःशब्देनाभयोः परामर्शे तेजस [illegible] सकाशात्कथिता स्यात् । तथा तु सा न भवति । किं त्वेकस्मादेव वायोः । तथा चोत्तरत्रैकस्य वायोः परामर्शार्थं वायूत्पत्तिप्रतिपादकं पृथक्सूत्रमेतत्कृतमिति भावः ॥ ॥

--११ **तुशब्दोऽवधारणार्थ इति** । स च स्व इत्युत्तर योज्यः ॥ ९ ॥ (१)

--१४ **तेजोऽत इति** । एतदादि सूत्रचतुष्टयं पूर्वपक्षिणः । परब्रह्मण सकाशात्प्रधानमुत्पद्यते । प्रधानान्महत्तत्त्वम् । महत्तत्त्वादहंकारः । अहंकारादाकाशः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवीत्यादिः सृष्टिक्रमः । एतद्विस्तरः प्रधानादीनां लक्षणानि च सर्वान्तरानन्ददीपिकाप्रकाश-( पृ. ३६ ) तोऽवगन्तव्यानि । तत्र महत्तत्त्वं केवलात्प्रधानादुत्पद्यतेऽथ वा प्रधानशरीरकात्परब्रह्मणः । तथाहंकारः केवलान्महत्तत्त्वादुत्पद्यतेऽथ वा महत्तत्त्वशरीरकात्परब्रह्मणः । एवं सर्वत्रोत्पत्तिविषये संशयः । केवलात्पूर्वतत्त्वादुत्तरत[illegible]स्योत्पत्तिरिति पूर्वपक्षः । पूर्वतत्त्वशरीरकात्परब्रह्मणः सकाशादुत्तरतत्त्वोत्पत्तिरिति सिद्धान्तः । सूत्रार्थस्तु यतः श्रुतिस्तथा वायोरग्निरित्याह तत्तेजोऽतः केवलाद्वायोः सकाशादुत्पद्यते । अनेनैव न्यायेन सर्वतत्त्वानां पूर्वतत्त्वात्केवलादुत्पत्तिरिति ।

--२१ **तत्तद्रूपादिति** । तत्तच्छरीरकादित्यर्थः ॥ १० ॥

५१७-३ **आप इति** । अत्र सूत्रे पृथिवीत्युत्तरसूत्रे च पूर्वसूत्रादतस्तथा ह्याहेत्यनुवर्तते । सूत्रार्थः पूर्ववत् ॥ ११ ॥

—७ **ता अन्नमिति** । ता आपः । अन्नं पृथिवीम् ॥ १२ ॥

--१० **अधिकारेणेति** । अधिकारः प्रकरणम् ।

—१२ **अदनीयस्येति** । अद्यते तदन्नम् । अदनीयमित्यर्थः । तच्चादनीयं वस्तु पृथिव्याः कार्यमिति कार्यवाचकेनान्नशब्देन स्वकारणभूता पृथिवी लक्ष्यत इति भावः ।

—१५ **सजातीयमिति** । भूतत्वेन सजातीयं वस्तु पृथिवीत्यर्थः । प्रसिद्धमन्नशब्दवाच्यं हि भौतिकं न तु भूतम् । अत्र साजात्यात्प्रसिद्धार्थत्याग इत्याशयः ।

५१७–१९ यथाश्रुतीति। श्रुतौ ह्याकाशाद्वायुरित्येवोच्यते न त्वाकाशशरीरकात्परब्रह्मणो वायुरिति ॥ १३ ॥

५१८–६ तदभिध्यानादिति। तस्य बहुभवनस्याभिध्यानं संकल्पः। तल्लिङ्गं परमात्मलिङ्गम्। एवशब्दः स इत्युत्तरं योज्यः।

—१२ महदहंकारेति। यद्यपि श्रुतौ महत्तत्त्वादीनामीक्षणं नोक्तं तथापि तेजःप्रभृतीनामीक्षणस्योक्तत्वादन्यत्रापीक्षणं गम्यते। महत्तत्त्वादीनां तेजःप्रभृतीनां च परमपुरुषशरीरत्वेन साम्यात् ॥ १४ ॥

—२३ ब्रह्मण इति। पञ्चम्यन्तं पदम्। ब्रह्मणः सकाशादित्यर्थः।

५१९–४ एतस्मादिति। एतस्माज्जायत इत्यादि वाक्यं सर्वस्य वस्तुनो ब्रह्मणः सकाशात्साक्षादुत्पत्तौ ज्ञापकमित्यर्थः। अत्रेदं बोध्यम्–श्रुतौ हि द्विविधः क्रमः प्रतीयते। ब्रह्मणः सकाशात्प्रधानमुत्पद्यते तस्मान्महत्तत्त्वं तस्मादहंकार इत्यादिरेकः। अपरश्च तस्माद्विपरीतः प्रधानमहदहंकारादीनां सर्वेषां ब्रह्मणः सकाशादुत्पत्तिरित्येवंरूपः। तत्र पूर्वतत्त्वशरीरकाद्ब्रह्मणः सकाशादुत्तरतत्त्वस्योत्पत्तौ स्वीक्रियमाणायां द्विविधापि श्रुती रक्षिता भवति। आकाशाद्वायुर्वायोरग्निरित्यादिष्वाकाशादिशब्दानामाकाशाद्यात्मभूतब्रह्मपर्यन्तार्थाभिधायकत्वादिति ॥ १५ ॥

—११ अभिध्यानेति। अभिध्यानलिङ्गेन बहुभवनविषयसंकल्परूपचिह्नेनावगता ज्ञातोत्पत्तिः यते दृढीक्रियत इत्यर्थः।

—१२ खादिषु तावदिति। खमाकाशः। आत्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः (तै. २।१) इत्यादिनैत्तिरीयश्रुतावाकाशोत्पत्त्यनन्तरं वायोरुत्पत्तिस्ततस्तेजस उत्पत्तिरित्यादिरुत्पत्तिविषयकः क्रमः प्रतिपादितः। अत्राप्येतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्युत्तरार्धे स एव क्रमः प्रतीयते। केवलमत्रामुकतत्त्वस्यामुकस्मादुत्पत्तिरित्येवमुत्पत्त्यवधयो न प्रतीयन्ते। एतस्माज्जायत इति तु संनिहितत्वात्प्राणेनैव संबध्यते। प्राणव्यतिरिक्तेषु तु ये तदुत्पत्ताववधयस्तैत्तिरीयश्रुत्युक्तास्त एव गृह्यन्ते। उत्पत्तिक्रमस्योभयत्रैक्येनावधीनामपि तेषामेव स्वीकार्यत्वात्। न चोत्पत्तिक्रमस्यावधीनां चोभयत्रैक्य एतस्माज्जायत इति श्रुतौ किम पूर्वं विधीयत इति वाच्यम्। तैत्तिरीयश्रुत्युक्तानाकाशादीननूद्य तत्रानुक्तयोर्विज्ञानमनसोरुत्पत्तिक्रमस्यात्र मनः सर्वेन्द्रियाणि चेत्यनेन विधीयमानत्वात्। तावत्यंश एवैतस्मादिति श्रुतेस्तात्पर्यकल्पनादिति पूर्वपक्ष्याशयः। सिद्धान्ती त्वेतस्माज्जायत इत्यस्य न केवलं प्राण एव संबन्धः किं तु मनःप्रभृतिषु सर्वेष्वपि। श्रुत्यन्तरोक्तानामवधित्वेनान्वयकल्पनापेक्षया स्ववाक्यस्थस्यैतस्मादित्यस्यैवावधित्वेनान्वयस्योचितत्वात्। तथा चावधिविधायकमेवेदं वाक्यं नोत्प-

त्तिक्रमविधायकमिति मन्यते । सूत्रार्थस्त्वन्तरा मध्ये ( प्राणानन्तरमाकाशात्प्राक् ) विज्ञानमनसी (मन इन्द्रियाणि च ) क्रमेणोत्पद्येते इत्येतस्माज्जायत इत्यत्र विधीयते । तल्लिङ्गात । आकाशादिभिः सपाठलिङ्गादिति चेन्न । प्राणस्य मनःप्रभृतीनां चाविशेषेणैतस्माज्जायत इत्यस्य सर्वैः संबन्धादिति ।

'१९-२१ **क्रमान्तरेति** । पृथिव्यप्सु प्रलीयत आपो ज्योतिषि ज्योतिर्वायौ वायुराकाश आकाश इन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राण्यहंकारेऽहंकारो महति महत्तमसि तमः परे देव एकीभवतीति हि तत्र प्रलयक्रमः प्रतिपादितः । तद्विपरीतो यः सृष्टिक्रमस्तत्र गम्यते स सृष्टिक्रमो भिन्नः । एतस्माज्जायत इत्यत्र प्रतीयमानश्च सृष्टिक्रमो भिन्न इति क्रमान्तरं बोध्यम् ।

'२०-२ **तेजःप्रभृतय इति** । इदं प्रागुक्तम् ( विवृति-पृ. १०१ प. २५ )। तेन तेजसः सकाशादपामुत्पत्तिः कथिता न विरुध्यते ॥ १६ ॥

—४ **उपरुध्यत इति** । लोके घटादयः पदार्था घटादिशब्दैर्व्यवह्रियन्ते । घटादयः सर्वे शब्दा ब्रह्मवाचिनस्तेन व्यवहारो विरुध्यत इत्यर्थः ।

—६ **चराचरेति** । भाक्त इति पदच्छेदः । चराचरव्यपाश्रयः स्थावरजङ्गमपदार्थाश्रयः । व्यपदेशो व्यवहारः । भाक्तो गौणः । स्थावरजङ्गमपदार्थानाश्रित्य जायमानो यो लोके तत्तच्छब्दैर्व्यवहारः स गौणः । स्थावरजङ्गमपदार्थविशिष्टे ब्रह्मणि तत्तच्छब्दैर्यो व्यवहारः स मुख्यः । स तु लोके न भवति । मुख्यार्थस्य ब्रह्मणो ज्ञानाभावात् । तस्य मुख्यार्थज्ञानस्य भावेन सत्त्वेन मुख्यव्यवहारस्य भावित्वात्सत्त्वादिति सूत्रार्थः ।

—९ **वाच्यैकदेश इति** । घटरूपप्रकारविशिष्टस्य प्रकारिभूतस्य ब्रह्मणो वाचको घटशब्दः स्ववाच्यैकदेशे प्रकारभूते केवले घटे लक्षणया प्रयुज्यत इत्यर्थः ।

—११ **प्रकारिप्रतीतीति** । सर्वेशब्दानां ब्रह्मवाचकत्व एव पर्यवसानम् । तस्य ब्रह्मप्रतीत्यधीनत्वाद्देवादिवाचकशब्दानां ब्रह्मप्रतीत्यभावेन मुख्यव्यवहारो लोके न भवति । न तु ब्रह्मवाचकत्वाभावादिति भावः ।

—१३ सूत्रस्यार्थान्तरमाह-अथ वेति । अस्मिन्पक्षे सूत्रेऽभाक्त इति पदच्छेदः । व्यपदेशो वाचकः शब्दः । वाचकत्वस्य वाच्यैकाश्रयत्वात्स्थावरजङ्गमपदार्थरूपवाच्याश्रयो यस्तद्व्यपदेशः स्थावरजङ्गमपदार्थवाचकः शब्दः स ब्रह्मरूपवाच्येऽभाक्तो मुख्य एव । तस्य ब्रह्मणो भावेन सत्त्वेन सर्वशब्दानां वाचकत्वस्य भावित्वात्सत्त्वादिति सूत्रार्थः । वाचकत्वं हि वाच्यैकाश्रयम् । लोके शब्दैर्यद्वाच्यं यच्च तन्निरूपितं शब्दानां वाचकत्वं तत्सर्वं ब्रह्माधीनम् । न हि ब्रह्मसम्बन्धं विना कस्यापि वस्तुनोऽस्तित्वं सिध्यति । ब्रह्मानुप्रवेशेनैव सर्वस्य वस्तुनो नामरूपभाक्त्वात् । अतो ब्रह्मैव सर्वशब्दानां मुख्यं वाच्यमिति भावः ॥ १७ ॥ ( २ )

५२१-१ एकविज्ञानेनेति । जीवस्यानुत्पत्तौ तु तस्य ब्रह्मकार्यत्वाभावेन ब्रह्मणो विज्ञानेपि जीवस्य विज्ञानं न स्यादिति प्रतिज्ञा नोपपद्यते ।

—३ यत इति । जगतः प्रसूतिः सृष्टिर्यतोस्मात्परमात्मनः सकाशात्प्रसूता प्रवृत्ता स परमात्मा तोयेन तोयोपलक्षितभूतपञ्चकेन सह भूम्यां जीवान्वि-ससर्जोत्पादयामासेति पूर्वपक्षिसंमतोर्थः । सिद्धान्ते तु तोयेन भूतपञ्चकेन करणभूतेन जीवाञ्जीवदेहानुत्पादयामासेत्यर्थः ।

—५ सन्मूला इति । सद्ब्रह्म मूलं कारणं यासां प्रजानामित्यर्थः । अनेन जीवानां ब्रह्मकार्यत्वं दर्शितम् ।

५२२-७ भोग्येति । भोग्यं जडवर्गः । भोक्ता जीववर्गः । नियन्ता परमेश्वरः ।

५२३-२ प्रकारद्वय इति । यथा घटस्य घटत्वं प्रकारभूतं यथा वा जीवस्य शरीरं प्रकारभूतं तथा जडवर्गो जीववर्गश्चेत्येतदुभयं परमात्मनः प्रकारभूतम् । प्रकारी परमात्मा ।

—३ अत एवेति । यद्यपि मृत्तिकायाः केवलायाः कारणत्वं परमात्मनस्तु चिदचिद्विशिष्टस्यैव कारणत्वमिति दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यं तथाप्यवस्थान्तरापत्तिमात्रे दृष्टान्तो बोध्य इत्याशयः ।

—६ ईदृशेति । श्रुतौ या जीवस्योत्पत्तिः प्रतिपाद्यते सा ज्ञानविकासकर-देहसंबन्धरूपैव । तथा मरणमपि ज्ञानसंकोचकरदेहवियोगरूपमेवेति भावः ।

—८ अचिद्वदेशवदिति । वैधर्म्ये दृष्टान्तः । यथा जडवर्गस्य स्वरूपान्यथात्वं भवति तथा जीवानां स्वरूपान्यथात्वं न भवति । श्रुतौ जीवस्योत्पत्ति-प्रतिषेधो नित्यत्वं च यत्प्रतिपाद्यते तत्स्वरूपान्यथात्वाभावरूपमेवेति भावः ।

—१२ उभयविधानिष्टेति । जडवर्गस्य यादृशो विकारो यादृशश्च जीव-वर्गस्य तादृश उभयविधोपि विकारः परमात्मन्यनिष्ट एवेत्यर्थः ।

५२४-५-६ विशेष इति । परेषां मते स्वमते चेत्यर्थः । स्वयमेवेति । न हि तन्मते ब्रह्मोपाध्येतदुभयव्यतिरिक्तं तृतीयं किंचिदस्ति । यदौपाधिकब-न्धस्य कारणमुच्येत ॥ १८ ॥ ( ३ )

—१७ जीवस्वरूपमिति । स्वरूपं स्वाभाविक आकारः । तद्विषये सुगता-दीनां विवादः । सुगतो बौद्धः । कपिलः सांख्यः । कणभुग्वैशेषिकः । तत्र ज्ञानमेव जीवस्याकार इति सुगतकपिलमतम् । वैशेषिकमते तु जीवस्याकारो जडः । ज्ञानं तु तन्निष्ठो गुणः । स गुणश्चानित्यः । रामानुजीयानां मते तु ज्ञातैव जीवस्याकारः ।

• ५२५–२ यो विज्ञान इति। न हि ज्ञानवतो ज्ञाने स्थितिः संभवतीत्याशयः।

—४ विज्ञानं यज्ञमिति। अत्र यज्ञकर्तुर्जीवस्य विज्ञानशब्देन निर्देशः।

—७ अपर इति। वैशेषिक इत्यर्थः। सुगतकपिलमतेन ज्ञानमेव जीवस्य स्वाभाविक आकारश्चेत्तथा रामानुजमतेन ज्ञातैव स्वाभाविक आकारश्चेत्तेनाकारेण सर्वदोपलब्धिप्रसङ्गः। जीवस्य विभुत्वेन सर्वत्रोपलब्धिप्रसङ्गश्च। स्वाभाविकस्येतरसाधनानपेक्षत्वेनेन्द्रियाणां वैयर्थ्यं च। किं च तदाकारस्य स्वाभाविकत्वेन सुषुप्त्यादावपि ज्ञानत्वेन ज्ञातृत्वेन वोपलब्धिः स्यादित्याशयः।

—१२ आगन्तुकमेवेति। अस्य किं त्वित्यादिः।

—१३ सर्वत्रेति। सर्वशरीरव्यापिसुखदुःखाद्युपलब्धेरित्यर्थः। किं च देशान्तरेऽपि जीवभोग्यं वस्तूत्पद्यते। तत्र हि जीवादृष्टं कारणमित्यदृष्टस्य देशान्तरे संनिधानमवश्यम्। कार्यकारणयोः सामानाधिकरण्यनियमात्। तच्चादृष्टमाश्रयमन्तरेण न संभवतीत्यगत्या जीवात्मनो विभुत्वमङ्गीकार्यम्। किं च जीवस्य न विभुत्वं नाप्यणुत्वं प्रत्यक्षमुपलभ्यते। जीवस्यातीन्द्रियत्वात्। अथैतस्ततो गमनेनाणुत्वं कल्प्यते विभोर्गमनासंभवादिति चेत्तद्गमनमपि न प्रत्यक्षमुपलभ्यते। न च निदाघे संतापदुःखितस्य जीवस्य सरःसु गमनेन सुखाद्युपलब्धेर्जीवस्य गमनं कल्प्यत इति वाच्यम्। प्रत्यक्षत उपलभ्यमानेन शरीरगमनेनैव तत्सिद्धेः। यद्यपि जीवस्य विभुत्वेन शरीरगमनात्प्रागपि सरःसु जीवो विद्यत एव तथापि भोगसाधनभूतशरीरस्य सरःस्वभावान्न तदा सुखोपलब्धिरिति वैशेषिकाशयः।

५२६–९ पश्य इति। ब्रह्मदर्शीत्यर्थः।

—१० विज्ञानमयं इति। प्राचुर्यार्थे मयट्प्रत्ययः। ज्ञानप्रचुर इत्यर्थः ॥ १९ ॥

—२० प्रद्योतेनेति। हृदयाग्रप्रकाशनेनेत्यर्थः ॥ २० ॥

५२७–७ यद्यपीति। यथा जीवस्य नित्यत्वेऽपि शरीरवियोगरूपं मरणमुपपद्यते तथा जीवस्य विभुत्वेऽपि शरीरवियोगरूपमुत्क्रमणमुपपद्येत। परं तु गमनमागमनं च विभुत्वपक्षे न केनापि रूपान्तरेणोपपद्यते। अतो गमनमागमनं च यथा लोके प्रसिद्धं तथैवात्र वक्तव्यमिति तदर्थं जीवस्याणुत्वमवश्यं स्वीकार्यमिति भावः ॥ २१ ॥

—१० नाणुरिति। अधिकारः प्रकरणम्।

—१५ यस्यानुवित्त इति। प्रतिबुद्ध आत्मा प्राज्ञ आत्मा यस्योपासकस्य जीवस्यानुवित्त उपास्यः। विदिर्ज्ञाने। यद्वाऽनुवित्तः प्राप्यः। विदिर्लाभे (श्रु.) ॥ २२ ॥

५२७–२१ अणुसदृशमिति । अणुत्वेन जीवसदृशं यद्वस्तु बालाग्रशतभागस्य शतभागरूपमराग्रं च तन्निर्दिश्य तत्परिमाणं जीवस्य श्रुतावुच्यत इत्यर्थः ॥२३॥

५२८–५ वेदनेति । सुखदुःखानुभव इत्यर्थः ॥ २४ ॥

—१३ देशविशेषेति । हृन्नासिकानयनश्रोत्रादिमर्मप्रदेशेत्यर्थः । तत्र स्थितश्चन्दनबिन्दुर्यथाह्लादयति तथा नान्यत्र पादादौ स्थित इति भावः ।

—२० देशविशेषेति । हृन्मात्ररूपदेशविशेषेत्यर्थः । चन्दनस्य हृन्मात्ररूपदेशविशेषापेक्षा नास्ति । अन्यत्रापि मर्मणि स्थितस्याह्लादकत्वदर्शनादिति भावः ॥ २५ ॥

५२९–४ सकलदेहमिति । यत्र च सामर्थ्यादय एकैवानेकदेहान्धारयन्ति तत्र तान्सर्वाननेकदेहान्व्याप्य ज्ञानं वर्तत इति तेषां सर्वेषु देहेषु सुखाद्यनुभवः । अविरोधश्चन्दनवत् ( ब्र. सू. २।३।२४ ) इत्युक्तपक्षे तु नेतदुच्यते । न हि चन्दनबिन्दुः शरीरान्तरेष्वाह्लादयति । इयमेव भाष्ये ( श्रीभाष्य-पृ. ५२९ प. १ ) स्वमतेनेत्यनेन सूचिता परमतस्योपर्यरुचिरिति बोध्यम् ॥ २६ ॥

—१४ जानातीति । अत्र प्रकृतिभूतस्य ज्ञाधातोर्ज्ञानमर्थः । स च धर्मः । प्रत्ययार्थस्तु कर्ता । स च धर्मी । अतस्तयोर्धर्मधर्मिणोर्भेदः सिद्ध इत्यर्थः ॥ २७ ॥

—१६ पृथगुपदेशादिति । न केवलं जानातीति पृथगुपलब्धिमात्रम् । किं त्वात्मनः सकाशात्पृथक्त्वेन श्रुता ज्ञानमुपदिश्यत इत्यर्थः ॥ २८ ॥

५३०–७ अस्य सारभूत इति । अस्य जीवस्य । सारभूतो मुख्यः । मुख्यत्वं चास्य स्वरूपानुबन्धिधर्मत्वात् ।

—११ स एक इति । इयं श्रुतिरानन्दस्य गुणत्वप्रदर्शनार्थमुदाहृता । आनन्दस्य सारत्वं तु स्वाभाविकधर्मत्वात्सिद्धम् ।

—१४ सह ब्रह्मणेति । सह ब्रह्मणा विपश्चितेति श्रुतिर्यः सर्वज्ञ इति च श्रुतिर्ज्ञानस्य गुणत्वप्रदर्शनार्थमुदाहृता । ज्ञानस्य सारत्वं तु स्वरूपानुबन्धिधर्मत्वात्सिद्धम् । विपश्चिता ज्ञानिना ॥ २९ ॥

—१७ यावदिति । आत्मस्वरूपं सदा व्याप्य स्थितत्वं यावदात्मभावित्वम् । यावदाश्रयस्थितिसंबन्धित्वं वा । यत्कदाप्याश्रयं न जहाति तत्त्वमिति यावत् ।

—१८ तद्व्यपदेश इति । विज्ञानशब्देन जीवस्य निर्देश इत्यर्थः । यद्यपि परत्र परशब्दः प्रयुज्यमानो दोषावहस्तथापि संबन्धातिशये न दोषः । लोके तथा व्याहारदर्शनादिति तात्पर्यम् ।

५३०–२० **चकारादिति** । विज्ञानशब्देन जीवस्य निर्देशे हेत्वन्तरं सूत्रस्थचकारसूचितमनेन ग्रन्थेन प्रदर्श्यते । यथा ज्ञानं स्वप्रकाशं तथा जीवोपि स्वप्रकाश इति ज्ञानजीवयोः सादृश्याद्विज्ञानशब्देन जीवस्य निर्देश इति भावः ॥३०॥

५३१–१ **स्वरूपानुबन्धिधर्मत्वमिति** । स्वाभाविकधर्मत्वमित्यर्थः ।

—६ **पुंस्त्वाद्यसाधारणस्य धातोरिति** । यत्र पुरुषत्वं तत्रावश्यकस्य सप्तमधातोरित्यर्थः ।

—९ **तत्सप्तधात्विति** । त्वगसृङ्मांसमेदोऽस्थिमज्जाधातुरूपं धातुसप्तकम् । वातपित्तकफरूपं मलत्रयम् ।

—१५ **अणुपरिमाण इति** । अत एव न तस्य शरीरादन्यत्रोपलब्धिः । विभुत्वे तूत्तरसूत्रोक्तो दोषो दुर्वार एव स्यात् ।

—१९ **न विद्यत इति** । मुक्तस्य देहात्माभिमानभ्रमो नास्तीत्यर्थः ॥ ३१ ॥

५३२–१० **लोके तावदिति** । सूत्रस्थस्यान्यथेति पदस्यात्मनो विभुत्वस्वीकार इत्यर्थः । विभुरप्यात्मा किं ज्ञानस्वरूपो जडस्वरूपो वेति पक्षद्वयम् । तत्र विभुर्जडस्वरूप इति पक्षे दोषोऽग्रे ( श्रीभाष्य–पृ. ५३२ प. १५ ) करणायत्तेत्यादिग्रन्थेन वक्ष्यते । विभुर्ज्ञानस्वरूप इति पक्षे दोषोयं प्रतिपाद्यते । अयमाशयः—लोके हि शरीरे केवलमात्मोपलभ्यते शरीरादन्यत्र नोपलभ्यते । तत्रात्मनो ज्ञानस्वरूपत्वात्स उपलब्धेर्हेतुः स्यात् । अथ शरीरादन्यत्रानुपलम्भादनुपलब्धेरपि स एव हेतुः कल्प्यत इति चेत्किमात्मोपलब्ध्यनुपलब्ध्योरुभयोर्मिलित्वा हेतुर्भवत्येकैकस्या एव वा । आद्ये सर्वत्र नित्यमुपलब्ध्यनुपलब्धिप्रसङ्गः । अन्त्येन्यतरनियमः । उपलब्धेरेव हेतुश्चेच्छरीर इवान्यत्राप्युपलब्धिः स्यात् । अनुपलब्धेरेव हेतुश्चेदन्यत्रेव शरीरेप्यनुपलब्धिः स्यादिति ।

—१५ **करणायत्तेति** । आत्मनो विभुत्वे जडत्वे चाङ्गीकृते दोषोयम् । तत्र यद्यप्यात्मन उपलब्धिरिन्द्रियाधीनेति जडेषु पाषाणादिष्विन्द्रियाभावादात्मानुपलब्धिः सिध्यति तथापि देवदत्तस्यात्मनो यज्ञदत्तशरीरे यज्ञदत्तशरीरस्थैरिन्द्रियैरुपलब्धिर्दुर्वारैव । इन्द्रियाणि चोपलब्ध्यनुपलब्ध्योरुभयोर्मिलित्वा हेतवो भवन्त्येकैकस्या एव वा । आद्ये नित्यमुपलब्ध्यनुपलब्धिप्रसङ्गः । अन्त्येन्यतरनियमः । उपलब्धेरेव हेतवश्चेद्देवदत्तशरीर इव यज्ञदत्तशरीरेपि देवदत्तस्यात्मन उपलब्धिः स्यात् । अनुपलब्धेरेव हेतवश्चेद्यज्ञदत्तशरीर इव देवदत्तशरीरेपि देवदत्तस्यात्मनोनुपलब्धिः स्यात् । न च यज्ञदत्तशरीरस्थानीन्द्रियाणि न देवदत्तस्यात्मन इति वाच्यम् । सर्वेषां विभूनां जीवात्मनां सर्वेषु शरीरेषु सत्त्वेनामुकशरीरस्थानीन्द्रियाण्यमुकस्यैवात्मन इति नियमे प्रमाणाभावात् । अत एवादृष्टेनापि नाभीष्टसिद्धिः । इदमदृष्टममुकस्यैवेति नियमे प्रमाणाभावात् ॥ ३२ ॥ ( ४ )

५३२-२० **अयमात्मेति** । जीवात्मेत्यर्थः ।

—२१ **गुणानामिति** । सत्त्वरजस्तमोरूपगुणत्रयात्मिकायाः प्रकृतेरित्यर्थः ।

५३३-५ **हन्ता चेदिति** । हन्तुर्हन्ता । हन्धातोः कर्तरि तुन्प्रत्ययः । हन्तात्मानं हन्तुं हन्तारं मन्यते चेदहं हन्तेति मन्यते चेदित्यर्थः ।

—१०-१४ **प्रकृतेरिति** । प्रकृतेर्गुणैः सत्त्वादिभिः स्वानुरूपं क्रियमाणानि कर्माणि प्रत्यहंकारविमूढात्माहं कर्तेति मन्यते । अहंकारेण विमूढ आत्मा । अहंकारो नामानहमर्थे प्रकृतावहमित्यभिमानः । तेनाज्ञातात्मस्वरूपो गुणकर्मस्वहं कर्तेति मन्यत इत्यर्थः । **नान्यमिति** । यदा द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति गुणा एव स्वानुगुणप्रवृत्तिषु कर्तार इति पश्यतीत्यर्थः । **कार्येति** । कार्यं शरीरम् । कारणानि समनस्कानीन्द्रियाणि । तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः । पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनभूता क्रियेत्यर्थः । प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः । सुखदुःखानुभवाश्रय इत्यर्थः ।

—१८ **यजेतेति** । अत्र स्वर्गकामनाविशिष्टपुरुषोद्देशेन यागविधानात्तादृशपुरुषस्य भोक्तुर्जीवस्यैव यागकर्तृत्वं सिध्यति । एवं मोक्षेच्छाविशिष्टपुरुषोद्देशेन ब्रह्मोपासनविधानात्तादृशपुरुषस्य जीवस्यैवोपासनकर्तृत्वं सिध्यति ।

—२० **शासनाच्चेति** । शास्त्रं यस्य प्रवर्तकं स एव कर्ता । शास्त्रं च प्रकृतेः प्रवर्तकं न भवति । कर्तरि ज्ञानमुत्पाद्यैव तस्य प्रवर्तकत्वात् । प्रकृतौ च ज्ञानोत्पादनासंभवात् । न हि प्रकृतिः किंचिदपि जानाति । तस्या अचेतनत्वात् । तथा च शास्त्रं जीवस्यैव प्रवर्तकमिति जीव एव कर्ता सिध्यति ।

५३४-६ **उच्यत इति** । अहं जीव एतेषां जीवानां हन्तेति यज्ज्ञानं तत्सम्यग्ज्ञानं न भवतीति हन्ता चेदिति श्लोकस्य तात्पर्यम् । तत्र हेतुश्च जीवस्य नित्यत्वेन हननक्रियायां कर्मत्वासंभवाद्धन्तृत्वं जीवस्य न संभवतीति ।

—८ **प्राप्ताप्राप्तेति** । जीवस्य संसारदशायां गुणत्रयसंबन्धे प्राप्ते कर्तृत्वं दृश्यते । अप्राप्ते तु गुणत्रयसंबन्धे कर्तृत्वं न दृश्यते । एवमन्वयव्यतिरेकाभ्यां गुणत्रये कर्तृत्वमारोप्य गुणानामेव कर्तृत्वमित्युच्यते । वास्तविकं तु कर्तृत्वं जीवस्यैवेति भावः ।

—१२ **तत्रैवमिति** । एवं वस्तुतः परमात्मानुमतिपूर्वके जीवात्मनः कर्तृत्वे सति तत्र तत्र कर्मणि केवलमात्मानमेव कर्तारं यः पश्यति स दुर्मतिर्विपरीतमतिः । अकृतबुद्धित्वात् । अनिष्पन्नयथावस्थितवस्तुबुद्धित्वान्न पश्यति । यथावस्थितं कर्तारं पश्यतीत्यर्थः ।

—१६ **अधिष्ठानमिति** । विहिते प्रतिषिद्धे च कायिके वाचिके मानसे च सर्वस्मिन्कर्मणि पञ्च हेतवः । अधिष्ठानं शरीरम् । अधिष्ठीयते जीवात्मनेति

महाभूतसंघातरूपं शरीरमधिष्ठानम् । कर्ता जीवात्मा । पृथग्विधं करणं समनस्कं कर्मेन्द्रियपञ्चकम् । विविधा च पृथक्चेष्टा प्राणापानादिभेदभिन्नस्य पञ्चविधस्य वायोर्विविधा वृत्तिः । अत्र कर्मानुकूलाति दैवं पञ्चमं परमात्मान्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः ॥ ३३ ॥

५३४–२१ **उपादानादिति** । उपादानं ग्रहणम् । अनात्मपदिश्यमानाज्जीवकर्तृकोपादानाच्छ्रुतौ क्रियमाणाज्जीवकर्तृकविहारोपदेशाच्च जीव एव कर्ता मिथ्येति सूत्रार्थः । स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तेत इति श्रुतिः । **परिवर्तते** विहरति । प्राणानिन्द्रियाणि । अत्र प्राणान्गृहीत्वेत्युपादानमुपदिश्यते । परिवर्तेत इति विहारोपदेशश्च क्रियते ॥ ३४ ॥

५३५–२ **विज्ञानमिति** । विज्ञानं जीवः । यज्ञं वैदिकीं यागक्रियाम् । तनुते करोति । कर्माणि लौकिकीः क्रियाः ॥ ३५ ॥

–११ **नेव देति** । कस्यापि भोगाय न स्युरित्यर्थः । जीवस्य कर्तृत्वपक्षे येन जीवेन यत्कर्म कृतं तस्यैव भोगप्रदं भवति नान्यस्येति नियमः संगच्छते । प्रकृतेः कर्तृत्वपक्षे तु प्रकृत्या कृतं कर्म यदि जीवस्य भोगप्रदं स्वीक्रियते तर्हि सर्वेषां भोगप्रदं स्यात् । यदि तथा न स्वीक्रियते तर्हि कस्यापि भोगप्रदं न स्यात् । न च प्रकृत्या देवदत्तशरीरद्वारा कृतं कर्म देवदत्तशरीरस्थस्यैव जीवस्य भोगप्रदमिति वाच्यम् । प्रकृतेः कर्तृत्ववादिभिः सांख्यैर्जीवानां विभुत्वाभ्युपगमेन सर्वेषां जीवानां देवदत्तशरीरस्थत्वात् । न च प्रकृत्या क्रियमाणमपि कर्मानन्तानामन्तःकरणानां मध्ये कस्यापि अन्तःकरणस्य साहाय्येन क्रियते । तथा च यत्कर्म यदन्तःकरणसाहाय्येन क्रियते तादृशान्तःकरणविशिष्टस्यैव जीवस्य तत्कर्म भोगप्रदं नान्यस्येति नियमोऽपपत्स्यत इति वाच्यम् । सर्वव्यापिन्याः प्रकृतेः सर्वैरन्तःकरणैर्नित्यं संबन्धेन प्रकृत्येदं कर्मामुकस्यैवान्तःकरणस्य साहाय्येन क्रियत इति नियमे प्रमाणाभावात् ॥ ३६ ॥ ३७ ॥ ३८ ॥

५३६–३ **सर्वदेति** । प्रकृतेः कर्तृत्वे तस्या अचेतनाया इदं कर्म मया कर्तव्यमिति ज्ञानाभावः । तथा च साहजिकशक्त्या सा कदाचित्कर्म कुर्यात्कदाचिन्न कुर्यात् । जीवस्य कर्तृत्वे तु तस्य तादृग्ज्ञानसत्त्वेन तेन नित्यं कर्म कर्तव्यं स्यादित्याशयः ।

–७ **यथा तक्षेति** । तक्षा 'सुतार' इति प्र. । वासिः 'वाकस' इति प्र. ।

–९ **सर्वदेति** । सर्वकारणसंनिधाने कार्यस्यावश्यंभावनियमादिति भावः ॥ ३९ ॥ ( ५ )

—१५ **स एवेति** । न हि राज्ञा बन्दीकृतस्य चोरस्य स्वगृहे स्थातव्यं कारागारे न गन्तव्यमिति सहस्रश उक्तेऽपि तयोर्विधिनिषेधयोः कथमप्युपयोगो भवति ॥ ४० ॥

५३७-७ कृतप्रयत्नेति । प्रयत्नः प्रथमप्रवृत्तिः । विहितं विधिः । प्रतिषिद्धं प्रतिषेधः । उभयत्र भावे क्तप्रत्ययः । आदिशब्देन कोपप्रसादयोस्तदनुरूपफलदानस्य च संग्रहः । कोपप्रसादावेव निग्रहानुग्रहशब्दाभ्यामुच्येते ।

—१० तदनुमतीति । अनुमतिश्च प्रवृत्तस्य प्रवर्तनम् । शोभनास्वशोभनासु वा सर्वासु क्रियासु जीवः स्वबुद्ध्यैव प्रथमं प्रवर्तते । तां प्रथमप्रवृत्तिं दृष्ट्वा पश्चादीश्वरो यथा तव मनस्यागतं तथा कुर्वित्येवमनुमतिदानेन द्वितीयादिप्रवृत्तिं कारयति । तथा च द्वितीयादिप्रवृत्तौ जीव ईश्वराधीनः । प्रथमप्रवृत्तौ तु स्वतन्त्र एव । यद्यपि प्रथमप्रवृत्तिरपीश्वरोत्पादितशरीरेन्द्रियाद्यपेक्षैव तथापि तत्रेश्वरस्यान्यथासिद्धत्वम् । शरीरेन्द्रियाद्युत्पादनरूपस्येश्वरव्यापारस्य पूर्वमेव जातत्वेन प्रथमप्रवृत्तिवेलायामनपेक्षणात् । तदानीमीश्वरस्योदासीनत्वात् । यथा कुलालोत्पादनरूपस्य कुलालपितृव्यापारस्य घटोत्पत्तिवेलायामनपेक्षणात्कुलालपितुर्घटं प्रत्यन्यथासिद्धत्वं तद्वत् ।

—१२ यथेति । चैत्रमैत्रैतदुभयस्वामिकमेकं वस्तु । तत्र चैत्रस्तद्वस्तुनः स्वीयमपि भागं परस्मै दातुं मैत्रानुमतिं विना न शक्नोति । वस्तुन उभयस्वामिकत्वात् । ततो मैत्रानुमतिं गृहीत्वा चैत्रः स्वीयं भागमुपायनत्वेन राज्ञे ददाति चेद्राजप्रसादपात्रं चैत्र एव भवति न मैत्रः । एवमीश्वरानुमत्या कर्म कुर्वन्नपि जीव एव फलभाग्भवति नेश्वरः । यच्च कदाचिल्लोके मैत्रोपि लेशतो राजप्रसादपात्रं भवति तन्मैत्रस्य राजाधीनत्व एव न त्वन्यथा । ईश्वरस्य तु कथंचिदपि कर्माधीनत्वाभावेन तस्य लेशतोपि न कर्मफलभाक्त्वमिति बोध्यम् ॥४१॥(६)

५३९-१९ औपचारिकय इति । वस्तुतो भिन्नयोरपि जीवब्रह्मणोरात्मत्वेन ज्ञानवत्त्वेन वा धर्मेण सादृश्यादभेदमारोप्य कथंचिन्नेयाः । तत्त्वमस्यादिश्रुतिषु ब्रह्मवाचिनां तदादिशब्दानां तदधीन इत्याद्यर्थे लक्षणया वा कथंचिन्नेया इत्यर्थः । यथाग्निना सिञ्चेदिति वाक्यमग्नेर्द्रवद्रव्यत्वाभावेन सेचनकरणत्वाभावाद्योग्यतां न लभते । अतस्तदनाप्तोच्चारितं चेदप्रमाणमेव भवति । आप्तोच्चारितं त्वग्निशब्दस्य द्रवद्रव्ये लक्षणया कथंचिन्नीयते तद्वदिति भावः ।

—२१ भवेयुरिति । यथा पटैकदेशे दग्धे पटो दग्धो भवति तद्वत् ।

—२२ अंशत्वोपपत्तिरिति । यथा दारुणः कस्मिंश्चिच्छिन्ने खण्डे दग्धेपि न तद्दारु दग्धं भवति तद्वज्जीवे दुष्टेपि ब्रह्म न दुष्यतीत्यंशत्वोपपत्तिरित्याशयः ।

प्रागुक्तेति । ब्रह्मणश्छेदाङ्गीकारेऽनित्यत्वादिदोषप्रसङ्गादिति भावः ।

५४०-३ नानात्वेति । पृथगात्मानं प्रेरितारं च मत्वा । तयोरन्यः पिप्पलं स्वाद्वत्ति । ज्ञाज्ञौ द्वावजावीशानीशावित्यादिभेदप्रतिपादकश्रुतयो लोकप्रसिद्धभेदानुवादकत्वादविधायिका अन्यथासिद्धाः । तत्त्वमस्यादिश्रुतयस्तु लोकाप्रसिद्धाभेदविधायिका अनन्यथासिद्धाः । तथा च यथा प्रागुक्तरीत्या (श्रीभाष्य-

पृ. १८ प. १० ) तत्त्वमस्यादिश्रुतिभिः प्रत्यक्षादिप्रमाणानि बाध्यन्ते तथा भेदप्रतिपादकश्रुतयोपि बाध्यन्ते । मिथ्याभूतार्थोपदेशपरा भवन्तीति यावत् । बाधितं च वस्तु मिथ्याभूतमविद्यान्तर्गतमिति लोके गायते ।

५४०–१६ **ब्रह्म दाशा इति** । दाशाः कैवर्ताः । दासा भृत्याः । कितवा द्यूतकृतः । एते सर्वे ब्रह्मैवेत्यर्थः । उत्कृष्टः सामानाधिकरण्येऽभेद आरोपित इति शङ्का जायेत । इह तु दाशकितवादिनिकृष्टसामानाधिकरण्यमभेदस्य वास्तविकत्वं सूचयति । तथा चाभेदो भेदश्चेत्युभयमपि वास्तविकमंशपक्ष एव सिध्यति । अंशश्चायं न पटैकदेश इव वस्त्वेकदेशरूपः । प्रागुक्तरीत्या ( श्रीभाष्य–पृ. ५३९ प. २१ ) दोषप्रसङ्गात् । किं तु विशेषणविशिष्टस्य विशेषणरूपो य एकभागस्तद्रूपः । यथा शरीरविशिष्टस्य शरीरं तद्वत् । एतदग्रे सूत्रकृतैव ( २।३।४५ ) वक्ष्यते । तथा च यथा शरीरगतानां कृशत्वश्यामत्वादीनां न जीवे संबन्धस्तथा जीवगतदोषाणां न ब्रह्मणि संबन्धः । अत्र च प्रभाप्रभावतोरिव जीवब्रह्मणोरपृथक्सिद्धांशांशित्वाङ्गीकारादभेदश्रुतयः संगच्छन्ते । विशेषणवाचकशब्दानां विशेष्यपर्यन्तार्थाभिधायकत्वात् । यथा तेजस्यपि तेजःशब्देनोच्यते ज्योतिष्मत्यपि च ज्योतिःशब्देनोच्यते तद्वत् । विशेषणविशेष्ययोर्भेदाच्च भेदश्रुतयोपि संगच्छन्ते ।

५४१–५ **ब्रह्मसृज्यत्वेति** । यद्यपि जीवो नाहं ब्रह्मेति ब्रह्मभिन्नतया सर्वेषां प्रत्यक्षप्रसिद्धस्तथाप्यहं ब्रह्मणा सृष्टोहं ब्रह्मणा नियमितोहं ब्रह्मणः शरीरभूत इत्येवमादिरूपैर्भेदस्य प्रत्यक्षप्रसिद्धत्वाभावेन तादृशभेदप्रतिपादिकाः श्रुतयो नानुवादभूताः किं त्वनन्यथासिद्धा विधायिन्य एवेति न बाध्यन्त इत्याशयः ॥ ४२ ॥

५४२–१३ **एकरूपत्वेपीति** । अनेन जीवाद्वैतपरवाक्यानामाकारैक्यपरत्वं दर्शितम् ॥ ४३ ॥ ४४ ॥ ४५ ॥

५४३–१७ **स्मरन्ति चेति** । अपि स्मर्यते ( २।३।४४ ) इति सूत्रेंऽशत्वमात्रे स्मृतिवचनमुक्तम् । अस्मिन्सूत्रे विशिष्टैकदेशविशेषणरूपांशत्वेपि स्मृतिवचनमुच्यत इति भेदः ( श्रु. ) ॥ ४६ ॥

५४४–९ **केषांचिदिति** । ब्राह्मणादीनां त्रयाणामेव वेदाध्ययनाद्यनुज्ञा न शूद्राणाम् । तथा पतितरजस्वलाचण्डालादिव्यतिरिक्तानामेव दर्शनस्पर्शनानुज्ञा न पतितादीनामिति भेदो न संभवति । सर्वेषां जीवानां समानत्वादिति शङ्काशयः ।

—१८ **अभिशस्तादेरिति** । अयं परस्त्रियं गच्छतीत्यादिना वाक्येन यस्मिन्दोषारोपो जनैः क्रियते सोभिशस्तः ॥ ४७ ॥

५४४-१९ असंततेरिति । समन्तात्ततिर्विस्तृतिः संततिः । विभुत्वमिति यावत् । तदभावोऽसंततिरणुत्वम् । व्यतिकरः संकरः सर्वेषां भोगसाम्यम् । तदभावोऽव्यतिकरः । भोगव्यवस्थेति यावत् ॥ ४८ ॥

५४५-६ आभास इति । आभासो हेत्वाभासः । असद्धेतुरिति यावत् । अखण्डैकरसप्रकाशमात्रस्वरूपस्य ब्रह्मणः स्वरूपं तिरोधीयते ब्रह्म चोपाधिभेदाद्भिद्यत इति त्वदीयः पक्षो येन हेतुना त्वया साध्यते स हेतुरसद्धेतुरेव । स्वरूपतिरोधाने प्रकाशनाशप्रसङ्गात् ।

—१३ श्रुतिविरोध इति । पृथगात्मानमित्यादिश्रुतिषु भेदप्रतिपादनेनाभेदवादिनः श्रुतिविरोध इति भावः ॥ ४९ ॥

—२१ छेदासंभवादिति । पारमार्थिकैरप्युपाधिभिरुपाधिभेदहेतुभूतैरदृष्टैर्वा यदि ब्रह्मणश्छेदा भवेयुस्तर्ह्यमुकादृष्टप्रयुक्ता भोगा अमुकच्छेदस्य (जीवस्य) इति नियमः स्यात् । छेदस्तु न संभवतीति प्रदेशभेदासंभवान्नियमो न सिध्यतीति भावः ॥ ५० ॥

५४६-१ अभिसंध्यादिष्विति । अभिसंधिः संकल्पः । आदिशब्दादुद्योगानुष्ठानादिसंग्रहः । चशब्द एवार्थे । संकल्पादिभिरपि ब्रह्मणश्छेदासंभवेनामुकस्यायं संकल्प इति नियमो न संभवतीति भावः ॥ ५१ ॥

—६ सर्वप्रदेशानामिति । प्रदेशो भागः । देवदत्ते गच्छति सति तत्र केवलं शरीरमेव गच्छति न तु तादृशशरीरान्तर्भूतो ब्रह्मणो भागः शरीरेण सह गच्छति । ब्रह्मणः सर्वव्यापित्वात् । तथा च देवदत्तशरीरान्तर्भूतो यो भागो यस्मिन्स्थले देवदत्तादृष्टप्रयुक्तभोगमन्वभूत्स एव भागस्तस्मात्स्थलाद्देवदत्तशरीरेऽन्यत्र गते यज्ञदत्तशरीरे च तस्मिन्स्थले समागते सति तादृशयज्ञदत्तशरीरान्तर्भूतः सन्यज्ञदत्तादृष्टप्रयुक्तभोगभाक्स्यादिति जीवानां परस्परं भोगसंकरः स्यादेवेति भावः ।

—८ ब्रह्मण एव स्यादिति । तथा च ब्रह्मणि जीवभोगसंकरः स्यादिति भावः ॥ ५२ ॥ ( ७ )

---

॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः प्रारभ्यते ॥

५४७-७ किमिन्द्रियाणामिति । कार्यत्वमुत्पत्तिः । तत्र किमिन्द्रियाणां जीवस्येव ज्ञानविकासकरदेहसंबन्धरूपोत्पत्तिरथ वाकाशस्येव स्वरूपप्राप्तिरूपोत्पत्तिरिति संशय इत्यर्थः ।

—१५ प्राणा वाव ऋषय इति । अत्र प्राणशब्दः परमात्मवाची । ऋषिशब्देन सामानाधिकरण्यात् । ऋषित्वं हि द्रष्टृत्वम् । प्राणा इति बहुवचनं

ष्वेकस्मिन्नपि गुरवः समागता इतिवद्बहुमानसूचकमिति सिद्धान्तः । पूर्वपक्षी तु बहुवचनस्वारस्येन प्राणशब्दस्येन्द्रियवाचित्वं मन्यते ॥ १ ॥

५४९–१ **गौणीति** । श्रुतेश्चेति चशब्द एवार्थे ॥ २ ॥

—४ **तत्पूर्वकत्वादिति** । सृष्टेः प्रागमुकं वस्त्वस्तीति निश्चयो न प्रत्यक्षप्रमाणेन भवति । असंभवात् । किं तु श्रुत्यानुमानेन च । तत्र श्रुत्येन्द्रियाणामस्तित्वं न सिध्यतीति पूर्वमुक्तम् । अनुमानविषय इदानीमुच्यते । सूत्रे वाक्शब्दो नामवाची । परमात्मव्यतिरिक्तानामाकाशादिपदार्थानां यानि नामानि तान्याकाशादिसृष्टिपूर्वकाणि । न तु सृष्टेः प्राक् । तद्धेदमिति श्रुतेः । तथा च सृष्टेः पूर्वं नाम्नामभावेन नामोच्चारणरूपस्य वागिन्द्रियकार्यस्याभावाच्च तदानीं वागिन्द्रियास्तित्वमनुमीयते । कार्येण हि कारणस्यानुमानं भवति । यथा धूमेनाग्नेः । एवमेवेतरेन्द्रियाणामपि नानुमानेनास्तित्वमवगम्यते । तथा च सृष्टेः प्रागिन्द्रियाणामभावात्प्राणशब्दः परमात्मवाच्येवेति सिद्धम् ॥ ३ ॥ ( १ )

—१६ **सप्त इम इति** । सप्तेमे लोका येषु लोकेषु गुहाशयाः शरीरान्तःस्थिता निहितास्तत्तत्स्थानेषु निक्षिप्ताः सप्त सप्त प्राणा इन्द्रियाणि संचरन्तीत्यर्थः ।

—१८ **पुरुषभेदेति** । प्रतिपुरुषं सप्तेन्द्रियाणीति भावः ।

—२० **यदा पञ्चेति** । यदा योगदशायां पञ्च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि मनो बुद्धिश्चेत्येवं सप्तेन्द्रियाणि बाह्यविषयेभ्यः पराङ्मुखीभूय स्वस्वरूप एवावतिष्ठन्ते तां परमां मोक्षसाधनीभूतां गतिमाहुः । अयमेव योग इति भावः । ज्ञानानीति सप्तानां विशेषणम् । ज्ञानसाधनीभूतानीति तदर्थः । ज्ञायतेनेनेति व्युत्पत्तेः । हस्तादीनां ज्ञानसाधनत्वाभावान्न तेषां वस्तुत इन्द्रियत्वम् । इन्द्रियव्यवहारस्तु तेषां गौण इति पूर्वपक्षाशयः ।

५५०–५–७ **अष्टौ ग्रहा इति** । चक्षुर्घ्राणं रसनं श्रोत्रं वाङ्मनस्त्वगघस्तश्चेत्येतेष्टौ ग्रहाः । ग्रहत्वं च बन्धनहेतुत्वाद्बोध्यम् । **सप्त वै शीर्षण्या इति** । शीर्षण्याः शिरसि भवा मस्तकस्थाः । द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वागेकेति सप्त प्राणाः । द्वाववाञ्चौ पायूपस्थावित्यर्थः । **चतुर्दशेति** । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेति ज्ञानेन्द्रियपञ्चकं वाक्पाणिपादपायूपस्थेति कर्मेन्द्रियपञ्चकं मनो बुद्धिरहंकारश्चित्तं चेत्यन्तःकरणचतुष्टयं चेत्येवं चतुर्दश प्रतीयन्त इत्यर्थः ॥ ४ ॥

—१३ **एकादशेति** । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेत्येकादशेत्यर्थः ।

**शरीरे स्थित इति** । यथा ज्ञानेन्द्रियाणि जीवेन सह शरीरान्तरं प्रतिगच्छन्ति तथा कर्मेन्द्रियाणि यद्यपि जीवेन सह न गच्छन्ति तथापि शरीरान्तरवस्थिते जीवे भोगसाधनत्वमुभयेषां समानमेवेति हस्तादीन्यपि वस्तुत एवे-

न्द्रियाणि न तु तेषामिन्द्रियत्वं गौणमिति भावः । केचित्तु कर्मेन्द्रियाण्यपि जीवेन सह गच्छन्तीत्याहुः । तदाशयश्च यतीन्द्रमतदीपिकाप्रकाशे ( पृ. ३९ ) स्पष्टीकृतोस्माभिरिति तत एव द्रष्टव्यः ।

५५०–१५ **हस्तादीनामिति** । आदिपदेन वाक्पादपायूपस्थसंग्रहः । आदानादिरित्यादिशब्देनोच्चारणगमनविसर्गानन्दसंग्रहः ।

—१७ **अध्यवसायेति** । मन एव बुद्ध्यानुगृहीतं सदध्यवसायं करोतीति बुद्धिशब्देन व्यवह्रियते । तथाहंकारेणानुगृहीतं मन एवाभिमानं करोतीत्यहंकारशब्देन व्यवह्रियते । तथा पूर्वसंस्कारविशेषानुगृहीतं मन एव चिन्तां करोतीति चित्तशब्देन व्यवह्रियत इति भावः ।

५५१–६ **अधिकेति** । इन्द्रियाणि वस्तुत एकादशैव । तत्रैकस्यैव मनसः संशयनिश्चयगर्वस्मरणरूपवृत्तिभेदेन मनो बुद्धिरहंकारश्चित्तमिति भेदचतुष्टयं गृहीत्वा चतुर्दशेन्द्रियाणीत्युक्तमिति बोध्यम् ॥ ५ ॥ ( २ )

—१० **त एत इति** । त एते सर्व एव प्राणा इन्द्रियाणि समाः । सर्वेषां जीवकार्यकरत्वेन साम्यमत्रोच्यते । ते च सर्वेनन्ताः । नान्तो देशकृतमर्यादा येषामित्यर्थः ।

—१४ **अणवश्चेति** । अणुत्वं च नात्र बालाग्रशतभागस्येत्याद्युक्तरीत्या जीवस्येवात्यन्ताल्पत्वम् । किं तु परिमितत्वे सत्युपलब्धिसाधनीभूतस्थूलताराहित्यम् । उत्क्रान्तिश्रवणात्परिमितत्वं सिध्यति । उत्क्रान्तिवेलायां पार्श्वस्थैरदर्शनाच्च तादृशस्थूलताराहित्यं सिध्यति ।

**आनन्त्येति** । कार्यबाहुल्यमानन्त्यम् । कार्यबाहुल्यविशेषणविशिष्टतयोपासनार्थमानन्त्यकथनमित्यर्थः ( श्रु. ) ॥ ६ ॥

—१८–५५२–१ **प्राणसंवाद इति** । इतरेन्द्रियाणामभावेप्यन्धमूकादेः शरीरं तिष्ठत्येव । प्राणस्याभावे तु न कथमपि शरीरं तिष्ठतीत्यत इतरेन्द्रियापेक्षया प्राणस्य मुख्यत्वं छान्दोग्ये प्राणसंवादे ( छा. ५।१।६ ) निर्णीतम् । **आनीदिति** । आनीत्प्राणनमकार्षीत् । अन प्राणन इत्यस्य क्रियापदम् । स्वधया लक्ष्म्या सहेत्यर्थः । **नोत्पद्यत इति** । मुख्यप्राणो नोत्पद्यते । नित्य एव सः । एतस्माज्जायते प्राण इति श्रुतौ या प्राणस्योत्पत्तिरुच्यते सा शरीरसंबन्धरूपेति पूर्वपक्ष्याशयः । **पृथिव्यादितुल्येति** । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति श्रुतौ पृथिव्यादिपञ्चमहाभूतानामुत्पत्तिः कथ्यते । सा चोत्पत्तिः स्वरूपप्राप्तिरूपेति तत्रैव श्रुतावुच्यमाना मुख्यप्राणस्योत्पत्तिरपि स्वरूपप्राप्तिरूपैव न शरीरसंबन्धरूपेति विज्ञायते । किं च मुख्यप्राणस्योत्पत्तिः श्रुतौ न क्वापि प्रतिषिध्यत इति मुख्यः प्राण उत्पद्यत एवेति भावः ।

५५२–५ **अवातमिति** । अनेन सृष्टेः प्राङ्मुख्यप्राणस्याभावः सिद्धो भवति । मुख्यप्राणस्य वातविशेषरूपत्वात् ।

—६ **उत्तरचिन्तेति** । उत्तरसूत्रे मुख्यप्राणसंबन्धेन कश्चिदधिको विचारः प्रदर्शयिष्यते । तथा च तत्र मुख्यप्राणस्य संबन्धार्थं श्रेष्ठश्चेत्येतन्मुख्यप्राणसंबन्धेन पृथक्सूत्रं कृतम् । मुख्यप्राणस्योत्पत्तिकथनं तु तथा प्राणा इत्यनेनैव कृतं भवति । तदेव श्रेष्ठश्चेत्यनेन केवलमनूद्यते । अत एव श्रेष्ठश्चेति नाधिकरणान्तरमिति बोध्यम् ॥ ७ ॥ ( ३ )

—१८ **अवस्थान्तरमिति** । देहधारणयोग्यतारूपावस्थान्तरमापन्न इत्यर्थः । ॥ ८ ॥

५५३–२ **चक्षुरादिवदिति** । सहशिष्टिः सहोपदेशः ।

—९ **विशिष्याभिधानादिति** । विशिष्याभिधानमपि तत्सजातीयत्व एव भवतीति भावः ॥ ९ ॥

५५४–१ **शैथिल्याभिधानादिति** । अस्य शरीरेन्द्रियधारणादिरूपां क्रियां दर्शयतीत्यत्रान्वयः ॥ १० ॥

—९ **मन एवेति** । एकमेव मनः कामादिवृत्तिभेदेन कामादिशब्दैर्व्यवह्रियत इति भावः ॥ ११ ॥ ( ४ )

—१९ **वैभवेति** । मम एभिरित्यादिवचनानि मुख्यप्राणस्यैश्वर्यद्योतकान्यर्थवादभूतानीति भावः ॥ १२ ॥ ( ५ )

—२३ **सश्रेष्ठानामिति** । मुख्यप्राणसहितानामिन्द्रियाणां ब्रह्मणः सकाशादुत्पत्तिरुक्ता । तेषामियत्ता संख्या द्वादशेत्युक्ता । इतरेन्द्रियाण्येकादशेति पूर्वं स्पष्टमेवोक्तम् । तथा च मुख्यप्राणेन सह द्वादशसंख्यार्थादेवोक्ता भवति । तेषामणुपरिमाणं चोक्तमित्यर्थः ।

५५५–३ **जीवस्य चेति** । यतश्च जीवो यथेच्छं स्वसंकल्पानुसारेणेन्द्रियाणि विषयेषु प्रवर्तयति ततश्चानुभवसिद्धमेवैतज्जीवः स्वभोगसाधनान्येतान्यधितिष्ठतीति ।

—८ **प्राणवता जीवेन सहेति** । ननु जीवो यद्यत्करोति तत्सर्वं परमात्माधीनमिति परात्तु तच्छ्रुतेः ( ब्र. सू. २।३।४० ) इत्यत्रोक्तम् । तथा च जीवस्य प्राणाधिष्ठानं सिद्धमेवेत्यत्र सूत्रे जीवेनेत्यर्थकं प्राणवतेति पदं व्यर्थमिति चेन्न । दृष्टान्तार्थं तदुपन्यासात् । यथा जीवस्य परमात्मसंकल्पादेव प्राणाधिष्ठानं तथाग्न्यादिदेवतानामपि प्राणाधिष्ठानं परमात्मसंकल्पादेवेति । तत्राग्निर्वाचमधितिष्ठति । आदित्यश्चक्षुरधितिष्ठति । वायुः प्राणमधितिष्ठति । दिशः श्रोत्रमधितिष्ठन्ति । ओषधिवनस्पतयो लोमान्यधितिष्ठन्ति । चन्द्रमा मनो-

धितिष्ठति । मृत्युरपानमधितिष्ठति । आपो रेतोधितिष्ठन्तीति बोध्यम् । प्राणविषयमधिष्ठानमिति । मुख्यप्राणसहितेन्द्रियाधिष्ठानमित्यर्थः ॥ १३ ॥

५५६–२ स्वरूपानुबन्धीति । तथा चाग्न्यादीनां स्वरूपमपि परमात्मायत्तमिति किमु वक्तव्यमग्न्यादीनां प्राणाधिष्ठानं परमात्मायत्तमिति बोध्यम् ॥ १४ ॥ (६) ॥ १५ ॥

५५७–२ वैलक्षण्यमिति । वैलक्षण्यं च त्रिधा–वृत्त्युपलम्भवैलक्षण्यं कार्यवैलक्षण्यं प्रवृत्तिनिमित्तवैलक्षण्यं चेति । सुपुप्तौ प्राणस्य वृत्तिरुपलभ्यते । श्वासोच्छ्वाससद्भावात । चक्षुरादीनां तु वृत्तिर्नोपलभ्यते । दर्शनाद्यनुपलम्भादिति वृत्त्युपलम्भवैलक्षण्यम् । इन्द्रियेषु केषांचिज्ज्ञानसाधनत्वं केषांचित्कर्मसाधनत्वम् । प्राणस्य तु शरीरेन्द्रियधृतिसाधनत्वमिति कार्यवैलक्षण्यम् । श्वासोच्छ्वासकर्तृत्वरूपं प्राणत्वं प्राणशब्दस्य प्रवृत्तिनिमित्तम् । तच्च मुख्यप्राण एव वर्तत इति तत्रैव प्राणशब्दप्रयोगो मुख्यः । इन्द्रियेषु श्वासोच्छ्वासकर्तृत्वं नास्त्येव । केवलमिन्द्रियाणां शरीरे स्थितिः प्रवृत्तिश्च प्राणाधीनेति प्राणसंबन्धादिन्द्रियेषु प्राणशब्दप्रयोगो गौण इति प्रवृत्तिनिमित्तवैलक्षण्यमिति बोध्यम् ॥ १६ ॥ (७)

—१० संज्ञेति । संज्ञा नाम । मूर्ती रूपम् । क्लृप्तिः कल्पनम् । नामरूपव्याकरणमिति यावत् । त्रिवृत्कुर्वंस्त्रिवृत्करणकर्ता परमात्मा ।

—१२ पुरस्तादिति । द्वितीयाध्यायस्य तृतीयपाद इत्यर्थः ।

—१३ अनन्तरमिति । अस्मिन्पाद इत्यर्थः ।

—१४ हिरण्यगर्भस्यैवेति । एवशब्देन तदन्तर्यामिपरमात्मव्यावृत्तिः । किमियं प्रपञ्चव्यष्टिसृष्टिर्जीवरूपात्केवलचतुर्मुखाद्भवत्यथ वा यथा तेजःशरीरकात्परमात्मनः सकाशाज्जलसृष्टिर्जलशरीरकात्परमात्मनः सकाशात्पृथिवीसृष्टिस्तथा चतुर्मुखशरीरकात्परमात्मनः सकाशात्प्रपञ्चव्यष्टिसृष्टिर्भवतीति संशय इत्यर्थः ।

—१८ जीवकर्तृकत्वेति । अनुप्रवेशे व्याकरणे च जीवस्य प्रयोज्यकर्तृत्वात् ।

५५८–२ जीवरूपेणेति । तथा च नामरूपव्याकरणं जीवकर्तृकमिति प्रपञ्चव्यष्टिसृष्टेर्जीवरूपचतुर्मुखकर्तृकत्वं सिध्यति ।

—३ चारेणेति । अयमाशयः- चारेणानुप्रविश्य परसैन्यमहं संकलयानीति राज्ञः संकल्पः । अनुप्रवेशे संकलने च कर्ता राजा । अनुप्रवेशः संकलनं च वस्तुतश्चारनिष्ठमेव न तु राजनिष्ठम् । राजा तु केवलं प्रेरकः । न चास्मदर्थः कर्तृभूतो यो राजा तन्निष्ठं संकलनं नास्ति चेत्संकलयानीत्युत्तमपुरुषानापत्ति-

रिति वाच्यम् । संकलनस्य राज्ञ्यारोपेणोत्तमपुरुषप्रयोगस्य गौणत्वात् । न च प्रविश्येति क्त्वाप्रत्ययप्रयोगात्संकलनस्य यः कर्ता राजा स एव प्रवेशनक्रियायाः कर्तेत्यवगम्यते । तथा च प्रवेशनक्रियाया राजनिष्ठत्वमावश्यकम् । प्रवेशनक्रियायाः कर्तृस्थत्वात् । काश्चित्क्रियाः कर्मस्थाः । यथा घटं करोति काष्ठं छिनत्ति । अत्रोत्पत्तिर्द्विधाभवनं च न कर्तृनिष्ठम् । किं तु कर्मनिष्ठमेव । काश्चिच्च कर्तृस्थाः क्रियाः । यथा ग्रामं गच्छति गृहं प्रविशति । अत्र गमनं प्रवेशनं च कर्तृनिष्ठमेव । तथा च प्रकृते प्रवेशनस्य राजरूपकर्तृनिष्ठत्वाभावे प्रविश्येति प्रयोगानुपपत्तिरिति वाच्यम् । प्रवेशनक्रियाया राज्ञ्यारोपेण प्रविश्येति प्रयोगस्यापि गौणत्वात् । एवमेवानेन जीवेनात्मनानुप्रविश्य नाम रूपे व्याकरवाणीत्यत्र प्रवेशनव्याकरणयोरस्मदर्थपरमात्मनिष्ठत्वाभावे व्याकरवाणीत्युत्तमपुरुषस्यानुप्रविश्येति प्रयोगस्य च गौणत्वं स्यादिति ।

५५८–७ **सहयोगेति** । सहयोगे तृतीयास्वीकारे तु जीवेन सहाहं (परमात्मा) व्याकरवाणीत्यर्थेन नामरूपव्याकरणस्य परमात्मकर्तृकत्वमप्यर्थात्सिध्यतीत्याशयः ।

—८ **कारकेति** । कर्तरि तृतीया कारकविभक्तिः । सहयोगे तृतीया उपपदविभक्तिः । तत्र कारकविभक्तेर्बलवत्त्वमुपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादिति तत्र च दीयते (पाणिनि-सू. ५।१।९६) इति सूत्रे स्थले स्पष्टम् ।

—१० **जीवस्येति** । जीवः परमात्मनोंशभूत इति परमात्मस्वरूपमेव । तथा च यद्यपि जीवेन कृतं नामरूपव्याकरणं परमात्मना कृतप्रायमेव तथापि तन्नामरूपव्याकरणं न परमात्मना साक्षादंशद्वारा वा कृतं किं त्वंशभूतेन जीवेनैव स्वातन्त्र्येण कृतम् । एतत्सूचनायैव श्रुतावनेन जीवेनेति जीवस्य पराक्त्वेन परामर्शः । इदंत्वेन भासमानत्वमेव पराक्त्वम् । तथा च यथा लोके स्वयं किंचिदकुर्वाणः कश्चिद्देवदत्तादिरनेनेत्थं कर्तव्यमिति केवलं संकल्पं करोति तथैवात्र परमात्मा संकल्पमात्रमेव करोति न तु नामरूपव्याकरणम् । अंशेन कृतमंशिना कृतप्रायमेव भवतीत्येतावता नामरूपव्याकरणस्य परमात्मकृतत्वं त्वस्तु नामेति पूर्वपक्ष्याशयः ।

५५९–४ **समानकर्तृकत्वप्रतीतेरिति** । वाक्यसंदर्भस्वारस्येन यस्त्रिवृत्करणं करोति स एव नामरूपे व्याकरोतीति समानकर्तृकत्वप्रतीतेरित्यर्थः ।

—५ **त्रिवृत्कृतेरिति** । अण्डोत्पादनार्थमेव त्रिवृत्करणात् । त्रिवृत्करणं नाम पृथिवीजलतेजसां त्रयाणां भूतानां मिश्रणम् । तत्र त्रिवृत्कृतपृथिव्यामर्धो भागः पृथिव्या अर्धं इतरयोर्द्वयोः । त्रिवृत्कृतजलेऽर्धो भागो जलस्यार्धं इतरयोः ।

एवं तेजसः । एतत्त्रिवृत्करणं पञ्चीकरणस्योपलक्षणमित्यन्यत् । पञ्चीकरणे तु स्वस्यार्धो भाग इतरेषां चतुर्णां मिलित्वाऽर्धो भाग इति बोध्यम् ।

५५९–१२ **तत्तेज इति** । अत्र तेजःशब्देन तेजोन्तर्यामी परमात्मोच्यते । एवं ता आप इत्यत्राप्शब्देनेति भावः ।

—१७ **अक्लिष्टाविति** । अलाक्षणिकावित्यर्थः ।

—२१ **तिस्रो देवता इति** । तेजोबन्नरूपा इत्यर्थः ॥ १७ ॥

५६०–१० **अन्नमशितं त्रेधेति** । अत्र प्रागेव त्रिवृत्कृतस्य पश्चात्पुरुषेण भक्षितस्यान्नस्य पुरीषादिप्रकारत्रयेण परिणाम उपदिश्यते । प्रकारत्रये च प्रत्येकमेकं भूतमिति न विभागः । किं तु प्रकारत्रये प्रत्येकं भूतत्रयसंबन्धोस्त्येव । तथापि पुरीषमांसमनांसि पार्थिवांशाधिक्यात्पृथिवीविकारा इति व्यपदिश्यन्ते । एवं पूर्वमेव त्रिवृत्कृतस्य पश्चात्पीतस्य जलस्य परिणामभूता मूत्रलोहितप्राणा जलांशाधिक्याज्जलविकारा इति व्यपदिश्यन्ते । अस्थिमज्जावाचस्तेजोविकारा अप्येवमेवेति सिद्धान्तः । पूर्वपक्षी त्वेवं मन्यते । अत्रिवृत्कृतं केवलपृथिवीरूपमेवान्नं पुरुषेण भक्षितमुदरे जलतेजोभ्यां मिश्रितं सत्त्रिधा विभक्तं भवति । इदमेव त्रिवृत्करणं पूर्वपक्षी मन्यते । तत्र भागत्रये यः स्थूलः पृथिवीरूपो भागस्तत्पुरीषं यो मध्यमो जलरूपो भागस्तन्मांसं योणुतरस्तेजोरूपो भागस्तन्मनः । एवमत्रिवृत्कृतमेव जलं पुरुषेण पीतं सदुदरे पृथिवीतेजोभ्यां मिश्रितं भवति । ततो भागत्रये जायमाने यः स्थूलः पृथिवीरूपो भागस्तन्मूत्रं यो मध्यमो जलरूपो भागस्तल्लोहितं योणुतरस्तेजोरूपो भागः स प्राणः । एवमत्रिवृत्कृतमेव भक्षितं तेज उदरे पृथिवीजलाभ्यां मिश्रितं भवति । ततो भागत्रये जायमाने यः स्थूलः पृथिवीरूपो भागस्तदस्थि । यो मध्यमो जलरूपो भागः सा मज्जा । योणुतरस्तेजोरूपो भागः सा वागिति । तथा चाण्डसृष्टेः पश्चाच्चतुर्मुखसृष्टेषु पदार्थेषु त्रिवृत्करणोपदेशान्न त्रिवृत्करणमण्डसृष्ट्यर्थं भवतीति त्रिवृत्करणं चतुर्मुखकर्तृकमिति तदेककर्तृकं नामरूपव्याकरणमपि चतुर्मुखकर्तृकमेवेत्याशयः ।

—१५ **उत्तरकालमिति** । श्रुतौ नामरूपव्याकरणोत्तरमुपदिश्यमानं त्रिवृत्करणं पाठक्रमानुरोधेन नामरूपव्याकरणोत्तरकालभाव्येव । नामरूपव्याकरणं चाण्डसृष्ट्युत्तरकालमिति नामरूपव्याकरणोत्तरं जायमानं त्रिवृत्करणं नाण्डसृष्ट्यर्थं भवतीति त्रिवृत्करणं चतुर्मुखकर्तृकमिति तदेककर्तृकं नामरूपव्याकरणमपि चतुर्मुखकर्तृकमेवेति पूर्वपक्ष्याशयः ।

५६१–५ **मांसमनसोरिति** । पृथिव्यपेक्षया जलमणु । ततोप्यणुतरं तेज इति क्रमः । तथा च पार्थिवपुरीषापेक्षयाणुत्वेन व्यपदिष्टं मांसं जलीयं स्यात् ।

मांसगताणुत्वस्य कारणगुणपूर्वकत्वात्। एवमणुतरत्वेन व्यपदिष्टं मनस्तैजसं स्यादिति भावः।

५६१–१८ **वाक्यशेषाविरोधादिति**। पूर्वपक्षिमते त्वनुपदमेवोक्त–(विवृति–पृ. २७६ प. १६–२२) रीत्या मनःप्राणवाचां त्रयाणामपि तैजसत्वादेतद्वाक्यशेषविरोधः स्पष्ट एवेति भावः ॥ १८ ॥ १९ ॥ (८)

## अथ तृतीयाध्याये प्रथमः पादः प्रारभ्यते।

५६४–३ **तदन्तरेति**। संपरिष्वक्तः संयुक्तः। रंहति गच्छति। रहि गतौ भ्वादिः। निरूपणं प्रतिवचनम्।

५६५—१०–२ **कर्मिणामिति**। वेत्थ यदितोधि प्रजाः प्रयन्ति (छा. ५।३।२) इति कर्मिणां गन्तव्यदेशः प्रवाहणेन पृष्टः। इतोधि इत ऊर्ध्वं प्रजा यत्प्रयन्ति तत्त्वं वेत्थ जानीषे किमिति तदर्थः। वेत्थ यथा पुनः पुनरावर्तन्ते (छा. ५।३।२) इति कर्मिणां पुनरावृत्तिप्रकारः पृष्टः। वेत्थ यथा देवयानस्य पितृयाणस्य च व्यावर्तने (छा. ५।३।२) इति देवयानपितृयाणमार्गव्यावर्तने पृष्टे। देवयानपितृयाणयोर्व्यावर्तने भेदके रूपे किं वेत्थ। केन प्रकारेण तयोर्भेद इति तदर्थः। वेत्थ यथासौ लोको न संपूर्यते (छा. ५।३।३) इत्यमुष्य लोकस्याप्राप्ता पृष्टः। अस्माल्लोकादनवरतं गच्छद्भिः पुरुषैः कस्माद्धेतोर्द्युलोको न संपूर्यते। अमुष्य लोकस्याप्राप्ता क इति तदर्थः। वेत्थेति। पुरुष इति वचः संज्ञा यासां ताः पुरुषवचसः। पञ्चम्यामाहुतौ दत्तायामुदकस्य येन प्रकारेण पुरुषो भवति तं प्रकारं त्वं वेत्थ किमित्यर्थः। अयं श्वेतकेतुं प्रति प्रवाहणेन कृतः प्रश्नः, सूत्रस्थप्रश्नशब्देनाभिप्रेतः। इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्वेतकेतुदत्तमुत्तरं च सूत्रे निरूपणशब्देनाभिप्रेतम्।

–१४–६ **श्रद्धां जुह्वतीति**। श्रद्धाशब्देनाप उच्यन्ते। देहारम्भिका आपो जीवेन सह द्युलोकरूपेऽग्नौ हुता भवन्ति। इयं प्रथमाहुतिः। ततस्तत्र तासामपां सोमो राजा भवति। सोमो राजाऽमृतमयदेहः। ततो द्वितीयाहुतौ सोऽमृतमयदेहः पर्जन्यरूपेऽग्नौ हुतः सन्वृष्टिरूपो भवति। ततस्तृतीयाहुतौ सा वृष्टिः पृथिवीरूपेऽग्नौ हुता सत्यन्नरूपा भवति। ततश्चतुर्थ्यामाहुतौ तदन्नं पुरुषरूपेऽग्नौ हुतं सद्वीर्यं भवति। ततः पञ्चम्यामाहुतौ तद्वीर्यं स्त्रीरूपेऽग्नौ हुतं सद्गर्भीभूय पुरुषरूपं भवतीति बोध्यम्। **प्राणा इति**। मुख्यप्राणा इत्यर्थः। जीवगमनस्य प्राणाधीनत्वात्प्राणाधीनः प्रक्षेपो होमत्वेनोपचरितः (श्रु.)। यद्वा प्राणा इन्द्रियाणि। तेषां होमकर्तृत्वं त्विन्द्रियार्जितकर्मणां द्युलोकादिगमनहेतुत्वाद्बोध्यम् ॥ १ ॥ २ ॥

५६७–५ तमुत्क्रामन्तमिति । तं जीवम् । सर्वे प्राणा इतरेन्द्रियाणि । शरीरान्निर्गच्छन्तं जीवं मुख्यप्राणोनुगच्छति । तं च मुख्यप्राणमेतरेन्द्रियाण्यनुगच्छन्तीत्यर्थः । अत्रेन्द्रियाणां जीवेन सह गमनं कथ्यत इतीन्द्रियाणां देहाश्रयत्वेन देहोपि सूक्ष्मरूपेण गच्छतीति गम्यते ( चे. ) ।

—८ मनःषष्ठानीति । प्रकृतिपरिणामविशेषशरीरस्थानि मनःसहितानि पञ्च ज्ञानेन्द्रियाणि मदंशो जीवः स्वकर्मानुसारेणेतस्ततः कर्षति । यच्छरीरमवाप्नोति यच्चापि शरीरादुत्क्रामति तत्रापीन्द्रियाणामीश्वर एतानीन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वा संयाति । यथा वायुः स्वकन्दनकस्तूरिकाद्याशयात्तत्स्थानात्सूक्ष्मावयवैः सह गन्धान्गृहीत्वान्यत्र संयाति तद्वदित्यर्थः ॥ ३ ॥

—१४ यत्रास्येति । पुरुषस्य मरणकाले वागिन्द्रियमग्नौ लीनं भवति वायौ प्राणो लीनो भवत्यादित्ये च चक्षुर्लीनं भवतीत्यर्थः ।

—१९ अनपियद्भिरिति । अप्ययरहितैरित्यर्थः । न हि मरणकाले लोम्नामोषधीषु केशानां च वनस्पतिषु लयो दृश्यते । तथा च तत्रागत्या यथौषधीर्लोमानीति श्रुतेर्लोमाभिमानिदेवतौषध्यभिमानिदेवतामप्येति लोमाभिमानित्वं विहाय केवलमोषध्यभिमानिनी भवतीत्यर्थः कल्प्यते तथा तया सह पठिताया अग्निं वागिति श्रुतेरपि वागभिमानिनी देवताग्न्यभिमानिनीमप्येति वागभिमानित्वं विहाय केवलाग्न्यभिमानिनी भवतीत्यर्थः कल्पनीय इति भावः ॥ ४ ॥

५६८–९–१० अन्यथेति । अग्निविषयः प्रश्नस्तस्योत्तरं च मनोवृत्तिविशेषविषयमित्यसंगतिः स्फुटैव ।

—१९ अपामेवेति । एवकारेण मनोवृत्तिविशेषव्यावृत्तिः । न ह्यमूर्तस्य मनोवृत्तिविशेषस्य सोमाकारेण परिणामः संभवतीति भावः ॥ ५ ॥

५६९–६ तस्मिन्नेव वाक्य इति । महावाक्य उत्तरत्रेत्यर्थः । छान्दोग्यपञ्चमप्रपाठकस्थतृतीयखण्ड एवेति यावत् । सोमराजान इति । दिव्यदेहा इत्यर्थः ( श्रु. ) ।

–८–१३ अथ य इति । ये पुरुषा ग्राम एव स्थित्वेष्टं यागादि पूर्तं खातादि दत्तं दानम् । इतिशब्दस्तजातीयोपवासादिकर्मान्तरपरः । यागदानहोमादीनि कर्माणि येनुतिष्ठन्ति ते धूममभिसंभवन्ति प्राप्नुवन्ति । एष इष्टादिकारी सोमो राजा स्वर्गे देवभोग्यदिव्यदेहयुक्तो भवति । एतद्देवानामन्नम् । इष्टादिकारिणामाजानसिद्धदेवकिंकरत्वादन्नत्वं भक्ष्यत्वं चोपचर्यते । संपतत्यनेन संपातः कर्मशेषः । यावत्कर्मशेषमुषित्वेत्यर्थः । यावच्छब्दः साकल्यार्थः । साकल्यं च फलप्रदानयुक्तकर्मविशेषविषयं न तु सर्वकर्मविषयम् । स पुनर्निवर्तमानोवरोहञ्जीवो योन्नमत्ति यो रेतः सिञ्चति पश्चात्तद्भवति । रेतः

सिग्भाव औपचारिकः । रेतःसिग्योगो भवतीत्यर्थः । रेतसि प्रविष्टः सन्रेतःसिक्संयुक्तो भवतीति यावत् ।

५६९–१४ अत्रापीति । प्रकृते पूर्ववाक्येपीत्यर्थः । उभयत्र सोमराजशब्देन प्रत्यभिज्ञानादेकार्थत्वम् । अस्फुटजीवसंबन्धस्य पूर्ववाक्यस्य स्फुटजीवसंबन्धेनोत्तरवाक्येनैकार्थ्यादुक्त एवार्थ इत्यर्थः ॥ ६ ॥ ७ ॥ ( १ )

५७०–१८ कृतात्यय इति । कृतस्य पुण्यकर्मणोऽत्ययेऽनुभवेन नाशे सत्यनुशयवान्भुक्तशिष्टकर्मवान्निवर्तत इति श्रुतिस्मृतिभ्यामवगम्यते । स च यथेतं यथागतं चन्द्रमसः स्थानादाकाशमित्यारोहणक्रमेण । अनेवं वायुधूमाभ्रादिना प्रकारान्तरेण च निवर्तत इति सूत्रार्थः ।

५७१–५ कृत्स्नोपभोग इति । यावच्छब्दप्रतिपादितं साकल्यं फलप्रदानयुक्तकर्मविशेषविषयं न तु सर्वकर्मविषयमिति पूर्वपक्षी न मन्यते ।

—११ अभ्याश इति । अभ्यागन्तारः प्रत्यवरूढा इत्यर्थः । अभ्याङ्पूर्वादशधातोः क्विबन्ताद्बहुवचनम् । उपसर्गवशेनाशधातोः प्रत्यवरोहणार्थत्वम् । हेति प्रसिद्धौ ।

५७२–१ ततः परिवृत्ताविति । ततः स्वधर्मानुष्ठानफलीभूतसुखानुभवानन्तरं परिवृत्तिरिह लोके जन्म भवति । तस्यां च कर्मणो यः फलशेषो भोक्तव्यस्तेन जातिं ब्राह्मणादिकां विशिष्टे वा कुले जन्म रूपं कान्तिमद्वर्णं हेमादितुल्यं बलं प्रतिपक्षनिग्रहक्षमं मेधां ग्रन्थग्रहणशक्तिं प्रज्ञामर्थग्रहणशक्तिं द्रव्याणि स्वर्णादीनि धर्मानुष्ठानमितिकरणाद्यच्चान्यदेवं युक्तं तत्सर्वं प्रतिपद्यते । सर्वत्र धर्मशेषो हेतुः । ऐहिकस्य शरीरग्रहणादेरपि धर्मफलत्वात् । तस्माच्चक्रवदुभयोर्लोकयोरिह चामुष्मिंश्च सुख एव वर्तते न जातुचिद्दुःखे । सुखानुबन्धेनैव तस्यावृत्तिर्भवतीत्यर्थः ॥ ८ ॥

—१७ यान्यनवद्यानीति । अनवद्यानि कर्माणीति यागादीन्युच्यन्ते । यान्यस्माकं सुचरितानीत्याचार उच्यत इति पूर्वपक्षिणोभिप्रायः । अनवद्यानि कर्माणीति प्रत्यक्षश्रुतिसिद्धं कर्मोक्तम् । सुचरितानीति त्वाचारानुमितश्रुतिसिद्धं कर्मोक्तम् ( श्रु. ) । यथा गाश्चानय बलीवर्दांश्चानयेति गोबलीवर्दशब्दयोरुभयोः प्रयोगे स्त्रीपुंव्यक्तिभेदनार्थभेदं परिकल्प्य शब्दद्वयोपपत्तिः क्रियते तथैवात्रेति सिद्धान्त्यभिप्रायः । अयमेव गोबलीवर्दन्यायः ॥ ९ ॥ १० ॥

५७३–१४ गोबलीवर्दन्यायेनेति । इदमनुपदमेवोक्तम् । सुकृतदुष्कृते एव साक्षाच्चरणशब्देन श्रुत्यैव प्रतिपाद्येते इति बादरिमतम् । चरणशब्देन लक्षणया कर्म प्रतिपाद्यत इति कार्ष्णाजिनिमतमिति भेदोवगन्तव्यः ।

—१८ स्वीकृतमिति । आनर्थक्यमिति सूत्रे कार्ष्णाजिनिमतप्रतिपादितोयमंशस्तु स्वीक्रियत एवेत्यर्थः ॥ ११ ॥ ( २ )

५७४-१ **अनिष्टादीति** । एतत्प्रभृति सूत्रपञ्चकं पूर्वपक्षिणः ॥ १२ ॥

—११ **संयमन इति** । संयमन इति निमित्तसप्तमी । यमाज्ञयेत्यर्थः ।

—१७ **अयं लोक इति** । अत्रामुत्र च सुखं नास्तीत्यर्थः ( श्रु. ) ॥ १३ ॥ ॥ १४ ॥ १५ ॥

५७५-९ **तत्रापीति** । तस्य यमस्य व्यापारः प्रशासनरूपः ॥ १६ ॥

५७६-८ **परिणेयमिति** । निर्वाह्यमित्यर्थः ॥ १७ ॥

५७७-१ **अथैतयोरिति** । यानि भूतान्युक्तयोर्देवयानपितृयाणयोर्मध्ये कतरेण येन केनापि मार्गेण न गच्छन्ति नागच्छन्ति च तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि जायस्व म्रियस्वेति भवन्ति । पुनःपुनर्जायन्ते म्रियन्त इत्यर्थः । क्रियासमभिहारे (पा. सू. ३।४।२) इति पाणिनिसूत्रेण पौनःपुन्यलक्षणक्रियासमभिहारे लोट् । पुरीमवस्कन्द (माघकाव्ये १।५१) इत्यादिवत् । भवन्तीति सामान्यार्थधातोरनुप्रयोगः । भूतानि भवन्तीति प्रथमान्तशब्देन प्रधानतया निर्दिष्टाः पापकर्माण एतच्छब्देन परामृश्यन्ते । त एव तृतीयं स्थानम् । पूर्वनिर्दिष्टब्रह्मलोकद्युलोकापेक्षया क्षुद्रजन्तुभवनादिलक्षणस्थानस्य तृतीयत्वात्तत्स्थानसंबन्धात्पापकर्माणस्तृतीयं स्थानमित्युच्यन्ते । तेन तृतीयस्थानेन पापकर्मणासौ द्युलोको न संपूर्यते न प्राप्यते । यद्वैतच्छब्देन पूर्वनिर्दिष्टो जननमरणादिभवनलक्षणो धात्वर्थ एव परामृश्यते । तस्यैव च तृतीयस्थानत्वम् । तेन तृतीयस्थानसद्भावेन तत्रैव जीवानां प्रायेण प्रचाराद्द्युलोकगन्तॄणामल्पत्वाद्द्युलोको न संपूर्यत इत्यर्थः ।

—७ **अवधारणाश्रवणादिति** । श्रुतौ पञ्चम्यामाहुतावेवेत्येवकाराश्रवणादित्याशयः ॥ १८ ॥

—९ **पुण्यकर्मणामिति** । पुण्यकर्मस्वप्ययं नियमो भज्यते किं पुनः पापकर्मस्विति भावः ॥ १९ ॥

—१४ **जीवजमिति** । जरायुजमित्यर्थः ।

**तेषूद्भिज्जस्वेदजयोरिति** । तेष्वण्डजं जीवजमुद्भिज्जमित्येतेषु त्रिषु वक्ष्यमाणसूत्रोक्तरीत्योद्भिज्जशब्देन प्रतिपादितयोरुद्भिज्जस्वेदजयोरित्यर्थः । उद्भिज्जास्तरुगुल्मादयः ॥ २० ॥

—२० **उद्भिज्जशब्देनेति** । न तु प्रथमेनाण्डजशब्देन द्वितीयेन जीवजशब्देन वा स्वेदजसंग्रहः । अण्डजस्य जीवजस्य वा स्वेदजेन विशेषसाम्याभावात् । उद्भिज्जानां तरुगुल्मादीनां तु स्वेदजेन सह पञ्चमाहुतिनिरपेक्षत्वायोनिजत्वपापोत्तरत्वादिधर्मैर्विशेषतः साम्यमस्तीत्याशयः ॥ २१ ॥ ( ३ )

५७८-७ **आकाशादिभाव इति** । आकाशादिशरीरत्वमित्यर्थः । श्रद्धा

वस्थस्येति । यथा त्रिवृत्कृतसूक्ष्मजलशरीरकस्यामृतमयशरीरकत्वं तथैवाकाशादिशरीरकत्वमित्यर्थः ॥ २२ ॥ ( ४ )

५७८—१६ **आकाशप्राप्तिप्रभृतीति** । अत्र प्रभृतिशब्देन वायुधूमाभ्रमेघवर्षप्राप्तिसंग्रहः ।

५७९–१ **तशब्दलोप इति** । 'दुर् निस् प्र' एतदुपसर्गत्रयपूर्वकात्पतधातोः खल्प्रत्यये ततस्तरप्प्रत्यये दुर्निष्प्रपततरमिति भाव्यम् । तत्रैकस्य 'त' इत्यक्षरस्य छान्दसत्वाल्लोपे दुर्निष्प्रपतरमिति भवति ॥ २३ ॥ ( ५ ).

—४ **अन्याधिष्ठित इति** । अत्यन्तदुःखभाजो लोके य उद्भिज्जव्रीह्यादिशरीराः प्राणिनो दृश्यन्ते तैः संश्लिष्टा एवैनेवरोहन्तः सूक्ष्मबीजशरीरका भवन्ति न तु त एव । अवरोहन्तः केवलं तैर्दुःखभाग्भिः प्राणिभिः संयुक्ता भूत्वा ततः पुरुषद्वारेण स्त्रीजठरं प्रविष्टाः पश्चात्सुखदुःखानुभवयोग्यं जन्म प्रतिपद्यन्त इत्येतत्सूत्रतात्पर्यम् ॥ २४ ॥

५८०–४ **अग्नीषोमीयादीति** । यज्ञे ह्यग्नीषोमादिदेवतोद्देशेन पशोर्हिंसा क्रियते । अग्नीषोमौ देवतास्येत्यग्नीषोमीयः पशुः । द्यावापृथिवी ( पा. सू. ४।२।३२ ) इति पाणिनिसूत्रेण छप्रत्ययः । आदिशब्देनान्यदेवताकपशुसंग्रहः ।

—६ **न चात्रेति** । उत्सर्गः सामान्यशास्त्रम् । अपवादो विशेषशास्त्रम् । तयोर्विरोधे विशेषशास्त्रं सामान्यशास्त्रस्य बाधकं भवति । यथाहवनीये जुहोतीति सामान्यशास्त्रम् । तेन चाहवनीयस्य सामान्यतो होमस्थानत्वं विधीयते । पदे जुहोतीति विशेषशास्त्रम् । तेन च होमविशेषे पदस्य होमस्थानत्वं विधीयते । तथा चैकत्र होमविशेषे स्थानद्वयस्यासंभवेन विरोधात्तत्र विशेषशास्त्रं बाधकं भवति । अयमेवोत्सर्गापवादभावः । स च प्रकृते न संभवति । विरोधाभावात् । अग्नीषोमीयं पशुमालभेतेति विध्यनुसारेण पशुहिंसायाः क्रतूपकारकत्वमप्यस्तु । तस्या एव च न हिंस्यादिति निषेधानुसारेण प्रत्यवायफलकत्वमप्यस्त्वित्युभयोरेकत्र संभवादिति शङ्काशयः ।

—१० **रागप्राप्तेति** । यज्ञे पशोर्हिंसा तु न रागतः प्राप्ता किं तु विधित एवेति.तादृशविधिविषयं न हिंस्यादिति निषेधविधिर्न व्याप्नोतीति यज्ञियपशुहिंसायाः प्रत्यवायफलकत्वाभावेनेष्टादिकर्म पापमिश्रं न भवतीत्याशयः ।

—२० **तेषामप्यशुद्धियुक्तत्वमिति** । नित्यकर्मादीनामपि संवत्सरपश्वालम्भनादिभिरशुद्धियुक्तत्वमित्यर्थः ( श्रु. ) ।

५८१–५ **संज्ञपनस्य** । मरणस्य ।

—९ **न हिंसेति** । अनर्थोदर्कव्यापारस्यैव हिंसात्वादिति भावः ।

—११ **न वा उ इति** । यज्ञे हन्यमानस्य पशोः परावृत्तौ सत्यां तत्प्रोत्साहनार्थोऽयं मन्त्रः । हे पशो त्वमेतदेतेन मारणव्यापारेण न वा उ सर्वथा नैव

म्रियसे । अत एव न रिष्यसि न विनश्यसि । किं तु सुगेभिः सुखेन गन्तुं शक्यैः पथिभिर्मार्गैर्देवानिदेपि देवानेव प्राप्नोपि । यत्र यस्मिंल्लोके सुकृतः पुण्यकृत एव गच्छन्ति दुष्कृतः पापिनो नापि नैव गच्छन्ति तस्मिन्नुत्तमलोके सविता देवस्त्वां दधातु स्थापयत्वित्यर्थः ॥ २५ ॥

५८२—१९ यो यो हीति । योऽन्नं भक्षयित्वा तत्परिणामभूतं रेतः सिञ्चति तत्संयुक्तोऽयमवरोहञ्जीवो भवतीति श्रुत्यर्थः ॥ २६ ॥ २७ ॥ ( ६ )

## अथ तृतीयाध्याये द्वितीयः पादः प्रारभ्यते ।

५८३–६ न तत्रेति । प्राग्व्याख्यातम् (विवृति–पृ. ८७ प. १८) ॥ १ ॥

—१८ य एष्विति । इन्द्रियेषु सुप्तेषु सत्सु यो जागर्तीत्यर्थः । अत्रेन्द्रियसंबन्धरूपलिङ्गदर्शनेन यच्छब्देन जीव एव निर्दिश्यत इति निश्चीयते ।

—२० निर्दिश्यन्त इति । ते च पुत्रादयः सांसारिकस्य जीवस्यैव लिङ्गभूताः । अतोपि यच्छब्देन जीव एव निर्दिश्यत इति निश्चीयते ॥ २ ॥

५८४–१६ कामं काममिति । णमुल्प्रत्ययान्तमेतत् । संकल्प्य संकल्प्येत्यर्थः ।

—१८ य एष्विति । एषु सर्वेषु जीवेषु सुप्तेषु निद्रां गतेषु सत्सु यः परमात्मा जागर्ति तदेव शुक्रं प्रकाशकं तद्ब्रह्म तदेवामृतमुच्यते । ननु नित्यमुक्तानाममृतान्तराणां सत्त्वात्तदेवेत्यवधारणं न संभवतीति चेत्सत्यम् । निरुपाधिकामृतत्वस्य ब्रह्मण्येव सद्भावात्तादृशामृतत्वाभिप्रायेणात्रावधारणोपपत्तेः । एतेनैतदवधारणानुरोधेन मोक्षावस्थायां मुक्तपरमात्मनोरभेद एवेति कल्पना प्रत्युक्ता । उक्तरीत्यावधारणोपपत्तेः । अभेदस्य परमं साम्यमुपैतीति श्रुतिबाधितत्वाच्च । अत्र य एष सुप्तेषु जागर्तीत्युपक्रमे तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यत इत्युपसंहारे च परमपुरुषासाधारणस्वभावप्रतीतेर्मध्ये कामं काममित्यत्रापि पुरुषपदेन परमात्मैव ग्राह्य इति भावः ॥ ३ ॥ ४ ॥

५८५–१७ देहयोगादिति । जीवस्य स्वाभाविका ये सत्यसंकल्पत्वादयो गुणास्तत्तिरोधानप्रकार एवानेन सूत्रेण प्रतिपाद्यते । वाशब्दो विकल्पार्थः । व्यवस्थितश्चायं विकल्पः । सृष्टिकाले देहयोगात्प्रलयकाले सूक्ष्माचिच्छक्तियोगात्तत्तिरोधानमिति व्यवस्था बोध्या ।

५८६–१ अल्पाल्पेति । एतेन नेश्वरः स्वाप्नं पदार्थजातं सृजति । तस्यात्यन्तास्थिररथादिनिर्माणे प्रयोजनाभावादित्याशङ्का निरस्ता ॥ ५ ॥

—४ सूचकश्चेति । जीवस्य स्वाप्नसृष्टिमात्रोपयोगिसत्यसंकल्पत्वाद्याविर्भावस्तदानीं स्यादिति शङ्काव्यावृत्त्यर्थमिदं सूत्रम् ( श्रु. ) ॥ ६ ॥ ( १ )

५८६–१४ तदभाव इति । चकारोनुक्तसमुच्चयार्थः पुरीततं समुच्चिनोति । तस्य स्वप्नस्याभावः सुषुप्तिर्नाडीष्वात्मनि पुरीतति च समुच्चयेन भवति । तच्छ्रुतेः । त्रयाणां सुषुप्तिस्थानत्वश्रुतेरिति सूत्रार्थः ।

—१५ अथ यत्रेति । यत्र यदा जीवः समस्त उपसंहृतेन्द्रियग्रामोऽत एव संप्रसन्नो बाह्यविषयसंपर्कजनितकालुष्यशून्यः स्वप्नं न पश्यति तदा सुषुप्त्यवस्थायामासु नाडीषु सृप्तः प्रविष्टो भवतीत्यर्थः । अत्र नाड्यः सुषुप्तिस्थानत्वेन श्रूयन्ते ।

—१७ अथ यदेति । यदा जीवः सुषुप्तो भवति यदा किंचिन्न जानाति तदा हितानामिका द्वासप्ततिसहस्रसंख्याकाः केशसहस्रांशसूक्ष्मा नानाविधान्नरसपरिपूर्णा नाड्यो हृदयात्पुरीतत्पर्यन्तं गतास्ताभिर्नाडीभिर्गत्वा पुरीतति शेत इत्यर्थः । अत्र पुरीतत्सुषुप्तिस्थानत्वेन श्रूयते ।

५८७–१ यत्रैतदिति । हे सोम्य यदायं जीवः स्वपिति तदा सता ब्रह्मणा संपन्नो युक्तो भवतीत्यर्थः । अत्र ब्रह्म सुषुप्तिस्थानत्वेन श्रूयते ।

—८ न च कार्यभेदेनेति । ब्रह्मणः साक्षात्सुषुप्तिस्थानत्वम् । तद्द्वारा पुरीततः । तद्द्वारा च नाडीनाम् । एवं कार्यभेद इत्येकदेव त्रयाणां समुच्चयः । न तु विकल्पः । विकल्पे ह्येकस्मिन्पक्षे परिगृहीते तदान्यस्य पक्षस्य बाध एव स्वीकर्तव्यः स्यात् । स च न न्याय्यः । अबाधेनैवोपपत्तेः ॥ ७ ॥ ८ ॥ ( २ )

५८८–१ ब्रह्मणि संपन्नस्येति । सता सोम्य तदा संपन्नो भवतीति श्रुतौ सुषुप्त्यवस्थायां जीवस्य ब्रह्मणा संयुक्तत्वं बोध्यत इति भावः ।

—५ यद्यद्भवन्तीति । प्रजा जाग्रद्दशायां यद्यद्व्याघ्रादित्वं प्राप्नुवन्ति तत्तद्व्याघ्रादित्वमा भवन्त्यागत्य भवन्ति । सुषुप्तिस्थानात्परमात्मन आगत्य यथापूर्वं व्याघ्रादिभावमनुसंदधत इत्यर्थः ।

—११ नाह खल्विति । अहेत्याश्चर्ये । अयं सुप्तः । संप्रति सुषुप्तिकाले । सुषुप्त्यवस्थायामज्ञानादिदोषा अस्यां श्रुतौ प्रतिपादिताः । सुषुप्तौ सत्संपत्तिवचनस्य तात्पर्यं तु तदा शरीरेन्द्रियाधिष्ठातृत्वादिव्यापारान्तरराहित्येन ब्रह्मणि स्थितिमात्रमित्येव न त्वाविर्भूतस्वरूपत्वम् । उक्तश्रुतिविरोधात् ॥ ९ ॥ ( ३ ॥

५८९–९ निमित्तवैरूप्यादिति । निमित्तवैरूप्यात्च सुषुप्तिराकारवैरूप्याच्च मरणमित्यन्वयः । मूर्छाया ह्यभिघातात्यन्तानिष्टश्रवणादि निमित्तं भवति । न तत्सुषुप्तेर्निमित्तं दृश्यते । तथा मूर्छामरणयोराकारवैरूप्यं तु स्पष्टमेवोपलभ्यते । मरणेऽल्पस्यापि प्राणस्यानुपलम्भात् ॥ १० ॥ ( ४ ) ,

—१८ स्थानेष्विति । अवस्थास्वित्यर्थः ।

५९०–३ आपादयन्तीति । शत्रन्तात्प्रथमाबहुवचनम् । कर्म देहसंबन्धमापादयत्तदेवापुरुषार्थजनकं भवति नान्यथेत्यर्थः ।

—८ अवर्जनीय इति । अपुरुषार्थसंबन्धो हि देहसंबन्धरूपवस्तुस्वभावायत्तः । अत एवाकर्मवश्यस्यापि परमात्मनो देहसंबन्धे जाते सत्यपुरुषार्थसंबन्धो दूरीकर्तुमशक्य इति भावः ।

५९१–२ इत्यादीति । आदिशब्देन निरवद्यं निरञ्जनम्, यः सर्वज्ञः सर्ववित्, यो मामजमनादिं च वेत्ति लोकमहेश्वरमित्यादिसंग्रहः ॥ ११ ॥

—३ भेदादितीति । अवस्थाभेदात्परब्रह्मणोपि दोषाः स्युरिति चेन्न । यः पृथिव्यामित्यादिश्रुतौ प्रतिपर्यायं दोषासंबन्धित्ववचनादिति सूत्रार्थः । एष त आत्मान्तर्याम्यमृत इत्येकत्रैव वक्तव्ये प्रतिपर्यायं तदुक्तिस्तत्तद्वस्तुगतदोषविशेषसंबन्धराहित्यप्रदर्शनार्थैवेत्याशयः ।

—१७ कालभेदेनेति । अग्निर्हेमन्ते सुखाय ग्रीष्मे दुःखाय भवति तथा स्वकीयं वस्तु स्वस्य सुखाय तदेव च परस्य दुःखाय भवति । तथा च यथैकस्य विरुद्धस्वभावद्वयान्वयानुपपत्तेर्न सुखं दुःखं च वस्तुस्वभावायत्तं तथैवापुरुषार्थसंबन्धोपि न वस्तुस्वभावायत्त इति बोध्यम् ॥ १२ ॥

५९२–१३ स्वशब्देनेति । पूर्वसूत्रोदाहृतायां यः पृथिव्यां तिष्ठन्नित्यादिश्रुतावसकृदमृतत्ववचनं तत्तद्वस्तुगतदोषसंबन्धराहित्यं सूचयति । अत्रोदाहृतायां श्रुतौ तु स्पष्टमेवोच्यत इति बोध्यम् । द्वा सुपर्णेति श्रुत्यर्थः प्रागुक्तः ( विवृति–पृ. ७१ प. १९ ) ॥ १३ ॥

५९३–११ कर्मवश्यमेवेति । ननु ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति भाष्य एव प्रागुक्तम् ( श्रीभाष्य–पृ. ११३ प. २ ) । तथा च ब्राह्मणशब्दस्यापि ब्रह्मपर्यन्तार्थकत्वेन ब्राह्मणो यजेतेत्यादिविधिषु ब्रह्मण एवाधिकारः प्राप्नोतीति चेन्न । ब्राह्मणो यजेतेत्यादिष्वर्थानुपपत्त्या ब्राह्मणशब्दस्य जीवमात्रपर्यन्तार्थकत्वाश्रयणात् । यथा शुक्लादिशब्दानां धर्मिपर्यन्तार्थकत्वेपि घटस्य शुक्ल इत्यादावर्थानुपपत्त्या धर्ममात्रवाचकत्वं स्वीक्रियते तद्वत् ॥ १४ ॥

—१६ नेति नेतीत्यादिभिरिति । सत्यं ज्ञानमिति श्रुतावपि ब्रह्मणो ज्ञानस्वरूपत्वाभिधानेन सर्वज्ञत्वादीनामार्थो निषेधः सिध्यति । ज्ञानस्य सर्वज्ञत्वाभावात् । ज्ञातुरेव हि सर्वज्ञत्वादिकम् ।

५९४–२ वाक्यान्वयर्थ्यादिति । ज्ञानस्वरूपस्यापि सर्वज्ञत्वादिकं श्रुतिप्रामाण्यादङ्गीकर्तव्यमित्याशयः ॥ १५ ॥

—१० अनन्तरमेवेति । अस्मिन्नेवाधिकरणे प्रकृतैतावत्त्वमिति सूत्रे ॥१६॥

५९५–८-१३ **यो मामिति** । न जायत इत्यजः । अनेन विकारिद्रव्याद्चेतनात्तत्संसृष्टात्संसारिचेतनाच विसजातीयत्वमुक्तम् । संसारिचेतनस्य हि कर्मकृताचित्संसर्गो जन्म । अनादिमित्यनेन पदेन मुक्तात्मनो विसजातीयत्वमुक्तम् । मुक्तात्मनो ह्यजत्वमादिमत् । तस्य हेयसंबन्धस्य पूर्ववृत्तत्वात्तदर्हतास्ति । अतोऽनादिमित्यनेन तदनर्हतया तत्प्रत्यनीकतोच्यते । लोकमहेश्वरमिति । लोकेश्वराणामपीश्वरमित्यर्थः । **विष्टभ्येति** । इदं चिदचिदात्मकं कृत्स्नं जगत्कार्यावस्थं कारणावस्थं स्थूलं सूक्ष्मं च स्वरूपसद्भावे स्थितौ प्रवृत्तिभेदे च यथा मत्संकल्पं नातिवर्तेत तथा मम महिम्नोऽयुतायुतांशेन विष्टभ्याहमवस्थित इत्यर्थः । **मयेति** । सत्यसंकल्पेन मयाध्यक्षेणेक्षिता मदीया प्रकृतिः क्षेत्रज्ञकर्मानुगुणं सचराचरं जगत्सूयते । अनेन क्षेत्रज्ञकर्मानुगुणमदीक्षणेन हेतुना जगद्विपरिवर्तेत इत्यर्थः । **उत्तम इति** । उत्तमः पुरुषस्तु पूर्वोक्ताभ्यां क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्योऽर्थान्तरभूतः परमात्मेत्युदाहृतः । सर्वासु श्रुतिषु परमात्मेति निर्देशादेव ह्युत्तमः पुरुषो बद्धमुक्तपुरुषाभ्यामर्थान्तरभूत इत्यवगम्यते । लोक्यत इति लोकः । तत्त्रयमचेतनं तत्संसृष्टचेतनो मुक्तश्चेत्येतत्त्रयं य आत्मतयाऽऽविश्य बिभर्ति तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः । इतश्चोक्ताल्लोकत्रयादर्थान्तरभूतः । यतः सोऽव्यय ईश्वरश्च । व्ययस्वभावादीशितव्याच्चार्थान्तरभूत इत्यर्थः ॥ १७ ॥ १८ ॥

५९६–११ **सप्तम्यन्तादिति** । अम्बुनीवाम्बुवदित्यर्थः ॥ १९ ॥

५९७–१९ **हेत्वभावादिति** । एकवस्तुगतदोषाणामन्यवस्तुनि संबन्धे हि तयोर्वस्तुनोर्देशतः संनिकर्षः कालतः संनिकर्षः स्वभावतश्च संनिकर्ष इति संनिकर्षत्रयं मिलितं हेतुः । तत्र यथाम्बुसूर्ययोर्घटाकाशयोश्चैकस्मिन्संनिकर्षे द्वयोः संनिकर्षयोर्विद्यमानयोरपि संनिकर्षत्रयाभावान्नैकवस्तुगतदोषाणामन्यत्र संबन्धस्तथैवात्र । परमात्मनो दोषप्रत्यनीकाकारतया तस्य पृथिव्यादिभिः सह स्वभावतः संनिकर्षाभावात् ॥ २० ॥

५९८–७–५ **माहारजनं वास इति** । महारजनेन रक्तं माहारजनम् । हरिद्रामहारजनाभ्यामञिति वार्तिकेन ( ४।२।२ ) अञ्प्रत्ययः । महारजनं कुसुम्भः । तेन रक्तं यद्वस्त्रं तद्वदस्य रूपमित्यर्थः । **आदेश इति** । उपदेशः क्रियत इत्यर्थः ।

—–१८ **प्रमाणान्तराप्रज्ञातमिति** । प्रमाणान्तरप्रसिद्धस्य निर्देशो ह्यनुवाद एव । प्रसिद्धस्य विधानायोगात् । स चानुवादो निषेधवाक्ये निषेधार्थो भवति । अप्रसिद्धस्य तु निर्देशो विधानार्थ एव । न तु तत्र निषेधार्थोऽनुवादः । प्रक्षालनाद्धि पङ्कस्येति न्यायेनानिर्देशस्यैव संभवात् ।

—२० **तथापि तेषामिति** । यद्यपि पृथिव्यादीनां पदार्थानां स्वरूपं लोकप्रसिद्धं तथापि तेषां ब्रह्मप्रकारत्वं लोकतो न ज्ञातुं शक्यमिति तदत्र विधीयते । इतरेषां हार्दाकाशादीनां तु न स्वरूपं न च ब्रह्मप्रकारत्वं लोकतो ज्ञातुं शक्यमिति तदुभयं विधीयत इति बोध्यम् ।

५९९–५ **प्रतीयमानेयत्तेति** । श्रुतौ नेति नेतीत्यत्रेतिशब्द इयत्तालक्षण-प्रकारवचनः । नेवं नैवमित्यर्थः । तथा च प्रकृता मूर्तामूर्ता विशेषा न निषिध्यन्ते । किं तु तैर्विशेषैर्या ब्रह्मणीयत्ता भासते सा निषिध्यते । एतदर्थमेव सूत्रे प्रकृतैतावत्त्वमित्युक्तम् । नेति नेतीति वीप्सा त्वात्यन्तिकाभावद्योतनार्था ।

—१४ **उत्कृष्टं नास्तीति** । श्रुतौ परशब्द उत्कृष्टवाची । न त्वनया श्रुत्या सामान्यतोऽन्यमात्रस्य जीवस्य जडस्य च निषेधः । तथा हि सत्यन्यत्परमिति पदद्वयवैयर्थ्यापत्तेः । ब्रह्मणः सर्वोत्कृष्टत्वादेव तस्य तदनुगुणं सत्यमिति नाम श्रुतावुक्तमिति बोध्यम् ॥ २१ ॥

६००–९ **तन्निषेधासंभवादिति** । तथा च ब्रह्मणः सविशेषत्वमस्त्येवेत्युभयलिङ्गत्वं सिद्धमिति भावः ॥ २२ ॥

—१७ **अपि संराधन इति** । संराधनं सम्यक्प्रीतिकरम् । प्रीतियुक्तभजनमुपासनमिति यावत् । तत्रैवायमुपलभ्यते नान्यत्राव्यक्तत्वादिति श्रुतिस्मृतिभ्यामवगम्यत इति सूत्रार्थः ।

६०१–११ **प्रीणनमिति** । संतोषजनकमित्यर्थः ।

—१२ **अतो निदिध्यासनायेति** । ब्रह्मणः केनापि प्रमाणेनानभिव्यक्तरूपत्वात्तत्प्रकारतया प्रागज्ञातमेव जगदैश्वर्यं द्वे वाव रूपे इत्यादिश्रुत्योपदिश्यते । तथा च तस्यानुवादासंभवात्तन्नेति नेतीति न निषिध्यते किं तु प्रकृतेयत्तामात्रं निषिध्यत इति सिद्धम् ॥ २३ ॥

—१५ **प्रकाशादिवदिति** । येषां वामदेवादीनां संराधनरूपकर्मण्यभ्यासात्प्रकाशो दर्शनं संजातं तेषां दर्शने प्रकाशादिवज्ज्ञानादेरिव जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयत इति सूत्रार्थः ( वे. दी. ) ॥ २४ ॥ २५ ॥ ( ५ )

६०२–८ **उभयेति** । तुशब्दोऽवधारणे । अहेः कुण्डलभावादिवद्ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानम् । नानात्वैकत्वरूपोभयव्यपदेशादिति सूत्रार्थः( वे. दी. ) ।

—१७ **तथा प्रधानेति** । अत्र परमात्मनो रूपमेव विवृतम् । ईश्वरत्वादिकथनात् । नियाम्यत्वलक्षणविभूतित्वमेव रूपत्वमिति रूपत्वविशदीकारात्(श्रु.)।

—२२ **अहिकुण्डलन्यायेनेति** । एकद्रव्यावस्थाविशेषेत्यर्थः । द्वे वाव ब्रह्मणो रूपे इत्यादिश्रुत्योपदिष्टमचिद्वस्तुनो ब्रह्मरूपत्वं किं ब्रह्मस्वरूपस्यैवाचिद्रूपेण परिणामाद्भवत्युत परब्रह्माचिद्वस्तुनोरेकजातियोगादथ वा ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनेति पक्षत्रयम् । तत्र प्रथमे पक्षे यद्यपि भिन्नाभिन्नत्वरूपोभयव्यपदेशोपपत्तिर्भवति तथापि ब्रह्मण एव परिणामाङ्गीकारात्सदोषत्वप्रसङ्गः । द्वितीयपक्षे त्वात्मैवेदं सर्वमिति ब्रह्मस्वरूपस्यैव सर्वशब्दवाच्यत्वव्यपदेशो विरुध्यते । न हि पृथिवीजलतेजआदीनां द्रव्यत्वरूपैकजातियोगेऽपि जलादीनां पृथिवीशब्दव्यपदेशो दृश्यते । अतस्तृतीयः पक्ष एव समीचीन इति सिद्धान्तः ॥ २६ ॥ २७ ॥

६०३-१८ पूर्ववद्वेति। यथा पूर्वत्र जीवस्य ब्रह्मांशत्वमुक्तं तद्वदचिद्वस्तुनोपीति सूत्रार्थः। यथा जीवः पृथक्सिद्ध्यनर्हविशेषणतया ब्रह्मांशभूतस्तथैवाचिद्वस्त्वपीति भावः।

—२० उक्तदोषादिति। अपरिणामित्वभेदश्रुतिबाधादित्यर्थः। तथा च प्रथमपक्षे दोष इत्याशयः।

६०४-२ ब्रह्मापीति। भावप्रधानो निर्देशः। ब्रह्मत्वमपीत्यर्थः। क्वचिद्ब्रह्मत्वमपीत्येव पाठः। परमात्मनो जीवस्याचिद्वस्तुनश्च ब्रह्मत्वरूपैकजातियोगेपि परस्परं तेषां तादात्म्याभावेनात्मैवेदं सर्वमित्याद्यभेदप्रतिपादकश्रुतिविरोध इति द्वितीयपक्षेपि दोष एवेत्याशयः।

—९ प्रकाशेति। प्रकाशादीनां चतुर्णां मण्यादिषु चतुर्षु यथासंख्येनान्वयः ॥ २८॥ २९ ॥ (६)

६०५-१५-६ चतुष्पाद्ब्रह्मेति। मनो ब्रह्मेत्युपासीतेत्युक्त्वा मनोरूपस्य ब्रह्मणो वाक्प्राणश्चक्षुः श्रोत्रं चेति पादचतुष्टयमुक्तम्। वागादीनां चतुर्णां मनोनियाम्यत्वान्मनःपादत्वाध्यासः। षोडशेति। षोडश कलाः पूर्वोक्ताः ( विवृति-पृ. ४७ प. ११ ) यस्य तत्। उन्मानव्यपदेशः परिमितत्वव्यपदेशः।

—१८ संबन्धव्यपदेश इति। पूर्वं सेतूदाहरणे केवलं सेतुशब्दनिर्देशः। संबन्धोदाहरणे तु प्रतिसंबन्धिनिर्देशसहितसेतुशब्दनिर्देश इति भेदः ॥ ३० ॥

६०६-११ सामान्यात्त्विति। सेतुसामान्यात्सेतुसादृश्याजगद्विधृतिरूपाद्ब्रह्मणः सेतुशब्दव्यपदेश इति सूत्रार्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥

६०७-१७ विवृणुते तनूं स्वामिति। अनेनैकस्यैव प्रापकत्वं प्राप्यत्वं च गम्यते ॥ ३४ ॥

६०८-११-५ अनन्तमुक्तमिति। तथा च न तस्येश इति श्रुतौ तस्येत्यनेन जगत्कारणतत्त्वस्य परमात्मन एव परामर्श इति तस्य परमात्मनः कश्चन पुरुषो नेशो नैयन्तुं न समर्थः। अत एव तस्य परमात्मनो महद्यश इति नाम संपन्नम्। अत्यन्तस्वतन्त्रत्वेन तदीययशसः सर्वाधिकत्वादिति श्रुत्यर्थे इत्यन्यप्रतिषेधः सिद्धो भवति। सर्व इति। प्राग्व्याख्यातम् ( विवृति-पृ. ९४ प. २२ )। स आप इति। स परमात्माऽपो भूलोकं प्रदुघे दुग्धवान्। प्राणिनामपेक्षितं भोग्यजातं पृथिव्यां संपादितवान्। तथैवान्तरिक्षं स्वर्गश्चेतीमे उभे अपि स्थाने प्रदुग्धे। तयोरपि स्थानयोर्भोग्यं संपादितवान्"। अप्शब्देन भूलोको लक्ष्यते। अद्भ्य इति। अद्भ्यः संभूतः पृथिव्यै रसाच्चेत्यनुवाकस्यात्र प्रदर्शनार्थमद्भ्यः संभूत इति प्रतीकं पठितम्। तथा हिरण्यगर्भः समवर्तताग्र इत्यृगष्टकस्यात्र प्रदर्शनार्थं हिरण्यगर्भ इति प्रतीकं पठितम्। तत्राद्भ्यः संभूत इत्यनुवाके वेदाहमेतं पुरुषं महान्तमित्यादिना प्रतिपादितं परमात्मनो महापु-

रुषत्वादिकमत्र तत्प्रतीकग्रहणेन सूचितम् । तस्यैव च महापुरुषस्य सर्वजगत्कारणत्वं हिरण्यगर्भ इति प्रतीकग्रहणेन सूचितम् । हिरण्यगर्भः समवर्तताग्र इत्यस्य हिरण्यगर्भश्चतुर्मुखोग्रे प्रागस्मात्परमात्मनः सकाशात्समुत्पन्न इत्यर्थः ।

६०९-११ हेतुत इति । ततो यदुत्तरमिति श्रुतौ तत इत्यस्य तस्माद्धेतोरित्यर्थः । न तूत्तरतरमित्यस्यावधित्वेन तत इति निर्देश इति भावः ।

—१३ उपक्रमविरोध इति । नान्यः पन्था इति वाक्यविरोधः । य एनं विदुरिति वाक्यस्य परमपुरुषेतरवेदनपरत्वं हि नान्यः पन्था इत्यनेन विरुद्धम् । यस्मात्परं नापरमित्यादिवाक्यविरोधोनन्तरोक्तिविरोधः ( श्रु. ) ॥ ३५ ॥

६१०-१ आयामशब्दस्तावदिति । व्याप्तिवाचिशब्दस्तावदित्यर्थः ॥ ३६ ॥ ( ७ )

—१५ तुल्यन्यायतयेति । मुक्तिरत उपपत्तेरिति सूत्रयितव्ये फलशब्दनिर्देशेन सूत्रकारैरत्र यावत्फलविषयको विचारः कृत इति गम्यते ॥ ३७ ॥

६११-२ अन्नाद इति । अन्नद इत्यर्थः ( श्रु. ) ॥ ३८ ॥ ३९ ॥

—१८ यज देवपूजायामिति । इदमुपपादितम् (श्रीभाष्य-पृ.३१४प.१३)।

६१२-२ वायव्यमिति । अस्यार्थः प्रागुक्तः ( विवृति-पृ. १९१ प. ८ ) ।

—४ कामिन इति । ननु वायुर्वै क्षेपिष्ठा देवता इत्यादिवाक्यमर्थवादरूपम् । अर्थवादवाक्यानां च न स्वार्थे प्रामाण्यं यथादित्यो यूप इत्यादौ । तथात्रापि वायुर्देवतैवैश्वर्यं ददातीति स्वार्थे प्रामाण्याभावे कथं वायुदेवतायाः फलहेतुत्वेन व्यपदेश इति चेदियं शङ्कात्र न युक्ता । अत्रार्थवादस्य स्वार्थेपि प्रामाण्यसद्भावात् । स्वार्थस्याप्यत्र विध्यपेक्षितत्वात् । यतो वायव्यं श्वेतमालभेत भूतिकाम इति विधौ श्रुते भूतिप्राप्त्यर्थं वायुदेवतामुद्दिश्य श्वेतपश्वालम्भनं कार्यमिति तदर्थे च ज्ञाते कथमस्मात्कर्मण ऐश्वर्यं प्राप्यत इत्याशङ्कायां तत्प्राप्तिप्रकार एवानेनार्थवादेनोपदिश्यते । तथा चोपदिष्टममुं प्रकारं परित्यज्य पुण्यद्वारा फलप्राप्तिरित्यपूर्वपरिकल्पनं न युक्तिसहमिति भावः । प्रागुपपादितं ( श्रीभाष्य-पृ. ३१४ ) चैतत् । विध्यपेक्षितार्थप्रतिपादकवाक्यानां स्वार्थे प्रामाण्यं तु मीमांसकैरप्यभ्युपेतमेव । तच्च प्रागुक्तम् ( विवृति-पृ. १०८ ) । न च नास्माभिरपूर्वमश्रुतं परिकल्प्यते । किं तु यजेतेत्यादौ लिङादिप्रत्ययस्य वाच्यमेव तदिति वाच्यम् । यतो लिङादिप्रत्यया धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं प्रतिपादयन्ति नापूर्वम् । तस्यालौकिकत्वात् । व्याकरणकृद्भिरप्येवमेवाङ्गीकृतमिति बोध्यम् ।

—१४ इष्टापूर्तमिति । प्राग्व्याख्यातम् ( विवृति-पृ. २४२ प. १ ) । तदेवेत्यस्य ब्रह्मैवेत्यर्थः ॥ ४० ॥ (८)

## अथ तृतीयाध्यायस्य तृतीयः पादः प्रारभ्यते ।

६१४-५ **गुणोपसंहारेति** । गुणानामुपसंहार एकत्रोक्तानां गुणानामन्यत्र चिन्तनार्थं स्वीकारः । सर्वेषां गुणानां समुच्चय इति यावत् । स च यद्यनेकश्रुतिष्वेकैव विद्योच्यते तदा भवति । यदि चानेकश्रुतिषु तत्र तत्र भिन्नैव विद्योच्यते तदा न भवति । किं तु तदानीं विकल्प एव । विकल्पश्च व्यवस्थितो यत्र ये गुणा उक्तास्तेषां तत्रैव चिन्तनमिति ।

—८ **अविशेषेति** । एकत्र श्रुतौ यदुच्यते तदेवान्यत्र यद्युच्यते न तु तत्र कश्चन विशेषः प्रतिपाद्यते तर्हि तत्पुनः कथनं व्यर्थं सदुभयत्र विधेयभेदं कल्पयति । विधेयभेदे चार्थादेव विद्या भिन्ना भवति । अग्निहोत्रं जुहोति दध्ना जुहोतीत्यत्र जुहोतीत्यस्य पुनरुक्तावपि दध्नेति विशेषप्रतिपादनाद्विधेयैक्यसिद्धेरेकमेव कर्मेति बोध्यम् ।

—१०-११ **अत एवेति** । विद्याया भिन्नत्वादेवेत्यर्थः । **तेषामिति** । यैः शिरस्याङ्गारपात्रधारणलक्षणं शिरोव्रतं यथाशास्त्रं संपादितं तेषामाथर्वणिकानामेवैतां ब्रह्मविद्यां ब्रूयादित्यर्थः ।

१६ **सर्वेति** । सर्वेषु वेदान्तेषु प्रतीयमानमुपासनमेकमेवेत्यर्थः ।

—१८ **एकं चेति** । कर्मकाण्डे शाखान्तराधिकरणे जैमिनेः सूत्रमेतत् । संयोगस्य रूपस्य चोदनाया आख्यायाश्चाविशेषादेकं कर्मेति तदर्थः ।

६१५-१ **वेद्यैकेति** । उपासनस्य स्वरूपमुपास्येनैव निरूप्यत इत्युपास्यमेव विद्याया रूपम् । तच्चोभयत्रापि वैश्वानररूपमेकमेव ॥ १ ॥ २ ॥

६१६-१ **स्वाध्यायस्येति** । तथात्व इति निमित्तसप्तमी । तथात्वं शिरोव्रतजन्यसंस्कारभाक्त्वम् । समाचारो नाम तन्नामकग्रन्थः । अधिकारोतिदेशः । स्वाध्यायस्य शिरोव्रतजन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि तस्य शिरोव्रतस्य 'आथर्वणिकानामेव भवनम्' इत्याकारो नियमो न तु विद्याभेदात् । समाचारग्रन्थे शिरोव्रतमुपदिश्य ततो व्रतान्तरे शिरोव्रतस्यातिदेशः कृतः—इदमपि वेदव्रतेन व्याख्यातमिति । वेदव्रतेनेत्यस्य शिरोव्रतेनेत्यर्थः । तत्र शिरोव्रतशब्दस्य वेदव्रतशब्देन निर्देशाच्छिरोव्रतं वेदस्य स्वाध्यायस्याङ्गभूतं व्रतं न विद्याया इति सिध्यति । तथा च यद्यपि विद्यैकैव तथापि शिरोव्रतमाथर्वणिकानामेव न तु सर्वशाखिनाम् । शिरोव्रतस्य विद्याङ्गत्वाभावात् । तद्धि स्वाध्यायस्याङ्गभूतम् । शिरोव्रतेन हि स्वाध्यायस्य संस्कारो भवति न विद्यायाः । नन्वेवं सर्वशाखिनामेकैव विद्या चेत् 'तेषामेवैतां ब्रह्मविद्यां वदेत' इत्यत्र तेषां शिरोव्रतिनामाथर्वणिकानामेवेति कथमुक्तमिति चेन्न । तत्र ब्रह्मविद्याशब्देन स्वाध्यायस्य ग्रहणात् ।

**६१६-११ सवहोमा इति ।** सायं होममारभ्य शतौदनपर्यन्तं ये सप्त सवा (होमाः) विधीयन्ते तेषामाथर्वणिकैकाग्निसंबन्धित्वादाथर्वणिकैः स्वसूत्र उदितो य एकोऽग्निरेकर्षिसंज्ञया प्रसिद्धस्तस्मिन्नग्नौ कार्या इति यथा नियम्यते तद्वदिति भावः ॥ ३ ॥

**६१७-३ उपासनमुच्यत इति ।** न तु छान्दोग्य इव किं तत्र विद्यते इति प्रश्नस्तदुत्तरं चोच्यते । तस्य छान्दोग्य उक्तत्वेन तस्य तत्रोपसंहारेण सिद्धत्वात् । तथा चापेक्षितमप्यर्थमुपसंहाराभिप्रायेणाकथयन्ती तैत्तिरीयश्रुतिर्विद्यैक्यं दर्शयति । विद्यैक्यं विनोपसंहारस्यासंभवात् ॥ ४ ॥

**—८ समाने सत्युपासत इति ।** एकसंज्ञके एककर्के चोपासने समान इत्यर्थः ( श्रु. ) ॥ ५ ॥ ( १ )

**—१९ द्वया हेति ।** कर्माङ्गभूतोद्गातरि मुख्यप्राणदृष्टिं विधातुमियमाख्यायिका । हशब्दो वृत्तार्थस्मरणे । प्रजापतेरपत्यानि प्राजापत्याः । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ( पा. सू. ४।१।८५ ) इति सूत्रेण ण्यप्रत्ययः । ते च देवाश्चासुराश्चेति द्वया द्विप्रकाराः । यज्ञे उद्गीथेन साधनभूतेनासुरानभ्ययाम अत्येमेति ते देवा अन्योन्यमूचुः । उद्गात्रा गेयस्य पञ्चविधस्य साम्नो द्वितीयो भाग उद्गीथशब्देनोच्यते । एवं चोद्गीथशब्देनोद्गाता लक्षणया गृह्यते । उत्तरत्रोद्गातुरेवाध्यस्तप्राणभावस्योपास्यत्वप्रतीतेः । एवं च प्रथमं, उद्गाथाऽप्यध्यस्तानेकत्वमुक्तं बहुकृत्व उद्गातृशब्दस्याभ्यस्तप्राणपरत्वात् । दुर्वृत्ती तस्य लक्षणा न सम्भवेत् हन्तेति हर्षे । स चात्रासुरविजयोपायदर्शनाज्जातः । ततः 'त्वमस्माकं यज्ञे उद्गातृकर्म कुरु' इति देवैर्वाक्प्रार्थिता । वयमुद्गीथे (उद्गातरि) वागृष्टिं कुर्मस्त्वं तत्संनिहिता भूत्वा तेन सम्यक्कर्म कारयेति वागभिमानिनी देवता प्रार्थितेत्यभिप्रायः । ततस्तद्देवानां चेष्टितमसुरैर्ज्ञात्वा सा वागश्लीलानृताभिसंध्यादिपापरूपपापेन संयोजिता सती देवकार्यं कर्तुमसमर्था बभूव । एवमेव प्राणश्चक्षुः श्रोत्रं मनश्चासुरैः पापेन संयोजितम् । ततो देवा इममासन्यं प्राणं मुख्यं प्रत्यूचुः पूर्ववत्प्रार्थितवन्तः । तथेति तेनोक्ते सत्युद्गीथे ( उद्गातरि ) मुख्यप्राणदृष्टिस्तैः कृता । तेन चासुराः पराभवं प्रापुः । य एवं वेद उद्गातारमध्यस्तमुख्यप्राणत्वमुपास्ते स आत्मना भवति समीचीनेन मनसा युक्तो भवति । यश्चास्य द्विषन्तं प्रति द्वेषं कुर्वन्पाप्मा पातकं भ्रातृव्यः शत्रुश्च स पराभवति पराभूतो भवतीत्यर्थः ।

**६१८-१ देवासुरा हेति ।** संयेतिरे परस्परं युद्धं कृतवन्तः । उद्गीथमुद्गीथावयवं प्रणवमाजह्रुरसुरपराभवोपायत्वेन स्वीचक्रुः । अनेन प्रणवेन । एनानसुरान् । दोषं पातकसंयोजनम् । उद्गीथमुपासांचक्रिरे उद्गीथावयवं प्रणवं मुख्यप्राणत्वेनोपासितवन्तः । आखन्यत इत्याखणं मृत्पिण्डः । छान्दसं ण

६२१-१३ **संज्ञात इति** । तद्विद्यैक्यम् । तुशब्द एवार्थे ।

—१५ **कुण्डेति** । कुण्डपायिनामयनाग्निहोत्रं माससमाप्तहोमसमासिकम् (श्रु.) ॥ ८ ॥

—२२ **पटो दग्ध इति** । पटैकदेशे दग्धेपि पटो दग्ध इति प्रयोगो भवति । तत्र पटशब्दस्य पटावयववाचित्वं दृश्यते ॥ ९ ॥ (२)

६२२-७ **यो ह वा इति** । ज्येष्ठत्वश्रेष्ठत्वगुणकं प्राणं यो वेद स तत्क्रतुन्यायेन स्वयमपि ज्येष्ठश्च श्रेष्ठश्च भवति । यथोपासते तथा भवतीति तत्क्रतुन्यायस्वरूपम् । ज्येष्ठत्वं वृद्धत्वम् । वृद्धशब्दादिष्ठन्प्रत्यये वृद्धस्य च (पा. सू. ५।३।६२) इति सूत्रेण ज्यादेशः । श्रेष्ठत्वं प्रशस्ततमत्वम् । प्रशस्यशब्दादिष्ठनि प्रशस्यस्य श्रः (पा. सू. ५।३।६०) इति सूत्रेण श्रादेशः । एवं फलदर्शनेन पुरुषमभिमुखीकृत्याह–प्राणो वावेति । वावशब्दोवधारणार्थे. । गर्भस्थपुरुषे पूर्वं प्राणप्रवृत्तिः पश्चादिन्द्रियाणामतः प्राणस्येन्द्रियापेक्षया ज्येष्ठत्वम् । इन्द्रियव्यापाराणां सर्वेषां तदधीनत्वाच्छ्रेष्ठत्वं चेति (वि. दी.) । ततो वाचो वसिष्ठत्वं चक्षुषः प्रतिष्ठात्वं श्रोत्रस्य संपत्त्वं मनस आयतनत्वं चोक्तम् । अतिशयेन वसुमान् वसिष्ठः । वाग्मी हि लोकेऽतिशयेन वसुमानस्तीति । अतश्च वसुमत्तासंपादकसद्व्यवहारजनकत्वं वाचो वसिष्ठत्वम् । चक्षुषा हि समे विषमे च प्रतितिष्ठतीति प्रतिष्ठासंपादकसमविषमभूतलप्रदर्शकत्वं चक्षुषः प्रतिष्ठात्वम् । इमे सर्वे वेदाः श्रोत्रेभिसंपद्यन्त इति संपद्भूतवेदग्राहकत्वेन श्रवणादिसंपादकत्वं श्रोत्रस्य संपत्त्वम् । स्रक्चन्दनादिविषयकज्ञानस्वरूपभोगायतनत्वं मनस आयतनत्वम् । ततः सर्वेन्द्रियाणां स्थितिर्व्यापारश्च प्राणाधीन इति तदपेक्षया प्राण एव श्रेष्ठ इत्युक्तम् । पश्चाद्वयं यत्कार्यकरणसमर्थाः स्मस्तस्य त्वदधीनत्वात्त्वैतत्कार्यकरणसामर्थ्यमिति वागादिभिः प्राण एव स्वीया गुणाः समर्पिताः ।

—१९ **विद्या भिद्यत इति** । छान्दोग्यवाजसनेयकयोः सर्वस्यैव रूपस्यादेकैव प्राणविद्या । किं नु तस्याः सकाशात्कौषीतकयुक्ता प्राणविद्या भिन्नान नेति संशय इति भावः ।

६२३-२ **तद्विधुर इति** । वसिष्ठत्वादिगुणरहित इत्यर्थः ।

—९ **व्यूदिर इति** । अयं छान्दोग्यपाठः । व्यूदिरे विवादं चक्रुः । विवदमाना इति बृहदारण्यके पाठः ।

—१२ **विशारणमिति** । स्वस्वस्थानाच्चालनमित्यर्थः ।

६२४-४ **तदेव हीति** । तथा च कौषीतकिश्रुतौ यद्यपि वागादीनां ये वसिष्ठत्वादयो गुणास्ते प्राणस्यैवेति शब्दतो नोक्तं तथाप्यर्थतस्तदुक्तमेवेति विद्यैक्यं सिद्धम् ॥ १० ॥ (३)

६२४-१३ आनन्दादय इति। भावप्रधानो निर्देशः। आनन्दत्वादय इत्यर्थः।

—१४ स्वरूपगुणानामिति। स्वरूपप्रतीत्यनुबन्धिगुणानामित्यर्थः (श्रु.)।

—१७ वर्तत इति। अभेदादिति पदं पूर्वसूत्रादत्र सूत्रे संबध्यत इत्यर्थः। यद्यपि पूर्वसूत्रे 'सर्वाभेदात्' इति समस्तं पदं तथापि तदेकदेशभूतमभेदादित्येवात्रानुवर्तते। अपेक्षितांशस्यैव परामर्शात्।

—१८ गुणपृथग्भावादिति। गुणविशिष्टस्यैव ब्रह्मत्वादित्याशयः॥११॥

६२५-२ तस्य प्रियमिति। इष्टवस्तुदर्शनजन्यं सुखं प्रियम्। तदेवानन्दमयात्मनः शिरस्त्वेन कल्पितम्। आदिशब्देन मोदो दक्षिणः पक्ष इति श्रुतेर्ग्रहणम्।

—६ अब्रह्मगुणत्वादिति। प्रियशिरस्त्वादयो गुणा हि पुरुषत्वेन कल्पिते ब्रह्मणि कल्पिताः। न तु वस्तुभूताः। ब्रह्मणो निरवयवत्वात्।

—८ उपचयापचयौ। वृद्धिक्षयरूपौ विकारौ। विकारवत्त्वे च विनाशावश्यंभावेन सत्यं ज्ञानमिति श्रुतिविरोधः। तत्रानन्तपदेनाविनाशित्वस्य बोधनात्। आदिशब्दादस्थूलमनण्वित्यादिश्रुतिसंग्रहः॥ १२॥

—१० ब्रह्मसंबन्धिनामेवेति। वस्तुतो ब्रह्मसंबन्धिनामेव न तु प्रियशिरस्त्वादिवत्कल्पितानामित्यर्थः।

—१४ इतरे त्विति। इतरे काल्पनिकादितरे वास्तविका गुणा आनन्दादयस्त्वर्थसामान्यात्सर्वासु विद्यास्वनुवर्तन्ते। अर्थसामान्यादित्युक्त्या येषां गुणानां कारुण्यादीनामर्थसामान्यं नास्ति ते वास्तविका अपि न सर्वत्रानुवर्तन्ते। अर्थशब्देन ब्रह्मस्वरूपमुच्यते। तेन सामान्यं सादृश्यमानन्दादीनां गुणानामेव न तु कारुण्यादीनाम्। यतो वस्तुप्रतीतिकाले यथा वस्तु प्रतीयते तथा तत्समकालमेवानन्दादयः प्रतीयन्ते। तेषामर्थस्वरूपनिरूपकधर्मत्वात्। यथा लोके कस्मिंश्चित्पुरुषे दृष्टे तदैव तद्गता ह्रस्वत्वोन्नतत्वादयः प्रतीयन्ते न तु दयादाक्षिण्यादयः। कीदृशो देवदत्त इति पृष्टे इयानुन्नत इत्युन्नतत्वादयो ह्यर्थस्वरूपं निरूपयन्ति।

—१७ ते च गुणा इति। एतेनानन्त्यादुपसंहाराशक्तिश्चेति प्रागुक्तं निरस्तम्। अर्थस्वरूपनिरूपकाणां गुणानामानन्त्याभावात्॥ १३॥

६२६-१८ वेदनसिद्धय इति। उपासनोपयोगिशास्त्रजन्यज्ञानसिद्ध्यर्थमित्यर्थः। परोक्षार्थस्य बुद्धावारोपणं शिरःपक्षादिरूपणादेव हि भवति (श्रु.)।

६२७-४ एकदेशैरिति। इष्टवस्तुदर्शनजन्यं सुखं प्रियम्। तल्लाभजन्यं सुखं मोदः। लब्धस्योपभोगजन्यं सुखं प्रमोदः। अतिशयितसुखत्वेन प्रसिद्धानामप्येतेषां ब्रह्मसुखैकदेशत्वेन ब्रह्मणोऽपरिच्छिन्नसुखत्वमुक्तं भवति (श्रु.)।

६२७–५ **उपलक्षणत्वादिति** । प्रियशिरस्त्वादयो हि न ब्रह्मणो वस्तुभूता गुणाः । किं तु ब्रह्मणः सुखेन प्रतिपत्त्यर्थे तज्ज्ञानसाधनत्वेन कल्पिता इति भावः ॥ १४ ॥

—९ **आत्मन इति** । निष्कलं निष्क्रियमित्यादिश्रुतिषु निरवयवत्वेन प्रसिद्धस्य परमात्मन इत्यर्थः ॥ १५ ॥

—१५ **आत्मगृहीतिरिति** । गृहीतिर्ग्रहणम् । इतरस्मिन्निवेतरवत् । सप्तम्यन्ताद्वतिः ।

—२१ **उत्तराद्वाक्यादिति** । बहु स्यामित्येवंरूपा कामना हि परमात्मन एव संभवतीति भावः ॥ १६ ॥

—२२ **अन्वयादितीति** । अन्वयो योगः ।

६२८–८ **परमात्मबुद्ध्येति** । यद्यपि वस्तुतोऽनात्मान प्राणमयादयस्तथापि तेषु परमात्मबुद्ध्यात्मशब्दप्रयोगाद्वायमनात्मस्वात्मशब्दप्रयोग आनन्दमयवाक्यस्यात्मशब्दार्थनिश्चायक इति भावः ॥ १७ ॥ ( ४ )

—१३ **स होवाचेति** । वासो वस्त्रम् । आपो जलम् । किं मे वस्त्रं भविष्यतीति स प्राण इन्द्रियान्प्रत्युवाच । इन्द्रियाणि च जलमेव वस्त्रमित्यूचुः । जलमेव वस्त्रत्वेन कल्पनीयमित्यर्थः । तस्माज्जलस्य वस्त्रत्वेनानुसंधानमस्माभिः क्रियत इति भोक्ष्यमाणाः पुरस्ताद्भोजनात्प्रागुपरिष्टाद्भोजनानन्तरं चाचमनीयेन जलेन प्राणं परिदधति । जलरूपवस्त्रेण परिधानात्प्राणो नग्नो न भवति । प्राणोपासकश्चैतादृशानग्नत्वचिन्तनेन वासो वस्त्रं लम्भुकः प्राप्ता भवत्यत एवानग्नश्च भवतीत्यर्थः ।

—१८ **तद्विद्वांस इति** । श्रोत्रिया वेदाध्ययनकर्तारः । अन प्राणम् । ॥ १८ ॥ ( ५ )

६३०–९ **सत्यसंकल्पत्वगुणाभेदादिति** । यशित्वं हि सत्यसंकल्पत्वस्य विततिरेवेति तयोरभेदो बोध्यः ॥ १९ ॥ ( ६ )

—१३ **तद्यन्सत्यमिति** । व्याहृतिशरीरकब्रह्मविधेयम् । यत्सत्यमिदं सत्यमसौ स आदित्यः । स क इत्यत्राह–य एष इति । य एषोऽन्तरादित्ये पुरुषो हिरण्मयः पुरुषो दृश्यते य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति श्रुतिप्रसिद्ध इत्यर्थः । तत आदित्यमण्डलेऽक्षिणि च वर्तमानस्य सत्यपुरुषस्य भूरिति व्याहृतिः शिरः भुव इति बाहू सुवरिति पादौ । एतादृशशिरोबाहुपादविशिष्टत्वेन ध्यानं कर्तव्यम् । तत आदित्यमण्डलान्तर्वर्तिनः 'अहः' इत्युपनिषत् । अक्ष्यन्तर्वर्तिनश्च 'अहम्' इत्युपनिषदित्युक्तम् । उपनिषच्छब्दो रहस्यनामवाची । तस्य तस्य तत्तन्नामविशिष्टत्वेनानुसंधानं कर्तव्यमिति भावः ।

६३०–१९ उभयत्रापीति । आदित्यमण्डलस्थस्यापि नामद्वयविशिष्टत्वेनानुसंधानमक्षिस्थस्यापि नामद्वयविशिष्टत्वेनानुसंधानमित्यर्थः ॥ २० ॥ २१ ॥

६३१–१४ तस्यैतस्येति । यदमुष्यादित्यमण्डलस्थस्य रूपं तदेव तस्यैतस्याक्ष्यन्तर्गतस्य रूपं बोध्यमिति श्रुत्यातिदेशः कृतः । विद्यैक्ये हि गुणोपसंहारेणैव रूपप्राप्तेः सिद्धत्वादतिदेशवैयर्थ्यं स्यादतो विद्याभेदोऽङ्गीकार्य इति भावः ॥ २२ ॥ ( ७ )

—१८ संभृतीति । संभृतिर्धारणम् । द्युव्याप्तिः स्वर्गादिषु व्याप्तिः । समाहारद्वंद्वः । संभृत्यादिगुणजातमप्यन्य एव स्थानविशेषसंबन्धनियमान्नियतं सन्न सर्वत्रोपसंहार्यमिति सूत्रार्थः ।

६३२–१ ब्रह्म ज्येष्ठेति । ब्रह्म ब्रह्मणा । तृतीयायाश्छान्दसो लुक् । ज्येष्ठा ज्येष्ठानि । वीर्या वीर्याणि । शेश्छन्दसि प्रथमाबहुवचनस्य छान्दसो लुक् । नलोपः । वीर्याणि पराक्रमविशेषाः । संभृतानि धृतानि । ब्रह्मणा ज्येष्ठानि वीर्याणि धृतानि सहितानीति । तच्च ब्रह्म ज्येष्ठादिजन्मनः प्राक् दिवं स्वर्गमाततान व्याप्तवत् । ब्रह्म हि सर्वेषां स्वर्लोकस्याग्रम् । तादृशं सर्वेषां भूतानां प्रथमसमाविर्भूतम् । कालापरिच्छिन्नमिति यावत् । तादृशेन ब्रह्मणा स्पर्धितुं कः क्षमते न कोऽपीत्यर्थः ।

—१५ अशक्योपसंहारा इति । चिन्तयितुमशक्या इत्यर्थः । पृथिव्यपेक्षया ज्यायस्त्वं भूताकाशावस्थानं चैवमादीनां गुणानामल्पस्थानविषयासु शाण्डिल्यादिविद्यासु चिन्तनं न संभवति । स्थानभेदेन विरोधात् । तथा च श्रुतौ तासु विद्यासु तेषां गुणानां श्रवणं न तद्गुणविशिष्टत्वेन ब्रह्मचिन्तनार्थं किं तु प्रकृतस्य ब्रह्मणः केवलं माहात्म्यप्रदर्शनार्थमेवेति बोध्यम् ॥ २३ ॥ (८)

—१८ पुरुषविद्यायामपीति । पुरुषविद्यायामप्युभयत्र रूपभेदाद्विद्याभेदः । इतरे केचन गुणाः यथैकस्यां शाखायामाम्नातास्तेन प्रकारेण तेषां शाखान्तरेऽनाम्नानात् । प्रकारान्तरेण कथनं हि विद्याभेदं साधयतीति सूत्रार्थः ।

—१९ तस्यैवमिति । ज्ञानिनो यज्ञस्यात्मैव यजमानः । श्रद्धैव यजमानपत्नी । शरीरमेवेध्मम् । उर एव वेदिः । लोमान्येव बर्हिः । अत्र पुरुषयज्ञे आत्मादय एव यजमानादित्वेन कल्पिताः ।

—२१ पुरुष इति । दीर्घायुष्ट्वफलिका पुरुषविद्येयम् । पुरुष एव यज्ञः । तस्य षोडशोत्तरशतवर्षपरिमिते पुरुषायुषि यान्याद्यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम् । ततश्चतुश्चत्वारिंशद्वर्षाणि माध्यंदिनं सवनम् । ततोऽष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम् । अस्या विद्यायाः फलं षोडशं वर्षशतं जीवतीति । षोडश वर्षाण्यधिकान्यस्मिन् शते तत्षोडशम् । तदस्मिन्नधिकम् (पा. सू. ५।२।४५)

इति सूत्रेण डप्रत्ययः। षोडशाधिकं वर्षशतं जीवतीत्यर्थः। स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा इत्यस्य यज्ञस्य दीक्षोक्ता। अशनाया-(अशिशिषा-) पिपासारत्यभावानां दुःखात्मकत्वेन दीक्षात्वकल्पनम्।

**६३२-२५ फलसंयोगाश्रवणादिति।** यद्यपि पुरुषविद्याया उपरिष्टाद्ब्रह्मणो महिमानमाप्नोतीति फलं श्रूयते तथापि केवलपुरुषविद्याया ब्रह्मविद्याङ्गत्वाभावाद्ब्रह्मप्राप्तिरूपं फलमयोग्यत्वात्पुरुषविद्यासंबन्धमनवाप्य पूर्वानुवाकोक्तब्रह्मविद्यान्वितं भवतीत्यभिप्रायेण फलसंयोगाश्रवणादित्युक्तम् ( श्रु. )।

**६३३-१० अन्यथेति ।** तैत्तिरीयकेऽन्यथा कृतमित्यर्थः । छान्दोग्ये ह्यात्मनो यजमानत्वं श्रद्धायाः पत्नीत्वं शरीरस्येध्मत्वमित्यादि न कृतं तैत्तिरीयके कृतमिति भावः।

**—११ ब्रह्मणे त्वेति।** महसे ब्रह्मणे ज्योतिःस्वरूपब्रह्मतत्त्वाभिव्यक्त्यर्थं त्वा त्वां सर्वान्तर्यामिणं परमात्मानं भजामीति शेषः। एवं परमात्मानं स्तुत्वा तत ओमित्युच्चारयन्नात्मानं युञ्जीतात्मानुसंधानं कुर्यादित्यर्थः ॥२४॥ ( ९ )

**६३४-२ शुक्रमिति।** अभिचारकर्मणि देवताप्रार्थनार्थो मन्त्रोयम् । प्रविध्येति विदारयेत्यर्थकं क्रियापदं लोण्मध्यमपुरुषैकवचनान्तम्। हे देव मच्छत्रोः शुक्रं तेजिष्ठमङ्गं विदारय हृदयं च विदारयेत्यर्थः। हे सवितर्देव यज्ञं प्रसुवानुजानीहीति देव सवितरित्यस्यार्थः। सूर्यवरुणादयः शं सुखं कुर्वन्त्विति शं नो मित्र इत्यस्यार्थः।

**—७ महाव्रतब्राह्मणमिति।** महाव्रतरूपकर्मप्रतिपादकं ब्राह्मणमित्यर्थः। एवं प्रवर्ग्यब्राह्मणमित्यस्य प्रवर्ग्यरूपकर्मप्रतिपादकं ब्राह्मणमित्यर्थः।

**—१६ श्रुतिलिङ्गेति।** एतत्स्वरूपं प्रागुक्तम् (विवृति-पृ. १८ प. २०)। तत्र श्रुत्यादीनां षण्णां मध्ये कयोरपि द्वयोरेकत्र संनिपाते पूर्वं प्रबलमिति पूर्वमीमांसायामुक्तत्वात्प्रकरणापेक्षया श्रुत्यादीनां बलवत्त्वाच्छुक्रमित्यादीनां मन्त्राणां कर्मसु विनियोगोवगम्यते। तथा च न तदर्थमेतदधिकरणारम्भोऽन्यथापि शं नो मित्र इत्यादिमन्त्राणां विद्याङ्गत्वाभावसिद्ध्यर्थमधिकरणारम्भः। सूत्रार्थस्त्वित्थम्-यथा वेधाद्यर्थभेदाच्छुक्रं प्रविध्येत्यादिमन्त्राणां न विद्याङ्गत्वं तथा सत्यं वदिष्यामि तेजस्वि नावधीतमस्त्वित्यध्ययनसंबन्धरूपार्थभेदान्न शं नो मित्र इत्यादिमन्त्राणां विद्याङ्गत्वमिति। तथा चात्र शं नो मित्र इत्यादिमन्त्रा एवैतदधिकरणविषयीभूता इति बोध्यम्। एतेषां मन्त्राणामुपनिषद्भिः सहपाठस्तूपनिषदामिवैतेषां मन्त्राणां विद्याङ्गत्वमित्यभिप्रायेण न कृतः। किं तूपनिषदामिवैतेषां मन्त्राणां दिवा कीर्त्यत्वमरण्येनुवाक्यत्वं चेत्येतदभिप्रायेण कृतः। दिवा कीर्त्यत्वं दिवैव कीर्तनीयत्वं न रात्रौ । अरण्येनुवाक्यत्वमरण्य एवानुवचनयोग्यत्वं न गृह इति बोध्यम् ॥ २५ ॥ ( १० )

६३५–१८ **विधूय पापमिति** । अत्र पापशब्दः पुण्यस्याप्युपलक्षकः । अस्यां छन्दोगश्रुतौ तथा विद्वानित्याथर्वणिकश्रुतौ च पुण्यपापयोः केवलं ज्ञानिकर्तृकत्यागमात्रमुच्यते न तु तयोरन्येनोपादानमुच्यते । तस्य पुत्रा इति शाट्यायनिश्रुतौ च केवलमुपादानमुच्यते न तु त्यागः । तत्सुकृतेति कौषीतकिश्रुतौ तूभयमुक्तम् ।

६३६–८ **सर्वविद्याङ्गमास्थेयमिति** । सर्वब्रह्मविद्यास्वपेक्षणीयमित्यर्थः ।

—९ **प्रहीणविषयत्वादिति** । प्रहीणं त्यक्तम् । उपायनमन्यत्र प्रवेशः । त्यक्तस्य कर्मणोऽन्यत्र क्वचित्प्रवेश आवश्यक एवेत्युपायनमप्यवश्यं भावीति भावः ।

—१० **तच्चिन्तनं चेति** । यथा चिन्तनं तथा फलप्राप्तिरिति प्रहाणोपायनचिन्तनं विधीयत इति बोध्यम् ।

—१३ **विकल्पपरमिति** । यस्यां शाखायां यदुक्तं तत्र तावन्मात्रस्यैव चिन्तनमिति व्यवस्थितो विकल्पः । उपसंहारः समुच्चयः ।

६३७–२ **प्रदर्शनार्थमिति** । उपायनस्यापि प्रदर्शनार्थमित्यर्थः ।

—२ **उपायनशब्दशेषत्वादिति** । उपायनशब्दशब्दस्य शेषत्वशब्देन षष्ठीतत्पुरुषः । न तु षष्ठीतत्पुरुषात्त्वप्रत्ययः । तथा सति हानेरुपायनशेषत्वमित्यर्थः स्यात् । स च न योग्यः । उपायनस्य मुख्यत्वाभावात् । ज्ञानिनो हि मुख्यत्वेन पुण्यपापहानिरेवापेक्षितत्वात् । एवं च पुण्यपापोपायनस्य हान्यपेक्षत्वेन शाखान्तरस्थस्याप्युपायनवाक्यस्य शाखान्तरस्थहानिवाक्यशेषत्वेन वाक्यद्वयेनैकार्थविधानात्समुच्चय इति बोध्यम् ।

—८ कुशा वानस्पत्या इति । एतत्सामान्यवाक्यम् । अत्र कुशानां वनस्पतिविशेषसंबन्धित्वस्याप्रतीतेः । कुशा औदुम्बर्य इति विशेषवाक्यं तु सामान्यवाक्यस्य शेषभूतम् । कुशाः शङ्कवः । कुशाशब्दः स्त्रीलिङ्गः ।

—१२ **अविशेषेणेति** । देवच्छन्दसः पूर्वत्वं वासुरच्छन्दसः पूर्वत्वमिति विशेषस्य देवासुराणां छन्दोभिरिति सामान्यवाक्यादप्रतीतेः ।

१४ **हिरण्येनेति** । षोडशिनः पात्रविशेषस्य स्तोत्रं गानविशेषविशिष्टोच्चारणमुपाकरोति प्रस्तौतीत्यर्थः । एतत्सामान्यवाक्यम् । कालविशेषाकथनात् । **समयाविषित इति** । ईषदुदित इत्यर्थः ।

६३८–१ **अपि त्विति** । अष्टदोषग्रस्तत्वाद्विकल्पो न न्याय्यः । तथा च नानुयाजेषु ये यजामहं करोतीति वाक्यं न स्वतन्त्रतया निषेधकम् । किं तु वाक्यशेषत्वाङ्गीकारेण विधीनामेकदेशः स्यात् । तत्रानूयाजैरेव नञ्संबध्यते । तथा च पर्युदासन्यायेनानूयाजव्यतिरिक्तेषु यागेषु ये यजामहः कर्तव्य इति फलितमित्यनूयाजेषु न विधिर्नापि प्रतिषेध इति विकल्पाभावः सिद्ध इति तत्सूत्रतात्पर्यम् ।

६३८-५ अविशेषपुनः श्रवणत्वेनेति । यद्यपि कौषीतकिव्यतिरिक्तश्रुतौ हानोपादानयोरन्यतरदेकमेव निर्दिष्टं कौषीतकिश्रुतौ तूभयमित्यस्त्येव विशेषस्तथाप्यन्यतरोच्चारणेपि तदितरस्योक्तन्यायेनावश्यप्राप्तत्वादार्थमुभयोच्चारणमस्त्येवेत्यविशेषो बोध्यः ॥ २६ ॥ ( ११ )

—१५ ताण्डिनः । छन्दोगाः ।

६३९-७ तरितव्यभोगाभावादिति । प्राप्तव्यभोगाभावादित्यर्थः । तॄधातुः प्राप्तिवाचकः ॥ २७ ॥

—१६-७ अर्थस्याभाव्यादिति । पश्चात्प्राप्तव्यभोगाभावेन सुकृतदुष्कृतहानरूपार्थस्य स्वभावतो देहवियोगकाल एव जायमानत्वादित्यर्थः । श्रुतेरिति । देहवियोगकाले सुकृतदुष्कृतहानिर्भवतीत्येतदर्थप्रतिपादिकायाः कौषीतकिव्यतिरिक्तश्रुतेरित्यर्थः । पदानामिति । कौषीतकिश्रुतिस्थावान्तरवाक्यानामित्यर्थः । अवान्तरवाक्यानि हि महावाक्यापेक्षया पदस्थानीयान्येवेति पदानामित्युक्तिरिति बोध्यम् ॥ २८ ॥ २९ ॥

६४०-१० उपपन्न इति । तच्छब्देन कर्मलभ्यः प्राकृतदेहः परामृश्यते । तल्लक्षणस्तज्जातीयो योर्थोऽकर्मलभ्योऽप्राकृतदेहस्तदुपलब्धेर्देहवियोगकाले सर्वकर्मक्षय उपपन्न इत्यर्थः ।

—१७ उपलभ्यत इति । न हि देहसंबन्धं विना जक्षन्क्रीडन्नित्याद्युपपद्यत इत्याशयः ।

—२० विद्या हीति । यथा पापं स्वफलभूतदुःखभोगाय नरकप्राप्तिहेतुभूतं वपुर्दिशति यथा वा पुण्यं स्वफलभूतसुखोपभोगाय स्वर्गप्राप्तिहेतुभूतं वपुर्दिशति तथा ब्रह्मविद्यापि स्वफलभूतब्रह्मप्राप्तिहेतुभूतं सूक्ष्मशरीरं स्थापयतीत्यर्थः (श्रु.)।

६४१-२ यथा लोक इति । येन हेतुना यत्कार्यमुत्पन्नं तेनोत्पन्नेन कार्येण तस्मिन्हेतौ पूर्णत्वेन साधितेपि तस्य कार्यस्य कार्यान्तरार्थं स्थितिर्भवतीत्यत्र दृष्टान्तोयम् ॥ ३० ॥ ३१ ॥ ( १२ )

६४२-८-१२ उपकोसलादिष्विति । आदिशब्देन पर्यङ्कविद्यापञ्चाग्निविद्यादहरविद्याग्रहणम् । सर्वेषामिति । मधुविद्याशाण्डिल्यविद्याषोडशकलविद्यावैश्वानरविद्यावतामपीत्यर्थः । ये चेति । छान्दोग्ये पञ्चाग्निविद्योपासकानामर्चिरादिगतिमुक्त्वान्येषामपि ब्रह्मविद्योपासकानामर्चिरादिगतिर्भवतीति ये चेति वाक्ये प्रतिपाद्यते । अत्र श्रद्धाशब्दो द्वितीयान्तः । द्वितीयायाश्छान्दसो लुक् । पुरस्कृत्येत्यध्याहारः । तपःशब्दो ब्रह्मवाची । ये चेमेरण्ये स्थित्वा श्रद्धां पुरस्कृत्य ब्रह्मोपासते तेषामप्यर्चिरादिगतिर्भवतीत्यर्थः । श्रद्धां सत्यमुपासत इति श्रुतावपि सत्यशब्दो ब्रह्मवाचीति सिद्धान्तः । पूर्वपक्षिणा तु तपःसत्यशब्दयोर्ब्रह्मवाचकत्वमजानानेन 'प्रमाणाभावाच्च' इत्युक्तम् ।

६४२-१५ **गमने हि सतीति**। सूत्रेऽनियमः सर्वेषामित्युत्तरं हिशब्दाध्याहार इति भावः।

६४३-१२ **एवंजातीयका इति**। तयोर्ध्वमायन्नमृतत्वमेति सूर्यद्वारेण ते विरजाः प्रयान्तीत्यादयः श्रुतयः 'क्रमात्ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम्। अयनं देवलोकं च सवितारं सवैद्युतम्॥ इत्यादयः स्मृतयश्चात्र विवक्षिताः॥ ३२॥ (१३)

६४४-३ **प्रपञ्चप्रत्यनीकतास्वरूपा इति**। प्रपञ्चप्रत्यनीकं ब्रह्म। तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपका अस्थूलत्वादिधर्मा इत्यर्थः (श्रु.)।

—१३ **सामान्यतद्भावाभ्यामिति**। सामान्यं साधारण्यम्। तेषां भावस्तद्भावः। तेषामस्थूलत्वादीनां भावो ब्रह्मस्वरूपप्रतीतावन्तर्भावः।

—१६ **प्रत्यगात्मन्यपीति**। जीवात्मन्यपीत्यर्थः।

—१८ **असाधारणमिति**। जीवव्यावृत्तमित्यर्थः।

—२१ **अस्थूलत्वादिविशेषिणेति**। न चास्थूलत्वादीनां धर्माणामभावरूपत्वान्न धर्मिस्वरूपज्ञानोपायत्वमिति वाच्यम्। भावान्तरस्यैवाभावशब्दार्थत्वात्। निरूपितं चैतद्यतीन्द्रमतदीपिकाप्रकाशे-(पृ०३६)ऽस्माभिः। तथा चास्थूलत्वं स्थूलत्वादिविरोधिशब्दाभिलप्यः सूक्ष्म आकार इति न दोषः। अत एव श्रुत्यन्तरेऽस्थूलत्वधर्मः सुसूक्ष्मशब्देनोक्तः।

६४५-३ **जामदग्न्येति**। जमदग्निना सुहुरनुष्ठितं चतूरात्रं नाम कर्म। तत्र पुरोडाशद्रव्यकोपसदिष्टयङ्गभूतो यः सामवेदपठितो मन्त्रस्तस्य सामवेदपठितत्वेनोच्चैर्गानं प्राप्तम्। उच्चैः साम्नेति वचनात्। एवं नु यजुर्वेदोक्तोपसत्कर्मशेषत्वेन तदनुवर्तित्वादुपांशु प्रयुज्यते। उपांशु यजुषेति यजुष उपांशुत्वविधानात् (श्रु.)।

—६ **गुणमुख्येति**। व्यतिक्रमो विरोधः। याजुर्वेदिकमाधानम्' तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधिः। तत्र सामविधिनिबन्धनस्योच्चैस्त्वस्यानुष्ठानमिति प्राप्ते साङ्गस्याधानस्य यजुर्वेदविहितत्वात्प्रधानानुसारेणोपांशुत्वमेव बलवदिति सिद्धान्तः॥ ३३॥ ३४॥ (१४)

६४६-१ **अन्तरेति**। भूतानां पञ्चमहाभूतानां ग्रामः संघातः पाञ्चभौतिको देहस्तद्वान्यः स्वात्मा स्वमेवात्मा जीवात्मा तस्य तद्विषयक एव अन्तरा 'य आत्मा सर्वान्तर' इत्युपस्तप्रश्नः। अन्यथा प्रतिवचनभेदानुपपत्तिरिति चेन्नैवम्। किं तूषस्तप्रश्नोपि परमात्मविषयक एव। यथैकस्यामेव सद्विद्यायां सदुपदेशे प्रक्रान्ते प्रश्नः प्रतिवचनं चासकृद्दृश्यते तद्वदिति सूत्रार्थः।

—२ **यत्साक्षादिति**। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। सुपां सुलुक् (पा. सू. ७।१।३९) इति पाणिनिसूत्रेण प्रथमाया आदादेशः। अपरोक्ष-

त्वं नाम सर्वदेशकालसंनिहितत्वम् । देशकालसंनिकर्षे ह्यापरोक्ष्यदर्शनात् । साक्षादव्यवधानेनागौणं मुख्यमिति यावत् । यदपरोक्षं मुख्यं ब्रह्म सर्वान्तर आत्मा च तादृशं वस्तु मे व्याचक्ष्व विविच्याचक्ष्व प्रदर्शयेत्युषस्तस्य याज्ञवल्क्यं प्रति प्रश्नः । यः प्राणेन साधनभूतेन प्राणिति । प्राणापानादिव्यापारकर्ता यः स परमात्मेत्युत्तरम् । अत्र प्राणादीनां करणतया निर्देशादात्मनस्तद्व्यतिरेकः सिद्धः । परं त्वेतादृशः किं जीव एव परमात्मोत तदन्य इत्यनिश्चयादनुष्टेनो-षस्तेन पुनः पृष्टो याज्ञवल्क्य आह—न दृष्टेरिति । द्रष्टारं श्रोतारं मन्तारं विज्ञा-तारमित्यत्र धात्वर्थः कृतिमात्रम् । दृष्टेः कर्तारमित्यर्थः । द्रष्टारमिति यावत् । यथा पाकं पचतीत्यत्र पचतीत्यस्य करोतीत्यर्थस्तद्वत् । द्रष्टारं जीवं परमात्म-त्वेन न पश्येः किं तु द्रष्टुः श्रोतुर्मन्तुर्विज्ञातुश्च जीवादन्य एव त आत्मा सर्वा-न्तरः । अतः परमात्मनः सकाशादन्यत्वमितिरिक्तं जीवजातमार्तं दुःखीति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षी त्वियं श्रुतिर्जीवात्मपरेति मन्यते । जाग्रदवस्थायां प्राणनादिकर्तृत्वस्य जीवात्मनि प्रसिद्धत्वात् । सर्वान्तरत्वस्य च देहान्तरत्वेनो-पपत्तेः ।

६४८–५ निरुपाधिकमिति । जीवस्य हि प्राणनकर्तृत्वं कर्मानुगुणदेहेन्द्रि-यादीनामधिष्ठातृत्वेन जाग्रतो स्वप्ने च दृश्यत इति तत्सोपाधिकमिति बोध्यम् ॥ ३५ ॥

६४९–२० तस्मादिति । यस्माद्वैराग्यमावश्यकं तस्माद्ब्राह्मणः, ब्रह्म वेदस्त-मधीते ब्राह्मणः । जातिपरो वा ब्राह्मणशब्दः । पण्डा ऊहापोहक्षमा धीः । सा संजातास्येति पण्डितः । तस्य कर्म पाण्डित्यमौपदेशिकार्थाधिगमरूपं विवे कं निर्वेदविरक्तिफलकं निर्विद्य लब्ध्वा बाल्येन स्वमाहात्म्यानाविष्करणलक्षण-बालस्वभावेन युक्तः सन्ब्रह्मणि निष्ठासेत्तन्निष्ठां लभेतोपासीतेति यावत् (वि.दी.)।

६५०–१० सर्वान्तरात्मत्वमेवेति । परस्परव्यतिहारेणोभयत्रापि सर्वा-न्तरात्मत्वगुणविशिष्टमेव ब्रह्मोपास्यमिति रूपभेदाभावाद्विद्याभेदो नेत्याशयः ।

—१९ व्यावृत्तिप्रतीतिसिद्ध्यर्थमिति । व्यावर्तकधर्मभूयस्तया व्यावृत्ति-बुद्ध्यतिशयार्थमित्यर्थः (श्रु) । प्राणनहेतुत्वधर्मेण यद्यपि परमात्मनि जीवाद्व्यावृत्ति-बुद्धिरुत्पद्यते तथापि सा बुद्धिर्दृढा न भवति । जीवात्मन्यपि प्राणनहेतुत्वधर्मस्य सोपाधिकस्य संभवात् । कहोलप्रश्नप्रतिवचनगताशनायाद्यतीतत्वधर्मेण तु पर-मात्मनि जीवाद्व्यावृत्तिबुद्धिर्दृढा भवति । अशनायाद्यतीतत्वस्य जीवात्मनि कथ-मप्यसंभवादिति बोध्यम् ॥ ३६ ॥

६५१–६–७ यथा सोम्येति । हे सोम्य यथा मधुकृतो मधुकरमक्षिकाः मधु निस्तिष्ठन्ति निष्पादयन्ति । अनेकपुष्परसान्मधुत्वमापादयन्ति । ते च मधुभावं गता रसा अहममुकवृक्षस्येति विवेकं न लभन्ते ; तथा सुषुप्ता प्रजाः

सति संपद्यापि वयं सति संपन्ना इति विवेकं न लभन्ते । ज्ञानिनस्तु नैवम् । किं तु तत्तेजः परस्यां देवतायां प्रशाम्यतीति भावः । **उपपाद्यत इति** । प्रश्नप्रतिवचनमुखेन प्रतिपाद्यत इत्यर्थः ( श्रु. ) ।

६५१–११ **केचिदिति** । शंकराचार्या इत्यर्थः ।

—१२ **तत्र पूर्वेणेति** । व्यतिहार इति सूत्रेणेत्यर्थः । जीवेश्वरयोरन्योन्यानुवादेनान्योन्यात्मकत्वरूपव्यतिहारोऽनन्यभावनायामाम्नायते । इतरवत् । ऐतरेये सर्वात्मत्वादयो गुणा अन्यत्राप्याम्नायन्ते तद्वत् । तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन त्वमहमस्म्यहं च त्वमसीति तन्मते सूत्रार्थः ।

६५२–२ **स यो हेति** । उपनिषत्प्रसिद्धः सशब्दः । पुनश्छन्देन बुद्धिस्थमुपास्यं परामृश्यते । यदं पूज्यं प्रथमजं भौतिकानां मध्ये प्रथमं जातं महत्सत्यं ब्रह्म हिरण्यगर्भाख्यं वेद उपास्ते इत्यर्थः ।

—७ **उत्तरवाक्य इति** । तत्सत्यमसावित्यत्रेत्यर्थः ॥ ३७ ॥ ( १५ )

६५३–२ **अथ यदिदमिति** । व्याख्यातं प्राक् ( विवृति पृ. १८५ पं. ९ )

—८ **अपहतपाप्मत्वादीति** । पाप्मशब्दः पातकवाची । पातकरहितत्वं जरारहितत्वं मृत्युरहितत्वं शोकरहितत्वं बुभुक्षारहितत्वं पिपासारहितत्वं सत्यकामत्वं सत्यसंकल्पत्वं चेत्यष्टौ गुणाश्छान्दोग्य उक्ताः ।

—११ **रूपभेदादिति** । छान्दोग्यश्रुताकाशशब्दः परमात्मवाचीति पूर्वपक्षी न मन्यते । तथा च छान्दोग्ये भूताकाशस्योपासना वाजसनेयके त्वाकाशे शेत इत्युक्तेराकाशे शयानस्येति धर्मिभेदः । किं च छान्दोग्येऽपहतपाप्मत्वादयो धर्मा उक्ताः । वाजसनेयके तु वशित्वादय इति धर्मभेदश्चेति रूपभेदो बोध्यः ।

६५४–४ **सुषिरशब्देनेति** । सुषिरं बिलम् । अत एवात्र नाकाशशब्दस्य भूताकाशवाचकत्वम् । किं तु जीववाचकत्वम् । य एषोऽन्तर्हृदय आकाशो जीवात्मा तत्र शेते तदन्तर्गततया वर्तत इत्यर्थमाहुः ॥ ३८ ॥

—१२ **निर्विशेषत्वप्रतीतेरिति** । तथा च वाजसनेयके निर्गुणोपासना । छान्दोग्ये तु सगुणोपासनेति रूपभेदाद्विद्याभेदः । यद्यपि छान्दोग्योक्ता अपि गुणा न पारमार्थिकास्तथापि कल्पितगुणविशिष्टत्वेनैव तत्रोपासनं स्वरूपाभिव्यक्तिरूपफलविशेषप्राप्त्यर्थमभिधीयत इति पूर्वपक्षाशयः । यद्युभयत्र निर्गुणोपासनमेवेति विद्यैकत्वमास्तां नाम । परं तथापि कामादिगुणानामैक्याद्विद्यैक्यमिति पूर्वसूत्रे यत्सिद्धान्तितमुक्तं तन्न संभवतीति पूर्वपक्षाशयोऽत्र बोध्यः ।

—२० **प्रमाणान्तराप्रतिपन्नानामिति** । प्रमाणान्तराविदितानां श्रुत्येकसमधिगम्यानां गुणानां न निषेधार्थमनुवादः किं तु तत्तद्गुणविशिष्टरूपेणोपासनार्थं विधानमेवेति भावः ।

६५६-२ अग्राह्य इति । ग्राह्यवस्तुविजातीयोत एव न गृह्यत इत्यर्थः ।

—७ नास्येति । अस्य शरीरस्य जरयैतद्ब्रह्म न जीर्यति । तथास्य शरीरस्य वधेनैतद्ब्रह्म न हन्यत एतत्सत्यं दहराख्यं ब्रह्म । पुरमिव पुरम् । भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालित्वात् । अस्मिन्ब्रह्मणि काम्यन्त इति कामाः कल्याणगुणाः समाहिता इत्यर्थः ॥ ३९ ॥

—१४ सांसारिकेति । पितृलोकप्राप्तिरूपफलस्य संसारावस्थायां भोगयोग्यत्वेन तत्फलस्य सांसारिकफलत्वात्तादृशफलकामनयोपासनं कुर्वन्मुमुक्षुर्न भवितुमर्हतीति तस्यामुपासनायामुक्तानां गुणानां मुमुक्षुक्रियमाणोपासनासु नोपसंहार इत्याशयः ।

६५७-१ उपसंपत्तेरेवेति । तथा च नैतत्पितृलोकप्राप्तिरूपं फलं सांसारिकं किं तु मुमुक्षुभोगयोग्यमेवात्र प्रतिपाद्यत इति भावः ॥ ४० ॥ ( १६ )

—१० तन्निर्धारणेति । निर्धारणं निश्चयेन चेतसो धारणमुपासनम् । पृथक्, हि, अप्रतिबन्ध इति पदच्छेदः । तस्योद्गीथोपासनस्यानियमः । कुतः । श्रुतावनियमस्य दर्शनात् । हि यतोऽस्योद्गीथोपासनस्याप्रतिबन्धरूपं पृथगेव फलमस्तीति सूत्रार्थः ।

—१२ ओमित्येतदिति । उद्गीथमुद्गीथभक्त्यवयवभूतमोमित्येतदक्षरमुपासीतेति कर्माङ्गभूतोङ्काराश्रयमुपासनं विधीयते । तच्चोपासनं स्वाश्रयद्वारा कर्माङ्गम् । उद्गीथस्य कर्माङ्गत्वेन तद्द्वारा तदाश्रितोपासनस्यापि कर्माङ्गत्वात् । अङ्गभूतस्य चाङ्गिफलेनैव फलवत्त्वात्तस्य पृथक्फलराहित्येऽपि तदनुष्ठानमुपपद्यते । एतदेव निरूढानुष्ठानानीत्यनेनोच्यते । निरूढमुपपत्तिमत् । न चास्योपासनस्य यदेव विद्ययेति वाक्ये वीर्यवत्तरत्वरूपं फलं श्रूयत इति वाच्यम् । यदेव विद्ययेति वाक्यस्यार्थवादवाक्यत्वेन प्रशंसामात्रपरत्वात् । न हि तद्विधिवाक्यं भवितुमर्हति । विधिप्रत्ययाश्रवणात् । भवतीत्यादिवर्तमाननिर्देशात् । यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यत्र वाक्ये स्वनिष्ठाबोधकवाक्यश्रवणाभावः पर्णमयत्वस्य न पृथक्फलं भवितुमर्हति । तद्वाक्यस्योक्तरीत्यार्थवादवाक्यत्वेन प्रशंसामात्रपरत्वात् । अग्नौ घृतादिप्रक्षेपसाधनीभूतं पात्रं जुहूशब्देनोच्यते । पर्णता पर्णमयत्वम् । तच्च स्वाश्रयभूतजुहूद्वारा कर्माङ्गम् । तद्वदेवात्र बोध्यम् । यदेव विद्ययेत्यत्र विद्याशब्देनोपासनमुच्यते । श्रद्धाशब्देनास्तिक्यबुद्धिरुच्यते । उपनिषच्छब्देनोपनिषज्जन्यं ब्रह्मात्मकत्वज्ञानमुच्यते । कर्मणो वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबद्धफलकत्वम् ।

६५८-३ रात्रिसत्रन्यायेनेति । अर्थवादोक्तमपि फलं विध्यपेक्षितं स्वीकार्यमित्यभ्युपगमयितुं 'रात्रिसत्रन्यायेने'त्युक्तम् ( श्रु. ) । रात्रिसत्रन्यायस्वरूपं तु प्रागुक्तम् ( विवृति-पृ. १०८ प. ८ ) ।

—९ **गोदोहनादिवदिति** । गोदोहनेन पशुकामस्य प्रणयेदिति विधिः । गोदोहनं गोदोहनाश्रयीभूतं पात्रम् । तेन पात्रेण जलानयनं यज्ञे विधीयते । परं तु पशुकामनायां सत्याम् । असत्यां तु पशुकामनायामन्यसाधनेन जलानयनेपि न यज्ञहानिः । अतो यज्ञे गोदोहनस्य नियमेनोपसंहारो नास्तीति भावः ॥ ४१ ॥ ( १७ )

—१२ **कामानिति** । कल्याणगुणानपहतपाप्मत्वादीनित्यर्थः ।

—१७ **दहराकाशस्येति** । दहराकाशशब्दवाच्यस्य परमात्मन इत्यर्थः । तत्र परमात्मन उपासनं आनन्दत्वादिविशिष्टस्य परमात्मस्वरूपस्य चिन्तनम् । गुणानामुपासने त्वपहतपाप्मत्वादिगुणाष्टकचिन्तनम् । तत्र गुणचिन्तनं गुणिचिन्तनं विना कर्तुमशक्यमिति गुणचिन्तनात्पूर्वं गुणचिन्तनाङ्गभूतं यद्गुणिचिन्तनं कर्तव्यं तत्पूर्वप्रतिपादितपरमात्मोपासनेन कृतात्परमात्मस्वरूपचिन्तनादन्यदेव कर्तव्यमथ वा तेनैव सिद्धमिति संशये तेनैव सिद्धमिति पूर्वपक्षः । प्रथमोपासनायामुपास्यं यत्परमात्मस्वरूपं तस्यैव द्वितीयोपासनायां गुणाश्रयत्वात्स्वरूपचिन्तनार्थं गुणचिन्तनार्थं चैकदैव तस्यानुसंधातुं शक्यत्वात् ।

६८९–४ **भिन्नत्वादिति** । यथैको घट एव 'घटस्य' एतदुभयसमुदायो न भवतीत्येकघटस्वरूपापेक्षया समुदायो भिन्नस्तथा द्वितीयोपासनायां चिन्तनीयो यो गुणगुणिसमुदायः स प्रथमोपासनायां चिन्तनीयात्केवलपरमात्मस्वरूपाद्भिन्न एवेत्यर्थः ।

—७ **यथेन्द्रायेति** । यद्यप्येक एवेन्द्रो राजत्वाधिराजत्वस्वाराज्यरूपगुणत्रयविशिष्टस्तथापि गुणभेदेन तत्तद्गुणविशिष्टस्येन्द्रस्य भिन्नत्वात्त्रिवारं प्रदानं क्रियते तद्वदित्याशयः ।

—१० **नानेति** । विशेष्यस्यैकत्वेऽपि राजादिगुणभेदेन देवतापृथक्त्वात्प्रदानानि नाना भिद्येरन्नेवेति तत्सूत्रार्थः ॥ ४२ ॥ ( १८ )

—१५ **सहस्रशीर्षमिति** । परविद्याप्रकरणेषु तत्र तत्र शिवशंभुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टस्य वस्तुनो नारायणत्वमनेन नारायणानुवाकेन प्रतिपाद्यत इति सिद्धान्तः । पूर्वपक्षी त्वस्यानुवाकस्य पूर्वप्रतिपादितदहरविद्याशेषत्वं मन्यते । विश्वाक्षत्वं सर्वविषयकसाक्षात्कारवत्त्वम् । विश्वशंभुवत्त्वं सकलजगत्क्षेमकरत्वम् ।

६९०–३ **दहरमिति** । उपास्यतया संनिहितस्य परस्य ब्रह्मणः पुरभूतं यदुपासकशरीरं तन्मध्ये संस्थितं दहरमल्पं विपाप्म निरस्तपापं परमात्मनो वेश्मभूतं यद्धृदयपुण्डरीकं तत्रापि शोकरहितं यदल्पं गगनवदपरिच्छेद्यं ब्रह्म तत्तस्मिन्नन्तश्च यत्तदुभयमुपासितव्यमित्यर्थः ।

—९ **उपोद्बलयतीति** । दहरविद्यायां हृदयपुण्डरीकमध्यस्थस्यैवोपास्यत्वा-दिति भावः ।

—१९ **श्रुतिलिङ्गेति** । श्रुतिलिङ्गादीनां स्वरूपं प्रागुक्तम् ( विवृति-पृ. ५८ प. २० ) । श्रुत्यादीनां षण्णां विनियोजकप्रमाणानां मध्ये कयोरपि विरुद्धयोर्द्वयोः समवाये एकत्र संनिपाते उत्तरोत्तरं दुर्बलम् । पूर्वेणोत्तरस्य बाध इति यावत् । कुतः । अर्थस्य विनियोगस्य विप्रकर्षाद्विलम्बात् । उत्तरप्रमाणं हि पूर्वप्रमाणं कल्पयित्वैव विनियोजकं भवति । यथा कदा चन स्तरीरसीत्यस्या ऋचो लिङ्गेनेन्द्रोपस्थाने विनियोगः प्राप्तः । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति श्रुत्या गार्हपत्योपस्थाने विनियोगः प्राप्तः । इन्द्रलिङ्गेन हि ' अनयेन्द्रमुपतिष्ठेत ' इति श्रुतिं कल्पयित्वैवेन्द्रोपस्थानाङ्गत्वं वाच्यम् । ततः पूर्वमेवैन्द्र्या गार्हपत्यमिति प्रत्यक्षश्रुत्या झटिति गार्हपत्योपस्थाने विनियोग इति श्रुतिर्लिङ्गात्प्रबला भवति । एवमितरेष्वप्यूह्यम् ।

६६१–४ **तद्वचनोपपत्तेरिति** । एतदात्म्यमिदं सर्वमिति सामान्येन निर्दिष्टस्य तत्त्वमसीति विशेष उपसंहारवत्सकलपरविद्योपास्यतयाभिहितस्य नारायणस्य प्रकृतदहरविद्योपास्यतयोपसंहारे दोषाभावात ( वि. दी. ) ।

—७ **कृत्प्रत्ययेनेति** । उपासितव्यमित्यत्र तव्यप्रत्ययस्य कृदिति संज्ञा । स च प्रत्ययः कर्मार्थक इति तेन प्रत्ययेन कर्माभिहितं भवति । यत्र च कर्म प्रत्ययेनोक्तं भवति तत्र कर्म प्रथमान्तमेव न तु द्वितीयान्तम् । यथा ग्रामो गम्यत इति । कर्मणि द्वितीया ( पा. सू. २।३।२ ) इति पाणिनिसूत्रेण या द्वितीया विधीयते सा प्रत्ययेनानुक्ते कर्मण्येव विधीयते । यथा ग्रामं गच्छतीति । अत्र तिप्प्रत्ययः कर्त्रर्थको न तु कर्मार्थकः । तथा चोपासितव्यमित्यस्य तदिति प्रथमान्तमेव कर्म भवितुमर्हतीति सहस्रशीर्षमिति द्वितीयान्तस्योपासितव्यमित्यत्र नान्वयः । न च द्वितीयायाः प्रथमार्थकत्वात्स्यादेवान्वय इति वाच्यम् । तस्मिन्यदन्तस्तदुपासितव्यमित्यत्र स्वयाक्य एव तच्छब्दस्य कर्मबोधकस्य सत्त्वे नोपासितव्यमित्यस्य कर्मांशे निराकाङ्क्षत्वात् । सहस्रशीर्षमिति वाक्यस्यापि सर्वस्मात्परत्वप्रतिपादनेन क्रियांशे निराकाङ्क्षत्वाच्च ॥ ४३ ॥ ( १९ )

—१७ **पूर्वविकल्प इति** । क्रियाशब्देन क्रियामयक्रत्वङ्गभूतत्वं लक्ष्यते । मनश्चिदादयः क्रियामयक्रत्वङ्गभूताः प्रकरणात् । पूर्वप्रकृतेनेष्टकचितेनाव्यभिचारितक्रतुसंबन्धिनोपस्थितक्रतुगृहीतत्वेन तदङ्गभूताः । एषां चाग्नित्वातेन पूर्वेणेष्टकचितेन विकल्पः । विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गभावो न विरुध्यते । द्वादशाहाङ्गभूतमानसग्रहवदिति सूत्रार्थः ( वे. दी. ) ।

—१९ **मनश्चितं इति** । मनसा चितः संपादिता मनश्चितः । मनसा कल्पिताः । मनोवृत्तिरूपा इति यावत् । एवं वाक्चिदादयोऽपि वागादिवृत्तिरूपा

एव बोध्याः। प्राणशब्देन घ्राणं गृह्यते। कर्मशब्देन कर्मेन्द्रियं हस्तादि गृह्यते। अग्निचित इत्यत्राग्निशब्देन त्वगिन्द्रियं गृह्यते।

६६१-२१ **सांपादिकत्वेनेति** । कल्पितत्वेनेत्यर्थः। विद्यारूपा ज्ञानमयाः। अग्न्यधिकरणकहविःप्रक्षेपादिव्यापाररूपो यो लोकप्रसिद्धः क्रतुः स क्रियामयक्रतुः। क्रियारूपाः क्रियामयक्रतुसंबन्धिनः। अग्न्यधिकरणकहविःप्रक्षेपादिव्यापारं विनैव केवलं तत्तत्पदार्थभावनया यः क्रतुः संपाद्यते स विद्यामयक्रतुः। विद्यारूपा विद्यामयक्रतुसंबन्धिनः।

६६२ ३-६ **चित्याग्नित्वेनेति** । इष्टकाभिर्मनोवृत्त्यादिभिर्वा योऽग्निश्चीयते स चित्यः। तादृशस्य चाग्नेः क्वचित्क्रतौ चयनसाफल्यार्थं प्रवेश आवश्यकः। संपादितानां कल्पितानाम्। (इष्टका विटा इति प्र.)। **क्रतुविध्यभावादिति** । मनसैवाधीयन्तेत्यादिवाक्येषु लिङ्लोट्तव्यदादिर्विधिप्रत्ययस्याश्रवणादिति पूर्वपक्ष्याशयः । **क्रियामयेति** । इष्टकाभिश्चितस्याग्नेर्लोके क्रियामयक्रतावश्यं प्रवेशो दृश्यत इति भावः।

—१० **यथा द्वादशाह इति** । द्वादशसंख्याकैरहोभिर्जायमानस्य यज्ञस्य द्वादशाहेति संज्ञा। तादृशयज्ञस्याद्यन्तदिवसद्वयं त्यक्त्वा मध्यस्थदशरात्रस्य यद्दशममहस्तच्चार्थात्प्रथमदिवसादारभ्यैकादशं भवति तदविवाक्यशब्देनोच्यते। न विविधानि वाक्यानि यस्मिंस्तदविवाक्यम्। तस्मिन्नहनि पात्रग्रहणादिक्रियाणां मानसत्वेन ऋत्विजां विविधवाक्योच्चारणाभावात्। विवाक्य इति वा पदच्छेदः। विगतानि वाक्यानि यस्मिन्नित्यर्थः। तस्मिन्नहनि मानसग्रहस्य मनसा कल्पितस्य सोमपात्रविशेषस्य ग्रहणासादनादि सर्वं मनसैव निष्पाद्यते कल्प्यते। ग्रहणं सोमपात्रस्योपादानम्। गृहीतस्य पात्रस्य स्वस्थाने स्थापनमासादनम्। स्तोत्रं स्तुतिः। शस्त्रं शंसनम्। हुतशेषादानं प्रत्याहरणम्। भक्षणं हुतशेषभक्षणम्॥ ४४॥

—१४ **क्रियारूपत्वमिति** । स्वरूपेण ज्ञानमयानामेव सतामेषामग्नीनां क्रियामयक्रत्वङ्गत्वमवगम्यत इत्यर्थः॥ ४५॥

—२१ **विद्येवेति** । विद्याशब्देन विद्यामयक्रत्वङ्गभूतत्वं लक्ष्यते।

६६३-९ **दृश्यत इति** । एषां मनश्चिदादीनां शेष्यङ्गिभूतः । यस्मिन्क्रतावेषामग्नीनां प्रवेशः स विद्यामयः क्रतुरत्रैव दृश्यत इत्यर्थः। मनसैवाधीयन्तेत्यादिवाक्येषु विधिप्रत्ययाश्रवणेऽपि विधिः कल्पनीयः। एतच्चोत्तरत्र (सू. ४८) स्फुटीभविष्यति । एतेन स्वदेशे क्रतुविध्यभावादिति पूर्वपक्षिणोक्तं (श्रीभाष्य-पृ. ६६२ प. ४) निरस्तम्॥ ४६॥

६६४-२ **बलीयस्त्वेनेति** । इदं प्रागुक्तम् (विवृति-पृ. ३०४,प. ३)।

६६४–५ **विद्ययेति** । एवंविद एवं विदुषो मनुष्यस्याग्नयो विद्ययैव चिता भवन्तीत्यर्थः ।

—७ **तान्हैतानिति** । अपि स्वपत इत्यस्य निद्रितायापीत्यर्थः । यद्यपि विद्यामयक्रतुमान्मनुष्यो निद्रितो भवति तथापि तदर्थं सर्वाणि भूतानि विचिन्वन्ति । अग्निकुण्डरचनां कुर्वन्तीत्यर्थः ॥ ४७ ॥

६६५–१२ **दृष्टश्चेति** । यथा यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीत्यत्र विद्यया करोतीत्यस्य ज्ञानपूर्वकं कर्म कर्तव्यमित्यर्थस्वीकारेण विधिः कल्प्यते । अन्यथा विद्यापूर्वककर्मकरणस्य विध्यभावेन वीर्यवत्तरं भवतीति श्रुतस्य फलस्य हानप्रसङ्गात् । तथात्राप्यनुबन्धादीनां हानप्रसङ्गाद्विधिः कल्प्यत इति भावः ।

—१५ **यत्फलमिति** । फलकामनया कृतं चेदेतत्फलम् । अन्यथा तु मुक्तिरेव फलम् ( श्रु. ) ॥ ४८ ॥

६६६–१ **स एव इति** । एतस्मिन्सूर्यमण्डले यः पुरुषः स मृत्युर्मृत्युवदित्यर्थः । अत्र सूर्यमण्डलस्थपुरुषे मृत्युगतसर्वहरत्वमात्रमतिदिश्यते न तु मृत्युलोकापत्तिरप्यतिदिश्यते ॥ ४९ ॥

—१३ **अयं वावेति** । अयं भूलोक एवाग्निः । अत्राग्नित्वेन भूलोकः कल्प्यते । तस्याग्नेरापः समुद्राः परिश्रिताः परिस्तरणभूताः । भूलोकं पृणातं पूरयन्तमेनमग्निं यो वेद तस्यैतत्सर्वमभिसंपद्यत इत्यर्थः । अत्र वाक्ये विद्यैव विधीयते न कर्म । तथा चाग्निरहस्यग्रन्थे क्रियाया एव विधानमिति नियमाभावान्मनश्चिताद्यभिधायिनः शब्दस्य विद्यामयाग्निप्रतिपादकत्वमवगम्यत इति भावः ।

—१८ **एवं तर्हीति** । विद्यामयाश्चेद्बृहदारण्यक एव वक्तव्या नाग्निरहस्यग्रन्थ इति शङ्काशयः ॥ ५० ॥ ( २० )

६६७–३ **एक इति** । इदं पूर्वपक्षसूत्रम् । कर्तृत्वादिविशिष्टमेव जीवात्मनः स्वरूपमनुसंधेयमित्येके मन्यन्ते । कुतः । शरीरे वर्तमानस्योपासकस्य जीवात्मनस्तथाभावादिति सूत्रार्थः ।

—६ **परमात्मात्मकत्वेनेति** । परमात्मात्मा यस्यैतादृशरूपेणेत्यर्थः ।

—१३ **न हीति** । यथा स्वर्गादिफलानुभवदशायामुपासकस्य यादृशं रूपं तस्य रूपस्य यज्ञादिसाधनानुष्ठानदशायामनुसंधानाभावेपि साधनानुष्ठानं भवति तत्फलानुभवश्च भवति तथेहापीति भावः ।

—१७ **यथाक्रतुरिति** । क्रतुशब्द इच्छावाची । इच्छानुरूपं फलमिति विशेषवचनार्थः । तथा च परविद्याफलरूपमोक्षावस्थायां जीवात्मनोपहतपाप्म-

त्वादिस्वरूपत्वेन तदनुरूपयैवेच्छया साधनावस्थायां भवितव्यमिति परविद्याप्रतिपादितोपासनाकालेपहतपाप्मत्वाद्याकार एवानुसंधेय इति शङ्काशयः । यद्यपीच्छानुरूपं फलं तथापि सोपासकस्येच्छा न स्वविषया । किं तूपास्यविषया । तथा च फलानुभवावस्थायामनुभवविषयं साधनावस्थायामनुसंधानविषयं चोपास्यस्य स्वरूपमेकमेवास्तु नाम । उपासकस्वरूपस्य तु तयोरवस्थयोर्भिन्नत्वेपि न क्षतिरित्युत्तराशयः । अत्रोपास्यस्य ब्रह्मणः स्वरूपं न जीवरूपशरीरविशिष्टं किंतु केवलमिति पूर्वपक्षी मन्यते ॥ ५१ ॥

६६८-२२ व्यतिरेक इति । न जीवेन स्वस्य कर्तृत्वादिविशिष्टं रूपमनुसंधेयम् । किं तु सांसारिकस्वरूपान्मुक्तस्वरूपस्य यो व्यतिरेकोपहतपाप्मत्वादिः सोनुसंधेयः । कुतः । व्यतिरिक्तस्वरूपप्राप्तेस्तद्भावभावित्वात् । तस्य तथाविधोपासनस्य भावेनास्तित्वेन भावित्वाद्व्यतिरिक्तस्वरूपप्राप्तेरस्तित्वात् । यथोपास्यब्रह्मस्वरूपोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया तथा तच्छरीरभूतस्वात्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेति सूत्रार्थः ॥ ५२ ॥ (२१)

६६९-२ ओमित्येतदिति । उद्गीथशब्दो लक्षणयोद्गीथावयववाची । उद्गीथावयवभूतमोमित्येतदक्षरमुपासीतेत्यर्थः । हिंकारप्रस्तावोद्गीथप्रतिहारनिधनरूपेण पञ्चविधं साम । तत्र क्रमेण पृथिव्यादिलोकदृष्टिः कर्तव्या । पृथिवी हिंकारोग्निः प्रस्तावोन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमिति लोकेष्विति श्रुतेरर्थः । उक्थं कर्माङ्गं शस्त्रमिति वीप्सय यत्प्रजा वदन्ति तदिदमेव येयं पृथिवीत्युक्थे पृथिवीदृष्टिः कर्तव्येत्युक्थमुक्थमिति श्रुतेरर्थः । कर्माङ्गभूतेष्वावेतल्लोकदृष्टिः कर्तव्येत्ययं वेति श्रुतेरर्थः ।

—२१ संनिहिता इति । बुद्धिस्था इत्यर्थः ।

सर्वशाखेति । एतन्न्यायस्वरूपं प्रागुक्तम् (विवृति-पृ. २५ प. २५) ॥५३॥

६७०-४ जातीति । अग्नीषोमीयपशोरजत्वजातिरेकस्यां शाखायामुपदिष्टाप्यन्यत्र सैव गृह्यते । एवं गुणादिपृह्यम् ॥ ५४ ॥ ( २२ )

—१३ द्यौर्मूर्धेति । वैश्वानरस्य परमात्मनो मस्तकत्वेन स्वर्गलोकः कल्पितः । एवमादित्यादयश्चक्षुराद्यवयवत्वेन कल्पिताः । बस्तिर्मूत्रस्थानम् ।

—२२ अत्त्यन्नमिति । अत्ति अन्नमिति च्छेदः । अन्नप्राप्तिः प्रियवस्त्वनुदर्शनं ब्रह्मतेजःप्राप्तिश्चात्र मूर्धोपासकस्य फलत्वेनोच्यते ।

६७१-५ परत्रेति । पूर्वपक्षिसंमतं व्यस्तोपासनमेव वैश्वानरविद्याप्रतिपादकश्रुता विवक्षितं चेत्कथं समस्तस्योपसंहार इत्याशङ्काया उत्तरमेतत्पूर्वपक्षिणः ।

—१२ न चैतावतेति । व्यस्तोपासनं समस्तोपासनं चेत्युपासनद्वयविधाने श्रुतेस्तात्पर्यं चेद्वाक्यभेदः स्यादिति न वाच्यम् । समस्तोपासनस्यैव मुख्यत्वेन विवक्षितत्वात् । व्यस्तोपासनस्य च प्रासङ्गिकत्वात् ।

६७२-३ **प्राचीनशाल इति** । प्राक् ( अ. १ पा. २ सू. २५ ) द्रष्टव्यमेतत् ।

—१९ **मूर्धा त इति** । वैश्वानरस्य मूर्धत्वेन कल्पितो यो द्युलोकरूपोवयवस्तस्य वैश्वानरबुद्ध्योपासकं प्राचीनशालं प्रत्यश्वपतिर्वदति मत्समीपे नागत्य वैश्वानरमूर्धावयवभूते कृत्स्नवैश्वानरबुद्धिं कुर्वतस्तव विपरीतविद्यावशान्मूर्धपातरूपोनर्थः स्यादतः साध्वकार्षीस्त्वं यतो मामागतोसीति । तथा वैश्वानरस्य चक्षुष्ट्वेन कल्पितो य आदित्यस्तस्य वैश्वानरबुद्ध्योपासकं सत्ययज्ञं प्रत्यश्वपतिना विपरीतविद्यावशादन्धत्वरूपोनर्थ उक्तः ॥ ५५ ॥ ( २३ )

६७३-१४ **अत्रैवेति** । अस्मिन्नधिकरणे सिद्धान्तितं सद्विद्याद्यनेकविद्यानां परस्परभेदं स्वीकृत्यैव पूर्वं ( ३।३।१ ) प्रतिविद्यं शाखादिभेदेनावान्तरभेदोस्ति नास्तीति विचारः कृत इति भावः ।

२१ **शब्दान्तरादिभिरिति** । विधेयं साङ्गं प्रधानं कर्म । अनुबन्धास्तदेकदेशा धात्वर्थादयः । शब्दादयोनुबन्धभेदहेतुत्वेन प्रधानविधेयभेदहेतव इत्यर्थः ( श्रु. ) ।

**यद्यपीति** । वेदोपासीतेत्यादिशब्दानां भेदाद्विद्याभेदो न भवति । तेषां शब्दानां प्रत्ययावृत्तिरूपकार्याभिधायकत्वात् । न च विषयभेदेन प्रत्ययभेद इति वाच्यम् । सर्वत्र विषयस्य ब्रह्मण एकत्वादिति शङ्काशयः ।

६७४-४ **प्रतिप्रकरणमिति** । तथा च प्रकरणभेदादपि विद्याभेद इति भावः ॥ ५६ ॥ ( २४ )

६७५-९ **सर्वाश्च विद्या इति** । एतेन काश्चिद्विद्या अविद्यानिरसनार्थाः काश्चिच्च ब्रह्मप्राप्त्यर्था इत्येवं फलद्वैविध्येन विद्याद्वयसमुच्चयः स्यादित्यपास्तम् ॥ ५७ ॥ ५८ ॥ ( २५ )

६७६-१० **न ह्यत्रेति** । यद्यस्याङ्गं तत्तत्र नियमेनोपादेयम् । गोदोहनस्य तु यज्ञाङ्गत्वं नास्ति । गोदोहनेन पशुकामस्येति स्ववाक्य एव पशुकाम इति फलश्रवणात् । अङ्गस्याङ्ग्यपेक्षया पृथक्फलसाधनत्वाभावात् । पशुकामनायामेव गोदोहनस्योपादेयत्वेन नियमेनोपादेयत्वाभावाच्च । प्रकृते त्वोमित्येतदक्षरमुद्गीथमुपासीतेति स्ववाक्ये फलं न श्रूयत इत्युपासनाया यज्ञाङ्गत्वं स्ववाक्यादवगम्यते । ततः पश्चाद्वाक्यान्तरे यद्यपि वीर्यवत्तरत्वरूपं फलं श्रूयते तथापि न तेन पश्चात्प्रतीतेन प्रथमतः प्रतीतस्याङ्गत्वस्य बाधः । प्रत्युत प्रथमप्रतीतेनाङ्गभावेन विरोधात्फलश्रुतेरेव प्रशंसामात्रपरत्वं स्यादिति पूर्वपक्ष्याशयः ।

—१७ **आपापेति** । प्रागुक्तम् ( विवृति-पृ. ३०२ प. २४ ) ॥ ५९ ॥

६७७–२ **गोदोहनेनेति**। गोदोहनेनेति वाक्ये हि पशुकामस्य गोदोहनेऽधिकारान्तरं श्रूयते। यज्ञे यस्याधिकारस्तस्य पशुकामना स्याच्चेद्गोदोहनेऽधिकार इत्येतदधिकारान्तरम्। अतस्तद्वाक्यस्य विशेषाधिकारिप्रतिपादन एव तात्पर्यं न गोदोहनस्य यज्ञाङ्गत्वप्रतिपादने। तद्वत्प्रकृतवाक्येऽधिकारान्तरं न श्रूयत इत्युपासनाया यज्ञाङ्गत्वप्रतिपादन एव प्रकृतवाक्यतात्पर्यमवश्यमभ्युपेयम्॥ ६०॥

—४ **समाहारादिति**। समाहारः समाधानम्। होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीति। होतुर्यः प्रणवः स उद्गातुरुद्गीथ इति च्छान्दोग्ये प्रणवोद्गीथयोरैक्यविधिरस्ति। तादृशैक्यचिन्तनस्यैतत्फलं भवति। यत्प्रणवोच्चारणरूपे होतृकर्मणि निर्दोषे जाते सदोषमपि जातमुद्गीथरूपमुद्गातुः कर्म निर्दुष्टं भवति। उद्गीथस्य सदोषत्वमुपासनारहितत्वेन बोध्यम्। तथा चोपासनाया अभावे प्रायश्चित्तमिव विधीयमानमैक्यचिन्तनमुपासनाया अवश्यकर्तव्यतां बोधयति। अतश्चैक्यचिन्तनेन कृतं समाधानमेवोपासनाया यज्ञाङ्गत्वे लिङ्गमित्याशयः। होतृषदनादिति श्रुतेरयमर्थः। होतुः सदनं स्थानम्। होता यत्रस्थः शंसति तद्धोतृषदनम्। तेन च हौत्रं कर्म लक्ष्यते। ततः सम्यगनुष्ठिताद्धौत्रादुद्गीथं प्रमादाज्जायमानं सदोषं यदुद्गानं तदैक्यचिन्तनेन होतानुसमाहरति समादधातीति॥ ६१॥

—९ **गुणेति**। गुणशब्देनोपासनाश्रयभूतः प्रणवो गृह्यते। अप्रधानवाची हि गुणशब्दः। उपासनाश्रयस्य प्रणवस्योपासनापेक्षयाऽप्राधान्यात्।

—१०–२ **तेनेयमिति**। एतदेवं विद्वानक्षरमुपास्त इति प्रकृतस्य सोपासनप्रणवस्य तच्छब्देन परामर्शः। तेन सोपासनेनोंकारेण त्रयी विद्या वेदत्रयविहितं कर्म प्रवर्तते। अध्वर्युकर्तृकाश्रावणस्य होतृकर्तृकशंसनस्योद्गातृकर्तृकोद्गानस्य चोंकारपूर्वकत्वादित्यर्थः। **समाहार इति**। समाहारोऽनुवृत्तिः। सोपासनप्रणवानुवृत्त्योपासनानुवृत्तिर्गम्यते। यतश्चानुवृत्तिरपि न केवलस्य प्रणवस्यातः प्रणवोपासनयोर्नियमेन सहभावोऽवगम्यत इति भावः। अथ वा गुणस्य प्रणवगुणत्वेनावगतस्योपासनस्य वेदत्रयसाधारण्यश्रवणेन प्रणवोपासनयोः सहभावनियमदर्शनादुपासनस्य नियमेनोपादानमिति सूत्रार्थः। सहभावनियमश्च पूर्ववदेव तच्छब्देनोपासनाविशिष्टप्रणवपरामर्शाद्बोध्यः॥ ६२॥

६७८–५ **प्रतिपाद्यत इति**। यदेव विद्ययेति तृतीयाश्रुत्या विद्यायाः साक्षात्फलसाधनत्वं प्रतिपाद्यते। उपासनस्योद्गीथाङ्गत्वं न साक्षात्प्रतिपाद्यते। किं तु केवलमोमित्येतदक्षरमुद्गीथमुपासीतेति वाक्येन वाक्यस्वभावसिद्धत्वात्कल्प्यते। तथा च यत्राङ्गभावस्य न किंचिद्बाधकं तत्र तत्कल्प्यतां नाम। यथा पर्णताया जुह्वङ्गत्वम्। स्ववाक्ये फलश्रवणं वाक्यान्तरे साक्षात्प्रतिपादितं फलसाधनत्वं चेत्येतदन्यतरद्बाधकम्। उभयविधस्यापि बाधकस्या-

भावात्पर्णताया जुह्वङ्गत्वमस्ति । तथा च यथा गोदोहनवाक्ये स्ववाक्ये फलश्रवणमङ्गत्वस्य बाधकं तथा प्रकृते यदेव विद्ययेति साक्षात्प्रतिपादितं फलसाधनत्वमङ्गत्वस्य बाधकमिति भावः ।

६७८–१२ अधिकारान्तरमितीति । एतेन पूर्वपक्षिणा प्रागुक्तं ( श्रीभाष्य–पृ. ६७७ प. २ ) निरस्तम् ॥ ६३ ॥

६७९–३ अनियमे सतीति । उद्गीथाद्युपासनस्य नियमे तु तेनैव क्रतुफलाप्रतिबन्धरूपफलसिद्धौ सत्यां क्रतुफलाप्रतिबन्धाय ब्रह्मकर्तृकरक्षणस्यानावश्यकत्वं स्पष्टमेव ।

—४ प्रायिकत्वमिति । यत्र क्रतावादावेव फलकामनयोद्गीथोपासनं संकल्पितं तादृशक्रतुविषयमिति भावः ॥ ६४ ॥ ( २६ )

## अथ तृतीयाध्यायस्य चतुर्थः पादः प्रारभ्यते ।

६८०–३ पुरुषार्थ इति । अतःशब्देन विद्या परामृश्यते । विद्यायाः पूर्वपादे प्रस्तुतत्वात् । इदं च सिद्धान्तिनः सूत्रम् । एतदुत्तरं षट्सूत्राणि पूर्वपक्षिणः । ततः पुनः सिद्धान्तिनः सूत्राणि त्रयोदश ॥ १ ॥

—१७ शेषत्वादिति । तत्त्वमसीत्यादिना सामानाधिकरण्येन ब्रह्मण एव यज्ञादिकर्मसु कर्तृत्वावगमात्तादृशकर्तृसंस्कारद्वारेण विद्याया यज्ञादिकर्मशेषत्वाद्विद्यातः पुरुषार्थवचनमर्थवादमात्रम् । यथान्येषु द्रव्यसंस्कारादिष्विति जैमिनिराचार्यो मन्यत इति सूत्रार्थः ।

६८१–५ द्रव्येति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यपापश्लोकश्रवणफलार्थं पर्णताविधिरिति प्राप्ते जुहूद्वारा क्रत्वङ्गत्वसंभवेन कामपदाश्रवणेन च न फलविधिः । अतो न स पापमित्यादिरर्थवादः । एवमन्यत्राप्यङ्गे फलश्रुतिरर्थवाद इति तत्सूत्रतात्पर्यम् ।

—१६ चेतनाचेतनेति । यदि तत्त्वमस्यादिश्रुतौ जीवब्रह्मैक्यप्रतिपादनात्सामानाधिकरण्योपपत्तिः क्रियते तर्हि सा चेतनविषये स्यान्नाम । अचेतनविषये तु न स्यादेवेत्यचेतनसामानाधिकरण्यं ब्रह्मणस्तत्तदात्मतयावस्थितिमूलकमेवाङ्गीकार्यम् । तदनुरोधाच्चेतनसामानाधिकरण्यमपि तथैव न तु स्वरूपैक्यमूलकम् । ब्रह्मणो जीवान्तर्यामित्वादेव च य आत्मनि तिष्ठन्निति श्रुतिः संगच्छते ।

—२२ लिङ्गैरिति । लिङ्गानि चानुपदमेव ( ३।४।३ ) वक्ष्यन्ते । तानि च लिङ्गानि विद्यायाः कर्माङ्गत्वबोधकानि । कर्माङ्गत्वं च कर्तृसंस्कारद्वारेणैव

वाच्यम् । अन्यथाऽसंभवात् । विद्यया कर्तृसंस्कारश्च जीवब्रह्मणोः स्वरूपैक्य एवं संभवति । जीवब्रह्मणोर्भेदे विद्याविषयस्य ब्रह्मणो यज्ञादिकर्तृत्वाभावात् । तथा च लिङ्गोपबृंहणेन तत्त्वमसीति सामानाधिकरण्यं स्वरूपैक्यपरमेवेत्यवसीयत इत्याशयः ।

६८२–४ **साधारणत्वेनेति** । असाधारणस्यैवाङ्गत्वाल्लौकिकवैदिकसाधारणस्य कर्तुर्यज्ञादिकर्माङ्गत्वाभावः । कर्तुरेव कर्माङ्गत्वाभावे तद्द्वारा कर्माङ्गत्वं विद्यायाः सुतरां न संभवतीति भावः ।

—५ **देहाद्व्यतिरिक्तत्वेपीति** । विद्याविषयीभूतश्चात्मा देहाद्यतिरिक्त एवेति तादृशस्यात्मनो यज्ञादिकर्मासाधारणत्वेनाङ्गत्वात्तद्द्वारा विद्यायाः कर्माङ्गत्वं सुवचमित्याशयः ॥ २ ॥

—१३ **तद्विज्ञानायोपगतानिति** । अनेनात्र विद्यायाः प्रसङ्गः सूचितः । तथा च विद्यायाः प्रसङ्गेपि कर्मणोनुष्ठानदर्शनात्कर्मणः प्राधान्यं सिध्यति ॥ ३ ॥

६८३–३ **विद्यया करोतीति** । विद्यापूर्वकं कर्म करोतीत्यर्थः । अत्र विद्ययेति तृतीयया विद्यायाः कर्माङ्गत्वं गम्यते ।

—६ **बलीयसीति** । प्रागुक्तम् ( विवृति–३०४ प. ३ ) ॥ ४ ॥

—९ **तमिति** । समन्वारम्भणं स्पर्शः । संबन्ध इति यावत् । तं देहाद्देहान्तरं गच्छन्तं जीवं विद्याकर्मणी स्पृशत इत्यर्थः ॥ ५ ॥

—१४–६ **आचार्यकुलादिति** । गुरोः कर्मातिशेषेण कर्मावशिष्टकालेन गुरुशुश्रूषानवरुद्धेन कालेनाचार्यकुलाद्वेदमधीत्याभिसमावृत्य समावर्तनं कृत्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा शुचौ देशे स्वाध्यायमधीयानो गार्हस्थ्यविहितकर्माणि कुर्वाण इत्यर्थः । **अध्ययनवत इति** । अध्ययनं चार्थावबोधपर्यन्तमेवेति प्रागुक्तत्वेन ( श्रीभाष्य-पृ. ३ प. १६ ) विद्यावतः कर्मविधानं सिध्यति । वेदशिरोभूतोपनिषदर्थज्ञानस्यैव विद्यात्वादिति पूर्वपक्ष्याशयः । सिद्धान्ते त्वर्थज्ञानाद्विद्या भिन्नैवेति बोध्यम् ॥ ६ ॥

—२२–४ **कुर्वन्नेवेह कर्माणीति** । अत्र कर्मपदेन फलसाधनभूतं स्वतन्त्रं कर्म गृह्यत इति पूर्वपक्ष्याशयः । तादृशकर्मणश्च ज्ञानेन विरोधात्कुर्वन्नेवेत्यनेन ज्ञानाद्यावृत्तिः सिध्यतीति बोध्यम् । **अवगम्यत इति** । कृत्स्नस्यायुषः क्रतुशेषत्वात्तन्मध्ये प्राप्तमन्यत्सर्वं तस्य शेषभूतमिति कर्मण एव फलमवगम्यत इत्यर्थः ( श्रु. ) ॥ ७ ॥

६८४–९ **अशुद्धे शुद्धेपीति** । बद्धे मुक्ते च जीवात्मन्यसंभावनीया येनन्ता गुणास्तदाकरस्येत्यर्थः ।

६८५–९ गन्धोऽपि नास्तीति । तथा च विद्याविषयस्य परमात्मनो यज्ञादिकर्तृत्वाभावेन विद्यायाः कर्माङ्गत्वासंभवाद्विद्यातः पुरुषार्थवचनं नार्थवाद इति बोध्यम् ॥ ८ ॥

—१३ तुल्यमिति । यथा विद्यायाः कर्माङ्गत्वसाधकं ब्रह्मविदां कर्मानुष्ठानं दृश्यते तथा विद्यायाः कर्मानङ्गत्वसाधकं ब्रह्मविदां कर्माननुष्ठानमपि दृश्यते । अतो ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमनियतमित्यर्थः ॥ ९ ॥

६८६–१० न हीति । यत्करोति तद्विद्ययेति यदि संबन्धः स्यात्तदा विद्याया अङ्गत्वं विधीयेत । न हि तथा विधीयते । किं तु यदेव विद्यया करोतीति विद्यापूर्वकं कर्म प्रसिद्धवन्निर्दिश्य वीर्यवत्तरत्वं विधीयते । तथा प्रसिद्धिश्चोद्गीथाद्युपासनानां कर्माङ्गभूतत्वेन तत्र वर्तत इति संनिहितोद्गीथविद्याविषयैव यदेव विद्ययेति श्रुतिरिति भावः ॥ १० ॥ ११ ॥

६८७–४ आधानवदिति । यथाग्नीनादधीतेत्यत्राधानेनाग्नेः संपाद्यत्वमात्रमुक्तं न तु तस्योत्तरक्रतौ विनियोग उच्यते तथात्रापीत्यर्थः (श्रु.) ॥१२॥१३॥

६८८–६ ईशावास्यमिति । ईश–शब्दस्तृतीयान्तः । ईशा ईश्वरेण । ईशेनेश्वरेणावास्यमिति समासो वा ॥ १४ ॥

—१२ कामकारेणेति । अत्र सूत्रे गार्हस्थ्यत्यागमधीयत इत्यध्याहारः॥१५॥

६८९–३ अधीयत इति । भिद्यत इति श्रुतौ क्षीयन्त इति पदेन कर्मोपमर्दोऽर्थतोधीत इति भावः ॥ १६ ॥

—१३ त्रयो धर्मस्कन्धा इति । धर्मस्कन्धा धर्माश्रयाः ॥ १७ ॥

६९०–७ अन्यार्थमिति । ब्रह्मोपासनस्तुत्यर्थमित्यर्थः ( श्रु. ) ।

ये चेम इति । यद्यप्यत्रारण्ये तप उपासत इत्युक्तयोर्ध्वरेतस आश्रमाः प्रतिपाद्यन्ते तथापि नात्र तेषां विधानम् । किं तु तेऽर्चिषमभिसंभवन्तीति देवयानमार्गस्यैवेति भावः ॥ १८ ॥

—२१ सर्वैः शब्दैरिति । तथा च गार्हस्थ्याश्रमस्यैवात्र संकीर्तनं नाश्रमान्तराणाम् । संकीर्तनाभावे च प्राप्तिपूर्वकत्वं प्रत्याशा दूरोत्सारितैवेति शङ्काशयः ।

६९१–१ परिहरति–त्रय इति । एकस्य गार्हस्थ्याश्रमस्यैवात्र संकीर्तनमित्याग्रहे विभागत्रयानुपपत्तिः स्फुटैव ।

—२२ ये चेम इति । यद्यप्यत्र श्रुतौ देवयानस्यैव विधानं तथापि तदर्थं योऽत्र वानप्रस्थपारिव्राज्ययोराश्रमयोर्ये चेत्यनुवादः कृतस्तस्य प्राप्तिपूर्वकत्वाद्विधानमवश्यमङ्गीकरणीयम् । तथा च पूर्वपक्षिणा ये चेत्यादि प्रागुक्तं ( श्रीभाष्य–पृ. ६९० प. ७ ) निरस्तमिति भावः ॥ १९ ॥

६९२–८ यथा दिग्र्येति । महापितृयज्ञे प्रेताग्निहोत्रे च स्रुचि प्रक्षिप्तं हविराहवनीयं प्रति यदा नीयते तदा तस्य हविषोधस्तात्समिधं धारयन्ननुद्रवेदिति विहिताधोधारणस्तावकतयोपरि हि देवेभ्यो धारयनीत्यस्य वाक्यस्यैकवाक्यत्वभानेपि दैवे होमे स्रुग्दण्डोपरि समिद्धारणे विधिरेवायमपूर्वत्वादाश्रीयत इति भावः ।

—१० विधिस्त्विति । मृताग्निहोत्रे श्रूयते । अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति । तत्रोपरिधारणमनुवादः । हविष आच्छादनस्याचारप्राप्तत्वादिति प्राप्ते आच्छादनासमर्थत्वात्स्रुग्दण्डे मानधमुपसंगृह्णेति च श्रवणनाच्छादनासंभवादप्राप्ते विधिरिति सिद्धान्त इति तत्सूत्रतात्पर्यम् ।

—१६ ऋणश्रुतिरिति । त्रिभिर्ऋणैर्ऋणवान् जायत इत्यृणश्रुतिः । यावज्जीवमग्निहोत्रं जुहुयादिति यावज्जीवश्रुतिः । वीरहा वा एष देवानां योग्निमुद्वासयत इत्यपवादश्रुतिः ।

—१९ स्वस्वाश्रमेति । तथा च स खल्वेवं वर्तयन्यावदायुषमित्यादिका आश्रमविशेषधर्मानुवृत्तिपराः श्रुतयोपि तत्तदाश्रमिणां तत्तद्धर्मानुवृत्तिपरा न त्वाश्रमान्तरधर्माणां ब्रह्मविद्याङ्गत्वविरोधिन्य इति व्यासार्थेनोक्तम् ॥ २० ॥ (५)

६९३–२ स एष इति । भूतानां पृथिवी रसः । पृथिव्या भूताधारत्वात् । पृथिव्या आपो रसः । जलस्य पृथिवीप्रकृतिभूतत्वात् । अपामोषधयो रसः । ओषधीनां जलपरिणामत्वात् । ओषधीनां पुरुषो रसः । पुरुषस्यौषधिपरिणामभूतान्नपरिणामत्वात् । पुरुषस्य वाग्रसः । वाचः पुरुषोपकारकत्वात् । वाच ऋग्रसः । वाक्षु ऋचो गम्भीरार्थकत्वात् । ऋचः साम रसः । साम्नो गीतिमारत्वेनर्क्षु प्राधान्यात् । साम्न उद्गीथो रसः । उद्गीथ ओंकारः । साममध्ये तस्य विशेषश्राव्यत्वात् । स एष ओंकारः पृथिव्यादीनामुत्तरोत्तररसानामतिशयितरसः । परस्य ब्रह्मणोर्धं स्थानमर्हतीति परार्ध्यः । ब्रह्मवदोंकारस्याप्युपास्यत्वात् । छन्दसि च (पा. सू. ५।१।६७) इति सूत्रेण परार्धशब्दाद्यप्रत्ययः । स च पृथिव्यादिक्रमेणाष्टम इति श्रुत्यर्थः ।

—५ अत्र प्रतिपादितमिति । एतदधिकरणसिद्धान्तं गृहीत्वैव प्राक् (३।३।४१) तत्संबन्धिविचारः कृत इत्यर्थः ।

—१० इयमेवेति । पृथिव्येवेत्यर्थः । अत्र यथा जुह्वाः पृथिवीत्वं स्वर्लोकस्य चाहवनीयत्वं प्रतिपादितं स्तुतिपरं भवति तद्वत् ।

—१५ न हीति । तथा च प्रमाणान्तरप्राप्तगुणानुवादेनेयं स्तुतिर्न संभवति । गुणस्यान्यतोप्राप्तत्वात् । अप्राप्तगुणविधानेनापीयं स्तुतिर्न संभवति ।

विधिप्रत्ययाश्रवणात् । उद्गीथादौ रसतमत्वादिकल्पनायायोग्यत्वादयोग्यार्थस्य च विधातुमशक्यत्वात्तद्विधानेन स्तुत्यनुपपत्तेश्च ॥ २१ ॥

६९४–३ **भावशब्दाच्चेति** । भावः क्रिया । तद्वाचकः शब्दश्चात्र विधिप्रत्ययुक्तो विवक्ष्यते । पूर्वसूत्र उद्गीथादिविधेरभाव उक्तः । अत्र सूत्रे तूपासनविधेः सद्भाव उच्यत इति बोध्यम् ॥ २२ ॥ ( २ )

—८ **पारिप्लवार्था इति** । पारिप्लवो नाम यज्ञ ऋत्विग्भिः क्रियमाणमाख्यानशंसनम् ।

—११ **विद्याविशेषणेति** । विद्याविधेः स्तावकतया संपन्नत्वादित्यर्थः । आख्यानेषु हि विद्यायां लोकानां प्ररोचनाय विद्यामाहात्म्यं प्रतिपाद्यत इति तेषां स्तावकत्वम् ॥ २३ ॥

—२० **तथा चेति** । [illegible] ।

६९५–२ **यथेति** । हिरण्यदक्षिणा [illegible] रोदीदित्येवमादेः कर्मविध्यर्थत्वमित्यर्थः. ( श्रु. [illegible] ) ( ३ )

—५ **अत एवेति** । अत एवोर्ध्वरेतस्स्वाश्रमेषु विद्यायाः श्रुतेरेव विद्याया आधानाद्यनपेक्षेति सूत्रार्थः ॥ २५ ॥ ( ४ )

—२२ **न प्रतिपादयन्तीति** । [illegible] विविदिषन्तीति यज्ञेनेत्यत्र नहि यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । [illegible] विविदिषन्तीत्युच्यते । तत्र चेच्छार्थकसन्प्रत्ययस्य प्रयोगाद्यज्ञादीनां [illegible] न तु ज्ञानसाधनत्वमिति पूर्वपक्ष्याशयः ।

—२३ **कर्मापेक्षेवेति** । [illegible] इति भावः । सूत्रार्थः प्रागुक्तः (विवृति–पृ. १० प. [illegible])। यद्यपि श्रुतौ विविदिषन्तीत्युच्यते न तु विदन्तीति तथापीच्छाया इष्यमाणप्रधानत्वात् [illegible] ज्ञानमेव यज्ञादिकर्मसाधनकमित्यवगम्यत इति भावः ॥ २६ ॥ ( ५ )

६९७–१० **आन्तरेति** । [illegible] यज्ञादि कर्म । तदनुष्ठानं च [illegible] कर्तव्यमिति शमादीनामिन्द्रियादिव्यापारविरतिरूपशमाद्यनुष्ठाने गृहस्थस्य सामर्थ्यमेव नास्तीति न गृहस्थानां विद्यार्थं शमाद्यनुष्ठानम् । यद्यपि श्रुतौ शमादीनां विद्यायां विनियोगः प्रतिपाद्यते तथापि स ऊर्ध्वरेतस्सु कर्मरहितेषु भविष्यतीति पूर्वपक्ष्याशयः ।

—१५ **चित्तसमाधानेति** । विद्यायाः एकाग्रतानिष्पाद्यत्वाच्छमादिभिरेव विद्यानिष्पत्तिः । यज्ञादिविहितकर्माण्यपि पापक्षयद्वारेणैकाग्रतासम्पादनेन विद्यासाधनभूतानि भवन्तीति बोध्यम् ॥ २७ ॥ ( ६ )

७०३–४ **भूयोधर्मकेति** । भूयोधर्मकानुष्ठानसामर्थ्ये सत्यपि यद्यल्पधर्मकानुष्ठानं क्रियते तदा न तद्भूयोधर्मकमिव कार्यं करोति । असामर्थ्ये त्वल्पधर्मकमपि भूयोधर्मकमिव कार्यं करोत्येवेति बोध्यम् ।

—७ **निवृत्तेति** । आपत्तेर्लक्षणमेतत् । ब्रह्मचर्यान्निवृत्तत्वाद्ब्रह्मचर्याश्रमाभावो बोधितः । मृतभार्यत्वात्पुनर्दाराणामलाभाच्च गार्हस्थ्याश्रमाभावो बोधितः । वैराग्यानुदयाच्च पारिव्राज्याभावो बोधितः । इह जन्मनि यद्विषयवैतृष्ण्यं तदभावःत्राविरागयशब्देनोच्यते । यच्च लोकान्तरजन्मान्तरभोगनैरपेक्ष्यरूपं विद्योपयोगि वैराग्यं तदस्त्येवेत्यनाश्रमिण आपत्तौ विद्याधिकारः सिद्धान्तितो न विरुध्यत इति बोध्यम् ॥ ३९ ॥ ( ९ )

—११ **नैष्ठिकेति** । नैष्ठिको ब्रह्मचारिविशेषः । वैखानसो वानप्रस्थः । परिव्राजकः संन्यासी । तेषामाश्रमास्तेभ्य इत्यर्थः ।

७०४–१–३ **तृतीय इति** । त्रिविधब्रह्मचारिमध्ये तृतीयो नैष्ठिक इत्यर्थः । अत्रात्यन्तमवसादयन्नित्यनेन नैष्ठिकस्य ब्रह्मचर्याश्रमात्प्रच्यवनो नास्तीति सूचितम् । अरण्यमियादिति श्रुतौ न पुनरेयादित्यनेन वानप्रस्थाश्रमात्पुनरावृत्तिर्नास्तीति सूचितम् । संन्यस्येति श्रुतौ न पुनरावर्तयेदित्यनेन संन्यासाश्रमात्प्रच्यवनो नास्तीति सूचितम् ॥ ४० ॥

—७ **अधिकारलक्षण इति** । लक्षणशब्दोऽध्यायवाची । पूर्वमीमांसायां षष्ठेऽधिकाराध्याय इत्यर्थः । तत्रावकीर्णिपशुश्च तद्वत् ( जै. सू. ६।८।२४ ) इति सूत्रितम् । अवकीर्णी भ्रष्टब्रह्मचर्यः । तेन निर्ऋतिदेवतामुद्दिश्य गर्दभपश्वालम्भनं कार्यमिति तस्य प्रायश्चित्तमुक्तम् ।

—११ **न चेति** । अनुमीयतेऽनेनेत्यनुमानं स्मृतिः । स्मृतिर्हि स्वार्थबोधकश्रुत्यनुमानेनैव प्रमाणभूता भवति ॥ ४१ ॥

—२० **उपपूर्वमिति** । पूर्वपक्षसूत्रमेतत् । भ्रष्टब्रह्मचर्यस्य 'प्रायश्चित्तेन ब्रह्मविद्याधिकारोऽस्तीति पूर्वपक्ष्याशयः ॥ ४२ ॥

७०५–१३ **न संभवतीति** । तस्य प्रायश्चित्तं तु परलोकगमनप्रतिबन्धनिवारकं भविष्यतीति भावः ॥ ४३ ॥ ( १० )

—२० **स्वामिन इति** । स्वामिनो यजमानस्योद्गीथाद्युपासने कर्तृत्वं न ऋत्विजः । यजमानस्यैव फलश्रवणादित्यात्रेयो मन्यत इति सूत्रार्थः । पूर्वपक्षसूत्रमेतत् ।

७०६–४ **न च गोदोहनादिवदिति** । प्रणयनस्याध्वर्युकर्तृकत्वात्तदाश्रयस्य गोदोहनस्योपादानं यजमानेन फलाश्रयभूतेनापि कर्तुमशक्यम् । अत्र तु शक्य-

त्वात्फलाश्रय एव कर्तेत्यर्थः (श्रु.)। गोदोहनं गोदोहनाधारः पात्रविशेषः। अधिकरणे ल्युट्। तेन पात्रेण जलानयनं प्रणयनम् ॥ ४४ ॥

७०६-१७ शक्त्यशक्ती इति। गोदोहनोपादानस्यार्त्विक्कर्तृकत्वं न यजमानस्याशक्तिमूलकं किं त्वृत्विक्परिक्रयमूलकम्। तथा चोद्गीथाद्युपासने यजमानस्य शक्तावप्यृत्विक्परिक्रयसद्भावादृत्विक्कर्तृकत्वमेवोद्गीथाद्युपासनस्येति भावः।

—१८ क्रत्वधिकृताधिकारत्वादिति। क्रतौ योधिकृतस्तस्यैवोपासनेधिकारस्तत्त्वादित्यर्थः।

७०७-२ ऋत्विक्कर्तृकत्वाश्रवणादिति। दहराद्युपासनानां कर्माङ्गत्वाभावादिति भावः। प्रयोक्तरि कर्तरि। फलिकर्तृकत्वं फलाश्रयकर्तृकत्वम् ॥ ४५ ॥ (११)

—७ तस्मादिति। श्रुतेरर्थः प्रागुक्तः (विवृति-पृ. ३०० प. १८)। बाल्यं चेत्यादेस्त्वयमर्थः—बाल्यं पाण्डित्यं च निर्विद्य लब्ध्वा मुनिः स्यान्मननशीलः स्यात्। स्यादित्यध्याहारः। ध्यानविच्छेदशायामप्यत्यन्तविषयोन्मुखत्वराहित्याय शुभाश्रयवस्तुसंशीलनं कार्यमिति यावत्। एतदेवात्र मननमुपासालम्बनभूतस्य शुभाश्रयस्य वस्तुनः पुनः पुनः संशीलनं भावनारूपम्। उपास्यवस्तुविषयाभ्यास इति यावत्। एतदेव प्रकृष्टमननमुच्यते। न तु मन्तव्य इति विहितं श्रवणप्रतिष्ठार्थं मननमत्र गृह्यते। तस्य पाण्डित्यशब्देनोक्तत्वादिति सिद्धान्तः। पूर्वपक्षिमते तु पाण्डित्यशब्देनोक्तमेव मननं मुनिरित्यनेन गृह्यते। अत एव च मुनिरिति न विधिः किं त्वनुवादः। स्यादिति च नाध्याहारः।

—१३ सहकार्यन्तरेति। विधीयत इति विधिरिति व्युत्पत्त्या विधानविषयीभूतमर्थः। तच्च यज्ञादि कर्म। आदिशब्दाच्छमादिसंग्रहः। अन्यत्सहकारि सहकार्यन्तरम्। तच्च तद्विधिश्चेति कर्मधारयः। तद्वतो विद्यावतः। यथा विद्यावतो यज्ञादि विद्यायाः सहकारि विधानविषयीभूतं भवति तथा विद्यायाअन्यत्सहकारि पक्षेण तृतीयं प्रकृष्टमननरूपं मौनमपि विधानविषयीभूतं भवति। यद्यपि बाल्यमेकम्। पाण्डित्यं च द्वितीयम्। तदेव च चिन्तनरूपं मौनमिति द्वितीयमेव मौनं न तु तृतीयं तथापि मौनशब्दस्य प्रकृष्टमननरूपोर्थो गृह्यत इति पक्षे तत्तृतीयं भवति। अयमेव मौनशब्दस्य प्रसिद्धोर्थः। मुनेर्भावो मौनम्। मुनिश्च प्रकृष्टमननकर्ता व्यासादिरेव प्रसिद्ध इति बोध्यम् ॥ ४६ ॥

७०९-१० अभिसमावृत्येति। अभिसमावृत्य समावर्तनं कृत्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहिते कर्मणि स्थितः शुचौ देशे स्वाध्यायादि नित्यकर्म कुर्वाण एवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न ततः पुनरावर्तत इत्यर्थः। अत्र किमर्थं गृहस्थाश्रमेणैवोपसंहारः कृतो नाश्रमान्तरेणेति शङ्काशयः ॥ ४७ ॥

७१०–६ **मौनवदिति** । यथा कुटुम्बे शुचौ देश इति श्रुतौ गृहस्थधर्मेणो-पसंहारः सर्वाश्रमधर्मप्रदर्शनार्थस्तथा ब्राह्मणः पुत्रैषणाया इति श्रुतौ संन्यासाश्रमधर्मोपदेशोपि सर्वाश्रमधर्मप्रदर्शनार्थः । कुतः । ब्रह्मविद्याप्रकरणे यथा संन्यासाश्रमधर्मस्य भिक्षाचरणपूर्वकस्य मौनस्योपदेशः क्रियते तथेतरेषामाश्रमधर्माणामप्युपदेशादिति सूत्रार्थः ।

—११ **उपपादितश्चेति** । अनुष्ठेयं बादरायण इति सूत्रे ( ३।४।१९ ) इति शेषः ॥ ४८ ॥ ( १२ )

७११–१ **कामचारादिकमिति** । बालो ह्यनुपनीतो यथेच्छं निषिद्धमपि वस्तु सेवत इति विदुषापि तथैव कर्तव्यमथ वा दम्भादिरहितत्वम् । दम्भादि-रहितत्वं च स्वविद्यामाहात्म्यस्याप्रकटीकरणम् ।

—३ **नियमशास्त्राणीति** । ब्राह्मणः सुरां न पिबेदित्यादिनिषेधशास्त्राणि विद्वद्विषये बाल्येन तिष्ठासेदिति विशेषविधिना बाध्यन्त इति तानि निषेधशा-स्त्राण्यविद्वद्विषयकाण्येवेति पूर्वपक्ष्याशयः ॥ ४९ ॥ ( १३ )

—१४ **तत्राभ्युदयफलेति** । मुक्तिफला त्वग्रिमसूत्रे विचार्यत इति बोध्यम् ।

—१९ **विलम्बहेत्वभावादिति** । पुण्यकर्मानन्तरं फलप्राप्तौ जायमा-नायां मध्ये किंचिदपि प्रतिबन्धकं नास्त्येवेति पूर्वपक्षी मन्यते । प्रतिबन्धकसंभ-वोस्तीति सिद्धान्तिमतम् । अत एवोद्गीथविद्यायुक्तस्य कर्मणः फलप्राप्तौ जाय-मानायां प्रतिबन्धो न भवतीति श्रुतौ प्रतिपाद्यते । सर्वत्रैव प्रतिबन्धाभावे तु विशेषतस्तत्र प्रतिबन्धाभावोक्तेरसंगतिः स्यात् ॥ ५० ॥ ( १४ )

७१२–१४ **प्रबलत्वादिति** । मुक्तिफलविद्यासाधनीभूतस्य कर्मणो भगव-त्प्रीत्यतिशयजनकत्वेन प्रबलत्वमिति शङ्काशयः । पूर्वकृतानां ब्रह्मविदपचाराणां ततोपि प्रबलत्वमित्युत्तराशयः ॥ ५१ ॥ ( १५ )

## अथ चतुर्थाध्यायस्य प्रथमः पादः प्रारभ्यते ।

७१३–३ **आवृत्तिरिति** । सूत्रार्थः प्रागुक्तः ( विवृति–पृ. १३ प. २० ) ।

—५–७ **ब्रह्मविदिति** । आसु श्रुतिषु विदधातुः केवलज्ञानार्थक इति पूर्वपक्षी मन्यते । उपासनार्थक इति सिद्धान्ती मन्यते । **ब्रह्मैव भवतीति** । अत्र न मुक्तस्य ब्रह्मणा सहैक्यं प्रतिपाद्यते । किं तु सादृश्यम् । ब्रह्मसदृशो भवतीत्यर्थः । सादृश्यं च भेदकाकारप्रहाणकृतम् ।

—१२ **अवघातादिवदिति** । यथा तुषनिवृत्तिपर्यन्तं तण्डुलावघातः क्रियते तथा ब्रह्मणः प्रत्यक्षज्ञानपर्यन्तं वेदनं कर्तव्यमिति शङ्काशयः ।

७१४–२ भाति चेति. । इयं श्रुतिर्यस्तद्वेदेति च श्रुतिः प्राक् ( विवृति–पृ. १३. प. २६, पृ. १४ प. ४ ) व्याख्याता ॥ १ ॥

७१५–१ तद्रूपेति । ध्येयस्वरूपज्ञाने चैकाकारा या ध्येयेतरसंबन्धरहिता संततिस्तद्ध्यानम् । ध्येयस्वरूपप्रत्ययैकतानता ध्यानमिति यावत् । तच्च यमनियमासनप्राणायामप्रत्याहारधारणारूपैर्ध्यानात्पूर्वैः षड्भिरङ्गैर्निष्पाद्यत इत्यर्थः । यमादीनां स्वरूपं प्रागुक्तम् ( विवृति–पृ. ६५ प. ३३ ) ॥ २ ॥ (१)

—११ यथावस्थितमिति । जीवाद्भिन्नत्वेनावस्थितं भिन्नत्वेनैवोपास्यमित्यर्थः ।

—१६ आत्मेत्येवेति । आत्मशरीरशब्दौ हि ससंबन्धिकार्थप्रतिपादकौ । यस्य य आत्मा तत्तस्यात्मनः शरीरम् । यस्य यच्छरीरं स तस्य शरीरस्यात्मेति । जीवश्च ब्रह्मणः शरीरभूत इति जीवेन स्वस्यात्मेत्येवंरूपेण ब्रह्मोपास्यमिति भावः ।

७१६–७ तज्जत्वादिति । इदं जीवजडस्वरूपं जगत्परमात्मनः सकाशादेव जायते । परमात्मन्येव लीयते । परमात्मनैव चेष्टते । परमात्मनैवास्य नियमनं क्रियते । परमात्मन एव चेदं शरीरमिति परमात्मनः सर्वनिरूपितात्मत्वं सिध्यति ।

—१० अहमित्येवेति । यथा मनुष्यशब्दवाच्यस्य शरीरस्य जीवप्रकारैकस्वभावतया प्रकारिणि जीवे मनुष्य इति बुद्धेर्मनुष्यशब्दस्य च पर्यवसानं तथाहंशब्दवाच्यस्य जीवस्य परमात्मप्रकारैकस्वभावतया प्रकारिणि परमात्मन्यहमिति बुद्धेरहंशब्दस्य च पर्यवसानं युक्तम् ।

—११ सर्वबुद्धीनामिति । यद्यप्यहंशब्दवाच्यस्य जीवस्य परमात्मशरीरत्वेनाहंशब्दस्य ब्रह्मणि पर्यवसानेऽहं वै त्वमसीत्यस्य वाक्यस्योपपन्नावपि त्वं वाहमस्मीति वाक्यं नोपपद्यत इति परस्परव्यतिहारोऽनुपपन्नस्तथाप्यहंत्वमादिसर्वशब्दानां ब्रह्मरूपैकवस्तुनिष्ठत्वेन कस्यापि शब्दस्य केनापि शब्देनोच्यमानं सामानाधिकरण्यं न विरुध्यत इति त्वं वाहमस्मीति वाक्यस्योपपत्तिरित्याशयः ।

—१४–५ एवं चार्थेति । जीवब्रह्मणोरेकत्वप्रतिपादकश्रुतेः पृथक्त्वप्रतिपादकश्रुतेश्च तात्पर्यभेदेन विरोधो नास्तीत्यनेन ग्रन्थेनोच्यते । अकृत्स्न इति । अकृत्स्नोऽपूर्णः । गुणमात्रपरत्वे च न पूर्तिः । विशिष्ट एव पूर्णः । ईदृशापूर्तिवचनं गुणगुणिभेदे सत्येवोपपद्यत इत्यर्थः ( श्रु. ) ॥ ३ ॥ ( २ )

७१७–९ प्रतीकोपासनेष्विति । अब्रह्मणि ब्रह्मदृष्ट्योपासनं प्रतीकोपासनम् । प्रतीकशब्दोऽङ्गपर्यायः । अङ्गे हि राजपुरुषादावङ्गिदृष्ट्या स्वागतादिकं यथा क्रियते तथैवात्रेति बोध्यम् ॥ ४ ॥

७१७–१८ **ब्रह्मैवोपास्यमिति** । ब्रह्मण्येव मनोदृष्टिः कर्तव्या न तु मनसि ब्रह्मदृष्टिरिति पूर्वपक्ष्याशयः । ब्रह्मण उपास्यत्वे तु तस्यात्मत्वेनानुसंधानमावश्यकमेव ।

७१८–४ **अभ्युदयायेति** । किं च मनो ब्रह्मेति वाक्ये मनसः प्राथम्येनोद्देश्यत्वबोधनान्मनस्येव ब्रह्मदृष्टिरिति मन एवोपास्यम् । तदुक्तं यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति । यद्यपि मनआदीनामचेतनानामल्पशक्तीनामुपास्यत्वाश्रयणमन्याय्यं तथापि तदभिमानिदेवतानामुपास्यत्वाश्रयणमन्याय्यं न भवतीति भावः ॥ ५ ॥ ( ३ )

—११ **अफलभ्य इति** । अफलसाधनेभ्य इत्यर्थः । किं च य एवासौ तपतीति वाक्ये दःशब्दवाच्यस्यादित्यस्योद्गीथापेक्षया प्राथम्यात्तस्यैव य इति यच्छब्दयोगाच्चोद्देश्यत्वमवगम्यत इत्यादित्य एवोद्गीथदृष्टिरिति पूर्वपक्ष्याशयः ।

—१६ **अतस्तद्दृष्टिरिति** । तथा च य एवासौ तपतीति वाक्य उद्गीथस्यैवोद्देश्यत्वम् । यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति तु प्रायोवादो न तु नियमः । अत एव वृद्धिरादैच् (पा. सू. १।१।१) इति पाणिनिसूत्रे वृद्धिशब्दस्य प्राथम्येपि नोद्देश्यत्वमिति बोध्यम् ॥ ६ ॥ ( ४ )

७१९–३ **स्थितिगत्योरिति** । यथासीनस्योपविशतः पश्चार्धः कटिपश्चाद्भागो भूमौ स्पृष्टो भवति तथा तिष्ठतो न भवति । स्थितिर्हि केवलपादतलाभ्यां भूमिमवलम्ब्योर्ध्वमवस्थानम् । तत्र पश्चार्धधारणे प्रयत्नो भवत्येव । गतौ तु प्रयत्नः स्पष्ट एव ॥ ७ ॥

—६ **ध्यानादिति** । भावप्रधानो निर्देशः । ध्यानत्वादित्यर्थः ॥ ८ ॥

—१२ **ध्यायन्तीवाप इति** । कूपादिगतं स्थिरं जलमत्रापूशब्देन गृह्यते नद्यादिगतस्य जलस्याचलत्वासंभवात् ॥ ९ ॥ १० ॥

७२०–५ **यत्रैकाग्रतेति** । न चास्य सूत्रस्य प्रकृतेनासीनाधिकरणेन संबन्धो नास्तीति वाच्यम् । आसनसहपठितो देशादिरप्येकाग्रतासिद्ध्यर्थमपेक्ष्यते किं पुनरासनमित्याशयेनैतत्सूत्रप्रणयनात् ॥ ११ ॥ ( ५ )

—११ **आ प्रयाणादिति** । आवृत्त्यधिकरणे ( ४।१।१ ) वेदनस्यासकृदावृत्तिः कर्तव्येति निर्णीतम् । सा चावृत्तिरेकस्मिन्नेवाहनि कर्तव्याथ वा मरणपर्यन्तमिति विचारोत्र क्रियते ॥ १२ ॥ ( ६ )

—७२१–१ **उत्तरपूर्वाघयोरिति** । उत्तरस्य ब्रह्मसाक्षात्कारावस्थोपासनलाभानन्तरकालभाविनोऽघस्यपापस्यासंभवादश्लेषोऽसंबन्धः पूर्वकृतस्य च पापस्य विनाशः श्रुतौ प्रतिपाद्यत इत्यर्थः ।

७२३–९ शरीरपाते त्विति । विद्यानुगुणवृष्ट्यन्नादिदृष्टफलकानि सुकृतकर्माणि तिष्ठन्ति चेत्तानि शरीरपातानन्तरं नश्यन्तीत्यर्थः ॥ १४ ॥ (८)

—१७ कुलालचक्रेति । यथा दण्डेन चक्रे संस्कारमुत्पाद्य भ्राम्यमाणे सति ततस्तद्दण्डनाशेऽपि यावत्संस्कारं चक्रं भ्रमति तथा कर्मणा स्वकार्ये देहादौ संस्कारमुत्पाद्य प्रारब्धे सति तत्तत्कर्मनाशेऽपि यावत्संस्कारं तत्कार्यं स्यादेव । ननु पुण्यपापकर्मणी स्वर्गनरकादिसाधनीभूतभगवत्प्रीत्यप्रीती उत्पाद्य फलं जनयतः । तत्र च तादृशप्रीत्यप्रीतिरूप एव संस्कारो नातिरिक्तः । अनुपलम्भात् । एवं च विद्यया तादृशप्रीत्यप्रीत्योर्विनाशे संस्काराभावेन देहस्थितेरनुपपत्तिः । अतस्तदर्थं प्रारब्धकर्मावश्यकमेवेति चेत्सत्यम् । संस्कारस्य तादृशप्रीत्यप्रीतिव्यतिरिक्तत्वमिति पूर्वपक्षिणोऽभिमानेन प्रीत्यप्रीतिविनाशेऽपि संस्कारसत्त्वेन देहस्थितेरुपपत्तेः ।

७२४–२ शरीरपातेति । उत्पन्नायामपि विद्यायां यावच्छरीरं तिष्ठति तावन्मोक्षो न भवतीत्यर्थः ॥ १५ ॥ ( ९ )

—९ तत्फलस्याश्लेषादिति । नित्यनैमित्तिककर्मणः फलं विद्याव्यतिरिक्तं पूर्वपक्षी मन्यते । सिद्धान्ती तु विद्यैव तत्फलमिति मन्यते । न चोत्पन्नायां विद्यायां पश्चात्कृतस्याग्निहोत्रादिकर्मणो विद्यारूपं फलं न संभवतीति वाच्यम् । पूर्वमुत्पन्नायामेव विद्यायां तेन कर्मणा कश्चिदतिशय उत्पद्यत इति तत्तदतिशयविशिष्टविद्याया अग्निहोत्रादिकर्मफलत्वसंभवात् ॥ १६ ॥

—२० यदीति । विद्यावतः सुकृतं तत्सुहृदो गृह्णन्तीति यच्छ्रुतौ प्रतिपाद्यते तन्नोपपद्यते । सुहृद्ग्राह्यसुकृताभावात् । यच्चाग्निहोत्रादिकर्म तद्विद्योत्पत्त्यर्थं तस्यैवावश्यकम् । सुकृतान्तरं तु प्रायोनुभवेन विनष्टमेव । किंचिच्च विद्यावतैव सद्योनुभूयते । एवमेव विद्यया सुकृतस्याश्लेषविनाशावपि नोपपद्येते । तथाविधसुकृताभावात् । द्विषन्तो दुष्कृतं गृह्णन्तीति तूपपद्यत एव । विद्योत्पत्त्यनन्तरभाविनः प्रमादकृतस्य दुष्कृतस्य सत्त्वादिति शङ्काशयः ।

७२५–६ साधुकृत्येति । वृष्ट्यन्नाद्यर्थितया विदुषानुष्ठिता कारीरीष्ट्यादिसाधुकृत्यानन्तास्त्येवेत्यर्थः ॥ १७ ॥ १८ ॥ ( १० )

—१८ विद्यायोनीति । यस्मिञ्छरीरे विद्यमाने विद्योत्पद्यते तद्विद्यायोनि शरीरम् ।

७२६–९ देहावधिनियमाश्रवणादिति । धूत्वा शरीरमकृतं कृतात्मेति श्रुतौ शरीरमित्येकवचनं तु जात्यभिप्रायं विधूय पापमितिवदिति बोध्यम् ॥ १९ ॥ ( ११ )

**अथ चतुर्थाध्यायस्य द्वितीयः पादः प्रारभ्यते ।**

७२७-६ **प्रयन इति** । देहं त्यजत इत्यर्थः ।

—१५ **तत्राह शब्दाच्चेतीति** । तथा च यद्यपि दर्शनं सिद्धान्तिपूर्वपक्षिणो-रुभयोरपि समानमेव तथापि पूर्वपक्षिणा वाङ्मनसीति श्रुतौ वाक्शब्दस्य लक्षणया वाग्वृत्तिरूपोऽर्थः स्वीकृत इति वाक्शब्दः स्वरसतो नोपपद्यते । तथा च शब्दस्वरसानुकूल्यपूर्वकदर्शनमेक एव हेतुः सूत्रे दर्शनाच्छब्दादिति पदद्वयेन निर्दिष्ट इति बोध्यम् ॥ १ ॥

७२८-५ **वाचमन्विति** । वाचः पश्चादित्यर्थः । **तस्मादुपशान्ततेजा इति** । यदा पुरुष उपशान्ततेजा मुमूर्षुर्भवति तदा मनसि संपद्यमानैरिन्द्रियैः सह पुनर्भवं शरीरान्तरं प्रतिपद्यत इत्यर्थः ॥ २ ॥ ( १ )

—११ **अधिकाशङ्कते** । पूर्वपक्षी तु मनसोऽन्नकार्यत्वं प्राणस्य च जल-कार्यत्वं मन्यते । मनः प्राणे संपद्यत इति श्रुतौ प्राणशब्देन लक्षणया प्राण-कारणीभूतं जलमुच्यते । संपद्यत इत्यस्य लीयत इत्यर्थः । न तु संयुज्यत इति । तथा च मनः स्वकारणीभूतान्नद्वारा तादृशान्नकारणीभूते जले लीयत इत्यर्थः । अन्नस्य पृथिवीरूपत्वात्पृथिव्याश्च जलकार्यत्वादन्नकारणत्वं जलस्य स्पष्टमेव । एतदेव च ता अन्नमसृजन्तेति श्रुतेस्तात्पर्यमिति पूर्वपक्ष्याशयः ।

—२० **आप्यायनमिति** । पोषणमित्यर्थः ॥ ३ ॥ ( २ )

७२९-१ **सोऽध्यक्ष इति** । उपगमः संबन्धः ॥ ४ ॥ ( ३ )

—२१ **पृथिवीमय इति** । पृथिवीसंयुक्तोऽप्संयुक्तस्तेजःसंयुक्त इत्यर्थः ॥ ५ ॥ ६ ॥ ( ४ )

७३०-१६ **समानेति** । सृतिर्गतिः । अनुपोष्यादग्ध्वा । उपदाह इति धातुः । गत्युपक्रमपर्यन्तं विदुषोऽप्युत्क्रान्तिरविद्वत्तुल्यैव । न तु तस्यानुत्क्रम्यैव ब्रह्मप्राप्ति-र्भवति । विदुषोऽर्चिरादिमार्गश्रुतेः । यत्राथ मर्त्योऽमृतो भवतीत्यमृतत्वमुच्यते तेन ब्रह्मप्राप्तिरूपम् । किं तु शरीरादिसंबन्धमदग्ध्वैव यादृशं संभवत्तादृशं ग्राह्य-मिति सूत्रार्थः ।

—२० **यदा सर्व इति** । तथा च विदुषोऽत्रैव ब्रह्मप्राप्तिर्न तु शरीरान्निष्क्रम-णपूर्वकमर्चिरादिमार्गेण गत्वा ब्रह्मप्राप्तिरिति पूर्वपक्ष्याशयः ।

७३१-४ **शतमिति** । हृदयमध्ये नाड्यः एकाधिकशतसंख्याकाः सन्ति । तास्वेका मूर्धस्थानं गता । तया विद्वानूर्ध्वं गच्छन्नमृतत्वं प्राप्नोति । अन्या नाड्यो विष्वग्विततां अविदुषामुत्क्रमणार्था भवन्तीति श्रुत्यर्थः ॥ ७ ॥

७३२-५ **धृत्वेति** । लब्ध्वेत्यर्थः । तथा चैतावत्कालपर्यन्तं शरीरसंबन्धरूपः संसारो वर्तत एवेत्युत्क्रान्तेः प्रागमृतत्वं न संभवति । अतस्तदमृतत्वं गौणमे-वाश्रयणीयमिति भावः ॥ ८ ॥

७३२-८ विदुष इति । विदुषोऽपि संसारबन्धस्य उत्क्रान्तेः प्रागविशेषेण दग्धो न भवतीत्यर्थः ॥ ९ ॥

—१८ न बन्धोपमर्देनेति । एतेनाथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति श्रुत्यनुरोधाज्जीवन्मुक्तिरङ्गीकर्तव्येति परास्ताः । जीवन्मुक्तिखण्डनार्थमेवेदं सूत्रं सूत्रकृद्भिः प्रणीतम् । श्रुतौ विदुषोऽप्युत्क्रान्तिबोधनेनार्चिरादिमार्गकथनेन च जीवन्मुक्तेरसंभवादित्याशयः ॥ १० ॥

—१९ अस्यैवेति । अस्य सूक्ष्मशरीरस्यैव विद्यमानत्वोपपत्तेश्च न देहबन्धोपमर्दनामृतत्वम् । यतः [illegible] स च सूक्ष्मदेहस्य गुणो न स्थूलस्य । तथा सति सर्वत्रोपलभ्येत [illegible] ॥ ११ ॥

७३३ ९-१९ [illegible] इति । तेजोमात्राः सूक्ष्मभूतानि । हृदयमेवान्ववक्रामति हृदयाभिमुखं क्रामति । अकामयमान इति । अकामयमानः पुत्रैषणारहितः । अकामो [illegible] । निष्कामो [illegible] । न तस्य प्राणा उत्क्रामन्ति [illegible] न निषिद्ध्यते । तथा च तत्र [illegible] जीवात्सकाशात्प्राणा नोत्क्रामन्ति [illegible] । पूर्वपक्षी तु शरीरमेवापादानं मन्यते ।

७३४-२ अत्रैवेति । अत्र शरीरे लीयन्ते । आध्मातो वायुना पूरितः सन्नुच्छ्वयत्युच्छूनो [illegible] ।

—९ [illegible] यद्वेति ।

—१४ अपादानमेव [illegible] इति । यद्यपि तस्येति पदेन प्राणेषु जीवसंबन्धो बोध्यते तथापि [illegible] नास्ति । यदि प्राणानां जीवव्यतिरिक्त [illegible] संबन्धः स्यात्तर्हि [illegible] तस्येति पदं सफलं स्यात् । तथा च श्रुतौ [illegible] बोधार्थमेव तस्येति तस्मादित्येतत्त्वा [illegible] पर्यायकं निर्दिष्टम् । तस्मादित्यपादानस्य निर्देशरूपम् । तस्येति तु सामान्यरूपमिति बोध्यम् ।

—१८ [illegible] शरीरादिति ।

—२० शरीरवियोगकाल इति । प्रारब्धकर्महेतुकचरमशरीरवियोगकाल इत्यर्थः ( श्रु ) ।

७३५-५ अयमेवेति । तस्य तावदेव ( श्रीभाष्य-पृ. ७३४ प. १९ ) इत्यादिग्रन्थेनोक्त इत्यर्थः ।

—७ ग्रहातिग्रहरूपेणेति । कति ग्रहाः कत्यतिग्रहा इत्यार्तभागस्य प्रश्नः ।

अष्टौ ग्रहा अष्टावतिग्रहा इति याज्ञवल्क्यस्योत्तरम्। गृह्णाति स्वानुरोधेन जीवं वनेमर्तीति ग्रहशब्देनेन्द्रियमुच्यते। ग्रहमतिक्रान्तोऽतिग्रहो विषयः। इन्द्रियस्य ग्रहत्वं विषयास्तित्व एव नान्यथेति विषयस्यातिग्रहत्वम्। प्राणवाग्जिह्वाचक्षुःश्रोत्रमनोहस्तत्वचो ग्रहाः। अपाननामरसरूपशब्दकामकर्मस्पर्शा अतिग्रहाः। पुनःप्रश्नः मृत्युः कस्यान्नम्। उत्तरम् सर्वदाहकत्वादग्निर्मृत्युः। स जलस्यान्नम्। तस्य जलनाश्यत्वात्। एतज्ज्ञानेन मृत्युजयो भवति। यथा ज्ञानिनो मोक्षे मृत्युजयस्तथा नायम्। किं त्वग्निरूपमृत्युजयः। अग्नेर्जलनाश्यत्वमिति ज्ञाने जाते जलसहायेनाग्निर्जितो भवति। प्र० म्रियमाणस्य प्राणपरित्यागो भवति न वा। उ० न भवति। यथा स्थूलदेहो मुञ्चति तथा प्राणा न मुञ्चन्तीत्यर्थः। प्र० म्रियमाणं पुरुषं किं न जहाति। उ० नाम। कीर्तिरित्यर्थः। प्र० कायं तदा पुरुषो भवति। उ० कर्मानुसारेण गच्छति ॥ १२ ॥

७३५-१-१७ ऊर्ध्वमेक इति। तेषां हृदयस्थानां रश्मीनां (नाडीनाम्) ऊर्ध्वमेको रश्मिः स्थितः। यश्च सूर्यमण्डलं भित्त्वा हिरण्यगर्भलोकमतिक्रम्य स्थितः। तेन रश्मिना मार्गेण परां गतिं परं गन्तव्यं ब्रह्म यातीत्यर्थः ॥ १३ ॥ ( ५ )

७३६-५ स्वकार्यायेति। एकां योनिं त्यक्त्वा कर्माद्यनुसारेणान्यां योनिं प्राप्स्यमानस्य जीवस्य प्राप्स्यमानयोन्यनुरूपशरीररूपेण परिणामार्थं तानि भूतसूक्ष्माणि सह एव गच्छन्त्यथ वा मध्ये कंचित्कालं परमात्मनि स्थित्वा पश्चाद्गच्छन्तीति संशय इति भावः ॥ १४ ॥ ( ६ )

--१६ अविभागरूपेति। संयोगरूपेत्यर्थः।

७३७-१-२ अनुपक्तस्येति। वाङ्मनसि संपद्यत इति श्रुतौ संपद्यत इति पदं पृथग्व्यवहारानर्हसंसर्गवाचकम्। तदेव पदं तेजः परस्यामिति वाक्ये संबध्यमानं तदर्थस्यैव वाचकं न तु लयरूपस्यान्यार्थस्य। अर्थभेदे प्रमाणाभावात्। अभिधानैकरूप्यमभेदः। कारणापत्तीति। देहिनो विश्रान्तिर्द्विधा—प्रलये सुषुप्तौ च। यथा भारवाहकस्य भारं त्यक्त्वा विश्रान्तिस्तद्वदाद्या। यथा च भारवाहकस्य स्वभारस्यैव यष्ट्याद्याश्रयेण विश्रान्तिस्तद्वद्द्वितीया। प्रकृते चेतरयोनिप्राप्तेः प्राक्परमात्मसंयोगरूपा या विश्रान्तिः सा सुषुप्तितुल्यैवेति तदानीं सूक्ष्मभूतानां कारणे परमात्मनि लयस्य प्रयोजनं नास्ति। किं च लयश्चेत्पुनरव्यक्तमहदहंकाराकाशादिक्रमेण सृष्टेरावश्यकत्वम्। सृष्टिश्च प्रकृतप्रस्तावे नोक्तेति लयोऽपि नैव भवतीति बोध्यम् ॥ १५ ॥ ( ७ )

६३८-३ हार्देनेति। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ( म. ना. १३।१२ )। सर्वस्य चाहं हृदि संनिविष्टः ( गी. १५-१५ ) इति श्रुतिस्मृत्युक्तप्रकारेण हृदयेऽन्तर्यामितयावस्थितेन परमपुरुषेणेत्यर्थः ॥ १६ ॥ (८)

७३९.-१ **रश्मिसंभव इति ।** न चान्धकारासंभव इति वाच्यम् । सूक्ष्म-रश्मिसद्भावाङ्गीकारेणादोषात् ।

—३ **तद्यथेति ।** यथा विस्तीर्णो महापथो ग्रामद्वयप्रतिष्ठितो भवति तथा-दित्यस्य रश्मयो लोकद्वयानुप्रविष्टा भवन्ति । प्रतायन्ते विस्तृता भवन्ति । ताः रश्मयः । सृप्ताः संबद्धाः । ते रश्मयः । रश्मीनामुभयलिङ्गत्वात्ता इति त इति च निर्देश इति भावः ॥ १७ ॥ ( ९ )

—१७ **दिवा चेति ।** एतद्वचनमविद्वद्विषयमिति सिद्धान्तः । पूर्वपक्षी तु विद्वद्विषयमप्येतद्वचनं मन्यते ।

७४०–५ **चरमदेहेति ।** नन्वप्रशस्तकालमृतस्य ब्रह्मप्राप्तियोग्यत्वाभावाद् अप्रशस्ते काले त्यक्तो देहो न चरम इति चेन्न । अथ यो दक्षिणे ( म. ना. ८० ) इति श्रुतौ दक्षिणायने मृतस्यापि ब्रह्मप्राप्तेरुक्तत्वात् । तथा च विदुषो मरणे सर्वोपि कालः प्रशस्त एवेति दिवा चेत्यादिवचनमविद्वद्विषयकमेवेति बोध्यम् ॥ १८ ॥ ( १० )

—१४ **तेषां यदेति ।** तेषां कर्मिणां यदा तत्कर्म पर्यवैति परिक्षीणं भवति तदैतमेव येनाध्वना गतास्तमेवाध्वानं पुनर्निवर्तन्त इति सिद्धान्ते श्रुत्यर्थः । पूर्वपक्षिमते तु तेषामित्यनेन ज्ञानिनामपि परामर्शः । तच्छब्देन च न विशेषतः कर्मणः परामर्शः । किं तु सामान्यतश्चन्द्रगमननिमित्तस्यैवेति । तथा चास्याः श्रुतेर्दक्षिणायनमृतविद्वद्विषयकत्वमपि संभवति ।

७४१–३ **अनिवार्येति ।** तथा चाविद्वांसो ये केवलकर्मिणस्तद्विषयकमेव पुनरावृत्तिवचनमिति बोध्यम् ॥ १९ ॥

—१८ **योगिन इति ।** अग्निर्ज्योतिरित्यनेन दिवसादिर्मरणकालोऽनावृ-त्तिहेतुभूत इति न प्रतिपाद्यते । तथैव धूमो रात्रिरित्यनेन रात्र्यादिर्मरणकालः पुनरावृत्तिहेतुभूत इति न प्रतिपाद्यते । कालवाचकानामहःशुक्लादिशब्दानां रात्र्यादिशब्दानां च तत्तत्कालाभिमानिदेवतापरत्वात् । उपक्रमे यत्र काल इत्यस्य कालाभिमानिदेवताप्रदर्शिते यस्मिन्मार्ग इत्यर्थः । तं कालमित्यस्यापि कालाभिमानिदेवताप्रदर्शितं तं मार्गमित्यर्थः । मार्गप्रदर्शकदेवतासु मध्ये कालाभिमानिदेवतानां बाहुल्येन कालाभिमानिदेवताप्रदर्शित इत्युक्तम् । तथा च काल इत्युक्तिर्भूयस्त्वाभिप्राया । तेनाग्न्यादीनां केषांचित्कालाभिमा-नित्वाभावेपि न क्षतिः । एवं चाग्निर्ज्योतिरित्यनेनाग्न्यादिर्देवयानमार्गोऽनावृ-त्तिहेतुभूत इति प्रतिपाद्यते । देवयानमार्गे चाग्न्यादयो देवताः केवलं मार्गं दर्शयन्ति । अयं मार्गो मुमुक्षुणानुसंधातव्य इत्यग्निर्ज्योतिरिति वचनस्य तात्पर्यम् । एवमेव धूमो रात्रिरित्यनेन धूमादिः पितृयाणमार्गः पुनरावृत्तिहेतु-

भूत इति प्रतिपाद्यते । तत्रापि धूमाद्यभिमानिन्यो देवताः केवलं मार्गं दर्शयन्ति । अयं मार्ग ऐश्वर्यार्थिना कर्मिणानुसंधातव्य इति धूमो रात्रिरिति वचनस्य तात्पर्यम् । तथा च रात्रौ कृष्णपक्षे दक्षिणायने वा मृतस्यापि विदुषोऽर्च्याद्यो देवता मार्गं प्रदर्शयन्ति । अविदुषस्तु कर्मिणो दिवसे शुक्लपक्ष उत्तरायणे वा मृतस्यापि धूमादिदेवता मार्गं प्रदर्शयन्ति ।

७४२-६ कालाभिमानीति । आतिवाहिका मार्गप्रदर्शिका याः कालाभिमानिन्यो देवतास्तद्वाचकः कालशब्द इत्यर्थः ॥ २० ॥ (११)

---

## अथ चतुर्थाध्यायस्य तृतीयः पादः प्रारभ्यते ।

७४३-६-१४ यथेति । यथा कमलपत्र उदकं न संयुज्यते तथा ब्रह्मविदि प्रमादेन जातमपि पापं कर्म न संयुज्यते । पापशब्देनात्र सुकृतमपि गृह्यते । अस्मिन्ब्रह्मविदि तत्पुत्रादयो यदि शवदहनादिकर्म कुर्वन्ति यदि वा न कुर्वन्त्युभयथापि ते ब्रह्मविदोऽर्चिषमेवाभिसंभवन्ति । अर्चिरहरादिशब्देन तत्तदभिमानिदेवताग्रहणम् । आपूर्यमाणपक्षः शुक्लपक्षः । आदित्यो यान्षण्मासानुदङ्केति तान्मासान् । उत्तरायणमिति यावत् । देवैरातिवाहिकैर्नीयमानः पन्था देवपथः । ब्रह्मप्रापकः पन्था ब्रह्मपथः । एतेन मार्गेण प्रतिपद्यमाना इमं घोरं घटीयन्त्रवज्जननमरणाद्यावर्तकं मनुष्यादिशरीरोपलक्षितं संसारं पुनर्न प्रतिपद्यन्त इत्यर्थः ।

—१५ रश्मिभिरिति । सूर्यरश्मिभिरित्यर्थः ।

७४४-५ तस्मै स इति । स वायुस्तस्मै ब्रह्मविदे विजिहीते मार्गप्रवेशाद्ब्रह्मविदोऽवयवानूर्ध्वं निःसारयति । विजिहीयते इति' वा पाठः । विहर्तुमिच्छतीति तदर्थः । आडम्बरं वाद्यविशेषः । डम्बरस्येति वा पदच्छेदः । तस्यापि स एवार्थः ।

—१७ प्रत्यभिज्ञानादिति । अर्चिरादिमार्गान्तर्भूतादित्यादीनां सर्वत्र दर्शनात्स एवायं मार्ग इति प्रत्यभिज्ञानं भवति ।

७४५-२ अल्पान्तर इति । ईषद्भेदेनेत्यर्थः ॥ १ ॥ ( १ )

—५ वायुमिति । अर्चिरादिमार्गश्च—अर्चिः अयमेवाग्निलोकः १ दिवसः २ शुक्लपक्षः ३ उत्तरायणम् ४ संवत्सरः ५ देवलोकः अयमेव वायुः ६ आदित्यः ७ चन्द्रमाः ८ वैद्युतः पुरुषः ९ वरुणः १० इन्द्रः ११ प्रजापतिः १२ ब्रह्म १३ इति । यद्यप्येषु केचित्क्वचिच्छ्रुतौ न निर्दिष्टास्तथापि ये यत्रानिर्दिष्टास्ते तत्रोपसंग्राह्या अन्यश्रुत्यनुरोधादिति सिद्धान्तः । अयमेव सिद्धान्तोऽस्मिन्सूत्रे तडितोऽधीत्युत्तरसूत्रे च प्रतिपाद्यते । अस्मिन्नधिकरणे पूर्वपक्षी तु वायुर्भिन्नो देवलोकश्च भिन्न इति मन्यते ।

७४६-३ तत्र कौपीतकिनामिति । यदि कौपीतकिश्रुतावर्चिरुत्तरं वायुलोकस्य पाठेन तादृशपाठक्रमानुरोधेनार्चिरुत्तरं दिवसात्प्राग्वायुलोकः संगृह्यते तर्हि वायुलोकात्सकाशाद्दिवसगमने गन्तुरूर्ध्वगतिर्न स्यात् । वायुलोकात्सकाशादादित्यगमने त्वादित्यस्योर्ध्वमवस्थानेन गन्तुरूर्ध्वगतिः स्यादेव । ऊर्ध्वगतिपूर्वकादित्यगमनं च स्पष्टमेव बृहदारण्यके कथ्यते स ऊर्ध्वमाक्रमते स आदित्यमागच्छतीति । तथा च कौपीतकिश्रुतावर्चिरुत्तरं पठितोपि वायुलोको दिवसाद्यनन्तरमादित्यलोकात्प्राक्संग्राह्य इति भावः ।

—१० अनर्थान्तरत्वेनेति । अभिन्नत्वेनेत्यर्थः । देवलोकं सन्तमित्यस्य देवलोकरूपमित्यर्थः ।

—१२ ऊर्ध्वशब्देनेति । स वायुगत ऊर्ध्वमाक्रमते स आदित्यमिति श्रुत्यनुरोधात्संवत्सराद्वायुद्वारादित्यगतिः सिध्यति । देवलोकादादित्यमिति पञ्चम्यनुरोधाच्च संवत्सराद्देवलोकद्वारादित्यगतिः सिध्यति । तथा चार्चिरादिमार्गे संवत्सरानन्तरमादित्यं प्रति प्रकारद्वयेन गमनं सिद्धमिति यत्रा यथेष्टं गतव्यमिति पूर्वपक्ष्याशयः ॥ २ ॥ ( २ )

७४७-१६ श्रुतिक्रमोपरोधादिति । अर्चिषोहरिति श्रुतिक्रमेणावरुद्धत्वान्मध्ये कस्यचिदन्यस्य प्रवेशो न भवति । अन्तेपि प्रवेशो न भवति । चरमस्य वैद्युतपुरुषस्य ब्रह्मगमयितृत्वश्रवणात् । तथा च सर्वत्रावकाशाभावः सिद्ध इत्याशयः ।

७४८-५ प्रसिद्ध इति । विद्युतो मेघोदरस्थजलवर्तित्वाद्वरुणस्य च जलाभिमानित्वात्तयोः संबन्धः प्रसिद्धः । ननु तडित उत्तरमेव वरुण इति कुतः । संबन्धस्योभयत्राविशेषात् । तथा च तडितः पूर्वमपि वरुणो निवेशयितुमर्हतीति चेन्न । मेघेषु हि विद्युत्स्फुटनं दृश्यते न तथा जलमिति तडित ऊर्ध्वं जलस्थितिरनुमीयते । तदनुरोधेनार्चिरादिमार्गे पूर्वं तडित्पुरुषस्ततो जलाभिमानी वरुण इत्यस्यैव क्रमस्य योग्यत्वादिति बोध्यम् ॥ ३ ॥ ( ३ )

—१४ भोगभूमय इति । भोगस्थानानीत्यर्थः । अतिवोढार इत्यस्य मार्गदर्शका इत्यर्थः ।

७४९-३ एतेषामनभिधायित्वादिति । एतेषामहरादिशब्दानां योर्थस्तस्य मार्गचिह्नत्वं नास्ति । अन्यानि च मार्गचिह्नानि । तद्वाचकत्वमेतेषां शब्दानां नास्तीत्यर्थः ।

—५ लोकत्ववचनादिति । लोकशब्दस्य भोगस्थानरूपेर्थे प्रसिद्धत्वादिति भाव. ।

—१२ वदन्तीति । यथा पृथिव्यब्रवीदित्यत्राचेतनायाः पृथिव्या भाषणा-

संभवेपि पृथिव्यभिमानिदेवताया्श्चेतनाया आपगं संभवतीति व्यवस्थापितं (श्रीभाष्य–पृ.४८६ प.१०) तथैवात्राचेतनानामर्चिरादीनां गमयितृत्वासंभवेप्यर्चिराद्यभिमानिदेवतानां चेतनानां गमयितृत्वमुपपद्यत इति बोध्यम् ॥ ४ ॥ ५ ॥ (४)

७५०–६ अर्चिरादिरिति । विदुषो मार्गप्रदर्शकोर्चिरादिर्वैद्युतपुरुषान्तः समुदाय इत्यर्थः ।

—८ कार्यमिति । कार्यमित्यस्य व्याख्या हिरण्यगर्भमिति । हिरण्यगर्भो ब्रह्मदेवः । हिरण्यगर्भोपासकान्हिरण्यगर्भं प्रति नयत्यथ वा परब्रह्मोपासकान्परं ब्रह्म प्रति नयत्यथ वा परब्रह्मोपासकाञ्जीवोपासकांश्चेत्युभयविधानपि परं ब्रह्म प्रति नयतीति कोटित्रयात्मकः संशयः । जीवोपासकाश्च त उच्यन्ते ये भूतसूक्ष्मव्यतिरिक्तं ज्ञानैकस्वरूपं नित्यं निर्विकारं जीवात्मानं ब्रह्मात्मकत्वेन ( ब्रह्म अन्तर्यामितया आत्मा यस्य तत्त्वेन ) स्वरूपेणोपासते । यथा पञ्चाग्निविद्योपासकाः । तत्र हिरण्यगर्भोपासकानेव नयतीति बादरेः पूर्वपक्षः । परब्रह्मोपासकानेव नयतीति पक्षान्तरं जैमिनेः । ते च परब्रह्मोपासका द्विविधाः–परस्मिन्ब्रह्मणि परब्रह्मत्वेनोपासकाः प्रतीकालम्बनाश्च । ये ब्रह्मचिह्नभूतानामादीन्ब्रह्मदृष्ट्योपासते ये च नामादीन्ब्रह्मचिह्नदृष्ट्यैवोपासते त उभयविधा अपि प्रतीकालम्बना उच्यन्ते । प्रतीकं चिह्नमालम्बनमुपासनाश्रयो येषां ते प्रतीकालम्बनाः । सिद्धान्तभूतो बादरायणपक्षस्तु प्रतीकालम्बनव्यतिरिक्तब्रह्मोपासकाञ्जीवोपासकांश्चेत्युभयविधान्नयतीति ।

—१६ परिच्छिन्नश्चेति । परिच्छिन्नः परिमितो यो देशो ब्रह्मदेवस्य लोकस्तन्मध्यवर्ती प्राप्यभूतो यो ब्रह्मदेवस्तत्प्राप्त्यर्थमित्यर्थः ॥ ६ ॥

—२० लोकशब्देनेति । यदि परं ब्रह्मैव गन्तव्यं स्यात्तदा ब्रह्म गमयतीत्येव वक्तव्यं न तु ब्रह्मलोकानिति । लोकाश्च हिरण्यगर्भस्य प्रसिद्धा एव । न च लोकशब्दोऽप्यवयवि ब्रह्मैव लोक इति कर्मधारयेण ब्रह्मैव गन्तव्यं सिध्यतीति वाच्यम् । तथा सति लोकानिति बहुवचनासंगतेः । परब्रह्मण एकत्वात् । तथा च लोकशब्देन बहुवचनेन भाष्यस्य बहुवचनान्तलोकशब्देनेत्यर्थः फलितः ।

७५१–१ प्रजापतेरिति । प्रजापतेः सभास्थानभूतं वेश्माहं प्रपद्य इत्युपासकः स्वमनसाभिसंधत्त इत्यर्थः । अत्र प्रजापतिशब्दो ब्रह्मदेवार्थको न तु परब्रह्मार्थक इति पूर्वपक्षी मन्यते ॥ ७ ॥

—६ निर्देष्टव्यमिति । ब्रह्मदेवार्थकस्य ब्रह्मशब्दस्य पुंलिङ्गत्वादिति भावः ।

—९ ब्रह्मशब्देनेति । नपुंसकलिङ्गब्रह्मशब्देनेत्यर्थः ॥ ८ ॥

—१९ कार्यात्यय इति । अत्ययो नाशः ।

७५२-४ **परामृतादिति** । ल्यब्लोपे पञ्चमी । यथा प्रासादात्प्रेक्षत इत्यत्र प्रासादमारुह्य प्रेक्षत इत्यर्थस्तथात्र परामृतं ब्रह्म प्राप्य परिमुच्यन्तीति पूर्वपक्षे श्रुत्यर्थः ॥ ९ ॥

—९ **ब्रह्मणा सहेति** । प्रतिसंचरः प्रलयः ॥ १० ॥

—१४ **पक्षान्तरपरिग्रहेणेति** । उक्तपक्षात्पक्षान्तरेण न तु सिद्धान्तपक्षेण ।

७५३-१ **यथा हीति** । नित्यत्वेपि कालविशेषापेक्षावत्सर्वगतत्वेपि देशविशेषापेक्षा युक्तेति भावः ( श्रु. ) ।

—८ **निषादस्थपतीति** । निषादस्थपतिं याजयेदिति वचने यदि निषादानां स्थपतिरिति तत्पुरुषसमासोङ्गीक्रियते तदा तस्य समासस्य व्यधिकरणत्वेन पदार्थद्वयबोधकत्वाद्गौरवं स्यादतो लाघवादेकपदार्थबोधकः समानाधिकरणः कर्मधारयसमासोङ्गीकृतः । अयमेव निषादस्थपतिन्यायः ।

—१० **अदितिः पाशानिति** । यथात्रैकस्मिन्नेव पाशे बहुत्वारोपाद्बहुवचनोपपत्तिस्तद्वत् ।

—१२ **नात्यन्तायेति** । अत्यन्तायेत्यस्यात्यन्तमित्यर्थः । परस्य ब्रह्मणो लोका अत्यन्तं न सन्तीति न किं तु सन्त्येवेत्यर्थः ॥ ११ ॥

—१६ **समुत्थायेति** । अत्रोत्थायोपसंपत्तिवचनेन देवयानमार्गेण ब्रह्मप्राप्तिः सिध्यति ( श्रु. ) ॥ १२ ॥

७५४-२ **परस्मिन्नेवेति** । प्रजापतेरित्यत्र प्रजापतिशब्दः परब्रह्मार्थक इति भावः ।

—३ **यशोहमिति** । यशःशब्देन लक्षणयात्मोच्यते । आत्मनो यशःसाधनत्वात् । अहंशब्दश्च स्वान्तर्यामिपरमात्मपरः । ब्राह्मणानामात्मास्मीत्यर्थः ।

—८ **अकृतत्वश्रवणादिति** । ब्रह्मदेवस्य यो लोकस्तस्य कृतकत्वं तल्लोकस्थस्य सांसारिकत्वेन सर्वबन्धविनिर्मोकासंभवश्च स्पष्ट एव ॥ १३ ॥

—१७ **न चेति** । न हीत्यर्थः । यतः परब्रह्मोपासकान्तर्भूतानपि प्रतीकालम्बनान्न नयत्यतः परमेवोपासीनानिति नियमो न संभवतीत्यर्थः ।

—१८ **प्रकृतिवियुक्तमिति** । भूतसूक्ष्मव्यतिरिक्तमित्यर्थः ।

—१९ **ये त्विति** । एते प्रागुक्ता ( विवृति-पृ. ३२९ प. १४ ) द्विविधाः प्रतीकालम्बनाः ।

७५५-६ **प्रकुप्येयुरिति** । अस्यां श्रुतौ परज्योतिःप्राप्तिरुक्ता । न हि हिरण्यगर्भोपासकस्य परब्रह्मप्राप्तिः संभवति ।

—७ **तद्य इति** । अत्र य इत्यनेन पञ्चाग्निविदः परामृश्यन्ते । ते च पञ्चाग्निविदः प्रागुक्त-( विवृति-पृ. ३२९ प. ९ ) रीत्या जीवोपासकाः ॥ १४ ॥

७५६-२ यावन्नाम्नो गतमिति । देवादिनाम्नो गोचर इत्यर्थः । ब्रह्मणा सह ते सर्वे इत्यादिवचनं नार्चिरादिगतपुरुषविषयम् । अपि तु चतुर्मुखलोकस्थयोगिविषयम् । ते च योगिनः पुण्यकर्मविशेषेण हिरण्यगर्भलोकं प्राप्तास्तत्रैव तदुपर्यपि ( ब्रह्मसू. १।३।२५ ) इति न्यायेन निष्पन्नविद्याः । ते ब्रह्मलोक इति श्रुतेस्तु ब्रह्मैव लोको ब्रह्मलोकस्तत्र वर्तमाना ब्रह्मनिष्ठाः परान्तकालेन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरमित्युक्तचरमदेहावसानसमये परामृतात्प्रसन्नाद्ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थः ( श्रु. ) ॥ १५ ॥ ( ५ )

॥ अथ चतुर्थोध्यायस्य चतुर्थः पादः प्रारभ्यते ॥

७५७-१० साध्येन रूपेणेति । अपूर्वोत्पन्नेनाकारेणेत्यर्थः ।

७५८-६ कस्येति । अनुकूलशब्दो हि पुत्रशब्दादिवत्साकाङ्क्षार्थप्रतिपादकोमुकस्यानुकूल इति ।

—१० अनर्थकं स्यादिति । अभिनिष्पद्यत इत्यस्यापूर्वाकारेणोत्पद्यत इत्यर्थप्रतिपादकत्वात् । अपूर्वाकारस्य च साध्यत्वादेव श्रुतौ यत्स्वेनेति स्वशब्दः प्रयुक्तः स नामाध्यार्थकः किं त्वसाधारणार्थक इत्याशयः ।

—१५ यं दशाविशेषमिति । ज्ञानविकासरूपमित्यर्थः ।

—१८ स्वकीयरूपत्वसिद्धेरिति । न चासाधारणार्थकं स्वपदमावश्यकमिति वाच्यम् । परं ज्योतिरुपसंपद्याभिनिष्पद्यत इत्युक्त्यैवासाधारणत्वस्यापि गम्यमानत्वात् । न ह्यन्यस्य रूपेणान्यो निष्पद्यत इति बोध्यम् ॥ १ ॥

७५९-१५ इत्यादिष्विति । आदिशब्देन विचार्य च पुनः पुनः इदमर्कं सुनिष्पन्नमित्यादिप्रयोगो विवक्षितः ( श्रु. ) ॥ २ ॥

—२० अयमात्मेति । जीवात्मेत्यर्थः ।

७६०-८ आविर्भवन्तीति । तथा च सुपुप्तावनाविर्भूतानां स्वाभाविकानां गुणानां मोक्ष आविर्भावान्मोक्षशास्त्रस्य पुरुषार्थावबोधित्वं सिद्धमिति बोध्यम् ।

—११ यथोदपानेति । उदकं पीयतेस्मिन्नित्युदपानं सरः । तत्रस्थमाकाशं सरःकरणात्पूर्वं तत्र विद्यमानमेव सरःकरणेन व्यक्तं भवतीत्यर्थः ॥ ३ ॥ ( १ )

—२० अविभागेनेति । मुक्तोहं ब्रह्मास्मीत्यविभागेन ब्रह्मानुभवति । स्वात्मनोपि ब्रह्मण आत्मतया तथाविधस्वरूपस्योपासने दृष्टत्वादिति सूत्रार्थः ।

७६१-१-१० तत्प्रकारतयेति । यथा पाञ्चभौतिकं शरीरं जीवात्मनः प्रकारभूतं तथैव जीवात्मा परमात्मनः प्रकारभूत इति भावः । स्थाहित्येति ।

सोऽश्नुत इति श्रुतौ सह ब्रह्मणेति साहित्यमवगम्यते । सहशब्दो भोक्तृसाहित्यं दर्शयतीति पूर्वपक्ष्यभिप्रायः । यदा पश्य इति श्रुतौ साम्यमुपैतीति साम्यमव-गम्यते । इदं ज्ञानमिति स्मृतौ च साधर्म्यमागता इति साधर्म्यमवगम्यते । साधर्म्यं च साम्यमेव नार्थान्तरम् । श्रुत्यनुरोधात्साम्यसाधर्म्येतच्छब्दद्वय-योक्तिः । अविभागेनानुभवे तु साहित्यं साम्यं च न संगच्छते । सोऽश्नुत इति श्रुतेः सिद्धान्तिकृतोऽर्थः प्रागुक्तः ( विवृति–पृ. १३२ प. ८–१३ ) ।

७६१–२० परमात्मात्मकमिति । परमात्मैवान्तर्यामितयाऽऽत्मा यस्य तत्प-रमात्मात्मकमित्यर्थः ।

७६२–७ न विरुध्यत इति । यद्यविभागः स्वरूपैक्यमेवेति स्वीक्रियते तदा संकल्पादेवेत्यधिकरणविरोधः । तत्र हि स मुक्तो यदि प्राचीनानेकजन्मसं-बन्धिपितृवर्गं दिदृक्षेत तदा स पितृवर्ग एतस्य संकल्पमात्रसमुत्थितो भव-तीत्युच्यते । ब्रह्ममुक्तयोः स्वरूपैक्ये त्वेतद्विरोधः स्पष्ट एव । किं च स्वरू-पैक्येऽधिकं तु भेदनिर्देशादित्यादिसूत्रविरोधः । तत्र हि भेद एव सिध्यति नाभेद इति बोध्यम् ॥ ४ ॥ ( २ )

—१३–४ अपहतपाप्मत्वादिकमिति । एवकारेण विज्ञानव्यावृत्तिः । विज्ञानमात्रमेवेति । एवकारेणापहतपाप्मत्वादिव्यावृत्तिः । मात्रशब्दे-नांशतोऽपि जडत्वसंबन्धो नास्तीति सूचितम् ।

—१६ ब्राह्मेणेति । ब्रह्मण इदं ब्राह्मम् । ब्रह्मसंबन्धीत्यर्थः । तस्येदम् ( पा. सू. ४।३।१२० ) इति पाणिनिसूत्रेणाण्प्रत्ययः ।

७६३–४ न संभवतीति । विज्ञानमात्रस्वरूपत्वाङ्गीकारे ज्ञानमात्रस्वरूपस्य ज्ञातृत्वाभावेन पूर्वोक्तजक्षणादिव्यवहारासंभव एव स्यादिति भावः ॥ ५ ॥

—१३ अपहतपाप्मत्यादय इति । एतैः शब्दैर्न ते ते धर्माः प्रतिपा-द्यन्ते । किं तु तद्विरोधिभूता धर्मा निषिध्यन्ते । अपहतपाप्मेत्यनेन परब्रह्मणि पातकं निराक्रियते । विजर इत्यनेन जरारूपविकारो निराक्रियते । विमृत्युरि-त्यनेन मरणरूपो विकारो निराक्रियते । विशोक इत्यनेन दुःखं निराक्रियते । अविजिघत्स इत्यनेन बुभुक्षा निराक्रियते । अपिपास इत्यनेन तृषा निराक्रियते । सत्योऽकादाचित्कः कामः सुखमस्येति सत्यकामः । अनेनापि न नित्यसुखं प्रति-पाद्यते । किं तु कादाचित्कं सुखं निराक्रियते । सत्यसंकल्प इत्यनेनोपेक्षा निराक्रियते । उपेक्षावतः सत्यसंकल्पत्वासंभवादित्यौडुलोमेरभिप्रायः ॥ ६ ॥

७६४–२ औपनिषदादिति । यथा श्रुतिप्रमाणेन ब्रह्मणो विज्ञानघनत्व-मौडुलोम्यभिमतं स्वीक्रियते तथा श्रुतिप्रमाणेनैव पूर्वं जैमिन्यभिमता अप-हतपाप्मत्वादयो गुणाः स्वीक्रियन्त इति भावः ।

७६४-५ वस्तुविरोधादिति । वस्तुविरोधोऽत्र ज्ञानस्वरूपस्य ब्रह्मणो गुणाधारत्वासंभवः ।

—१३ जडव्यावृत्त इति । परमात्मनि स्वल्पोऽपि भागो जडो नास्तीत्येवकारतात्पर्यम् । तथा चात्रायोगव्यवच्छेदार्थक एवकारः । अयोगः संबन्धाभावस्तस्य व्यवच्छेदो व्यावृत्तिः । परमात्मनि क्वचिदप्यंशे विज्ञानसंबन्धाभावस्यात्र व्यावृत्तेः प्रतीयमानत्वात् । अत एव सत्यकाम इति श्रुतिः स्वरसतः संगच्छते । एवकारस्यान्ययोगव्यवच्छेदार्थकत्वे तु विज्ञानादन्ये ये सत्यकामत्वादयो गुणास्तद्व्यावृत्तौ प्रतीयमानायां सत्यकामश्रुतिविरोधः । यद्यप्यनुपदमेवोक्तरीत्या यथा कथंचित्सत्यकामश्रुत्युपपत्तिर्भवति तथापि न स श्रुतेः स्वारसिकोऽर्थ इति बोध्यम् ।

—१७ न त्वेवमिति । न ह्येवमित्यर्थः ॥ ७ ॥ ( ३ )

७६५-१० प्रयत्नान्तरेति । भृत्यप्रेषणादीत्यर्थः ।

—१४ स यदीति । स मुक्तो यदि प्राचीनानेकजन्मसंबन्धिपितृवर्गं दिदृक्षेत तदा स पितृवर्ग एतस्य संकल्पमात्रेणैव प्राप्तो भवतीति श्रुत्यर्थः ।

—१६ न च प्रयत्नेति । यथा सत्यकामश्रुत्यनुरोधेन विज्ञानघन एवेत्येवकारस्यायोगव्यवच्छेदार्थकत्वमनुपदमेवोक्तं तथा यदि प्रयत्नान्तरबोधिकान्या श्रुतिः स्यात्तर्हि तदनुरोधेन संकल्पादेवेत्येवकारस्यायोगव्यवच्छेदार्थकत्वं स्वीक्रियेत । अयोगः संकल्पसंबन्धाभावस्तस्य व्यवच्छेदो व्यावृत्तिः । संकल्पावश्यकत्वमिति यावत् । श्रुत्यन्तरविरोधाभावात्तु संकल्पादेवेत्येवकारोऽन्ययोगव्यवच्छेदार्थक एवेति संकल्पादन्ये ये प्रयत्नास्तत्संबन्धव्यावृत्तिः सिध्यतीति बोध्यम् ॥ ८ ॥

७६६-१ अनन्याधिपतिश्चेति । परमात्मव्यतिरिक्तोऽधिपतिर्मुक्तस्य नास्तीत्यर्थः ॥ ९ ॥ ( ४ )

—९ विशये शरीरेन्द्रियाणामिति । विशयः संशयः । अस्मिन्नेवाधिकरणे तन्वभावे ( ४।४।१३ ) इति सूत्रेऽभावस्य प्रतियोगित्वेन तनोर्निर्देशादत्राप्यभावे तनोरेव प्रतियोगित्वेनान्वयो लभ्यत इत्याशयेन शरीरशब्दोक्तिः । शरीरभावभाविनामिन्द्रियाणां च शरीराभावेऽभावादिन्द्रियपदोक्तिरिति बोध्यम् ॥ १० ॥

७६७-२ त्रिधाभावादय इति । मुक्तस्यैकस्यैव जीवस्य शरीरद्वारकं त्रिविधत्वादि । उपाधिभूतशरीरगतं त्रित्वाद्युपधेये जीवात्मन्यारोप्यत इति भावः ।

७६७–३ **तदेव हीति**। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतौ मोक्षावस्थायां शरीरस्य यो निषेधः प्रतिपाद्यते स शरीरस्य प्रियाप्रिय-हेतुत्वात्प्रतिपाद्यते। तथा च प्रियाप्रियहेतुभूतं यच्छरीरं तदेव निषिध्यत इति कर्ममूलकस्यैव स निषेधः। कर्ममूलकस्यैव शरीरस्य प्रियाप्रियहेतुत्वात्। एवं च मुक्तस्यैच्छिकं शरीरमस्त्येवेत्याशयः॥ ११॥

—९ **उभयीति**। उभयी द्विप्रकारा। सशरीरत्वप्रतिपादिकाऽशरीरत्वप्र-तिपादिका च।

**यथा द्वादशाहमिति**। चोदना विधिः। यत्रासीरन्नित्यादिप्रकारे-णास्धातुनोपेयुरित्यादिप्रकारेणोपोपसर्गपूर्वकेणधातुना वा विधिर्निर्दिश्यते तत्सत्रमिति सत्रस्य लक्षणम्। सत्रे च बहुयजमानसंकल्पः। यत्र च याजये-दित्यादिप्रकारेण यज्धातुना विधिर्निर्दिश्यते तदहीनमित्यहीनस्य लक्षणम्। अहर्गणेन साध्यमहीनम्। अहीने चैकस्य संकल्पः। एवं च द्वादशाहस्य विधि-द्वैविध्येन सत्रत्वेऽहीनत्वे च सिद्धे प्रयोगकाले कर्ता यथा संकल्पयेत्तथा तद-नुरोधेन द्वादशाहस्य क्वचित्सत्रत्वं क्वचिदहीनत्वं चेति बोध्यम्॥ १२॥

—१५ **तन्वभाव इति**। संध्यशब्दः स्वप्नवाची॥ १३॥

७६८–११ **स्वयमेवेति**। परमपुरुष एवेत्यर्थः॥ १४॥

—१४ **अनेकशरीरेष्विति**। स एकधा भवति त्रिधा भवतीत्यत्र प्रागुक्त-(श्रीभाष्य–पृ. ७६७ प. २) रीत्यैकेनैव मुक्तेन स्वीकृतेष्वनेकशरीरेष्वित्यर्थः।

—१९ **हृदयाद्येकप्रदेशवर्तिनोऽपीति**। हृदयाद्येकदेशस्थितस्य बद्धजी-वस्यापीत्यर्थः।

७६९–१ **इयान्विशेष इति**। बद्धमुक्तयोर्मध्य इति शेषः।

—३ **इदमिति ग्रहणानुगुणेति**। यथा मुक्तस्यैकस्मिन्स्वशरीर इदं घटा-दीति विषयप्रकाशनशक्तिरस्ति तथैवानेकेषु शरीरेष्विति भावः॥ १५॥

१६—**प्राज्ञप्राप्तिरिति**। प्राज्ञः परमात्मा। सता सोम्य तदा संपन्नो भवतीति श्रुतौ सुषुप्त्यवस्थायां जीवस्य परमात्मप्राप्तिः प्रतिपाद्यते। तेजः परस्यां देवतायामिति श्रुतौ मरणावस्थायां जीवस्य परमात्मप्राप्तिः प्रतिपाद्यते।

—२० **विनाशमिति**। अदर्शनमित्यर्थः॥ १६॥ (५)

७७०–१० **जगदिति**। सूत्रार्थः प्रागुक्तः (विवृति पृ. ७२ प. २२)।

—११ **किं मुक्तस्येति**। किं मुक्तस्य भोगः परब्रह्मानुभवरूप एवाथ वा जगत्सृष्ट्यादिलीलारूपोऽपीति संशय इति भावः।

७७१–१ **निर्व्याजब्रह्मानुभवरूपमिति**। यथावस्थितब्रह्मानुभवरूपमि-

त्यर्थः । निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभवरूपमिति यावत् ।

७७१–१० न व्यभवदिति । एकत्वादेव ब्रह्म न व्यभवद्विवृद्धं नाभवत् । तद्ब्रह्म श्रेयोरूपं श्रेष्ठं क्षत्रं क्षत्रियाख्यं शरीरमसृजत् । किं तच्छरीरमित्याह यान्येतानीति । देवत्रेत्यस्य देवेष्वित्यर्थः । ब्रह्म बृहस्पतिः क्षत्रमिन्द्र इति श्रुतेरिन्द्रादीनां क्षत्रियत्वम् । देवेष्वपि तपोविशेषेण वर्णविशेषसंभवात्तदभिमानित्वाद्वा क्षत्रियत्वं द्रष्टव्यम् ।

—१७ कल्येति । कल्याशब्देनात्र मनसो ग्रहणम् । मनसो विषयादिवस्तुप्रकाशकत्वात् । कलधातुः प्रकाशार्थकः ।

—२० असंनिहितत्वाच्चेति । सृष्ट्यादिप्रतिपादकवाक्येषु मुक्तस्याप्रकृतत्वाच्चेत्यर्थः । ननु मुक्तस्य ब्रह्मानुभवरूप एव भोगश्चेत्तस्य निरञ्जनः परमं साम्यमुपैतीति श्रुतीरितं परमसाम्यं न संभवतीति चेन्न । अनवधिकातिशयानन्दब्रह्मानुभव एव साम्यसद्भावात् । ब्रह्म हि स्वस्य परस्य चानुभूयमानमविशेषेणानवधिकातिशयानन्दाय भवति । आनन्दस्वरूपत्वाविशेषात् । सत्यसंकल्पत्ववचनं चानवधिकातिशयानन्दब्रह्मानुभवविषयकमेव । ब्रह्मनिष्ठस्य ब्रह्मैव लब्धानन्दसद्भावादिति बोध्यम् ॥ १७ ॥

७७२–१२ उच्यत इति । हिरण्यगर्भादिलोकस्थभोगेषु मुक्तस्य यदीच्छा वर्तते तर्हि तत्र यथाकामं परमपुरुषानुग्रहेण वर्तमानस्तत्स्थान्भोगान्भुङ्क्त इति तया श्रुत्योच्यत इत्याशयः ॥ १८ ॥

७७३–१३ न मुक्तस्येति । मुक्तस्य सविभूतिकब्रह्मानुभवितृत्वेन स्थितिवचनात्सर्वत्र कामचारादयो भवन्ति न नियन्तृत्वादिकमित्यर्थः (श्रु.) ॥ १९ ॥

—१५ दर्शयत इति । प्रत्यक्षं श्रुतिः । अनुमानं स्मृतिः ।

७७४–१५–१६ ब्रह्मणो हीति । ब्रह्म जीवः । अमृतं मोक्षः । शाश्वतधर्मो ज्ञानम् । सुखमानन्दः (श्रु.) ।

—१९ तस्य तथाविधत्वमिति । गुणगणस्य स्वाभाविकत्वं जीवात्मनो नित्यस्थितिश्च परमपुरुषाधीना । यतश्चैतस्य जीवस्य नित्यता परमपुरुषस्य नित्यमिष्टातो हेतोर्जीवो नित्यतया वर्तते । तथा च यद्यपीश्वरस्येव जीवस्यापि नित्यत्वं सत्यसंकल्पत्वादिगुणविशिष्टत्वं चास्तीति जीवेनापि जगत्सृष्ट्यादि कर्तव्यं तथापि जीवे नित्यत्वस्य सत्यसंकल्पत्वादिगुणविशिष्टत्वस्य चेश्वराधीनत्वान्न क्रियत इति न विरोधः । यतः परमेश्वरो जगत्सृष्ट्यादीनां स्वासाधारणत्वरक्षणाय जीवगतसत्यसंकल्पत्वरक्षणाय च जगत्सृष्ट्यादिविषयकं संकल्पमेव जीवेन न कारयतीति बोध्यम् ।

७७४–२२ **एवमेवेति** । परमपुरुषभोगोपकरणं लीलोपकरणं च नित्यमिति शास्त्रादवगम्यते तत्परमपुरुषस्य नित्यमिष्टमेवेति तस्य भोगोपकरणस्य लीलोपकरणस्य च नित्यं स्थितिर्भवतीति शास्त्रादवगम्यत इत्यर्थः ॥ २० ॥

७७५–६ **सोश्नुत इति** । श्रुत्यर्थः प्रागुक्तः ( विवृति–पृ. १३२ प. ८–१३ ) ॥ २१ ॥

—११ **तस्य स्वतन्त्रत्वेनेति** । परमात्मा स्वतन्त्र इति मुक्तस्य पुनरावृत्तिमपि कदाचित्संकल्पयेदिति शङ्काशयः ।

—१६ **निरस्तेति** । परमेश्वरेण समः परमेश्वरादभ्यधिकश्च कश्चित्स्यादित्येवमाकारा याः समस्ताः सकलाः संभावनाः कल्पनास्ता निरस्ता यस्मिन्नेतादृश इत्यर्थः ।

७७६–९–११ **न चेति** । न हीत्यर्थः । **अन्यापेक्षेति** । अन्यस्य ब्रह्मणोन्यस्य पुनरावृत्तिरूपसंसारस्यापेक्षेछान्यापेक्षा । तस्मै पुनरावृत्तिरूपसंसारायायं तदर्थो य आरम्भः कर्मारम्भः स तदर्थारम्भः । आदिशब्देन वासनायाः संग्रहः । अयं भावः–मुक्तस्य या पुनरावृत्तिराशङ्क्यते सा किं तदिच्छया कर्मणा वा कर्मवासनया वा । नाद्यः । इच्छाया असंभवात् । न हि ब्रह्मानुभवन्मुक्तो ब्रह्मणः सकाशादन्यो यः पुनरावृत्तिरूपः संसारस्तमपेक्षते । न द्वितीयः । कर्मणोसंभवात् । न हि मुक्तेन पुनरावृत्त्यर्थं कर्मारम्भः क्रियते । नापि तृतीयः । मुक्तेन पूर्वकृतस्य कर्मणः सवासनस्य नष्टत्वाद्वासनाया अप्यसंभवादिति ।

—१४ **प्रियो हीति** । ज्ञानिनोहं यथा प्रियस्तथा मया सर्वज्ञेन सर्वशक्तिनाप्यभिधातुं न शक्यते । प्रियत्वस्येयत्तारहितत्वात् । यथा ज्ञानिनामग्रेसरस्य प्रह्लादस्य स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थित इति । सोपि तथैव मम प्रियः । सर्वे एवैते मामेवोपासत इत्युदारा वदान्या ये मत्तो यत्किंचिदपि गृह्णन्ति ते हि मम सर्वस्वदायिनः । ज्ञानी त्वात्मैव मे मतम् । तदायत्तधारणोहमिति मन्य इत्यर्थः ( गी. भा. ) ॥ २२ ॥ ( ६ )

इति श्रीमदभ्यंकरोपाह्वमहादेवभट्टात्मजवासुदेवशास्त्रिविरचितायां श्रीभाष्यविवृतौ चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ श्रीः ॥

13234

# BOMBAY SANSKRIT AND PRAKRIT SERIES

*Edited under the Superintendence of Professor S. K. Belvalkar, M. A., Ph. D., and Professor A. B. Dhruva, M. A., LL. B.*

**[ For Copies Apply to Government Book Depôt, Poona. ]**

| | | RS. | AS. |
|---|---|---|---|
| No. I | Pañchatantra, Book IV and V, edited with Notes, by Dr. G. Buhler ... ... | 0 | 4 |
| No. II | Nâgojibhaṭṭa's Paribhâshendus'ekhara, Part I, Sanskrit Text and Various Readings, edited by Dr. F. Kielhorn ( *out of Stock* ) ... ... | | |
| No. III | Panchatantra, Books II and III, edited with Notes, by Dr. G. Buhler.... ... ... ... ... | 0 | 4 |
| No. IV | Pañchatantra, Book I, edited with Notes, by Dr. F. Kielhorn ... ... ... ... ... | 0 | 6 |
| No. V | Raghuvams'a of Kalidâsa, with the Commentary of Mallinatha, Part I ( Cantos I – VI ), edited with Notes, by Mr. S. P. Pandit, M. A. ... ... ... ... | 1 | 8 |
| No. VI | Malavikâgnimitra of Kalidasa edited with Notes, by Mr. S. P. Pandit, M. A., 2nd edition (*under revision*) | 2 | 2 |
| No. VII | Nagojibhaṭṭa's Paribhâshendus'ekhara, Part IIA, ( Paribhashâs 1–37 ), Translation and Notes, by Dr. F. Kielhorn ... ... ... ... ... ... ... | 0 | 8 |
| No. VIII | Raghuvams'a of Kâlidâsa, with the Commentary of Mallinâtha, Part II ( Cantos VII – XIII ), edited with Notes, by Mr. S. P. Pandit, M. A. (*out of Stock*)... | ... | |
| No. IX | Nâgojibhaṭṭa's Paribhâshendus'ekhara, Part II B, ( Paribhâshâs 38–69 ), Translation and Notes, by Dr. F. Kielhorn ... ... ... ... ... ... ... | 0 | 8 |
| No. X | Das'akumâracharita of Daṇḍin, Part I, edited with Notes, by Dr. G. Buhler (*under revision*) ... ... | 0 | 8 |
| No. XI | Nitis'ataka and Vairâgyas'ataka of Bhartṛihari, edited with Notes, by Justice K. T. Telang, M. A. (*copyright restored to the editor* ) ... ... ... ... | .. | |

| | RS. | AS. |
|---|---|---|
| No. XII Nâgojibhatṭas Paribhâshendus'ekhara, Part II C, (Paribhâshâs 70–122), Translation and notes, by Dr. F. Kielhorn ... ... ... ... ... ... ... | 0 | 8 |
| No. XIII Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha, Part III (Cantos XIV–XIX) edited, with Notes, by Mr. S. P. Pandit, M. A. (*out of Stock*) | ... | |
| No. XIV Vikramâṅkadeva-charita of Bilhaṇa, by Dr. G. Bühler (*copyright restored to the editor*) ... ... | ... | |
| No. XV Mâlatî-Mâdhava, with Commentary, Critical Notes, etc., by Dr. R. G. Bhandarkar, *Second edition* ... ... | 4 | 4 |
| No. XVI Vikramorvas'îya of Kâlidâsa, with Notes, by Mr. S. P. Pandit, M. A., *Third edition* ... ... ... | 2 | 0 |
| No. XVII Hemachandra's Des'î-nâmamâlâ, Part I, by Prof. Pischel and Dr. Bühler, (*copies not available*) | ... | |
| No. XVIII* Vyâkarana-Mahâbhâshya of Patañjali, Vol. I, Part I, by Dr. F. Kielhorn, *Second edition* ... ... | 1 | 8 |
| No. XIX* Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. I, Part II, by Dr. F. Kielhorn, *Second edition* ... ... | 1 | 8 |
| No. XX* Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. I, Part III, by Dr. F. Kielhorn, *Second edition* ... .. | 1 | 8 |
| No. XXI† Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. II, Part I, by Dr. F. Kielhorn, *Second edition* ... ... | 3 | 0 |
| No. XXII† Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. II, Part II, by Dr. F. Kielhorn, *Second edition* ... ... | 3 | 0 |
| No. XXIII Vâsishṭha-Dharmas'âstra, edited with Notes, by Dr. A. A. Fuhrer (*under revision*) ... ... ... | 0 | 8 |
| No. XXIV Kâdambarî by Bâṇa and his Son, Vol. I, Text; Vol. II, Notes and Introduction, by Dr. P. Peterson, *both together* ... ... ... ... ... ... | 6 | 8 |
| No. XXV Kirti-kaumudî, edited with Notes, by Professor A. V. Kathawate (*copy-right restored to the editor*) ... | ... | |
| No. XXVI† Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. II, Part III, by Dr. F. Kielhorn, *Second edition* ... ... | 3 | 0 |
| No. XXVII Mudrârâkshasa of Vis'âkhadatta, with the Commentary of Dhuṇḍirâja, edited, with Notes, by Justice K. T. Telang, M. A. (*copy-right restored to the editor*) | ... | |

* Nos. 18, 19 and 20 are bound together in one volume, the whole volume being priced Rs. 4-8.

† Nos. 21, 22 and 26 are bound together in one volume, the whole volume being priced Rs. 9.

| | RS. | AS. |
|---|---|---|
| No. XXVIII* Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. III, Part I, by Dr. F. Kielhorn, *Second edition* ... | 3 | 0 |
| No. XXIX* Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. III, Part II, by Dr. F. Kielhorn, *Second edition* ... | 3 | 0 |
| No. XXX* Vyâkaraṇa-Mahâbhâshya of Patañjali, Vol. III, Part III, by Dr. F. Kielhorn, *Second edition*... | 3 | 0 |
| No. XXXI Subhâshitâvali of Vallabhadeva, edited by Dr. P. Peterson and Pandit Durgaprasad ... ... | 2 | 8 |
| No. XXXII Tarka kaumudî of Laugâkshi Bhâskara, edited by Mr. N. M. Dvivedi (*copy-right restored to the author*) | ... | |
| No. XXXIII Hitopades'a of Nârâyaṇa, edited by Dr. P. Peterson ... ... ... ... ... ... ... | 0 | 14 |
| No. XXXIV Gauḍavaho of Vâkpati, edited by Mr. S. P. Pandit, M. A. (*under revision*) ... ... ... | ... | |
| No. XXXV Mahânârâyaṇa Upanishad, edited by Col. G. A. Jacob ... ... ... . ... ... ... | 0 | 7 |
| No. XXXVI Selections of Hymns from the Rigveda (First Series) By Dr. P. Peterson (*under revision*) | 4 | 0 |
| No. XXXVII S'ârṅgadharapaddhati, Vol. I, edited by Dr. P. Peterson ... ... ... ... ... ... | 3 | 0 |
| No. XXXVIII Naishkarmyasiddhi, by Col. G. A. Jacob | 2 | 8 |
| No. XXXIX Concordance to the principal Upanishads and the Bhagavadgitâ, by Col. G. A. Jacob ... ... | 4 | 0 |
| No. XL Eleven Âtharvaṇa Upanishads, with Dîpikâs, by Col. G. A. Jacob, *Second edition* ... ... ... | 1 | 8 |
| No. XLI Handbook to the study of Rigveda, Part I, Comprising Sâyaṇa's Introduction to his Rigvedabhashya, with English Translation, by Dr. P. Peterson ... | 1 | 8 |
| No. XLII Das'akumâracharita of Daṇḍin, Part II, by Dr. P. Peterson (*under revision*) ... ... ... ... | 0 | 8 |
| No. XLIII Handbook to the Study of Rigveda, Part II, Comprising the Seventh Maṇḍala of Rigveda with the Bhâshya of Sâyaṇa ... . . ... ... ... | 2 | 8 |
| No. XLIV Âpastambha Dharmasûtra, with the Various Readings of the Hiraṇyakes'i Dharmasûtra, Part I, by Dr. G. Bühler ... ... ... ... ... ... | 1 | 6 |

* Nos. 28, 29 and 30 are bound together in one volume, the whole volume being priced Rs. 9.

| | | RS. | AS. |
|---|---|---|---|
| No. XLV | Râjataraṅgiṇî of Kalhaṇa Part I, ( Cantos I to VII ) by Pandit Durgaprasada ... ... ... ... | 1 | 8 |
| No. XLVI | Patañjali's Yogasûtra, with the Scholia of Vyâsa, and the Commentary of Vâchaspati, by Mahâmahopâdhyâya Rajarama Shastri Bodas ( *under revision* ) | 1 | 10 |
| No. XLVII | Parâs'ara's Dharma-saṁhitâ, with the Commentary of Sâyaṇa-Mâdhavâchârya, Vol. I, Part I, by Mr. Vaman Shastri Islampurkar ... ... ... | 2 | 2 |
| No. XLVIII | Parâs'ara Dharma-Saṁhitâ, with the Commentary of Sâyaṇa-Mâdhavâchârya Vol. I, Part II, by Mr. Vaman Shastri Islampurkar ... ... ... | 2 | 0 |
| No. XLIX | Nyâyakos'a, by Mahâmahopâdhyâya Bhimacharya Zalkikar, *Second edition* ... ... ... ... | 6 | 0 |
| No. L | Âpastambha Dharmasûtra, Part II, by Dr. Bühler | 1 | 2 |
| No. LI | Râjataraṅgiṇî of Kalhaṇa, Vol. II, ( Canto VIII ) by Pandit Durgaprasad ... ... ... ... ... | 1 | 4 |
| No. LII | Mṛichchhakaṭika, Vol. I, Text with two Commentaries and Various Readings, by Mr. N. B. Godbole ... | 3 | 8 |
| No. LIII | Navasahasâṅka-charita, Part I, by Mr. Vaman Shastri Islampurkar ... ... ... ... ... | 1 | 10 |
| No. LIV | Râjataraṅgiṇî of Kalhaṇa, Vol. III, containing the suppliments to the work by Dr. P. Peterson ... | 1 | 2 |
| No. LV | Tarkasaṁgraha of Annambhaṭṭa, by Mr. Y. V. Athalye ( *under revision* ) ... ... ... ... | ... | |
| No. LVI | Bhaṭṭikâvya, edited with the Commentary of Mallinâtha, Vol. I, by Rao Bahadur K. P. Trivedi ... | 9 | 0 |
| No. LVII | Bhaṭṭikâvya, edited with the Commentary of Mallinâtha, Vol. II, by Rao Bahadur K. P. Trivedi ... | 6 | 0 |
| No. LVIII | Selections of Hymns from the Ṛigveda (Second Series ), by Dr. P. Peterson ... ... ... ... | 4 | 0 |
| No. LIX | Parâs'ara Dharma-Saṁhitâ, with the Commentary of Sâyaṇa-Mâdhavâchârya, Vol. II, Part I, by Mr. Vaman Shastri Islampurkar ... ... ... ... | 4 | 0 |
| No. LX | Kumârapâla-charita of Hemachandra, (in Prâkṛita) by Mr. S. P. Pandit, M. A. ... ... ... ... | 8 | 8 |
| No. LXI | Rekhâgaṇita, Vol. I, by Messrs. H. H. Dhruva and K. P. Trivedi... ... ... ... ... ... | 12 | 0 |

| | RS. | AS. |
|---|---|---|
| No. LXII Rekhâganita, Vol. II, by Messrs. H. H. Dhruva and K. P. Trivedi... ... ... ... ... ... | 9 | 0 |
| No. LXIII Ekâvali of Vidyâdhara, with Mallinâtha's Commentary, edited by Rao Bahadur K. P. Trivedi. ... | 11 | 0 |
| No. LXIV Parâs'ara Dharma-Samhitâ, with the Commentary of Sâyana-Mâdhavâchârya, Vol. II, Part II, by Mr. Vaman Shastri Islampurkar ... ... ... ... | 5 | 0 |
| No. LXV Pratâparudra-yas'obhûshana of Vidyânâtha, with Commentary, edited by Rao Bahadur K. P. Trivedi ... | 11 | 0 |
| No. LXVI Harsha-charita of Bâna, Part I, Text with Commentary, edited by Dr. A. A. Führer ... ... | 2 | 0 |
| No. LXVII Parâs'ara Dharma-Samhitâ, with the Commentary of Sâyana-Mâdhavâchârya, Vol. III, Part I, by Mr. Vaman Shastri Islampurkar ... ... ... ... | 4 | 0 |
| No. LXVIII S'rîbhâshya of Râmânuja, Vol. I, Text, edited by Mr. Vasudev Shastri Abhyankar ... ... ... | 11 | 0 |
| No. LXIX Dvyâs'raya-kâvya of Hemachandra, Vol. I, (Cantos I—X) by Prof. A. V. Kathawate ... ... | 9 | 0 |
| No. LXX Vaiyâkaranabhûshana of Kondabhatta, with two Commentaries and Notes, by Rao Bahadur K. P. Trivedi ... ... ... ... ... ... ... | 10 | 0 |
| No. LXXI Shadbhâshâchandrikâ of Lakshmîdhara, with Introduction, Notes etc., by Rao Bahadur K. P. Trivedi | 7 | 8 |
| No. LXXII S'rîbhâshya of Râmânuja, Vol II, Notes, by Mr. Vasudev Shastri Abhyankar... ... ... | 6 | 0 |

## WORKS OUT OF SERIES

| | | |
|---|---|---|
| Aitareya Brâhmana, Word-index to, compiled by Pandit Vishwanath Balkrishna Joshi ... ... ... ... | 4 | 0 |
| Amarakos'a with the Commentary of Mahes'vara, edited, with an Index, by Mr. Ramchandra Shastri Talekar ... | 0 | 13 |
| Atharvaveda Samhitâ, with the Commentary of Sâyanâchârya, edited, by Mr. S. P. Pandit, M.A., *four volumes at Rs. 10 each* ... ... ... ... ... | 40 | 0 |
| Kâvyaprakâs'a, edited by Vamanacharya Zalkikar with his own Commentary (*in the Press*) ... ... ... | 5 | 4 |
| Vendidad, *Complete in two Volumes* ... ... ... ... | 5 | 0 |

## THE SAME LIST ABRIDGED AND ARRANGED ALPHABETICALLY

| | RS. | AS. |
|---|---|---|
| Aitareya Brâhmaṇa, Word-index to, by Vishwanath Balkrishna Joshi ... ... ... ... ... ... | 1 | 0 |
| Amarakos'a with Mahes'vara's Commentary, by Ramchandra Shastri Talekar, ( out of Series ) ... ... ... | 0 | 13 |
| Âpastambha Dharmasûtra, Part I, by G. Buhler, ( No. 44 ) | 1 | 6 |
| Âpastambha Dharmasûtra, Part II, by G. Buhler. (No. 50) | 1 | 2 |
| Atharvaveda Saṁhitâ with Sâyaṇabhâshya, four volumes, by S. P. Pandit, ( out of Series ) ... ... ... ... | 40 | 0 |
| Atharvaṇa Upanishads, eleven, with Dîpikâs, by G. A. Jacob, ( No. 40 ) ... ... ... ... ... ... ... | 1 | 8 |
| Bhaṭṭikâvya with Mallinâtha's Commentary, Part I, by K. P. Trivedi, ( No. 56 ) ... ... ... ... ... | 9 | 0 |
| Bhaṭṭikâvya with Mallinâtha's Commentary, Part II, by K. P. Trivedi, ( No. 57 ) ... ... ... ... ... | 6 | 0 |
| Concordance to the principal Upanishads and the Bhagavadgîtâ, by G. A. Jacob, ( No. 39 ) ... ... ... ... | 4 | 0 |
| Das'akumâracharita, Part I, by G. Buhler, ( No. 10 ) ... | 0 | 8 |
| Das'akumâracharita, Part II, by P. Peterson ( No. 12 ) | 0 | 8 |
| Des'î-nâmamâlâ, Part I, by Pischel and Bühler ( No. 17 ) ... | ... | |
| Dvyâs'raya-kâvya, Part I, by A. V. Kathawate, (No. 69) ... | 9 | 0 |
| Ekâvalî, with Commentary, by K. P. Trivedi, ( No. 63 ) ... | 14 | 0 |
| Gauḍavaho, by S. P. Pandit ( No. 34 ) ... ... ... | 3 | 0 |
| Handbook to the Study of Ṛigveda, Part I, by P. Peterson ( No. 41 ) ... ... ... ... ... ... ... | 1 | 8 |
| Handbook to the Study of Ṛigveda, Part II, by P. Peterson ( No. 43 ) ... ... ... ... ... ... ... | 2 | 8 |
| Harsha-charita, with Commentary, by A. A. Fuhrer, (No. 66) | 2 | 0 |
| Hitopades'a, by P. Peterson, ( No. 33 ) ... ... ... | 0 | 14 |
| Hymns from Ṛigveda, Selection of, ( First Series ), by P. Peterson, ( No. 36 ) ... ... ... ... ... | 4 | 0 |
| Hymns from Ṛigveda, Selection of, ( Second Series ) by P. Peterson, ( No. 58 ) ... ... ... ... ... | 4 | 0 |
| Kâdambarî, Vol. I, Text and Vol. II, Notes and Introduction, by P. Peterson, ( No. 24 ) ... ... ... ... | 6 | 8 |

| | RS. | AS |
|---|---|---|
| Kâvyaprakâ'sa, with a Commentary, by Vamanacharya Zalkikar, ( out of Series )... ... ... ... ... | 5 | 4 |
| Kîrtikaumudî, by A. V. Kathawate, ( No. 25 ) ... ... | ... | |
| Kumârapâlacharita, by S. P. Pandit, ( No. 60 ) ... ... | 8 | 6 |
| Mrichchhakaṭika, Vol I, by N. B. Godbole ( No. 52 ) ... | 3 | 8 |
| Mâlavikâgnimitra, by S. P. Pandit, ( No. 6 ) ... ... ... | 2 | 2 |
| Mâlatî Mâdhava, by R. G. Bhandarkar, ( No. 15 ) ... ... | 4 | 4 |
| Mahâbhâshya, Vyâkaraṇa—, of Patañjali, Vol. I, Parts I, II, and III bound together ( Nos. 18, 19, 20 ). . ... | 4 | 8 |
| Mahâbhâshya, Vyâkaraṇa—, of Patañjali, Vol. II, Parts I, II, and III bound together ( Nos. 21, 22 and 26 )... ... | 9 | 0 |
| Mahâbhâshya, Vyâkaraṇa—, of Patañjali, Vol. III, Parts I. II, and III bound together ( Nos. 28, 29, 30 ). ... ... | 9 | 0 |
| Mudrârâkshasa, by K. T. Telang, ( No. 27 ) ... ... ... | ... | |
| Mahânârâyaṇa Upanishad, by G. A. Jacob ( No. 35 ) ... | 0 | 7 |
| Naishkarmyasiddhi by G. A. Jacob, ( No. 38 ) ... ... | 2 | 8 |
| Navasâhasâṅkacharita Part I, by Vaman Shastri Islampurkar, ( No. 53 ) .. ... ... ... ... ... ... | 1 | 10 |
| Nîti and Vairâgya S'atakas, by K. T. Telang, (No. 11) ... | ... | |
| Nyâyakos'a, by Bhimacharya Zalkikar, ( No. 49 ) ... ... | 6 | 0 |
| Pañchantra, Book I, by F. Kielhorn, ( No. 4 ) ... ... | 0 | 6 |
| Pañchatantra, Books II and III. by G. Bühler, ( No. 3 ) ... | 0 | 4 |
| Pañchatantra, Books IV and V by G. Bühler, ( No. 1 ) ... | 0 | 4 |
| Parâs'ara Dharmasaṁhitâ, Vol. I, Part I, by Vaman Shastri Islampurkar, ( No. 47 ) ... ... ... ... ... | 2 | 2 |
| Parâs'ara Dharmasaṁhitâ, Vol. I, Part II, by Vaman Shastri Islampurkar, ( No. 48) ... ... ... ... ... | 2 | 0 |
| Parâs'ara Dharmasaṁhitâ, Vol. II, Part I, by Vaman Shastri Islampurkar, ( No. 59 ) ... ... ... ... ... | 4 | 6 |
| Parâs'ara Dharmasaṁhitâ, Vol. II, Part II, by Vaman Shastri Islampurker, ( No. 64 ) ... ... ... ... ... | 5 | 0 |
| Parâs'ara Dharmasaṁhitâ, Vol. III, Part I, by Vaman Shastri Islampurkar, ( No. 67 ) ... ... ... ... ... | 4 | 0 |
| Paribhâshendus'ekhara, Part I, by F. Kielhorn, ( No. 2) ... | ... | |
| Paribhâshendus'ekhara, Part II A, by F. Kielhorn, ( No. 7 ) | 0 | 8 |

| | RS. | AS. |
|---|---|---|
| Paribhâshendus'ekhara, Part II B, by F. Kielhorn, (No. 9) | 0 | 8 |
| Paribhâshendus'ekhara, Part II C, by F. Kielhorn, (No. 12) | 0 | 8 |
| Pratâparudrayas'obhûshana of Vidyânâtha, with Commentary, by K. P. Trivedi, (No. 65) ... ... ... ... | 11 | 0 |
| Raghuvaṁs'a, Part I, by S. P. Pandit, (No. 5) ... ... | 1 | 8 |
| Raghuvaṁs'a, Part II, by S. P. Pandit, (No. 8) ... .. | 0 | 12 |
| Raghuvaṁs'a, Part III, by S. P. Pandit, (No. 13) ... | 0 | 8 |
| Râjataraṅgiṇî, Part I, by Pandit Durgaprasad, (No. 45) | 1 | 8 |
| Râjataraṅgiṇî, Part II, by Pandit Durgaprasad, (No. 51) | 1 | 4 |
| Râjataranginî, Part III, by P. Peterson, (No. 54) ... | 1 | 2 |
| Rekhâgaṇita, Part I, by H. H. Dhruva and K. P. Trivedi, (No. 61) ... ... ... ... ... ... ... | 12 | 0 |
| Rekhâgaṇita, Part II, by H. H. Dhruva and K. P. Trivedi, (No. 62) ... ... ... ... ... ... ... | 9 | 0 |
| S'ârṅgadharapaddhati, Part I, by P. Peterson (No. 37) | 3 | 0 |
| Shaḍbhâshâchandrikâ of Lakshmîdhara, by K. P. Trivedi, (No. 71) ... ... ... ... ... ... ... | 7 | 8 |
| S'rîbhâshya, Part I, by Vasudev Shastri Abhyankar, (No. 68) | 11 | 0 |
| S'rîbhâshya, Part II, by Vasudeo Shastri Abhyankar, (No. 72) | 6 | 0 |
| Subhâshitâvalî of Vallabhadeva, by P. Peterson, (No. 31) | 2 | 8 |
| Tarkakaumudî of Laugâkshi Bhâskara, by N. M. Dvivedi, (No. 32) ... ... ... ... ... ... ... | ... | |
| Tarkasaṁgraha of Aṇṇambhaṭṭa, by Y. V. Athalye, (No. 55) | ... | |
| Vâsishṭha Dharmas'âstra, by A. A. Fuhrer, (No. 23) ... | 0 | 8 |
| Vaiyâkaraṇabhûshaṇa of Koṇḍabhaṭṭa, with two Commentaries, by K. P. Trivedi, (No. 70) ... ... ... | 10 | 0 |
| Vendidad, in Two Volumes, (out of Series) ... ... | 5 | 0 |
| Vikramâṅkadeva-charita, by G. Bühler, (No. 14) ... ... | ... | |
| Vikramorvas'îya by S. P. Pandit, (No. 16) ... ... | 2 | 0 |
| Yogasûtras, of Patañjali, by Râjâram Shastri Bodas, (No. 46) | 1 | 10 |

## WORKS IN THE PRESS

Yâska's Nirukta, with the Commentary of Durgâchârya, Vol I, by Prof. H. M. Bhadkamkar, B. A.

Parâs'arasmṛiti, with the Commentary of Sâyaṇa-Mâdhavâchârya, Vol. III, part II by Pandit Vaman Shastri Islampurkar.

Vâsishṭha Dharmas'âstra by Dr. A. A. Führer (2nd edition).

Kâvyaprakâs'a, edited with his own Commentary by Vamanacharya Zalkikar (3rd edition).

## WORKS UNDER REVISION

No. VI Mâlvikâgnimitra of Kâlidâsa, by Mr. S. P. Pandit.

No. X and XLII Das akumâracharita of Dandin, by Dr. G. Buhler and Dr. P. Peterson.

No. XXIII Vâsishtha-Dharmas'âstra, by Dr. Fuhrer.

No. XXXIV Gaudavaho of Vâkpati, by S. P. Pandit.

No. XXXVI Hymns from Rigveda (First series) by Dr. P. Peterson.

No. XLVI Yogasûtras of Patañjali, by Rajaram Shastri Bodas.

No. LV Tarkasamgraha of Annambhatta, by Y. V. Athalye.

## WORKS IN PREPARATION

Dvyâs'raya Kâvya, Vol. II, by A. V. Kathawate.

Harshacharita Vol. II, Introduction and Notes, by Dr. Fuhrer.

Navasâhasânkacharita, Vol. II, by Vaman Shastri Islampurkar.

Mrichchhakatika, Vol. II, Introduction and notes, by K. C. Mehendale.

Yâska's Nirukta with the Commentary of Durgâchârya, Vol. II. by H. M. Bhadkamkar.

## WORKS UNDERTAKEN

Anubhâshya of Vallabhâcharya, with Notes, by Shridhar Shastri Pathak.

Kâvyâdars'a of Dandin, by Manmohan Chakravarti, M. A., B. L.

Ratnâvali of S rîharsha, by N. S. Panse, B. A.

Samudra-Sangama-Grantha, with English Translation, by A. V. Kathawate, B. A.

Shatprâbhritatîkâ, by K. B. Pathak, B. A.

Syâdvâdamañjarî of Hemachandra, by A. B. Dhruva, M. A., LL. B.,

Tarkabhâshâ of Kes'avamis'ra with the Commentary of Chinnabhatta by D. R. Bhandarkar, M. A., and Pandit Kedarnath.

Udbhata's Kâvyâlankâra-Sâra-Sangraha, with the Laghuvritti of Pratîhârendurâja, by N. D. Banhatti, B. A.

Uttara-Râmacharita of Bhavabhûti, by Dr. R. G. Bhandarkar, and S. R. Bhandarkar, M. A.

Venîsamhâra of Bhatta Nârâyana, by N. S. Panse, B. A.

Vyavahâra-Mayûkha of Nîlakantha, by P. V. Kane, M. A., LL. M.